श्रीः

श्रीमते लक्ष्मीनृसिंहपरब्रह्मणे नमः

श्रीमन्निगमान्तमहादेशिकानुगृहीता

# अधिकरणसारावलिः

कुमारवेदान्ताचार्यानुगृहीतेन

चिन्तामणिना

श्रीवण्शठकोपश्रीशठकोपरामानुजयतीन्द्रमहादेशिकानुगृहीतया

पदयोजनया

श्रीवण्शठकोपश्रीलक्ष्मीनृसिंहशठकोपयतीन्द्रमहादेशिकानुगृहीतया

भूमिकया च

समेता



श्रीवण्शठकोपश्रीलक्ष्मीनृसिंहशठकोपयतीन्द्रमहादेशिकदिव्यनियमनानुसारेण

कुरुच्चि. लक्ष्मीनृसिंहाचार्येण

प्रकाशिता

विजयतेतराम्

[विक्रमचापमासः] [1940



श्रीवण्शठकोपश्रीलक्ष्मीनृसिंहशठकोपयतीन्द्रमहादेशिकाः

(श्रीमद होबिलदिव्यास्थाने एकचत्वारिंशाः)

    

श्रीः

श्रीमद्वेदमार्गप्रतिष्ठापनाचार्यपरमहंसपरिव्राजकाचार्य सर्वतन्त्रस्वतन्त्रोभयवेदान्ताचार्य-
श्रीभगवद्रामानुजसिद्धान्तनिर्धारणसार्वभौम श्रीवण्शठकोप श्रीलक्ष्मीनृसिंह-
शठकोपयतीन्द्रमहादेशिकैरनुगृहीता ।

# सारावलीभूमिका ॥

श्रीमते लक्ष्मीनृसिंहपरब्रह्मणे नमः ।

श्रीमते वकुलभूषणमहादेशिकाय नमः ।

श्रीमते भाष्यकाराय महादेशिकाय नमः ।

श्रीमते निगमान्तमहादेशिकाय नमः ।

श्रीमदादिवण्शठकोपयतीन्द्रमहादेशिकाय नमः ।

श्रीवण्शठकोप श्रीशठकोपयतीन्द्रमहादेशिकाय नमः ।

श्रीलक्ष्मीनृसिंहदिव्यपादुकासेवक श्रीवण् शठकोपश्रीशठकोपरामानुज-
यतीन्द्र महादेशिकाय नमः ।

श्रीलक्ष्मीनृसिंहदिव्यपादुकासेवकश्रीवण्शठकोप श्रीरङ्गनाथशठकोप-
यतीन्द्रमहादेशिकाय नमः ॥

स्थूलातिसूक्ष्मचिदचिद्विशिष्टं कार्यकारणम् ।
दिव्यात्यद्भुतरूपं श्रीनृसिंहं प्रणमाम्यहम् ॥

ज्वालातपत्रवटभार्गवमाविलोलकारञ्जयोगविलपावनसूकराख्याः ।
श्रीतापनीयमहितोज्ज्वलमानृसिंहमूर्तीश्शुभा नवविधाश्शरणं प्रपद्ये ॥

श्रीमच्छ्रीशठकोपयोगिशठजिद्रामानुजानुग्रह-
स्फारापाङ्गसमेधमानपरमानन्दप्रबन्धात्मना ।
श्रद्धाराद्धरमानृसिंहचरणत्राणेन विन्यस्यते
श्रीलक्ष्मीनरसिंहयोगिमणिना सारावलीभूमिका ॥

## संसारस्य दुःखभूयिष्ठत्वकथनम् ।

इह खलु लोके चेतनास्सर्वे

' अनेकजन्मसाहस्रीं संसारपदवीं व्रजन् ।
मोहश्रमं प्रयातोऽसौ वासनारेणुकुण्ठितः ॥ '

इत्युक्तरीत्या अविद्याकर्मवासनारुचिप्रकृतिसंबन्धरूपजन्मजरामरणादिविचित्रसंसारचक्रे

' संसारवागुरान्तस्थो लूनपक्ष इवाण्डजः ।
अपश्यन्निर्गमोपायमागामिष्वपि जन्मसु ॥ '

इत्येवंप्रकारेण बम्भ्रम्यमाणाः ' भगवत्स्वरूपतिरोधानकरीं विपरीतज्ञानजननीं स्वविषयायाश्च भोग्यबुद्धेर्जननीम् ' इत्युक्तरीत्या दुर्निवारमहत्तरत्रिगुणात्मकप्रकृतिपिशाचिकावेशसंजाततत्त्वाज्ञानविपरीतज्ञानविपयप्रावण्यवन्तः

' मांसासृक्पूयविण्मूत्रस्नायुमज्जास्थिसंहतौ ।
देहेचेत् प्रीतिमान् मूढो भविता नरकेऽपि सः ॥ '
' अस्थिस्थूणं स्नायुबद्धं मांसशोणितलेपनम् ।
चर्मावरुद्धं दुर्गन्धि पात्रं मूत्रपुरीषयोः ॥
जराशोकसमाविष्टं रोगायतनमातुरम् ।
रजस्वलमनित्यंच भूतावासमिमं त्यजेत् ॥ '

इत्यादिना अत्यन्तहेयत्वेनैवावगन्तव्यशरीरादिषु भोग्यताबुद्धिं कुर्वन्तः ' स्वं मेऽहं मे कुतस्तत् ' इत्यभियुक्तोक्तरीत्या भ्रमरूपाहङ्कारममकारकलुषितहृदयाः

' पापं प्रज्ञां नाशयति क्रियमाणं पुनः पुनः ।
नष्टप्रज्ञः पापमेव कर्तुमारभते पुनः ॥ '

इत्युपर्युपरि अपराधपरम्परया तत्फलान्यनुभुञ्जानाः

' तद्यथा हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि संचरन्तो न विन्देयुः एवमेवैताः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति ' इति श्रुत्युक्तरीत्या यथावस्थितपरमात्मज्ञानरहिताः स्वरूपप्राप्तपरिपूर्णभगवदनुभवात्मककैङ्कर्यमलभमानाः पुनः पुनरावर्तन्ते ॥

## संसारसन्तारोपायभूतभक्तिप्रपत्तिस्वरूपनिरूपणम् ।

एतादृशसंसृतिसन्तारोपायश्च अधिकारानुगुण्येन भक्तिप्रपत्त्योरन्यतर एवेति श्रुतिस्मृत्यादिभिः प्रतिपाद्यते । तथा हि ।

'तमेवं विद्वानमृत इह भवति नान्यः पन्था अयनाय विद्यते' 'विज्ञाय प्रज्ञां कुर्वीत' 'अनुविद्य विजानाति' 'ओमित्यात्मानं ध्यायथ' 'निचाय्य तं मृत्युमुखात् प्रमुच्यते' 'आत्मानमेव लोकमुपासीत' 'द्रष्टव्यश्श्रोतव्यो मन्तव्यो निदिध्यासितव्यः'

'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥'

'यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्'

'नाहं वेदैर्न तपसा न दानेन न चेज्यया ।
भक्त्या त्वनन्यया शक्यः अहमेवंविधोऽर्जुन' ॥

'भ्राम्यतामत्र संसारे नराणां कर्मदुर्गमे ।
हस्तावलम्बनो ह्येको भक्तिक्रीतो जनार्दनः' ॥

'भक्त्या परमया वापि' इत्यादीनि भक्तौ प्रमाणानि ।

'मुमुक्षुर्वै शरणमहं प्रपद्ये' 'तस्मान्न्यासमेषां तपसामतिरिक्तमाहुः' 'सकृदुच्चारस्संसारमोचनं भवति'

'सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज ।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥'

'सकृदेव प्रपन्नाय तवास्मीति च याचते ।
अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम ॥'

'लोकविक्रान्तचरणौ शरणं तेऽव्रजं विभो ।' 'तस्यामन्यतमं जन्म संचिन्त्य शरणं व्रज ।' 'न्यासः पञ्चाङ्गसंयुतः ।' 'शरणागतिरित्युक्ता सा देवेऽस्मिन् प्रयुज्यताम् ।' 'शरणं त्वां प्रपन्ना ये ध्यानयोगविवर्जिताः ।' 'आत्मात्मीयभरन्यासो ह्यात्मनिक्षेप उच्यते ।' 'यावन्न याति शरणं त्वामशेषाघनाशनम् ।'

'उपायभक्तिः प्रारब्धव्यतिरिक्ताघनाशिनी ।
साध्यभक्तिस्तु सा हन्त्री प्रारब्धस्यापि भूयसी ॥'

'सत्कर्मनिरताश्शुद्धास्सांख्ययोगविदस्तथा ।
नार्हन्ति शरणस्थस्य कलां कोटितमीमपि ॥' इत्यादीनि प्रपत्तौ प्रमाणानि ।

तत्र उपायभूतभक्तिस्तावत्—कर्मयोगज्ञानयोगसंस्कृतान्तःकरणसाध्या अष्टाङ्गयोगसंज्ञिता वर्णादिनियताधिकारा वर्णाश्रमधर्मेतिकर्तव्यताका कृच्छ्रसाध्या तैलधारावदविच्छिन्नस्मृतिसन्ततिरूपा अहरह-

रभ्यासाधेयातिशया आप्रायणमनुवर्तनीया प्रारब्धेतरपुण्यपापनिवर्तिका स्वयत्नसाध्यान्तिमप्रत्ययविशेषा प्रीतिरूपापन्नदर्शनसमानाकारा परमपुरुषविषयिका चेति ।

प्रपत्तिस्तावत्—महाविश्वासादिसंस्कृतान्तःकरणसाध्या षडङ्गयोगसंज्ञिता अनन्योपायसर्वाधिकारा प्रीतिरूपापन्ना आनुकूल्यसङ्कल्पादिमात्रपरिकरा सुकरा अभ्यासानाधेयातिशया आदेहपातम् आवृत्त्यादिकर्त्तव्यशेषरहिता प्रारब्धकर्मनिवर्तनक्षमा स्वप्रयत्ननिरपेक्षान्तिमप्रत्यया प्रार्थनान्वितसकृद्भरन्यासरूपा चेति । एतदुभयमपि शास्त्रैकसमधिगम्ययथावस्थिततत्त्वत्रयज्ञानमन्तरेण न सेत्स्यति ।

## तत्त्वत्रयनिरूपणम् ।

शास्त्रोदितानि चेतनाचेतनेश्वरभेदेन तत्त्वानि त्रीणि । ‘एकमेवाद्वितीयम्’ इत्येकत्वव्यपदेशस्तु प्रकारप्रकारिभावेन विशिष्टैक्यविवक्षया संगच्छते । ‘अशेषचिदचित्प्रकारं ब्रह्मैकमेव तत्त्वम् । तत्र प्रकारप्रकारिणोः प्रकाराणाञ्च मिथोऽत्यन्तभेदेऽपि विशिष्टैक्यादिविवक्षया एकत्वव्यपदेशस्तदितरनिषेधश्च’ इतिन्यायसिद्धाञ्जने श्रीमदाचार्यसूक्तिः । ‘यथा प्रयोग्य आचरणे युक्त एवमेवास्मिन् शरीरे प्राणो युक्तः’ इति प्रथमं रथत्वेन निरूपितं देहं ज्ञात्वा ततस्तदन्तर्यामिणं जीवात्मानं विदित्वा ततः परं तदन्तर्यामी परमात्मा वेदितव्य इत्युक्तक्रमेण प्रथमं अचेतनतत्त्वं निरूप्यते ।

‘अचेतना परार्थाच नित्या सततविक्रिया ।
त्रिगुणा कर्मिणां क्षेत्रं प्रकृतेरूपमुच्यते’ ॥

इत्यचेतनतत्त्वं जडं नित्यं सततपरिणामशालि गुणत्रयमयं जीवकर्मफलोपभोगस्थानं च भवति ।

‘देहेन्द्रियमनःप्राणधीभ्योऽन्योऽनन्यसाधनः ।
नित्यो व्यापी प्रतिक्षेत्रमात्मा भिन्नस्स्वतस्सुखी ॥’

‘नायं देवो न मर्त्यो वा न तिर्यक्स्थावरोऽपि वा ।
ज्ञानानन्दमयस्त्वात्मा शेषो हि परमात्मनः ॥’

‘दासभूतास्स्वतस्सर्वे ह्यात्मानः परमात्मनः’ इत्यादिप्रमाणानुसारेण देहेन्द्रियादिविलक्षणः अणुस्वरूपस्स्वयंप्रकाशो नित्योऽतिसूक्ष्मतया सर्वाचेतनान्तःप्रवेशयोग्यः प्रतिशरीरं भिन्नो ज्ञानानन्दस्वरूपः परशेषैकरसः पराधीनस्वरूपस्थितिप्रवृत्तिकः परिपूर्णभगवदनुभवयोग्यश्चेतनः ।

‘सन्मूलास्सोम्येमास्सर्वाः प्रजास्सदायतनाः’ ‘एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृते तिष्ठतः’ ‘पतिं विश्वस्य’ ‘अन्तः प्रविष्टश्शास्ता जनानां सर्वात्मा’ ‘एकमेवाद्वितीयम्’

'तदैक्षत बहुस्यां प्रजायेयेति' 'सत्यं ज्ञानमनन्तं ब्रह्म' 'नित्यं विभुं सर्वगतं सुसूक्ष्मम्' 'अम्भस्य-पारे भुवनस्य मध्ये नाकस्य पृष्ठे महतो महीयान्' 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषः'

'देवर्षिपितृसिद्धाद्यै स्त्वयापि जगतां हिते ।
निर्मितं भगवद्रूपमर्चा सा शुद्धचिन्मयी ॥'

'कलौ जगत्पतिं विष्णुं सर्वस्रष्टारमीश्वरम् ।
नार्चयिष्यन्ति मैत्रेय पाषण्डोपहता जनाः ॥'

'षाड्गुण्याद्वासुदेवः परइति स भवान् मुक्तभोग्यो बलाढ्यात्
बोधात् संकर्षणस्त्वं हरसि वितनुषे शास्त्रमैश्वर्यवीर्यात् ।
प्रद्युम्नस्सर्गधर्मौ नयसि च भगवन् शक्तितेजोऽनिरुद्धो
बिभ्राणः पासि तत्त्वं गमयसि च तथाव्यूह्य रङ्गाधिराज ॥'

'ऐश्वर्यमक्षरगतिं परमं पदं वा' 'संसृत्यक्षरवैष्णवाध्वसु' 'यः पुनरेतं त्रिमात्रेणोमित्यनेन' इत्यादिना नियमेन सर्वाधारस्सर्वनियन्ता सर्वशेषी अत एव सर्वशरीरी सङ्कल्पादिरूपव्यापारभेदेन सर्वकार्यं प्रति सर्वकारणभूतः भूतभविष्यद्वर्तमानकालत्रयेऽपि एकरूपस्वरूपरूपः परमपदादित्यमण्डलक्षीराब्धिरूपस्थानत्रयनित्यनिवासः स्वयंव्यक्तदिव्यार्षाद्यर्चारूपेणावस्थितः कृतादि युगत्रये विशेषतः प्रकाशमानः ज्ञानशक्त्यादिगुणषट्केन त्रियुगः सङ्कर्षणप्रद्युम्नानिरुद्धरूपव्यूहत्रयेण जगत्संहारशास्त्रप्रवर्तन सृष्टिधर्मप्रवर्तन जगद्रक्षणतत्त्वबोधनरूप षड्विधव्यापारवान् ऐश्वर्यकैवल्यमोक्षरूपपुरुषार्थत्रयहेतुभूतः प्रत्यक्षानुमानशब्दरूपप्रमाणत्रयेणाप्रतिषेध्यः त्रिमात्रोङ्कारमुख्यार्थभूत ईश्वरः । अयमेव परब्रह्मेति वेदान्तेषु जोघुष्यते । एतादृशं ब्रह्म चिदचित्प्रकारविशिष्टवेषेण एकं तत्त्वम् । लोके शरीरस्य चेतनस्य चात्यन्तभेदेन वस्तुद्वित्वेऽपि देवदत्तोऽहमेक इति एकत्वव्यवहारवत् इहापि चेतनाचेतनशरीरकस्य ब्रह्मण एकत्वव्यपदेशो नानात्वव्यपदेशश्च संगच्छेते । सामानाधिकरण्यश्रुतिस्वारस्यमस्मिन्नेवार्थेऽस्ति । 'तत्त्वमसि' इतिसामानाधिकरण्यश्रुतौ तच्छब्दस्य जगत्कारणत्वादिकं प्रवृत्तिनिमित्तं त्वम्पदस्याचिद्विशिष्टजीवशरीरकत्वं प्रवृत्तिनिमित्तमिति भिन्नप्रवृत्तिनिमित्तयोश्शब्दयोरेकस्मिन् ब्रह्मणि वृत्तेः । भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिस्सामानाधिकरण्यम् इति च तल्लक्षणम् । एवं भेदाभेदघटककारणसगुणनिर्गुणस्वरूपादिप्रतिपादकश्रुतीनां विशिष्टैक्यपक्षएव मुख्यार्थत्वस्वारस्यात् सर्ववेदान्तवेद्यं ब्रह्म एकएव श्रीमन्नारायणस्सर्वशेषी सर्वशरीरीच मुक्तिप्रदो मुक्तभोग्यश्चेति सर्वोपनिषत्सार इतिसिद्धम् । तथा च सारावल्यां 'त्रय्यन्तैरेककण्ठैस्तदनुगुणमनुव्यासमुख्योक्तिभिश्च श्रीमान्नारायणो नःपतिरखिलतनुर्मुक्तिदो मुक्तभोग्यः' इत्यनुगृहीतम् ।

## देवतान्तराणां जगत्कारणत्वशङ्कानिरासेन श्रीमन्नारायणस्यैव जगत्कारणत्व निरूपणम्

श्रीमतो नारायणस्यैव जगत्कारणत्वसिद्धेः ब्रह्मरुद्रेन्द्रादीनां न कारणत्वशङ्कावकाशः ; तेषां कार्यत्व-कर्मवश्यत्वसृज्यत्वादिना जीवत्वसिद्धेः । तथाहि—'स प्रजापतिरेकः पुष्करपर्णे समभवत् ।' 'ललाटात् क्रोधजो रुद्रोऽजायत ।' 'परो नारायणो देवस्तस्माज्जातश्चतुर्मुखः । तस्मात् रुद्रोऽभवद्देवि' ।

'आब्रह्मस्तम्बपर्यन्ता जगदन्तर्व्यवस्थिताः ।
प्राणिनः कर्मजनितसंसारवशवर्तिनः ॥'
'क इति ब्रह्मणो नाम ईशोऽहं सर्वदेहिनाम् ।
आवां तवाङ्गे सम्भूतौ तस्मात्केशवनामवान् ॥' इत्यादि ।
अतो न चतुर्मुखादेः कारणत्वम् ।

'ब्रह्मविष्णुरुद्रेन्द्रास्ते सर्वे संप्रसूयन्ते' इति भगवतोऽप्युत्पत्तिश्श्रूयते तत्कथम्, उच्यते । "अजायमानो बहुधाविजायते" 'इच्छागृहीताभिमतोरुदेहः' 'न भूतसंघसंस्थानो देहोऽस्य परमात्मनः' 'धर्मसंस्थापनार्थाय सम्भवामि युगेयुगे' इत्यादिप्रमाणैः कर्मकृतोत्पत्त्यभावावगमात् लीलाजगद्रक्षणार्थावतारप्रतिपादकत्वेनोपपत्तेर्नविरोधः । ब्रह्मणस्सर्वशरीरकत्वेन सर्वशब्दानां तस्मिन्नेव मुख्यवृत्तेस्सर्वशब्दवाच्यत्वं सिद्धम् । उपासनादिवाक्यगतानां हिरण्यगर्भशम्भ्वादिशब्दानामनन्यथासिद्धजीवलिङ्गादर्शने केवलयोगशक्त्या परमात्मपरत्वम् अनन्यथासिद्धजीवलिङ्गदर्शनेतु तद्विशिष्टपरमात्मपरत्वञ्च । आहुश्चाचार्याः—

'परविद्यासु जीवोक्ति निरुक्त्यादेः पराश्रया ।
तल्लिङ्गानन्यथासिद्धौ तद्विशिष्टावलम्बिनी ॥' इति ॥

अतस्सर्वशरीरिणश्श्रीमन्नारायणस्यैव सर्वशब्दवाच्यत्वं सर्वकर्मसमाराध्यत्वञ्च सम्भवति नतरामितरेषामितिसिद्धान्तः ।

## आभगवच्छारीरकशास्त्रप्रवर्तननिरूपणम्

इमं सिद्धान्तं श्रियःपतिर्भगवान् पुलस्त्यवसिष्ठवरप्रदानलब्धपरदेवतापारमार्थ्यज्ञानवता श्रीविष्णुपुराणनिर्मात्रा पराशरब्रह्मर्षिणा 'कृष्णद्वैपायनं व्यासं विद्धि नारायणं प्रभुम् । को ह्यन्यो भुवि मैत्रेय महाभारतकृद्भवेत्' इति प्रख्यातवैभवेन पञ्चमाम्नायभूतमहाभारतब्रह्मसूत्रादिप्रणेत्रा पाराशर्यमहर्षिणा च सम्प्रपञ्चं प्राचीकशत् । अनन्तरं भगवान् बोधायनो दशलक्षग्रन्थात्मकवृत्तिग्रन्थेन तमिमं सिद्धान्तं विशदीचकार । अथैनं भगवत्कृपालब्धसूक्ष्मार्थाटङ्कद्रमिडगुहदेवादिपूर्वसूरयस्संचिक्षिपुः ।

'कलौ खलु भविष्यन्ति नारायणपरायणाः । क्वचित् क्वचिन्महाभागा द्रमिडेषु च भूरिशः ।

ताम्रपर्णी नदी यत्र ।' इति सुप्रसिद्धमहीमण्डलमण्डनायमानताम्रपर्णीनदीतीरे मतान्तरोक्तवेदविरुद्धार्थ-निरसनपूर्वकसर्वोपनिषदादिप्रमाणसिद्धतत्त्वार्थस्थिरीकरणार्थं कुरुकाधीशत्वेनावतीर्णो भगवदनुगृहीत निरतिशय दिव्यज्ञानोऽतिमानुषदिव्यचेष्टितः पराङ्कुशमुनिवरो नानादिव्यदेशविराजमानस्वयंव्यक्ताद्यर्चावताररूपभगवदनु-भवप्रवृद्धपरभक्त्यमृतपरीवाहरूपैर्वेदान्तरहस्यवैशद्यातिशयहेतुभूतैस्सद्यःपरमात्मनि चित्तरञ्जकतमैस्सर्वोपजीव्यै-रुपबृंहणैरागस्त्यभाषात्मकदिव्यप्रबन्धैरिममेव सिद्धान्तं पुनर्दृढीचकार ।

ततो मधुरकविप्रभृतिसंप्रदायपरम्परया योगमहिम्ना च वकुलभूषणमहादेशिकोपदिष्टसर्वोपनिषत्सारः-सर्वशास्त्रवेत्ता नाथाख्यो महामुनिर्योगशास्त्रविचक्षणो योगरहस्यन्यायतत्त्वग्रन्थमुखेन दर्शनमेतत्पुनः प्रवर्तयामास । तत्पौत्रश्च यामुनमुनिस्स्वपितामहानुग्रहेणाचार्यलब्धसार्वज्ञ्यः सिद्धित्रयादिग्रन्थमुखेन निरवग्रहमे तदुपाचिनोत् ।

अथ भगवान् भाष्यकारो रामानुजार्यो यतिराजो बोधायनवृत्तिग्रन्थानुसारेण ब्रह्मसूत्रव्याख्यारूपं श्रीभाष्यं दीपं सारं गीताभाष्यनित्यवेदार्थसंग्रहादींश्च प्रणीय दशसु दिक्षु दुर्वादिनो विजित्य सर्वविजयी शारीरकशास्त्रमेतत् सम्यक्परिपालयामास ।

तदनु च तत्तद्दुर्वादिगर्वसर्वङ्कषसमीचीनन्यायमार्गेण अखिलतमःकर्शनतया शारीरकदर्शनमेतत् सुष्ठुप्रतिष्ठापयामास भगवद्घण्टावतारश्श्रीमान् निगमान्तमहादेशिकः । श्रीशठकोप यतीन्द्र निगमान्तमहादेशिकानाम् अतिमानुषवैभवं श्रीपादुकासहस्रयतिराजसप्ततिपिळ्ळैयन्तादिसप्ततिरत्नमालिकावैभवप्रकाशिकादिषु सुप्रसिद्धमिति नेह प्रतन्यते । एवं देशिकेन्द्रानुगृहीतेषु प्रबन्धरत्नेषु वेदान्तकलशाम्बुधिमध्योद्धृत-श्रीभाष्यामृतपरीवाहरूपत्वात् श्रीभाष्यार्थजिज्ञासूनां सुखावगाहहेतुतया अत्युत्कृष्टतमोऽयमधिकरणसारावल्याख्यो ग्रन्थः ।

## सारावलीप्रतिपाद्यसारार्थ संग्रहः

अस्मिन्सारावलीग्रन्थे प्रथमं सूत्राधिकरणसंख्या 'सौत्री संख्या' इति श्लोकेन प्रकाश्यते ।

श्रीभाष्यचतुरध्याय्याम् उक्ताः समन्वयाविरोधसाधनफलरूपाश्चत्वारोऽर्थाः, पूर्वाध्यायद्वयात्मक प्रथमद्विकोक्तः परब्रह्मात्मकसिद्धरूपार्थः उत्तराध्यायद्वयात्मकद्वितीयद्विकोक्त उपायफलात्मकसाध्यरूपार्थश्च 'शास्त्रंत्वेतत्' इतिश्लोकेन प्रतिपाद्यन्ते ।

अस्पष्टतरास्पष्टस्पष्टस्पष्टतरजीवलिङ्गकवाक्यार्थनिर्णयः सांख्यस्मृत्यादिभिर्वेदान्तवाक्यानामबाधः परपक्ष-तर्काणां सत्तर्कानुगृहीतवाक्यैर्हतिः वियदादीनां कार्यत्वशोधनम् इन्द्रियादीनां कार्यत्वशोधनं क्षेत्रज्ञस्य दोषः ईश्वरस्यादोषः (उभयलिङ्गत्वं) भक्तियोगभेदास्तदङ्गानि ब्रह्मविद्याप्रवेशमाहात्म्यम् उत्क्रान्तिः अर्चिरादि-गतिः ब्रह्मानुभवरूपफलम् इत्येते षोडशपादार्थाः 'तत्राद्येऽत्यन्तगूढाविशद' इति श्लोकेन वर्ण्यन्ते ।

प्रथमाध्याये प्रथमपादे एकादशसु अधिकरणेषु प्रथमं 'चिन्तां प्रकृतसिद्ध्यर्थामुपोद्घातं विदुर्बुधाः' इत्युक्तरीत्या उपोद्घातलक्षणवति सकलवेदान्तार्थचिन्तान्तरङ्गे प्राथमिकाधिकरणचतुष्टये द्वाभ्यामधिकरणाभ्यां व्युत्पत्तिलक्षणयोस्संभवात् सिद्धार्थे प्रतीतिजननं प्रतिपादितम्। तदनु द्वाभ्यामधिकरणाभ्यां ब्रह्मणो मानान्तरागोचरत्वस्य पुरुषार्थरूपत्वस्य च उपपादनात् शास्त्रस्य तज्जन्यबुद्धेश्च वैफल्यशङ्का परिहृता। इतरेष्वधिकरणेषु प्रतिपादिताः स्वसङ्कल्पमात्रेण सर्वकार्यकारणत्वं शुभगुणविभवानन्तनिस्सीमानन्दवत्त्वम् इच्छागृहीतनित्यदिव्यमङ्गलविग्रहवत्त्वं निरुपाधिकप्रकाशमानस्वभाववत्त्वं चिदचिदात्मकजगत्प्राणनहेतुत्वं दिव्यदीप्तिमत्त्वं प्राणेन्द्रादिशब्दवाच्यजीवान्तर्यामित्वं चेत्यादिब्रह्मगुणाः 'कार्ये व्युत्पत्तिः' इत्यारभ्य 'स्वेच्छातः' इत्यन्तेन प्रकाश्यन्ते।

प्रथमाध्याये द्वितीयपादे षट्स्वधिकरणेषु सर्वात्मभावेनावस्थितत्वं सर्वसंहर्तृत्वम् अक्ष्यन्तर्वर्तित्वं जगच्छरीरकत्वं अन्याद्यवयवत्वं द्युमूर्धत्वादिवैश्वानरपदप्रतिपाद्यत्वम् एवंभूतगुणविशिष्टः श्रियःपतिः 'अत्रायोगान्ययोग' इत्यारभ्य 'स्वाधीन' इतिश्लोकावधि अभिधीयते।

प्रथमाध्याये तृतीयपादे सर्वान्तर्यामित्वं अनन्तैश्वर्यवत्त्वं मुक्तोपभोग्यस्वभावत्वं स्वयंहृदयायतनत्वेन अल्पपरिमाणत्वेऽपि सर्वलोकाधारत्वम् अङ्गुष्ठप्रमितत्वेन सर्वनियन्तृत्वं देवादीनामुपास्यत्वं वस्वादिदेवैः स्वात्मत्वेनोपास्यत्वं शूद्राद्यनुपास्यत्वं नामरूपयोर्मुख्यव्याकर्तृत्वम् इत्येवंप्रकारक श्रीमन्नारायणः 'स्पष्टैः' इत्यादिकैः 'विश्वात्मा' इत्यवधिकैश्श्लोकैर्वर्ण्यते।

प्रथमाध्याये चतुर्थपादे अष्टभिरधिकरणैरभिहिताः सांख्यतत्त्वप्रक्रियानिरासः अब्रह्मात्मकप्रधानस्य जगत्सृष्टिनिरासः तदुक्ततत्त्वसंख्याक्लृप्तिनिरासः अव्याकृतस्य एकस्यैव कारणत्वनिरासः कर्मशब्दस्य पुण्यपापरूपजीवकर्मवाचित्वनिरासः पतिपुत्रादिरूपकर्मफलात्मकदोषासंयोगः निमित्तोपादानैक्यं द्रुहिणादिपरकारण वाक्यानां भगवत्परत्वम् इत्येतादृशाःपरपक्षनिरासरूपार्थाः 'निर्णीतं वाक्यजातम्' इत्यारभ्य 'आदौ जिज्ञास्यता' इत्यन्तैर्विव्रियन्ते।

द्वितीयाध्याये प्रथमपादे दशभिरधिकरणैः सांख्यमतस्य सामान्यतो निराकरणं हिरण्यगर्भयोगनिरासः कारणात् कार्यस्य वैरूप्यनिरासः अणुकारणवादित्वेन एकार्थानेकतन्त्रोक्तार्थविरोधनिरासो देहस्यभोगाविनाभावनिरासः कार्योपादानयोर्भेदनिरासः स्वाहितकरणनिरासः सहकारिजातस्य अभावनिरासः कृत्स्नैकदेशविकल्पेन बाधनिरासो जगत्सृष्टिवैफल्यनिरास इत्येतेऽर्थाः 'तत्तादृक्तर्कतन्त्र' इत्यादिभिः 'सांख्यस्मृत्या' इत्यन्तैः श्लोकैः प्रकटीक्रियन्ते।

द्वितीयाध्याये द्वितीयपादे प्रतिपादिताः कापिलमतनिरासः काणादमतनिरासो वैभाषिकमतनिरासो योगाचारमतनिरासो माध्यमिकमतनिरासः, आर्हतमतनिरासः पशुपतिमतनिरासः पाञ्चरात्रशास्त्रस्य

कृत्स्नस्य वेदाविरुद्धत्वेन प्रामाण्यसमर्थनम् इत्यधिकरणाष्टकार्थाः 'बाधाभावात्' इत्यारभ्य 'पादेऽस्मिन्' इत्यन्तैः श्लोकैः प्रोच्यन्ते ।

द्वितीयाध्याये तृतीयपादे सप्तभिरधिकरणैर्दर्शिता व्योमादीनां कार्यत्वं तत्त्वोत्पत्तिविषये पूर्वपूर्वतत्त्वविशिष्टात् परमात्मनस्तत्त्वानां सृष्टिः जीवस्य देहाद्युपाधिकृतसृष्टिप्रलयौ ज्ञानस्वरूपस्य जीवस्य ज्ञातृत्वं जीवस्यकर्तृत्वं तस्य परायत्तत्वं गुणगुणिदेहदेहिन्यायेन परमात्मनः अपृथक्सिद्धतया ांशत्वमित्येवं विरोधपरिहाररूपार्थाः 'सर्वं सांख्यास्तु' इत्यारभ्य 'क्लृप्तिर्व्योमादिकेऽपि' इत्यन्तश्लोकैः प्रपञ्चिताः ।

द्वितीयाध्याये चतुर्थपादे इन्द्रियोत्पत्तिः एकादशैवेतितत्संख्या अणुपरिमाणत्वं मुख्यप्राणस्वरूपं प्राणस्य सौक्ष्म्यम् अग्न्यादिदेवतानां तत्तज्जीवानाञ्च इन्द्रियप्राणयोः भगवदधीनाधिष्ठानत्वं मुख्यप्राणस्य अनिन्द्रियत्वं व्यष्टिसृष्टौ हिरण्यगर्भशरीरकपरमात्मव्याकर्तृके नामरूपे च इत्येवं विभज्य दर्शिताः अष्टाधिकरणार्थाः 'अक्षाद्युत्पत्त्यनुक्तौ' इत्यारभ्य 'तर्केरापात' इत्यन्तैःश्लोकैरुपवर्णिताः ।

तृतीयाध्याये प्रथमपादे षट्स्वधिकरणेषु दर्शिता उत्क्रान्तस्य भूतसूक्ष्मैस्सह गमनं भुक्तिशिष्टकर्मसहितस्य मात्रयाभिन्नमार्गतया अवरोहः नरकमार्गजुषां चन्द्राप्राप्तिः आकाशादिभावस्तत्सादृश्यमेव नतुतद्रूपेण जन्मेति आकाशादेरविलम्बेनावरोहः व्रीह्यादौ संश्लेषमात्रं नतु तच्छरीरत्वम् इत्येतेऽर्थाः 'साध्या मुक्तिः' इत्यादिभिः 'पादेत्वर्थाः' इत्यन्तैः श्लोकैस्संगृह्यन्ते ।

तृतीयाध्याये द्वितीयपादे अधिकरणाष्टके स्वाप्नपदार्थस्रष्टृत्वं सुषुप्त्याधारत्वं सुषुप्तरक्षकत्वं मूर्च्छितोद्बोधादिकर्तृत्वम् उभयलिङ्गत्वं स्वदेहभूताचिद्वस्तुभिरंशवत्त्वं स्वेतरपरवस्तुशून्यत्वं सर्वफलप्रदत्वम् एवमादिगुणविशिष्टः परमपुरुषः 'अत्रैव स्वैः' इतिप्रभृतिभिः 'पादे स्वाप्नार्थहेतुः' इत्यन्तैः श्लोकैरुच्यते ।

तृतीयाध्याये तृतीयपादे षड्विंशत्यधिकरणैर्निरूपिता वैश्वानरविद्याद्यैक्यम् उद्गीथविद्याद्वयविभजनं प्राणविद्यैक्यं स्वरूपनिरूपकधर्मस्य आनन्दत्वादेस्स्वरूपवत् सर्वविद्यासु अनुवृत्तिः आचमनीयास्वप्सु प्राणवासस्त्वानुसन्धानं शाण्डिल्यविद्यैक्यम् अहरहमोर्नाम्नोर्विद्याभेदेन विभज्यावस्थानं संभृत्यादिगुणजातस्य द्युव्याप्त्याद्युचितस्थानव्यवस्थितिः तैत्तिरीयच्छान्दोग्यस्थपुरुषविद्ययोर्विभेदः शन्नोमित्रादिमन्त्राणामध्ययनशेषत्वं पुण्यपापहानोपायनयोरन्योन्यंयोगो हानोपायनयोः प्राप्तिकालो देवयानादेस्सर्वविद्यासाधारण्यं सर्वविद्यासु अस्थूलत्वाद्यनुसन्धानं श्रुतानां गुणानामन्योन्यं व्यतिहृत्यानुसन्धानं दहरोपासनैक्यम् उद्गीथं क्रत्वङ्गमाश्रित्योपासने क्रतुफलात्फलान्तरविधानम् अपहतपाप्मत्वादिगुणोपासने गुण्यावृत्तिः निखिलपरतरोपासनेषु उपास्यनिर्णयः मनश्चिताद्यग्नीनां ज्ञानरूपक्रत्वनुप्रवेशित्वं क्षेत्रज्ञस्य शुद्धस्य अनुचिन्त्यत्वं क्रत्वङ्गभूतसर्वोद्गीथादिषूपासनं वैश्वानरात्मनस्सामस्त्येनोपासनं विद्यानां नानात्वसमर्थनं मोक्षार्थोपासनानां फले विशेषाभावात् विकल्पः पूर्वमुक्तोऽप्युद्गीथानुष्ठानानियमः इहस्थिरीकृत्य पुनरुक्त

इत्येतेऽर्थाः 'तत्त्वज्ञानानुविद्धम्' इतिप्रभृतिभिः 'विद्यारूपा मनश्चित्' इत्यन्तैः श्लोकैः स्फुटतरम् उपपादिताः ।

तृतीयाध्याये चतुर्थपादे विद्यायाः कर्माङ्गकत्वम् उद्गीथादौ रसतमत्वादिदृष्टिः विद्यासमीपवर्त्याख्यानानां विद्याविधानार्थत्वम् ऊर्ध्वरेतस्स्वपि साङ्गविद्या गृहस्थे यज्ञदानाद्यपेक्षा विद्या गृहस्थस्य शान्त्याद्यर्हत्वम् द्रा विपदि विदुषोऽपि शुद्धान्नेनैव योगसिद्धिः एकस्यैव कर्मणो विद्यार्थत्वमाश्रमार्थत्वं च विधुरस्यापि विद्यायुतत्वं नैष्ठिकादिभ्रष्टस्य विद्यानधिकारः क्रत्वङ्गोद्गीथोपासनस्य ऋत्विक्कर्तृकत्वं मननादन्यत्वेन ध्यानसिद्ध्यै चोदिता अथमुनिरिति मुनिता बाल्यं स्वमाहात्म्याप्रकटनं स्वसामर्थ्यगोपनम् ऐहिकफलकोपासनानां विघ्नाभावे शीघ्रफलप्रदत्वं मोक्षार्थविद्याया ब्रह्मविदपचारादिप्रतिबन्धे अनिष्पत्तिरिति पञ्चदशस्वधिकरणेषूक्ता अर्थाः 'कर्म प्राक्' इतिश्लोकप्रभृति 'सन्तत्यात्मा' इत्येतदन्तम् अवर्ण्यन्त ।

चतुर्थाध्याये प्रथमपादे एकादशाधिकरणैः निरूपिता ब्रह्मविद्याया असकृदावृत्तत्वं सर्वत्रब्रह्मविद्यास्वहमित्यनुसन्धानं नामादिप्रतीकोपासनेऽहमित्यनुसन्धानाभावः कर्माङ्गोद्गीथादावादित्यादिदृष्टिः आसीनस्यैव योगानुष्ठेयत्वं आप्रायणादनुवर्तनीयत्वं पापस्याश्लेषविनाशौ पुण्यस्याश्लेषविनाशौ तयोः प्रारब्धकार्यांशेऽनुभाव्यत्वम् वर्णाश्रमधर्मावश्यकार्यत्वं प्रारब्धकर्मान्ते मोक्ष इत्येतेऽर्थाः 'इत्युत्पत्ति' इत्यादिभिः 'आवर्त्या ब्रह्मविद्या' इत्यन्तैश्श्लोकैः कथ्यन्ते ।

चतुर्थाध्याये द्वितीयपादे एकादशभिरधिकरणैः मनोभिन्नेन्द्रियाणां मनसि संयोगः इन्द्रियसंयुक्तमनसः प्राणवायुसंयोगः इन्द्रियमनस्संयुक्तस्य प्राणवायोर्जीवे संयोगः इन्द्रियमनःप्राणवायुयुक्तजीवस्य सूक्ष्मभूतवर्गे संयोगो विद्वदविदुषोरुत्क्रान्तिसाम्यं परमात्मसंपत्तिस्संश्लेषमात्रं ब्रह्मनाड्यादि निर्गमनं सूर्यकिरणैस्सह गमनं निशाकृष्णपक्षयो र्मृतस्यापि योगिनो मोक्षप्राप्तिः दक्षिणायनमृतस्यापि योगिनो मोक्षप्राप्तिरित्येतेऽर्थाः 'नित्यत्वज्ञत्वपूर्वैः' इत्यादिभिः 'संपद्येतान्यदक्षम्' इत्यन्तैः श्लोकैः स्पष्टीकृताः ।

चतुर्थाध्याये तृतीयपादे पञ्चस्वधिकरणेषु परिदृश्यमानाः नानोपनिषत्पठितार्चिरादेरेकत्वं न्यूनाधिकभावेनाधिगतैकत्वं च देवलोकवायुशब्दयोरैकार्थ्यं वरुणेन्द्रप्रजापतीनां विद्युत उपरि निवेशः अमानवान्ता, अर्चिरादयः परमपदगमने नेतारो ब्रह्मविदामेवार्चिरादिगमनम् इत्येतेऽर्थाः 'शाखाभेदेषु' इत्यादिभिः 'एकत्वं ब्रह्मविद्या' इत्यन्तैश्श्लोकैः प्रकाश्यन्ते ।

चतुर्थाध्याये तुरीयपादे षड्भिरधिकरणैर्निरूपिता अपवर्गे स्वरूपाविर्भावो निरुपाधिकतया नियतस्वशरीरिपर्यन्तदृष्टिर्ज्ञानस्वरूपस्यैव जीवस्य ज्ञानस्वरूपत्ववत् वेदान्तोक्तस्वप्रकारैर्ज्ञानादिगुणैस्सह दृष्टिः

संकल्पादेव स्वाभीष्टानां सृष्टिः अनियतशरीरवत्त्वं जगत्कारणत्ववर्जं ब्रह्मसाम्यम् इत्येते षडर्थाः ' उक्तं पादैः ' इत्यारभ्य ' पारावर्यं विविच्य प्रथमम् ' इत्यन्तैश्श्लोकैः प्रतिपाद्यन्ते ।

एवं षोडशपादात्मकाध्यायचतुष्टयेषु षट्पञ्चाशदधिकपञ्चशतीसंख्याकस्रग्धराश्लोकैः षट्पञ्चाशदुत्तरशताधिकरणार्थाः, मृषावादगन्धस्य त्रिकाण्ड्यां क्वचिदप्यवकाशाभावः चतुरध्याय्यर्थानाम् [illegible]र्थान्तरेभ्यो वैलक्षण्यम् आचार्यसकाशादधीतचतुरध्याय्यर्थस्याधिकारिणोऽपवर्गप्राप्तिश्च इत्येते स [illegible]र्थाश्च, अस्मदाचार्यवर्यैर्निगमान्तमहादेशिकैरधिकरणसारावलीप्रबन्धरत्ने सम्यक् प्रकटीक्रियन्ते ।

अस्यां सारावल्यां द्वात्रिंशद्ब्रह्मविद्यानां प्रतिपादनप्रकारो निरूप्यते

## द्वात्रिंशद्ब्रह्मविद्या प्रतिपादन प्रकार निरूपणम्

१. सद्विद्या—इयं ' सदेव सोम्येदमग्र आसीत् ' इति च्छान्दोग्यविचारिता प्रथमाध्यायप्रथमपादे ' गौणेक्षासाहचर्यात् ' इत्यादिश्लोकत्रयेण विव्रियते ।

२. आनन्दविद्या—इयं ' ब्रह्मविदाप्नोति परम् ' इति तैत्तिरीयोक्ता ' मुख्येक्षा ' इत्यादिश्लोकचतुष्टयेन आनन्दमयाधिकरणे प्रकाश्यते ।

३. अन्तरादित्यविद्या—इयं ' यएषोऽन्तरादित्ये हिरण्मयः पुरुषः ' इतिच्छान्दोग्योक्ता ' भूयिष्ठानन्त ' इत्यादि श्लोकत्रयेण प्रकटीक्रियते ।

४. आकाशविद्या- इयं ' सर्वाणि हवा इमानि भूतानि ' इतिच्छान्दोग्योक्ता ' अत्राकाशस्त्वशेष ' इत्यादिश्लोकेनोच्यते ।

५. प्राणविद्या—इयं ' सर्वाणि हवा इमानिभूतानि प्राणमेव ' इतिच्छान्दोग्यप्रतिपादिता ' प्राणायत्तं हि ' इत्यादिश्लोकद्वयेन प्रतिपाद्यते ।

६. गायत्रीज्योतिर्विद्या—इयं ' अथयदतः परोदिवोज्योतिः ' इतिच्छान्दोग्यप्रतिपादिता ' कौक्षेयज्योतिषा ' इत्यादिज्योतिरधिकरणश्लोकेनोपपाद्यते ।

७. इन्द्रप्राणविद्या—इयं 'प्रतर्दनो हवै दैवोदासिः ' इति कौषीतकिश्रुतावभिहिता ' विद्या प्रातर्दनी' इत्यादिश्लोकैरुपवर्ण्यते ।

८. शाण्डिल्यविद्या—इयं ' सर्वं खल्विदम्' इतिच्छान्दोग्यप्रतिपादिता सर्वत्रप्रसिद्धाधिकरणे ' यस्य प्राणश्शरीरम् ' इत्यादिश्लोकत्रयेण प्रकाश्यते ।

९. अत्तृविद्या—इयं ' यस्य ब्रह्म च क्षत्रञ्च ' इति कठवल्लीप्रोक्ता ' अत्ता खल्वोदनादेः ' इति श्लोकद्वयेनात्त्रधिकरणे समर्थ्यते ।

१०. उपकोसलविद्या—इयं ' यएषोऽक्षिणि पुरुषो दृश्यते ' इति च्छान्दोग्ये स्पष्टा ' यद्वृत्तादेः ' इत्यादिश्लोकत्रयेणान्तराधिकरणे स्पष्टीक्रियते ।

११. अन्तर्यामिविद्या—इयं ' नान्योऽतोऽस्ति द्रष्टा ' इति च्छान्दोग्यविवृता ' अन्तर्यामी स जोवः ' [illegible]वधेश्लोकद्वयेनान्तर्याम्यधिकरणे विचारिता ।

[illegible]रपरविद्या—इयं ' यत्तदद्रेश्यमग्राह्यम् ' इति मुण्डकोपनिषदुक्ता अदृश्यत्वाधिकरणे ' दृश्येश्वरस्यापि[illegible] ' इतिश्लोकेनाभिवर्ण्यते ।

१३. वैश्वानरविद्या—इयम् ' एपोऽग्निर्वैश्वानरः ' इतिवाक्योक्ता ' स्वर्लोकादित्य '— इत्यादिश्लोकद्वयेन वैश्वानराधिकरणे प्रपञ्च्यते ।

१४. भूमविद्या—इयं ' यत्र नान्यत्पश्यति नान्यच्छृणोति ' इत्यादिच्छान्दोग्ये स्पष्टा ' आत्मज्ञानाभिलापात् ' इत्यादिश्लोकचतुष्टयेन भूमाधिकरणे प्रकाशिता ।

१५. गार्ग्यक्षरविद्या—इयं ' एतदक्षरं गार्गि ' इति बृहदारण्यकश्रुता अक्षराधिकरणे ' प्रख्याताकाशपूर्व—' इति श्लोकेन प्रपञ्च्यते ।

१६. प्रणवोपास्यपरमपुरुषविद्या—इयं ' यः पुनरेतं त्रिमात्रेणोमित्यनेनैवाक्षरेण ' इति प्रश्नोपनिषत्प्रसिद्धा ईक्षतिकर्मव्यपदेशाधिकरणे ' लक्ष्मीभूतोऽयमेकः ' इत्यादिश्लोकद्वयेनोपवर्णिता ।

१७. दहरविद्या—इयं ' अथयदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकम् ' इत्यादिच्छान्दोग्यश्रुतिप्रसिद्धा दहराधिकरणे ' दह्रं हृत्पुण्डरीके ' इत्यादिश्लोकपञ्चकेन प्रपञ्चिता ।

१८. अङ्गुष्ठप्रमितविद्या—इयम् ' अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति ' इति कठवल्लीविचारिता प्रमिताधिकरणे ' प्राणेशोऽङ्गुष्ठमात्रः ' इत्यादिश्लोकद्वयेन वितन्यते ।

१९. देवोपास्यज्योतिर्विद्या—इयं ' तं देवा ज्योतिषां ज्योतिः ' इति वाजसनेयविवृता एतद्गर्भे देवताधिकरणे ' शब्दात्मा लौकिकार्थाकृतिः ' इत्यादिश्लोकषट्केन विस्तृता ।

२०. मधुविद्या—इयम् ' असौ वाव आदित्यो देवमधु ' इतिच्छान्दोग्यविचारिता एतद्गर्भे मध्वधिकरणे ' स्यादेवं देवमात्रे ' इति श्लोकेन बोध्यते ।

२१. संवर्गविद्या—इयं ' जानश्रुतिः किल पौत्रायणः ' इत्यादिच्छान्दोग्यसिद्धा एतद्गर्भेऽपशूद्राधिकरणे ' जैमिन्युक्तापशूद्र ' इत्यादिश्लोकत्रयेण समीर्यते ।

२२. अजाशरीरकब्रह्मविद्या—इयं ' यस्मिन्पञ्चपञ्चजनाः ' इतिच्छान्दोग्यविराजिता संख्योपसंग्रहाधिकरणे ' यस्मिन्पञ्चेतिमन्त्रे ' इत्यादिश्लोकद्वयेन प्रकाश्यते ।

२३. बालाकिविद्या—इयं 'क्वैष एतद्बालाके पुरुषोऽशयिष्ट' इत्यादिबृहदारण्यकोक्ता जगद्वाचित्वाधिकरणे 'यस्यैतत्कर्म' इति श्लोकद्वयेन प्रतिपाद्यते ।

२४. मैत्रेयीविद्या—इयं 'नवा अरे पत्युः कामाय पतिः प्रियो भवति' इति बृहदारण्यकसंदर्शिता 'पत्यादीनां प्रियत्वम्' इत्यादिश्लोकत्रयेण कथ्यते ।

२५. द्रुहिणरुद्रादिशरीरकब्रह्मविद्या—इयं 'हिरण्यगर्भस्समवर्तताग्रे भूतस्य जातः' इत्यादिश्रुत्युक्ता सर्वव्याख्यानाधिकरणे 'अग्रे संवर्तनम्' इत्यादिश्लोकद्वयेन पठ्यते ।

२६. पञ्चाग्निविद्या—इयं 'वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' इति च्छान्दोग्यनिरूपिता तदन्तरप्रतिपत्त्यधिकरणे 'देहाद्यम्' इत्यादिश्लोकत्रयेण प्रतिपाद्यते ।

२७. आदित्यस्थाहर्नामकब्रह्मविद्या—२८. अक्षिस्थाहन्नामकब्रह्मविद्या—इदं विद्याद्वयमपि 'तद्यत्सत्यमसौ स आदित्यो य एष एतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन्' इत्यादिबृहदारण्यकश्रुतिप्रपञ्चितं सम्बन्धाधिकरणे 'अक्ष्यादित्योपलक्ष्ये' इतिश्लोकेन प्रतिपाद्यते ।

२९. पुरुषविद्या—इयं 'तस्यैवं विदुषः' इति तैत्तिरीये प्रतिपादिता तृतीयाध्याये पुरुषविद्याधिकरणे 'आख्याद्यैक्यात्' इत्यादिश्लोकत्रयेणोक्ता ।

३०. ईशावास्यविद्या—इयं 'कुर्वन्नेवेह कर्माणि' इतीशावास्योपदिष्टा पुरुषार्थाधिकरणे तृतीयस्य चतुर्थे 'कुर्वन्नेव' इति श्लोकेन प्रतिपाद्यते ।

३१. उषस्तिकहोलविद्या—इयं 'उषस्तिर्ह चाक्रायणः' इतिबृहदारण्यकोक्ता 'आहारस्य व्यवस्था' इतिश्लोकेन सर्वान्नानुमत्यधिकरणे प्रतिपादिता ।

३२. व्याहृतिशरीरकब्रह्मविद्या—इयं 'य एष एतस्मिन्मण्डले भूरितिशिरः' इति श्रुत्युक्ता ।

'तस्मान्न्यासमेषां तपसामतिरिक्तमाहुः' इतितैत्तिरीयोक्ता 'नानाशब्दादिभेदात्' 'विकल्पोऽविशिष्टफलत्वात्' इतिसूत्रयोरभिप्रेता भाष्यकारैश्च शरणागतिगद्ये विशदतरं प्रतिपादिता सुदर्शनभट्टारकैश्च 'विकल्पोऽविशिष्टफलत्वात्' इति सूत्रव्याख्यानावसरे 'न्यासविद्याभिप्रेता' इत्यनुगृहीता द्वात्रिंशद्विद्यासमानस्थानापन्ना अकिञ्चनाधिकारिका परमगुह्यतमा च श्रीमती न्यासविद्या अस्यां सारावल्यां तृतीयाध्यायतृतीयपादे शब्दादिभेदाधिकरणे विकल्पाधिकरणे च 'यद्वा शब्दादिभेदात्' इत्यारभ्य 'रूपादीनां विशेषैः' इतिश्लोकपर्यन्तमुपवर्णिता ।

### काम्यविद्याकथनम्

एवं काम्यविद्याश्च निरूपिताः । यथा—'ओमित्येतदक्षरमुद्गीथमुपासीत' इतिश्रुत्युक्ता उद्गीथविद्या आदित्यादिमत्यधिकरणे 'तादर्थ्याद्देवतानाम्' इतिश्लोकेन प्रतिपाद्यते । 'नाम ब्रह्मेत्युपासीत' इत्युक्ता





नामादिप्रतीकविद्या ‘ नामादिब्रह्महष्टौ ’ इतिश्लोकेन प्रतिपाद्यते । अग्निरहस्ये ‘ मनश्चितो वाक्चितः ’ इति श्रुत' मनश्चितादिविद्या ‘ अङ्गं पूर्वप्रसक्त ’ इत्यादिश्लोकद्वयेन प्रतिपाद्यते । ‘ स एष रसानां रसतमः ’ इ[illegible] रसतमत्वादिदृष्टिविद्या अङ्गावबद्धाधिकरणे ‘ उद्गीथादेर्विशेषे ’ इतिश्लोकेन प्रतिपाद्यते । इति ।

२१. [illegible] निगमान्तगुरोः कुमारः स्वपितुरेव समधिगतसर्वशास्त्रार्थः कुमारवरदाचार्यः अधिकरणसारावली-[illegible] स्थितार्थप्रकाशकाधिकरणचिन्तामण्याख्यव्याख्यां निरमिमीत ।

## श्रीमदादिवण् शठकोप यतीन्द्रमहादेशिक वैभववर्णनम्

अथ श्रीदेशिकप्रतिष्ठापितस्यास्य भगवद्रामानुजसिद्धान्तस्य आधुनिकाल्पश्रुतकल्पितदोष-निवृत्तिपूर्वकं स्थिरीकरणाय अतिप्रसिद्धे प्रत्यग्देशालङ्कारभूते श्रीनारायणपुरे सिद्धान्तप्रवर्तककेशवा-चार्यस्य अशीतिचतुश्शतोत्तरचतुस्सहस्रीसंख्याककलयब्दे सिद्धार्थसंवत्सरे कन्याधवलपञ्चम्यां धिषणवासरे ज्येष्ठानक्षत्रयुते धनुर्लग्ने कुमार एक आविर्बभूव । अस्य श्रीनिवासानुग्रहलब्धत्वात् श्रीनिवासनाम्ना तं कुमारम् अलञ्चकार । सोऽपि श्रीनिवासाचार्यः ब्रह्मचर्यव्रते मुख्यानुष्ठानपरः स्वपितुः केशवाचार्यात् लब्ध-पञ्चसंस्कारद्रामिडगाथासाङ्गचतुर्वेदो वरदगुरुपौत्रघटिकाशतवरदाचार्यसन्निधौ स्वपित्राज्ञयाधिगत श्रीभाष्याद्यध्यात्मशास्त्रसूक्ष्मार्थः उभयवेदान्ताध्यापनपरः श्रीस्वामी स्वप्नलब्धश्रीमदहोबिललक्ष्मी-नृसिंहदिव्यनियमनेनाहोबिलं गत्वा भवनाशिनीतीरे नृसिंहोपदिष्टप्रेपमन्त्रः साक्षात् नृसिंहदत्ततुर्याश्रमः, श्रीनृसिंहनियमनेन लक्ष्मीनृसिंहं स्वाराध्यदैवत्वेन स्वीकृत्य गजतुरगशिबिकाद्यनेकबिरुदावलिसहितो नानादेशेषु सर्वेषां पञ्चसंस्कार शारीरकशास्त्राध्यापन भरन्यासादीन् निर्वहन् कुरुकानगरे आदिनाथवकुला-भरणरामानुजनिगमान्तमहादेशिकादीन् पाषण्डिनिरासपूर्वकं पुनःप्रतिष्ठाप्य वकुलभूषणसन्निधेः पश्चिमभागेऽध्य-यनोत्सवमण्डपं निर्माय अर्चकमुखानुगृहीतादिवण्शठकोपनामालङ्कृतो वकुलाभरणदत्तश्रीमदहोबिलदिव्या-स्थानासाधारणश्रीशठकोपश्रीरितिमुद्रासहितां हंसमुद्राञ्च लब्ध्वा वकुलाभरणादिनाथदिव्यालयसर्वकार्यनिर्वाहकः सिद्धान्तप्रवचनं कुर्वन् भगवत्कैङ्कर्यरसिकः कंचित्कालं तत्रैव सुसुखमवर्तत । ततउपरि आदिनाथवकुलाभरण नियमनेन तत्तद्दिव्यदेशमङ्गलाशासनं कृत्वा यादवाद्रौ गोपुरकैङ्कर्यं देशिकप्रतिष्ठाञ्च वेङ्कटाद्रौ सोपान-कैङ्कर्यं वरदराजसन्निधौ शतस्तम्भमण्टपं श्रीरङ्गक्षेत्रे परकालप्रतिष्ठां देशिकप्रतिष्ठां गोपुरप्रतिष्ठां सप्तप्रा-कारजीर्णोद्धारणंच पुरुषोत्तमस्थले वकुलभूषणगुरुप्रतिष्ठां रामानुजगुरुप्रतिष्ठाञ्च विशेषतःकृत्वा श्रीभगवद्रामानुज-सिद्धान्तं स्थापयित्वा पुनरपि श्रीनारायणपुरे श्रीमदहोबिलमठे संप्रदायप्रवर्तकः अलमकार्षीदास्थानम् ।

### पदयोजनाकारस्य महास्वामिनो वैभवसंग्रहः ।

एवं श्रीशठकोपश्रीरिति वकुलभूषणमहादेशिकानुगृहीतास्थानासाधारणमुद्रालङ्कृतश्रीमदादिवणशठकोप-

यतीन्द्रमहादेशिकप्रभृत्यनुस्यूत परम्पराप्राप्तश्रीमदहोबिलमठास्थाने चतुस्त्रिंशाः श्रीलक्ष्मीनृसिंहदिव्यपादुकासेवकश्रीवण्शठकोपश्रीशठकोपरामानुजयतीन्द्रमहादेशिकाः पूर्वाश्रमे अत्तिप्पट्टुनामकं ... समीपवर्तिनं महनीयाग्रहारम् अध्युषिता भारद्वाजकुलतिलका आजानशुद्धा बाल्य ए... धिगतश्रुतिस्मृतीतिहासपुराणन्यायतन्त्रव्याकरणवेदान्तादिविविधविद्याकलापाः श्रीमद्रङ्गनाथ... दिव्याह्निकोक्तक्रमानुष्ठितपाञ्चकालिकनित्यनैमित्तिककृत्या ज्ञानशक्तिकृपावात्सल्यसौशील्यौद... क्षान्त्याद्यसंख्येयकल्याणगुणगणमहोदधयः अनेकवारं परिशीलिताध्यापितश्रीभाष्यगीताभा... भगवद्विषय न्यायपरिशुद्धि न्यायसिद्धाञ्जन तत्त्वमुक्ताकलापाधिकरणसारावलिशतदूषण्यादिसांप्रदायिकदिव्यसूक्तिकलापाः दुर्वादिवारणेन्द्रमस्तकभेदनकण्ठीरवाः परमैकान्तिशिखामणयः श्रीनिवासराघवाचार्या विख्यातास्सर्वोपकाराय अधिकरणसारावलीव्याख्यानाधिकरणकल्पतरुनृसिंहषट्पिपादवर्णनन्यासविंशतिव्याख्यान सामान्यविशेषादिन्यायसङ्ग्रहैकशास्त्र्यसमर्थनकविहृदयरञ्जनीदेवराजसहस्रगणिदण्डकानन्त्यनिर्णय ब्रह्मसूत्रार्थमञ्जरीमणिप्रवालरूपगीताव्याख्या सारदीपिकाहृदय किंगृहेशस्तुतिद्राविडभाषात्मकनृसिंहप्रपत्त्यादीन् अनेकग्रन्थानन्वगृह्णन् । तेषु प्रबन्धेषु पदयोजनारूपाधिकरणकल्पतरुप्रबन्धः, सामान्यज्ञानवतामपि श्रीभाष्यदुरूहार्थसुखग्रहणहेतुत्वात् पदच्छेदः पदार्थोक्तिरितिन्यायेन पदशोऽर्थप्रकाशकत्वाच्चाध्यात्मशास्त्रजिज्ञासूनामुपकारकतमोऽयम् । अधिकरणसारावलीतत्त्वमुक्ताकलापयोरिव 'अन्योन्यहस्तप्रदमिदमुभयं धार्यमाचार्यवद्भिः' इत्याचार्योक्तन्यायेन चिन्तामणिकल्पतर्वोरपि अन्योन्यहस्तप्रदत्वं हृदयङ्गमम् । सारावलीत्रयणः सुदर्शनपाञ्चजन्यवत् इदमुभयमपि धार्यमाचार्यवद्भिः ।

'श्रुतप्रकाशिका भूमौ येनादौ परिरक्षिता' इतिवत् सावधानं बहोः कालात्सुरक्षितेयं पदयोजना 'गुरुं प्रकाशयेद्धीमान्' 'यस्य देवे पराभक्तिः' 'साक्षान्मुक्तेरुपायान्यो विद्याभेदानुपादिशत् । कथ्यते सर्वशास्त्रेषु सतु श्रेष्ठतमो गुरुः' इत्याद्युक्तप्रकारेण साक्षादाचार्यप्रतिपत्तिविशेषप्रकाशकतया साधुलोकोपकाराय मुद्रणमनायि । अनेन मुद्रणकैङ्कर्येण प्रीयतां भगवान् लक्ष्मीनृसिंहः ।

एतन्मुद्रणशोधनकैङ्कर्येनियुक्तस्य परुत्तिप्पट्टु वङ्गीपुरम् न्यायशिरोमणि[देवनार्वलाहम्] लक्ष्मीनृसिंहाचार्यस्य, विदुषः केशवाचार्यस्य, व्याकरणविद्याप्रवीण-[पादूर्] राघवाचार्यस्य, प्रकाशनकैङ्कर्येनियुक्तस्य कुरुचि लक्ष्मीनृसिंहाचार्यस्यच एतेषां लक्ष्मीनृसिंहविशेषकटाक्षा भूयासुरित्यखिलमतिशोभनम् ।

अहोबिलमठाधीशनृसिंहपदसंपदः ।
एतद्भूमिकया श्रीमान् प्रीयतां दिव्यकेसरी ॥

श्रीशठकोपश्रीः

## ॥ ब्रह्मसूत्राणि ॥

### ॥ प्रथमस्याध्यायस्य प्रथमः पादः ॥

१. जिज्ञासाधिकरणम् ।

1. ॐ अथातो ब्रह्मजिज्ञासा । १-१-१

२. जन्माद्यधिकरणम् ।

2. जन्माद्यस्य यतः । १-१-२

३. शास्त्रयोनित्वाधिकरणम् ।

3. शास्त्रयोनित्वात् । १-१-३

४. समन्वयाधिकरणम् ।

4. तत्तु समन्वयात् । १-१-४

५. ईक्षत्यधिकरणम् ।

5. ईक्षतेर्नाशब्दम् । १-१-५
6. गौणश्चेन्नात्मशब्दात् । १-१-६
7. तन्निष्ठस्य मोक्षोपदेशात् । १-१-७
8. हेयत्वावचनाच्च । १-१-८
9. प्रतिज्ञाविरोधात् । १-१-९
10. स्वाप्ययात् । १-१-१०
11. गतिसामान्यात् । १-१-११
12. श्रुतत्वाच्च । १-१-१२

६. आनन्दमयाधिकरणम् ।

13. आनन्दमयोऽभ्यासात् । १-१-१३
14. विकारशब्दान्नेति चेन्न प्राचुर्यात् । १-१-१४
15. तद्धेतुव्यपदेशाच्च । १-१-१५
16. मान्त्रवर्णिकमेव च गीयते । १-१-१६
17. नेतरोऽनुपपत्तेः । १-१-१७
18. भेदव्यपदेशाच्च । १-१-१८
19. कामाच्च नानुमानापेक्षा । १-१-१९
20. अस्मिन्नस्य च तद्योगं शास्ति । १-१-२०

७. अन्तरधिकरणम् ।

21. अन्तस्तद्धर्मोपदेशात् । १-१-२१
22. भेदव्यपदेशाच्चान्यः । १-१-२२

८. आकाशाधिकरणम् ।

23. आकाशस्तल्लिङ्गात् । १-१-२३

९. प्राणाधिकरणम् ।

24. अतएव प्राणः । १-१-२४

१०. ज्योतिरधिकरणम् ।

25. ज्योतिश्चरणाभिधानात् । १-१-२५
26. छन्दोऽभिधानान्नेति चेन्न तथा चेतोऽर्पणनिगमात् तथा हि दर्शनम् । १-१-२६
27. भूतादिपादव्यपदेशोपपत्तेश्चैवम् । १-१-२७
28. उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् । १-१-२८

११. इन्द्रप्राणाधिकरणम् ।

29. प्राणस्तथानुगमात् । १-१-२९
30. न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन् । १-१-३०
31. शास्त्रदृष्ट्या तूपदेशो वामदेववत् । १-१-३१
32. जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् । १-१-३२

इति ब्रह्मसूत्रेषु प्रथमस्याध्यायस्य प्रथमः पादः ॥

श्रुत' पनश्चिता ... पादः ॥

सर्व ...

११. प्रसिद्धोपदेशात्। १-२-१

... विवक्षि ... णोपपत्तेश्च। १-२-२

... हृत्वम् ... न शारीरः। १-२-३

... र्माप ... देशाच्च। १-२-४

37. शब्दविशेषात्। १-२-५

38. स्मृतेश्च। १-२-६

39. अर्भकौकस्त्वात् तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च। १-२-७

40. सम्भोगप्राप्तिरिति चेन्न वैशेष्यात्। १-२-८

१३. अत्त्रधिकरणम्। २.

41. अत्ता चराचरग्रहणात्। १-२-९

42. प्रकरणाच्च। १-२-१०

43. गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्। १-२-११

44. विशेषणाच्च। १-२-१२

१४. अन्तराधिकरणम्। ३.

45. अन्तर उपपत्तेः। १-२-१३

46. स्थानादिव्यपदेशाच्च। १-२-१४

47. सुखविशिष्टाभिधानादेव च। १-२-१५

48. अत एव च स ब्रह्म १-२-१६

49. श्रुतोपनिषत्कगत्यभिधानाच्च। १-२-१७

50. अनवस्थितेरसम्भवाच्च नेतरः। १-२-१८

१५. अन्तर्याम्यधिकरणम्। ४.

51. अन्तर्याम्यधिदैवाधिलोकादिषु तद्धर्मव्यपदेशात्। १-२-१९

52. नच स्मार्तमतद्धर्माभिलापाच्छारीरश्च १-२-२०

53. उभयेऽपि हि भेदेनैनमधीयते १-२-२१

१६. अदृश्यत्वादिगुणकाधिकरणम्। ५.

54. अदृश्यत्वादिगुणको धर्मोक्तेः १-२-२२

55. विशेषणभेदव्यपदेशाभ्यां च नेतरौ। १-२-२३

56. रूपोपन्यासाच्च। १-२-२४

१७. वैश्वानराधिकरणम्। ६.

57. वैश्वानरस्साधारणशब्दविशेषात्। १-२-२५

58. स्मर्यमाणमनुमानं स्यादिति। १-२-२६

59. शब्दादिभ्योऽन्तः प्रतिष्ठानाच्च नेति चेन्न तथा दृष्ट्युपदेशादसम्भवात् पुरुषमपि चैनमधीयते। १-२-२७

60. अत एव न देवता भूतं च। १-२-२८

61. साक्षादप्यविरोधं जैमिनिः। १-२-२९

62. अभिव्यक्तेरित्याश्मरथ्यः। १-२-३०

63. अनुस्मृतेर्बादरिः। १-२-३१

64. सम्पत्तेरिति जैमिनिस्तथा हि दर्शयति। १-२-३२

65. आमनन्ति चैनमस्मिन्। १-२-३३

इति ब्रह्मसूत्रेषु प्रथमस्याध्यायस्य द्वितीयः पादः ॥

---

## ॥ अथ प्रथमस्याध्यायस्य तृतीयः पादः ॥

१८. द्युभ्वाद्यधिकरणम्। १.

66. द्युभ्वाद्यायतनं स्वशब्दात्। १-३-१

67. मुक्तोपसृप्यव्यपदेशाच्च। १-३-२

68. नानुमानमतच्छब्दात्प्राणभृच्च। १-३-३

69. भेदव्यपदेशात्। १-३-४

70. प्रकरणात्। १-३-५

71. स्थित्यदनाभ्यां च। १-३-६

१९. भूमाधिकरणम्।

72. भूमा सम्प्रसादादध्युपदेशात्। १-३-७

73. धर्मोपपत्तेश्च। १-३-८

२०. अक्षराधिकरणम्। ३.

74. अक्षरमम्बरान्तधृतेः। १-३-९

75. साच प्रशासनात्। १-३-१०

76. अन्यभावव्यावृत्तेश्च। १-३-११

२१. ईक्षतिकर्माधिकरणम्। ४.

77. ईक्षतिकर्मव्यपदेशात्सः १-३-१२

२२. दहराधिकरणम्। ५.

78. दहर उत्तरेभ्यः। १-३-१३

79. गतिशब्दाभ्यां तथाहि दृष्टं लिङ्गञ्च। १-३-१४

80. धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः। १-३-१५

81. प्रसिद्धेश्च। १-३-१६

82. इतरपरामर्शात्स इति चेन्नासम्भवात् १-३-१७

83. उत्तराच्चेदाविर्भूतस्वरूपस्तु। १-३-१८

84. अन्यार्थश्च परामर्शः १-३-१९

85. अल्पश्रुतेरिति चेत्तदुक्तम्। १-३-२०

86. अनुकृतेस्तस्य च। १-३-२१

87. अपि स्मर्यते। १-३-२२

२३. प्रमिताधिकरणम्। ६.

88. शब्दादेव प्रमितः। १-३-२३

89. हृद्यपेक्षया तु मनुष्याधिकारत्वात्। १-३-२४

२४. एतद्गर्भे देवताधिकरणम्। ७.

90. तदुपर्यपि बादरायणस्सम्भवात्। १-३-२५

93. अत एव च नित्यत्वम्। १-३-२८

94. समाननामरूपत्वाच्चावृत्तावप्यविरो[illegible]
स्मृतेश्च। १-३-२९

२५. एतद्गर्भे मध्वधिकरणम्

95. मध्वादिष्वसम्भवादनधिकारं जैमिनिः १-३-३०

96. ज्योतिषि भावाच्च। १-३-३१

97. भावं तु बादरायणोऽस्ति हि। १-३-३२

२६. एतद्गर्भे अपशूद्राधिकरणम्। ९.

98. शुगस्य तदनादरश्रवणात् तदाद्रवणात् सूच्यते हि
१-३-३३

99. क्षत्रियत्वगतेश्च। १-३-३४

100. उत्तरत्र चैत्ररथेन लिङ्गात्। १-३-३५

101. संस्कारपरामर्शात् तदभावाभिलापाच्च। १-३-३६

102. तदभावनिर्धारणे च प्रवृत्तेः १-३-३७

103. श्रवणाध्ययनार्थप्रतिषेधात्। १-३-३८

104. स्मृतेश्च। १-३-३९

प्रमिताधिकरणशेषः।

105. कम्पनात्। १-३-४०

106. ज्योतिर्दर्शनात्। १-३-४१

२७. अर्थान्तरत्वादिव्यपदेशाधिकरणम्। १०.

107. आकाशोऽर्थान्तरत्वादिव्यपदेशात्। १-३-४२

108. सुषुप्त्युत्क्रान्त्योर्भेदेन। १-३-४३

109. पत्यादिशब्देभ्यः। १-३-४४

इति ब्रह्मसूत्रेषु प्रथमस्याध्यायस्य तृतीयः पादः॥

---

## ॥ अथ प्रथमस्याध्यायस्य चतुर्थः पादः॥

२८. आनुमानिकाधिकरणम्। १.

110. आनुमानिकमप्येकेषामितिचेन्न शरीररूपकविन्यस्त-
गृहीतेर्दर्शयति च। १-४-१

111. सूक्ष्मं तु तदर्हत्वात्। १-४-२

112. तदधीनत्वादर्थवत्। १-४-३

113. ज्ञेयत्वावचनाच्च। १-४-४

श्रुत' पनश्रिता [illegible]

इति [illegible] रच । [illegible]

२९. [illegible] चमसाधिकरणम् । २.

[illegible] शेषात् । १-४-८

[illegible] मा तु तथाह्यधीयत एके । १-४-९

119. [illegible] देशाच्च मध्वादिवदविरोधः । १-४-१०

३०. संख्योपसंग्रहाधिकरणम् । ३.

120. न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च । १-४-११

121. प्राणादयो वाक्यशेषात् । १-४-१२

122. ज्योतिषैकेषामसत्यन्ने । १-४-१३

३१. कारणत्वाधिकरणम् । ४.

123. कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः । १-४-१४

124. समाकर्षात् । १-४-१५

३२. जगद्वाचित्वाधिकरणम् । ५.

125. जगद्वाचित्वात् । १-४-१६

[illegible] ख्यप्राणलिङ्गान्नेति चेत् तद्व्याख्यातम् १-४-१७

[illegible] ार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके । १-४-१८

३३. वाक्यान्वयाधिकरणम् । ६.

128. वाक्यान्वयात् । १-४-१९

129. प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः । १-४-२०

130. उत्क्रमिष्यत एवंभावादित्यौडुलोमिः । १-४-२१

131. अवस्थितेरिति काशकृत्स्नः । १-४-२२

३४. प्रकृत्यधिकरणम् । ७.

132. प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् । १-४-२३

133. अभिध्योपदेशाच्च । १-४-२४

134. साक्षाच्चोभयाम्नानात् । १-४-२५

135. आत्मकृतेः । १-४-२६

136. परिणामात् । १-४-२७

137. योनिश्च हि गीयते । १-४-२८

३५. सर्वव्याख्यानाधिकरणम् ।

138. एतेन सर्वे व्याख्याता व्याख्याताः । १-४-२९

इति ब्रह्मसूत्रेषु प्रथमस्याध्यायस्य चतुर्थः पादः ।

अध्यायश्च समाप्तः ।

---

## ॥ अथ द्वितीयस्याध्यायस्य प्रथमः पादः ॥

३६. स्मृत्यधिकरणम् । १.

139. स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् । २-१-१

140. इतरेषां चानुपलब्धेः । २-१-२

३७. योगप्रत्युक्त्यधिकरणम् । २.

141. एतेन योगः प्रत्युक्तः । २-१-३

३८. विलक्षणत्वाधिकरणम् । ३.

142. न विलक्षणत्वादस्य तथात्वञ्च शब्दात् । २-१-४

143. अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् । २-१-५

144. दृश्यते तु । २-१-६

145. असदिति चेन्न प्रतिषेधमात्रत्वात् । २-१-७

146. अपीतौ तद्वत्प्रसङ्गादसमञ्जसम् । २-१-८

147. न तु दृष्टान्तभावात् । २-१-९

148. स्वपक्षदोषाच्च । २-१-१०

149. तर्काप्रतिष्ठानादपि । २-१-११

150. अन्यथानुमेयमिति चेदेवमप्यनिर्मोक्षप्रसङ्गः । २-१-१२

३९. शिष्टापरिग्रहाधिकर[illegible]

151. एतेन शिष्टापरिग्रहा अपि व्याख्याता[illegible]

४०. भोक्त्रापत्त्यधिकरणम् । ५

152. भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत् । २-१-१४

४१. आरम्भणाधिकरणम् । ६.

153. तदनन्यत्वमारम्भणशब्दादिभ्यः । २-१-१५

154. भावे चोपलब्धेः । २-१-१६

155. सत्त्वाच्चापरस्य । २-१-१७

156. असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषाद्युक्तेः शब्दान्तराच्च । २-१-१८

157. पटवच्च । २-१-१९

158. यथा च प्राणादिः । २-१-२०

४२. इतरव्यपदेशाधिकरणम् । ७.

159. इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः । २-१-२१

160. अधिकं तु भेदनिर्देशात् । २-१-२२

161. अश्मादिवच्च तदनुपपत्तिः । २-१-२३

अभ्य[illegible] २५

४४. कृत्स्नप्रसक्त्यधिकरण[illegible]

164. कृत्स्नप्रसक्तिर्निरवयवत्वशब्दको[illegible]

165. श्रुतेस्तु शब्दमूलत्वात् । २-१[illegible]

166. आत्मनि चैवं विचित्राश्च हि । [illegible]

167. स्वपक्षदोषाच्च । २-१-२९

168. सर्वोपेता च तद्दर्शनात् । २-१-३०

169. विकरणत्वान्नेति चेत्तदुक्तम् । २-१-३१

४५. प्रयोजनवत्त्वाधिकरणम् । १०.

170. न प्रयोजनवत्त्वात् । २-१-३२

171. लोकवत्तु लीलाकैवल्यम् । २-१-३३

172. वैषम्यनैर्घृण्ये न सापेक्षत्वात् तथाहि दर्शयति ।

173. न कर्माविभागादिति चेन्नानादित्वादुपपद्यते चाप्युपलभ्यते च । २-१-३५

174. सर्वधर्मोपपत्तेश्च । २-१-३६

इति ब्रह्मसूत्रेषु द्वितीयस्याध्यायस्य प्रथमः पादः ।

---

## ॥ अथ द्वितीयस्याध्यायस्य द्वितीयः पादः ॥

४६. रचनानुपपत्त्यधिकरणम् । १.

175. रचनानुपपत्तेश्च नानुमानं प्रवृत्तेश्च । २-२-१

176. पयोऽम्बुवच्चेत्तत्रापि । २-२-२

177. व्यतिरेकानवस्थितेश्चानपेक्षत्वात् । २-२-३

178. अन्यत्राभावाच्च न तृणादिवत् । २-२-४

179. पुरुषाश्मवदिति चेत्तथापि । २-२-५

180. अङ्गित्वानुपपत्तेश्च । २-२-६

181. अन्यथानुमितौ च ज्ञशक्तिवियोगात् । २-२-७

182. अभ्युपगमेऽप्यर्थाभावात् । २-२-८

183. विप्रतिषेधाच्चासमञ्जसम् । २-२-९

४७. महद्दीर्घाधिकरणम् । २.

184. महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् । २-२-१०

185. उभयथापि न कर्मातस्तदभावः । २-२-११

186. समवायाभ्युपगमाच्च साम्यादनवस्थितेः । २-२-१२

187. नित्यमेव च भावात् । २-२-१३

188. रूपादिमत्त्वाच्च विपर्ययो दर्शनात् । २-२-१४

189. उभयथा च दोषात् । २-२-१५

190. अपरिग्रहाच्चात्यन्तमनपेक्षा । २-२-१६

४८. समुदायाधिकरणम् । ३.

191. समुदाय उभयहेतुकेऽपि तदप्राप्तिः । २-२-१७

श्रुत पनश्चिता [illegible]

[illegible] ादे च

[illegible] ११. [illegible]तिज्ञोपरोधो यौगपद्यमन्यथा । २-२-२०

[illegible] वृथे [illegible]तिसंख्यानिरोधाप्राप्तिरविच्छेदात् ।

[illegible] हेत्वम् कर [illegible]

1[illegible] [illegible]पात् । २-२-२२

197. [illegible] [illegible]विशेपात् । २-२-२३

198. अनुस्मृतेश्च । २-२-२४

199. नासतोऽदृष्टत्वात् । २-२-२५

200. उदासीनानामपि चैवं सिद्धिः । २-२-२६

४९. उपलब्ध्यधिकरणम् । ४.

201. नाभाव उपलब्धेः । २-२-२७

202. वैधर्म्याच्च न स्वप्नादिवत् । २-२-२८

203. न भावोऽनुपलब्धेः । २-२-२९

५०. सर्वथानुपपत्त्यधिकरणम् । ५.

204. सर्वथानुपपत्तेश्च । २-२-३०

[illegible]म्नसम्भवाधिकरणम् । ६.

[illegible]न्नसम्भवात् ॥ २-२-३१

[illegible]आत्माकात्स्न्र्यम् । २.२-३२

207. नच पर्यायादप्यविरोधो विकारादिभ्यः । २-२-३३

208. अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः । २-२-३४

५२. पशुपत्यधिकरणम् । ७.

209. पत्युरसामञ्जस्यात् । २-२-३५

210. अधिष्ठानानुपपत्तेश्च । २-२-३६

211. करणवच्चेन्न भोगादिभ्यः । २-२-३७

212. अन्तवत्त्वमसर्वज्ञता वा । २-२-३८

५३. उत्पत्त्यसम्भवाधिकरणम् । ८.

213. उत्पत्त्यसम्भवात् । २-२-३९

214. नच कर्तुः करणम् । २-२-४०

215. विज्ञानादिभावे वा तदप्रतिषेधः । २-२-४१

216. विप्रतिषेधाच्च । २-२-४२

इति ब्रह्मसूत्रेषु द्वितीयस्याध्यायस्य द्वितीयः पादः ।

---

## ॥ अथ द्वितीयस्याध्यायस्य तृतीयः पादः ॥

५४. वियदधिकरणम् । १.

217. न वियदश्रुतेः । २-३-१

218. अस्ति तु । २-३-२

219. गौण्यसम्भवाच्छब्दाच्च । २-३-३

220. स्याच्चैकस्य ब्रह्मशब्दवत् । २-३-४

221. प्रतिज्ञाहानिरव्यतिरेकात् । २-३-५

222. शब्देभ्यः । २-३-६

223. यावद्विकारं तु विभागो लोकवत् । २-३-७

224. एतेन मातरिश्वा व्याख्यातः । २-३-८

225. असम्भवस्तु सतोऽनुपपत्तेः । २-३-९

५५. तेजोऽधिकरणम् । २.

226. तेजोऽतस्तथाह्याह । २-३-१०

227. आपः । २-३-११

228. पृथिवी । २-३-१२

229. अधिकाररूपशब्दान्तरेभ्यः । २-३-१३

230. तदभिध्यानादेव तु तल्लिङ्गात्सः । २-३-१४

231. विपर्ययेण तु क्रमोऽत उपपद्यते च । २-३-१५

232. अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् । २-३-१६

233. चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशोऽभाक्तस्तद्भावभावित्वात् । २-३-१७

५६. आत्माधिकरणम् । ३.

234. नात्मा श्रुतेर्नित्यत्वाच्च ताभ्यः । २-३-१८

५७. ज्ञाधिकरणम् । [illegible]

235. ज्ञोऽत एव । २-३-१९

236. उत्क्रान्तिगत्यागतीनाम् । २-३-२०

237. स्वात्मना चोत्तरयोः । २-३-२१

238. नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् । २-३-२२

239. स्वशब्दोन्मानाभ्यां च । २-३-२३

240. अविरोधश्चन्दनवत् । २-३-२४

241. अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि । २-३-२५

242. गुणाद्वालोकवत् । २-३-२६

243. व्यतिरेको गन्धवत्तथा च दर्शयति । २-३-२७

244. पृथगुपदेशात् । २-३-२८

245. तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् । २-३-२९

246. यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् । २-३-३०

247. पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात् । २-३-३१

248. नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वान्यथा । २-३-३२

५८. कर्त्रधिकरणम् । ५.

249. कर्ता शास्त्रार्थवत्त्वात् । २-३-३३

250. उपादानाद्विहारोपदेशाच्च । २-३-३४

251. व्यपदेशाच्च क्रियायां नचेन्निर्देशविपर्ययः । २-३-३५

[illegible]

अक्षर[illegible]

255. यथा च तक्षोभयथा । २-३-३९

५९. परायत्ताधिकरण[illegible] १[illegible]

256. परात्तु तच्छ्रुतेः । २-३-४०

257. कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्ध[illegible]दिभ्यः । २-३-४१

६०. अंशाधिकरणम् । ७.

258. अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके । २-३-४२

259. मन्त्रवर्णात् । २-३-४३

260. अपि स्मर्यते । २-३-४४

261. प्रकाशादिवत्तु नैवं परः । २-३-४५

262. स्मरन्ति च । २-३-४६

263. अनुज्ञापरिहारौ देहसम्बन्धाज्ज्योतिरादिवत् । २-३-४७

264. असन्ततेश्चाव्यतिकरः । २-३-४८

265. आभास एव च । २-३-४९

266. अदृष्टानियमात् । २-३-५०

267. अभिसन्ध्यादिष्वपि चैवम् । २-३-५१

268. प्रदेशभेदादिति चेन्नान्तर्भावात् । २-३-५२

इति ब्रह्मसूत्रेषु द्वितीयस्याध्यायस्य तृतीयः पादः ॥

---

## ॥ अथ द्वितीयस्याध्यायस्य चतुर्थः पादः ॥

६१. प्राणोत्पत्त्यधिकरणम् । १.

269. तथा प्राणाः । २-४-१

270. गौण्यसम्भवात् तत्प्राक्छ्रुतेश्च । २-४-२

271. तत्पूर्वकत्वाद्वाचः । २-४-३

६२. सप्तगत्यधिकरणम् । २.

272. सप्तगतेर्विशेषितत्वाच्च । २-४-४

273. हस्तादयस्तु स्थितेऽतो नैवम् । २-४-५

६३. प्राणाणुत्वाधिकरणम् । ३.

274. अणवश्च । २-४-६

275. श्रेष्ठश्च । २-४-७

६४. वायुक्रियाधिकरणम् । ४.

276. न वायुक्रिये पृथगुपदेशात् । २-४-८

…श्रेष्ठाणुत्वाधिकरणम्। ५.

…-४-१२

…द्यधिष्ठानाधिकरणम्। ६.

281. ज्यो…धिष्ठानं तु तदामननात् प्राणवता शब्दात्। २-४-१३

…त्वात्। २-४-१४

…इन्द्रियाधिकरणम्। ७.

…इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात्। २-४-१५

284. भेदश्रुतेर्वैलक्षण्याच्च। २-४-१६

६८. संज्ञामूर्तिक्लृप्त्यधिकरणम्। ८.

285. संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात्। २-४-१७

286. मांसादि भौमं यथाशब्दमितरयोश्च। २-४-१८

287. वैशेष्यात्तु तद्वादस्तद्वादः। २-४-१९

इति ब्रह्मसूत्रेषु द्वितीयस्याध्यायस्य चतुर्थः पादः।

अध्यायश्च समाप्तः।

---

## ॥ अथ तृतीयस्याध्यायस्य प्रथमः पादः ॥

६९. तदन्तरप्रतिपत्त्यधिकरणम्। १.

288. तदन्तरप्रतिपत्तौ रंहति सम्परिष्वक्तः प्रश्ननिरूपणाभ्याम्। ३-१-१

289. त्र्यात्मकत्वात्तु भूयस्त्वात्। ३-१-२

290. प्राणगतेश्च। ३-१-३

291. अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ३-१-४

292. प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः। ३-१-५

293. अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः। ३-१-६

294. भाक्तं वा नात्मवित्त्वात्तथा हि दर्शयति। ३-१-७

७०. कृतात्ययाधिकरणम्। २.

295. कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवञ्च। ३-१-८

296. चरणादिति चेन्न तदुपलक्षणार्थेति कार्ष्णाजिनिः। ३-१-९

297. आनर्थक्यमिति चेन्न तदपेक्षत्वात्। ३-१-१०

298. सुकृतदुष्कृते एवेतितु बादरिः। ३-१-११

७१. अनिष्टादिकार्यधिकरणम्। ३.

299. अनिष्टादिकारिणामपि च श्रुतम्। ३-१-१२

300. संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात्। ३-१-१३

301. स्मरन्ति च। ३-१-१४

302. अपि सप्त। ३-१-१५

303. तत्रापि तद्व्यापारादविरोधः। ३-१-१६

304. विद्याकर्मणोरिति तु प्रकृतत्वात्। ३-१-१७

305. न तृतीये तथोपलब्धेः। ३.१-१८

306. स्मर्यतेऽपि च लोके। ३-१-१९

307. दर्शनाच्च। ३-१-२०

308. तृतीयशब्दावरोधस्संशोकजस्य। ३-१-२१

७२. तत्स्वाभाव्यापत्त्यधिकरणम्। ४.

309. तत्स्वाभाव्यापत्तिरुपपत्तेः। ३-१-२२

७३. नातिचिराधिकरणम्। ५.

310. नातिचिरेण विशेषात्। ३-१-२३

७४. अन्याधिष्ठिताधिकरणम्। ६.

311. अन्याधिष्ठिते पूर्ववदभिलापात्। ३-१-२४

312. अशुद्धमिति चेन्न शब्दात्। ३-१-२५

313. रेतस्सिग्योगोऽथ। ३-१-२६

314. योनेश्शरीरम्। ३-१-२७

इति ब्रह्मसूत्रेषु तृतीयस्याध्यायस्य प्रथमः पादः॥

---

|| अथ [illegible]

७५. सन्ध्याधिकरणम् । १. [illegible]

315. सन्ध्ये सृष्टिराह हि । ३-२-१

316. निर्मातारञ्चैके पुत्रादयश्च । ३-२-२

317. मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् । ३-२-३

318. पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ । ३-२-४

319. देहयोगाद्वा सोऽपि । ३-२-५

320. सूचकश्च हि श्रुतेराचक्षते च तद्विदः । ३-२-६

७६. तदभावाधिकरणम् । २.

321. तदभावो नाडीषु तच्छ्रुतेरात्मनि च । ३-२-७

322. अतः प्रबोधोऽस्मात् । ३-२-८

७७. कर्मानुस्मृतिशब्दविध्यधिकरणम् । ३.

323. स एव तु कर्मानुस्मृतिशब्दविधिभ्यः । ३-२-९

७८. मुग्धाधिकरणम् । ४.

324. मुग्धेऽर्धसम्पत्तिः परिशेषात् । ३-२-१०

७९. उभयलिङ्गाधिकरणम् । ५.

325. न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि । ३-२-११

326. भेदादिति चेन्न प्रत्येकमतद्वचनात् । ३-२-१२

327. अपि चैवमेके । ३-२-१३

328. अरूपवदेव हि तत्प्रधानत्वात् । ३-२-१४

329. प्रकाशवच्चावैयर्थ्यात् । ३-२-१५

330. आह च तन्मात्रम् । ३-२-१६

331. दर्शयति चाथो अपि स्मर्यते । ३-२-१७

332. अतएवचोपमा सूर्यकादिवत् । ३-२-१८

333. अम्बुवदग्रहणात्तु न तथात्वम् । ३-२-१९

[illegible] सामञ्जस्या-

च्च । ३-२-२०

335. प्रकृतैतावत्त्वं हि प्रतिषेधति ततो [illegible]

३-२-२१

336. तदव्यक्तमाह हि । ३-२-२२

337. अपि संराधने प्रत्यक्षानुमानाभ्याम् । ३-२-२३

338. प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात् । ३-२-२४

339. अतोऽनन्तेन तथा हि लिङ्गम् । ३-२-२५

८०. अहिकुण्डलाधिकरणम् । ६.

340. उभयव्यपदेशात्त्वहिकुण्डलवत् । ३-२-२६

341. प्रकाशाश्रयवद्वा तेजस्त्वात् । ३-२-२७

342. पूर्ववद्वा ॥ ३-२-२८

343. प्रतिषेधाच्च । ३-२-२९

८१. पराधिकरणम् । ७.

344. परमतस्सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः । ३-२-३०

345. सामान्यात्तु । ३-२-३१

346. बुद्ध्यर्थः पादवत् । ३-२-३२

347. स्थानविशेषात्प्रकाशादिवत् । ३-२-३३

348. उपपत्तेश्च । ३-२-३४

349. तथान्यप्रतिषेधात् । ३-२-३५

350. अनेन सर्वगतत्वमायामशब्दादिभ्यः । ३-२-३६

८२. फलाधिकरणम् । ८.

351. फलमतउपपत्तेः । ३-२-३७

352. श्रुतत्वाच्च । ३-२-३८

353. धर्मं जैमिनिरत एव । ३-२-३९

354. पूर्वं तु बादरायणो हेतुव्यपदेशात् । ३-२-४०

इति ब्रह्मसूत्रेषु तृतीयस्याध्यायस्य द्वितीयः पादः ।

---

... पादः ॥

इ... सर्वव...

८१. ...त्तप्रत्ययं चोदनाद्यविशेषात् । ३-३-१

...: ...विध चेदेकस्यामपि । ३-३-२

... हेत्वम् कर... तथात्वे हि समाचारेऽधिकाराच्च सव-
...रस्यापि ...नियमः । ३-३-३

358. दर्शयति च । ३-३-४

359. उपसंहारोऽर्थाभेदाद्विधिशेषवत्समाने च । ३-३-५

८४. अन्यथात्वाधिकरणम् । २.

360. अन्यथात्वं शब्दादिति चेन्नाविशेषात् । ३-३-६

361. नवा प्रकरणभेदात्परोवरीयस्त्वादिवत् । ३-३-७

362. संज्ञातश्चेत्तदुक्तमस्ति तु तदपि । ३-३-८

363. व्याप्तेश्च समञ्जसम् । ३-३-९

८५. सर्वाभेदाधिकरणम् । ३.

364. सर्वाभेदादन्यत्रेमे । ३-३-१०

८६. आनन्दाद्यधिकरणम् । ४.

365. आनन्दादयः प्रधानस्य । ३-३-११

366. प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ।
३-३-१२

367. इतरे त्वर्थसामान्यात् । ३-३-१३

368. आध्यानाय प्रयोजनाभावात् । ३-३-१४

369. आत्मशब्दाच्च । ३-३-१५

370. आत्मगृहीतिरितरवदुत्तरात् । ३-३-१७

371. अन्वयादिति चेत्स्यादवधारणात् । ३-३-१७

८७. कार्याख्यानाधिकरणम् । ५.

372. कार्याख्यानादपूर्वम् । ३-३-१८

८८. समानाधिकरणम् । ६.

373. समान एवञ्चाभेदात् । ३-३-१९

८९. सम्बन्धाधिकरणम् । ७.

374. सम्बन्धादेवमन्यत्रापि । ३-२-२०

...विशेषात् । ३-३-२१

...0. दर्शयतिच । ३-३-२२

९०. सम्भृत्यधिकरणम् । ८.

377. सम्भृतिद्युव्याप्त्यपि चातः । ३-३-२३

९१. पुरुषविद्याधिकरणम् । ९.

378. पुरुषविद्यायामपि चेतरेषामनाम्नानात् । ३-३-२४

९२. वेधाद्यधिकरणम् । १०.

379. वेधाद्यर्थभेदात् । ३-३-२५

९३. हान्यधिकरणम् । ११.

380. हानौ तूपायनशब्दशेषत्वात् कुशाच्छन्दस्स्तुत्युपगान-
वत्तदुक्तम् । ३-३-२६

९४. साम्परायाधिकरणम् । १२.

381. साम्पराये तर्तव्याभावात् तथाह्यन्ये । ३-३-२७

382. छन्दत उभयाविरोधात् । ३-३-२८

383. गतेरर्थवत्त्वमुभयथान्यथा हि विरोधः । ३-३-२९

384. उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् । ३-२-३०

385. यावदधिकारमवस्थितिराधिकारिकाणाम् । ३-३-३१

९५. अनियमाधिकरणम् । १३.

386. अनियमस्सर्वेषामविरोधश्शब्दानुमानाभ्याम् ।
३-३-३२

९६. अक्षरध्यधिकरणम् । १४.

387. अक्षरधियां त्ववरोधस्सामान्यतद्भावाभ्यामौपसदवत्त-
दुक्तम् । ३-३-३३

388. इयदामननात् । ३-३-३४

९७. अन्तरत्वाधिकरणम् । १५.

389. अन्तराभूतग्रामवत् स्वात्मनोऽन्यथा भेदानुपपत्ति-
रिति चेन्नोपदेशवत् । ३-३-३५

390. व्यतिहारो विशिंषन्ति हीतरवत् । ३-३-३६
391. सैव हि सत्यादयः । ३-३-३७

९८. कामाद्यधिकरणम् । १६.

392. कामादीतरत्र तत्र चायतनादिभ्यः । ३-३-३८
393. आदरादलोपः । ३-३-३९
394. उपस्थितेऽतस्तद्वचनात् । ३-३-४०

९९. तन्निर्धारणानियमाधिकरणम् । १७.

395. तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम् । ३-३-४१

१००. प्रदानाधिकरणम् । १८.

396. प्रदानवदेव तदुक्तम् । ३-३-४२

१०१. लिङ्गभूयस्त्वाधिकरणम् । १९.

397. लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि । ३-३-४३

१०२. पूर्वविकल्पाधिकरणम् । २०.

398. पूर्वविकल्पः प्रकरणात्स्यात् क्रिया मानसवत् । ३-७-४४
399. अतिदेशाच्च । ३-३-४५
400. विद्यैव तु निर्धारणाद्दर्शनाच्च । ३-३-४६
401. श्रुत्यादिबलीयस्त्वाच्च न बाधः । ३-३-४७
402. अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववद्दृष्टश्च तदुक्तम् । ३-३-४८
403. न सामान्यादप्युपलब्धेर्मृत्युवन्नहि लोकापत्तिः । ३-३-४९

[illegible]म् ।

405. एक आत्मनश्शरीरे भावात् । ३-३-[illegible]
406. व्यतिरेकस्तद्भावभावित्वान्नतूपलब्धि[illegible]

१०४. अङ्गावबद्धाधिकरण[illegible] १९.

407. अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदं[illegible] ३-३-५३
408. मन्त्रादिवद्वाऽविरोधः । ३-३-५४

१०५. भूमज्यायस्त्वाधिकरणम् । २३.

409. भूम्नः क्रतुवज्ज्यायस्त्वं तथाहि दर्शयति । ३-३-५५

१०६. शब्दादिभेदाधिकरणम् । २४.

410. नानाशब्दादिभेदात् । ३-३-५६

१०७. विकल्पाधिकरणम् । २५.

411. विकल्पोऽविशिष्टफलत्वात् । ३-३-५७
412. काम्यास्तु यथाकामं समुच्चीयेरन्नवा पूर्वहेत्वभावात् । ३-३-५८

१०८. यथाश्रयभावाधिकरणम् । २६.

413. अङ्गेषु यथाश्रयभावः । ३-३-५९
414. शिष्टेश्च । ३-३-६०
415. समाहारात् । ३-३-६१
416. गुणसाधारण्यश्रुतेश्च । ३-३-६२
417. नवा तत्सहभावाश्रुतेः । ३-३-६३
418. दर्शनाच्च । ३-३-६४

इति ब्रह्मसूत्रेषु तृतीयस्याध्यायस्य तृतीयः पादः ।

---

इति [illegible] २९. [illegible]

११. [illegible]र्थोऽतश्शब्दादिति बादरायणः । ३-४-१

[illegible]ः [illegible]पार्थवादो यथान्येष्विति जैमिनिः ।

[illegible] हेत्वम् करा[illegible]

[illegible]रस्यापि [illegible]नात् । ३-४-३

422. तच्छ्रुतेः । ३-४-४

423. समन्वारम्भणात् । ३-४-५

424. तद्वतो विधानात् । ३-४-६

425. नियमात् । ३-४-७

426. अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् । ३-४-८

427. तुल्यं तु दर्शनम् । ३-४-९

428. असार्वत्रिकी । ३-४-१०

429. विभागश्शतवत् । ३-४-११

430. अध्ययनमात्रवतः । ३-४-१२

431. नाविशेषात् । ३.४.१३

432. स्तुतयेऽनुमतिर्वा । ३-४-१४

433. कामकारेणचैके । ३-४-१५

434. उपमर्दञ्च । ३-४-१६

435. ऊर्ध्वरेतस्सु च शब्दे हि । ३-४-१७

436. परामर्शं जैमिनिरचोदनाचापवदति हि । ३-४-१८

437. अनुष्ठेयं बादरायणस्साम्यश्रुतेः । ३-४-१९

438. विधिर्वा धारणवत् । ३-४-२०

११०. स्तुतिमात्राधिकरणम् । २.

439. स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् । ३-४-२१

440. भावशब्दाच । ३-४-२२

१११. पारिप्लवाधिकरणम् । ३.

441. पारिप्लवार्था इति चेन्न विशेषितत्वात् । ३-४-२३

442. तथा चैकवाक्योपबन्धात् । ३-४-२४

११२. अग्नीन्धनाधिकरणम् । ४.

443. अत एव चाग्नीन्धनाद्यनपेक्षा । ३-४-२५

[illegible] पादः ॥

[illegible]१३. सर्वापेक्षाधिकरणम् । ५.

[illegible]. सर्वापेक्षाच यज्ञादिश्रुतेरश्ववत् । ३-४-२६

११४. शमदमाद्यधिकरणम् ॥ ६.

445. शमदमाद्युपेतस्स्यात् तथापि तु तद्विधेस्तदङ्गतया तेषामप्यवश्यानुष्ठेयत्वात् । ३-४-२७

११५. सर्वान्नानुमत्यधिकरणम् । ७.

446. सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् । ३-४-२८

447. अबाधाच । ३-४-२९

448. अपि स्मर्यते । ३-४-३०

449. शब्दश्चातोऽकामकारे । ३-४-३१

११६. विहितत्वाधिकरणम् । ८.

450. विहितत्वाच्चाश्रमकर्मापि । ३-४-३२

451. सहकारित्वेन च । ३-४-३३

452. सर्वथापि त एवोभयलिङ्गात् । ३-४-३४

453. अनभिभवञ्च दर्शयति । ३-४-३५

११७. विधुराधिकरणम् । ९.

454. अन्तराचापि तु तद्दृष्टेः । ३-४-३६

455. अपि स्मर्यते । ३-४-३७

456. विशेषानुग्रहश्च । ३-४-३८

457. अतस्त्वितरज्ज्यायो लिङ्गाच्च । ३-४-३९

११८. तद्भूताधिकरणम् । १०.

458. तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमात्तद्रूपाभावेभ्यः । ३-४-४०

459. न चाधिकारिकमपि पतनानुमानात्तदयोगात् ३-४-४१

460. उपपूर्वमपीत्येके भावमशनवत्तदुक्तम् । ३-४-४२

461. बहिस्तूभयथापि स्मृतेराचाराच्च । ३-४-४३

११९. स्वाम्यधिकरणम् । ११.

462. स्वामिनः फलश्रुतेरित्यात्रेयः ३-४-४४

463. आर्त्विज्यमित्यौडुलोमिस्तस्मै हि[illegible]
३-४-४५

१२०. सहकार्यन्तरविध्यधिकरणम् । [illegible]

464. सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् । ३-४-४६

465. कृत्स्नभावात्तु गृहिणोपसंहारः । ३-४-४७

466. मौनवदितरेषामप्युपदेशात् । ३-४-४८

[illegible]

१२२. [illegible]णम् ।

468. ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात् ।

१२३. मुक्तिफलाधिकरण[illegible]

469. एवं मुक्तिफलानियमस्तदवस्था[illegible] ३-४-५१

इति ब्रह्मसूत्रेषु तृतीयस्याध्यायस्य चतुर्थः पादः ।

अध्यायश्च समाप्तः

---

## ॥ अथ चतुर्थस्याध्यायस्य प्रथमः पादः ॥

१२४. आवृत्त्यधिकरणम् । १.

470. आवृत्तिरसकृदुपदेशात् । ४-१-१

471. लिङ्गाच्च । ४-१-२

१२५. आत्मत्वोपासनाधिकरणम् । २.

472. आत्मेतितूपगच्छन्ति ग्राहयन्ति च । ४-१-३

१२६. प्रतीकाधिकरणम् । ३.

473. न प्रतीके न हि सः । ४-१-४

474. ब्रह्मदृष्टिरुत्कर्षात् । ४-१-५

१२७. आदित्यादिमत्यधिकरणम् । ४.

475. आदित्यादिमतयश्चाङ्ग उपपत्तेः । ४-१-६

१२८. आसीनाधिकरणम् । ५.

476. आसीनस्सम्भवात् । ४-१-७

477. ध्यानाच्च । ४-१-८

478. अचलत्वञ्चापेक्ष्य । ४-१-९

479. स्मरन्ति च । ४-१-१०

480. यत्रैकाग्रता तत्राविशेषात् । ४-१-११

१२९. आप्रायणाधिकरणम् । ६.

481. आप्रायणात् तत्रापि हि दृष्टम् । ४-१-१२

१३०. तदधिगमाधिकरणम् । ७.

482. तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् । ४-१-१३

१३१. इतराधिकरणम् । ८.

483. इतरस्याप्येवमसंश्लेषः पाते तु । ४-१-१४

१३२. अनारब्धकार्याधिकरणम् । ९.

484. अनारब्धकार्ये एव तु पूर्वे तदवधेः । ४-१-१५

१३३. अग्निहोत्राद्यधिकरणम् । १०.

485. अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् । ४-१-१६

486. अतोऽन्यापि ह्येकेषामुभयोः । ४-१-१७

487. यदेव विद्ययेति हि । ४-१-१८

१३४. इतरक्षपणाधिकरणम् । ११.

488. भोगेन त्वितरे क्षपयित्वाथ सम्पद्यते । ४-१-१९

इति ब्रह्मसूत्रेषु चतुर्थस्याध्यायस्य प्रथमः पादः ।

---

[illegible] पादः ॥

[illegible] ३५. [illegible]

[illegible] सि दर्शनाच्छब्दाच्च । ४-२-१

[illegible] र्वाण्यनु । ४-२-२

[illegible] हेत्वम् कर [illegible] नोऽधिकरणम् । २.

491. [illegible]स्यापि [illegible] उत्तरात् । ४-२-३

१३७. अध्यक्षाधिकरणम् । ३.

492. सोऽध्यक्षे तदुपगमादिभ्यः । ४-२-४

१३८. भूताधिकरणम् । ४.

493. भूतेषु तच्छ्रुतेः । ४-२-५

494. नैकस्मिन् दर्शयतो हि । ४-२-६

१३९. आसृत्युपक्रमाधिकरणम् । ५.

495. समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य । ४-२-७

496. तदापीतेः संसारव्यपदेशात् । ४-२-८

497. सूक्ष्मं प्रमाणतश्च तथोपलब्धेः । ४-२-९

498. नोपमर्देनातः । ४-२-१०

499. अस्यैव चोपपत्तेरूष्मा । ४-२-११

500. प्रतिषेधादिति चेन्न शारीरात्स्पष्टो ह्येकेषाम् । ४-२-१२

501. स्मर्यते च । ४-२-१३

[illegible]०. परसम्पत्त्यधिकरणम् । ६.

[illegible]. तानि परे तथा ह्याह । ४-२-१४

१४१. अविभागाधिकरणम् । ७.

503. अविभागो वचनात् । ४-२-१५

१४२. तदोकोऽधिकरणम् ।

504. तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात् तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतश्शताधिकया । ४-२-१६

१४३. रश्म्यनुसाराधिकरणम् । ९.

505. रश्म्यनुसारी । ४-२-१७

१४४. निशाधिकरणम् । १०.

506. निशि नेति चेन्न सम्बन्धस्य यावद्देहभावित्वाद् दर्शयति च । ४-२-१८

१४५. दक्षिणायनाधिकरणम् । ११.

507. अतश्चायनेऽपि दक्षिणे । ४-२-१९

508. योगिनः प्रति स्मर्यते स्मार्ते चैते । ४-२-२०

इति ब्रह्मसूत्रेषु चतुर्थस्याध्यायस्य द्वितीयः पादः ।

---

## ॥ अथ चतुर्थस्याध्यायस्य तृतीयः पादः ॥

१४६. अर्चिराद्यधिकरणम् । १.

509. अर्चिरादिना तत्प्रथितेः । ४-३-१

१४७. वाय्वधिकरणम् । २.

510. वायुमब्दादविशेषविशेषाभ्याम् । ४-३-२

१४८. वरुणाधिकरणम् । ३

511. तटितोऽधि वरुणस्सम्बन्धात् । ४-३-३

१४९. आतिवाहिकाधिकरणम् । ४.

512. आतिवाहिकास्तल्लिङ्गात् । ४-३-४

513. वैद्युतेनैव ततस्तच्छ्रुतेः ४-३-५

१५०. कार्याधिकरणम् । ५.

514. कार्यं बादरिरस्य गत्युपपत्तेः । ४-३-६

515. विशेषितत्वाच्च । ४-३-७

516. सामीप्यात्तु तद्व्यपदेशः । ४-३-
517. कार्यात्यये तदध्यक्षेण सहातः परम
४-३-९
518. स्मृतेश्च । ४-३-१०
519. परं जैमिनिर्मुख्यत्वात् । ४-३-११

…यण

दोषात् तत्क्रतुश्च । ४-३-१४
523. विशेषञ्च दर्शयति । ४-३-१५

इति ब्रह्मसूत्रेषु चतुर्थस्याध्यायस्य तृतीयः पादः ।

---

## ॥ अथ चतुर्थस्याध्यायस्य चतुर्थः पादः ॥

### १५१. सम्पद्याविर्भावाधिकरणम् । १.

524. सम्पद्याविर्भावस्स्वेन शब्दात् । ४-४-१
525. मुक्तः प्रतिज्ञानात् । ४-४-२
526. आत्मा प्रकरणात् । ४-४-३

### १५२. अविभागेनदृष्टत्वाधिकरणम् । २.

527. अविभागेन दृष्टत्वात् । ४-४-४

### १५३. ब्राह्माधिकरणम् । ३.

528. ब्राह्मेण जैमिनिरुपन्यासादिभ्यः । ४-४-५
529. चिति तन्मात्रेण तदात्मकत्वादित्यौडुलोमिः । ४-४-६
530. एवमप्युपन्यासात् पूर्वभावादविरोधं बादरायणः । ४-४-७

### १५४. सङ्कल्पाधिकरणम् । ६.

531. सङ्कल्पादेव तच्छ्रुतेः । ४-४-८
532. अत एव चानन्याधिपतिः । ४-४-९

### १५५. अभावाधिकरणम् । ५.

533. अभावं बादरिराह ह्येवम् । ४.४-१०
534. भावं जैमिनिर्विकल्पामननात् । ४-४-११
535. द्वादशाहवदुभयविधं बादरायणोऽतः । ४-४-१२
536. तन्वभावे सन्ध्यवदुपपत्तेः ४-४-१३
537. भावे जाग्रद्वत् । ४-४-१४
538. प्रदीपवदावेशस्तथा हि दर्शयति । ४-४-१५
539. स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि । ४-४-१६

### १५६. जगद्व्यापारवर्जाधिकरणम् । ४.

540. जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च । ४-४-१७
541. प्रत्यक्षोपदेशान्नेति चेन्नाधिकारिकमण्डलस्थोक्तेः ४-४-१८
542. विकारावर्ति च तथाहि स्थितिमाह । ४-४-१९
543. दर्शयतश्चैवं प्रत्यक्षानुमाने । ४-४-२०
544. भोगमात्रसाम्यलिङ्गाच्च । ४-४-२१
545. अनावृत्तिश्शब्दादनावृत्तिश्शब्दात् । ४-४-२२

इति ब्रह्मसूत्रेषु चतुर्थस्याध्यायस्य चतुर्थः पादः ।

अध्यायश्च समाप्तः ।

ब्रह्मसूत्राणि सम्पूर्णानि ॥

इत्थं ‘ सौत्री संख्या शुभाशीः ’ ।

---

आधिक[illegible]


शास्त्रावतारः 1

प्रथमाध्याय प्रथमपादे ।

(आरम्भपेटिकायाम्)

जिज्ञासाधिकरणम् 47
जन्माद्यधिकरणम् 59
शास्त्रयोनित्वाधिकरणम् 70
समन्वयाधिकरणम् 78
ईक्षत्यधिकरणम् 89
आनन्दमयाधिकरणम् 96
अन्तरधिकरणम् 102
आकाशाधिकरणम् 109
प्राणाधिकरणम् 116
ज्योतिराद्यधिकरणम् 118
इन्द्रप्राणाधिकरणम् 123

प्रथमाध्यायद्वितीयपादे ।

सर्वत्रप्रसिद्धाधिकरणम् 133
अत्त्रधिकरणम् 142
अन्तराधिकरणम् 146
अन्तर्याम्यधिकरणम् 151
अदृश्यत्वादिगुणकाधिकरणम् 155
वैश्वानराधिकरणम् 157

प्रथमाध्यायतृतीयपादे ।

द्युभ्वाद्यधिकरणम् 166
भूमाधिकरणम् 173
अक्षराधिकरणम्
ईक्षतिकर्माधिकरणम्
दहराधिकरणम्
प्रमिताधिकरणम् 192
देवताधिकरणम् 195
मध्वधिकरणम् 204
अपशूद्राधिकरणम् 206
अर्थान्तरत्वादिव्यपदेशाधिकरणम् 212

प्रथमाध्यायचतुर्थपादे ।

आनुमानिकाधिकरणम् 216
चमसाधिकरणम् 222
संख्योपसंग्रहाधिकरणम् 224
कारणत्वाधिकरणम् 228
जगद्वाचित्वाधिकरणम् 231
वाक्यान्वयाधिकरणम् 235
प्रकृत्यधिकरणम् 240
सर्वव्याख्यानाधिकरणम् 249
चतुर्थपादस्थाधिकरणपूर्वपक्षोत्थानहेतुप्रदर्शनम् 252
प्रथमद्वितीयाध्यायार्थसंगतिवर्णनम् 523
निर्विशेषब्रह्मवादिनां प्रथमाध्यायार्थजातस्य दुर्घटत्वनिरूपणम् 254

द्वितीयाध्यायप्रथमपादे ।

स्मृत्यधिकरणम् 259
योगप्रत्युक्त्यधिकरणम् 267
विलक्षणत्वाधिकरणम् 269

...धिकरणम्
...णम् 276
...रणम् 281
...करणम् 283
कृत्स्नप्रसक्त्यधिकरणम् 285
प्रयोजनवत्त्वाधिकरणम् 289
द्वितीयाध्यायप्रथमपादस्थाधिकरणपूर्वपक्षोत्थान हेतुप्रदर्शनम् 294


द्वितीयाध्यायद्वितीयपादे ।


रचनानुपपत्त्यधिकरणम् 296
महद्दीर्घाधिकरणम् 305
समुदायाधिकरणम् 314
उपलब्ध्यधिकरणम् 322
सर्वथानुपपत्त्यधिकरणम् 326
एकस्मिन्नसम्भवाधिकरणम् 333
पशुपत्यधिकरणम् 337
उत्पत्त्यसम्भवाधिकरणम् 344
योगादिनिरासप्रकारनिरूपणम् 355
द्वितीयाध्यायद्वितीयपादाधिकरणार्थानां विभज्य प्रदर्शनम् 356


द्वितीयाध्यायतृतीयपादे ।


वियदधिकरणम् 358
तेजोऽधिकरणम् 364
आत्माधिकरणम् 367
ज्ञाधिकरणम् 375
कर्त्रधिकरणम् 381


पृष्ठ संख्या


...रणम् 386
...करणम् 398
द्वितीयाध्यायतृतीयपादाधिकरणार्थानां विभज्य दर्शनम् 407


द्वितीयाध्यायचतुर्थपादे ।


प्राणोत्पत्त्यधिकरणम् 409
सप्तगत्यधिकरणम् 413
प्राणाणुत्वाधिकरणम् 416
वायुक्रियाधिकरणम् 417
श्रेष्ठाणुत्वाधिकरणम् 418
ज्योतिराद्यधिष्ठानाधिकरणम् 420
इन्द्रियाधिकरणम् 422
संज्ञामूर्तिक्लृप्त्यधिकरणम् 423
द्वितीयाध्यायचतुर्थपादाधिकरणार्थानां विभज्य दर्शनम् 428
द्वितीयाध्यायतृतीयचतुर्थपादयोः परपक्षप्रतिक्षेपकत्वप्रकारनिरूपणम् 428
द्वितीयाध्यायस्य मृषावादिपक्षविरुद्धत्वविरूपणम् 429


तृतीयाध्यायप्रथमपादे ।


तदन्तरप्रतिपत्त्यधिकरणम् 431
कृतात्ययाधिकरणम् 438
अनिष्टादिकार्यधिकरणम् 443
तत्स्वाभाव्यापत्त्यधिकरणम् 445
नातिचिराधिकरणम् 446
अन्याधिष्ठिताधिकरणम् 448
तृतीयाध्यायप्रथमपादस्य सांख्यमायावादिपक्षनिराकरणे विशेषोपकारप्रदर्शनम् 453

पृष्ठ संख्या


तृतीयाध्यायप्रथमपादाधिकरणार्थानां वि[illegible] निरूपणम्


## तृतीयाध्यायद्वितीयपादे ।


सन्ध्याधिकरणम् 456
तदभावाधिकरणम् 469
कर्मानुस्मृतिशब्दविध्यधिकरणम् 471
मुग्धाधिकरणम् 474
अस्मिन्पादे अर्थभेदेन पूर्वोत्तरपेटिकाविभागप्रदर्शनम् 476
उभयलिङ्गाधिकरणम् 477
अहिकुण्डलाधिकरणम् 488
पराधिकरणम् 490
फलाधिकरणम् 495
भगवत्पारम्यज्ञानोद्दीपनाय पादप्रधानार्थकथनम् 500
तृतीयाध्यायद्वितीयपादाधिकरणार्थानां विभज्यकथनम् 502


## तृतीयाध्यायतृतीयपादे ।


सर्ववेदान्तप्रत्ययाधिकरणम् 504
अन्यथात्वाधिकरणम् 516
सर्वाभेदाधिकरणम् 521
आनन्दाद्यधिकरणम् 523
कार्याख्यानाधिकरणम् 530
समानाधिकरणम् 532
सम्बन्धाधिकरणम् 536
सम्भृत्यधिकरणम् 537
पुरुषविद्याधिकरणम् 539
[illegible]
साम्परायाधिकरणम्
अनियमाधिकरणम्
अक्षरध्यधिकरणम्
अन्तरत्वाधिकरणम् [illegible]59
कामाद्यधिकरणम् 562
तन्निर्धारणानियमाधिकरणम् 566
प्रदानाधिकरणम् 569
लिङ्गभूयस्त्वाधिकरणम् 574
पूर्वविकल्पाधिकरणम् 579
शरीरेभावाधिकरणम् 582
अङ्गावबद्धाधिकरणम् 587
भूमज्यायस्त्वाधिकरणम् 588
शब्दादिभेदाधिकरणम् 591
विकल्पाधिकरणम् 596
यथाश्रयभावाधिकरणम् 599
तृतीयाध्यायतृतीयपादाधिकरणप्रधानार्थानां विभज्य कथनम् 603


## तृतीयाध्यायचतुर्थपादे ।


पुरुषार्थाधिकरणम् 607
स्तुतिमात्राधिकरणम् 616
पारिप्लवाधिकरणम् 621
अग्नीन्धनाधिकरणम् 622
सर्वापेक्षाधिकरणम् 624
शमदमाद्यधिकरणम् 628
सर्वान्नानुमत्यधिकरणम् 631
विहितत्वाधिकरणम् 632

[illegible]णम्

[illegible]म् 640

[illegible]धिकरणम् 642

[illegible] हेत्वम् [illegible]णम् 644

ऐहिकाप्युप[illegible] 646

मुक्तिफलाधिकरणम् 647

तृतीयाध्यायचतुर्थपादप्रधानार्थप्रतिपादनम् 650

अत्रपादे परपक्षचतुष्कनिरासप्रतिपादनम् 652

दुःखनिवृत्तिर्न विद्यासाध्येति चोद्यप्रतिक्षेपः 653

साध्यसाधनतादुर्वचत्वेन मुक्त्यहेतुर्विद्येति चोद्यनिरासः 655

मतान्तरदूषणेन स्वसिद्धान्ते मुक्तिस्वरूपविशदीकारः 658


## चतुर्थाध्यायप्रथमपादे ।


तृतीयचतुर्थाध्याययोः चतुर्थेच पादद्विकयोस्सङ्गतिप्रदर्शनम् 661

फलाध्याये विद्याभिधाने प्रयोजनविशेषप्रदर्शनम् 662

आवृत्त्यधिकरणम् 664

आत्मत्वोपासनाधिकरणम् 678

प्रतीकाधिकरणम् 685

आदित्यादिमत्यधिकरणम् 687

आसीनाधिकरणम् 694

आप्रायणाधिकरणम् 698

तदधिगमाधिकरणम् 699

इतराधिकरणम् 705

अनारब्धकार्याधिकरणम् 709


पुट संख्या


[illegible]प्रकरणम् 712

[illegible]ाधिकरणम् 714

चतुर्थाध्यायप्रथमपादाधिकरणप्रधानार्थपरिगणनम् 718


## चतुर्थाध्यायद्वितीयपादे ।


द्वितीयतृतीयाध्याययोश्चतुर्थाध्यायद्वितीयपादेन संगतिप्रदर्शनम् 719

अत्रपादे सृतिचिन्तनस्य औचित्यफलकथनम् 720

उत्क्रमणादिचिन्ताया नैरर्थक्यमिति चोद्यनिरासः 721

उत्क्रमणादिवचनस्य प्रयोजनविशेषप्रदर्शनम् 722

योगिनो भाविचिन्त्यविशेषस्य प्रतिपादनम् 723

वागधिकरणम् 724

मनोऽधिकरणम् 726

अध्यक्षाधिकरणम् 727

भूताधिकरणम् 729

आसृत्युपक्रमाधिकरणम् 730

परसंपत्त्यधिकरणम् 737

अविभागाधिकरणम् 739

तदोकोऽधिकरणम् 741

रश्म्यनुसाराधिकरणम् 743

निशाधिकरणम् 744

दक्षिणायनाधिकरणम् 747

चतुर्थाध्यायद्वितीयपादाधिकरणप्रधानार्थनिरूपणम् 750


## चतुर्थाध्यायतृतीयपादे ।


संग्रहेण चतुर्थाध्यायतृतीयपादार्थस्य प्रदर्शनम् 752

अर्चिराद्यधिकरणम् 753

वाय्वधिकरणम् 755

पत्र संख्या

वरुणाधिकरणम्

आतिवाहिकाधिकरणम्

कार्याधिकरणम् 764

चतुर्थाध्यायतृतीयपादाधिकरणार्थानाम् अनुक्रमेण निरूपणम् 775


## चतुर्थाध्यायचतुर्थपादे ।


सम्पद्याविर्भावाधिकरणम् 778

अविभागेन दृष्टत्वाधिकरणम् 787

ब्राह्माधिकरणम् 792

संकल्पाधिकरणम् 795

अभावाधिकरणम् 801

जगद्व्यापारवर्जाधिकरणम् 812

चतुर्थाध्यायचतुर्थपादाधिकरणप्रधानार्थप्रतिपादनम् 823

चतुर्थाध्यायार्थस्य सर्वस्यापि मृषावादिमते दुर्घटत्वनिरूपणम् 824

मृषावादस्य कर्मदेवताब्रह्मकाण्डरूपत्रिकाण्डीविरुद्धत्वनिरूपणम् 825

...नम्

चतुरध्यायीनिर्णीतार्थचतुष्कस्य चतुर्भिः प... प्रतिपादनम्

यथावद्विदितचतुरध्याय्यर्थस्याधिकारि... न्तफलसिद्धिप्रतिपादनम् 829

अध्यात्मतत्त्वजिज्ञासुशिष्यसन्तोषस्य स्वानुगृहीत प्रबन्धफलत्वेन कीर्तनम् 830

त्रिगुणायत्तविश्वस्वभावविदस्स्वस्य भगवत्प्रसादैकचित्तत्वकथनम् 831

अधिकरणसारावलीतत्त्वमुक्ताकलापयोः सदाचार्यसकाशात् सम्यक्परिशीलनीयत्वकथनम् 832

निजानुगृहीतस्रग्धराणां ब्रह्मालङ्कारकारिदिव्याप्सरस्साम्यनिरूपणम् 833

स्वस्मिन् प्रणवमहिमवत्पाञ्चजन्यसादृश्यकथनेन स्वप्रबन्धस्य श्रीरङ्गराजहृदयङ्गमत्वख्यापनम् 834

एतत्प्रबन्धस्य श्रीहयवदनवक्तृकत्वमुखेन स्वस्य तदवतारत्वव्यक्तीकरणम् 836


---



पदयोजनातालपत्रश्रीकोशः चिन्तामणितालपत्रश्रीकोशश्च ।

एतदुभयं श्रीवण्शठकोपश्रीलक्ष्मीनृसिंहशठकोपयतीन्द्रमहादेशिकैः पूर्वाश्रमे सारावलीग्रन्थस्य पदयोजनाकाराणां सन्निधौ अध्ययनावसरे स्वहस्तलिखितम् ।

इमौ श्रीकोशौ श्रीवण्शठकोपश्रीरङ्गनाथशठकोपयतीन्द्रमहादेशिकानाम् अवतारक्षेत्रे कारुकुरुच्च्यग्रहारे तेषां पूर्वाश्रमश्रीमन्दिरस्थचिन्तामणितालपत्रश्रीकोशश्च मुद्रणकैङ्कर्येऽन्ववर्तिषत । मद्रपुरस्थराजकीयप्राच्यतालपत्रकोशागारस्थचिन्तामणिश्रीकोशाश्च समीक्षिताः ॥



श्रीमन्निगमान्तमहादेशिकाः

(अर्चामूर्तयः)

॥ श्रीः ॥

श्रीमते लक्ष्मीनृसिंहपरब्रह्मणे नमः ।

श्रीमते हयवदनपरब्रह्मणे नमः

श्रीमते रामानुजाय नमः

श्रीमते निगमान्तगुरवे नमः

श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि ॥

श्रीमन्निगमान्तमहादेशिकानुगृहीता

# अधिकरणसारावली

स्वस्ति श्रीरङ्गभर्तुः किमपि दधदहं शासनं तत्प्रसत्त्यै
सत्यैकालम्बि भाष्यं यतिपतिकथितं शश्वदध्याप्य युक्तान् ।
विश्वस्मिन् नामरूपाण्यनुविहितवता तेन देवेन दत्तां
वेदान्ताचार्यसंज्ञामवहितबहुवित्सार्थमन्वर्थयामि ॥

श्रीमते वरदार्यमहादेशिकाय नमः

श्रीमल्लक्ष्मणयोगीन्द्रसिद्धान्तविजयध्वजम् ।
विश्वामित्रकुलोद्भूतं वरदार्यमहं भजे ॥

श्रीमद्वरदार्यमहादेशिकानुगृहीत ।

# अधिकरणचिन्तामणिः

(केषुचित्कोशेषु सारावल्याः प्रथमद्वितीययोः पद्ययोरपि चिन्तामणिरुपलभ्यते सा यथोपलब्धिप्रकाश्यते)

वेदान्ताचार्यसूनुः सकलगुणनिधिर्वादिदर्पोपहन्ता
विश्वामित्रान्ववाये समुचितजनिमान्सर्वतन्त्रस्वतन्त्रः ।
शास्त्रे ब्रह्मप्रधाने स्वगुरुविरचिताधिक्रियासारपङ्क्ते-
श्चिन्तामण्याख्यटीकां वरदगुरुरयं सुग्रहामातनोति ॥ १ ॥

इह खलु श्रीमान्वेदान्ताचार्यः शारीरकशास्त्राधिकरणेषु सारतमार्थसंग्राहकपद्यावलीरूपप्रबन्धनिर्माणेन स्वस्य श्रीरङ्गराजदिव्याज्ञालब्धवेदान्ताचार्यसंज्ञामन्वर्थयितुमारिप्सितस्य प्रबन्धस्याविघ्नपरिसमाप्तिप्रचयगमनार्थमाशीर्वादरूपं मङ्गलमाचरति—स्वस्तीति। स्वस्त्याशीः क्षेमपुण्यादाविति निघण्टुपाठात्स्वस्तिशब्द-आशीर्वादपरः । क्षेमप्राप्त्यादिः सर्वविधाप्याशीरस्त्वित्यर्थः । ननु श्रीभाष्यादिप्राचीनप्रबन्धस्य विद्यमानत्वात् किमपूर्वग्रन्थनिर्माणेनेत्यत्राह—श्रीरङ्गभर्तुरिति । अयमर्थः श्रीरङ्गराजदिव्याज्ञारूपं (शासनं) दधदहं तत्प्रसादलब्धसर्वार्थज्ञानवान् । तत्प्रसत्त्यै तत्प्रसादार्थम्। सत्यैकालम्बीति—सत्यैकालम्बि भाष्यम्। उभयविभूतिविशिष्टस्यानन्तकल्याणगुणाकरस्य ब्रह्मणः सत्यत्वमात्रप्रतिपादकं भाष्यम्। शश्वदध्याप्यानन्तरं पद्यावलीरूपप्रबन्धनिर्माणमिति न तत्परित्यागदोषः। ननु भगवदाज्ञापरिपालनस्य शश्वद्भाष्याध्यापनेनैव सिद्धत्वात् ग्रन्थारम्भो व्यर्थ इत्याशङ्कां परिहरति— विश्वस्मिन्निति । 'तद्धेदं तर्ह्यव्याकृतमासीत्, तन्नामरूपाभ्यां व्याक्रियत' इत्यत्र प्रसिद्धेन निखिलजगन्नामरूपनिर्वाहकेन जगत्सृष्ट्यादिरूपक्रियायुक्तेन भगवता दत्तां वेदान्ताचार्यसंज्ञामवहितबहुवित्सार्थं सावधानीकृतविद्वत्सङ्घं यथा तथाऽन्वर्थयामि । अयमर्थः—वेदान्तशास्त्रं सम्यगभिवर्धयेति श्रीरङ्गनाथस्य दिव्याज्ञां शिरसि निधाय तत्प्रसादार्थं यतिपति प्रणीतं सत्यैकालम्बिभाष्यं युक्तानास्तिकान्सर्वान् शश्वदध्याप्य सकलजगन्नामरूपनिर्वाहकेन तेनैव श्रीरङ्गनाथेन विरचितां वेदान्ताचार्यसंज्ञां सकलविद्वज्जन······तुं शारीरकाधिकरणसारार्थसंग्राहकपद्यावलीरूपप्रबन्धनिर्माणमिति ।······प्रबन्धस्य निरतिशयभोग्यत्वेन शारीरकशास्त्राधिकरणाना मुपकारकत्वविशेषेण ?······ ॥ १ ॥

॥ श्रीः ॥

श्रीमते श्रीवणशठकोप श्रीशठकोपयतीन्द्र महादेशिकाय नमः ।

श्रीमते लक्ष्मीनृसिंहदिव्यपादुकासेवक श्रीवण्शठकोप श्रीशठकोपरामानुज यतीन्द्र महादेशिकाय नमः ।

श्रीमद्वीरघूद्वहश्रुतिशिरोरङ्गेशकार्यात्मज-
श्रीव्यासश्रुतिमौलियोगिशठजिद्योगीशदीक्षास्पदम् ।
विख्यातं शमधीदमादिसुगुणै राढ्यं विपश्चित्तमं
वन्दे श्रीशठकोपलक्ष्मणमुनिं वैराग्यवाराकरम् ॥

श्रीमदहोबिलमठमहास्थान निर्वहणधुरन्धर

श्रीवण्शठकोपश्रीशठकोपरामानुजमहादेशिकानुगृहीता

अधिकरणसारावलीव्याख्या

अधिकरणकल्पतरुरिति प्रसिद्धा

# पदयोजना

अस्तु स्वस्तिप्रसिद्ध्यै गरुडगिरिगुहागेहवासोद्विलास-

प्रत्यस्ताक्षुण्धदिव्यामितविमलचिदाकाशसाम्राज्यभूमा ।

वक्षोऽलंकारलक्ष्म्या स्वपरमसमतास्पाष्टघवाञ्छाञ्चिताङ्कः

कल्याणैकान्तमूर्तिः करविलसदरिः कान्तया दिव्यसिंहः ॥

अस्तु लक्ष्मीनृसिंहाङ्घ्रिसपर्यौदार्यसंविदाम् ।

रङ्गभू रङ्गभूमीन्द्रशठारियतिराट् श्रियै ॥

सन्निधिः संनिधत्तां मे हृदये सदयोदयः ।

सर्वतन्त्रस्वतन्त्रः श्रीवेदान्तद्वयदेशिकः ॥

अधिकृतिसारावल्या व्याख्यां वरदगुरुनिर्मितां वीक्ष्य ।

पदयोजनां तदीयां लिखति रमावासराघवाचार्यः ॥

श्लोकानां केषांचित् पदयोगविधा व्यलेखि चाचार्यैः ।

यद्यपि तथाप्यनुक्ता विलिख्यतेऽत्रेति मत्कृतिः सफला ॥

स्वस्ति—अन्वर्थयामि । स्वस्ति आशीः, अस्त्विति शेषः । यद्वा-स्वस्ति क्षेमङ्करं शासनविशेषणम् । "स्वस्त्याशीः क्षेमपुण्यादौ" इति कोशात् । किमपि—अनिर्वचनीयं विस्मयावहम् । भगवद्रामानुजसिद्धान्तधुरन्धरेषु बहुषु सत्स्वपि स्वस्मिन् विशेषतः प्रवृत्तत्वादाश्चर्यावहमिति भावः । भगवद्रामानुजसिद्धान्तमभिवर्धयेत्यादिस्वप्नवचनार्चकवचनादिरूपत्वाद्वा आश्चर्यावहत्वम् । रङ्गभर्तुः—परमव्योम्नि नित्यमुक्तपरिचरणादपि संसारिजनोद्दिधीर्षया श्रीरङ्गनगर्यां स्वसेवाभूरिदानं सर्वतोऽधिकं मत्वा तस्याः सर्वतोनिर्वाहे व्यापृतस्य श्रीरङ्गनाथस्य । शासनम्—आज्ञाम् । दधत्—शेषापटतुल्यं शिरसा सविनयमुद्वहन् । अहम्—अनन्यसाधारणसर्वतन्त्रस्वातन्त्र्यादिभिः सर्वजनसुविदितभगवद्घण्टावतारताकः, अतएव भगवच्छासितार्थनिर्वहणौपयिकज्ञानशक्तिनिर्भरोऽहम् । तत्प्रसत्त्यै-तत्प्रसादार्थम् । यतिपतिकथि-

तम्—भगवद्रामानुज भावितम् । सत्यैकालम्बि—उभयविभूतिविशिष्टस्यानन्तकल्याणगुणाकरस्य ब्रह्मणः सत्यत्वमात्रप्रतिपादकम् । यद्वा-सत्यभूतं ब्रह्म निखिलजगत्कारणभूतम्, सत्यमेव चेतनाचेतनात्मकोभयविभूतिवर्गम्, सत्यभूतमेव ब्रह्मणो हेयप्रतिभटत्वसमस्तकल्याणगुणाकरत्वरूपमसाधारणधर्मजातम्, सत्यभूतमेव व्यवस्थिततत्तद्गुणजातं उपासनवितानं तदङ्गञ्च, सत्यभूतमेव वर्णाश्रमधर्मसमुदायम्, सत्यभूतानेवोत्क्रमणार्चिरादिमार्गतद्गमनलोकविशेषगमनभगवत्प्राप्त्यनावृत्तिपर्यन्तांश्चार्थानवलम्ब्य प्रतिपाद्यतया स्वीकृत्य प्रवृत्तमित्यर्थः; तत्प्रतिपादकमिति यावत् । शंकरादिभाष्यं हि ब्रह्मैकमेव सत्यभूतं तद्व्यतिरिक्तं तदीयकल्याणगुणपर्यन्तं कृत्स्नमपि पूर्वोक्तमर्थजातं असत्यभूतमित्यवलम्ब्य प्रवृत्तम् । अतस्तद्व्यावृत्तमित्यर्थः । भाष्यम्—निर्विशेषितसूत्रत्वं ब्रह्मसूत्रस्य लक्षणपूर्त्या सर्वसंमतम् । तद्वत् भाष्यलक्षणपूर्त्या भगवद्रामानुजभाष्यस्यैव भाष्यशब्दमुख्यार्थत्वमित्याशयेन केवलं भाष्यमित्युक्तम् । विशेषणाभावेऽपि केवलभाष्यशब्देन निर्देशार्हमिति यावत् । यतिपतिकथितमित्यादि तु निरूपितस्वरूपविशेषणम् । अखिलभुवनेत्यारभ्य प्रवृत्तं श्रीभाष्यमित्यर्थः । युक्तान्—शिष्यत्वौपयिकगुणसमुदायपरिपूर्णान् आस्तिकान् । शश्वत्—पुनःपुनः । 'त्रिंशद्वारं श्रावितशारीरकभाष्यः' इत्याद्युक्तरीत्या वहुवारमित्यर्थः । अध्याप्य—सम्यक् श्रावयित्वा । तेच यथान्येषामध्यापकाः स्युः, तथार्थज्ञानमुत्पाद्येत्यर्थः । विश्वस्मिन्—निखिलजगति । नामरूपाणि—जातिगुणक्रियाप्रवृत्तिनिमित्तकानि सर्वाणि नामानि, तद्वाच्यानि जातिगुणक्रियाश्रयभूतानि रूपाणिच । अनुविहितवता—'सर्वाणि रूपाणि विचित्य धीरः । नामानि कृत्वाभिवदन् यदास्ते' इत्युक्तरीत्या व्याकृतवता । तेन देवेन—तेनैव श्रीरङ्गनाथेन दत्ताम्—विरचिताम् । वेदान्ताचार्यसंज्ञाम्—वेदान्ताचार्य इत्याख्याम् । अवहितवहुविद्सार्थम्—सावधानीकृतविद्वत्सङ्घं यथा तथा । यद्वा—अवहितानां अपूर्वपद्यरूपप्रवन्धविशेषार्थजातश्रवणकुतूहलेनानन्यहृदयानां वहुविदां नानातन्त्रनिष्णातानां शिष्यसतीर्थ्यश्रेयोऽर्थिनां सार्थ समूहं प्रतीत्यर्थः । अन्वर्थयामि—अनुगतार्थां करोमीत्यन्वयः । अधिकरणसारावल्याख्यापूर्वप्रवन्धनिर्माणं संप्रार्थ्य तच्छ्रवणकौतूहलेन सावधानान् वहुविदः शिष्यादीन् परितोषयितुं तादृशप्रवन्धनिर्माणेन भगवद्दत्तवेदान्ताचार्यसंज्ञां अयमेवार्हतीति ते सर्वे यथा वदेयुस्तथा सार्थक्यमापादयामीति भावः ॥ १ ॥

श्रीमद्भ्यां स्यादसावित्यनुपधि वरदाचार्यरामानुजाभ्यां
सम्यग्दृष्टेन सर्वंसहनिशितधिया वेङ्कटेशेन क्लृप्तः ।
सेव्योऽसौ शान्तचित्तैः श्रवणरसनया शान्तिलाभार्थिभिर्वा
सिद्धः शारीरकार्थे सहजवहुगुणः स्रग्धरादुग्धराशिः ॥ २ ॥

चिन्ता०—(श्रीमद्भ्यामिति) स्वाचार्ययो र्ज्ञानादिसमृद्धिः सूचिता । वरदाचार्यरामानुजाभ्यां सम्यग्दृष्टेनेत्यनेन

" ईश्वरस्य च सौहार्दं यदृच्छासुकृतं तथा ।
विष्णोः कटाक्षमद्वेषमाभिमुख्यं च सात्त्विकैः ॥
संभाषणं षडेतानि ह्याचार्यप्राप्तिहेतवः ॥ '

इत्याचार्यकटाक्षस्य भगवत्कटाक्ष हेतुत्वं''''''स्वस्य तादृशत्वसिद्ध्यर्थं सम्यग्दृष्टत्वोक्तिः । द्रष्टृ-तुल्यगुणवत्त्वं तद्दृष्टिविषयस्य

' जायमानं हि पुरुषं यं पश्येन्मधुसूदनः ।
सात्त्विकः स तु विज्ञेयः स वै मोक्षार्थचिन्तकः ॥ '

इत्यनेन सिद्धम् । सम्यग्दर्शनकार्यमाह—सर्वंसहनिशितधियेति । एतेन स्वस्य शान्तियुक्तत्वं धियः सूक्ष्मविषयत्वं चोक्तम् । सर्वंसहत इति सर्वंसहः । निशिता धीर्यस्य निशितधीः । सर्वंसहश्चासौ निशितधीश्चेति कर्मधारयः । यद्वा धियः सर्वंसहत्वं सर्वविषयत्वम् । प्रबन्धस्य परिग्राह्यत्वसिद्ध्यर्थमाह—वेङ्कटेशेनेति । क्लृप्तः—सारार्थनिष्कर्षेणोपकारविशेषार्थं परिक्लृप्तः । एवं च परिग्राह्यत्वे हेतुरुक्तः । अथ परिशीलनीयत्वमाह—सेव्य इति । असौ—सारार्थसंग्राहकपद्यावलीरूपः प्रबन्धः । शान्तचित्तैरिति—अनेन ' सारासारविवेकज्ञा गरीयांसो विमत्सराः ' इत्युक्त विमत्सरत्वं द्योत्यते । तेन मत्सरग्रस्तैरपरिग्रहो न दोषायेत्युक्तं भवति । शान्तपित्तैरिति पाठान्तरे स्वप्रबन्धस्य स्वादुत्वं द्योत्यते । शान्तपित्तस्य(हि) क्षीरास्वाद्यताबुद्धिः । श्रवणमेव रसनेति रूपकम् । दुग्धराशिपक्षे रसनया । सेव्यत्वं हि तत्प्रबन्धपरिशीलनम् । ''''''र्थिभिश्च सेव्यत्वमाह—शान्तिलाभार्थिभिर्वेति । अस्तु वक्तृवैलक्षण्यम्, तथाप्य(नुपा) देयत्वमेव स्यादित्यत्राह—सिद्धः शारीरकार्थ इति । जगच्छरीरः परमात्मा शारीरः । तत्प्रति पादकं शास्त्रं शारीरकं तस्य सारतमार्थ संग्राहकत्वेन सिद्धत्वात्तासदर्थप्रतिपादकत्वमित्यभिप्रायः । अस्तु वक्तृवैलक्षण्यं प्रबन्धवैलक्षण्यञ्च, तथाप्यनपेक्षितार्थकथनपुनरुक्तत्वादिदोषदुष्टत्वे परित्याज्यत्वमेव स्यादितीमामाशङ्कां परिहरति—सहजबहुगुण इति । स्वग्धरापक्षे समीचीनगुणयुक्तत्वादयः सहजबहुगुणाः । दुग्धराशिपक्षे माधुर्यादयो गुणाः । अत्रापि स्रग्धरैव दुग्धराशिरिति रूपकम् । अयमत्रवाक्यार्थः—ज्ञानादिपरिपूर्णयो रामानुजवरदाचार्ययोर्दिव्यकटाक्षेण सम्यग्ज्ञानवता वेङ्कटेशेन शारीरकाधिकरणार्थसंग्राहकत्वेन प्रणीतोऽयं प्रबन्धः शान्तपित्तैः क्षीरमिव मुमुक्षया शारीरकशास्त्राधिकर्तृ-

भिरुपकारकत्वविशेषेणान्वहं परिशीलनीय इति । **स्रग्धरादुग्धराशिरिति**—अत्र 'म्रभ्नै'रिति लक्षणात् ॥ २ ॥

पद० **श्रीमद्भ्यामित्यादि । श्रीमद्भ्याम्**—'सा हि श्रीरमृता सताम्' इत्युक्तरीत्या साङ्गसशिरस्कवेदत्रयार्थविज्ञानरूपनित्यसंपद्युक्ताभ्याम् । यद्वा भगवद्विभूतिसंवर्धनरूपकैङ्कर्यलक्ष्मीयुक्ताभ्यामित्यर्थः । 'लक्ष्मणो लक्ष्मिसंपन्नः' इति ह्युक्तम् । **वरदाचार्यरामानुजाभ्याम्**—आचार्यशब्दस्य मध्यमणिन्यायेनोभयत्रान्वयः । तथा च वरदाचार्याचार्यरामानुजाभ्यामिति संपन्नम् । वरदाख्यो य आचार्यः, यश्च स्वाचार्यभूत आत्रेयरामानुजः, ताभ्यामित्यर्थः । **अनुपाधि**—द्रव्यसमर्पणाद्युपाधिं विनैव स्वविभूतिविवर्धयिषु श्रीरङ्गनाथप्रेरणादन्यत् बाह्यनिमित्तं किमपि विनैवेत्यर्थः । **असौ**—कुमारः । **स्यात्**—भगवद्भाष्यकारसिद्धान्तसंवर्धनौपयिकप्रकृष्टविज्ञानसंपद्युक्तो भूयात् । **इति**—एवं मङ्गलाशासनेन हेतुना । **सम्यक्**—सद्यः प्रसूते तर्णके धेनोरिव प्रभूतेन प्रेमभरेण युक्ततया । **दृष्टेन**—कटाक्षविषयीकृतेन । अतएव **सर्वंसहानिशितधिया**—'न स्मरत्यपकाराणां शतमप्यात्मवत्तया, न क्रुध्यत्यभिशस्तोऽपि' इत्याद्युक्तरीत्या स्तुतिनिन्दादिकं सर्वं सहत इति **सर्वंसहः** स्तुत्यापि नातिसंतुष्यति, निन्दया किञ्चिदपि विकृतचित्तो न भवतीत्यर्थः । निशिता दुर्ग्रहार्थग्रहणौपयिकसौक्ष्म्यातिशययुक्ता धी र्यस्य स तथा । सर्वंसहश्चासौ निशितधीश्च सर्वंसहनिशितधीः—तेन । यद्वा **सर्वंसहा** सर्वविषयिणी **निशिता** च **धी**र्यस्येति वा योजना । **वेङ्कटेशेन**—'वेङ्कटेशावतारोऽयम्' इत्युक्तरीत्या श्रीवेङ्कटेशावतारतासूचकवेङ्कटेशनाम्ना स्वेन । **बद्धः**—शारीरकार्थनिरन्तरानुसन्धानसौकर्यौपयिकतया निबद्धः । **शारीरकार्थे सिद्धः**—जगच्छरीरः परमात्मा शारीरः । 'तस्यैष एव शारीर आत्मा' इति श्रुतेः । तमधिकृत्य कृतो ग्रन्थः शारीरकं तस्यार्थे शारीरकमीमांसासारतमार्थविषये । **सिद्धः**—अनन्यपरः, तदेकप्रतिपादक इति यावत् । दुग्धराशिपरत्वे—**शारीरं** शरीरसंबन्धि यत् कं सुखं तद्रूपो **योऽर्थः** प्रयोजनं तत्र सिद्धः तदेकसाधनमित्यर्थः । अनुदिनं दुग्धं पिबतां शरीरसुखं प्रसिद्धं हि । **सहजबहुगुणः**—सहजाः कवयितृप्रयासं विना स्वयमेव संसिद्धाः बहवो **गुणाः** प्रसादौजःप्रभृतयो यस्य स तथा । दुग्धराशिपक्षे **गुणा** माधुर्यादयः । **असौ**—बुद्धिस्थः । **स्रग्धरादुग्धराशिः**—प्रथमं सर्वगुरुर्मगणः । ततो मध्यलघूरगणः । तत आदिगुरुर्भगणः । ततस्सर्वलघुर्नगणः । तत आदिलघवस्त्रयो यगणाः । आहत्य सप्तगणाः प्रतिपादं संपद्यन्ते । सप्तसु सप्तसु विश्रमः । एवं गणविन्यासयुक्तो वृत्तविशेषः स्रग्धरेत्युच्यते । अस्यामधिकरणसारावल्यां सर्वेऽपि श्लोकाः स्रग्धरारूपाः । अतः स्वस्तिश्रीत्यादिस्रग्धरारूपो **दुग्धराशिः**—दिव्यगव्यनव्यदुग्धधारापरम्परा । **शान्तचित्तैः**—विषयान्तरविमुखहृदयैः । अन्यत्र नीरोगैरित्यर्थः । **शान्तिलाभार्थिभिर्वा**—

वेदान्तज्ञानविरोधिनिवृत्त्यपेक्षिभिर्वा । अन्यत्र रोगशान्त्यपेक्षिभिर्वेत्यर्थः । दुग्धं हि नीरोगैः सुखार्थं रोगिभी रोगशान्त्यर्थञ्च पीयते । श्रवणरसनया—श्रवणं श्रोत्रमेव रसना जिह्वा तया । सेव्यः संपेयः । श्रोत्रावसेयेयं स्रग्धरा सेव्यमाना सुखं जनयतीति भावः ॥ २ ॥

त्र्यन्तस्वान्तवादिन्यधिकरणगणे पौनरुक्त्योक्तबाधौ
मन्दत्वासंगतत्वे विशयमफलतां मानबाधं च मन्तॄन् ।
दिङ्मोहक्षोभदीनान् दिनकरकिरणश्रेणिकेवोज्जिहाना
हृद्या पद्यावलीयं हृदयमधिगता सावधानान् धिनोतु ॥ ३ ॥

चिन्ता०—कोऽयमस्य प्रबन्धस्य शारीरकशास्त्राधिकर्तॄणामुपकारकत्वप्रकारविशेष इत्याशङ्क्य तद्विशेषमेव दृष्टान्तविशेषोपादानेन विशदं प्रकाशयति—त्र्यन्तेति । पौनरुक्त्यम्—प्रयोजनमन्तरेण पुनरभिधानम् । कश्चिन्मन्यते—पूर्वकाण्डप्रतिपादितैरेव न्यायैर्वेदान्तवाक्यानामपि निर्णीतार्थत्वात् किमनेन शारीरकशास्त्रेणेति । सोऽपि प्रतिक्षेप्य एव । यद्यपि वेदान्तशास्त्रं पूर्वकाण्डप्रणीतन्यायोपजीवनेन तत्रतत्र प्रवर्तते, तथापि तत्तदधिकरणप्रसक्तपूर्वपक्षयुक्तिविशेषापनोदनमन्तरेण वेदान्तार्थनिर्णयोऽपि न सेत्स्यतीति तानितान्यधिकरणानीह सफलानीति न पौनरुक्त्यशङ्कावकाशः । अन्यथा प्रकृतिषट्कोपात्तन्यायोपजीवनात् विकृतिषट्कमपि परित्याज्यं स्यात् । एवमध्यायपादपेटिकाधिकरणपौनरुक्त्यापादनप्रतिबन्द्या पौनरुक्त्यपरिहारो द्रष्टव्यः । एवमुक्तबाधादिशङ्कापि परिहर्तव्या । यथा—'आम्नायस्य क्रियार्थत्वात्' इत्यत्रार्थवादानां विधिशेषत्वेनैव प्रामाण्यमभ्यधायि, समन्वयाधिकरणे स्वातन्त्र्येणापि, सतूक्तबाध एव कर्मब्रह्मकाण्डयोरेकशास्त्रत्वात् । अत्रोत्तरम्—अर्थवादाधिकरणे हि अर्थवादसामान्यस्य विध्येकवाक्यत्वेन शेषत्वेन प्रामाण्यं समर्थितम् । अत्र तु ब्रह्मविषयार्थवादानां स्वातन्त्र्येण प्रामाण्यमिति सामान्यविशेषभावान्न बाधप्रसंगोऽपि । विस्तरस्तु भाष्य एवानुसंधेयः । मन्दत्वम्—अल्पप्रयोजनत्वं युक्तिदौर्बल्यञ्च । असंगतत्वम्—काण्डद्विकाध्यायपादपेटिकाधिकरणसूत्रसंगत्यभावः । विशयः—काण्डविशेषसंशयानुच्छेदः । अफलता—नैष्फल्यम् । निष्प्रयोजनत्वं, अनपेक्षितप्रयोजनत्वं वा । मानबाधः—प्रत्यक्षादिप्रमाणान्तरबाधनम् । एतादृशान् दोषानपन्यायमूलत्वेनाशङ्कमानान् अल्पबुद्धीन् अन्धतमसावृते जगति दिङ्मोहक्षोभेण संभ्रम्यमाणान् प्रति, उपसि समुज्जिहाना दिनकरकिरणश्रेणिकेव हृद्येयं पद्यावली धिनोतु सन्तुष्टान् करोत्विति श्लोकार्थः । मानबाधं च मन्तॄनिति 'कर्तृकर्मणोः कृति' इति प्राप्तस्य षष्ठीप्रयोगस्य 'न लोकाव्ययनिष्ठाखलर्थतृनाम्' इति तृन्प्रयोगेण प्रतिक्षेपात् प्रयुज्यते द्वितीयैव । अत्र तृनस्ताच्छील्यमेवार्थः परिगृह्यते, तामसबुद्धीनां हि तत्त्वाप्रतिपत्तेरेव विप्रतिपत्तेरेव वा स्वाभाव्यादिति भावः ॥ ३ ॥

पद० त्रय्यन्तस्वान्तेत्यादि । त्रय्यन्तस्य अव्यवधानेन ब्रह्मप्रतिपादकवेदभागात्मकोपनिषत्समुदायस्य। स्वान्तं तात्पर्यार्थं वदति प्रतिपादयतीति त्रय्यन्तस्वान्तवादी, तस्मिन् । अधिकरणगणे—विषयसंशय-पूर्वपक्षसिद्धान्तप्रयोजनरूपार्थपञ्चकप्रतिपादकान्यधिकरणानि तेषां गणे समुदायात्मके शारीरकशास्त्रे । पौनरुक्त्योक्तबाधौ—प्रयोजनमन्तरेण पुनरभिधानं पौनरुक्त्यम् । पूर्वकाण्डप्रतिपादितैरेव न्यायैः वेदान्तवाक्यानामपि निर्णीतार्थत्वात् पुनःशारीरकन्यायारम्भे फलं नास्तीत्येवंरूपम्। उक्तबाधः- पूर्वकाण्डोक्तार्थस्य शारीरके बाधः, यथा—'आम्नायस्य क्रियार्थत्वात्' इत्यादौ पूर्वकाण्डेऽर्थवादानां विधिशेषत्वेनैव प्रामाण्यमूचे। अस्मिन् काण्डे तु समन्वयाधिकरणादौ स्वातन्त्र्येणापि प्रामाण्यमुपपादीत्युक्तबाधः। पौनरुक्त्यं चोक्तबाधश्च तौ। द्वितीयाद्विवचनम्। मन्दत्वम्—अप्रयोजकत्वं युक्तिदौर्बल्यञ्च। असंगतत्वम्—काण्डद्विकाध्यायपादपेटिकाधिकरणसूत्रसंगत्यभावः। मन्दत्वं चासंगतत्वं च मन्दत्वासंगतत्वे वचनविभक्ती पूर्ववत्। विशयम्-तात्पर्यभेदकल्पनेन विरोधपरिहाराशक्तानां परस्परविरोधभ्रान्त्याऽन्यतराप्रामाणिकत्वादिसंशयम्। अफलताम्—निष्प्रयोजनत्वम्। अनपेक्षितप्रयोजनकत्वं वा। मानबाधम्—प्रत्यक्षादिप्रमाणान्तरबाधनं च। मन्तॄन्—अपन्यायत्वेनाशङ्कमानान् अल्पबुद्धीन्। दिङ्मोहक्षोभदीनान्—अन्धतमसावृते जगति दिङ्मोहक्षोभेण बम्भ्रम्यमाणान् जनान् प्रति। उज्जिहाना—उषसि समुज्जिहाना दिनकरकिरणश्रेणिकेव। हृद्या—निर्दोषत्वगुणपूर्णत्वाभ्यां विद्वद्धृदयरञ्जनी। इयं पद्यावली हृदयमधिगता—पुस्तकनिरीक्षणं विना वेदवत् सार्थज्ञानतया हृदये विचिन्त्यमाना सती। सावधानान्—अवहितबुद्धीन्। धिनोतु—सन्तुष्टान् करोतु। पौनरुक्त्यमेवं परिहार्यम्—यद्यपि वेदान्तशास्त्रं पूर्वकाण्डप्रणीतन्यायोपजीवनेन तत्र तत्र प्रवर्तते, तथापि तत्तदधिकरणप्रसक्तपूर्वपक्षयुक्तिविशेषापनोदनमन्तरा वेदान्तार्थनिर्णयायोगात् तानि तान्यधिकरणानि सफलानि। अन्यथा कर्मकाण्डेऽपि पूर्वषट्कोपजीवनादुत्तरषट्कं परित्याज्यं स्यादिति। उक्तबाधोपरोधप्रकारोऽयम्–अर्थवादाधिकरणेऽर्थवादसामान्यस्य विध्येकवाक्यत्वेन प्रामाण्यं समर्थितम्। अत्रतु अपूर्वार्थस्फुटप्रतिपत्तिमादधानानामर्थवादविशेषाणां स्वातन्त्र्येण प्रामाण्यमिति सामान्यविशेषभावाच्च बाधप्रसंग इति। अन्यत् स्पष्टतया स्वयमूह्यम् ॥ ३ ॥

गम्भीरे ब्रह्मभागे गणयितुमखिलं कः प्रवीणः प्रमेयं
दिङ्मात्रं दर्शयन्नप्यहमिह निपुणैः प्राध्वमध्यक्षणीयः।
मा भून्निश्शेषसिद्धिस्तदपि गुणविदः स्फीतनिस्सीमरत्ने
मध्येहारं निधेयं महति जहति किं मौक्तिकं लब्धमब्धौ ॥ ४

चिन्ता० अत्र कश्चिदप्रतिपत्तिविप्रतिपत्तिनिवारणरूपप्रतिज्ञाहान्यादिनिग्रहस्थानानि पुनश्चोदयति । 'तत्र खलु पञ्चाशदधिका पञ्चशती स्रग्धराणां खलु भवद्भिरारचिता, शारीरकशास्त्रं खलु भगवता बोधायनेन दशलक्षरूपेण वृत्तिग्रन्थेन विस्तृतम् , तद्द्विगुणेन कर्मभागोऽपि विस्तृतः स एव भवतां शास्त्रप्रवर्तकः, तेनानेन कार्त्स्न्येन शास्त्रार्थो न विव्रियते, नाप्येकदेशेन—शिष्याणामाकाङ्क्षाप्रशमनाभावा'दिति । अत्रोत्तरमाचष्टे—गम्भीर इत्यादिना । अतिगम्भीरे ब्रह्मभागे निखिलमपि प्रमेयजातं गणयितुं साक्षात्परब्रह्मणः सकाशात् श्रुतसकलवेदार्थः कः पितामह एव शक्नोतीत्यर्थः । तेनैवं शङ्कमानस्य भवतः पितामहादवराणां व्यासादीनां शारीरकशास्त्रप्रवर्तनाधिकारो न स्यादिति प्रतितर्कबाधः । अथवा किंशब्दः प्रतिक्षेपे । कः प्रभुः प्रभुर्नास्ति पितामहोऽपि न प्रभुरित्यर्थः । एवं सति पितामहादयोऽपि दिङ्मात्रं प्रदर्शयन्तीति भवतापि परिहर्तव्यम् । अहमपि शारीरकशास्त्रस्य प्रधानार्थमल्पीयसा ग्रन्थेन गुणतो गरीयसा प्रकाशयामीति निपुणै रध्यात्मशास्त्रप्रवर्तकैः शुश्रूषुभिः प्राध्व मानुकूल्येनाध्यक्षणीयः—प्राह्य इत्यर्थः । अमुमर्थमनुकूलदृष्टान्तोपादानेन प्रकाशयति—मा भूदित्यादिना । दुग्धार्णवमथने लक्ष्मीमणिवरसुरभिसुधाकराद्युपलम्भनहेतौ कौस्तुभादयः कतिचन मणय एवोपलब्धाः । न तु सकलमपि रत्नजातम् । एवमतिशयितप्रयासवद्भिः सांयात्रिकादिभिरशेषमपि रत्नजातं नोपलभ्यते । तथापि गुणविदः मण्याधिक्यवेदिनः, अथवा मुक्ताहारगुणवेदिनः । हारमध्ये निधेयं लब्धं मौक्तिकं स्फीतनिस्सीमरत्ने किमब्धावेव जहति न जहतीत्यर्थः । तेनायमर्थः सम्पद्यते परिमितग्रन्थत्वेऽपि सर्वार्थसिद्ध्यभावेऽपि प्रधानार्थपरिशोधनात् अयं ग्रन्थः संग्राह्यतम इति । मध्येहारम् 'पारेमध्ये षष्ठ्या वा' इति समासः ॥ ४ ॥

पद०—गम्भीर इत्यादि । गम्भीरे—अतिदुर्ग्रहाशये । ब्रह्मभागे—उपनिषदात्मके वेदभागविशेषे । अखिलम्—निश्शेषम् । प्रमेयम्—अर्थजातम् । गणयितुम्—उपपादयितुम् । कः प्रवीणः—कः ब्रह्मा परब्रह्मसकाशात् श्रुतसकलवेदार्थो विधातैव समर्थः, नान्ये शक्नुयुः । यद्वा—कः प्रवीणः—नकोऽपीत्यर्थः । अतो दिङ्मात्रं दर्शयन्नहमपि—शारीरकसारार्थान् गुणतो गरीयसा ग्रन्थेनाल्पीयसा प्रदर्शयन्नहमपि । इह—अत्यलसाल्पज्ञजनभूयिष्ठे कलौ । निपुणैः—सारार्थानुसन्धानसौकर्यपरिज्ञातृभिः । प्राध्वमध्यक्षणीयः—'आनुकूल्यार्थकं प्राध्व'मिति कोशः । अयं महोपकारक इत्यानुकूल्येन समीक्षणीयः । निश्शेषसिद्धिर्माभूत्—अपेक्षितं साकल्येन न सिध्यतु । तदपि—तथापि । गुणविदः—मण्युत्कर्षवेदिनः । अथवा मुक्ताहारगुणवेदिनः । स्फीतनिस्सीमरत्ने—निर्भरानन्तरत्नशालिनि । महति—परिच्छेदानर्हे । अब्धौ—समुद्रे । लब्धम् स्वप्रयत्नानुसारेणासादितम् । मध्येहारं निधेयम्—उत्तमहारमध्ये संघटनीयम् । मौक्तिकम् मुक्ताफलम् । अब्धौ जहति किम्—अब्धावेव प्रक्षिपन्ति किमित्यन्वयः ॥ ४ ॥

वेदार्थे न्यायचिन्त्ये प्रथममधिगतः कर्मवर्गः प्रमाणै-
भेदैरङ्गैः प्रयुक्त्या क्रमविरचनयाथाधिकृत्याऽतिदिष्टया ।
तत्राशेषैर्विशेषैस्तदनु तदनुवर्त्यूहतः प्राप्तबाधै-
स्तन्त्रेणाथ प्रसक्त्या तत उपरि चतुर्लक्षणी देवतार्था ॥ ५ ॥

चिन्ता०—एवं स्वग्रन्थस्योपादेयत्वमुक्त्वा प्रारिप्सितग्रन्थप्रतिपाद्यस्य ब्रह्मकाण्डस्य त्रिकाण्डीरूपमीमांसा-शास्त्रोपरितनभागरूपत्वात् तत्पूर्वकाण्डप्रतिपाद्ययोः कर्मदेवतयोः स्वरूपमेव तावत् अवान्तरविभागेन दर्शयति—वेदार्थ इति । अयमर्थः—त्रिकाण्डी खलु मीमांसा, तस्याश्च शास्त्रैक्यं विषयैक्यात् प्रयोज-नैक्यात् प्रवृत्तिप्रकारैक्याच्चेति त्रय्यन्तविदां निर्णयः । तत्र विषयैक्यं वेदार्थस्यैकस्यैव मीमांसाशास्त्रेण चिन्तनीयत्वात्, तन्निर्णयस्यैव प्रयोजनत्वेन प्रयोजनैक्यमपि सिद्धं भवति । न्यायचिन्त्य इति—प्रवृत्ति-प्रकार उच्यते । वेदवाक्यार्थनिर्णयफलकन्यायसमुदायो हि मीमांसा । यदाहुः—

'धर्मे प्रमीयमाणे हि वेदेन करणात्मना ।
इतिकर्तव्यताभागं मीमांसा पूरयिष्यति ॥' इति ।

तत्र प्रथमकाण्डार्थं दर्शयति—प्रथममधिगत इत्यादिना प्रसक्त्येत्यन्तेन । तदुक्तमभियुक्तैः—

'धर्मधीर्मानभेदाङ्गप्रयुक्तिक्रमकर्तृभिः ।
सातिदेशविशेषोहबाधतन्त्रप्रसक्तिभिः ॥' इति ।

तत्र प्रमाणं 'चोदनालक्षणोऽर्थो धर्मः' इत्यादिभिः प्रतिपादितः स्मृत्याचारोपबृंहितो वेदः । कर्मणां भेदस्तु शब्दान्तरादिभिर्द्वितीयलक्षणे निर्णीयते । तत्रपुनर्भेदलक्षणे शास्त्रभेदश्चिन्त्यत इत्येकदेशिनः । तृतीये श्रुतिलिङ्गादिभिरङ्गाङ्गिभावचिन्तनं क्रियते । एतच्चाध्यायत्रितय प्रतिपादितन्याय जातमुत्तरत्र सर्वत्राप्युपकरोतीत्यध्यायत्रितय विवरणरूपमेव सकलमपि शास्त्रमिति मन्तव्यमन्तेवासिभिः । एवमङ्गाङ्गि-भावेनान्वितानां कर्मणां प्रयोज्यप्रयोजकभावचिन्तनं चतुर्थे क्रियते । किमिदं कर्म क्रतुप्रयुक्तमुत पुरुष-प्रयुक्तम् । अङ्गानि क्रतुप्रयुक्तानि, अङ्गि तु पुरुषार्थत्वात् पुरुषप्रयुक्तमिति । लिङ्गादीनां स्वरूपं तदुपयोगश्च सेश्वरमीमांसायामाचार्यैरेव विस्तरेण प्रतिपादितमिति न विक्रियतेऽस्माभिः । क्रमस्तु अनुष्ठेयानां कर्मणामनुक्रमः । सच श्रुत्यर्थपाठकाण्डमुख्यप्रवृत्तिभेदेन षड्विधः प्रमाण-गम्यः । यथाहुः 'श्रुत्यर्थपठनस्थानमुख्यप्रावृत्तिकाः क्रमाः ।' इति । अथाधिकृत्येति—कर्मणाम-

धिकार्यमभिधीयते । अधिकारीच स्वर्गस्वाराज्यपशुपुत्रादिकामनाविशिष्टः काम्ये, नित्यनैमित्ति-कयोस्तु तत्तन्निमित्तविशिष्टः । नियतनिमित्तं नित्यम्, अनियतनिमित्तं नैमित्तिकम्, इति विभागमाहुस्तन्त्रज्ञाः । अतिदिष्टश्चेति—द्वौ खलु भागौ कर्मकाण्डस्य—उपदेशभागोऽतिदेशभागश्चेति । तेनोपदेशषट्कमतिदेशषट्कमिति कौमारिलानामालापः । उपदेशषट्कं कार्यषट्कमिति प्राभाकराः । तत्र कार्यमिति 'कृतिसाध्यं प्रधानं यत्तत्कार्यमभिधीयते' इत्यापादचूडमशेषमीमांसाप्रतिपाद्यतयाऽभिमतं कार्यं न भवति । अपितु अतिदिष्टार्थविषयोपकारमात्रमेव । तेनोत्तरषट्क एव तत्सिद्धिः । अतिदेशस्तु—एकत्र सिद्धार्थस्यान्यत्राप्युपयोजनम् । सचातिदेशो द्विविधः 'प्रकृतिवद्विकृतिः कर्तव्या' इति सामान्यातिदेशः, 'समानमितरत् श्येनेन' इत्यादिभिर्विशेषातिदेशः । सपुनरष्टमलक्षणे द्रष्टव्यः । तदिदमाह—तत्राश्चैः रिति । श्रुत्यादिभेदेनातिदेशकारणानां बहुत्वा दश्चैरिति विशेषणं बहुवचनं च । तदन्वित्यष्टमादुपरितनत्वमुच्यते, नवमलक्षण इत्यर्थः । तदनुवर्त्यूहत इति—ऊहबाधादीनां विशेषातिदेशानुवर्तित्वमाह । ऊहो नाम 'अग्नये जुष्टं निर्वपामि' इत्यादिमन्त्रस्य तत्तत्कर्मानुरूप्येण 'सूर्याय जुष्टं निर्वपामि' इत्यादिविपरिणामविशेषः । प्राप्तबाधैरिति—बाधो हि द्विविधः—अप्राप्तबाधः प्राप्तबाधश्चेति, अप्राप्तबाधस्तु—श्रुतिलिङ्गाधिकरणे सिद्धः 'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्' इति । अत्र हि प्रमाणप्रवृत्तिझटित्यमेव प्राबल्यम् । तेन प्रथमप्रवृत्तया श्रुत्या चरमप्रवृत्तानामवघातादीनामर्थानां बाध उच्यते—प्रतीतिविलम्बात् । अतः पूर्वप्रवृत्तैः श्रुत्यादिभिस्तस्मिन् काले ऽप्राप्तानां लिङ्गादिसिद्धानामवघातादीनामर्थानां बाधोऽप्राप्तबाधः । प्राप्तबाधस्तु दाशमः 'प्रकृतिवद्विकृतिः कर्तव्या' इति चोदकप्राप्तानामवघातादीनामुपकाराभावेन कृष्णलादिषु बाधात् । तन्त्रेणेति—देशकालकर्त्रैक्यादेकेनैवानुष्ठानेनोभयसिद्धिः । एतत्तु लोके वेदेच प्रसिद्धमेव । प्रसक्त्येति—एकस्यावश्यकर्तव्यस्यानुष्ठानात् नान्तरीयकेतरसिद्धिः । यथा—आमिक्षायागप्रसंगाद्वाजिनयागानुष्ठानम् । श्रूयते हि—'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनम्' इति । अयमर्थः—आमिक्षार्थमेव दध्यानयनम् । नतु वाजिनार्थम्, तेन न वाजिनयागे दध्यानयनं क्रियत इति । एवं कर्मकाण्डद्वादशलक्षणीविभागो दर्शितः । समनन्तरं देवताकाण्डचतुर्लक्षणीविभाग उच्यते—तत उपरीति ।

स्वरूपमादौ तद्भेदस्तदुपासनपूर्वकम् ।
फलं च देवताकाण्डे देवतानां तु कथ्यते ॥ ५ ॥

पद०—वेदार्थ इति । वेदार्थे न्यायचिन्त्ये—न्यायकलापरूपमीमांसया विचार्यमाणे सति । प्रमाणैः—स्मृत्याचारोपबृंहितसार्थवादविधिवाक्यरूपैः प्रमाणैः, मीमांसायाः प्रथमाध्याये विध्यर्थवादस्मृत्याचाराणां

विचारितत्वात्। भेदैः—शब्दान्तरादिभिः द्वितीयेऽध्याये प्रतिपादितैः कर्मभेदैः। अङ्गैः—तृतीयाध्याये श्रुतिलिङ्गादिभिः प्रतिपादितैरङ्गैः, तृतीये श्रुतिलिङ्गादिभिरङ्गाङ्गिभावविचारणात्। प्रयुक्त्या—अङ्गाङ्गिभावेनान्वितानां कर्मणां प्रयोज्यप्रयोजकभावेन। चतुर्थे किमिदं कर्म क्रतुप्रयुक्तमुत पुरुषप्रयुक्तमिति विचार्य अङ्गानि क्रतुप्रयुक्तानि अङ्गि तु पुरुषार्थत्वात् पुरुषप्रयुक्तमिति निर्णयात्। क्रमविरचनया—पञ्चमे श्रुत्यर्थपाठस्थानमुख्यप्रवृत्तिरूपैः षड्भिः विचारितानां तत एव षड्विधानां क्रमाणां स्थापनया। अथ—तदुपरितने षष्ठाध्याये। अधिकृत्या—स्वर्गस्वाराज्यपशुपुत्रादिकामनारूपेण काम्यकर्माधिकारेण नियतनिमित्तसंबन्धरूपेण नित्यकर्माधिकारेण अनियतनिमित्तसंबन्धरूपेण नैमित्तिककर्माधिकारेण च। षष्ठे स्वर्गस्वाराज्यपशुपुत्रादिकामनाविशिष्टः काम्येऽधिकारी नियतनिमित्तसंबन्धी अनियतनिमित्तसंबन्धी च क्रमेण नित्यनैमित्तिकयो रधिकारीति कर्मणामधिकारी हि विचारितः। अतिदिष्ट्या—सप्तमे विचारितेनैकत्रसिद्धस्यार्थस्यान्यत्राप्युपयोजनरूपेण तत्र च 'प्रकृतिवद्विकृतिः कर्तव्या' इति सामान्यरूपेणातिदेशेन 'समानमितरच्छ्येनेन' इत्यष्टमे विचारितेन च विशेषातिदेशेन। तत्र—अतिदेशे। अशेषैर्विशेषैः—श्रुत्यादिभेदभिन्नैरखिलैः कारणैः सह। तदनु—अष्टमादुपरि नवमे। तदनुवर्त्यूहतः—अतिदेशानुवर्तिना 'अग्नये त्वा जुष्टं निर्वपामि' इत्यादिनिर्वपणादिमन्त्रेषु तत्तत्कर्मानुगुण्येन 'सूर्याय त्वा जुष्टं निर्वपामि' इत्यादिपदान्तरानुसंधानरूपेणोहेन। प्राप्तबाधैः—दशमे विचारितैः 'प्रकृतिवद्विकृतिः कर्तव्या' इति चोदकप्राप्तानामवघातादीनामुपकाराभावेन कृष्णलादिषु बाधैः। अप्राप्तबाधस्तु—श्रुतिलिङ्गादिसमवाये प्रथमप्रवृत्तया श्रुत्या विलम्बितप्रतीतिकचरमप्रवृत्तलिङ्गादिसिद्धार्थानां बाधः। स तृतीयेऽनुसन्धेयः। तन्त्रेण—एकादशे विचारितेन देशकालकर्त्रैक्यादेकेनैवानुष्ठानेनोभयसिद्धिरूपेण। अथ—तदुपरि द्वादशे। प्रसक्त्या—एकस्यावश्यकर्तव्यस्यानुष्ठानान्नान्तरीयकेतरसिद्धिरूपेण प्रसंगेन च। कर्मवर्गः—अग्निहोत्रदर्शपूर्णमासादिकर्मसमुदायः। प्रथमम्—काण्डत्रयात्मकमीमांसाप्रथमकाण्डे। अधिगतः—विचारितः। तत उपरि—प्रमाणादिप्रधानद्वादशार्थपरद्वादशाध्यायात्मकप्रथमकाण्डादनन्तरम्। चतुर्लक्षणी—चतुरध्यायात्मको मध्यमकाण्डः। देवतार्था—देवतास्वरूपतद्भेदकतदुपासनतत्फलरूपदेवतानुबन्ध्यर्थप्रतिपादनपरा ॥ ५ ॥

प्राग्धर्मेऽल्पास्थिरार्थे प्रशमितविशये तादृशाराध्ययुक्ते
ऽथातः शारीरकांशे बहुविधमहिम ब्रह्म मीमांसितव्यम्।
कृत्स्नस्वाध्यायसाङ्गाध्ययनसमुदितापातबुद्ध्यैव कर्म
त्यक्त्वादौ ब्रह्मचिन्तां किमिति न कुरुतां तन्न तुल्योक्त्यबाधात् ॥ ६ ॥

चिन्ता०—एवं काण्डद्वयार्थप्रक्रियामुक्त्वा तदनन्तरं तृतीयकाण्डप्रवृत्तिप्रक्रियां सहेतुकमभिधाय शारीरकशास्त्रप्रवर्तकप्रधानार्थं प्रदर्शयन् भाष्यकारोक्तक्रमेण कर्मकाण्डश्रवणात् प्रागेव वेदान्तश्रवणप्रवृत्तिमाशङ्क्य प्रतिबन्द्या परिहरति—प्राग्धर्म इति । वेदाध्ययनानन्तरं साङ्गाध्ययनसामर्थ्यात् संस्कृतप्रायदेशवासाच्च आपातप्रतीत्या सर्वत्र वेदार्थे संशयो जायते—कर्मकाण्डे 'अपाम सोमममृता अभूम, अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति' इत्यादिभिरनन्तस्थिरफलत्वमापाततः प्रतीयते । साचापात—प्रतीतिरावृत्तिविधानादिभिः 'अतोऽतो वा उत्तराणि श्रेयांसि भवन्ति' इत्यादिश्रुत्या च सम्यक्कर्मनिरूपणानन्तरं निवर्तते 'ब्रह्मविदाप्नोति परम्' 'ब्रह्म वेद ब्रह्मैव भवति' 'पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति' इत्याद्यौपनिपदवाक्यजनितापातप्रतीतिरनुवर्तते । एवं च सति प्रतिबन्धकरूपकर्मफलानन्त्यापातप्रतीतौ निवृत्तायां ब्रह्मज्ञानानन्त्यापातप्रतीति रप्रतिबद्धशक्तिः शारीरकशास्त्रं प्रवर्तयतीति पूर्वार्धसंग्रहः । उत्तरार्धेतु वेदवेदान्तजनितकर्मफलापातप्रतीतिमात्रसन्तुष्टः कश्चित् 'प्रथमत एव कर्मविचारं मुक्त्वा शारीरकशास्त्रमेव संचिन्त्यता' मित्याह, तस्योत्तरम्—आपातप्रतीतिमात्रेण ब्रह्मभागोऽपि न संचिन्तनीय इति । तत्प्रतिपन्नार्थौ न्यायनिरूपणमन्तरेण संशयविपर्ययौ नातिवर्तत इति यदि वदसि—तर्हि संशयविपर्ययापनोदनार्थं कर्मभागोऽपि संचिन्त्यतामिति प्रतिबन्द्या परिह्रियत इति । अतः कर्मफलाल्पास्थिरत्वनिर्णयपूर्वकब्रह्मज्ञानानन्तस्थिरफलापातप्रतीतेस्तुल्योक्त्यबाधात् —· तुल्यमित्युक्तेरबाधादित्यर्थः ॥ ६ ॥

पद०—प्राग्धर्म इत्यादि । प्राक्—द्वादशाध्यायात्मकप्रथमकाण्डे । अल्पास्थिरार्थे—'अतोऽतो वा उत्तराणि श्रेयांसि भवन्ति' इत्याद्युक्तरीत्या अल्पोऽस्थिरो नश्वरश्चार्थः फलं यस्य तस्मिन् । तादृशाराध्ययुक्ते अल्पास्थिरवैभवयुक्तदेवताराधनरूपे । धर्मे—श्रेयस्साधनभूतेऽग्निहोत्रदर्शपूर्णमासादिकर्मसमुदाये । प्रशमितविशये—प्रशमितानन्तस्थिरफलत्वसंशयके सति । वेदाध्ययनानन्तरं साङ्गाध्ययन सामर्थ्यात् संस्कृतप्रायदेशवासाच्चापातप्रतीत्या सर्वत्रवेदार्थे संशयो जायते । तत्र कर्मकाण्डे 'अपाम सोमममृता अभूम' 'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति' इत्यादिभिरनन्तस्थिरफलत्वमापाततः प्रतीयते । तस्यां चापातप्रतीतौ कर्मविचारानन्तरं न्यायसंस्कृतहृदयतया ऽऽवृत्तिविधानादिभिः 'अतोऽतो वा उत्तराणि श्रेयांसि भवन्ति' इत्यादिवाक्यैश्चाल्पास्थिरफलत्वनिश्चयजननिवृत्तायां सत्यांस्वामित्यर्थः। अथ—कर्मविचारानन्तरम् । अतः—उक्तरीत्या उत्तरभागविचारप्रतिबन्धकपूर्वभागानन्तस्थिरफलत्वापातप्रतीतिनिवर्तकतदल्पास्थिरफलत्वनिश्चयजननद्वारा हेतुभूतात् कर्मविचारादेव हेतोः । शारीरकांशे वेदोत्तरभागार्थनिर्णयौपयिकन्यायकलापात्मके शारीरकाख्यमीमांसोत्तरांशे । बहुविधमहिम—स्वरूपतो

गुणतो विभूतितश्चानन्तं स्वज्ञानेनानन्तस्थिरफललाभहेतुभूतम् । ब्रह्म—स्वरूपतो गुणतश्चानवधिकातिशयं वस्तु । मीमांसितव्यम्—न्यायकलापैः विचारितव्यम् । कृत्स्नस्वाध्यायसाङ्गाध्ययनसमुदितापातबुद्ध्यैव—कृत्स्नस्य वेदस्य शिक्षाव्याकरणाद्यङ्गयुक्ततया यदध्ययनं स्वतन्त्रोच्चारणशक्तिफलकगुरुमुखोच्चारणानूच्चारणरूपं तेन समुदितया सम्यगुत्पन्नया । आपातबुद्ध्यैव संशयविपर्ययानुरोध्यनन्तस्थिरफलापातबुद्ध्यैव । कर्म—पूर्वकाण्डप्रतिपाद्यं कर्मजातम् । त्यक्त्वा—स्वसमीहितसाधनं न भवतीति निश्चयेन तदनुष्ठानप्रवृत्तिं विहाय । आदौ—कर्मविचारात्पूर्वमेव । ब्रह्मचिन्ताम्—शारीरकाध्ययनरूपं ब्रह्मविचारम् । किमिति न कुरुताम्—कुतो न कुर्यात् । इति चेदिति शेषः । तन्न—तन्न युक्तम् । तुल्योक्त्यबाधात्—'एवं तर्हि शारीरकमीमांसायामपि न प्रवर्तताम् । साङ्गाध्ययनादेव कृत्स्नस्य ज्ञातत्वात् । सत्यमापातप्रतीतिर्विद्यत एव । तथापि न्यायानुगृहीतवाक्यस्यैवार्थनिश्चायकत्वात् आपातप्रतीतोऽप्यर्थः संशयविपर्ययौ नातिवर्तते । अतस्तन्निर्णयाय वेदान्तवाक्यविचारः कर्तव्य' इति चेत् तथैव धर्मविचारोऽपि कर्तव्य एवेति तुल्योक्तेरपरिहरणादित्यन्वयः ॥ ६ ॥

प्रावण्यं प्राक् त्रिवर्गे सफलयतनतोपासनाङ्गत्वतोऽपि
व्याख्यारूपेऽत्र शास्त्रे क्रमनियतिरसौ स्याच्च मुख्यक्रमेण ।
मानत्वादिर्विचार्यः पुरतइह तथा वाक्यवेद्यात्पदार्थो
दृष्टान्तश्चोपमेयाद्यदि मधु सविधे यातु चाद्रिं किमर्थम् ॥ ७ ॥

चिन्ता०—एवं मीमांसाशास्त्रस्य पूर्वोत्तरभागयोः पौर्वापर्यमभिधाय तत्प्रतिपादकहेतून् पञ्चमाध्यायप्रतिपादितान् अत्रापि नियामकत्वेन विशदं प्रकाशयति—प्रावण्यमिति । श्रुत्यर्थपाठकाण्डमुख्यप्रवृत्तिक्रमैर्हि तान्त्रिकाः कर्मणामानुपूर्वीमभिदधुः । 'हृदयस्याग्रेऽवद्यत्यथ जिह्वायाः, अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति' इत्यादिषु श्रुत्यैव क्रमो विधीयते । समानकर्तृकयोः पूर्वकाल एव हि क्त्वाप्रत्ययो विधीयते । अत्रापि 'परीक्ष्य लोकान् कर्मचितान्' इति विषयवाक्ये श्रौतक्रमः स्पष्टः । त्रिवर्गे प्रथमप्रावण्यमित्यर्थक्रमः । अनादौ खलु संसारे त्रिवर्गप्रवणानामधिकारिणामेतस्मिन्नपि जन्मनि अनादिवासनावशाददितस्त्रिवर्गप्रावण्यमेव योयुज्यते । तत्र दोषान् दृष्ट्वा पुनरपवर्गप्रावण्यमित्यर्थक्रमः । यथा—'अग्निहोत्रं जुहोति, यवागूं पचति' इत्यर्थौचित्यानुसारेण यवागूपाकस्यैव प्राथम्यं परिकल्प्यते । सफलेत्यादि—कर्मणामुपासनाङ्गत्वात्प्रागेव कर्मविचारकाणां सफलव्यापारत्वमस्ति । अयमर्थः—उपासनस्य हि कर्माणि सान्नपत्योपकारकत्वेन विधीयन्त इति वेदार्थनिरूपकाणां निर्णयः । 'कषाये कर्मभिः पक्वे ततो ज्ञानं

प्रवर्तते' इति परमर्षिणा साक्षादेव संनिपत्योपकारकत्ववर्णनात्। तथाचानुष्ठेययोः कर्मज्ञानयोः पौर्वापर्ये सिद्धे तदनुष्ठानौपयिकज्ञानद्वारेण तच्चिन्तयोरपि पौर्वापर्यं सिद्धमिति। अयमप्यर्थक्रमादौ यथायोगमन्तर्भवतीति। व्याख्येति—व्याख्येयो वेदः। व्याख्यानं मीमांसा तत्र 'इषेत्वा' इत्यारभ्य 'ब्रह्मणो महिमानमाप्नोति' इति व्याख्येयपौर्वापर्यस्य अध्ययनादिनियमसिद्धत्वात् तच्छेषस्य व्याख्यानस्यापि क्रम इति मुख्यक्रमः। पाठक्रमोऽपि वक्तुं शक्यते—यथापाठमेव वेदं विचारयन्ति विचारका इति। दृश्यते हि 'समिधो यजति' इत्यादौ पाठक्रमः। तत्र हि यथापाठमेव श्रुतार्थमनुतिष्ठन्त्यनुष्ठातारः। अत्र प्रवृत्तिक्रमोऽपि प्रदर्शयितुं शक्यते—वेदो हि धर्मप्रमितौ कारणम्। तस्य चेतिकर्तव्यता गुरोरन्ते वेदाध्ययनम् तत्फलमक्षरराशिग्रहणमर्थविचारश्चेति। तथा च यत्क्रमेणाध्ययनं तत्क्रमेण तत्फलमक्षरराशिग्रहणम्। यत्क्रमेणाक्षरराशिग्रहणं तत्क्रमेणार्थचिन्तनमिति। उपदिष्टं हि कर्मकाण्डे उपाकरणनियोजनप्रोक्षणाभिघाराणां प्राप्तक्रमाणां 'सप्तदश प्राजापत्यान् पशूनालभेत' इत्यादौ प्रथमानुष्ठानक्रमानतिलङ्घनेनोत्तरानुष्ठानमिति। इदं किल मुख्यक्रमोदाहरणं कर्मकाण्डे 'सारस्वतौ होमौ भवतः' इति युगपदुत्पन्नयोः सरस्वतीदेवताक सरस्वद्देवताकयो र्याज्यानुवाक्यापाठक्रमेण क्रमे सिद्धे तदङ्गानामन्येषां पुनर्मुख्यक्रमादेव क्रम इति। मानत्वादित्यादि—मानभेदाङ्गादिपरिशोधनं पूर्वकाण्डे कृतं तदुत्तरकाण्डोपजीव्यम्। उपजीव्यस्य पूर्वभावित्वं सर्वलोकसिद्धमेव। अयमप्यर्थक्रमः। वाक्येति—'यज्ञेन' इत्यादिवाक्ये वेदनं वाक्यार्थत्वेन विधीयते यज्ञादिकं पदार्थत्वेन। अत्रान्विताभिधानम्, अभिहितान्वयो वा भवतु। उभयत्रापि वाक्यार्थप्रतीत्यपेक्षया पदार्थप्रतीतेः पूर्वभावित्वमुच्यते। पदैरभिहिता इत्यभिहितान्वयवादिनः। स्मारितानन्वितार्थकमित्यन्विताभिधानवादिनः। तथाच वाक्यार्थरूपोपासनविचारात्पूर्वं कर्मविचारः कर्तव्य इति उक्तं भवति। अयमप्यर्थक्रमः उपजीव्योपजीवकभावापरित्यागात्। दृष्टान्त इति—'हानौ तूपायनशब्दशेषत्वात् कुशाच्छन्दस्तुत्युपगानवत्तदुक्तम्' इत्यादौ कर्मकाण्डोक्तार्थदृष्टान्तेन ज्ञानकाण्डोक्तार्थप्रसाधनात् दार्ष्टान्तिकप्रतीतेः पूर्वमेव दृष्टान्तप्रतीतेरवश्यंभावाचायमप्यर्थक्रमः। 'अर्के चेन्मधु विन्देत' इति न्यायेनार्थक्रमान्तरमाह—यदीति। पूर्वकाण्डे हि ब्रह्मज्ञानमन्तरेण केवलकर्मानुष्ठानेनापरिमितफलप्राप्तिरुच्यते। उत्तरकाण्डे तु कर्मपरिकर्मितात् ज्ञानात्।

'हतं ज्ञानं क्रियाहीनं हता चाज्ञानिनां क्रिया।
दावाग्निनान्धको दग्धः पश्यन्नपि च पङ्गुकः॥' इति हि वदन्ति।

तथाच लघूपायेन प्राप्ते फले गुरूपायस्य परित्याज्यत्वेन कर्मविचार एव प्रथमं क्रियते—तत्र दोषं दृष्ट्वा ब्रह्मविचार इति। अत्र स्थानक्रमोऽप्यनुसंधेयः। वेदाध्ययनानन्तरकालस्य कर्मविचारकालत्वेन

तेन स्वस्थानापन्नकर्मविचारं त्यक्त्वा ब्रह्मविचारः कथमिवानुष्ठेय इति । यथा साद्यस्के कर्मणि 'सह पशूनालभेत' इत्यत्र बहूनां पशूनां सहालम्भने सवनीयस्य स्वस्थानत्वात् पूर्वमनुष्ठानं प्रतिपेदिरे तान्त्रिकाः ॥ ७ ॥

पद०—प्रावण्यमित्यादि । प्राक्—प्रथमतः । त्रिवर्गे धर्मार्थकामरूपे त्रिवर्गे, प्रावण्यं प्रवृत्तिस्वरसता । दृश्यत इति शेषः । अनादौ खलु संसारे त्रिवर्गप्रवणा ह्यधिकारिणोऽस्मिन्नपि जन्मनि अनादिवासनया प्रथमतस्त्रिवर्ग एव स्वरसप्रवृत्तहृदयाः पश्चात्तद्दोषदर्शनेन ह्यपवर्गे प्रवर्तन्ते नतु प्रथमत एवापवर्गपरा भवन्तीत्यर्थक्रमादित्यर्थः । उपासनाङ्गत्वतोऽपि सफलयतनता—'कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते' इत्यादिवचनेन कर्मणामुपासनाङ्गत्वावगमादनुष्ठेययोः कर्मज्ञानयोः पौर्वापर्यसिद्ध्या तदनुष्ठानौपयिकज्ञानद्वारेण तच्चिन्तनयोरपि पौर्वापर्यावश्यंभावात् प्रागेव कर्मविचारस्य सफलव्यापारत्वमस्तीत्यर्थः । प्रागेव कर्मविचारस्यास्तीति पदानि पूरणीयानि । अयमप्यर्थक्रम एवान्तर्भवति । व्याख्यारूपे—वेदाख्यैकव्याख्येयव्याख्यानात्मके । अत्र शास्त्रे—पूर्वोत्तरमीमांसाशास्त्रे । असौ क्रमनियतिः—प्रतिपद्यमानः पौर्वापर्यनियमः । मुख्यक्रमेण च स्यात्—मुख्ययो र्व्याख्येययोः कर्मब्रह्मपरवेदभागयोः पाठसिद्धेन पौर्वापर्यरूपक्रमेण च स्यात् । शेषिणोः क्रममनुसृत्य हि शेषयोः क्रमो युक्त इति भावः । किंच इह—मीमांसाशास्त्रे । मानत्वादिः—प्रमाणभेदादिरूप उत्तरकाण्डेऽप्युपजीव्योऽर्थसमुदायः । पुरतो हि विचार्यः—उपजीवकविचारात्पूर्वमेव हि उपजीव्यो विचारणीयः । अयमप्यर्थक्रमः । तथा—तत्तुल्यतया । वाक्यवेद्यात्—वाक्यार्थात् पुरतः पदार्थो विचार्यः । 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन' इत्यादौ वाक्यार्थो वेदनं पदार्थो यज्ञादिरिति वाक्यार्थभूतज्ञानविचारात् पूर्वमेव पदार्थभूतकर्मविचारो युक्तः । अयमप्यर्थक्रमः । उपमेयात्—दार्ष्टान्तिकात्पूर्वम् । दृष्टान्तश्च—उपमानभूतपदार्थश्च विचार्य इति सिद्धम् । 'हानौ तूपायनशब्दशेषत्वात् कुशाच्छन्दस्तुत्युपगानवत्तदुक्तम्' इत्यादौ दार्ष्टान्तिकतयोपात्ताद्विद्यानुबन्धिनो हानोपायनाद्यर्थजातात् पूर्वमेवहि कुशाच्छन्दस्तुत्युपगानादिदृष्टान्ततयोपात्तोऽर्थसमुदायो विचारणीयः । चन्द्रवन्मुखमित्यादिषूपमानस्यानन्तरं दार्ष्टान्तिकं दृश्यत इति भावः । अयमप्यर्थक्रमः । किंच सविधे-समीपे । मधुयदि-लभ्येत यदि । अद्रिम्—दूरवर्तिनं दुरारोहं पर्वतम् । किमर्थं यातु—विवेकी कुतो गच्छेत् । 'अर्के चेन्मधुविन्देत किमर्थं पर्वतं व्रजेत्' इति न्यायादिति भावः । अल्पमन्तिकम् । पूर्वकाण्डे हि ज्ञानं विनापि लघुना कर्मणैव तत्तत्फललाभ उच्यते । उत्तरकाण्डे तु कर्मपरिकर्मितादेव ज्ञानात् फलप्राप्तिः प्रत्यपादि । अतो लघूपायेन फललाभे सति गुरूपायप्रवृत्त्यसंभवात् प्रथमं कर्म विचार्यते । तत्र दोषदर्शने पश्चात् ब्रह्म विचार्यतेति अयमप्यर्थक्रम एव ॥ ७ ॥

व्याचख्युः केऽपि तापत्रयहतिमितरे साधनानां चतुष्कं
काण्डेऽस्मिन् पूर्ववृत्तं कथयति निगमः कर्मचिन्ताफलं तत् ।
साङ्गाधीतिर्हि सूते विशयमवसरः कात्र तन्त्रान्तरादे-
रौचित्यस्थापितोऽयं क्रम इह न पुनश्चोदनासंप्रयुक्तः ॥ ८ ॥

चिन्ता०—एवं कर्मब्रह्मविचारयोः पौर्वापर्यं कर्मकाण्डपञ्चमाध्यायप्रतिपादितश्रुत्यादिक्रमानुसारेणोक्त्वा परपक्षवादिभिरुक्तं क्रमान्तरं प्रतिक्षिपति—व्याचख्युरिति । तत्र यादवप्रकाशीयाः खलु तापत्रयाभिहतिमेव त्रय्यन्तात् पूर्ववृत्तत्वेनाचक्षते । यथाहुः सांख्याः—'दुःखत्रयाभिघाताज्जिज्ञासा' इति । शाङ्करीयास्तु—साधनचतुष्टयं पूर्ववृत्तमिति, तच्च नित्यानित्यवस्तुविवेकः शमदमादिसाधनसंपत् इहामुत्रच फलभोगविरागो मुमुक्षुत्वं चेत्याचक्षते । तदिदमुभयमपि वार्तम् । तथाहि किं तापत्रयोपहतिमात्रं तापत्रयाभिहतिः, किं वा स्वर्गादीनां नश्वरत्वादुपरि पर्वभिः खर्वितत्वादनर्थशतगर्भितत्वाच्च परित्याज्यत्वनिर्णयः, पूर्वत्र पामरपरीक्षकाविशेषेण सर्वसाधारण्यात् वेदान्तशास्त्रपूर्ववृत्तत्वानियमेन नियमेन तत्कथनं न संभवति । उत्तरत्र चोभयमीमांसाश्रवणसाध्यत्वात् परस्पराश्रयप्रसङ्गो दुर्वारः । सांख्यशास्त्रश्रवणात् तन्निर्णय इति च न घटते । वेदाध्ययनानन्तरं मीमांसाश्रवणस्य प्राप्तत्वात् सांख्यादीनामवकाश एव नास्ति । कुतस्तच्छ्रवणम्? कुतस्तरां तन्मूला स्वर्गादिषु वैराग्योत्पत्तिः? कुतस्तमां च तापत्रयाभिहतिपूर्वकं शारीरकशास्त्रश्रवणम्? इति महदिदं सङ्कटमापद्यते । किंच सांख्यादिशास्त्रैः प्रकृतिरेव सर्वकर्त्री पुरुषश्च निर्लेपः, ईश्वरो नास्तीत्यादिविपरीतबोधनादयथायथमेव वैराग्यं जायत इति न सम्यग्वैराग्यसिद्धिः । इदं च परस्पराश्रयादि मृषावादिनामपि तुल्यमेव । नित्यानित्यवस्तुविवेकादीनां चतुर्णामपि शारीरकशास्त्रश्रवणमन्तरेणासिद्धिः, तत्सिद्धौ तच्छ्रवणमिति परस्पराश्रयावकाशात् । न्यायादिशास्त्रश्रवणजनितनित्यानित्यवस्तुविवेकस्तु पूर्ववदेव निरसनीयः । अत्र शास्त्रान्तराणामवकाशाभावात् विपरीतबोधजनकत्वाच्चेति । यस्तु कश्चित् पण्डितम्मन्यः प्राह—नित्यमुपादेयमनित्यमनुपादेयमिति प्रतीतिमात्रमेव नित्यानित्यवस्तुविवेकः, इदं च वेदान्तशास्त्रश्रवणात् प्रागेव सिध्यतीति नान्योन्याश्रय इति, सोऽपि ग्राम्यजनविप्रलम्भकः । नित्यमुपादेयमनित्यमनुपादेयमिति साधारणप्रतीतेः सांख्यवैशेषिकादिसर्वशास्त्रसाधारण्येन वेदान्तशास्त्रनियतपूर्वभावित्वेनावक्तव्यत्वादिति । तदिदं सर्वमभिप्रेत्याह—कथयतीति । 'परीक्ष्य लोकान्' इत्यागमस्तापत्रयाभिहतिं नित्यानित्यवस्तुविवेकादिकं चोभाभ्यामपि वादिभ्यामुक्तं कर्मविचारमन्तरेण न सेत्स्यतीति कथयति । अयमर्थः—किं वेदान्तवाक्यश्रवणमात्रोपायत्वेन स्वर्गादिविषयवैराग्यैकदेशो विवक्षितो भवता,

अथवा 'शान्तो दान्तः' इत्याद्युक्तपरमवैराग्यम्। पूर्वं तावत् कर्मविचारमन्तरेण न सेत्स्यति। परंतु कर्मविचारपूर्वकब्रह्मविचारमन्तरेण न सेत्स्यतीति शारीरकशास्त्रपूर्ववृत्तत्वेन वक्तुमेव न शक्यते। इदं च दूषणं मृषावादिनामपि तुल्यमेव। शारीरकशास्त्रश्रवणात्पूर्वं सम्यङ्नित्यानित्यवस्तुविवेकादीनामसिद्धेः, एकदेशेन नित्यानित्यवस्तुविवेकादीनां कर्मकाण्डचिन्ताफलत्वाच्चेति। ननु साङ्गाध्ययनसामर्थ्यात्पूर्वमेव प्रतीतमिति चेत् तत्रोत्तरम्—साङ्गाधीतिरिति। अध्ययनमात्रादापातप्रतीतिमात्रं जायते नतु नित्यानित्यवस्तुविवेकादिनिश्चय इति। तर्हि सांख्यवैशेषिकादितन्त्रान्तराभ्यासात् निश्चयो जायत इति चेत् तत्राप्युत्तरमाह—अवसर इति। अध्ययनानन्तरं न्यायप्राप्ते मीमांसाश्रवणे जाग्रति अप्राप्तानां न्यायादीनामवकाशो नास्तीत्यर्थः। एवं क्रमस्यावश्यकत्वेन क्रमेण कर्तव्यस्य मीमांसाश्रवणस्य विधिप्राप्तत्वं स्यादित्याशङ्क्याह—औचित्यांति। औचित्यात् योग्यतामात्रचिन्तनात् अयं क्रमः परिकल्प्यते। न पुनः श्रुत्या साक्षादेव विधीयते। कथं तर्हि 'परीक्ष्य लोकान्' इत्यादिश्रुतिः कर्मब्रह्मविचारयोः पौर्वापर्यं विदधातीत्याशङ्क्याह—नपुनरिति। सापि श्रुतिर्न्यायप्राप्तमेव प्रतिपत्तॄणामनुग्रहाय विशदमेवानुवदति। 'गुरुमेवाभिगच्छेत्' इति तु विधिः 'अभिजनविद्यासमुदेतं समाहितं संस्कर्तारमीप्सेत्' इति वत् नियमविधिरिति न सङ्कटं किञ्चिदिति। 'स्वाध्यायोऽध्येतव्यः' इति विधिस्त्वक्षरराशिग्रहणे विश्राम्यति। रागप्राप्ते तु मीमांसाश्रवणे क्रमपरिक्लृप्तिरौचित्यादेव सिध्यतीति ॥ ८ ॥

पद०—व्याचख्युरित्यादि। केऽपि—यादवप्रकाशीयाः। तापत्रयहतिम्—'दुःखत्रयाभिघाताज्जिज्ञासा तदुपघातके' इत्यत्र सांख्यतत्त्वकौमुद्युक्तरीत्याऽऽध्यात्मिकादितापत्रयाभिहतिम्। अस्मिन्काण्डे पूर्ववृत्तं व्याचख्युः—ब्रह्मकाण्डे 'अथातो ब्रह्मजिज्ञासा' इति हि सूत्रेऽथशब्दार्थभूतानन्तर्यप्रतियोगित्वेनाभ्यधुः। इतरे शाङ्कराः। साधनानां चतुष्कम्—नित्यानित्यवस्तुविवेकः, शमदमादिसाधनसंपत्, इहामुत्रफलभोगविरागः, मुमुक्षुत्वमित्येतत्साधनचतुष्टयम्। अस्मिन्काण्डे पूर्ववृत्तं व्याचख्युरिति पूर्ववत्। तत्—उभाभ्यामुक्तमप्यानन्तर्यप्रतियोगिद्वयम्। निगमः—'परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात्' इत्यादिरूप आगमः। कर्मचिन्ताफलं कथयति—कर्मविचारमन्तरेण न सेत्स्यतीति कथयति। साङ्गाधीतिः—साङ्गवेदाध्ययनम्। विशयं हि सूते—नित्यानित्यवस्तुविवेकादिकं कथंचिजनयदपि संशयात्मकमेव जनयति। नतु निश्चयात्मकम्। न्यायासंवलितस्य केवलाध्ययनस्य निश्चयजननासामर्थ्यात्। अत्र—साङ्गाध्ययनजनितसंशये पुरुषे। तन्त्रान्तरादेः क्वावसरः—सांख्यादितन्त्रान्तरादेः कुत्रावकाशः। साङ्गाध्ययनानन्तरं न्यायप्राप्ते मीमांसाश्रवणे जाग्रति कथमप्राप्तसांख्यन्यायादिदर्शनावकाश इत्यर्थः। इह—मीमांसाभागद्वये। अयं क्रम औचित्यस्थापितः—योग्यतामात्रचिन्तनात् परिकल्प्यते,

न पुनश्चोदनासंप्रयुक्तः—न पुनः श्रुत्या साक्षादेव विधीयते। 'परीक्ष्य लोकान्' इति श्रुतेर्न्यायप्राप्तक्रमानुवादपूर्वकमाचार्याभिगमननियमविधिपरत्वादिति भावः ॥ ८ ॥

नित्यप्राप्तस्य कण्ठस्थितकनकनयान्निर्विशेषस्य लब्धि-
र्मिथ्याभूतं निवर्त्यं श्रुतिशकलभुवः प्रेक्षणात्तन्निवृत्तिः।
कर्मैवं क्वोपयुक्तं प्रतिभटमपि तद् वृत्ततोक्तिर्मदुक्ते
प्राप्ताऽत्रेति प्रलापे प्रतिवचनगतिर्भाषिता विस्तरेण ॥ ९ ॥

चिन्ता०—नित्यानित्यवस्तुविवेकादिनिराकरणपूर्वकं कर्मविचारस्य पूर्ववृत्तत्वेऽभिहिते पूर्वपक्षवादिनां तत्तत्प्रतिक्षेपप्रकारमनूद्य तस्यापि प्रतिक्षेपप्रकारो भाष्य एव विस्तरेणाभिहित इति भाष्यमेव तत्रोत्तरयति—नित्येति अयमभिप्रायः—वयं खलु शिष्याणां सुखप्रतिपत्त्यर्थं शारीरकशास्त्रशरीरसंग्रहे प्रवर्तामहे, न परपक्षप्रतिक्षेपे, विस्तररूपं प्रथमसूत्रभाष्यमेवान्तेवासिभिः पौनःपुन्येनानुसन्धेयमिति। शब्दार्थस्तु—नित्यप्राप्तस्य निर्विशेषस्य ब्रह्मणः कण्ठचामीकरन्यायेनोपदेशः क्रियते शारीरकशास्त्रेण। न संसारो व्यावर्त्यते। स च परमार्थः, निवर्तकश्च तस्य कर्मपरिकर्मितब्रह्मोपासनमिति परपक्षमाशङ्क्य स्वपक्षपरिकल्पितान् निवर्त्योपायोपेथान् विशदं प्रकाशयति—मिथ्येति। श्रुतिशकलभुवः कर्मनिरपेक्षात् 'तत्त्वमसि' इत्यादिवाक्यजन्यात् प्रत्यक्षादेवाविद्यानिवृत्तिः। न केवलं कर्मणामनपेक्षितत्वमेव, अपितु प्रतिभटत्वमपीति प्रदर्शयति—प्रतिभटमपीति। कर्मणां भेदात्मकत्वात् ब्रह्मणो निर्विशेषत्वात्। तस्मात् पूर्ववृत्तत्वोक्तिर्मदुक्ते नित्यानित्यवस्तुविवेकादौ प्राप्तेति प्रलापे प्रतिवचनगतिर्भाष्य एव विस्तरेण प्रतिपादितेति न वयं विस्तृणीमहे। अयमत्रोत्तरग्रन्थाशयः—उभयविभूतिविशिष्टं परं ब्रह्म प्राप्यम्, प्रापकं चोपासनम्, तच्चानभिसंहितफलकर्मानुष्ठानसाध्यम्, अनुष्ठानं च कर्मणां परिज्ञानादेव, तच्च परिज्ञानं कर्ममीमांसाश्रवणादेवेति कर्मविचारस्यैव पूर्ववृत्तत्वकथनं सम्यगेव, अपन्यायमूलं परेषां पूर्ववृत्तत्वपरिकल्पनं प्रतिक्षिपाम इति ॥ ९ ॥

पद०—नित्यप्राप्तस्येत्यादि। नित्यप्राप्तस्य—नित्योपलब्धस्य। निर्विशेषस्य—विशेषसामान्यशून्यस्यास्मतत्त्वस्य। कण्ठस्थितकनकनयात्—स्वकण्ठ एव स्थितं कण्ठाभरणरूपं कनकं केनचिदपहृतमिति ससंभ्रमं मार्गमाणं प्रति त्वदीयं कण्ठाभरणरूपं कनकं त्वत्कण्ठ एव तिष्ठतीत्युपदिष्टे तदैव कनकं स साक्षात्कृत्य यथोपलभ्येत तन्न्यायादित्यर्थः। लब्धिः—उपलब्धिरूपा प्राप्तिः। न त्वप्राप्तस्य प्राप्तिरित्यर्थः। निवर्त्यम्—निवर्तनीयमविद्यारूपं बन्धनम्। मिथ्याभूतम्—नतु सत्यभूतं ब्रह्मव्यतिरिक्तत्वात्। ब्रह्मण एव सत्यत्व-

चेति भावः। अतः श्रुतिशकलभुवः—कर्मादिनिरपेक्षात् 'तत्त्वमसि' इत्यादिश्रुतिवाक्यखण्डजनितात्। प्रेक्षणात्—शब्दजन्यापरोक्षज्ञानात्। तन्निवृत्तिः—मिथ्याभूताविद्यारूपबन्धनिवृत्तिः। भवतीति शेषः। कर्म—पूर्वकाण्डविचार्यं कर्म। एवम्—उक्तरीत्या मिथ्याभूतनिवर्त्यनिवर्तने। क्कोपयुक्तम्—कस्मिन्नंश उपयुज्यते। न कुत्रापीत्यर्थः। प्रतिभटमपि—न केवलमनुपयुक्तम्, कर्तृकरणाद्यनेकभेदात्मकत्वेन विरोधि च भवति। तत्—तस्मात्। वृत्ततोक्तिः—ब्रह्मजिज्ञासां प्रति पूर्ववृत्तत्वकथनम्। अत्र—निवृत्तिरूपतया ज्ञानोपयोगयोग्ये। मदुक्ते—अस्मदुक्ते नित्यानित्यवस्तुविवेकशमदमादिसाधनसंपदादौ। प्राप्ता—युक्ता। इति प्रलापे—एवमाद्यपन्यायमूलजल्पने। प्रतिवचनगतिः—प्रत्युत्तरदानप्रकारः। विस्तरेण भाषिता—भाष्य एव विस्तीर्णतया प्रतिपादिता। अतोऽत्र न विस्तीर्यत इति भावः॥ ९॥

**मीमांसायाः कबन्धं कतिचन जगृहू राहुकल्पं शिरोऽन्ये**
**किं तैरन्तर्विरोधप्रमुषितमतिभि र्बाह्यकल्पै र्भ्रमद्भिः।**
**स्वाध्यायाध्यायकार्त्स्न्ये स्वविधिपरविधिप्रेरणा तावदास्तां**
**कृत्स्नापातप्रतीतौ किमिति कृतधियः कृत्स्नचिन्तां न कुर्युः॥ १०॥**

चिन्ता०—ननु मीमांसाशास्त्रस्य पूर्वोत्तरभागयो रैक्ये सत्येव पौर्वापर्यक्लृप्तिः समुचिता। तदेव न विद्यत-इत्याशङ्क्य प्रतिक्षिपति—**मीमांसाया** इति। 'अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः' इति, 'पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः' इति च कर्मब्रह्मविचारयोर्मीमांसेति साधारण्येनोपादानात् सिद्धमेव द्वयोरपि भागयो रैक्यम्। कथं तर्हि कर्ममीमांसा ब्रह्ममीमांसेति विभागनिर्देश इति चेन्न; तस्यैवास्माकमनुकूलत्वात्। अत्र हि मीमांसेत्येकमेव शास्त्रम्, तत्र कर्मप्रधानो भागः कर्ममीमांसा, ब्रह्मप्रधानो भागो ब्रह्ममीमांसेति विभाग इति प्रतीयमानत्वात्। अन्यथा विद्यास्थानानां चतुर्दशत्वासंभवात्। तेन मीमांसाशास्त्रस्यैक्ये सत्यपि निरीश्वरमीमांसकास्तस्य शरीरमेव परिजगृहुः। अत एव तान्कबन्धमीमांसका इत्याचक्षते विचक्षणाः। अपरे तु राहुकल्पं तच्छिर एव परिजगृहुः। तानपि राहुमीमांसका इत्याचक्षते। तयोरितरेतरांशपरित्यागोऽन्तर्विरोधनिबन्धन इत्यधिक्षिपति—**किं तैरि**त्यादिना। न केवलं पुराणादिप्रसिद्धिमात्रेण कर्मब्रह्मभागयोरैक्यम्, अपि तु न्यायानुसारेणापीत्याह—**स्वाध्याये**ति। अत्र स्वाध्यायशब्देन सशिरस्को वेद उच्यते। तेनाध्ययनं तावदुभयभागविषयमेव। तत्फलभूतमक्षरराशिग्रहणमपि तथैवोभयविषयम्। तदनन्तरं साङ्गाध्ययनादिजनितापातप्रतीतिरपि उभयविषयिणी। तथा तदन्तर्वर्तिवेदवाक्यार्थविचाररूपमीमांसा सार्वत्रिकी। तदिदमाह—**कार्त्स्न्ये** इति। ननु स्वविधिप्रयुक्तं स्वाध्यायाध्ययनमिति

कौमारिलाः । तच्चार्थज्ञानपर्यन्तम् । तन्मध्यभाविविचारोऽपि अध्ययनविधिप्रयुक्त एव । तथाच कथमापात प्रतीत्या प्रयुक्तिरुच्यते विचारस्य । एवमध्यापनविधिप्रयुक्तमध्ययनम् । तत्र दृष्टफलत्वेनार्थज्ञानमनुमन्यते नियोगेन । तदन्तर्वर्तिविचारोऽपि तदनुमत्यैव प्रवर्तते । किमापातप्रतीतिप्रेरणया मीमांसाशास्त्रस्येति । अत्रोत्तरमाह—**स्वविधीति** । स्वविधिप्रयुक्तत्वं परविधिप्रयुक्तत्वं वा भवतु नाम, उभयपक्षेऽपि कृत्स्नचिन्तनमपरित्याज्यमेव, अन्यथा कृत्स्नाध्ययनस्यापि परित्याज्यत्वप्रसङ्गात् । अस्मत्पक्षे तु आपातप्रतीतेः कृत्स्नविपयत्वात्तत्प्रयुक्त·मीमांसाशास्त्रश्रवणमपि कृत्स्नविपयमेवेति पूर्वोत्तरभागयोः क्रमपरिकल्पनं युक्तमेव ॥१०॥

पद०—**मीमांसाया इति** । **कतिचन**—केचन निरीश्वरमीमांसकाः । **मीमांसायाः**—'अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः' 'पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः' इत्यादिप्रमाणैश्चतुर्दशविद्यास्थानेष्वेकतमत्वेन परिगणिताया वेदास्यैकव्याख्येयव्याख्यानरूपाया मीमांसायाः । **कबन्धम्**-शिरोरहिताधःकायमात्रस्थानापन्नं कर्ममीमांसाभागमात्रम् । **जगृहुः**—मीमांसात्वेन परिगृहीतवन्तः । **अन्ये**—शाङ्करादयः । **राहुकल्पं शिरः**—राहोः शिरोमात्रतया तत्तुल्यं मीमांसाशिरस्थानापन्नं ब्रह्ममीमांसाभागमात्रम् । **जगृहुः**—पर्यगृह्णन् । नतु भागद्वयात्मकं मीमांसाशास्त्रमधीतवेदक्रमेणाध्येयमित्यङ्गीचक्रुरित्यर्थः । भागद्वयस्य शास्त्रद्वयात्मकत्वे चतुर्दशविद्यास्थानरूपपरिगणनविरोधादिकं भवतीत्यनुसन्धेयमिति भावः । **अन्तर्विरोधप्रमुपितमतिभिः**—निरीश्वरमीमांसकानां कर्मैव सकलफलसाधनम्; तदेव प्रधानमिति दुरभिमानेन कर्मकर्त्रतिरिक्तेश्वराङ्गीकारे कर्मप्राधान्यहानप्रसङ्गेन जीवातिरिक्तेश्वरपरब्रह्मकाण्डविपये **ऽन्तर्विरोधः** । शाङ्करादीनां जगन्मिथ्या, ब्रह्मैकमेव सत्यम्, ज्ञानमात्रेण बन्धनिवृत्तिः, नतु कर्मणा कश्चिदुपयोगः, अतस्तत् त्याज्यमेवेति दुरभिमानेन कर्तृकरणाद्यनेकभेदप्रतिष्ठापनेन कर्मकाण्डविपये **ऽन्तर्विरोधः** । एवं कर्मब्रह्मान्यतरविपयकान्तरप्रद्वेषेण प्रमुपिता निश्शेषविनाशिता मतिः प्रमाणस्वारस्यसद्युक्तिचिन्तनादिरूपा बुद्धिर्येषां तैस्तथाभूतैः । अत एव **भ्रमद्भिः**—सर्वमप्यर्थतत्त्वमन्यथावैपरीत्येन मन्वानैः । **बाह्यकल्पैः**—उभयेपामप्यन्ततः सर्वशून्यत्वपर्यवसानादुभयेऽपि किञ्चित्प्रच्छन्नवेदबाह्या एवेति तादृशैः । **तैः**—शाबरशाङ्करादिभिः । **किम्**—जगदानुकूल्यं किमस्ति । अत उपेक्षणीया इत्यर्थः । **स्वाध्यायाध्यायकात्स्न्ये**—**स्वाध्यायस्य** सशिरस्कवेदस्य । **अध्यायः**—अध्ययनम् । तस्य **कात्स्न्ये**—शिरःपर्यन्तयावद्वेदविपयत्वे । कृत्स्नस्यैव वेदस्याध्येयत्व इति यावत् । सिद्ध इति शेपः । स्वाध्यायोऽध्येतव्य इति विधौ स्वाध्यायशब्दस्य सशिरस्कवेदपरत्वात् एकदेशाध्ययनस्य निष्प्रमाणकत्वात् यावद्वेदाध्ययनस्यैव सर्वैरपि प्रामाणिकैरङ्गीकरणीयत्वे सिद्ध इति भावः । **स्वविधिपरविधिप्रेरणा तावदास्ताम्**— स्वाध्यायोऽध्येतव्य इत्यध्ययनविधिप्रयुक्तमध्ययनमिति कौमारिलाः । 'अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयेत्'

इत्यध्यापनविधिप्रयुक्तमित्यन्ये । एवं मतभेदेनाध्ययनविषये स्वविधिना वा प्रेरणाऽस्तु । परविधिना वा प्रेरणाऽस्तु । पक्षद्वयेऽपि नास्मदभिमतहानिरिति भावः । स्वाभिमतमेवोच्यते—कृताधियः कृत्स्नापातप्रतीतौ कृत्स्नचिन्तां किमिति न कुर्युः—आपातप्रतीतार्थनिर्णयौपयिकविचारसमर्थाः कृत्स्नस्य पूर्वोत्तरयावद्वेदभागार्थस्यापातेन संशयविपर्ययानिरासककेवलार्थावगाहनमात्रेण प्रतीतौ बुद्धौ साङ्गाध्ययनसंस्कृतप्रायदेशवासादिभिर्हेतुभिः सत्यामिति शेषः । कृत्स्नस्यापाततः प्रतिपन्नस्य पूर्वोत्तरवेदभागार्थस्य चिन्तां पूर्वोत्तरमीमांसाध्ययनरूपां कुतो न कुर्युः । कण्डूलितानि सर्वाण्यपि ह्यङ्गानि विकर्ष्यन्ते, न तु कानिचित् । व्याख्येयव्याख्यानयोः कृत्स्नाध्ययनसंसिद्धौ कथं व्याख्यानयोः पौर्वापर्यं न सिध्यतीति हृदयम् ॥ १० ॥

प्राधीतस्यैकरूपप्रयतननियतादेकरूपोपकाराद्
विद्यास्थानैक्यसिद्धौ क्रमनियतियुताकाङ्क्षयैकप्रबन्ध्यम् ।
अध्यायादिष्विवावान्तरविषयफलाद्यन्यतात्राप्यभेत्त्री
तत्तुल्यः कर्तृभेदः कलिबलकलुषैः कल्पितोऽर्थे विरोधः ॥ ११ ॥

चिन्ता०—विषयैक्यात्प्रयोजनैक्यात् प्रवृत्तिप्रकारैक्याच्च शास्त्रैक्यमस्तु नाम । अथापि क्रमो न विवक्ष्यते । नहि सूत्रभाष्यवृत्तिवार्त्तिकटीकानिबन्धनप्रकरणादीनां कश्चित्क्रमः । तत्कथं कर्मब्रह्मभागयोः क्रमपरिकॢप्तिं भवन्त आचक्षत इत्याशङ्क्याह—प्राधीतस्येति । एकरूपप्रयतननियतादेकरूपोपकाराद्विद्यास्थानैक्यसिद्धौ क्रमविशेषयुक्ताकाङ्क्षावशादेव प्रबन्धैक्यमपि परिकल्प्यते । प्रबन्धैक्यं च क्रमपरिकॢप्तिरुपपद्यते । अयमर्थः—एको वेदराशिः, आपादचूडं तद्व्याख्यानरूपं मीमांसाशास्त्रमप्येकमेव निबन्धनम् । तत्र पौर्वापर्यमन्तरेण निबन्धनैक्यस्य वक्तुमशक्यत्वात् तत्रोपयुज्यते क्रमकॢप्तिः । सूत्रभाष्यवार्त्तिकटीकानामन्योन्यसाकाङ्क्षस्वरूपत्वेऽपि वाक्यैकवाक्यत्वेन तदर्थप्रतिपादनरूपत्वेऽपि परस्पराकाङ्क्षया भागविशेषार्थप्रतिपादकत्वाभावात् क्रमावश्यम्भावो न विवक्ष्यत इति युक्तमेवैतदिति । तत्र भेदकारणमाशङ्क्य परिहरति—अध्यायादिष्विवेति । योऽयं कर्मचिन्तनं ब्रह्मचिन्तनमित्यवान्तरार्थभेद उच्यते । स तु शास्त्रभेदक एव न भवति । साधारणार्थैक्ये सति अवान्तरार्थभेदानां सर्वत्राभेदकत्वात् । अन्यथा षट्कद्विकाध्यायपादपेटिकाधिकरणानामप्यर्थभेदभिन्नानां पृथक्शास्त्रत्वं प्रसज्येत । अत्र, आदिशब्देन कारणभेदो विवक्ष्यते । 'अथातः शेषलक्षणम्' इत्यादावथातः शब्दार्थानां भिन्नत्वात् । यत्पुनरुच्यते—कर्मकाण्डे जैमिनिः कर्ता, देवताकाण्डे काशकृत्स्नः, शारीरके बादरायण इति कर्तृभेदात् शास्त्रभेदोऽस्त्विति, तदप्यसारमित्याह—तत्तुल्य इति । नह्येकस्य कार्यस्यैक एव कर्तेति नियमोऽस्ति ; बहुकालसाध्यरथगोपुरादौ पूर्वकर्तृकृतशेषे कर्त्रन्तर-

स्यापि दृष्टत्वात् । न च भिन्नानां कार्याणां भिन्ना एव कर्तार इति निर्बन्धः ; एकेनैव कर्त्रा बहूनां कार्याणां कर्तुं शक्यत्वात् । तेन शास्त्रकर्तृभेदाभेदौ शास्त्रभेदाभेदप्रयोजकौ न भवतः । दृश्यते हि पूर्वोत्तरवृत्त्योरेकनिबन्धनत्वमापस्तम्बीयसूत्रव्याख्यानयोर्धूर्तस्वामिकपर्दिनिबन्धनयोरपि । एवं पूर्वोत्तरकाण्डयोर्द्विकमप्युदाहर्तव्यम् । नन्वन्यत्सर्वं भेदकारणमास्ताम् । महदिदं भेदकारणमस्ति, यत्पुनरर्थविरोध इत्याशङ्क्य तच्च प्रतिक्षिपति—कलिलेति । शिष्याचार्यौ हि जैमिनिबादरायणौ । उभावपि सम्यङ्न्यायनिरूपणेन वेदार्थप्रकाशनप्रवृत्तौ । तयोः परस्परविरोधकथनं कथमिव संघटते । ततः कलिलकलुषा महासाहसिकाः परस्परविरोधं च कथयन्तीति तानेवाधिक्षिपामः । अत्रायं विभागः प्रवावदूकानां प्रवादेषु—उपनयनमध्ययनाङ्गम् । तच्चाध्ययनं 'स्वाध्यायोऽध्येतव्यः' इति स्वविधिप्रयुक्तम् ; अध्ययनं च स्वाध्यायसंस्कारः । स च विधिर्नियमविधिरेव । अध्ययनगृहीतेनैव स्वाध्यायेन ज्ञानं संपादयेदिति कृत्स्नयुक्तिविशेषपरिज्ञानार्थं तन्मतपरिश्रमशालिभिर्भवितव्यम् । अपरे पुनरित्थमाचक्षते—'उपनीय तु यः शिष्यं वेदमध्यापयेत्' इत्यध्यापनाङ्गमुपनयनम्, तच्चाध्ययनं परविधिप्रयुक्तं साक्षात्तच्छेषत्वश्रवणात्, अध्ययनं च नियोगार्थत्वेन प्रधानकर्म । तद्विधिरप्यप्राप्तविधिः । अध्यापनं पुनराचार्यकनियोगार्थं वृत्त्यर्थाध्यापनादन्यदेव विधीयते । नियोगानुमत्यैव मध्येऽधिकारसिद्ध्यर्थं विषयफलत्वेनार्थज्ञानमपि स्वीक्रियते ; दृष्टफलस्यापरित्याज्यत्वात् । अत उभयोरपि पक्षयोरर्थज्ञानार्थं विचारो वैध एव । वेदान्तवादिनस्तु भट्टपरिक्लृप्तिमनुमन्यन्ते । अयमत्र विशेषः—यदक्षरराशिग्रहणमात्रफलमेवाध्ययनमामनन्ति । अत्र न्यायानपि ब्रुवते । अक्षरराशिग्रहणस्याव्यवहितफलत्वात्, हुंफडादिष्वप्यनुगतत्वात्, अर्थज्ञानवादिभिरप्यपरित्याज्यत्वात्, अधीतवेदानामनधिगतवेदान्तशास्त्राणामर्थज्ञानाभावेनाश्रोत्रियत्वप्रसङ्गात्, अक्षरराशिवदर्थज्ञानस्यापि पारम्पर्येण पुरुषार्थत्वादित्यादयोऽपि हेतवो दर्शयिष्यन्ते । यत्पुनरूचुः 'अधीत्य स्नायात्' इति स्नानविधिनैव रागप्राप्तमीमांसाश्रवणस्य बाधात् युष्मत्पक्षे श्रवणमेव न जाघटीतीति, तन्न—विधिनापि स्वापेक्षितबाधस्य वक्तुमशक्यत्वात् । यथा स्नानविधिर्गुरुदक्षिणाप्रदानार्थमर्थार्जनमनुमनुते । एवं स्नानोद्वाहाग्न्याधानयागदानहोमादिसर्वविधीनां साद्गुण्येनानुष्ठानसिद्ध्यर्थं मध्ये मीमांसाश्रवणमनुमन्त्रीतेति न विस्तृणीमहे । विस्तरस्त्वस्माभिरारचितायां मीमांसापादुकाटीकायां द्रष्टव्यः । 'उपनयीत' इत्यात्मनेपदवादस्तु विस्तरभयादत्र न लिख्यते ॥ ११ ॥

पद०—प्राधीतस्येत्यादि । प्राधीतस्य—साङ्गसशिरस्कतयाऽधीतस्य वेदस्य । एकरूपप्रयतननियतात्—आपातप्रतिपन्नार्थनिर्णयौपयिकन्यायानुसन्धानार्थत्वेनैकरूपं यत्प्रयतनं प्रवृत्तिः, तन्नियतात् तदनुबद्धात् । एकरूपोपकारात्—संदिग्धवाक्यार्थव्यक्तीकरणरूपात्

'धर्मे प्रमीयमाणे तु वेदेन करणात्मना ।
इतिकर्तव्यताभागं मीमांसा पूरयिष्यति ॥'

इत्युक्तादुपकारविशेषात् । विद्यास्थानैक्यसिद्धौ—'मीमांसा न्यायविस्तरः' इत्यादिभिश्चतुर्दश विद्यास्थानेष्वन्यतमत्वेन परिगणितस्य मीमांसाख्यस्य विद्यास्थानस्यैक्यसिद्धौ सत्याम् । क्रमनियतियुताकाङ्क्षया—क्रमविशेषनियतियुक्ताकाङ्क्षावशादेव । ऐकप्रबन्ध्यम्—प्रबन्धैक्यमपि परिकल्प्यते । अवान्तरविषयफलाद्यन्यता अध्यायादिष्विवात्राप्यभेत्त्री—अवान्तरार्थतन्निर्णयरूपफलभेदः अध्यायषट्कद्विकपादपेटिकाधिकरणेषु विद्यमानोऽपि यथा प्रबन्धैक्यं न भिनत्ति, तथा ब्रह्मकाण्डेऽपि अवान्तरार्थादिभेदः प्रबन्धैक्यभेदको न भवतीत्यर्थः । नहि प्रमाणभेदादिद्वादशावान्तरार्थभेदः, तन्निर्णयरूपफलभेदो वा उपदेशातिदेशरूपावान्तरार्थतन्निर्णयरूपफलभेदो वा उत्तरकाण्डे सिद्धसाध्यरूपावान्तरार्थतन्निर्णयरूपफलभेदो वा विंशतिलक्षण्यामपि प्रतिपादमवान्तरार्थादिभेदो वा प्रतिपेटिकाधिकरणमवान्तरार्थादिभेदो व अध्यायानां षट्कयोर्द्विकयोः पादानां पेटिकानामधिकरणानां च प्रबन्धैक्यं भिनत्ति, तद्वत्कर्मब्रह्मरूपावान्तरार्थादिभेदो मीमांसारूपविद्यास्थानविभेदको न भवतीति भावः । कर्तृभेदस्तत्तुल्यः—एवमेकप्रबन्धेऽवान्तरभागयोः प्रणेतृभेदोऽपि अवान्तरार्थादिभेदवदेव प्रबन्धैक्यभेदको न भवतीत्यर्थः । दृश्यते हि धूर्तस्वामिकपर्दिभ्यामेककल्पसूत्रवृत्तिभागप्रणयनम् । एवं भोजराजलक्ष्मणसूरिप्रणीते चम्पुरामायणेऽन्यत्र च द्रष्टव्यम् । अर्थे विरोधः कलिबलकलुषैः कल्पितः—पूर्वोत्तरमीमांसयोः शिष्याचार्यभूतजैमिनिव्यासप्रणीतयोर्वस्तुतोऽविरुद्धार्थयोरपि सतोः परस्परमर्थे विरोधः कलिबलकलुषितैर्महासाहसिकैरर्वाचीनैरारोपितो नतु वास्तव इति भावः ॥ ११ ॥

**तत्तद्वैशिष्ट्यभेदाद्यदगणि भिदुरा देवता पूर्वभागे**
**संज्ञावैषम्यमात्रादपि कथमियताऽधीतयष्टव्यभङ्गः ।**
**उद्देश्याकारभेदो ह्ययमिह हविषामुक्तिभिन्ने प्रयोगे**
**दौर्बल्यं त्वक्षवेद्यान्मितिचरमतया द्रव्यतो देवतायाः ॥ १२ ॥**

चिन्ता०—अत्र शास्त्रैक्यप्रसिद्ध्यर्थं पूर्वोत्तरकाण्डयो विरोधो नास्तीत्युक्तम् । अथ मन्दप्रतिबोधनार्थं विरोधाभासानाशङ्क्य परिहरति—तत्तदिति । 'इन्द्राय वज्रिणे' इत्यादौ वज्रित्वाधिराजत्वादिविशेषणभेदाद्देवताभेदमामनन्ति तान्त्रिकाः । न केवलं विशेषणभेदादेव, इन्द्रमहेन्द्रशब्दभेदादपि भेदमाचक्षते । अतो देवतात्वमिति किञ्चिन्नियतं पारमार्थिकं नास्तीति जैमिनेर्मतम् । बादरायणस्य पुनरास्ति-

फाग्रेसरत्वं सर्वसंमतम्। तत्कथमविरोध इति कश्चिन्मन्यते, तत्रोत्तरमाह—कथमिति। अयमर्थः—शयनासनभोजनादितत्तदवस्थाविशिष्ट एक एव राजा नियताधिकारिभिः सिध्यत्तत्तदधिकारानुरूपनियतव्यवहारभाग्भवति। नैतावता राजा भिद्यते—स्वरूपत एकस्यापि तत्तत्कालोचितविशेषणव्यवहाराभ्यां वैशिष्ट्यभेदस्यावर्जनीयत्वात्। एतदेव विशदं प्रकाशयति—उद्देश्येति। हविषां प्रयोगे विशेषणनामधेयाभ्यां उक्तिभिन्ने सति उद्देश्याकारभेद एवात्र प्रतिपाद्यते, न पुनः स्वरूपभेद इति। अनेन 'अग्निवैश्वानरादिशब्दमात्रमेव देवता, अथवा तत्तल्लौकिकाग्न्याद्यर्थविशिष्टः शब्द एव देवता, न पुनरग्न्यादिरिन्द्रचन्द्राकारविशेषविशिष्टार्थविशेषो देवतात्वेन स्वीकर्तव्यः' इति वदन्तः प्रत्युक्ताः। स्यादेतत्। 'द्रव्यदेवतासाम्ये द्रव्यं बलीयः' इति साक्षाज्जैमिनिनैव द्रव्यबलीयस्त्वाभिधानात् देवता न विद्यत-इति, तदभावे ह्यनुष्ठानविरोधः स्यादिति, इत्थं वदन् स्वव्याघातमेव न जानाति। देवतास्वरूपाभावे कथं तस्या दौर्बल्यमुच्यते? सति धर्मिणि धर्माश्चिन्त्यन्त इति न्यायवादिनः। तर्हि किमत्रोच्यते। इदमत्रोच्यते। सावधान एव शृणु। दर्शपूर्णमासाविष्टीनां प्रकृतिरित्यादिवाक्यप्रसिद्धः प्रकृतिविकृतिभावस्तावत्सिद्धः। तत्र द्रव्यसाम्याद् देवतासाम्याच्च प्रकृतिविकृतिभावः परिकल्प्यते तान्त्रिकैः। इत्थं सति कस्य कर्मणः का प्रकृतिः, का विकृतिरिति चिन्तायां क्वचिद् द्रव्यसाम्यं दृष्टम्, अन्यत्र देवतासाम्यम्, एवं च सति द्रव्यसाम्याद् देवतासाम्याद्वा प्रकृतिविकृतिभावेनानुष्ठानमिति विशये देवताया उद्देश्यत्वेन प्राधान्यात् तत्साम्यादनुष्ठानमिति पूर्वपक्षः। राद्धान्तस्तु द्रव्यस्य प्रत्यक्षत्वात् देवताया आगमैकसमधिगम्यत्वात् प्रथमप्रमाणप्रतिपन्नद्रव्यस्य प्रतीतिप्राबल्यात् तत्साम्येनैवानुष्ठानमिति। एवं स्वरूपं प्रत्यक्षम्, फलसाधनत्वमेवाप्रत्यक्षं द्रव्यस्य। देवतायाः पुनः स्वरूपं देवतात्वं चाप्रत्यक्षमिति प्रातीतिकमेवेदं दौर्बल्यं न स्वरूपाभावनिबन्धनमिति, तदिदमाह—दौर्बल्यमिति ॥ १२ ॥

पद०—तत्तद्वैशिष्ट्यभेदादित्यादि। पूर्वभागे-पूर्वकाण्डे। तत्तद्वैशिष्ट्यभेदात्—'इन्द्राय राज्ञे, इन्द्रायाधिराजाय' इत्यादिषु वैशिष्ट्यं विशिष्टस्य भावो विशेषणं राजत्वाधिराजत्वादिरूपं तस्य भेदात्। देवता—उद्देश्यदेवता। भिदुरा अगणि इति यत्—भिन्ना निर्णीतेति यत्। किंच। संज्ञावैषम्यमात्रादपि-इन्द्रमहेन्द्रादिशब्दभेदमात्रादपि। देवता भिदुरा अगणीति यत्। इयता-एतावद्वचनमात्रेण। अधीतयष्टव्यभङ्गः कथम्—विधिवाक्याधीतहविरुद्देश्यदेवतानिरासोऽस्तीति कथमुच्यते। हविषां प्रयोगे—हविःप्रदाने। उक्तिभिन्ने-विशेषणभेदनामधेयभेदोक्तिभ्यां विभक्ते सति। इहायमुद्देश्याकारभेदो हि—उद्देश्याकारभेद एव ह्यत्र प्रतिपाद्यते। न पुनः स्वरूपभेद इत्यर्थः। 'द्रव्यदेवतासाम्ये द्रव्यं बलीयः' इति जैमिनिसूत्रे प्रतिपादितं देवताया दौर्बल्यं तु अक्षवेद्याद् द्रव्यतः—विलम्बित शास्त्रगम्यहविष्ट्वादपि,

अविलम्बितप्रत्यक्षगम्यस्वरूपाद् द्रव्यात् । मितिचरमतया—विलम्बितशास्त्रगम्यस्वरूपश्रेयस्साधनत्वादिधर्मोभयकत्वेन चरमबुद्धिविषयतया दृश्यते । प्रातीतिकमेव दौर्बल्यम्, न तु स्वरूपाभावनिबन्धनमिति-भावः ॥ १२ ॥

जैमिन्युक्तं विरुद्धं यदिह बहुविधं दर्शितं सूत्रकारै-
स्तस्मादैत्रैकशास्त्र्यं हठकृतमिति न ब्रह्मसंवाददार्ढ्यात् ।
तत्तत्तात्पर्यभेदैर्विहतिपरिहृतिः काण्डवत्काण्डयोः स्याद्
बाह्यक्षेपार्थगूढाशयवचनभवभ्रान्तिशान्त्यादिसिद्धेः ॥ १३ ॥

चिन्ता०—एवं विरोधाभासं निराकृत्य स्फुटमपि किञ्चिद्विरोधान्तरमाशङ्क्य परिहरति- जैमिन्युक्तमिति । बादरिजैमिनिकाशकृत्स्नप्रभृतयो बहवो हि शिष्या बादरायणस्य । तत्रतत्र स्वाभिप्रायविरुद्धान् शिष्याभिप्रायान् प्रतिक्षिपन् जैमिनीयमपि पक्षं प्रतिक्षिपति भगवान् बादरायणः । कथं जैमिनिबादरायणयोरविरोधः ? तस्मात् हठकृतमेवैकशास्त्र्यमिति, तत्प्रतिक्षिपति–नेति । तत्र हेतुमाह–ब्रह्मेति । 'परं जैमिनिर्मुख्यत्वात्' इत्यादौ हि जैमिनेः शारीरकशास्त्रप्रधानभूतब्रह्मसंवादं दृढमेव प्राचीकशदाचार्यः । तस्माद् विरोधाभासप्रतिपत्त्या न शास्त्रभेदः शङ्कनीयः । का गतिस्तर्हि विरोधाभासप्रतिपत्तेरितिचेन् तत्रोत्तरमाह–तदित्यादिना । तात्पर्ये हि शब्दः प्रमाणम् । तेन तत्र तत्र सूत्रेषु तात्पर्यविशेषेण तद्विरोधः परिहरणीयः । अत्र प्रतिबन्दीमाह—काण्डवदिति । यथा–एकस्मिन्काण्डे षट्कयोरध्याययोः पादयोर्वा परस्परविरोधाभासप्रतिपत्तौ पण्डितास्तात्पर्यभेदाद् विरोधं परिहरन्ति, एवमत्रापीति । अस्तु तत्रापि विरोधपरिहारः, अथाप्यत्यन्तविरोधे सिद्धे देवताधिकरणादौ कः परिहार इत्याशङ्क्योक्तमेव तात्पर्यविशेषं तत्रापि योजयति—बाह्येति । एवं किलाहुर्बाह्याः—'वाक्यत्वात्सकर्तृको वेदः, कर्तॄणां च भ्रमविप्रलम्भप्रमादाशक्त्यादिकं भवत्येव, तस्माद्वेदस्याप्रामाण्यम्, न च देवता नास्तीति वक्तुं शक्यते 'वायव्यं श्वेतमालभेत' इत्यादौ कर्माराध्याया देवताया एवातिथिवत्प्राधान्येन कथनात्' इति, तत्प्रतिक्षेपार्थं कर्मप्राधान्यमाह देवताधिकरणे, न पुनर्देवतास्वरूपं प्रतिसञ्चष्टे । इयं किल देवताधिकरणे पञ्चसूत्री–'देवता वा प्रयोजयेदतिथिवत् । भोजनस्य तदर्थत्वात् । अर्थवत्त्वाच्च ततश्च तेन सम्बन्धः' इति पूर्वपक्षसूत्रत्रयम् । 'अपिवा शब्दपूर्वत्वाद् यज्ञकर्म प्रधानं स्यात् । गुणत्वे देवताश्रुतिः' इति सिद्धान्तसूत्रयुगलमपि । तत्रेदं तात्पर्यम्—अर्थप्राधान्यस्य देवतायां विद्यमानत्वेऽपि शब्दप्राधान्यं यज्ञकर्मण्येवेति श्रुतिमूलानुष्ठानं

यज्ञकर्म प्राधान्येनैव कर्तव्यमिति। अत्र देवताप्रतिक्षेपमेव मन्दः कश्चिन्मनुते, तत्प्रतिक्षेपार्थं तत्रतत्र जैमिनिपक्षं प्रतिक्षिपति भगवान् बादरायणः। तदुक्तं वेदार्थसंग्रहे 'अश्रुतवेदान्तानां कर्मण्यश्रद्धा मा भूदिति देवताधिकरणेऽतिवादाः कृताः।' इति। अतिवादाः—अन्यपरोक्तयः। न जैमिनिर्देवतां निराचकार, नापि बादरायणस्तं प्रतिक्षिपतीति भावः॥ १२॥

पद०—जैमिन्युक्तमित्यादि। इह—शारीरकशास्त्रे। सूत्रकारैः—साक्षात्सूत्रप्रणेतृभिरेव। जैमिन्युक्तं बहुविधं विरुद्धं दर्शितम्—'त्राक्षेण जैमिनिरुपन्यासादिभ्यः' 'भावं जैमिनिर्विकल्पामननात्' 'शेषत्वात्पुरुषार्थवादो यथान्येष्विति जैमिनिः' 'धर्मं जैमिनिरत एव' इत्यादिषु जैमिन्युक्तं बहुविधमर्थजातं विरुद्धमिति प्रदर्शितम्। तस्मात् कारणात्। अत्र—भागद्वये। ऐकशास्त्र्यम्—एकशास्त्रात्मकत्वम्। हठकृतम्—हठात्कृतम्, निरस्तमित्यर्थः। इति न—एवं वक्तुं न युक्तम्। ब्रह्मसंवाददार्ढ्यात्—तैरेव सूत्रकारैः 'परं जैमिनिर्मुख्यत्वात्' इतिसूत्रेण जैमिनेरपि शारीरकशास्त्रप्रधानार्थभूतब्रह्माभ्युपगमदार्ढ्यस्य प्रदर्शितत्वादित्यर्थः। तर्हि विरोधाभासप्रतिपत्तेः का गतिरितिचेत् तत्राह—तत्तत्तात्पर्यभेदैर्विहतिपरिहृतिः काण्डवत्काण्डयोः स्यात्—तत्तद्विषयसमुचिततात्पर्यभेदकल्पनैरापातप्रतीतिविरोधपरिहारो यथैकस्मिन्नेव काण्डे क्रियते, तथा द्वयोरपि काण्डयोर्विरोधाभासपरिहारः संभाव्यते। न तावता शास्त्रैक्यं भेत्तुं प्रयतितव्यम्। अतिस्फुटविरोधे देवताधिकरणादौ कथं परिहार इत्यत्राह—बाह्यक्षेपार्थगूढाशयवचनभवद्भ्रान्तिशान्त्यादिसिद्धेः—प्रत्यक्षैकप्रमाणका हि बाह्याः स्वदर्शनरीत्याऽप्रामाणिकदेवताराधनरूपतया तत्प्रधानकं वेदविहितं कर्म हेयमिति वदन्ति। एवंवदतां वेदबाह्यानां क्षेपो निरासः, अर्थः प्रयोजनं यस्य तादृशम्, अत एव गूढाशयं छादिताकूतं यत् जैमिनेर्देवताधिकरणे 'अपि वा शब्दपूर्वत्वाद्यज्ञकर्म प्रधानं स्यात्' इति देवतापेक्षया कर्मप्राधान्यपरं वचनं, तेन भवन्त्याः—उत्पद्यमानायाः। भ्रान्त्याः—जैमिनिनैव देवतानिरासात् देवता नास्तीत्येवंरूपमूढजनभ्रमस्य। शान्त्यादिसिद्ध्यर्थत्वाद् बादरायणेन जैमिनिमतनिरासस्येत्यर्थः। 'मध्वादिष्वसंभवादनधिकारं जैमिनिः' इत्यादिना स्फुटदेवताङ्गीकार एव जैमिनि र्बाह्यनिरासाय कर्मप्राधान्यं प्रतिपादयाञ्चकार। बादरायणस्तु जैमिन्याशयमविजानतामन्यपरजैमिनिवचनेन देवतानिरासबुद्धिर्मा भूदिति शारीरके देवताधिकरणे जैमिनिपक्षं निराचकार। न चैतावता तयोरान्तरविरोधसंभव इति॥ १२॥

आक्षिप्य स्थापनीयाः कतिचिदिह नयाः पूर्वकाण्डप्रणीताः
केचिद् व्युत्पादनीयाः क्वचिदपवदनं ख्याप्यमौत्सर्गिकस्य ।
इत्थं सर्वत्र चिन्ताक्रम इति समतां वीक्ष्य मध्यस्थदृष्ट्या
शास्त्रैक्ये पौनरुक्त्यप्रभृतिपरिहृतिः सावधानैर्विभाव्या ॥१४॥

चिन्ता०—अत्रान्यः प्राह 'जैमिनिबादरायणयोर्विरुद्धभाषणं माभूत्-शिष्याचार्यभावात्, तथापि पौनरुक्त्यं दृश्यते । यथा पूर्वकाण्डे श्रुतिविरोधे स्मृतिरनपेक्षणीयेत्युच्यते । तथा ब्रह्मकाण्डेऽपि 'स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात्' इति । अपुनरुक्तमेव हि वाक्यजातं शास्त्रमित्युच्यते । तस्मात् कथमिव शास्त्रैक्यम् । एवं निबन्धनैक्यमपि निर्निबन्धनमेव, तदभावे कुतः क्रमः । कुतोवा कर्मविचारस्य पूर्ववृत्तत्वम्' इति । एतत्सर्वं परिहरति—आक्षिप्येति । कर्मकाण्डस्मृत्यधिकरणेन श्रुतिविरोधात् स्मृतिरनपेक्षणीयेति सिद्धेऽपि ब्रह्मकाण्डे पुनस्तदेव कुतश्चित्कारणविशेषादाक्षिप्य समाधीयत इति न पौनरुक्त्यम् । अस्त्वपौनरुक्त्यम्, तथाप्यपूर्वार्थत्वाभावादनपेक्षणीयत्वमुत्तरकाण्डस्येत्याशङ्कयाह—केचिदिति । 'यथाक्रतुरस्मिन्लोके पुरुषो भवति तथेतः प्रेत्य भवति' इति तत्क्रतुन्यायो ह्यत्र व्युत्पाद्यते । एवमन्यदपि यथोचितं द्रष्टव्यम् । एवं तर्हि पूर्वकाण्डोक्तार्थस्य प्रधानभूतस्य प्रतिक्षेप एवोत्तरकाण्डे प्राधान्येन क्रियते । अर्थवादाधिकरणार्थ एव हि कर्ममीमांसासारार्थः । एवं समन्वयाधिकरणार्थ एव हि ब्रह्ममीमांसासारार्थः । तयोः परस्परविरोधे सति कथमिव युष्माभिर्विरोधो नास्तीति भण्यत इत्याशङ्कयाह—क्वचिदपवदनं ख्याप्यमौत्सर्गिकस्येति । उत्सर्गापवादन्यायेनापि शास्त्रे प्रायेण विरोधं परिहरन्ति तान्त्रिकाः । अत्राप्यर्थवादसामान्यस्य विधिशेषतया पुरुषार्थपर्यवसायित्वमित्युत्सर्गः । निरतिशयानन्दरूपब्रह्मविषयार्थवादानां स्वतः पुरुषार्थरूपब्रह्मप्रतिपादकत्वाद् विध्येकवाक्यत्वमन्तरेणापि पुरुषार्थपर्यवसायित्वमित्यपवादः । एवं सर्वत्रापि शास्त्रे पौनरुक्त्यादिपरिहारचिन्ताक्रम इति । एककाण्डान्तर्गतेषु बहुष्वधिकरणेषु विरोधः परिह्रियत इति तद्भिन्नयोरपि काण्डयोः पौनरुक्त्यादिपरिहृतिस्तुल्यन्यायत्वानुसन्धानेन पक्षपातं विहाय मध्यस्थदृष्ट्या सावधानेन सञ्चिन्तनीयेति ॥ १४ ॥

पद०—आक्षिप्येत्यादि । इह—शारीरककाण्डे । पूर्वकाण्डप्रणीताः कतिचिन्नयाः—कर्मकाण्डे स्मृत्यधिकरणादिव्युत्पादिता श्रुतिविरुद्धार्थस्मृत्यनादरणीयतादयो न्यायाः । आक्षिप्य स्थापनीयाः—'स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात्' इत्याद्यधिकरणेषु कुतश्चित्कारणविशेषादाक्षिप्य स्थापनीयाः । केचित्—केचन तत्क्रतुन्यायादयः । व्युत्पादनीयाः—अत्रैव समर्थनीयाः । क्वचित्—समन्वयाधिकरणादौ । औत्सर्गिकस्य—सामान्येन प्रवृत्तस्य

पूर्वकाण्डार्थवादाधिकरणसिद्धस्यार्थवादानां विध्येकवाक्यत्वेन प्रामाण्यमित्यस्यार्थस्य । अपवदनं व्याप्यम्—निरतिशयानन्दरूपब्रह्मविषयार्थवादानां स्वतःपुरुषार्थभूतब्रह्मप्रतिपादनसामर्थ्याद् विध्येकवाक्यत्वमन्तरेणापि पुरुषार्थपर्यवसायित्वमिति विशेषधर्मपुरस्कारेण निषेधरूपोऽपवादः प्रतिपाद्यः । इत्थं सर्वत्र चिन्ताक्रम इति समतां वीक्ष्य—एवमेवैककाण्डाध्यायेष्वपि न्यायप्रवृत्तिप्रकार इति तद्रीतेर्भिन्नकाण्डयोरपि तुल्यतां प्रसमीक्ष्य । मध्यस्थदृष्ट्या—क्वचित् पक्षपातं विना । शास्त्रैक्ये—त्रिकाण्ड्या मीमांसाया एकशास्त्रात्मकत्वे विषये । पौनरुक्त्यप्रभृतिपरिहृतिः—आपातप्रतीतपौनरुक्त्यादिदोषपरिहारः । सावधानैर्विभाव्या—अवहितबुद्धिभिर्विचिन्त्यतामिति ॥ १४ ॥

वृत्तिग्रन्थे तु जैमिन्युपरचिततया षोडशाध्याय्युपात्ता
सङ्कर्षः काशकृत्स्नप्रभव इति कथं तत्त्वरत्नाकरोक्तिः ।
अत्र ब्रूमः सदुक्तौ न वयमिह मुधा बाधितुं किञ्चिदर्हा-
निर्वाहस्तूपचारात् क्वचिदिति घटते ह्येकतात्पर्ययोगः ॥ १५ ॥

चिन्ता०—एवं जैमिनिबादरायणवाक्ययोर्विरोधं परिहृत्य तत्प्रसङ्गाद् व्याख्यातृवाक्ययोरपि प्रमाणभूतयोर्विरोधाभासमवश्यं समाधेयत्वात् समाधत्ते—वृत्तीति । शङ्कते कश्चिद्विरोधम् । वृत्तिग्रन्थे हि जैमिन्युपरचिततया षोडशाध्याय्युपात्ता । सङ्कर्षः—सङ्कर्षकाण्डः, भट्टपराशरास्तु तत्त्वरत्नाकराख्ये शारीरकशास्त्रप्रकरणे काशकृत्स्नप्रभव इत्युक्तवन्तः । तत्कथमिदं संघटेतेति । अत्रोत्तरमाह—अत्रेति । द्वयोरपि ग्रन्थकर्त्रोर्विश्वसनीयत्वात् एकस्यापि वाक्ये न वयमप्रामाण्यं ब्रूमः, अपितु तात्पर्यभेदेनोभयत्रापि प्रामाण्यम् । तथा हि तत्त्वरत्नाकरवाक्यस्य मुख्यत्वेन सङ्कर्षकाण्डस्य काशकृत्स्नप्रभवत्वे सिद्धे वृत्तिकारवाक्यं जैमिनेर्द्वादशलक्षणीकर्तृत्वात् प्राचुर्यादौपचारिकम् । वृत्तिकारवाक्यानुसारेण जैमिनेः षोडशलक्षणीकर्तृत्वे प्रामाणिके तत्त्वरत्नाकरवाक्यं काशकृत्स्नस्य देवताकाण्डे विशेषेण प्रवर्तकत्वपरमिति सिद्ध एव समाधिरिति ॥ १५ ॥

पद०—वृत्तिग्रन्थे त्विति । वृत्तिग्रन्थे तु—बोधायनप्रणीतब्रह्मकाण्डवृत्तिग्रन्थे । षोडशाध्यायी—कर्मकाण्डस्था द्वादशाध्यायाः सङ्कर्षकाण्डस्थाश्चत्वारोऽध्यायाश्चेति षोडशाध्यायात्मा ग्रन्थः । जैमिन्युपरचिततयोपात्ता—'संहितमेतच्छारीरकं जैमिनीयेन षोडशलक्षणेनेति शास्त्रैकत्वसिद्धिः' इत्यादौ जैमिनीयेनेत्युक्त्या जैमिनिप्रणीततयोपात्ता । सङ्कर्षः काशकृत्स्नप्रभव इति तत्त्वरत्नाकरोक्तिः कथम्—

'षोडशाध्यायात्मके शास्त्रे द्वादशाध्यायेभ्य उपरि चत्वारोऽध्यायाः सङ्कर्षसंज्ञाः । सोऽयं सङ्कर्षाख्यः प्रबन्धः काशकृत्स्नाख्यमहर्षिप्रणीतः' इति भट्टपराशरोक्ततत्त्वरत्नाकराख्यग्रन्थस्थं वचनं कथमुपपद्यते । एकस्यैव सङ्कर्षाख्यस्य ग्रन्थस्य जैमिनीयत्वं काशकृत्स्नप्रणीतत्वञ्च कथमुपपन्नमिति शङ्का । अत्र ब्रूमः—अस्मिन्नाक्षेपे प्रत्युत्तरं वदामः । इह—सङ्कर्षाख्यग्रन्थविषये । वयम्–उभयोरपि विश्वासशालिनो वयम् । सदुक्तौ—सतोः प्रामाणिकतमयोर्बोधायनभट्टपराशरयोर्वचने । किञ्चित्—बोधायनवचनं वा भट्टपराशरवचनं वा किमपि । मुधा—निर्वाहसंभवेऽपि दुराग्रहान्निरर्थकतयैव । बाधितुम्—अन्यतरवचनेनान्यतरवचनं वा विरोद्धुम् । नार्हाः—न योग्याः । निर्वाहस्तु—द्वयोरपि वचनयोः सार्थक्यसम्पादनप्रकारस्तु । क्वचिदुपचारादेकतात्पर्ययोग इति घटते हि—जैमिनीयपदे वा काशकृत्स्नप्रभवपदे वा एकस्मिन्पदे प्रवक्तृपरत्वेनोपचारवृत्त्या तदितरपदे प्रणेतृपरत्वेन मुख्यवृत्त्या चाविरुद्धतात्पर्यसंभव इति युज्यते हि । जैमिनीयपदस्य जैमिनिप्रणेतृक इत्यर्थं परिकल्प्य काशकृत्स्नप्रभवपदस्य काशकृत्स्नप्रवक्तृपरत्वं परिकल्प्य पदद्वयस्य सङ्कर्षे योजनायां जैमिनिप्रणेतृकः काशकृत्स्नप्रवक्तृकः सङ्कर्ष इत्यविरुद्धतात्पर्यसंभवः । यद्वा जैमिनीयपदस्य जैमिनिप्रवक्तृकइत्यौपचारिकार्थकत्वे काशकृत्स्नप्रभवपदस्य प्रणेतृपरतया मुख्यार्थत्वयोगेन सङ्कर्षः काशकृत्स्नप्रणेतृको जैमिनिप्रणेतृकद्वादशाध्यायसंबन्धाज्जैमिनिप्रणीतप्राय इत्यविरुद्धार्थतात्पर्यसंभवः । अत उभथापि निर्वाहो घटत इति भावः ॥ १५ ॥

सौत्री सङ्ख्या शुभाशी रधिकृतिगणना चिन्मयी ब्रह्मकाण्डे
तादर्थ्येऽनन्तरत्वेऽप्यधिकरणभिदा नाल्पसारैः प्रकल्प्या ।
अक्षोर्म्याशाऽहिकाष्ठाद्विरदमुनिवसूर्म्यद्रितत्त्वातिशक्व-
र्यक्षैरक्षैः प्रयाजैरिह भवति रसैः पादनीतिप्रबन्धः ॥ १६ ॥

चिन्ता०—एवं 'अथातो ब्रह्मजिज्ञासा' इति सूत्रानुसारेण कर्मविचारानन्तरं ब्रह्मविचारस्य कर्तव्यत्वे परिपन्थितया प्रसक्तानर्थान् दिङ्मात्रेण प्रतिक्षिप्य क्रियमाणशास्त्रसूत्राधिकरणपादविभागेषु न्यूनाधिकभावं शिष्यानुग्रहार्थं प्रतिक्षिपति–सौत्रीति । शुभाशीः सूत्राणां कटपयादिक्रमात् संख्यापरिकल्पना । पञ्चचत्वारिंशदधिका पञ्चशतीति सूत्राणां संख्याप्रमाणम् । अधिकरणसंख्या तु चिन्मयी षट्पञ्चाशदधिकं शतमित्यर्थः । एतत्तु परपक्षवादिभिः परिकल्पितापन्यायमूलाधिकसङ्ख्यानिराकरणार्थमुच्यते । तेषां परिकल्पनाया अपन्यायमूलत्वमेव प्रकटयति–तादर्थ्य इत्यादिना । उत्तरसूत्रस्य पूर्वाधिकरणशेषत्वे समनन्तरभावित्वेऽपि अधिकरणनिमित्तप्रयोजनाल्पत्वे सति, अधिकरणभेदो न कल्पनीय इति तान्त्रिकाः

प्राहुः । तेन गुहाधिकरणमित्यादिकं परवादिपरिकल्पितमपहसितं भवति । अथ संख्यातानामधिकरणानां प्रतिपादं विभागं दर्शयति—अक्षेत्यादिना । अत्र लोकप्रसिद्धानुक्रमात् संख्यानिर्देशः । अक्षाण्येकादश, ऊर्मयः षट् , आशा दश, अहयः पुनरष्टौ, काष्ठा दश, द्विरदाश्चाष्टौ, मुनयः सप्त, वसवोऽप्यष्टौ, षडूर्मयः । अद्रयोऽष्टौ, तत्त्वानि षड्विंशतिसंख्याकानि, अतिशक्वरी पञ्चदश, अक्षाण्येकादश, पुनरप्यक्षाण्येकादश पञ्च प्रयाजाः, रसाः षट् इति सुप्रसिद्धमेतत् । अनया प्रक्रियया पादनीतिप्रबन्धः—पादानां नीतयः प्रतिपादमधिकरणानि निबध्यन्त इति ॥ १६ ॥

पद०—सौत्रीत्यादि । ब्रह्मकाण्डे सौत्री—ब्रह्मकाण्डसूत्रसंबन्धिनी । संख्या शुभाशीः—कादयो नव, टादयो नव; पादयः पञ्च, यादयोऽष्टाविति संख्यानप्रकारः । एकस्थानं प्रथमम् , दशस्थानं द्वितीयम्, शतस्थानं तृतीयम् । एवं च यादिषु शकारस्य पञ्चमत्वादेकस्थाने शतस्थाने च पञ्चत्वसंख्यानिवेशः । पादिषु भकारस्य चतुर्थतया दशस्थाने चतुष्ट्वसंख्यानिवेशः । तथा च पञ्चचत्वारिंशदुत्तरपञ्चशतरूपा सूत्रसंख्येत्यर्थः । शुभाशीरित्यानुपूर्वी मङ्गलार्था । अधिकृतिगणना—ब्रह्मकाण्डस्थाधिकरणसंख्या । चिन्मयी—कादिषु चकारः षष्ठः । अत एकस्थाने षट्त्वसंख्यानिवेशः । मकारस्तु पादिषु पञ्चमः, एवं च दशस्थाने पञ्चत्वसंख्यानिवेशः । यकारस्तु यादिषु प्रथम इति शतस्थाने एकत्वसंख्यानिवेशः । तथा च षट्पञ्चाशदुत्तरशतरूपाऽधिकरणसंख्येत्यर्थः । अत्रापि चिन्मयीत्यभ्यर्हितार्थत्वाख्यानुपूर्वीविशेषः । तादर्थ्ये—पूर्वाधिकरणशेषत्वे । अनन्तरत्वेऽपि—समनन्तरत्वे सत्यपि । अल्पसारैः—पृथगधिकरणनिमित्तप्रयोजनाल्पत्वे सति अधिकरणभिदा पूर्वाधिकरणा दुत्तरसूत्रस्याधिकरणान्तरता । न प्रकल्प्या—न कल्पनीया । एतेन 'अत्ता चराचरग्रहणात्' इत्यधिकरणे 'गुहां प्रविष्टौ' इत्यादिसूत्रस्य परपक्षिभिः पृथगधिकरणत्वकल्पना उपरितनसूत्रेषु च तथाकल्पनाऽपन्यायमूलेति भावः । अक्षोर्म्याशाहिकाष्ठाद्विरदमुनिवसूर्म्यद्रितत्त्वातिशक्वर्यक्षैरक्षैः प्रयाजैरसैरिह पादनीतिप्रबन्धो भवति—अक्षाण्येकादश, इन्द्रियाणामेकादशत्वात् । ऊर्मयः—कामक्रोधलोभमोहमदमात्सर्यरूपाः षट् । आशाः प्राच्यादयोऽष्टावधश्चोर्ध्वञ्चेति दश । अहयः—तक्षकगुलिकादयो महासर्पा अष्टौ । काष्ठा दिशः, ताः पूर्ववद्दश । द्विरदाश्चाष्टावैरावतादयः सुप्रतीकान्ता दिग्गजाः । मुनयः—ऋषयोऽत्र्यादयः प्रसिद्धाः सप्त । वसवश्चाष्टौ वसव इत्यादिप्रसिद्धा अष्टौ । ऊर्मयः पूर्ववत् षट् । अद्रयो हिमवदादयो मेरुणा सहाष्टौ । तत्त्वानि 'अष्टौ प्रकृतयः षोडश विकाराः पञ्चविंश आत्मा भवति' 'तं षड्विंशकम्' इत्यादिषु प्रसिद्धानि अचिच्चिदीश्वररूपाणि तत्त्वानि षड्विंशतिसंख्याकानि । अतिशक्वरी 'उक्तात्युक्ता तथा मध्या प्रतिष्ठान्या सुपूर्विका' इत्यादि-

च्छन्दस्सु पञ्चदशस्थाननिवेशात् अतिशक्वरीति पञ्चदशसंख्योच्यते। अक्षाणि इन्द्रियाणि पूर्ववदेवैकादश। पुनरप्यक्षाणि—इन्द्रियाण्येकादश। प्रयाजाः पञ्च। रसा मधुरादयः षट्। एकैकपादाधिकरणानामेकैकसंख्यानिवेशक्रमेणाक्षादिरसान्तसंख्याभिः शारीरकस्थषोडशपादानामधिकरणनिबन्धनं कृतमित्यर्थः ॥ १६ ॥

शास्त्रं त्वेतत्समन्वित्यविहतिकरणप्राप्तिचिन्ताप्रधानै-
रध्यायैः षोडशाङ्घ्रि द्विकयुगभिदुरं षट्कभेदादिनीत्या।
तत्राद्यं वक्ति सिद्धं विषयमपि परं तत्प्रतिद्वन्द्वियुग्मं
स्वप्राप्तेः साधनं च स्वयमिति हि परं ब्रह्म तत्रापि चिन्त्यम् ॥ १७ ॥

चिन्ता०—एवं पादाधिकरणविभागमुक्त्वाऽध्यायानां द्विकयोरपि विभागमर्थविभागेन प्रदर्शयन् उत्तरस्यापि द्विकस्य सिद्धोपायोपेयरूपब्रह्मप्रतिपादनपरत्वाद् ब्रह्मजिज्ञासारूपत्वं सिद्धमित्याह—शास्त्रमिति। अनेन शारीरकशास्त्रेण समन्वयाविरोधसाधनफलरूपाश्चतुर्ष्वध्यायेषु चत्वारोऽर्थाः प्रधानतया प्रतिपाद्यन्ते, एकैकस्याध्यायस्य पादचतुष्टयात्मकत्वात् षोडशाङ्घ्रित्वसिद्धिः। न केवलमध्यायभेदात्पादभेदाच्च भेदः, द्विकभेदादपि भेदोऽस्तीत्याह—द्विकेति। तत्र दृष्टान्तमाह—षट्केति। कर्मकाण्डे पूर्वोत्तरषट्कभेदः सुप्रसिद्धः। आदिशब्देन प्रथमकाण्डत्रिपादीन्यूहनपूर्वकाण्डप्रसिद्धभेदोऽप्युपादीयते। एवं सर्वत्रापि शास्त्रे तत्रतत्रोक्तविभागो दृष्टान्तीकरणीयः। अत्र द्विकभेदनिमित्तमर्थभेदमाह—तत्रेति। पूर्वद्विकं सिद्धविषयनिरूपणपरम्—ब्रह्मणः सिद्धत्वात्, उत्तरद्विकप्रतिपाद्योपासनप्राप्त्योर्विषयत्वाच्च ब्रह्मणः। उत्तरद्विकं साध्यविषयनिरूपणपरम्—उपासनप्राप्त्योः पुरुषसाध्यत्वात्, परब्रह्मविषयत्वेन विषयित्वाच्च। ननु कथमुपासनप्राप्तिप्रतिपादनपरस्योत्तरद्विकस्य ब्रह्मजिज्ञासारूपत्वम्? कथं वा ब्रह्मजिज्ञासारूपशास्त्रे सङ्गतिरित्याशङ्क्याह—स्वप्राप्तेरिति। द्विविधं हि साधनं प्रधानाप्रधानभावेन, ब्रह्म तदुपासनं चेति। एवं साध्यमपि द्विविधं ब्रह्म तत्प्राप्तिश्चेति। तथाच ब्रह्मणः प्राधान्येन प्राप्यप्रापकभावात् तच्चिन्तनरूपमुत्तरद्विकमपि तज्जिज्ञासायामेव प्राधान्येन निविशत इति न सङ्कटं किञ्चित्। उक्तं हि तान्त्रिकैरपि 'स स्वेनैव फलप्रदः फलमपि स्वेनैव नारायणः' इति ॥ १७ ॥

पद०—शास्त्रं त्वेतदित्यादि। एतत् शास्त्रम्—शारीरकाख्यं शास्त्रम्। तुः पादपूरणे। समन्वित्यविहतिकरणप्राप्तिचिन्ताप्रधानैः—समन्वयाविरोधसाधनफलविचारप्रधानैः। अध्यायैः—

चतुर्भिरध्यायैः । षोडशाङ्घ्रि—षोडशाङ्घ्रयः पादा यस्य तत् षोडशाङ्घ्रि । प्रत्यध्यायं चत्वारः पादा इत्यध्यायचतुष्टयात्मकस्य शास्त्रस्य षोडश पादाइत्यर्थः । षट्कभेदादिनीत्या—कर्मकाण्ड उपदेश-षट्कमतिदेशषट्कमिति पूर्वोत्तरषट्कयोर्यथा भेदः, तथेत्यर्थः । आदिशब्देन काण्डद्वयसिद्धपादाध्यायादिभेदो विवक्षितः । द्विकयुगभिदुरम्—विषयद्विकं विषयिद्विकं साध्यद्विकमित्युक्तयोः पूर्वोत्तरद्विकयोर्युगं तेन च भिदुरम्—अवान्तरभेदवद् भवति, द्विकद्वयं च वर्तत इत्यर्थः । तत्र—द्विकद्वये । आद्यम्—प्राथमिकं द्विकम् । सिद्धं विषयं वक्ति—सिद्धरूपं विषयरूपं च ब्रह्म प्राधान्येन प्रतिपादयति । परमपि—उत्तरद्विकमपि । तत्प्रतिद्वन्द्वियुग्मम्—तयोः सिद्धविषययो यौ प्रतिद्वन्द्विनौ प्रतिकोटिभूतावुपासनप्राप्तिरूपौ साध्यविषयिणौ तयोर्युग्मं द्वयम् । वक्तीत्यनुकर्षः । प्राधान्येन प्रतिपादयतीत्यर्थः । तथा च पूर्वद्विकं सिद्धविषयपरम्, उत्तरद्विकं साध्यविषयिपरमित्यर्थः । तत्रापि—उत्तर द्विकेऽपि । स्वप्राप्तेः साधनं च स्वयमिति—स्वप्राप्तिरूपमोक्षस्य स्वयमेव साधनमिति, उपासनाविषयत्वेन सिद्धप्रापकतया, प्राप्तिरूपानुभवविषयत्वेन सिद्धप्राप्यतया चेत्यर्थः । परं ब्रह्म—पूर्वद्विकप्रधानप्रतिपाद्यं परं ब्रह्मैव । अप्राधान्येन चिन्त्यं हि—विचार्यम् । तथा च, उत्तरद्विकस्योपासनप्राप्तिप्रधानत्वेऽपि, अप्राधान्येन ब्रह्मप्रतिपादनाप्रहाणात् सर्वस्यापि शास्त्रस्य ब्रह्मविचारात्मकत्वं नापैतीति भावः ॥ १७ ॥

तत्राद्येऽत्यन्तगूढाविशदविशदसुस्पष्टजीवादिवाचः
पश्चात्स्मृत्यादिकै रक्षति रहितहतिः कार्यताऽक्षेन्द्रियादेः ।
दोषादोषौ तृतीये भवभृदितरयोर्भक्तिरङ्गानि चाथो-
पासाऽऽरोहप्रभावोत्क्रमसरणिफलान्यन्तिमे चिन्तितानि ॥ १८

चिन्ता०—एवमध्यायद्विकयोरर्थविभागमुक्त्वा पादानामर्थभेदमाह—तत्रेति । शारीरकाद्यपादे तावत् अस्पष्टतरजीवादिलिङ्गकवाचश्चिन्त्यन्ते । अस्पष्टजीवादिलिङ्गकवाचो द्वितीये । स्पष्टजीवादिलिङ्गकवाचस्तृतीये । स्पष्टतरजीवादिलिङ्गकवाचश्चतुर्थे । उक्तं च सेनेश्वराचार्यैः 'अस्पष्टतरमस्पष्टं स्पष्टं छायानुसारि च' इति । तत्र जीवप्रधानप्रतिपादकवाक्ययोश्छायानुसारित्वं हि सिद्धान्तप्रतिपाद्यार्थानुसारेण प्रतीयमानत्वम् । एवमविरोधाध्यायेऽपि क्रममाह—पश्चात्स्मृत्यादिकैरिति । स्मृतिपुराणेतिहासादिभिरधिकत्वेनाभिमन्यमानै र्वेदान्तवाक्यानां बाधः परिह्रियते । अक्षतिः—अबाध इत्यर्थः । तर्कपादे तु वेदान्ततुल्यत्वेनाभिमन्यमानानां तर्काणामेव बाध उच्यते । अहितानां

परपक्षतर्काणां सत्तर्कानुग्रहशालिभिर्वेदान्तवाक्यैर्हननमित्यर्थः । तथाच न प्रतिरोधोऽपि, तुल्यबलेनैव प्रतिरोधो न पुनर्दुर्बलेन। तेन प्रथमपादे वेदान्तानां बाधपरिहारः क्रियते। द्वितीयपादे प्रतिरोधपरिहार इति विभागः । तत्र द्वितीयाध्याये द्वाभ्यां पादाभ्यां कारणद्वारकबाह्यविरोधपरिहारः कृतः। उत्तराभ्यां वियत्प्राणपादाभ्यां कार्यद्वारकान्तरविरोधपरिहारः क्रियते। तत्रापि वियत्पादे वियदादीनां कार्यत्वपरिशोधनम्। प्राणपादे तु जीवोपकरणभूतानां प्राणादीनामिति विभागः । तत्र विरोधस्यानन्तरत्वं वेदवाक्यानामन्योन्यविरोधरूपत्वादिति भाव्यम् । तृतीयाध्यायं पादभेदेन विभजतेऽधिकाराधिकर्तव्यभेदेन च—दोपादोपाविति । तृतीये साधिकारसाङ्गोपायविभागः । तत्र द्वाभ्यां पादाभ्यां अधिकारः परिशोध्यते । अधिकारो हि सांसारिकसकलपुरुषार्थवैराग्यपूर्विका परब्रह्मप्रेप्सा । तत्र वैराग्यपादे वैराग्यं सिध्यति जाग्रदाद्यवस्थासु जीवानां सदोषत्वकथनात्। परब्रह्मप्रेप्सा तु उभयलिङ्गपादश्रवणफलमेव। एवं द्वाभ्यां पादाभ्यामधिकारसिद्धिरुक्ता। उत्तराभ्यां पादाभ्यां साङ्गोपासनमधिकर्तव्यमुच्यते। तत्रापि तृतीयपादे प्रधानभूतोपासननिर्णयः। चतुर्थे पुनरितिकर्तव्यतानिर्णयः । इत्थं प्रतिपादितोपायफलचिन्तनं चतुर्थाध्याय इत्याह—अथेति। उपासाऽऽरोहप्रभावो हि उत्तरपूर्वाघयोरश्लेषविनाशौ तदिदं प्रथमपादे, देहादुत्क्रमणं द्वितीये, अर्चिरादिमार्गेण गमनं तृतीये, 'परंज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' इति वैकुण्ठवासिनो वासुदेवस्यासङ्कुचितानुभवश्चतुर्थ इत्येषा फलाध्यायपरिपाटीतिदिक् ॥ १८ ॥

पद०—तत्राद्य इत्यादि। तत्र—शारीरकशास्त्रे। आद्ये—प्रथमाध्याये। अत्यन्तगूढाविशदविशदसुस्पष्टजीवादिवाचः—पादचतुष्टये क्रमेणास्पष्टतरजीवादिलिङ्गकश्रुतिवाचः, अस्पष्टजीवादिलिङ्गकश्रुतिवाचः, स्पष्टजीवादिलिङ्गकश्रुतिवाचः, स्पष्टतरजीवादिलिङ्गकश्रुतिवाचश्च। चिन्तितानीत्यन्ते श्रूयमाणस्य पदस्य लिङ्गविपरिणामेन चिन्तिता इति लाभः। पश्चात्—तदनन्तरं द्वितीयाध्याये। स्मृत्यादिकैरक्षतिः, अहितहतिः, अभ्रेन्द्रियादेः कार्यता च—प्रथमाध्यायप्रतिपादितस्य श्रुतीनां ब्रह्मणि समन्वयस्य कपिलयोगस्मृत्यादिभिर्विरुद्धार्थैरभिभवपरिहारः प्रथमपादे। अहितानां सांख्यवैशेषिकादीनां हति निरासो द्वितीयपादे। अभ्रस्य—आकाशस्य, इन्द्रियादेरिन्द्रियाणां मुख्यप्राणादीनां च कार्यता ब्रह्मकार्यताप्रकारस्तृतीये चतुर्थे च। इतीमेऽर्थाश्चिन्तिता इत्यनुकृष्टेन पूर्ववद्योजना। तृतीये भवभृदितरयो र्दोपादोपौ भक्तिरङ्गानि च—तृतीयेऽध्याये भवभृदितरयोः संसारिजीवेश्वरयोः क्रमेण दुःखानुभवतदभावरूपौ दोपादोपौ प्रथमद्वितीयपादयोः, तृतीयपादे भक्तिशब्दवाच्योपासना, चतुर्थपादे कर्माद्यङ्गानि च चिन्तितानीत्यनुकर्षः। अथ—तदुपरि। अन्तिमे—चतुर्थाध्याये। उपासाऽऽरोहप्रभावोत्क्रमसरणिफलानि चिन्तितानि—

उत्तरपूर्वपापाश्लेषविनाशरूप उपासनानुष्ठानप्रभावः प्रथमपादे, देहादुत्क्रान्तिर्द्वितीये, अर्चिरादि सरणिस्तृतीये, परज्योतिरुपसम्पत्तिप्रकाररूपं फलं चतुर्थपाद इतीमानि क्रमेण विचारितानीत्यन्वयः ॥ १८ ॥

स्रष्टा देही स्वनिष्ठो निरवधिमहिमाऽपास्तबाधः श्रिताप्तः
खात्मादेरिन्द्रियादे रुचितजननकृत् संसृतौ तन्त्रवाही ।
निर्दोषत्वादिरम्यो बहुभजनपदं स्वार्हकर्मप्रसाध्यः
पापच्छिद् ब्रह्मनाडीगतिकृदतिवहन् साम्यदश्चात्र वेद्यः ॥१९॥

चिन्ता०—एवं पादभेदादर्थभेदकथने सर्वेषामपि पादानां ब्रह्मजिज्ञासारूपत्वं कथमित्याशङ्क्य परिहरति—स्रष्टेति । तत्तत्पादोक्तानामर्थविशेषाणामेकस्मिन्नेव ब्रह्मणि पर्यवसानादिति परिहारः । तत्र स्रष्टेत्यादिषोडशभिः पदैस्तत्तत्पादप्रतिपाद्यषोडशविशेषविशिष्टो भगवानेवाभिधीयते । प्रथमपादः स्रष्टृत्वप्रधानः । द्वितीयस्तु देहित्वप्रधान इत्यादि स्वयमेव भाव्यम् । स्वनिष्ठः—स भगवान् स्वस्मिन् प्रतिष्ठितः । 'स्वे महिम्नि 'इत्यादि श्रुतिसिद्धमनन्याधारत्वमुच्यते । श्रिताप्तः—तर्कपादे हि अनाश्रितानां दुस्तर्कवादिनामनाप्तः, आश्रितानां पुनः पञ्चरात्रतन्त्रनिष्णातानां पाञ्चकालिकवृत्तीनामाप्त इत्युच्यते । संसृतौ तन्त्रवाही—जाग्रत्स्वप्नसुषुप्तिमूर्च्छामरणेषु भगवानेव निर्वाहकत्वेनोच्यते । शेषं सुगमम् ॥ १९ ॥

पद०—स्रष्टेत्यादि । स्रष्टा—जन्माद्यधिकरणविषयवाक्ये 'यतो वा इमानि भूतानि जायन्ते' इत्यादिना, ईक्षत्यानन्दमयाधिकरणयोः 'बहु स्याम्' इत्यारभ्य 'इदं सर्वमसृजत' इति च जगत्स्रष्टृत्वप्रतिपादनात् प्रथमपादे जगत्स्रष्टृत्वेन परमात्मा वेद्यः । देही—अन्तर्याम्यधिदैवेत्याद्यधिकरणेषु सर्वशरीरत्वप्रतिपादनाद् द्वितीये पादे सर्वदेहित्वेन वेद्यः । स्वनिष्ठः—भूमाधिकरणविषयवाक्ये 'स भगवः कस्मिन्प्रतिष्ठितः' इति, 'स्वे महिम्नि' इत्यादिप्रतिपादनात् अनन्याधारत्वेन तृतीये वेद्यः । निरवधिमहिमा—आनुमानिकाधिकरणे 'पुरुषान्न परं किंचित्सा काष्ठा सा परागतिः' इत्यादिना, वदतीतिचेदिति सूत्रविषयवाक्ये 'अनाद्यनन्तं महतः परं ध्रुवम्' इत्यादिना च भगवन्माहात्म्यप्रतिपादनाज्जगन्निमित्तोपादानत्वप्रतिपादनेन प्रकृत्यधिकरणे सर्वज्ञत्व सर्वशक्तित्वादिप्रतिपत्तेश्च चतुर्थपादे निरवधिमहिमत्वेन वेद्यः । अपास्तबाधः—स्मृतिपादे कापिलादिविरुद्धार्थस्मृतिविरोधानां युक्त्याभासमूलकविरोधानां च निरसनादपास्तबाधत्वेन पञ्चमे पादे वेद्यः । श्रिताप्तः—तर्कपादे बुद्धादिरूपेण तामसानामनाप्तोऽपि पाञ्चरात्राधिकरणे पाञ्चकालिकवृत्तीनामाप्त इति वक्ष्यमाणत्वात् श्रिताप्तत्वेन षष्ठे वेद्यः । खात्मादेरिन्द्रियादे रुचितजननकृत्

वियत्पादे वियदादेः स्वरूपविकाररूपजननप्रतिपादनाज्जीवात्मनः स्वभावविकाररूपजननप्रतिपादनाच्च-वियदात्माद्युचितजननकृत्त्वेन सप्तमे वेद्यः। खात्मादेरुचितजननकृदिति योजना। इन्द्रियादेरुचित-जननकृत्—तथा प्राणा इति पादे इन्द्रियाणां मुख्यप्राणस्य च जननप्रतिपादनादिन्द्रियाद्युचित-जननकृत्त्वेनाष्टमे वेद्यः। संसृतौ तन्त्रवाही—जाग्रत्स्वप्नसुषुप्तिमूर्च्छामरणेषु भगवानेव निर्वाहकत्वेनोच्यत इति संसारतन्त्रनिर्वाहकत्वेन नवमे वेद्यः। निर्दोषत्वादिरम्यः—'नस्थानतोऽपि परस्योभयलिङ्गं सर्वत्रहि' इत्याद्यधिकरणेषु निर्दोषत्वकल्याणगुणाकरत्वप्रतिपादनात् निर्दोषत्वादिरम्यत्वेन दशमे वेद्यः। बहुभजन-पदम्—गुणोपसंहारपादे नानाविद्योपासनविचारणाद् बहुभजनपदत्वेनैकादशे वेद्यः। स्वार्हकर्मप्रसाद्यः—गृहस्थादिषु चतुर्ष्वप्याश्रमिषु स्वस्वाश्रमधर्माङ्गिका विद्येति पुरुषार्थपादे प्रतिपादनात् स्वार्हकर्मप्रसाद्य-त्वेन द्वादशे वेद्यः। पापच्छित्—आवृत्तिपादे 'तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्' इत्यधिकरणे विद्यानिष्ठस्योत्तरपूर्वाघाश्लेषविनाशप्रतिपादनात् पापच्छित्त्वेन त्रयोदशे वेद्यः। ब्रह्मनाडी-गतिकृत्—'वाङ्मनसि' इत्यादिपादे उत्क्रान्तस्य चेतनस्य 'तदोकोग्रज्वलनं तत्प्रकाशितद्वारो विद्या-सामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया' इति सूत्रेण हार्दानुग्रहेण ब्रह्मनाडी-प्रवेशवचनात् ब्रह्मनाडीगतिकृत्त्वेन चतुर्दशे वेद्यः। अतिवहन्—अर्चिरादिपादे भगवन्नियुक्तैरर्चिरादि-भिरतिवहनप्रतिपादनादतिवोढृत्वेन पञ्चदशे वेद्यः। साम्यदः—'संपद्याविर्भावः' इत्यादिपादे मुक्ताय भगवता परमसाम्यप्रतिपादनोपपादनात् साम्यदत्वेन षोडशे वेद्यः। एवमत्र शास्त्रे सर्वेष्वपि पादेषु स्रष्टृत्वादिरूपैः परमात्मैव वेद्य इति निखिलमपीदं शास्त्रं ब्रह्मपरमेवेति भावः॥ १९॥

विध्युक्त्याऽधीत्य वेदान् विधिबलविरतावन्यजादेव रागात्
कृत्स्नं मीमांसमानाः क्रमश इति परब्रह्मचिन्तां तरन्ति।
प्राप्ते तुर्ये युगेऽस्मिन् परिमितबलधीप्राणतद्विग्रहदृष्ट्या
कालक्षेपाक्षमत्वात् कतिचन कृतिनः शीघ्रमन्ते रमन्ते॥२०॥

चिन्ता०—अत्र केचिच्चोदयन्ति 'भवतामुपपादनमन्यत्, अनुष्ठानमन्यत्। कर्मविचारस्य पूर्ववृत्तत्वमुपपाद्यते। अनुतिष्ठन्तिच कर्मविचारमन्तरेणापि ब्रह्मविचारमाचार्याः, कथमेतत् सङ्घटते?' इति। अत्रोत्तरमालिख्यते—विध्युक्त्येति। अत्र विधिः कार्यमेकेषाम्, शब्दभावना पुन-रन्येषाम्। इष्टसाधनत्वं मण्डनस्य। इष्टस्य कृत्यधीनत्वलक्षणमाचार्यैकदेशिनः। धात्वर्थभावनेति

केचिदूचुः । आप्तस्य हितकामस्य नियोग इति न्यायवादिनः । तमेव पक्षमनुमन्यन्ते त्र्यन्तवादिनोऽपि । यथाहुः—

'आप्तस्य हितकामस्य नियोगं केचिदूचिरे ।
भाष्यकारोऽपि भगवानेतमेवान्वमन्यत ॥' इति ।

यो वा कोवा विधिर्भवतु तस्य विधेरुक्तिः । अयमर्थः—कृतादिपुण्ययुगेषु अधिकारिणोऽपरिमितबलधीप्राणयोगाद् वेदानधीत्याविघ्नेन फलवदापातप्रतीतिजनितां त्रिकाण्डीं मीमांसामनुक्रमेण विचारयन्ति । अयमेव न्यायमार्गः । अधुना पुनरन्तिमयुगे संप्राप्ते बलधीप्राणानां परिमितत्वेन मध्ये विच्छेदसंभवात् ब्रह्मविचाररूपमुख्यार्थानुष्ठानानुग्रहाय कर्मविचारात्मकमङ्गविचारानुष्ठानं कंचित्कालं परित्यज्य शीघ्रमेवान्ते वेदान्तश्रवणे रमन्ते कतिचन कृतिनः कृतकृत्याधिकारिणो भाग्यवन्त इत्यर्थः । आहुश्च 'मुख्यामुख्यविरोधे मुख्यानुग्रहो न्याय्यः' इति । अयमर्थः 'गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसंयोगः' इत्यत्रोच्यते । अयमत्र निर्णयः—अनुक्रमानुपपत्तिशङ्काभावे न्यायानुसारादनुक्रमेणैव श्रोतव्यम् । तच्छङ्कायां पुनः प्रधानविरोधपरिहाराय व्युत्क्रमेणापि श्रवणमस्त्येवेति न विरोधः । नन्वपरिज्ञातशब्दान्तरादिभिः कथमिव शाण्डिल्यविद्यादीनां भेदाभेदचिन्ता, कथंचापरिज्ञातश्रुतिलिङ्गादिभिश्च कर्मज्ञानयोरङ्गाङ्गिभावपरिकल्पनम्, कथं चापरिज्ञातश्रुत्यर्थपाठादिभिरर्चिरादिषु क्रमपरिकल्पनम्, एवमन्यत्रापि न्यायान्तरोपजीवनं कथमिव जाघटीतीति ; घटतएव तत्त्वविद्भिरचितैः प्रकरणादिभिः कर्मकाण्डार्थं संक्षेपतः श्रुत्वा श्रूयतां शारीरकमिति । अथवा अप्रतिहतप्रतिभैरन्तेवासिभिराचार्यसकाशादेव कर्मकाण्डार्थं संक्षेपतः श्रुत्वा श्रूयतां शारीरकमिति वाऽविरोधः । यद्वा शारीरकश्रवणवेलायामेवातिशयितप्रतिभावन्तस्तत्तदपेक्षितमर्थजातं सहसैवावधारयन्तु नाम, तस्मादविरोध इति । क्रमश इति—अत्र हि द्वयी गतिः । केचिदक्षरराशिं गृहीत्वा स्नानात्प्रागेव त्रिकाण्डीमपि मीमांसां शृण्वन्तीत्येका प्रक्रिया । अपरा पुनरधीत्य स्नायादिति वाक्यानुसारेण सहसैव स्नात्वा पश्चादनाश्रमी न तिष्ठेदिति ब्राह्मणानुसारेण प्रागेव परिणयनमपि कृत्वा कालेकाले मीमांसामपि शृण्वन्तीति । ननु कथं गृहस्थस्य यजनाद्यावश्यककर्मभिरुत्तरकालस्यावरुद्धत्वाज्ज्ञानार्जनावकाशः ? उच्यते । यथा श्रुत्यर्थानामुत्तरकर्मानुष्ठानोपयिकद्रव्यार्जनरूपाणां याजनाध्यापनप्रतिग्रहाणां यजनाध्ययनविधिभिरवकाशो दीयते, एवं यावज्जीवानुष्ठेयकृत्स्नकर्मानुष्ठानोपयिकज्ञानार्जनरूपस्य मीमांसाश्रवणस्याप्यवकाशो दीयतामिति महानयं घण्टापथः ॥ २० ॥

पद०—विष्णुक्त्येत्यादि । इहास्मिन्लोके केचन विचक्षणाः विष्णुक्त्या—

' आप्तस्य हितकामस्य नियोगं केचिदूचिरे ।
भाष्यकारोऽपि भगवानेतमेवान्वमन्यत ॥ '

इत्युक्तरीत्या हितकामाप्तनियोगरूपस्य विधेः संबन्धिन्या, उक्त्या—स्वाध्यायोऽध्येतव्य इत्यादिरूपया । प्रेरिताः सन्त इति शेषः । वेदान्—चतुरोऽपि वेदान् । शाखाभेदबहुत्वपरं वा बहुवचनम् । अधीत्य—स्वतन्त्रोच्चारणयोग्यतयाऽक्षरराशिं गृहीत्वा । विधिबलविरतौ—अध्ययनविधेरक्षरराशिग्रहणपर्यन्तत्वात् तावताऽध्ययनविधिप्रेरणस्य विरामेऽपि । अन्यजाद्रागादेव—साङ्गाध्ययनादिजन्यापातप्रतीतिमूलकसंदेहसंभूतान्निर्णयाभिलाषादेव हेतोः । कृत्स्नं मीमांसमानाः—कृत्स्नमपि वेदार्थं विचारयितुं प्रवृत्ताः । क्रमशः—अधीतक्रमेण कर्मकाण्डं विचार्य । परब्रह्मचिन्तां तरन्ति- ब्रह्मविचाररूपवेदान्तशास्त्राध्ययनं प्राप्नुवन्ति । अस्मिन् तुर्ये युगे प्राप्ते—प्राणिनामायुःप्रज्ञाशक्त्यादिसंकोचके चतुर्थे कलौ युगे प्राप्ते सति । कतिचन कृतिनः—केचिदुचितकारिणः । परिमितबलधीप्राणतद्विघ्नदृष्ट्या—परिमितानामल्पीयसां बलधीप्राणानां शक्तिबुद्ध्यायुषां तद्विघ्नानां रोगदारिद्र्यादीनां च दृष्ट्या पर्यालोचनया । कालक्षेपाक्षमत्वात्—दीर्घकालविलम्बासहिष्णुत्वेन । शीघ्रं कर्मकाण्डाध्ययनविलम्बाभावेन शीघ्रमेव व्युत्क्रमेण । अन्ते—मुख्यभूते वेदान्तविचाररूपे मीमांसाचरमभागे । रमन्ते—आसज्जन्ते । अनुक्रमानुपपत्तिशङ्काभावे न्यायानुसारादनुक्रमेणैव श्रोतव्यम् । तच्छङ्कायां पुनः प्रधानविरोधपरिहाराय व्युत्क्रमेणापि श्रवणमस्त्येवेति न विरोध इति भावः ॥ २० ॥

**रागान्मीमांसते चेत्स्वयमिह यततां किं गुरूक्त्येति चेन्न**
**ब्रह्मज्ञानाप्तये गुर्वभिगमनविधेस्तेन तत्त्वोपदेशात् ।**
**सद्विद्याऽऽचार्यवत्त्वे प्रथयति च परब्रह्मवित्तिं तथाऽन्या**
**ऽप्याचार्यादित्यधीते नियमविधिरसौ निश्चितो नीतिविद्भिः ॥ २१ ॥**

चिन्ता०—अत्रान्यः कश्चिदचूचुदत् ' रागप्राप्तं मीमांसाश्रवणमित्यक्षरराशिग्रहणमात्रफलकाध्ययनविधिवादिनो भवन्तः प्रतिपेदिरे । तर्हि आचार्यसकाशादेव श्रोतव्यमिति निर्बन्धो निर्निबन्धनः । स्वयमेव शारीरकशास्त्रपुस्तकावलोकनेन कर्मब्रह्ममीमांसापरिज्ञानमात्मनः करोतु प्राज्ञः । मुधैवाचार्यानुसरणप्रयासः' इति । तदिदमाह—रागा दित्यादिना । तत्प्रतिक्षिपति—नेति । तत्र हेतुमाह—ब्रह्मेति । 'तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् ' इति ब्रह्मज्ञानार्थं गुर्वभिगमनविधेः । न केवलं विधिमात्रमुपदेशदर्शनमप्यस्तीति दर्शयति

तेनेति । नपुनरिदं हेतुद्वयमेव, सद्विद्या पुनः 'आचार्यवान्पुरुषो वेद' इत्याचार्योपदेशादेव सम्यग्ज्ञानमुपजायत इति विशदमेव प्रकाशयतीत्याह—सद्विद्येति । अत्र मतुपा सम्यगुपासनं विवक्ष्यते । न केवलं सद्विद्यैवामुमर्थमुपदर्शयति, विद्यान्तरमपि विद्यायास्साधुत्वमुपदेशादेव सिध्यतीति प्रकटयतीत्याचष्टे—तथेति । 'आचार्याद्धैव विदिता विद्या साधिष्ठं प्रापत्' इति हि श्रुतिः । साधिष्ठं साधुतमत्वम् । प्रापत्—प्राप्नुयादित्यर्थः । 'छन्दसिलुङ्लङ्लिटः' इति व्यत्ययस्य सौत्रत्वात् । ननु रागप्राप्तं मीमांसाश्रवणमिति भवद्भिरङ्गीक्रियते, कथमधुना बहुश्रुत्युपपादनेन विधिप्राप्तत्वमुच्यते? तथा च ह्ययन्यद् वाचयन्यदिति वैयाकुलीमेवातनोति, नेत्याह—नियमविधिरिति । त्रिविधः खलु विधिः—अप्राप्त विधिः, नियमविधिः, परिसंख्याविधिश्चेति । अत्र मा भूदप्राप्तविधिः, माचभूत्परिसंख्याविधिः, नियमविधिमेव परिगृह्णीमहि 'अभिजनविद्यासमुदेतं समाहितं संस्कर्तारमीप्सेत्' इतिवत् श्रोत्रियं ब्रह्मनिष्ठमेव गुरुमभिगच्छेदिति । तेनायमर्थः—अत्र न श्रवणं विधीयते । नापि श्रवणार्थं गुर्वभिगमनम् । तस्यापि श्रवणार्थिभिः स्वयमेवाचरणात् । अपितु शिष्याचार्ययोर्गुणावेव विधीयेते । तेन विधिप्राप्तत्वरागप्राप्तत्वविरोधचोदनं मन्दमिति ॥ २१ ॥

पद०—रागादित्यादि । रागान्मीमांसते चेत्—आपातप्रतीतिमूलकान्निर्णयरागादेव विचारे प्रवर्तते चेत् । इह—विचारे । स्वयं यतताम्—धृष्टानां पण्डितम्मन्यानां पुस्तकावलोकनाद्युपायेन कर्मब्रह्मचिन्ताया विलोकनात् तथैव पुस्तकावलोकनाद्युपायेन मीमांसापरिज्ञानमात्मनः संपादयतु । गुरूक्त्या किम्—गुरूक्त्या गुरूपदेशेन । किम्—किं फलं लभ्यते । इतिचेन्न—इत्युच्यतेचेन्नैतद्युक्तम् । ब्रह्मज्ञानाप्तये गुर्वभिगमनविधेः—'तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्' इति ब्रह्मज्ञानार्थं गुर्वभिगमनविधानात् । तेन तत्त्वोपदेशात्—गुरुणैव तत्त्वोपदेशदर्शनाच्च हेतोरित्यर्थः । किं च सद्विद्याऽऽचार्यवत्त्वे परब्रह्मवित्तिं प्रथयति—सद्विद्या पुनः 'आचार्यवान्पुरुषो वेद' इति वचनेनाचार्योपदेशवत्त्वे सत्येव परब्रह्मज्ञानं संभावितं प्रकाशयति । मतुपा सम्यगुपासनं विवक्ष्यत इति चिन्तामणिः । तथा—उक्तश्रुतितुल्यतया । अन्यापि—अन्या श्रुतिरपि । आचार्यादित्यधीते—'आचार्याद्धैव विदिता विद्या साधिष्ठं प्रापत्' इत्यधीते । आचार्योपदेशादेव विदिता विद्या साधुतमत्वं प्रापयेदिति प्रतिपादयतीत्यर्थः । असौ—'तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्' इति श्रुत्यक्षरराशिः । नीतिविद्भिः—न्यायवेदिभिः । नियमविधिर्निश्चितः—अप्राप्तार्थत्वाभावात् नापूर्वविधिः, न च परिसंख्या, अपितु नियमविधिरेवेति निर्णीत इत्यर्थः ॥ २१ ॥

सिद्धे व्युत्पत्तिराद्या न भवति न च धीर्लक्षणाद्युज्यतेऽस्मिन्
किं शास्त्रेणान्यसिद्धे नच निशमयितुः सिद्धबोधे फलं स्यात्।
ब्रह्मण्येवं न मानान्युपनिषद इति स्तम्भिते तद्विचारे
शास्त्रारम्भं चतुस्सूत्र्यघटयदुचितैर्न्यायभेदैश्चतुर्भिः ॥ २२ ॥

चिन्ता०—एवमध्ययनानन्तरमथातोधर्मजिज्ञासेत्यारभ्यानावृत्तिः शब्दादनावृत्तिः शब्दादित्येव-मन्तमनुक्रमेण कर्तव्यं मीमांसाशास्त्रशरीरमिति प्रमाणतर्काभ्यां प्रकटमेवोपपादितम् । अतः परं मीमांसाशास्त्रैकदेशभूतस्य शारीरकशास्त्रस्यानारम्भणीयत्वशङ्कां शारीरकाद्यभूतचतुरधिकरणी चतुर्भिर्न्या-यविशेषैः प्रशमयतीति शास्त्रोपक्रमप्रतिपादनायोपक्रमते—सिद्ध इति । उक्तञ्च पूर्वाचार्यैः—

'व्युत्पत्त्यभावात्प्रतिपत्तिदौस्स्थ्यादन्येन सिद्धेरफलत्वतश्च ।
अमात्वमाशङ्क्य निराचकार न्यायैश्चतुर्भिः प्रतिपाद्य तत्तत् ॥' इति ।

उक्तमन्यैरपि शारीरकशास्त्रन्यायनिबन्धनग्रन्थकर्तृभिर्धन्यबुद्धिभिः—

'व्युत्पत्त्यभावः प्रतिपत्तिदौस्स्थ्यमन्येन सिद्धत्वमथाफलत्वम् ।
एतानि वै सूत्रचतुष्टयेनानारम्भमूलानि निराकृतानि ॥' इति ।

इयं केवलचतुःसूत्री तावदेका पेटिका शास्त्रारम्भसमर्थनरूपार्थैक्यात्, तत्परिपन्थिपरोक्तन्यायनिराकरण-रूपप्रयोजनैक्याच्च । तदवान्तरपेटिके द्वे द्वे सूत्रे । तत्र पूर्वसूत्रद्वितयं सिद्धप्रतिपादकस्य शब्दस्य व्युत्पत्ति समर्थनेन वेदान्तवाक्यप्रामाण्यसमर्थनार्थम् । उत्तरं च तात्पर्यलिङ्गसमर्थनेन तदर्थमेवेति पेटिकाविभागः । तत्रापि पूर्वपेटिकायां सिद्धपरस्य शब्दसामान्यस्य व्युत्पत्तिः समर्थ्यते प्राथमिकेन सूत्रेण । द्वितीयेन तु सिद्धविशेषपरस्य ब्रह्मशब्दस्य व्युत्पत्तिसमर्थनमित्यवान्तरविभागः । उत्तरपेटिकायां तु तात्पर्यलिङ्गसमर्थनं ब्रह्मणि वेदान्तवाक्यानाम् । तात्पर्यलिङ्गानि च—

'उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् ।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये ॥'' इति षोढा विभज्यन्ते ।

तत्र मानान्तरागोचरतारूपमपूर्वत्वलक्षणं तात्पर्यलिङ्गं शास्त्रयोन्यधिकरणे सिध्यति । साफल्यलक्षणं समन्वयाधिकरणे । तत्रापि शास्त्रसाफल्यं पूर्वत्र, तज्जन्यज्ञानसाफल्यमुत्तरत्रेति पेटिकाधिकरणविभागः

प्रसिध्यति । एतत्सर्वमनुक्रमेण तावदुपपादयामः । आद्या व्युत्पत्तिः सिद्धेऽर्थे न सिध्यतीति प्रथमाधिकरण-पूर्वपक्षः । द्वितीयाधिकरणे पूर्वपक्षं दर्शयति—नचेति । लक्षणतो हि विशेषव्युत्पत्तिः शब्दानां गन्धवती पृथिवी सास्नादिमान् गौरित्यादौ । आहुश्च 'व्यावृत्तिर्व्यवहारो वा लक्षणस्यार्थः' इति । अस्मिंस्तु ब्रह्मणि जगत्कारणत्वलक्षणं न जाघटीति, तेन न योयुज्यते विवक्षितब्रह्मशब्दस्य व्युत्पत्तिरिति । तृतीयाधि-करणपूर्वपक्षमाह—किमिति । अनुमानसिद्धे किं शास्त्रेणेत्यर्थः । चतुर्थस्याधिकरणस्य पूर्वपक्षमाह—नचेति । निशमयितुः—श्रोतुरित्यर्थः । एवं ब्रह्मण्युपनिषदो न मानानीति ब्रह्मविचारे स्तम्भिते शारीरकशास्त्रारम्भं चतुस्सूत्री चतुर्भिर्न्यायविशेषैः समजीघटत् । सिद्धे व्युत्पत्तिसद्भावात् ब्रह्मलक्षणता-प्रतिपत्तिसौष्ठवात् मानान्तरागम्यत्वसाधनाद् वेदान्तवाक्यजनितज्ञानानां तव गृहे निधिरस्तीत्यादिन्यायेन निरतिशयानन्दब्रह्मविषयत्वेन स्वयमेव पुरुषार्थरूपत्वादिति चत्वारो न्यायाश्चतुरधिकरणीनिर्णयाः ॥ २२ ॥

पद०—**सिद्धे व्युत्पत्तिरित्यादि** । **आद्या व्युत्पत्तिः**—प्राथमिकः शक्तिग्रहः । **सिद्धे न भवति**—वृद्धव्यवहारादन्यत्र व्युत्पत्त्यसंभवात् तस्य च कार्यार्थैकपरत्वात्, सिद्धेऽर्थे न सिध्य-तीत्यर्थः । **अस्मिन्**—ब्रह्मणि विषये । **लक्षणाद् धीः**—गन्धवती पृथिवीत्यादिष्विव विशिष्य व्युत्पत्तिः । **न च युज्यते**—न संभाव्यते । जगत्कारणत्वादिलक्षणस्यासंभवादिति भावः । **अन्यसिद्धे किं शास्त्रेण**—अनुमानप्रमाणसिद्धे शास्त्रेण किं कार्यम्? अप्राप्ते हि शास्त्रमर्थवदित्यर्थः । **निशमयितुः**—श्रोतुः । **सिद्धबोधे**—सिद्धार्थबोधे । **फलं च न स्यात्**—किमपि फलं च न स्यात् । पुरुषप्रवृत्तिसाध्यस्य श्रवणे हि पुरुषस्य फलम् । **एवम्**—उक्तप्रकारेण विरोधदर्शनात् । **उपनिषदो ब्रह्मणि विषये न मानानि**—न प्रमाणानि । **इति तद्विचारे स्तम्भिते**—एवमाक्षेपेण ब्रह्मविचारप्रवृत्तौ प्रतिबद्धायाम् । **चतुःसूत्री**—'अथातः' इत्यादिसूत्रचतुष्टयी । **उचितैः**—तत्तदाक्षेपनिरसनयोग्यैः । **चतुर्भिर्न्यायभेदैः**—शिशूना मम्बा-तातमातुलचन्द्रादिशब्दार्थशक्तिग्रहन्यायेन सिद्धार्थेऽप्याद्यव्युत्पत्तिः संभाव्यतएवेति प्रथमो न्यायः, जग-ज्जन्मादीनामुपलक्षणविधया विशेषणविधया वा लक्षणत्वसंभवाद् युगपज्जगत्प्रलयसृष्ट्यादीनां श्रुतिपुराणा-दिसिद्धत्वेन जगत्कारणत्वस्य ब्रह्मलक्षणत्वसंभवाच्च गन्धवती पृथिवी सास्नादिमान्गौरित्यादाविव लक्षणतो विशिष्य व्युत्पत्तिर्योयुज्यत इति द्वितीयः, अङ्कुरादिकं सकर्तृकं कार्यत्वादित्यनुमानप्रयोगे कार्यत्वहेतोः सर्वज्ञ-त्वसर्वशक्तित्वादिविशिष्टकर्तृकत्वव्याप्त्यभावेन सिसाधयिषितेश्वरासाधनेन मानान्तरागम्यत्वादीश्वरस्य शास्त्रैक-गम्यत्वं सिद्धमिति तृतीयः, वेदान्तवाक्यार्थज्ञानस्य तव गृहे निधिरस्तीत्यादिवाक्यार्थज्ञानतुल्यतया निरति-शयानन्दब्रह्मविषयकत्वेन स्वयमेव पुरुषार्थस्वरूपत्वात् नाफलत्वमिति चतुर्थः, **एवं चतुर्भिर्न्यायविशेषैः । शास्त्रारम्भमघटयत्**—प्रतिबद्धां वेदान्तशास्त्रश्रवणप्रवृत्तिं तत्प्रतिबन्धकपूर्वोक्तशङ्काचतुष्टयनिराकरणेन पुनः प्रावर्तयदित्यर्थः ॥ २२ ॥

सिद्धे व्युत्पत्त्यलाभे स्वरिव फलतया लक्ष्मभङ्गे च लभ्यं
ब्रह्मान्योक्त्याऽनुमानप्रमितमपि भवत्वंशतः शास्त्रवेद्यम् ।
विध्यर्थत्वेऽप्यबाधात्परविषयवचः स्वार्थमानं भवेदि-
त्यन्वारुह्योक्तिदैन्यं नहि सहत ऋजुः सूत्रकृद्वावदूकः ॥ २३ ॥

चिन्ता०—अत्र केचिद्वदन्ति 'चतुरधिकरणीपूर्वपक्षः खल्वन्वारुह्यवादेनापि परिहर्तुं शक्यते । तत्किमस्मिन्नाङ्गीक्रियते' इति । तत्परिहारमन्वारुह्योक्तिवादस्वरूपोपन्यासपूर्वकमाह—सिद्ध इति । इयं किल तस्य स्वरूपोपन्यासप्रक्रिया—मास्तु नामाद्या व्युत्पत्तिः सिद्धे । तथापि यागादिफलभूतस्वर्गादिस्वरूपवत् 'ब्रह्मविदाप्नोति परम्' इति वाक्यविहितवेदनफलतया परं ब्रह्मापि सिध्यतु । लक्षणभङ्गेऽपि पुराणादि प्रसिद्धरावणयुधिष्ठिरसुयोधनादिवत् तत्तदौपनिषदसूक्तप्रसिद्ध्या ब्रह्मापि सिध्यतु । नहि काव्येतिहासपुराणादिषु सर्वत्रापि लक्षणं लक्ष्यते । न च तावता तत्तदर्थसिद्धिरनुवर्ण्यते । अस्त्वनुमानप्रसिद्धमपि ब्रह्म-तथापि निरतिशयानन्दरूपत्वाद्यनन्तगुणविशिष्टतया शास्त्रवेद्यमपि भवत्येव । विधिशेषत्वेऽपि वेदान्तवाक्यानामबाधितानां 'अग्निर्हिमस्य भेषजम्' इत्यादिवत् स्वार्थप्रामाण्ये को विरोध इत्यन्वारुह्यवादः । तथाच परमार्थदूषणे सति किमिति नाम दीनकृत्यमन्वारुह्यवादमाचरामीति भगवान् बादरायणो नारायणपरं शास्त्रं साक्षाद् युक्तिभिरेवासाधयदिति । ऋजुः—आर्जवं मनोवाक्कायानामैकरूप्यम् । तथाच सूत्रकार ह्यन्यद्वाच्यन्यदिति द्विरूपां प्रक्रियां नानुसरतीत्यर्थः ॥ २३ ॥

पद०—सिद्धे व्युत्पत्त्यलाभ इत्यादि । सिद्धे व्युत्पत्त्यलाभे ब्रह्म स्वरिव फलतया लभ्यम्—अस्तु नामाद्यव्युत्पत्तिः कार्यार्थ एव न सिद्धे, तथापि ब्रह्मस्वरूपं यागादिफलभूतस्वर्गादिस्वरूपवत् 'ब्रह्मविदाप्नोति परम्' इतिवाक्यविहितवेदनफलतया लभ्यत एव । लक्ष्मभङ्गे च ब्रह्मान्योक्त्या लभ्यम्—लक्षणासंभवेऽपि ब्रह्म आधुनिकानां पुराणप्रसिद्धरावणयुधिष्ठिरसुयोधनादिवदन्येषां पुराविदामुक्तिपरम्परया लभ्यताम् । अनुमानप्रमितमपि, अंशतः शास्त्रवेद्यं भवतु—अस्त्वनुमानप्रसिद्धं ब्रह्म । तथापि निरतिशयानन्दरूपत्वाद्यनन्तगुणविशिष्टतारूपांशतः शास्त्रवेद्यमपि भवत्येव । विध्यर्थत्वेऽप्यबाधात्परविषयवचः स्वार्थमानं भवेत्—विधिशेषत्वेऽप्यबाधितार्थकत्वाद् ब्रह्मविषयकं वेदान्तवाक्यं स्वार्थप्रमाणं भवतु । इत्यन्वारुह्योक्तिदैन्यम्—एवंरूपमन्वारुह्य परपक्षमङ्गीकृत्य सान्त्वेन समाधानरूपं दीनकृत्यम् । ऋजुः—आर्जवं मनोवाक्कायानामैकरूप्यं तद्वान् । वावदूको महावाग्मी । सूत्रकृत् सूत्रकारः । नसहते हि—

न मर्षयेदित्यर्थः । तथा च प्रतिपक्षप्रतिक्षेपकपरमार्थदूषणे सति यावद्रूकस्सूत्रकारो ह्यन्यद्वाच्यन्यदिति द्विरूपां प्रक्रियां नानुसरतीत्यर्थः ॥ २३ ॥

द्वाभ्यामादौ प्रतीतिप्रजननमुदितं सिद्धरूपे परस्मिन्
द्वाभ्यां वैफल्यशङ्का तदनु परिहृता शास्त्रतज्जन्यबुद्ध्योः ।
औचित्यानेकभाष्यस्वरसगतिमती प्राक्तनी वर्तनीयं
शास्त्रारम्भार्थमेकं त्रितयमिह परं शास्त्रमित्याहुरेके ॥ २४ ॥

चिन्ता०—अत्र चतुरधिकरण्यां पूर्वोत्तरपेटिकयोः प्रकारान्तरेणाप्यर्थविभागं दर्शयन् चतुर्णामधिकरणानामुपोद्घातत्वं स्वपक्षेण प्रदर्श्य 'एकमेवाधिकरणमुपोद्घातः' इत्येकदेशिनां मतमपि प्रधानार्थविरोधाभावेन प्रौढिप्रकर्षादनुवदति—द्वाभ्यामिति । अयमर्थविभागः—द्वाभ्यामधिकरणाभ्यां सिद्धे ब्रह्मणि प्रतीत्युत्पत्तिरुक्ता, तस्याः प्रतीते स्तत्कारणभूतस्य शास्त्रस्य च साफल्यं द्वाभ्यामधिकरणाभ्यामुच्यते । इत्थं चतुरधिकरणी शास्त्रोपोद्घातः । उपोद्घातलक्षणस्य प्रधानभूतसकलवेदान्तचिन्तार्थचिन्तान्तररूपेषु चतुर्ष्वधिकरणेषु साधारणत्वात् । इममेवार्थं सहेतुकमुपपादयति—औचित्येति । औचित्यम्—अर्थौचित्यमुपोद्घातत्वोपपादकलक्षणतौल्यमित्यर्थः । अनेकेषु भाष्येषु चतुस्सूत्र्युपोद्घातत्वेन प्रतीयते । प्राक्तनी चेयं वर्तनी श्रीमद्भाष्यकारशिष्यधुरन्धरैरात्रेयाचार्यश्रीविष्णुचित्तवरदाचार्यवादिहंसनवाम्बुदप्रभृतिभिस्तत्तद्ग्रन्थेषूपपादनात् । मेघनाथसूरिप्रभृतयस्तु 'अथातो धर्मजिज्ञासेति सूत्रवदेकमेव वेदान्तसूत्रं शास्त्रोपोद्घातः' इति प्रतिपेदिरे, तदपि वैभववादत्वादुपन्यस्याम इत्याह—शास्त्रेति ॥ २४ ॥

पद०—द्वाभ्यामित्यादि । आदौ—शारीरकशास्त्रारम्भे प्रथमतः । द्वाभ्याम्—'अथातो ब्रह्मजिज्ञासा । जन्माद्यस्य यतः' इति जिज्ञासाधिकरणजन्माद्यधिकरणाभ्याम् । सिद्धरूपे परस्मिन्—सिद्धे ब्रह्मणि । प्रतीतिप्रजननमुदितम्—प्रतीत्युत्पत्तिरुक्ता । तदनु—ततः परम् । द्वाभ्याम्—'शास्त्रयोनित्वात् । तत्तु समन्वयात् ।' इत्यधिकरणाभ्याम् । शास्त्रतज्जन्यबुद्ध्योः—प्रतीतिकारणभूतस्य शास्त्रस्य तज्जन्याया ब्रह्मप्रतीतेश्च । वैफल्यशङ्का परिहृता—विफलत्वशङ्कापरिहारेण साफल्यं समर्थितम् । औचित्यानेकभाष्यस्वरसगतिमती—औचित्यम्—प्रधानभूतसकलवेदान्तचिन्तार्थचिन्तान्तरत्वरूपोपोद्घातलक्षणतौल्यम् । अनेकेषु भाष्येषु स्वरसा हृद्या या गतिः—चतुस्सूत्र्या उपोद्घातत्वेनैवावगतिस्तच्छालिनी । इयं वर्तनी—चतुःसूत्र्या उपोद्घातत्वनिर्वाहरूपा प्रकारी । प्राक्तनी—

श्रीभाष्यकारतच्छिष्यपरम्परानुगततया चिरकालानुवृत्ता । एके—मेघनाथसूरिप्रभृतयस्तु । इह—शारीरक शास्त्रे । एकम्—जिज्ञासाधिकरणमेकमेव । शास्त्रारम्भार्थम्—शास्त्रोपोद्घातरूपम् । परम्—ततः परम् । त्रितयम्—अधिकरणत्रयम् । शास्त्रमित्याहुः—शास्त्रोपोद्घातो नभवति, किन्तु शास्त्रारम्भमेवेत्यभ्यधुः ॥ २४ ॥

यत्तत् सेनेश्वरार्यैरगणि वकुलभृत्किंकरैरङ्ग्यकारि
न्यासार्यैर्न्यासि तद् द्विः श्रुतमिति विशदं विष्णुचित्तैर्विवव्रे ।
अश्रौषं शेषकल्पादहमपि यदिदं वादिहंसाम्बुवाहा
दद्धा निर्धार्यतेऽतश्चतुरधिकरणी ब्रह्मचिन्तोद्यमार्था ॥ २५ ॥

चिन्ता०—तस्य पक्षस्य वैभववादत्वमेव प्रदर्शयितुं सर्वलोकसंप्रतिपन्नवद्याचार्यग्रन्थसंवादनात् चतुर्णामधिकरणानामुपोद्घातत्वमेव प्रकटयति—यत्तदित्यादिना । सेनेश्वरार्याः—श्रीरङ्गराजान्तरङ्गपरिकरतल्लजाः शारीरकाधिकरणार्थसंग्राहकपद्यनिर्मातारः । वकुलभृत्किंकराः—वरदनारायणभट्टारका न्यायसुदर्शनकर्तारः । व्यासार्याः—श्रुतप्रकाशिकाश्रुतप्रदीपिकानिर्मातारो हारीतकुलाचार्याः । द्विरिति—द्वयोरपि ग्रन्थयोरुपात्तत्वमुच्यते । श्रीविष्णुचित्ताः—शठमर्षणगोत्रप्रभवाः प्रमेयसंग्रहादिग्रन्थकर्तारः । सकलाचार्यसंभाव्या वादिहंसाम्बुवाहा आत्रेयवंशजा न्यायकुलिशादिग्रन्थनिर्मातारः । इत्थं कति कति आत्रेयवरदाचार्यप्रभृतयो वेदान्तशास्त्रसंरक्षकग्रन्थान् व्यरीरचन् । तेन वद्याचार्यग्रन्थसंवादाद् वयमपि चतुरधिकरण्युपोद्घातत्वपक्षमेवाचक्ष्महे इति निर्धार्य कथयति—अद्धेति ॥ २५ ॥

पद०—यत्तदित्यादि । यत्—यस्मात्कारणात् । तत्—चतुःसूत्र्याः साकल्येन शास्त्रोपोद्घातरूपत्वम् । सेनेश्वरार्यैः—श्रीरङ्गराजान्तरङ्गपरिकरतल्लजैः शारीरकाधिकरणार्थसंग्राहकपद्यनिर्मातृभिः सेनेश्वरार्यैः । अगणि—स्वकृतग्रन्थे निरणायि । वकुलभृत्किंकरैः—वरदनारायणभट्टारकाख्यैर्न्यायसुदर्शनकारैः । अङ्ग्यकारि—स्वप्रबन्धेऽङ्गीकृतम् । न्यासार्यैः—सुदर्शनगुरुभिः । तत्—चतुःसूत्र्याः शास्त्रोपोद्घातरूपत्वम् । श्रुतमिति—आचार्यसकाशादेवमेव श्रुतमिति । द्विः—श्रुतप्रदीपिकाश्रुतप्रकाशिकाभ्यां वारद्वयम् । न्यासि—व्याख्यातम् । तत्, विष्णुचित्तैः—शठमर्षणगोत्रप्रभवैः प्रमेयसंग्रहादिग्रन्थकर्तृभिः श्रीविष्णुचित्तार्यैः । विशदम्—विस्पष्टतया । विवव्रे—विवृतम् । अहमपि—आचार्यानुग्रहवशेपेण वेदान्तद्वयप्रतिष्ठापनधुरन्धरोऽहमपि । शेषकल्पात्—प्रकृष्टविज्ञानभूम्ना फणिराजतुल्यात् ।

वादिहंसाम्बुवाहात्—न्यायकुलिशादिग्रन्थनिर्मातुरात्रेयरामानुजदेशिकेन्द्रात् । यत्—यतः । इदम्—चतुस्सूत्र्याः साकल्येन शास्त्रोपोद्घातरूपत्वम् । अश्रौषम्—श्रुतवानस्मि । अतः—तस्मात्कारणात्, अनेकाचार्यनिरूढत्वात् मयाप्याचार्यसकाशे तथा श्रुतत्वाच्च । चतुरधिकरणी—जिज्ञासाधिकरणजन्माद्यधिकरणशास्त्रयोनित्वाधिकरणसमन्वयाधिकरणात्मिकाऽधिकरणचतुष्टयी सकलाऽपि । ब्रह्मचिन्तोद्यमार्था—ब्रह्मविचारारम्भनिर्वाहकतया शास्त्रोपोद्घातरूपेति । अद्धा—तत्त्वेन । निर्धार्यते—निश्चीयते । अस्माभिरिति शेषः । यद्वा 'यत्तत्कृत्यं श्रुतीनाम्' इत्यादाविव यत्तदिति पदद्वयं यत्पदार्थे वर्तते । तथा च यत्तदग्रणि, अङ्ग्यकारि न्यासि विवव्रे च तदिदमहमप्यश्रौषम्, अतश्चतुराधिकरणी ब्रह्मचिन्तोद्यमार्था निर्धार्यत इत्यन्वयः ॥ २५ ॥

व्युत्क्रम्यात्राद्यतुर्यावभिदधति नयौ केचिदप्राप्तमेतद्
बोधासिद्धौ कथं तत्फलमिह विमृशेत् सिद्धवत्कारमान्द्यात् ।
मध्यौ द्वौ रूपनामप्रजननविषयौ यद्विदुस्तच्च मन्दं
सत्युक्तेऽपेक्षितेऽर्थे विफलविभजनं नोचितं नीतिसूत्रे ॥ २६ ॥

इति शास्त्रावतारः

चिन्ता०—अत्र स्वपक्षेण चतुस्सूत्र्युपोद्घातत्वमुक्त्वा व्यत्ययेन चतुस्सूत्र्यां परवाद्युक्तां प्रक्रियामपन्यायमूलतयाऽनुभाष्य प्रतिक्षिपति—व्युत्क्रम्येति । इत्थं किलाहुरन्ये 'शारीरकाद्यसूत्रे प्रतीतिसाफल्यकथनम् । प्रतीत्युत्पत्तिकथनं तु समन्वयसूत्रे' इति । एतदप्राप्तमेव । कथमप्राप्तत्वमित्याशङ्क्य तत्र हेतुमाह—बोधासिद्धाविति । सति धर्मिणि धर्माश्चिन्त्यन्त इति हि न्यायः । तेन सिद्धे बोधे साफल्यासाफल्यचिन्तनं न्याय्यम् । नपुनः प्रागेव साफल्यादिचिन्तनं क्रियते । अनागतावेक्षणन्यायेन सिद्धं कृत्वा चिन्त्यत इति चेत् तदपि न, तस्य न्यायस्य मन्दगतित्वात् । तदिदमाह—सिद्धवत्कारमान्द्यादिति । परपरिकल्पितं प्रक्रियान्तरमपि प्रतिक्षिपति—मध्याविति । रूपप्रपञ्चनिर्माणकथनं जन्माद्यधिकरणे, नामप्रपञ्चनिर्माणकथनं शास्त्रयोन्यधिकरण इति तै रुच्यते । तदार्तम् 'इमानि भूतानि' इति रूपनामप्रपञ्चयोर्जन्मनि साधारण्येन श्रुत्यैव साक्षादुक्ते भवद्भिरपि तथैवोक्ते तस्मिन्नपेक्षिते च सति विफलविभजनमनुचितमेवेति भावः । पुराणादिषु साधारण्येनैकवारमुच्यते, पुनर्विभज्याप्युच्यते, तद्वदस्मिन्निर्वाह इति चेत् तत्राह—नीतिसूत्र इति । काव्यपुराणादिषु यथाकथंचित्कथनमस्तु । न्याय

निबन्धनात्मके शास्त्रे सफलमेव सकलं सर्वदा वक्तव्यमिति नीतिविदां निर्णयः । निष्फलं च भवत्कथितं विभजनमित्याचक्ष्महे ॥ २६ ॥

इति शास्त्रावतारः ।

पद०—व्युत्क्रम्येत्यादि । केचित्—दर्शनान्तरस्थाः केचन । अत्र—ब्रह्ममीमांसाशास्त्रे । आद्यतुर्यौ नयौ व्युत्क्रम्याभिदधति—आद्यसूत्रे प्रतीतिसाफल्यकथनम् , प्रतीत्युत्पत्तिकथनं तु समन्वय सूत्र इत्यर्थक्रमेण समन्वयसूत्रं प्रथमं विन्यस्य जिज्ञासासूत्रमनन्तरं विन्यस्याभिदधति । एतत्—एवं कल्पनम् । अप्राप्तम्—अयुक्तम् । बोधासिद्धौ—हेतुभूतस्य ब्रह्मबोधस्य पूर्वमसिद्धौ । तत्फलम्—ब्रह्मबोधफलं विचारम् । इह—प्रथमविन्यस्ते जिज्ञासासूत्रे । कथं विमृशेत्—कुतः प्रतिपादयेत् । सिद्धवत्कारमान्द्यात्—अनागतावेक्षणन्यायेन सिद्धं कृत्वा चिन्तनस्य मान्द्यात्—मन्दगतित्वादयुक्तत्वैवेत्यर्थः । मध्यौ—जिज्ञासाधिकरणसमन्वयाधिकरणमध्यनिविष्टौ । द्वौ—जन्मादिनयशास्त्रयोनित्वनयौ । रूपनामप्रजननविषयौ यद्विदुस्तच्च मन्दम्—तत्र जन्मादिनयो रूपप्रपञ्चनिर्माणविषयः, शास्त्रयोनित्वनयो नामप्रपञ्चनिर्माण-विषय इति विभक्तविषयौ यदवेदिषुस्तच्च मन्दमनुचितम् । अर्थे—रूपनामप्रपञ्चयोः साधारण्येन जन्मरूपेऽर्थे । सत्युक्ते—उक्ते सति । श्रुत्यैव साक्षादुक्ते भवद्भिरपि तथैवोक्ते सति । अपेक्षिते—तस्मिन्नपेक्षिते च सति । नीतिसूत्रे—काव्यपुराणादिवद्बहुफलोक्तिपुनरुक्त्याद्यनर्हे न्यायकलापरूपे सूत्रे । विफलविभजनं नोचितम्—विभज्योक्तेः फलाभावेऽपि विभज्यार्थकथनमनुचितमेवेत्यर्थः ॥ २६ ॥

इति शास्त्रावतारः

# अधिकरण सारावल्यां

प्रथमस्याध्यायस्य प्रथमः पादः ।

## जिज्ञासाधिकरणम् ।

सूत्रम् । अथातो ब्रह्मजिज्ञासा । १ ।

कार्ये व्युत्पत्तिराद्या नियतमिति गिरस्तत्परा एव सर्वा
नान्या वेदेऽपि नीतिस्तत उपनिषदामूषरप्रायतैव ।
नातस्तद्वेद्यमीमांसनमुचितमिति प्रत्यवस्थीयमाने
सिद्धे व्युत्पत्तिमाद्यां बहुमुखमवयन् ब्रह्म जिज्ञास्यमाह ॥ २७ ॥

चिन्ता०—एवं कर्मविचारानन्तरमधिकर्तव्यस्य शारीरकशास्त्रस्याधिकारिविशेषप्रतिपत्त्यर्थं शास्त्रोपोद्घातरूपप्रथमाधिकरणपूर्वपक्षोपन्यासप्रकारानुसारेण राद्धान्तप्रक्रियावैविध्यमप्युपदर्शयन् सूत्रप्रधानभूतब्रह्मजिज्ञासां प्राधान्येन प्रदर्शयति सूत्रकार इति प्रकटयति—कार्य इति । शारीरकशास्त्रोपोद्घातरूपमिदमधिकरणमित्युक्तम् । अधिकरणं च पञ्चाङ्गम् । यथाऽऽह—

'विषयः संशयश्चैव विचारो निर्णयस्तथा ।
प्रयोजनं च पञ्चाङ्गं प्राञ्चोऽधिकरणं विदुः ॥' इति ।

दशाङ्गमित्याहुराचार्याः ।

'संगतिर्विषयश्चैव संशयोत्थानकारणम् ।
संशयस्य प्रकारश्च तदर्था च विचारणा ॥
तस्यां फलफलित्वं च न्यायौ द्वौ पक्षयोर्द्वयोः ।
निर्णयस्तत्फलं चेति बोध्यान्यधिकृतौ दश ॥' इति ।

विषयोऽपि द्विविधः । अधिकरणप्रतिपाद्यार्थस्तावदेकः प्रधानः । तत्प्रतिपादकश्रुतिरवान्तरविषयः । तत्र प्रधानविषयमाद्यस्याधिकरणस्य दर्शयति—ब्रह्म जिज्ञास्यमिति । सर्वाधिकरणमुखग्रहणाय

संगत्यादिकमप्येकत्र विव्रियते । शास्त्रकाण्डद्विकाध्यायपादपेटिकाधिकरणसूत्रभेदादष्टविधा संगतिर्वक्तव्या । अस्याधिकरणस्य वेदवाक्यार्थविचारात्मकत्वात् शास्त्रसंगतिः । वेदान्तवाक्यार्थविचारात्मकत्वात् काण्डसंगतिः । सिद्धविषयनिरूपणपरत्वात् प्रथमद्विके । समन्वयप्रधानत्वात् प्रथमाध्याये । अयोगव्यवच्छेदप्रतिपादनरूपत्वात् प्रथमपादे । शास्त्रोपोद्घातरूपत्वात् प्रथमपेटिकायाम् । तत्रापि प्रतीतिजननार्थत्वात् पेटिकापूर्वभागे समन्वयप्रधाने । 'अन्ते हरौ तद्दर्शनात् स विष्णुराह हि तं ब्रह्मेत्याचक्षते तं ब्रह्मेत्याचक्षते' इति देवताकाण्डान्तिमाधिकरणप्रतिपन्नसर्वदेवतान्तर्यामिरूपविष्णुपरत्वात् पूर्वाधिकरणेन संगतिः । तत्रापि 'तं ब्रह्मेत्याचक्षते तं ब्रह्मेत्याचक्षते' इति प्रधानतया द्विरुक्तब्रह्मशब्दस्य साक्षादुपादानात् सूत्रसंगतिरपीति । विषयः प्रागेवोक्तः । संशयोत्थानकारणं तु समानधर्मादिष्वेकमेव ग्राह्यम् । ब्रह्मजिज्ञासापरं शास्त्रमारम्भणीयं न वेति संशयप्रकारः । तदर्थविचारस्तु—वेदान्ता ब्रह्मणि प्रमाणं न वेति । तदर्थमपि विचार्यते—सिद्धे व्युत्पत्तिरस्ति न वेति । तदर्थं विचार्यते-कार्यपरवृद्धव्यवहारादन्यत्राद्यव्युत्पत्तिः संभवति न वेति । तत्रापि किंचिद्विचार्यते—कार्य एव व्युत्पत्तिनियमेऽपि सिद्धे तात्पर्यं संभवति न वेति । फलफलिभावस्तु प्रधानतयाऽभिमते परस्मिन्ब्रह्मणि व्युत्पत्त्यसंभवात् सत्यपि वा वृद्धव्यवहारादन्यत्राद्यव्युत्पत्त्यभावाच्च सिद्धे ब्रह्मणि व्युत्पत्त्यभावेन वेदान्तानां ब्रह्मणि प्रामाण्यस्य शङ्कितुमप्यशक्यत्वादप्रमाणभूतवेदान्तवाक्यार्थविचाररूपब्रह्मविचारो न कर्तव्य इति पूर्वपक्षे । राद्धान्ते त्वेतद्विपर्ययेण फलफलिभावो वक्तव्यः । अत्र पूर्वपक्षन्यायो व्युत्पत्त्यभावः । राद्धान्तन्यायस्तु व्युत्पत्तिसद्भावः । निर्णयस्त्वारम्भणीयत्वनिर्णयः । फलं शास्त्रारम्भः । एवमाद्याधिकरणप्रक्रिया । तत्र प्रथमाधिकरणे पूर्वपक्षसिद्धान्तावारचयति—कार्य इति । आद्या व्युत्पत्तिः कार्य एव नियता । अतः सर्वे शब्दाः कार्यपरा एव । अस्तु लोके तादृशी नीतिः, वेदे त्वन्यथेत्याशङ्क्य प्रतिक्षिपति—नान्येति । लोकवेदाधिकरणन्यायेन वेदे न न्यायान्तरं कल्पनीयमित्यर्थः । फलितमाह—नात इति । ऊपरकल्पस्य वेदान्तस्य चिरकालोपार्जनेऽपि नैष्फल्यमेवेति भावः । तेन वेदान्तवेद्यपरब्रह्मचिन्तनं न कार्यमिति प्रत्यवस्थीयमाने प्रतिक्षिप्यमाणे शास्त्रारम्भे सिद्धे व्युत्पत्तिमाद्यां बहुमुखमवयन् निश्चिन्वन् ब्रह्म जिज्ञास्यमाह सूत्रकारः । तदनुसारेण भाष्यकारोऽपीत्यर्थः ॥ २७ ॥

पद०—कार्ये व्युत्पत्तिरित्यादि । आद्या व्युत्पत्तिः—प्राथमिकः शक्तिग्रहः । कार्ये—कार्यार्थ एव । इति नियतम्—निश्चितमिदमव्यभिचरितम् । अतः सर्वा गिरः—सर्वेऽपि शब्दाः । तत्परा ""—कार्यपरा एव । वेदेऽपि अन्या नीतिर्न—लोकवेदानन्यत्वन्यायेन वेदेऽपि न्यायान्तरं नास्ति । किं तु सर्वशब्दानां कार्यपरत्वमेव । ततः—तस्मात्कारणात् । उपनिषदामूपरप्रायतैव—

उपनिषदां चिरकालमध्ययनधारणादिभिर्गोपितानामपि वेदान्तभागानामूषरप्रायत्व, ऊपरवन्नैष्फ-ल्यमेव । अतः—कारणात् । तद्ब्रह्ममीमांसनं नोचितम्—तादृशोपनिषद्ब्रह्मविचारोऽनुचितः । इति प्रत्यवस्थीयमाने—एवं शास्त्रारम्भे प्रतिक्षिप्यमाणे सति । आद्या मेव व्युत्पत्तिं सिद्धे बहुमुखमवयन्—प्राथमिकं शक्तिग्रहमेव सिद्धेऽर्थे बहुमुखतया निश्चिन्वन् । ब्रह्म जिज्ञास्यमाह—ब्रह्म विचार्यमिति जिज्ञासासूत्रेण सूत्रकार आह, तथैव भाष्यकारश्चेत्यर्थः ॥ २७ ॥

अङ्गुल्या निर्दिशन्तः किमपि किमपि तद्वाचकांशैः प्रयुक्तै-
र्बालान् व्युत्पादयन्ति क्रमभवमिलितज्ञापकत्वं विदन्तः ।
सङ्घातास्ते पदानां विदधति च धियं क्वापि सिद्धे विशिष्टे
कर्तव्ये क्वापि चेति क्वचिदिह नियतिः शब्दशक्तेर्न कल्प्या ॥ २८ ॥

चिन्ता०—सिद्धव्युत्पत्तिप्रकाराणां बहुमुखत्वमुक्तम् । तेष्वाबालगोपालं प्रसिद्धं परवादिभिरल-ङ्घनीयं तावदेकं प्रकारमाह—अङ्गुल्येति । इत्थं किल बालान् व्युत्पादयन्ति लौकिकाः । मातापित्रादयो ह्यग्रस्थितं किमपि किमपि वस्तु अङ्गुल्या निर्दिशन्तः, अङ्गुलिनिर्देशेन सह प्रयुक्तैरयं तात इयं माता मातुलोऽयमित्यादिभिर्वाक्यै र्बालान् व्युत्पादयन्ति । व्युत्पादकानामङ्गुलिनिर्देशस्तु बालानां तत्तदर्था-भिमुख्यार्थम् । ते बालाश्चानादिसंसारे संस्कारपाटवस्य बहुत्वात्, अङ्गुलिनिर्देशानां तत्तदर्थोपदेशा-भिप्रायपूर्वकत्वं जानन्ति । एवं च सति सर्वेषां शब्दानामङ्गुलिनिर्देशमन्तरेणापि तत्तच्छब्दप्रयोगे चिरकालोत्पन्नसहोपदेशजनितसंस्कारसामर्थ्यात् तत्तदर्थप्रतीतिर्जायते । तत्र बाला निश्चिन्वन्ति 'एत-च्छब्दप्रयोगे खल्वस्माकमेतदर्थप्रतिपत्तिः । सा च शब्दार्थयोः संबन्धनिबन्धना । संयोगादिसंबन्धान्तरं च न दृश्यते । सङ्केतपरिक्लृप्तौ सङ्केतहेतुभूतपुरुषादिकल्पनागौरवम् । तस्माद् बोध्यबोधकभावसंबन्ध एवात्र संबन्धः' इति । अस्त्वेकैकत्र तत्तच्छब्दप्रतिपत्तिः, तथापि वाक्यार्थरूपमिलितप्रमितिः कथमिति चेत्तत्राह-क्रमभवेति । चिरकालानुभवात् तत्तन्मिलितप्रयोगाच्च मिलितव्युत्पत्तिरपि बालानां भविष्यतीति व्युत्पा-दका जानन्त्येव । व्युत्पादनीयाश्च बालास्तथैव व्युत्पद्यन्ते । ननु कार्यव्युत्पत्तिं प्रतिक्षिपतस्तव प्रयोज्यप्रयो-जकवृद्धव्यवहारविरोध इत्याशङ्क्याह—सङ्घाता इति । न वयं कार्य एव व्युत्पत्तिः सिद्ध एव व्युत्पत्ति-रित्येकं पक्षं पक्षपातेनाचक्ष्महे । अपि तूभयमपि पक्षं कक्षीकुर्महे । यदि सिद्धे व्युत्पत्तौ विशिष्टरूप-वाक्यार्थप्रतिपत्तिर्न स्यात्, तर्हि कार्ये व्युत्पत्तावपि वाक्यार्थप्रतिपत्तिर्न स्यात् । यथावापोद्वापस-समभिव्याहारसामर्थ्याद् वाक्यार्थप्रतिपत्तिमुपपादयसि कार्ये, सिद्धे वयमपि तथैवोपपादयाम इति समः

समाधिः । यद्यभिहितान्वयो न्यायसिद्धः, तदा ' पदैरभिहिताः ' इत्युक्तप्रकारेण प्रतिपदव्युत्पत्तिपूर्वकं वाक्यार्थप्रतिपत्तिः सुलभा । यदिवाऽन्विताभिधानम् , तदानीमपि संसृष्टरूपवाक्यार्थद्योतकाभिनयेषु वाक्यार्थप्रतिपत्तिवत् पूर्वपूर्वानुभवजनितस्मरणसहकृतेन क्रमभवमिलितज्ञापकत्वानुसन्धानेन वाक्यार्थप्रतिपत्तिर्जायत इति साधारणोऽयं व्युत्पत्तिमार्गः । कार्यान्वितस्वार्थे व्युत्पत्तिरिति वदन्ति प्राभाकराः । वयं पुनः क्रियाकारकपदयोरर्थानुवृत्त्यर्थं योग्येतरान्वितस्वार्थे पदानां व्युत्पत्तिरिति निश्चित्याचक्ष्महे इति भावः ॥ २८ ॥

पद०—अङ्गुल्येत्यादि । **किमपि किमपि**—शिशुपशुप्रभृति किमपि किमपि वस्तु । **अङ्गुल्या निर्दिशन्तः**—अङ्गुल्या प्रदर्शयन्तः । **क्रमभवमिलितज्ञापकत्वं विदन्तः**—चिरकालानुभवक्रमेण मिलितप्रयोगाच्च बालानां क्रमेण भाविनीं मिलितार्थव्युत्पत्तिमपि जानन्तो मातापित्रादयः । **प्रयुक्तैस्तद्वाचकांशैः**—' अयं शिशुः, अयं पशुः, अयं तातः, इयमम्बा, अयं मातुलः, इति स्वयमङ्गुलिनिर्देशसमकालमुच्चारितैस्तैस्तैः शब्दैः । **बालान्**—ग्रहणधारणपटून् । **व्युत्पादयन्ति**—शब्दानामर्थबोधनशक्तिं ग्राहयन्ति । **पदानां ते संघाताश्च**—व्युत्पादकप्रयुक्ताः पदसंघाताश्च । **क्वापि**—क्वचित् । **विशिष्टे सिद्धे धियं विदधति**—जातिगुणक्रियादियुक्ते सिद्धेऽर्थे बुद्धिं संपादयन्ति । **क्वापि**—क्वचित् । **कर्तव्ये विशिष्टे च**—आनयनादिक्रियासंबन्धिन्यर्थे च बुद्धिं जनयन्ति । **इति**—हेतोः । **शब्दशक्तेः**—शब्दानां बोधनशक्तेः । **इह क्वचित् नियति र्न कल्प्या**—सिद्धरूपेऽर्थ एवेति वा कार्यरूपेऽर्थ एवेति वा निर्बन्धो न कल्पनीयः । यथादर्शनमुभयत्र शक्तिसंभवादिति भावः ॥ २८ ॥

**संसारे ऽनादिसिद्धे मुहुरनुभवतः सञ्चिताः संस्क्रियाः स्युः**
**संस्कारोद्बोधकाश्च स्वयमुपनिपतन्त्यप्रकम्प्यात्प्रवाहात् ।**
**तत्तज्जातीयभेदग्रहणसमुचिता वृत्तयस्तन्निदानाः**
**तद्वत्स्याच्छिक्षकादिव्यवहृतिषु शिशो रैदमर्थ्यादिबोधः ॥ २९ ॥**

चिन्ता०—नन्वस्तु पूर्वसंस्कारप्राचुर्यात् शब्दव्युत्पत्तिः, तथापि प्रलयादौ कृत्स्नसंस्कारविच्छेदाद् आद्ये जन्मनि कथं व्युत्पत्तिः ? तत्रापि यदि व्युत्पत्तिर्न स्यात् संस्कारेण कथं वा तदुत्तरस्मिन्नपि जन्मनि व्युत्पत्तिरिति, एवं जन्मनिजन्मनि कथं व्यवहारसिद्धिरिति बालकः कश्चिदाह । एवमादिशङ्कापरिहारार्थं श्लोकान्तरमारभते—संसार इति । ' वीतरागजन्मादर्शनात् ' इति सूत्रोक्तप्रक्रियया संसारस्यानादित्वात् नायं दोष इति दर्शयति—**अनादिसिद्ध** इति । कथं त्रिचतुरादिभिः संस्कारैरेतादृशी महती व्युत्पत्तिरिति

पुनरप्याशङ्कयाह—मुहुरिति । सहस्रमपि संस्कारा भवन्तु नाम । कथं तदुद्बोधकाभावे कार्यसिद्धिरित्यत्रोत्तरमाचष्टे—संस्कारोद्बोधका इति । यथा संस्कारा बहवः कारणप्रवाहवैचित्र्यबाहुल्यात् तथा तदुद्बोधकाश्च सहस्रशः संभवन्तीति भावः । अथाप्यनुमानमन्तरेण शयनासनभोजनव्यवहारादयः सर्वेऽपि न संभवन्ति, अनुमानं चेष्टसाधनजातीयत्वग्रहणमन्तरेण न सेत्स्यति, तस्मादस्य ग्रहणपाटवाभावात् कथं व्युत्पत्तिरिति, तत्रोत्तरमाह—तत्तदिति । वृत्तयः—बुद्धिवृत्तयः । साजात्यग्रहणसमुचिता बुद्धिवृत्तिः संस्कारपाटवात्सिध्यति, लोकव्यवहारस्य दृष्टत्वात् । तच्च संस्कारपाटवमनतिलङ्घनीयमेव, अन्यथा भाषाव्यवहारोप्युच्छिद्येत, तदुच्छेदे मूकतैव शरणं स्यात् । अस्तु संस्कारपाटवात् प्रबुद्धानामियं व्यवहारपरिज्ञानपरिपाटी । अप्रबुद्धानां बालकानां कथं व्युत्पत्तिरिति परिचोदनां परिहरति—तद्वदिति । सद्यस्संजातानामपि स्तन्याभिलापादिदर्शनेन संस्कारपारम्परी कल्प्यते न्यायवादिभिः । किं पुनः पञ्चवर्षपरिमितानां बालकानाम् । तेषामपि भाषाव्युत्पत्तिर्मातापित्रादिव्यवहारबलात् प्रागेव सिद्धा । किमनेन संस्कृतव्युत्पत्तिविडम्बनेन । तत्रापि सिद्धव्युत्पत्तिविडम्बनवत् कार्यव्युत्पत्तिविडम्बनं स्वयमेव सिद्धमिति सिद्धं नः समीहितम् । तद्वदिति कृत्स्नस्यापि लोकव्यवहारपरिज्ञानस्य दृष्टान्ततयोपादानम् । दार्ष्टान्तिकं तावद् द्रष्टव्यमिति नेह प्रदर्श्यते ॥ २९ ॥

पद०—संसार इत्यादि । अनादिसिद्धे संसारे—अनादितया संमते जननमरणप्रवाहे । मुहुरनुभवतः संस्क्रियाः सञ्चिताः स्युः—तत्तदर्थानां पुनःपुनरनुभवेन संस्काराः स्मृतिहेतवो बुद्धिगुणविशेषाः संपादिता भवेयुः । अप्रकम्प्यात्—दुर्निवारात् । प्रवाहात्—नष्टवस्तुजातीयानामुत्तरकालेषु यावत्स्वप्यनुवृत्तिरूपात्प्रवाहात् । संस्कारोद्बोधकाश्च—स्मृतिहेतूनां संस्काराणामुद्बोधकाः सन्धुक्षकाश्च पदार्थाः । स्वयम्—बोद्धृप्रयत्नं विना । उपनिपतन्ति—इन्द्रियसंयुक्ता भवन्ति । तत्तज्जातीयभेदग्रहणसमुचिताः—इष्टसाधनजातीयानां पूर्वजन्मपीतस्तनादिजातीयानामिदानीं रसनादिसंयुक्तानामतज्जातीयेभ्यो यो भेदो विशेष इष्टसाधनत्वानुमापकधर्मः, तस्य ग्रहणे ऽवभासने समुचिताः समर्थाः । वृत्तयः—बुद्धिवृत्तयः । तन्निदानाः—पूर्वोक्तसोद्बोधकसंस्कारमूलकाः सिध्यन्ति । शिक्षकादिव्यवहृतिषु—शिक्षका उपाध्यायाः, आदिशब्देन हितपरा मातापित्रादयो ग्राह्याः । तेषां व्यवहृतिषु—अङ्गुलिनिर्देशपूर्वकतत्तच्छब्दप्रयोगेषु । शिशोरैदमर्थ्यादिबोधः—बालानामस्माकं शक्तिग्रहणार्थमियं चेष्टा, अयं शब्दप्रयोगश्चेत्याद्यवगतिः । तद्वत्स्यात्—सद्यः प्रसूतशिशूनां स्तन्यपानादिप्रवृत्तिवद् भवेदेवेत्यर्थः ॥ २९ ॥

दक्षैराधोरणाद्यैरनुमितविविधस्वप्रयासोपयोगैः
शिक्षाभेदा विचित्रा गजविहगमुखान् ग्राहयद्भिः प्रयुक्ताः ।
तस्मात्सार्थो मनुष्यप्रभृतिषु च तथाभूतशिक्षाविशेषः
कल्पो भाष्योदितोऽयं न यदि कथमसौ कल्पतेऽन्योऽपि मार्गः ॥३०॥

चिन्ता०—ननु कथमयं व्युत्पत्तिप्रकारो बालमूकादिबहुले जगति सार्थो भविष्यतीत्याशङ्कमानस्यात्यन्तमूढस्य प्रबोधनार्थं पुनरप्यत्यन्तप्रसिद्धदृष्टान्तोपादानेन प्रदर्शयितुमारभते—दक्षैरिति । प्रायेण सत्त्वप्रचुराः खलु मनुष्यप्रभृतयः, तमःप्रचुरा रजःप्रचुराश्च गजविहगतुरंगादयः । तेषामाधोरणाद्या गजादिशिक्षकाः शिक्षां कुर्वन्ति । सा च शिक्षा सफलैव लोके दरीदृश्यते । शिक्षकाः शिक्षासाफल्यानुमित्यैव प्रवर्तन्ते । इत्थमत्यन्ताशक्यार्थसिद्धावत्यन्तसुग्रहमेव मनुष्यादिषु शिक्षासाफल्यमित्याह—तस्मादिति । एवं भाष्यकारविरचितसिद्धव्युत्पत्तिप्रकारानङ्गीकारे भवत्कल्पितकार्यव्युत्पत्तिप्रकारोऽपि न सिध्यतीति प्रतिबन्दीं दर्शयति—कल्प इति । तत्र परोक्तापूर्वखण्डनं श्रीमद्भाष्ये श्रीवत्साङ्कविरचितापूर्वभङ्गे च द्रष्टव्यम् ॥ ३० ॥

पद०—दक्षैरित्यादि । दक्षैः—शिक्ष्यगुणानुगुण्येन शिक्षाप्रयोगसमर्थैः । अनुमितविविधस्वप्रयासोपयोगैः—अनुमिताः भूयोदर्शनगृहीतव्याप्तिकैर्हेतुभिर्निश्चिताः, विविधस्वप्रयासोपयोगाः नानाविधस्वकीयशिक्षासाफल्यानि यैस्ते तादृशैः । गजविहगमुखान् ग्राहयद्भिः—गजविहगतुरगादीन् व्युत्पादयद्भिः । आधोरणाद्यैः—हस्तिपकप्रभृतिभिः । प्रयुक्ताः—प्रयोजिताः । विचित्राः—नानाविधाः । शिक्षाभेदाः—शब्दशक्तिग्रहणोपायविशेषाः । दृश्यन्ते इति शेषः । किमुत मनुष्येषु तादृशशब्दशक्तिशिक्षणसाफल्यस्येति भावः । तस्मात्—तमःप्रचुरेषु गजविहगादिष्वपि निरुक्तशब्दशक्तिशिक्षणसाफल्यदर्शनात् । मनुष्यप्रभृतिषु च तथाभूतशिक्षाविशेषः—तादृशशब्दशक्तिग्रहणोपायप्रयोगभेदः । सार्थः—सफल एव । भाष्योदितः—भाष्ये प्रतिपादितः । अयं कल्पः—लोके मातापित्रादिभिर्बालेषु प्रयुज्यमानो ऽम्बातातमातुलचन्द्रशिशुपशुप्रभृतिशब्दार्थव्युत्पादनप्रकारः । न यदि—न संपद्यते यदि । असावन्यो मार्गोऽपि कथं कल्पते—भवद्भिः प्रतिपादितः कार्यार्थशक्तिव्युत्पादनप्रकारोऽपि वा कथं सिध्यति । अस्मदुक्तदूषणे युष्मदुक्तमपि तथैव दूष्येतेति भावः ॥ ३० ॥

कस्मैचित् सिद्धमर्थं कमपि कथयितुं चेष्टया चोद्यमान-
स्तस्मै तं वक्ति तद्धीसमविषयतया शिक्षते तद्वचोऽन्यः ।
आदिष्टो बोधनार्थं यदिह वितनुते तत्तदर्थं हि युक्तं
तद्वाक्यात् सिद्धवेदी प्रयतत इति चेदस्त्वनादेशिकं तत् ॥ ३१ ॥

चिन्ता०—प्रकारान्तरेणापि सिद्धे व्युत्पत्तिः सुलभेति दर्शयति—कस्मैचिदिति। इत्थमिह प्रक्रिया, देशान्तरस्थितस्यान्यत्र पुत्रे संजाते तत्समीपस्थितो मौनी कश्चित् पुत्रस्ते जात इति देवदत्ताय बोधयेति स्वोपान्तस्थितमन्तेवासिनं चेष्टयाऽऽदिशति । स चान्तेवासी सहसैव गत्वा देवदत्ताय तथैवाचष्टे। उभयत्र सहावस्थितो बालकः कश्चिन्मूकवत् चेष्टाविशेषज्ञः पुत्रजननबोधनाय यातीति जानाति, तथा च तेन वाक्ये प्रयुक्ते पुत्रजन्मबोधकमिदं वाक्यमिति प्रतिपद्यते । तद्धीसमविषयतया—बोधकशिष्यधी-समविषयतया । तद्वचः शिक्षते—तद्वाक्यं व्युत्पद्यत इत्यर्थः । अत्र प्रतिपदव्युत्पत्तिरप्यावापोद्वापाभ्यां सिध्यतीति सर्वेषामपि समानम् । न हि कार्ये व्युत्पत्तिरप्यावापोद्वापपरित्यागेन सिध्यति । अथाप्ययमेवा-नेन वाक्येनान्तेवासिना प्रोक्त इति कथमिव निश्चिनुते बालकः ? इत्थमेव निश्चिनुत इत्याह—आदिष्ट इति । यो यदर्थमादिष्टः स तत्कुरुत इति लोकसिद्धमेतत् । तेन योग्यतावशाद् विशेषार्थसिद्धिरिति भावः । चोदयति—तद्वाक्यादिति । पुत्रजन्मवाक्यश्रवणानन्तरं देवदत्तो जातकर्मादिषु प्रवर्तते तदेव कार्यरूपं वाक्यार्थ इति, अत्राप्यन्ततः कार्यव्युत्पत्तिरेव स्यादिति, अत्रोत्तरम्—अस्त्विति । पुत्रजन्मनः प्राधान्यात् शब्दानामावापोद्वापादिसहकारिसामर्थ्याद् बालस्यापि तत्तद्विशेषपरिज्ञानवैचक्षण्याच्च पुत्रजन्मैव वाक्यार्थ इति निश्चयो जायते । उत्तरोत्तरकार्यकरणं तु श्रोतुः स्वबुद्ध्यैव जायते । गृहमलङ्कुरुते बान्धवाना-कारयति जातकर्मादिकं करोति गां ददाति भेर्यादिकमुद्घोषयति किमेतादृशं सकलमपि पुत्रजन्म-वाक्यार्थ इति प्रतिपद्यते भवानपि ? तस्मादनेनापि प्रकारेण सिद्धे व्युत्पत्तिरपि सिध्यति ॥ ३१ ॥

पद०—कस्मैचिदित्यादि । कस्मैचित्सिद्धं कमप्यर्थं कथयितुं चेष्टया चोद्यमान-स्तस्मै तं वक्ति—देवदत्ताय पुत्रस्ते जात इतीममर्थं वक्तुमाचार्येण केनचिद् हस्तचेष्टया नियुज्यमानः कश्चिच्छिष्यस्तस्मै तमर्थं वाचा वदति । अन्यस्तद्धीसमविषयतया तद्वचः शिक्षते—उभयत्र सहाव-स्थितोऽन्यो बालः कश्चित् चेष्टाविशेषज्ञो नियोजकचेष्टाजन्यनियोज्यबोधकशिष्यवृत्तिधीसम[illegible]त्वेन शिष्येण देवदत्तायोच्यमानं वचः शिक्षते । शिष्येण देवदत्ताय वाक्ये प्रयुक्ते पुत्रजन्मबोधकमिदं वा[illegible]मिति प्रतिपद्यत इत्यर्थः । बोधनार्थमादिष्टो यदिह वितनुते तत् तदर्थं हि युक्तम्—पुत्रजन्मबोधनार्थं

नियुक्तः शिष्यो यदेतदिह वाक्यं प्रयुनक्ति तद्वाक्यं तदर्थकमित्येव हि युक्तम् । तद्वाक्यात् सिद्धवेदी प्रयतत इति चेत्—पुत्रजन्मवाक्यश्रवणानन्तरं सिद्धार्थवेदी देवदत्तो जातकर्मादिषु प्रवर्तते तदेव कार्यरूपं वाक्यार्थ इति चेत् । अस्तु तद् अनादेशिकम्—जातकर्मप्रवृत्त्यादिकमस्तु, तद् वाक्योपदेशवाच्यं न भवति । किं तु स्वबुद्धया क्रियते । पुत्रजन्मनः प्राधान्यात् शब्दानामावापोद्वापादिसहकारिसामर्थ्याद् बालस्यापि तद्विशेषपरिज्ञानवैचक्षण्याच्च पुत्रजन्मैव वाक्यार्थ इति निश्चयो जायते । उत्तरोत्तरकार्यकरणं तु श्रोतुः स्वबुद्धयैव जायते । गृहमलङ्कुरुते बान्धवानाकारयति जातकर्मादिकं करोति गां ददाति भेर्यादिकमुद्घोषयति किमेतादृशं सकलमपि पुत्रजन्मवाक्यार्थ इति भवानपि वा संमनुत इति भावः ॥ ३१ ॥

पुत्रस्तेऽभून्न सर्पोऽयमिति वचनतः प्रीत्यभीत्यादिलिङ्गै-
स्तद्योग्यार्थं तदूह्यं विषयनियतिरासत्तिपूर्वैः क्वचित्स्यात् ।
आवापोद्वापभेदात् प्रतिपदनियता शक्तिरप्यत्र सिध्येद्
भूयोदृष्ट्यादिसाहायकमिह वचसः कार्यपक्षाविशिष्टम् ॥ ३२ ॥

चिन्ता०—प्रकारान्तरेणापि लोकप्रसिद्धं परवादिकल्पनाप्रसिद्धं च सिद्धव्युत्पत्तिप्रकारमाचष्टे—पुत्र इति । लोके हि पितुः समीपमागत्य पुत्रस्ते जात इति कश्चिद्वदति । तस्य च तेन मुखप्रसादो जायते । तद्वाक्यं व्युत्पित्सुरपरः शृणोति । स चानुमिनोति—एतद्वाक्यश्रवणसमनन्तरमेतस्य मुखविकासो जातः, अयं मुखविकासस्तावदनुकूलार्थप्रतिपत्तिमन्तरेण न संभवति, इयमनुकूलार्थप्रतिपत्तिरेतद्वाक्यश्रवणसमनन्तरभाविनी स्वस्या स्तदेव कारणीकरोति, अत एतद्वाक्यं पुत्रजन्मप्रत्यायकमिति । एवं निश्चिन्वानः पुत्रस्तेजात इति वाक्यार्थं प्रतिपद्यते । एवं सर्पभयजनितपलायनस्य नायं सर्प इति वाक्यश्रवणसमनन्तरं पलायनान्निवृत्तस्येदं वाक्यं सर्पाभावप्रतिपादकमिति निश्चिनोति बालकः । एवमन्यान्यप्येतादृशान्युदाहरणान्युदाहर्तव्यानीति । ननु तव गृहे निधिरस्ति, पिता ते सुखमास्त इत्यादिभिरपि वाक्यैरनुकूलार्थप्रतिपादकै र्मुखविकासो जायते । तथा तव गृहे व्याघ्रो नास्तीत्यादिप्रतिकूलार्थनिवृत्तिप्रतिपादकैः पलायननिवृत्त्यादिकं जायते । कथं पुत्रस्ते जातो न सर्पोऽयमिति वचनयो रयमर्थ इति विषयनियमः स्यात् ? स्यादेवेत्याह—विषयनियतिरिति । आसत्तिः—सन्निहितत्वम् । अत्र पूर्वशब्देन विषयान्तरानासत्तिर्गम्यते । अथवा पुत्रजन्मानुकूलजातकर्मादिप्रवृत्तिसंरम्भः । एवं नायं सर्प इत्यत्राप्यासत्त्यादिभिर्विषयनियमो वक्तव्यः । नन्वत्र सामान्यव्युत्पत्तिरेव स्यात् , न पुनः प्रतिपदव्युत्पत्तिः । कथमत्र बालको व्युत्पद्यते ? तत्राह—आवापेति । अयमर्थः । पुत्रस्ते जात इत्युक्ते मुखविकासः, एवं मृत इत्युक्ते रोदनादिकं जायते, एवं शत्रुर्जातो

मृत इति चोक्ते रोदनमुखविकासौ स्तः । तस्मादावापोद्धापावेव प्रतिपदव्युत्पत्तौ तन्त्रमिति तन्त्रज्ञाः । तस्मात् पुत्रजातादिशब्दानामत्र यथादर्शनं व्युत्पत्तिरनुसर्तव्या विचक्षणैरिति । ननु कथं कतिपयव्यवहारदर्शिनो व्युत्पद्यन्ते बालका इत्याशङ्क्य न तथा वयमाचक्ष्महे इत्याह—भूयोदृष्टीति । उक्तार्थस्थेम्ने प्रतिबन्दीमारचयति—कार्येति । कार्यवाक्यार्थवादिनोऽप्यावापोद्धापावेव प्रतिपदव्युत्पत्तौ तन्त्रमिति ॥ ३२ ॥

पद०—पुत्रस्तेऽभूदित्यादि । **पुत्रस्तेऽभूत्, न सर्पो ऽयमितिवचनतः प्रीत्यभीत्यादिलिङ्गैः**—देवदत्त पुत्रस्ते जात इत्युक्ते तस्य मुखप्रसादो जायते, सर्पभयात्पलायमानं सस्वेदवेपथुं पुरुषं प्रति, अयं न सर्प इत्युक्ते तावता तस्य पलायनस्वेदवेपथुनिवृत्तिर्जायते । अतः प्रीत्यभीत्यादिहेतुभिः । तत्—पुत्रस्तेऽभूत् नायं सर्प इति वाक्यम् । तद्योग्यार्थमूह्यम्—तथाविधप्रीतिभयनिवृत्तिहेतुभूतपुत्रजन्मसर्पाभावप्रतिपादकमिति पार्श्वस्थेन बालेन निश्चेयमेव भवति । विषयनियतिः क्वचिदासत्तिपूर्वैः स्यात्—प्रायशो विषयनियमः सिद्ध एव भवति, क्वचिदासत्तिपूर्वैर्विषयविशेषसंनिहितत्वतदन्यविषयासंनिहितत्वजातकर्मप्रवृत्त्यादिभिर्विषयविशेषनियतिः भवति । अत्र—भवदभिमतकार्यार्थव्युत्पत्ताविवास्मदभिमतसिद्धार्थव्युत्पादनप्रकरणे । आवापोद्धापभेदात्—आवापः पदान्तरप्रक्षेपः, उद्धापः स्थितपदोद्धारः, तयो र्भेदाद् विशेषात् । प्रतिपदनियता शक्तिरपि सिध्येत्—पुत्रस्ते जात इत्यादिवाक्यघटकपुत्रजातादिपदानां प्रत्येकं भिन्नभिन्ना शक्तिरपि व्युत्पद्यते । अयमर्थः—पुत्रस्ते जात इत्युक्ते मुखविकासः, एवं पुत्रो मृत इत्युक्ते रोदनादिकं जायते । एवं शत्रुर्जातो मृत इति चोक्ते रोदनमुखविकासौ स्तः । तस्मादावापोद्धापावेव प्रतिपदव्युत्पत्तौ तन्त्रमिति । ननु कथं कतिपयव्यवहारदर्शिनां बालानां व्युत्पत्तिरित्यत्राह—भूयोदृष्ट्यादीति । इह वचसो भूयोदृष्ट्यादिसाहाय्यकं कार्यपक्षाविशिष्टम्—सिद्धार्थव्युत्पत्तावपि पदानामर्थव्युत्पत्तौ भूयोदर्शनादिसाहाय्यं कार्यार्थव्युत्पत्ताविव तुल्यमेव । अतो नास्मत्पक्षेऽधिकापेक्षणमिति भावः ॥ ३२ ॥

कार्ये व्युत्पत्तिराद्या भवतु तदपि किं शक्तितात्पर्यसिद्धेः
प्राग्व्युत्पत्तिः क्रियायां नृवचसि निगमे त्वन्यथेत्यभ्युपैपि ।
स्थाप्याऽतोऽनन्यथासिद्ध्यनुगमनियतैः सत्प्रयोगैर्हि शक्तिः
कोऽसौ पाञ्चाल इत्याद्युचितविरतिकं सिद्धमात्रेऽपि वाक्यम् ॥

चिन्ता०—परोक्त कार्यव्युत्पत्तिमाद्यामङ्गीकृत्यापि कार्य एव शब्दशक्तिरिति परोक्तां प्रक्रियां

निवार्य सिद्धे व्युत्पत्तिप्रकारान्तरमप्युपदिशति—कार्य इति। आद्या व्युत्पत्तिः कार्य एवेति तु भवतु नाम। अथापि कार्य एव सर्वेषां शब्दानां शक्तिरिति नियन्तुं न शक्यते। उक्तार्थप्रतिपादनार्थं प्रतिबन्दीमाह--प्रागिति। प्राभाकराः किल प्रथमं व्युत्पत्तिं क्रियायामेव प्रतिपेदिरे लिङादेः। पश्चात् पुनः कामिनियोज्यान्वयानुपपत्त्या क्रियातिरिक्ते क्वचिदपूर्वशब्दाभिधेये शब्दशक्तिं प्रचक्षते। तेनैवं वदतस्तव परगृहवह्निप्रक्षेपप्रवृत्त्या स्वगृहस्यापि दाहः स्यात्। तर्हि कथं शक्तिनियमः शब्दानामित्यनुयुञ्जानस्य गलिताहङ्कारस्य शब्दशक्तिनियामकान् हेतूननुग्रहादुपदर्शयति—स्थाप्येति। अनन्यथासिद्धिः सुप्रसिद्धा। अनुगमोऽप्युक्तः। सत्प्रयोगोऽपि प्रसिद्धः। एतैस्त्रिभिरपि हेतुभिः सिद्धे वा कार्ये वा शब्दशक्तिरवगन्तव्येत्यर्थः। प्रकारान्तरेणापि सिद्धे व्युत्पत्तिमाह—कोऽसाविति। कोऽसावित्युक्ते पाञ्चाल इति व्यपदिशन्ति। कः पाञ्चाल इत्युक्ते, अयमिति तु स्वरूपनिर्देशेनापि व्यपदिशन्ति। तस्मात् कार्य एव व्युत्पत्तिरिति निर्बन्धो निर्निबन्धनः॥ ३३॥

पद०—कार्ये व्युत्पत्तिराद्येत्यादि। आद्या व्युत्पत्तिः—प्रथमः शक्तिग्रहः। कार्ये भवतु—कार्यार्थ एव भवतु। तदपि—तथापि। शक्तितात्पर्यसिद्धेः किम्—शक्तिपर्यवसानस्य किमायातम्। प्रथमं यस्मिन्नर्थे शक्तिग्रहः स एव शब्दार्थ इति चेत्, अयमुपायो लोकवेदयोः शक्तिग्रहप्रकारमन्यथाकल्पयता भवतैव भग्न इत्याह—प्राग्व्युत्पत्तिरित्यादि। प्राक् नृवचसि क्रियायां व्युत्पत्तिः, निगमे त्वन्यथेत्यभ्युपैषि—प्राभाकराः किल लिङादेः प्रथमं व्युत्पत्तिं क्रियायामेव प्रतिपेदिरे। पश्चात् पुनः कामिनियोज्यान्वयानुपपत्त्या क्रियातिरिक्ते क्वचिदपूर्वशब्दाभिधेये शब्दशक्तिं प्रचक्षते। अतः शक्तिग्रहस्य भिन्नभिन्नत्वाङ्गीकाराद् यावदनन्यथासिद्धप्रकारलाभं नैकत्र प्रतितिष्ठतीति भावः। तर्हि कथं शक्तिनियमः शब्दानामित्यनुयुञ्जानस्य गलिताहङ्कारस्य शब्दशक्तिनियामकान् हेतून् अनुग्रहादेव दर्शयति—स्थाप्याऽत इत्यादिना। अतो ऽनन्यथासिद्ध्यनुगमनियतैः सत्प्रयोगैर्हि शक्तिः स्थाप्या। अतः—उक्तानुपपत्तितः। अनन्यथासिद्ध्यनुगमनियतैः—लक्षणादिवृत्त्यन्तरैः संभावितत्वमन्यथासिद्धिः। तदभावो ऽनन्यथासिद्धिः। सर्वप्रयोगसंबन्धो ऽनुगमः। एताभ्यां नियतैः—युक्तैः। सत्प्रयोगैः—साधुप्रयोगैः। हिः प्रसिद्ध्यर्थः। शक्तिः—पदानामर्थोपस्थापनशक्तिः। स्थाप्या—व्यवस्थाप्या। को ऽसौ पाञ्चाल इत्याद्युचितविरतिकं वाक्यमपि सिद्धमात्रे—दृश्यत इति शेषः। कोऽसावित्युक्ते पाञ्चाल इति व्यपदिशन्ति। इत्यादि—एवमादिरूपम्। उचितविरतिकम्—यथोचितविरामयुक्तम्। [illegible]त्यादिकार्यार्थकवाक्यशेषकल्पनानर्हमित्यर्थः। वाक्यम्—उक्तिप्रत्युक्तिरूपं वाक्यमपि। सिद्धमात्रे--सिद्धार्थमात्रे प्रयुज्यमानं दृश्यत इत्यर्थः॥ ३३॥

दुःखासम्भिन्नदेशप्रभृति फलतया चोदनास्वेव सिद्धं
श्रौतत्वादार्थवादिक्ष्यपि भवति फलं रात्रिसत्रे प्रतिष्ठा ।
अङ्गीकुर्मो निषेधानुगुणमिति तथाऽनर्थकृत्त्वं निषेध्ये
विध्यर्थैरप्यतः स्यादवितथविषया ब्रह्मधीरर्थवादैः ॥ ३४ ॥

इति जिज्ञासाधिकरणम् ॥ १ ॥

चिन्ता०—एवं परमार्थैरेव प्रकारभेदैः सिद्धे व्युत्पत्तिमुक्त्वा परवाद्यङ्गीकृतप्रकारभेददृष्टान्तैरपि प्रधानार्थानुबन्धिन्यर्थेऽपि प्रतिपत्तिमुपपादयन् 'ब्रह्मविदाप्नोति परम्' इति विध्यर्थैः 'तदेषाऽभ्युक्ता' इत्युक्तमन्त्रार्थवादैर्ब्रह्मप्रतिपत्तिः स्यादित्यन्वारुह्यवादेनापि ब्रह्मज्ञानोत्पत्तिहेतुत्वमुपनिषदामुपपादयति—दुःखासम्भिन्नेति । अत्र दृष्टान्तत्रयमुपादीयते कार्यार्थवादिभिरपि 'स्वर्गकामो यजेत' इति स्वर्गसाधनतया प्रतिपन्नकार्यान्वितसिद्धरूपस्वर्गप्रतिपत्तिः 'यन्न दुःखेन संभिन्नम्' इत्याद्यर्थवादवाक्यैर्विशेषतो ज्ञायत इत्यङ्गीक्रियत इत्येको दृष्टान्तः । अपरस्तु विधिवाक्यप्रतिपन्नप्रतिष्ठादिफलमर्थवादवाक्यप्रतिपन्नमाकाङ्क्षावशाद् रात्रिसत्रादौ स्वीक्रियत इति । तृतीयस्तु निषेधविध्यनुकूलं विपरीतफलमार्थवादिकं स्वीक्रियत इति । एवं 'परप्राप्तिकामो ब्रह्म विद्यात्' इति ब्रह्मवेदनफलतया विधिवाक्यश्रुतमेव परब्रह्म मन्त्रार्थवादयोर्विशेषतः प्रख्याप्यत इति को विरोध इति श्लोकार्थः । अयमत्राधिकरणार्थसंग्रहः—व्युत्पत्त्यायत्तं शब्दस्य प्रामाण्यम् । आद्या च व्युत्पत्तिः कार्य एव । सिद्धप्रतिपादकानां तु वेदान्तवाक्यानां न स्वार्थपरत्वमिति तद्विचाररूपं शास्त्रमनारम्भणीयमिति पूर्वपक्षः । सिद्धान्तस्तु—व्युत्पत्त्यायत्तमेव शब्दस्य प्रामाण्यम् । तथापि आद्या व्युत्पत्तिः सिद्धेऽपि संभवत्येव । तथा हि—अम्बातातमातुलेत्यादिभाष्योक्तवदेकः प्रकारः । संसारइत्यादिर्द्वितीयस्तस्य चोपपादकः । दृक्षैरित्यादिकमपि तदेवोपपादयति । परस्तु प्रकार उच्यते कस्मै चिदित्यादिना । पुत्रस्तेऽभूदित्यादिना विधिनिषेधाभ्यां प्रकारान्तरद्वयमपि दर्शितम् । कार्य इत्यादिना पराङ्गीकारप्रकारेण द्वितीयव्युत्पत्तिप्रकारमाह । कोऽसावित्यादिप्रकारान्तरमपि सुप्रसिद्धम् । दुःखासंभिन्नेत्यादिरन्वारुह्यवादो भाष्य एव सुव्यक्तमुक्तः । एवं भाष्योक्तैः प्रकारभेदैरनुक्तैरप्याभिप्रायिकैः सिद्धे व्युत्पत्तिः सिध्यति । प्रभिन्नकमलोदरे मधूनि मधुकरः पिबतीत्यादौ समभिव्याहारान्मधुकरशब्दव्युत्पत्तिमामनन्ति हि न्यायवादिनः । 'स्वरव्ययम्' इत्यादावभिधानपाठात् सिद्धे व्युत्पत्तिः सुप्रसिद्धा । प्रसिद्धा च 'प्रणाय्योऽसंमतौ' इत्यादिषु व्याकरणपरिचयात् सिद्धे व्युत्पत्तिः । काव्यपुराणादिश्रव[illegible] कार्ये च द्वयोः पदानां साधारण्येन व्युत्पादकमेव । तेषु तेषु शास्त्रेषु साङ्केतिकी व्युत्पत्तिः सिद्धेऽपि

सहस्रमुखी । तेन सिद्धेऽपि व्युत्पत्तिसंभवोपपादनात् सिद्धपरं शारीरकशास्त्रमारम्भणीयमिति । 'अथातः' इत्यस्मिन् सूत्रे विशिष्टो हेतुरुच्यते । स च कर्मफलास्थिरत्वनिर्णयपूर्वकानन्तस्थिरफलब्रह्मापातप्रतीतिः । तत्र विशेष्यापातप्रतीतिः सिद्धे व्युत्पत्तिसाधनादेव सिध्यतीति सूत्रकारहृदयमेतत् ॥ ३४ ॥

इति जिज्ञासाधिकरणम् ॥ १ ॥

पद०—दुःखासंभिन्नेत्यादि । चोदनास्वेव—विधिवाक्येष्वेव । दुःखासंभिन्नदेशप्रभृति—'यन्न दुःखेन संभिन्नम्' इत्याद्यर्थवादवाक्यसिद्धं दुःखासंभिन्नदेशरूपं स्वर्गादिकम् । फलतया—'स्वर्गकामो यजेत' इति स्वर्गसाधनतया प्रतिपन्नकार्यान्वितफलतया । सिद्धम्—तान्त्रिकैरङ्गीकृतं प्रसिद्धम् । रात्रिसत्रे—'रात्रीरुपेयात्' इति विहिते रात्रिशब्दवाच्ये यागविशेषे । आर्थवादिक्यपि—'प्रतितिष्ठन्ति ह वा एते य एता रात्रीरुपयन्ति' इत्याद्यर्थवादप्रतिपन्नाऽपि । प्रतिष्ठा—संपदादिस्थैर्यरूपा । श्रौतत्वात्—श्रुतिप्रतिपन्नत्वमात्रेण । फलं भवति—फलतया स्वीकृता भवति । तथा—एवमेव । निषेध्ये—'तस्माद्ब्राह्मणाय नापगुरेत । न निहन्यात् न लोहितं कुर्यात्' इत्यादिनिषिद्धे ब्राह्मणोद्देश्यकप्रहारार्थायुधोद्यमनरूपापगोरणादौ । निषेधानुगुणमिति—निषेधविध्यनुकूलमिति हेतोः । अनर्थकृत्त्वम्—'यो ऽपगुरातै शतेन यातयाद्यो निहनत्सहस्रेण यातयाद्यो लोहितं करवद्यावतः प्रस्कन्द्य पांसून्संगृह्णात्तावतः संवत्सरान् पितृलोकं न प्रजानात्' इत्यर्थवादप्रतिपन्नं शतयातनादिकं फलमङ्गीकुर्मः । अतः—उक्तोपपादनात् । विध्यर्थैरप्यर्थवादैः—विधिशेषभूतैरप्यर्थवादवाक्यैः 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादिरूपैः । अवितथविषया—अबाधितसफलविषया । ब्रह्मधीः—ब्रह्मप्रतिपत्तिः । स्यात्—सिध्येदेवेत्यर्थः ॥ ३४ ॥

इति जिज्ञासाधिकरणम् ॥ १ ॥

## जन्माद्यधिकरणम् ॥ २ ॥

सूत्रम् ॥ जन्माद्यस्य यतः ॥ २ ॥

जन्माद्यैश्चेद्विशेष्यं विहृतिबहुलता ऽथोपलक्ष्यं ब्रवीषि
ज्ञाताज्ञातादिदौःस्थ्यं व्यतिषजति नचालक्षिते स्यात्परीक्षा ।
उद्दिष्टब्रह्मचिन्ता तत इह कथमित्यत्र हेतुत्वलक्ष्यः
पुंसूक्तादिप्रसिद्धो गुणनिधिरघजिद् ब्रह्मशब्दार्थ उक्तः ॥ ३५ ॥

चिन्ता०—प्रमाणपरीक्षा सिद्धा । ततः प्रमेयपरीक्षेति संगतिः । पूर्वस्मिन्नधिकरणे हेयत्वेनोपादेयत्वेन चाधिगतकर्मणोऽधिकारिणः प्रागुक्तादतःशब्दार्थाद् ब्रह्मविचारस्य कर्तव्यत्वमुक्तम्, तत् किमिति शिष्याकाङ्क्षायां जन्माद्यधिकरणमारभ्यत इति भाष्यकारैरेव संगतिरुक्ता । अत्रान्ये च संगतिविशेषा दर्शयिष्यन्ते । पूर्वं ब्रह्मेति स्वरूपनिर्देशादुद्देशः । अत्र जन्मादिकं लक्षणत्वेनोच्यते । उत्तराभ्यामपि सूत्राभ्यां परीक्ष्यत्वसिद्धिः । ततः परं परीक्षेति । एवं वा—प्रथमसूत्रे सिद्धसामान्ये शब्दसामान्यव्युत्पत्तिसमर्थनम् । इह पुनः सिद्धविशेषे ब्रह्मणि शब्दविशेषस्य ब्रह्मशब्दस्येति । इत्थं चाहुः—पूर्वाधिकरणविषयवाक्ये सामान्येन 'तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्' इत्यादिना शिष्याचार्ययोः कृत्यविशेषविधानमुक्तम् । अत्र पुनः स्वरूपोदाहरणविशेषे तस्यैव श्रुतिसंवाद उच्यते । तत्र विहितमेवात्रानुष्ठेयत्वेन विशेष्यते । अयमत्र विशेषः—पूर्वं शिष्यसामान्यस्य गुरुणोपदेशः प्रकाशितः । अत्र पुनः शिष्यविशेषस्य पुत्रस्य पित्रोपदेशः प्रकाश्यते । उभयं श्रुतिसिद्धम् 'ज्येष्ठाय प्रणाय्यायान्तेवासिने प्रब्रूयात्' इति । अत्रासंमतः प्रणाय्यः । 'प्रणाय्यो ऽसंमतौ' इति परमर्षिणा पाणिनिनैवोक्तत्वात् । अत्र शिष्यस्यासंमतत्वमाचार्योपदेशमात्रासन्तुष्टत्वम् । प्रबुद्धो हि शिष्य उपदिष्टेऽप्यर्थे युक्तिमप्यपेक्षते । अत्र ज्येष्ठपुत्रोपादानं प्राधान्यात् । 'यो ब्रह्माणम्' 'अथर्वाय' इति च श्रुतेः । संगत्यन्तरमप्याहुः—पूर्वत्राप्रतिपत्तिः पूर्वपक्षहेतुः । उत्तरत्र विप्रतिपत्तिः । अत एवाहुः—'व्युत्पत्त्यमात्रात् प्रतिपत्तिदौःस्थ्यात्' इति । किंच पूर्वाधिकरणे निरीश्वरवादिनिराकरणम्, उत्तरत्र निर्विशेषवादिनिराकरणम् । अत्रापि तत्त्वतो निरीश्वरवादिनिराकरणमेव—निर्विशेषस्यानीश्वरत्वात् । प्रथमाध्यायप्रतिपाद्यशब्दार्थसंबन्धप्रतिपादनं प्रथ... द्वितीयाध्यायोक्ताविरोधकथनं द्वितीय इति चाहुराचार्याः । एवमुत्तराधिकरणयोरध्यायद्वयसंग्रहरूपत्व...

व्यम् । एवं संगत्यन्तराण्यप्याचार्याभिहितानि तत्रतत्र द्रष्टव्यानि । शास्त्रादिसंगतिषु षट्कं प्रागुक्तमत्राप्य-विशिष्टमिति न लिख्यते । विषयो ऽप्यविशिष्ट एव शास्त्रारम्भस्यैव विषयत्वात् । तदर्थविचारस्तु—किं ब्रह्म लक्षणतः प्रतिपत्तुं शक्यते न वेति । तदर्थमपि विचार्यते—'यतो वा' इत्यादिवाक्यानि जन्मादीनि किं ब्रह्मलक्षणतया प्रतिपादयितुं शक्नुवन्ति न वेति । तदर्थं विचार्यते—जन्मादीन्युपलक्षणान्युत विशेष-णानीति । उपलक्षणपक्षेऽपि ब्रह्मणि प्रतिपन्नाप्रतिपन्नोपलक्षकाकारत्रयविभागोऽस्ति न वेति । विशेषणपक्षे ऽपि किं विशेषणानां विशेष्यभेदकत्वं स्वभावः किं वा विरुद्धविशेषणानामिति चिन्ताक्रमः सन्तन्यते । फलफलिभावोऽपि—उपलक्षणत्वे तावदाकारत्रयप्रतीत्यभावात्, विशेषणपक्षे तु विशेषणानां विशेष्यभेदापादन-स्वाभाव्याज्जन्मादीनां ब्रह्मण्युभयथापि लक्षणत्वासंभवादलक्षिते ब्रह्मणि परीक्षारूपविचारो न कर्तव्य एवेति । उक्तार्थवैपरीत्येन सिद्धान्ते फलफलिभावो विभाव्यः । एतत् सर्वमभिप्रेत्याधिकरणपूर्वपक्षसिद्धान्ता-वारचयति—जन्माद्यैरिति । अत्र द्वौ पक्षौ संभावितौ, विशेषणत्वेनोपलक्षणत्वेन वा जगत्कारणत्वादिकं ब्रह्म व्यावर्तयतीति । उभयमपि न संभवति । खण्डो मुण्डः पूर्णशृङ्गो गौरित्यादिन्यायेन विशेषणानां विशेष्य-भेदकत्वस्वाभाव्याद् विशेष्यभेदाद् ब्रह्मणि नानात्वप्रसङ्गेन विशेषणपक्षस्तावदत्यन्तविरुद्ध एव । उपलक्षण-पक्षोऽपि न घटते—निर्विशेषे परब्रह्मणि प्रतिपन्नाप्रतिपन्नोपलक्षकाकाररूपविशेषाभावात् । लोके ह्याकार-त्रयान्वयेन यत्रायं सारसः स देवदत्तकेदार इत्यादावुपलक्षणपरिज्ञप्तिः । केदारत्वं प्रसिद्धम् । देवदत्ती-यत्वमप्रसिद्धम् । सारससंबन्धो ऽप्युपलक्षणत्वात् प्रसिद्ध एव । तेनोभयपक्षासंभवेन लक्षणाभावादलक्षिते विचारस्यान्याय्यत्वाच्च ब्रह्मविचारो न संभवतीति पूर्वः पक्षः । अत्र विशेषणपक्षे बहुवक्तव्यत्वात् सूची-कटाहन्यायेनानुक्रममुल्लङ्घ्याप्युपलक्षणपक्षानुपपत्तिप्रलापं तावत् प्रतिक्षिपति—पुंसूक्तेत्यादिना । अय-मत्राभिप्रायः । ब्रह्म निर्गुणमिति निर्गुणानामेव प्रलापः । तेन जगत्कारणत्वादिर्ब्रह्मगुणः । स तूपलक्षणा-कारतया सुप्रसिद्ध एव । उपलक्ष्योऽपि कश्चित्पुरुषविशेषः पुंसूक्तादिषु पुरुषः पुरुष इति सामान्यतः प्रसिद्ध एव । अप्रसिद्धं पुनरवशिष्यते । तत्तु निरतिशयबृहत्त्वबृंहणत्वाभ्यां ब्रह्मशब्दवाच्यत्वम् । किं ब्रह्मेति ह्यनुयुज्यते शिष्येण । तदिदं सर्वमभिप्रेत्याहुर्भाष्यकाराः 'उपलक्ष्यं ह्यनवधिकातिशयबृहद्बृंहणञ्च बृहतेर्धातोस्तदर्थत्वात्' इति । अनेनोभयलिङ्गत्वमुच्यते । कल्याणगुणैकतानत्वं हि बृहत्त्वम् । अखिल-हेयप्रत्यनीकत्वं पुनर्बृंहणत्वमिति । तदिदमुभयमप्याह—गुणनिधिरघजिदिति ॥ ३५ ॥

पद०—जन्माद्यैश्चेदित्यादि । जन्माद्यैर्विशेष्यं चेत्—लक्षणीयं ब्रह्म जगज्जन्मादिभिर्विशेषणै-र्व्यावर्त्यमित्युच्यते यदि । जगज्जन्मादीनां ब्रह्मलक्षणत्वं विशेषणत्वेनेत्युच्यते यदीत्यर्थः । विहतिबहुलता—खण्डो मुण्डः पूर्णशृङ्गो गौरित्यादौ खण्डत्वादीनामिव विशेष्यभेदकत्वाज्जगज्जन्मादीनां ब्रह्मनानात्वापत्त्या

विरोधबाहुल्यं स्यात्। अथ—पक्षान्तरे। उपलक्ष्यं ब्रवीषि—जन्माद्यैरुपलक्ष्यं ब्रह्मेति वदसि यदि। जगज्जन्मादीनामुपलक्षणत्वेन ब्रह्मलक्षणत्वं वदसि यदीत्यर्थः। ज्ञाताज्ञातादिदौस्स्थ्यम्—केदारादिस्थानापन्नः सारसादिस्थानापन्नोपलक्षणं च ज्ञातविशेषौ। देवदत्तीयत्वस्थानापन्न उपलक्ष्याकारोऽज्ञातांशः। एवमादिविशेषणां निर्विशेषे परे ब्रह्मणि समापाताद् दुरवस्थापत्तिः। व्यतिषजति—प्रसज्यते। अलक्षिते च परीक्षा न स्यात्—लक्षणेनेतरव्यावृत्ततयाऽनवगते वस्तुनि विचारो नावकाशं लभते। ततः—तस्मात् कारणात्। इह—शास्त्रे। उद्दिष्टब्रह्मचिन्ता कथमिति—उद्दिष्टस्य विचार्यतया निर्दिष्टस्य ब्रह्मणः चिन्ता विचारः कथं क्रियेतेति। अत्र—अस्मिन्नाक्षेपे कृते सति तत्परिहाराय। हेतुत्वलक्ष्यः—जगत्कारणत्वलक्षणेन लक्ष्यः—उपलक्ष्य इतरव्यावृत्ततया ऽवसेयः। पुंसूक्तादिप्रसिद्धः—जगत्सृष्ट्यादिप्रतिपादकसर्ववेदसारभूतपुरुषसूक्तादिषु पुरुषशब्दवाच्यतया प्रसिद्धः। गुणनिधिः—कल्याणगुणमहानिधिः। स्वरूपगुणकृतबृहत्त्वाश्रयः। अघजित्—हेयप्रतिभटः। अनेनाश्रितबन्धनिवर्तनरूपबृंहणत्वाश्रयत्वमुक्तम्। एतादृशः पुरुषो ब्रह्मशब्दार्थ उक्तः—भृगुवल्ल्यां भृगुणा ब्रह्म किमिति पृष्टो वरुणो यतो जगत्सृष्ट्यादिकं प्रसिद्धं तद् ब्रह्मेत्याह। तथा च 'वेदेषु पौरुषं सूक्तम्' इति वेदत्रयसारभूते पुरुषसूक्ते पुरुषशब्दवाच्यस्य नारायणस्यैव जगत्सृष्ट्यादिप्रतीतेः स एव ब्रह्मशब्दार्थ इत्युक्तं भवतीति भावः। एवं चोपलक्षणं जगत्कारणत्वं सारसस्थानापन्नं केदारस्थानापन्नः पुरुषशब्दितः, श्रीविष्णुः देवदत्तीयत्वस्थानापन्नमनवधिकातिशयबृहत्त्वबृंहणत्वाश्रयत्वरूपं ब्रह्मशब्दार्थत्वमित्युपलक्षणपक्षनिर्वाहः। निर्विशेषवादस्तु वेदवादे न युज्यते, किन्तु माध्यमिकगोष्ठ्यामेवेति भावः ॥ ३५ ॥

**नाना चेल्लक्षणानि स्वरसभिदुरता ब्रह्मणि स्याद् विशेष्ये**
**खण्डो मुण्डश्च गौरित्यभिलपनसमा धर्मिशब्दैकताऽत्र।**
**तेष्वेकं चेद् वृथाऽन्यत्समुदितमफलं स्याद् व्यवच्छेद्यहानेः**
**खण्डत्वादिक्रमाच्चेत्यसदविहतितः खण्डतादेर्विशेषात् ॥ ३६ ॥**

चिन्ता०—एवमुपलक्षणपक्षे पूर्वपक्षं निराकृत्य विशेषणपक्षेऽपि विशेषेण पूर्वपक्षमनूद्य निराकरोति—नाना चेदिति। उभयमिह लक्षणमिति वदन्ति वेदान्तवेदिनः। 'यतो वा इमानि' इत्यादिकमेकं 'सत्यं ज्ञानम्' इतिशोधकवाक्यप्रतिपन्नमपरमिति। तत्र पूर्वं तटस्थलक्षणम्, उत्तरं स्वरूपलक्षणमिति मृषावादिन उद्घोषयन्ति। उभयमपि सामानाधिकरण्यवैयधिकरण्याभ्यां ब्रह्मस्वरूपप्रतिपत्त्यर्थत्वात् स्वरूपलक्षणे पर्यवस्यतीति प्राज्ञाः। तत्र पूर्वपक्षवादी न्यायसाम्यादुभयमपि विकल्प्य प्रतिक्षिपति—अत्र

जगत्कारणत्वादिकं सत्यत्वादिकं वा किमेकैकश्येन सर्वं ब्रह्मलक्षणम्? यद्वा तेष्वेकम्, उत सर्वमपि समुदितं लक्षणमिति। नाद्यः—खण्डो मुण्डः पूर्णशृङ्गो गौरित्यादिवद् ब्रह्मनानात्वप्रसङ्गात्। नापरः—तस्मिन्नपि पक्षे किं नियतमेकमुतान्यतमत्वेनानियतं वा?। पूर्वत्र दोषमाह–वृथेति। उत्तरत्रापि ब्रह्मानियतिः स्यादिति भावः। समुदितमपि पक्षं प्रतिक्षिपति—अफलमिति। अफलत्वमेवोपपादयति—स्यादिति। लक्षणेषु विशेषणानि व्यभिचारवारणायैव प्रयुज्यन्ते। व्यभिचारो ह्यलक्ष्यगामित्वम्। तेनोक्तस्य विशेषणस्यालक्ष्यगामित्वे विशेषणान्तरं प्रयोज्यमिति न्यायविदां निर्णयः। अत्र जगत्कर्तृत्वादीनामब्रह्मगामित्वं नास्तीति विशेषणान्तरमनर्थकमेव। तस्मात् खण्डो मुण्डः पूर्णशृङ्गो गौरितिवदसंगतोऽयं लक्षणव्यवहार इति। एतत्प्रतिक्षिपति—असदिति। तत्र हेतुमाह—अविहतित इति। द्विधा खलु विशेषणानि प्रयुज्यन्ते–क्वचिद्विरुद्धानि क्वाप्यविरुद्धानीति। नीलमुत्पलं देवदत्तोऽयं ब्राह्मण इत्यादावविरुद्धानि। खण्डो मुण्ड इत्यादौ विरुद्धानीति। अत्र विशेषणानां विरोधाभावात् परतो भिद्यत इत्यनुपालम्भ एव। इयं किलात्र पूर्वपक्षसिद्धान्तवादिनोर्युक्तिपरिपाटी। 'सत्यं ज्ञानम्' इत्यादौ समानाधिकरणवाक्ये सत्यत्वादिविशेषणसंबन्धविवक्षायां भेदकं विशेषणं भेद्यं विशेष्यमितिन्यायेन खण्डो मुण्डः पूर्णशृङ्गो गौरितिवद् विशेष्यभेदः स्यादित्येकः प्राह। अपरस्तु धर्मिवाचिपदैक्यात् समानविभक्तिनिर्देशाच्च नीलमुत्पलमित्यादिवद्विशेष्याभेद इति समाधत्ते। तत्र पूर्वपक्षवादी पुनरन्यथासिद्धिमाह–नीलमुत्पलमित्यादौ धर्मिवाचिपदैक्यादिना न धर्म्यैक्यम्, अपि तु प्रत्यक्षसिद्धत्वादिति। एवं तर्हि खण्डो मुण्ड इत्यादावपि प्रत्यक्षसिद्धत्वादेव भेदो न पुनर्विशेषणभेदादिति परपक्षेऽपि विशेषणभेदस्याप्रयोजकत्वमाचष्टे सिद्धान्तवादी। परः पुनरप्रत्यक्षेऽपि खण्डो मुण्ड इत्यादौ भेद एव दृश्यत इति विशेषणभेदस्यैव विशेष्यभेदकत्वं साधयति। एवं तर्हि तेनैव न्यायेन नीलमुत्पलमित्यादावप्रत्यक्षेऽपि विशेष्याभेदः सिद्ध इति धर्मिवाचिपदैक्यादिरेव विशेष्याभेदनियामक इति वदति सिद्धान्तवादी। एवं तर्हि भेदाभेदोदाहरणद्वयसद्भावे किं नियामकमिति गलिताहङ्कारेण पृष्टे वर्णयन्ति निर्णेतारः—विरुद्धमेव विशेषणं विशेष्यभेदकं न पुनरविरुद्धं विशेषणम्। तथैव दृष्टत्वादिष्टत्वाच्च सर्वेषामपि विदुषामिति ॥ ३६ ॥

पद०—नाना चेदित्यादि। लक्षणानि–जगज्जन्मादीनि सत्यत्वादीनि च। नानाचेत्—बहूनि चेत्। विशेष्ये ब्रह्मणि स्वरसभिदुरता स्यात्—विशेषणानां विशेष्यभेदकत्वात् तत्तद्विशेष्यस्य ब्रह्मणोऽपि तत्तद्विशेषणाश्रयत्वस्वरसतो भिन्नभिन्नता स्यात्। अत्र–अनेकविशेषणविशेष्ये ब्रह्मणि। धर्मिशब्दैक्यादिरूजातेधर्मिशब्दैक्यम्। खण्डो मुण्डश्च गौरित्याभिलपनसमा—खण्डो मुण्डः पूर्णशृङ्गो गौरिति धर्मिपदैक्येऽपि विशेषणभेदाद् विशेष्यभेदो दृश्यते, तद्वदप्रयोजकमित्यर्थः। तेषु–जन्मादिषु। एकं चेत्–एकं

लक्षणत्वेनाभिमतं चेत्। अन्यद् वृथा—आम्नातमन्यद्वृथा स्यात्। तेष्वनियतं किमपीत्युक्ते ब्रह्मानियतिः स्यादिति सिद्धम्। समुदितं चेत्—जन्मादिकं समुदितं लक्षणं चेत्। व्यवच्छेद्यहानेरफलं स्यात्--लक्षण-घटकविशेषणानामतिव्याप्तिवारकत्वेन साफल्यस्य वक्तव्यतया जगज्जन्मादिष्वेकैकस्यैव ब्रह्मान्यगामित्वाभावे-नानतिव्याप्ततया व्यवच्छेद्यस्य व्यावर्त्यस्य हानेरभावादितरद्विशेषणम फलं स्यात्। खण्डत्वादिक्रमाचेति—तस्मात्खण्डो मुण्डः पूर्णशृङ्गो गौरितिवदसंगतो ऽयं लक्षणप्रणयनक्रम इति। असत्—उक्तमसाधु। अविह-तितः खण्डतादेर्विशेषात्—जगज्जन्मादीनामविरुद्धत्वेन खण्डत्वाद्यपेक्षया विशेषस्य विद्यमानत्वात्। नीलमुत्पलं सुगन्धि, देवदत्तः श्यामो युवा लोहिताक्षः समपरिमाण इत्यादिस्थले विशेषणानि बहून्यपि न विशेष्यं भिन्दन्ति, अपि त्वेकस्मिन्नेव समाविशन्ति। तद्वज्जन्मादीन्यप्यविरुद्धानि न ब्रह्मव्यक्तिभेद-कानि। खण्डत्वादीनि तु विरुद्धत्वादेकत्र समावेशं नार्हन्ति। तत एव स्वस्वाश्रयं भिन्दन्तीति महदिदं वैषम्यमिति भावः ॥ ३६ ॥

तत्तत्स्वप्रत्यनीकव्युदसननियतं भेदकं नान्यबाधि
व्याघातः कालभेदान्न भवति जननस्थापनध्वंसनानाम्।
प्रत्येकं लक्षणत्वं सुवचमिह वहृदाहृति धीमहिम्ने
सम्भूयाप्याहुरेके फलमपि च तदा शङ्कितार्थव्युदासः ॥ ३७ ॥

चिन्ता०—तर्हि भेदकं विशेषणं भेद्यं विशेष्यमिति विचक्षणप्रवादो व्यर्थः स्यादित्याशङ्क्याह—तत्तदिति। तत्र तत्तद्विशेषणप्रतिपन्नाकारविरुद्धाकारनिवर्तनं क्रियते न पुनरविरुद्धाकारनिवर्तनम्। यथा नीलमित्युक्ते सति अनीलाद्व्यावृत्तिः क्रियते न पुनरविरुद्धस्योत्पलत्वस्य व्यावृत्तिः। एवमुत्पलमित्युक्ते ऽप्य-नुत्पलादेव व्यावृत्तिः। न पुनरविरुद्धस्य नीलत्वस्य व्यावृत्तिः। नीलत्वोत्पलत्वयोस्सामानाधिकरण्येनैव दृष्टत्वात् नीलोत्पलशब्दयोर्यथादर्शनं व्युत्पत्तेश्च। तेन भेदकत्वं च सिद्धं विशेषणानां विरोधे व्यावर्त-कत्वात्। अविरोधे पुनरसिद्धमिति। तर्हि 'यतो वा इमानि भूतानि' इत्यादिवाक्यं भवद्भिर्लक्षणत्वेन प्रधानतयोच्यते। तस्मिन् वाक्ये यत इत्यादिना वैयधिकरण्ये सत्यपि यत्कारणं यच्च स्थापकं यच्च पुनः संहारकं तद्ब्रह्मेत्युत्तरेण सामानाधिकरण्यमेव विवक्षितम्। तत्र हेतुत्वादीनां परस्परविरुद्धानां कथमिव लक्षणत्वम्? न हि जनक एव विनाशयति। अतो विरुद्धविशेषणत्वाद् हेतुत्वादिकं न ब्रह्मलक्ष[illegible]। अत्रोत्तरमाह—व्याघात इति। एकस्यैव कर्तुर्विरुद्धेष्वपि कार्येषु कालभेदाद्विरोधः प्रशाम्यतीति [illegible] देशभेदादपि वक्तव्यम्। एक एव राजा स्वदेशं परिपालयति दहति च परदेशम्। अथ प्रत्येकसमुदायविकल्प-

चोद्यमनिष्टं क्रमेण परिहरति—प्रत्येकमिति । अत्र ह्येकैकमेव लक्षणमुचितम् । यथा चेष्टेन्द्रियार्थाश्रयः शरीरमिति, यथा वा क्रियावद् गुणवत् समवायिकारणं द्रव्यमित्यादि । बहूदाहरणं किमर्थमिति चोद्ये शिष्यशिक्षार्थमित्युत्तरं तथेत्याह—बह्विति । सम्भूय लक्षणमित्येकदेशिनां पक्षमपि समाधातुमुपक्रमते—सम्भूयेति । समाधानमेवाह—फलमिति । इत्थं किलाभिप्रायः—सृष्टिस्थितिसंहारकर्तारः परवादिकथितास्त्रयः सन्ति । सर्वे ऽपीश्वरा ब्रह्मशब्दवाच्याश्चेति चापरिचितवेदान्तैरनाकलितसम्यङ्न्यायकलापैरन्तेवासिभिराशङ्क्यते । तेषां प्रत्येकेश्वरत्वनिरसनफलं विशेषणत्रयोपादानमिति । सृष्ट्यादिकर्तृत्वं समुदितमेव परब्रह्मत्वनियामकम् । तच्च ब्रह्म नारायण एव । 'नारायण परं ब्रह्म' इति श्रुतेः ॥ ३७ ॥

पद०—तत्तदित्यादि । तत्तद् भेदकं स्वप्रत्यनीकव्युदसननियतम्—नीलत्वोत्पलत्वसुगन्धित्वरूपं विशेषणं स्वप्रतिपन्नाकारविरुद्धाकारनिरसननियतम् । अन्यबाधि न—अविरुद्धाकारनिरासकं न भवति । यथा नीलमित्युक्ते सति अनीलाद्व्यावृत्तिः क्रियते । न पुनरविरुद्धस्योत्पलत्वस्य व्यावृत्तिः । एवमुत्पलमित्युक्ते सत्यप्नुत्पलादेरेव व्यावृत्तिर्नपुनरविरुद्धस्य नीलत्वस्य व्यावृत्तिः क्रियते । एवं जगज्जन्महेतुत्वं स्वाश्रयमतथाभूताद् वस्तुनो व्यावर्तयति । जगत्स्थितिहेतुत्वञ्चातथाभूतात् स्वाश्रयं व्यावर्तयति । जगन्नाशहेतुत्वं चातथाभूतात् स्वाश्रयं व्यावर्तयति । न पुनः स्वसमानाधिकरणधर्माश्रयं स्वाविरुद्धं व्यावर्तयति । स्वप्रतिपन्नाकारविरुद्धाकारवस्तुव्यावर्तकत्वादेव विशेषणानां भेदकत्वप्रवाद इतिभावः । जननस्थापनध्वंसनानाम्—स्रष्टृत्वस्थापकत्वसंहर्तृत्वानाम् । कालभेदाद् व्याघातो न भवति—एककाले विरुद्धत्वेऽपि कालभेदाद्विरोधो नास्ति । इह—जगज्जन्मादिसमुदाये । प्रत्येकं लक्षणत्वं सुवचम्—एकैकस्यैवान्यासंवलितस्य ब्रह्मलक्षणत्वं वक्तुमुचितम् । बहूदाहृतिर्धीमहिम्ने—एकैकस्यैव स्वेतरव्यावर्तकत्वेन लक्षणत्वे युक्तेऽपि बहूदाहरणं शिष्यबुद्धिदार्ढ्याय । एके—केचन । संभूयाप्याहुः—जगज्जन्मादीनि परस्परं मिलित्वापि लक्षणानि भवन्तीत्याहुः । तदा च तत्पक्षे च । फलमपि—विशेषणबाहुल्यफलमपि । शङ्कितार्थव्युदासः—अयमभिप्रायः । सृष्टिस्थितिसंहारकर्तारः परवादिकथितास्त्रयः सन्ति । ते सर्वे ऽपीश्वरा ब्रह्मशब्दवाच्याश्चेति कैश्चिदाशङ्क्यते । तेषां प्रत्येकेश्वरत्वनिरसनफलं विशेषणत्रयमिति । सृष्ट्यादिकर्तृत्वं समुदितमेव परब्रह्मत्वनियामकम्, तच्च ब्रह्म नारायण एव 'नारायण परं ब्रह्म' इति श्रुतेरिति ॥ ३७ ॥

ऽपि तच्चा

कार
त्यादि

ज्ञातं चेन्नोपलक्ष्यं न च यदि नतरां लक्ष्मयोगोऽप्रतीते
ज्ञाताज्ञातांशभेदस्त्विह दुरभिलपो लक्षणैरेव वेद्ये ।
ब्रह्मत्वं ब्रह्मशब्दान्वितिरपि विदिते ह्यत्र नो चेन्न शङ्का
मैवं नानागमोद्यद्विशयशमनतः श्रीमतिं ब्रह्मतोक्तेः ॥ ३८ ॥

चिन्ता०—पुनरपि पूर्वपक्षमुपक्षिप्य प्रकारान्तरेण प्रतिक्षिपति- ज्ञातमिति । अत्रायं विकल्पः—किं ज्ञातमुपलक्ष्यम् ? उताज्ञातम्? ज्ञातं चेदुपलक्ष्यमेव न भवति ज्ञातत्वादेव । नाप्यज्ञातमुपलक्ष्यमज्ञातत्वादेव । सारसाद्युपलक्षणसम्बन्धित्वेन ज्ञात एव केदार उपलक्ष्यः । तथा च ज्ञाताज्ञातमुपलक्ष्यमिति वक्तव्यम् । तच्चात्र वक्तुं न शक्यते । केदारे हि प्रत्यक्षसिद्धं केदारत्वं ज्ञातं देवदत्तीयत्वमज्ञातम् । तेन तत्रोपलक्षणत्वं युज्यते । अत्र पुनः श्रुतिसिद्धलक्षणैकवेद्ये ब्रह्मणि ज्ञातत्वमेव न संभवति । पुराणादिप्रसिद्धपुरुषस्तु ज्ञात एवेति चेत् ; हन्त तर्हि तैरेव पुराणादिभिर्ब्रह्मत्वं ब्रह्मशब्दवाच्यत्वं च ज्ञातमिति पुनरपि ज्ञातत्वादेव नोपलक्ष्यत्वम् । अज्ञातत्वं च भवता वक्तुं न शक्यते । सर्वथाऽप्यज्ञाते किं ब्रह्मेति विशेषशङ्काया अनवकाशात् । तदिदमाह—नोचेदिति । तदिदं प्रतिक्षिपति—मैवमिति । अत्र हेतुमाह—नानेति । यद्यपि निरतिशयबृहत्त्वबृंहणत्वविशिष्टं ब्रह्मेति 'ब्रह्म परिवृढं सर्वतः' 'बृहति बृंहयति तस्मादुच्यते परं ब्रह्म' 'बृहत्त्वाद् बृंहणत्वाच्च तद्ब्रह्मेत्यभिधीयते' इति प्रमाणप्रसिद्धम् , तथापि तच्छ्रुतिपुराणोक्तं ब्रह्मविष्णुरुद्रादिषु तादृक् परं ब्रह्म किंरूपमिति व्यक्तिविशेषपरिज्ञानं नास्ति । ह्रीलक्ष्मीश्वरत्वेन विशेषपरिज्ञानं जायते । तथा च श्रियः पतित्वमेव पूर्वमपरिज्ञातत्वात् परस्मिन् ब्रह्मण्युपलक्ष्याकारः । अन्यत् सर्वं परिज्ञातत्वात्प्रतिपन्नाकार उपलक्षणाकारोऽपि वा भवति । पूर्वं निरतिशयबृहत्त्वबृंहणत्वाभ्यां ब्रह्मशब्दवाच्यत्वाकार उपलक्ष्याकार इत्युक्तम् । इदानीं पुनः परस्मिन्ब्रह्मणि श्रियः पतित्वमुपलक्ष्याकार इति विभागः ॥ ३८ ॥

पद०—ज्ञातश्चेदित्यादि । ज्ञातं चेत्—ब्रह्म पूर्वं ज्ञातं चेत् । उपलक्ष्यं न—उपलक्ष्यं न भवति । ज्ञानार्थं ह्युपलक्षणान्वेषणम् । न च यदि—न ज्ञातमिति चेत् । अप्रतीते—अज्ञाते । लक्ष्मयोगो नतराम्—लक्षणसंबन्धो न भवत्येव । सारसाद्युपलक्षणसंबन्धित्वेन ज्ञात एव हि केदारः उपलक्ष्यो दृश्यते न त्वज्ञातः । लक्षणैरेव वेद्ये—इदानीं प्रणीयमानै र्जगज्जन्मादिभि[illegible] इह—ब्रह्मणि । ज्ञाताज्ञातांशभेदस्तु दुरभिलपः—यथा सारसोपलक्ष्ये भूखण्डे के[illegible] ज्ञातधर्मः, देवदत्तीयत्वरूपोऽज्ञातधर्मः, एवं ज्ञाताज्ञातांशभेदो ब्रह्मणि वक्तुं न शक्यते । अत्र विदिते

हि—अस्मिन्शास्त्रे वस्तुनि ज्ञाते सति हि। ब्रह्मत्वं ब्रह्मशब्दान्वितिरपि भविष्यति न त्वविदिते। नो चेत्—अविदितं चेत्। शङ्का न स्यात्—सर्वथाऽज्ञाते शङ्का नोदियात्। मैवम्—एवं न वाच्यम्। नानागमोत्थद्विशयशमनतः श्रीमति ब्रह्मतोक्तेः—आपाततो ब्रह्मशिवादिपरानेकश्रुतिदर्शनजनितस्य त्रिमूर्तिषु कः परं ब्रह्मेत्याकारकसंशयस्य निवृत्तये श्रीमति पुरुषोत्तमे ब्रह्मत्वप्रतिपादनात्। अयमाशयः—यद्यपि निरतिशयबृहत्त्वबृंहणत्वविशिष्टं ब्रह्मेति 'ब्रह्म परिवृढं सर्वतः' 'बृहति बृंहयति तस्मादुच्यते परं ब्रह्म' 'बृहत्त्वाद् बृंहणत्वाच्च तद्ब्रह्मेत्यभिधीयते' इत्यादिप्रमाणप्रसिद्धम्, तथापि तत्तच्छ्रुतिपुराणोक्तब्रह्मविष्णुरुद्रादिषु तादृक् परं ब्रह्म किंरूपमिति संशयोत्थानात् तन्निवृत्तये ह्रीशब्दवाच्यभूमिपतित्वलक्ष्मीपतित्वलिङ्गोपोद्बलितविशेषनिर्णयोत्तरानुवाकसहितपुरुषसूक्तप्रतिपन्नमहापुरुषे तादृशपरब्रह्मत्वप्रतिपादनतत्परत्वाज्जगत्कारणत्वलक्षणप्रणयनस्य न वैयर्थ्यमिति भावः ॥ ३८ ॥

यावल्लक्ष्यावबोधं यदवगतिरतो लक्षणात्तद्विशेष्यं
यस्याबोधेऽपि पश्चाद्यदवगतिरिदं स्यात्तु तेनोपलक्ष्यम्।
तस्माद् द्वेधाऽपि भाष्ये ऽनुमतिरनुचितेत्याशयाज्ञस्य बोध्यं
मोक्षार्थोपास्यभेदे ह्युभयमपि समन्वेति विद्याविकल्पात् ॥ ३९ ॥

चिन्ता०—अत्र भाष्योक्तमुपलक्षणविशेषणात्मकपक्षद्वयं परस्परविरुद्धमेव लक्षणविरोधादित्याशङ्क्य विरोधाभावमाचष्टे—यावदित्यादिना। लोके हि यावल्लक्ष्यावबोधं यस्यावगतिस्तेन विशेषणेन तद्विशेष्यमित्युच्यते। प्रकृष्टप्रकाशत्वं चन्द्रेण सह नित्यमेव प्रतीयते। यस्याबोधेऽपि पश्चाद्यदवगतिस्तत् तेनोपलक्ष्यम्। यथा शाखाग्रे चन्द्र इत्यत्र शाखाग्रप्रतीतिमन्तरेणापि चन्द्रस्तत्र प्रतीयत एव। एवं च सति परस्परविरुद्धलक्षणोपेतत्वादुपलक्षणत्वेन विशेषणत्वेनोभयथापि भाष्यानुमतिरनुचितेति कश्चिदाह, तद् भाष्यकाराभिप्रायापरिज्ञाननिबन्धनमित्याह—आशयेति। को ऽयमाशय इत्यत्र भाष्यकाराभिप्रायं विवृणोति—मोक्षार्थेति। अयमर्थः—'ब्रह्मविदाप्नोति परम्' इत्यादिना मोक्षार्थं ब्रह्मोपास्यमित्युच्यते। तच्च ब्रह्म किमिति विशेषजिज्ञासायां 'यतो वा इमानि भूतानि' इत्यादिवाक्ये कारणत्वादिकं यथायोगं विशेषणत्वेनोपलक्षणत्वेन वा ब्रह्मणो लक्षणमभिधीयते। ब्रह्मगुणाऽपि तत्र। तत्र विद्याभेदनिबन्धनोपास्यभेदे सति यस्मिन् ब्रह्मोपासने ये गुणा नियतमेवानु[illegible] [illegible]न विशेषणानि। ये पुनर्ब्रह्मप्रतिपत्तिवेलायामेवान्विता उपासनवेलायां तु नियतं नानुवर्तन्ते तान्युपलक्षणानि। उपासनान्तरोपास्यानां स्वरूपैक्येऽपि गुणभेदेन भिन्नानां बहुत्वात् क्वचित् कस्यचित्

उपलक्षणत्वं विशेषणत्वं वा भवत्यन्यत्रान्येषाम् । एतदुक्तं भवति 'कारणं तु ध्येयः' इति जगत्कारणत्वादिकं ध्येयमात्रानुवृत्ततयोच्यते । एवं 'आनन्दादयः प्रधानस्य' इति सत्यत्वज्ञानत्वानन्तत्वानन्दत्वामलत्वानि स्वरूपनिरूपकधर्मत्वात् सर्वास्वपि विद्यासु सर्वदाऽप्यनुवर्तन्ते । तेन तानि विशेषणानि । ये पुनर्धर्मास्तत्रतत्र तदातदा प्रतीयन्ते व्यावर्तकाश्च ब्रह्मणि भवन्ति तान्युपलक्षणानि । चन्द्रशाखाग्रवद्ब्रह्मस्वरूपप्रतिपत्त्यनुवृत्त्यभावात् श्रियः पतित्वमपि नित्यानुसंधेयमिति । उपलक्ष्याकारत्वात् श्रीनिवासे ब्रह्मणि मम भक्तिर्भवत्विति भाष्यकारैरेव सर्वोपासनविषयत्वेनाभिधानाच्च ॥ ३९ ॥

पद०—यावल्लक्ष्यावबोधमित्यादि । यावल्लक्ष्यावबोधं यदवगतिरतो लक्षणात्तद्विशेष्यम्—लोके यावल्लक्ष्यावबोधं यस्यावगतिस्तेन विशेषणेन तद्विशेष्यमित्युच्यते । प्रकृष्टप्रकाशत्वं हि चन्द्रेण सह नित्यमेव प्रतीयते । यस्यावोधेऽपि पश्चाद्यदवगतिस्तेनेदमुपलक्ष्यं स्यात्—यस्यावोधेऽपि पश्चात् यदवगतिर्भवति तत्तेनोपलक्ष्यं भवेत् । यथा शाखाग्रे चन्द्र इत्यत्र शाखाग्रप्रतीतिमन्तरेणापि चन्द्रस्तत्र प्रतीयत एव । तस्मात्—उपलक्षणत्वविशेषणत्वयोः परस्परविरुद्धलक्षणोपेतत्वात् । भाष्ये—जन्मादिसूत्रभाष्ये । द्वेधाऽप्यनुमतिः—जगज्जन्मादीनामुपलक्षणत्वेन विशेषणत्वेनोभयथापि ब्रह्मलक्षणत्वाङ्गीकारः । अनुचितेति—अयुक्त इति । आशयाज्ञस्य चोद्यम्—भाष्यकारहृदयमविजानानस्येदं शङ्कनम् । विद्याविकल्पात् मोक्षार्थोपास्यभेदे उभयमपि समन्वेति हि—सदक्षरदहरादिविद्याविकल्पनिबन्धनोपास्यभेदे कारणत्वादीनां ब्रह्मप्रतिपत्तिवेलामात्रान्वितत्वप्रतिपत्तिप्रभृतियावदुपासननिष्पत्तिनियतानुवर्तनीयत्वाभ्यामुपलक्षणत्वविशेषणत्वोभयमपि सम्यगुपपद्यते हि ॥ ३९ ॥

चन्द्रे शाखेव शान्ते महसि तटगतं लक्षणं कारणत्वं
सत्यज्ञानादिवाक्यैरपमृदितगुणं तद्विभातीति डिम्भाः ।
एकत्रार्थे विशेष्ये प्रतिपदनियतावर्ज्यतत्तन्निमित्त-
द्वारा वृत्तिं पदानामिह विदुररुणाद्युक्तिवन्न्यायवृद्धाः ॥ ४० ॥

इति जन्माद्यधिकरणम् । २ ।

चिन्ता०—अत्र परोक्तां प्रक्रियामत्यन्तन्यायविरुद्धत्वेऽपि बालानां प्रतिपा[illegible] भूदित्यनुभाष्य पदवाक्यप्रमाणादिविरुद्धत्वात् प्रलाप एवायमिति प्रतिक्षिपति—चन्द्र इति । इय[illegible]

परेषां प्रक्रिया—यथा चन्द्रे शाखा तद्वज्जगत्कारणत्वादिकं ब्रह्मणि तटस्थमेव लक्षणं द्वारस्थमेव प्रतिबोधकमित्यर्थः। तेन विशेषणत्वपक्षः प्रतिक्षिप्यते। ननु चन्द्रस्य शाखाग्रेणोपलक्षितस्य स्वरूपगतं प्रकृष्टप्रकाशत्वादिकमनुवर्तते तद्वद् ब्रह्मण्यपि कारणत्वाद्युपलक्षिते विशेषणभूतं सर्वज्ञत्वादिकमनुवर्ततामित्याशङ्क्य परिहरति—सत्येति। अत्र विषमो दृष्टान्तः। चन्द्रे प्रकृष्टप्रकाशत्वादिकं प्रमाणसिद्धत्वादबाधितत्वाच्च स्वीक्रियते। इह तु निर्विशेषे परस्मिन् ब्रह्मणि सर्वप्रमाणागोचरत्वात् 'सत्यं ज्ञानम्' इत्यादिश्रुतेर्निर्विशेषप्रतिपादकत्वात्, अरुणाधिकरणन्यायविरुद्धत्वाच्च सर्वज्ञत्वादिकं न स्वीकियत इति। डिम्भाः—बालाः। प्रलपन्तीति शेषः। उक्तमर्थं प्रतिक्षिपति—एकत्रेति। द्विविधं हि वाक्यम्। तत्र 'यतो वा इमानि' इत्यादि व्यधिकरणवाक्यं सर्वैरपि वादिभिर्भेदपरत्वेन निर्णीतार्थत्वात्। तत्परित्यज्य तावत् समानाधिकरणवाक्यमेव परिशोधयामः। भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यमिति पदविदः। पाणिनीयस्य सर्वविद्यास्थानौपयिकत्वाद्वेदान्तवादिभिरपि तदेवानुसर्तव्यम्। तच्च न्यायसिद्धम्। सदसद्वा समानाधिकरणं विशेषणमिति न्यायवादिनः। न केवलं पदविदो न्यायविदश्च वयमनुसरामः, अपि तु वाक्यविदोऽपीत्याह—अरुणाद्युक्तिवदिति। अत्र न्यायवृद्धा इति तान्त्रिकाः परिगृह्यन्ते, अथ वा पदवाक्यप्रमाणज्ञाः सर्वेऽपि। 'अरुणयैकहायन्या पिङ्गाक्ष्या सोमं क्रीणाति' इत्येकहायनीपिङ्गाक्षीशब्दाभ्यां सामानाधिकरण्येन गुणोऽभिधीयते। द्विविधं हि सामानाधिकरण्यम्—अर्थसामानाधिकरण्यं शब्दसामानाधिकरण्यं चेति। अत्रार्थसामानाधिकरण्यं भिन्नानामर्थानामेकस्मिन्नर्थे वृत्तिः। यथा नीलत्वोत्पलत्वादीनाम्। शब्दसामानाधिकरण्यं तु भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन् विशेष्ये पर्यवसानमभिधानमित्यर्थः। अत्र भिन्नप्रवृत्तिनिमित्तानामिति लक्षणानुसारेण श्लोकस्थपदानामर्थो वर्णनीयः। अत्र न्यायवृद्धा इति सेश्वरमीमांसकानां स्वपक्षस्थानामेवोपादानात् निरीश्वरमीमांसकोक्तमारुण्यादिगुणानामर्थान्वयं प्रतिक्षिपति। तत्प्रतिक्षेपप्रकारश्च श्रीमति भाष्ये तद्व्याख्यानादिषु विस्तरेणोक्त इति नास्माभिरिह विव्रियते। वयमिहास्मिन् पद्ये तटस्थलक्षणवादिनं मृषावादिनमेव प्रतिक्षिपामः। तत्प्रतिक्षेपविस्तरोऽपि प्रथमसूत्रादिषु द्रष्टव्यः॥ ४०॥

इति जन्माद्यधिकरणम्॥ २॥

पद०—चन्द्र इत्यादि। चन्द्रे शाखेव—शाखाग्रे चन्द्र इति शाखाग्रोपलक्ष्ये चन्द्रे तदुप-[illegible]ऽपि तत्[illegible]शाखेव। शान्ते—सर्वविशेषशून्ये। महसि—स्वयम्प्रकाशे ब्रह्मणि। कारणत्वं तटगतं [illegible]त्यादि[illegible]न [illegible]रणत्वं तटस्थलक्षणमेव द्वारस्थमेव प्रतिबोधकमित्यर्थः। तत्—ब्रह्म। सत्यज्ञानादिवाक्यैः—'[illegible] ज्ञानमनन्तं ब्रह्म' इत्यादिभिः स्वरूपलक्षणवाक्यैः। अपमृदितगुणं विभाति—विध्वस्तसमस्त-

गुणं स्वरूपमात्रमेव प्रकाशते । इति डिम्भाः—एवं बालाः । प्रलपन्तीति शेषः । इह—सत्यादि-वाक्ये । न्यायवृद्धाः—न्यायसंस्कृतचेतसः सेश्वरमीमांसकास्तु । अरुणाद्युक्तिवत्—'अरुणयैकहायन्या पिङ्गाक्ष्या सोमं क्रीणाति' इत्यारुण्यादिगुणविशिष्टैकहायनीकरणकसोमक्रयणवाचिश्रुतिवाक्य इव । पदानाम्—सत्यादिपदानाम् । प्रतिपदनियतावर्ज्यतत्तन्निमित्तद्वारा—प्रतिपदं नियतमवर्ज्यानि पर्यायत्वापत्तिभयेनावश्यमत्याज्यानि यानि तानि तानि सत्यत्वज्ञानत्वानन्तत्वरूपाणि स्वरूपविकारराहित्यस्वभावविकारराहित्यज्ञानात्मकत्वज्ञानगुणकत्वत्रिविधपरिच्छेदराहित्यानवधिककल्याणगुणकत्वात्मकानि निमित्तानि तद्द्वारा तत्समर्पणपुरस्कारेण । एकत्र विशेष्येऽर्थे—एकस्मिन्विशेष्यभूते ब्रह्मरूपे बोध्ये । वृत्तिम्—बोधनम् । विदुः—निश्चितवन्त इत्यर्थः ॥ ४० ॥

इति जन्माद्यधिकरणम् ॥ २ ॥

## अथ शास्त्रयोनित्वाधिकरणम् ॥ ३ ॥

सूत्रम्—शास्त्रयोनित्वात् । ३ ॥

वीतावीतप्रयोगक्रमनियातिमती कार्यता विश्वमेतत्
सर्वज्ञेन प्रक्लृप्तं गमयति विफलस्त्वत्र शास्त्रैर्विचारः ।
इत्युन्नीतौ लघुत्वादनुमितिवशतः कर्मजैश्वर्ययुक्ते
विश्वामित्रादिनीत्या स्फुरति विभुमिहासूत्रयच्छास्त्रवेद्यम् ॥ ४१ ॥

चिन्ता०—शास्त्रारम्भार्थोपोद्घातपेटिकायां प्रतीतिप्रजननार्था पूर्वपेटिका निर्वृत्ता । तात्पर्यलिङ्गसमर्थनार्थोत्तरपेटिकाऽऽरभ्यते । तत्राप्राप्तत्वलक्षणं तात्पर्यलिङ्गं तृतीयसूत्रे सफलत्वलक्षणं चतुर्थे इति प्रागेवोक्तमस्माभिः । तत्र पूर्वपक्षवादी प्रत्यवतिष्ठते—अप्राप्तत्वमेव नास्ति, अनुमानसिद्धत्वादित्येका संगतिः । किं च 'यतो वा इमानि भूतानि' इत्यादिवाक्यं पुरुषसूक्तादिप्रसिद्धं किमपि वस्त्वनूद्य तस्य बृहत्त्वबृंहणत्वादिकं विदधातीति ब्रह्मोपादानवादिभिर्भवद्भिरुच्यते, तद्वार्तम्; अनुमानप्रसिद्धमेवोच्यताम् , तथा-चागमस्याप्यनुमानमेव मूलमित्यपरा । एवं च सत्यनुमानविरुद्धमुपादानत्वं यत इति शब्देन वक्तुं न शक्यत इति भावः । अत्रापि प्रागुक्तमेव विषयवाक्यम् । प्रधानोऽपि विषयः स एव । तदर्थविचारस्तु वेदान्तानां ब्रह्मणि प्रामाण्यमस्ति न वेति । तदर्थं विचार्यते वेदान्तानां सिद्धे ब्रह्मणि तात्पर्यलिङ्गमस्ति न वेति । तदर्थं विचार्यते ब्रह्मणि प्रमाणान्तरप्राप्तिरस्ति न वेति । तदर्थं विचार्यते—कार्यत्वादिकं लिङ्गमन्वयेन व्यतिरेकेण च ब्रह्म गमयितुं शक्नोति न वेति । पुनरपि विचार्यते—अन्यथासिद्धत्वादयो हेतुदोषा जगत्कर्तृत्वसाधके कार्यत्वादिहेतौ संभवन्ति न वेति । फलफलिभावस्तु कार्यत्वादिकं हेतुजातमीश्वरसाधने निर्दोषत्वात् साधयितुं शक्नोतीतीश्वरस्य प्रमाणान्तरप्राप्तत्वाद्वेदान्तवाक्यानां ब्रह्मणि तात्पर्यलिङ्गाभावादप्रामाण्यमित्यनारम्भणीयमेव शास्त्रमेतदिति पूर्वपक्षे । राद्धान्तेऽपि वैपरीत्येन वर्णनीयः । शेषं सुगमम् । अत्र पूर्वपक्षवादी [illegible]ऽपि तुच्[illegible] । वीतः—अन्वयी, विशेषेणेतत्वात् । अवीतः व्यतिरेकी, अन्वयाभावात् । वीतावीतः पुन-[illegible] [illegible]न [illegible]न्वयित्वाद् व्यतिरेकित्वाच्च । अत्र कार्यता उपलक्षणम् । कार्यायोजनधृत्यादीनां बहूनामपि हेतू[illegible] न्यायशास्त्रविद्भिरुपात्तत्वात् । इयं किल न्यायप्रक्रिया—ईश्वरसाधने द्वयमनुमानं प्रधानतयोपादीयते ।

कार्यलिङ्गकानुमानमुपदेशलिङ्गकानुमानं चेति । कार्यलिङ्गकानुमानं च द्विविधम्—अन्वयव्यतिरेक्यनुमानमेकं विवादाध्यासितं सकर्तृकं कार्यत्वादिति । अपरं तु व्यतिरेक्यनुमानं सर्वं कार्यं सर्ववित्कर्तृपूर्वकं कादाचित्कत्वादिति । एवमुपदेशलिङ्गकानुमानेऽपि भेदो द्रष्टव्यः । वेदवाक्यानि सकर्तृकाणि वाक्यत्वादित्यन्वयव्यतिरेकी । वेदाः सर्वज्ञप्रणीता वेदत्वादिति केवलव्यतिरेकी । अत्र कार्यत्वस्योपलक्षणत्वात् सकर्तृकत्वप्रसाधक महाविद्यारूपं प्रमेयत्वादिकमपि गृह्यते । विप्रतिपन्नं स्वस्वेतरवृत्तित्वानाक्रान्तसकर्तृकनिष्ठाधिकरणमिति महाविद्यावादिनः प्रसाधयन्ति । तेन सकर्तृकत्वानुमानेऽभिहिताः पक्षधर्मतावशादर्थतः सिध्यन्ति ! सर्वज्ञकर्तृकत्वानुमाने व्यतिरेकेण शब्दत एव सिध्यन्ति । एवमनुमानादीश्वरसिद्धौ शास्त्रैस्तद्विचारो विफलः। अत्रोत्तरमाह—इतीति । लघुत्वादिति—कार्यत्वादिना प्रसाध्यतां जगत्कर्ता यः कश्चिदपि, स तु जीवः स्यात् तस्य दृष्टत्वात् । तेन जीवक्लृप्तौ लाघवम्, ईश्वरक्लृप्तौ गौरवमिति नेश्वरसिद्धिः । ननु जीवानामल्पज्ञत्वात् कथं महीमहीधराद्यतिशयितार्थकर्तृत्वमिति ; तत्राह—विश्वामित्रादिनीत्येति । अस्त्वेकस्मिन्नण्डे विश्वामित्रः, अन्यत्र स नास्तीति चेन्न ; अन्यत्राप्यन्यस्य विद्यमानत्वात् । भवद्भिरप्यनन्ता एव योगिनः कल्प्यन्ते सर्वज्ञाः सर्वशक्तयश्चेति । तैरेव तत्रतत्र विश्वसृष्टिः प्रवर्तताम् । किमनेन नित्यज्ञानचिकीर्षाप्रयत्नवत्तया विजातीयतया परिकल्पितेन ? तथा चान्यथासिद्धिदूषितानि कार्यताद्यनुमानानीश्वरमनुमातुं न प्रभवन्ति । सर्वं कार्यमेककर्तृकं कार्यत्वादिति साधयाम इति चेत् तर्हि अनेककर्तृकेषु घटपटादिषु व्यभिचारः, अन्यथासिद्धिर्वा । नह्येककर्तृकत्वाभावे कोऽपि विरोधः स्यात् । अनेककर्तृकं न भवति कार्यत्वादित्युक्तेऽप्ययमेव दोषः । तस्मादनुमानानामनेकदोषदुष्टत्वात् वेदान्तवाक्यानामप्राप्तत्वलक्षणं तात्पर्यलिङ्गमस्त्येव । महाविद्यानुमानाडम्बरस्तु विडम्बनेनैव विडम्ब्यत इति वयमत्र न विस्तृणीमहे ॥ ४१ ॥

पद०—वीतावीतेत्यादि । वीतावीतप्रयोगक्रमपनियतिमती—विशेषेणेतत्वाद् वीतोऽन्वयी । अन्वयाभावादवीतो व्यतिरेकी । वीतावीतोऽन्वयव्यतिरेकी । तादृशो यः प्रयोगक्रमस्तस्मिन्नियतिमती—व्याप्तिशालिनी । अन्वयव्याप्तिशालिनी व्यतिरेकव्याप्तिशालिनी चेत्यर्थः। कार्यता—जन्यता । एतद्विश्वम्—परिदृश्यमानमहीमहीधरमहार्णवादिरूपम् । सर्वज्ञेन प्रक्लृप्तं गमयति—विश्वोपादानोपकरणसंप्रदानाद्यनभिज्ञेन विश्वनिर्माणासंभवात् सर्वज्ञेन निर्मितमवगमयति । अत्र—एवमनुमानेनावगते जगन्निर्मातरि विषये । शास्त्रैर्विचारो विफलस्तु—विफल एव । इत्युन्नीतौ—एवमाशङ्किते सति । अनुमितिवशतः—अनुमानप्रमाणबलेन । लघुत्वात् —अनुमानसहायभूताल्लाघवात् । विश्वामित्रादिनीत्य[illegible]था । कतिपयजागतपदार्थनिर्माणप्रसिद्धविश्वामित्रादिन्यायेन । कर्मजैश्वर्ययुक्ते— तपोविशेष[illegible] मितज्ञानशक्त्यादिशालिनि । स्फुरति—लाघवादर्शनानुगुण्याच्चावभासमाने सति । इह—शो[illegible] ।

विभुम्—परमात्मानम् । शास्त्रवेद्यमसूत्रयत्—अनुमानाद्यगम्यं शास्त्रैकसमधिगम्यं च 'शास्त्रयोनित्वात्' इति सूत्रेण प्रतिपादयामास ॥ ४१ ॥

क्षित्याद्यं कार्यताद्यैः कटकमकुटवत् कर्तृपूर्वं स कर्ता
सिध्येदत्राण्वदृष्टप्रभृतिजनकदृक् सर्वशक्तिश्च मैवम् ।
श्रोत्राद्यैः सौरभादिग्रहणरुचिरियं तादृशव्याप्त्यभावात्
सर्वं हेतुं न पश्येद्घटकृदिह न चाकर्तृता तावताऽस्य ॥ ४२ ॥

चिन्ता०—एवं कर्तुः सर्वज्ञत्वादिकं पक्षधर्मताबललभ्यमङ्गीकृत्य दूषणमुक्त्वा तदनङ्गीकारेणापि दूषणं वक्तुं तदेवानुमानं पुनरनुवदति—क्षित्याद्यमिति । अयमर्थः—क्षित्याद्यं कार्यत्वादिभिः सकर्तृकम्, स तु कर्ता कर्तुरुपादानोपकरणसंप्रदानप्रयोजनाभिज्ञानापेक्षास्तीति क्षित्याद्युपादानरूपाण्वदृष्टप्रभृतिद्रष्टा भवति । तद्दर्शनं चास्मदादीनां न घटते । तदभिज्ञानशक्तिर्दूरत एव । तदिदमाह—सर्वशक्तिरिति । प्रतिक्षिपति—मैवमिति । कुत इत्यत्रासाधकत्वे दृष्टान्तं तावदाह—श्रोत्राद्यैरिति । न ह्यन्येन्द्रियेणान्येन्द्रियविषयो गृह्यत इति । ननु तत्तदिन्द्रियाणां नियतविषयत्वादसामर्थ्यमस्तु, अनुमानस्य पुनरनियतविषयत्वात् कथमिवासामर्थ्यमित्याशङ्क्याह—तादृशेति । अनुमानमपि नियतविषयमेव । येन यस्य प्रतिसम्बन्धः, तत्तस्यानुमापकमिति न्यायविदां सम्प्रदायः । अत्र पुनः प्रतिसम्बन्धो नास्ति । कथमित्यत्राह—सर्वमिति । अयमत्र विकल्पः—किं सर्वकारकद्रष्टा कर्ता ? उत कतिपयकारकद्रष्टा ? पूर्वत्र कुलालस्यापि सर्वकारकद्रष्टृत्वं न विद्यते । नच तावता कर्तृत्वहानिः । उत्तरत्र क्षित्यादिकर्तुः कतिपयकारकद्रष्टृत्वं सिध्यतीति नेश्वरसिद्धिः ॥ ४२ ॥

पद०—क्षित्याद्यमित्यादि । क्षित्याद्यम्—महीमहीधरमहार्णवादिकम् । कार्यताद्यैः—कार्यत्वादिभिर्हेतुभिः । कटकमकुटवत्—स्वर्णकारकर्तृककटकमकुटवत् । कर्तृपूर्वम्—सकर्तृकम् । अत्र—अस्मिन्ननुमाने । स कर्ता—कार्यत्वहेतुबलात्सिध्यन् कर्ता । अण्वदृष्टप्रभृतिजनकदृक्—अतिसूक्ष्मभूता विश्वोपादानपरमाणवः, यानि च सर्वजीवात्मसमवेतादृष्टानि तत्प्रभृतीनि यानि जगदुपादानसहकारि[illegible]ऽपि तत्त[illegible]पकारी । सर्वशक्तिश्च—सर्वनिर्माणानुगुणशक्तियुक्तश्च । सिध्येत्—पक्षधर्मताबलात् [illegible] [illegible]—एवं मा चिन्तय । इयम्—ते वाञ्छा । श्रोत्राद्यैः सौरभादिग्रहणरुचिः—श्रो[illegible]पादिभिर्गन्धरसादिसाक्षात्कारलिप्सातुल्या । तादृशव्याप्त्यभावात्—कार्यत्वस्य सर्वज्ञकर्तृ-

करत्वव्याप्त्यभावात् । इह—लोके । घटकृत्—कुलालः । सर्वं हेतुं न पश्येत्—सर्वं कारकजातं न साक्षात्कुर्यात् । तावता—कार्यनिर्माणानुपयुक्तवस्त्वन्तरसाक्षात्काराभावमात्रेण । अस्य—कुलालस्य । अकर्तृता न च—घटकर्तृत्वाभावो न भवति । अयमत्र विकल्पः—किं सर्वकारकद्रष्टा कर्ता ? उत कतिपयकारकद्रष्टा ? पूर्वत्र कुलालस्य सर्वकारकद्रष्टृत्वं न विद्यते । न च तावता तस्य कर्तृत्वहानिः । उत्तरत्र क्षित्यादिकर्तुः कतिपयकारकद्रष्टृत्वमेव सिध्यतीति नेश्वरसिद्धिरिति ॥ ४२ ॥

कार्यत्वात्स्याद्विवादास्पदमिदमखिलं सर्ववित्कर्तृपूर्वं
यन्नैवं तद्धि नैवं पुरुषवदिति नानन्यथासिद्ध्यभावात् ।
हेतावेतादृशात्मन्यविदुरभिदुरं व्याप्त्यसिद्ध्यादिदौस्स्थ्यं
तद्भङ्गे लक्षणानामगणि गमनिका तत्त्वमुक्ताकलापे ॥ ४३ ॥

चिन्ता०—एवमीश्वरानुमानेषु साधारणं दूषणमुपन्यस्य केवलव्यतिरेकिणोऽव्याप्तिकत्वात् साक्षादेव विवक्षितार्थप्रसाधकत्वेन परवादिभिः प्रबलतयाऽभिमतत्वाच्च शिष्यप्रतिबोधनार्थं विशेषतस्तत्स्वरूपमुपन्यस्य तद्भङ्गे सर्वलक्षणविलोपप्रसङ्ग इति परोक्तं तर्काभासमपि निराकरोति—कार्यत्वादिति । इत्थं किलात्रानुमानप्रयोगः—सर्ववित्कर्तृकत्वासर्ववित्कर्तृकत्वविवादास्पदमखिलमपि कार्यजातं सर्ववित्कर्तृकमेव कार्यत्वात् यन्नैवं तन्नैवम्, यत् सर्ववित्कर्तृकं न भवति तत् कार्यमपि न भवति । साध्याभावे हि साधनाभावकथनं व्यतिरेकव्याप्तिप्रदर्शनमिति न्यायविदः । पुरुषवदिति—आत्मवत् । सौगतव्यतिरिक्तानां सर्वेषामपि वादिनामात्मा नित्यत्वेनैव निर्णीयत इति दृष्टान्तसिद्धिः । उक्तमर्थं प्रतिक्षिपति—नेति । तत्र हेतुमाह—अनन्यथेति । अनन्यथासिद्धिर्हि प्रमाणानां प्रामाण्यनियामिका । अनन्यथासिद्ध्यनङ्गीकारे हि सर्वेषामनुमानाभासादीनां कक्षीकारः प्रसज्येत । अन्यथासिद्धमप्रयोजकं व्याप्यत्वासिद्धमनुकूलतर्करहितं प्रतिकूलतर्कपराहतं सोपाधिकं सन्दिग्धव्याप्तिकमित्येतादृशान् शब्दान् प्रायेण पर्यायत्वेन प्रयुञ्जते प्रावादूकाः । अत्र पुनरित्थमन्यथासिद्धिः—सर्ववित्कर्तृपूर्वत्वं मा भूत् कार्यत्वमस्त्विति । अकर्तृकत्वे कार्यत्वं न स्यादिति हि तर्कः परिशुद्धः । त्वदुक्तः पुनरपरिशुद्ध एव व्यर्थविशेषणत्वात्, अन्ततः सोपाधिकत्वाच्च । अकर्तृकत्वमेवाकार्यत्वे प्रयोजकं नपुनः सर्वज्ञकर्तृकत्वाभाव इति ह्यस्माभिरुच्यते । ननु क्वचित् केवलव्यतिरेक्यनङ्गीकारे [illegible] सर्वमपि केवलव्यतिरेक्यनुमानजातं लोलुप्येतेत्याशङ्क्य लुप्यतामेव दूषणतौल्यादित्याह—हेता[illegible]णा एतादृशात्मनि व्यतिरेकिहेतौ सर्वत्रापि व्याप्त्यसिद्ध्यादिदौस्स्थ्यं प्रतिपद्यन्ते । ननु [illegible] भङ्गे लक्षणानां व्यतिरेक्यनुमानरूपत्वात् तद्भङ्गे लक्षणस्यापि भङ्ग इति महानयं प्रहारो भावत्कानामित्याशङ्क्य

व्यतिरेकिभङ्गेऽपि लक्षणं तत्प्रयोजनं च सिध्यतीति तत्त्वमुक्ताकलापे व्यक्तमुक्तमिति परिहरति—तद्भङ्ग इति । अयमर्थः—लक्षणं व्यतिरेकि मा भूत् । अन्वयव्यतिरेकित्वे पुनः सप्रयोजनमेव तत् । लोकेह्यम्बातातमातुलादिभिर्बहुशःशिक्षिता बाला गवादिशब्दांस्तेपुतेष्वर्थेषु वाचकत्वेन प्रतिपद्यन्ते । तादृग्भूतानुमानादिपु व्याप्तिग्रहणतुल्यमेतत् । ततश्च कश्चिद्बालो दूरावस्थितां गोव्यक्तिं दृष्ट्वा सहसैव निर्धारयितुमशक्तः शङ्कते कोऽयमिति । तत्रान्वयव्यतिरेकिरूपमनुमानं प्रवर्तते । अयं गौरिति व्यवहर्तव्यः सास्नादिमत्त्वात् मातापित्राद्यभिहितप्राचीनगोपिण्डवदिति सार्वलौकिकीयं मर्यादा न्यायविदामप्यनुसर्तव्येति सुष्ठूक्तम् ॥ ४३ ॥

पद०—कार्यत्वादित्यादि । विवादास्पदमिदमखिलम्—विप्रतिपत्तिविषयभूतमखिलमिदं विश्वम् । सर्ववित्कर्तृपूर्वम्—सर्ववित्कर्तृकम् । यन्नैवं तन्नैवं हि—यत् सर्ववित्कर्तृकं न भवति तत्कार्यमपि न भवति । पुरुषवत्—आत्मवत् । इति न—एवम्प्रयोगेणाभिमतं न सिध्यति । अनन्यथासिद्ध्यभावात्—अन्यथासिद्धत्वात् । सर्ववित्कर्तृपूर्वकत्वं मा भूत् कार्यत्वमस्त्वित्युक्ते अकर्तृकत्वे कार्यत्वं न स्यादिति हि परिशुद्धस्तर्कः । अकर्तृकत्वमेव ह्यकार्यत्वे प्रयोजकम् , नपुनः सर्वज्ञकर्तृकत्वाभावः, इत्यप्रयोजकत्वादित्यर्थः । एतादृशात्मनि हेतौ अभिदुरं व्याप्त्यसिद्ध्यादिदौस्स्थ्यं अविदुः—विचक्षणा इति शेषः । विचक्षणा एतादृशात्मनि केवलव्यतिरेकिरूपे हेतौ सर्वत्रापि हेतुसाध्ययोः पक्षादन्यत्र साहचर्यादर्शनेनाभिदुरं दुर्वारं व्याप्त्यसिद्ध्यादिरूपं प्रयोगदूषणं प्रतिपद्यन्ते । तद्भङ्गे—उक्तदूषणादिभिः केवलव्यतिरेकिभङ्गेऽपि । लक्षणानाम्—इतरभेदानुमापकत्वेन केवलव्यतिरेकिरूपाणां तत्तत्पदार्थलक्षणानाम् । गमनिका—सार्थक्यसंपादनसरणिः । तत्त्वमुक्ताकलापे—एतदाख्ये स्वानुगृहीते ग्रन्थे बुद्धिसरे

'सन्त्यक्तावीतहेतोरभिदुरमखिलं लक्षणाभावतः स्यात्
मैवं लक्ष्मैव भेदस्तदवगमकमित्यासवाक्ये तदुक्तिः ।'

इत्यादिभिः श्लोकैः । अगणि—प्रत्यपादि । अयमर्थः—लक्षणं केवलव्यतिरेकि मा भूत् । अन्वयव्यतिरेकित्वे पुनः सप्रयोजनमेव तत् । लोके ह्यम्बातातमातुलादिभिर्बहुशः शिक्षिता बाला गवादिशब्दांस्तेपु तेष्वर्थेषु वाचकत्वेन प्रतिपद्यन्ते । ततश्च कश्चिद्बालो दूरावस्थितां गोव्यक्तिं दृष्ट्वा सहसैव [illegible]ऽपि तत्त[illegible]शक्तः शङ्कते कोऽयमिति । तत्रान्वयव्यतिरेकिरूपानुमानं प्रवर्तते । अयं गौरिति व्यवहर्तव्यः [illegible] मातापित्राद्यभिहितप्राचीनगोपिण्डवदिति सार्वलौकिकीयं मर्यादा न्यायविदामप्यनुसर्तव्य[illegible] ॥ ४३ ॥

यद्यप्यात्मान्तरादेरनुमितिरनघा लिङ्गभेदैस्तथाऽपि
प्रत्यक्षव्याप्तिशैली नखलु शिथिलिता कुत्रचित् पक्षभेदे ।
आम्नाये त्वद्भुतोक्तिर्न भवति वितथा तादृशाप्तोक्तिनीत्या
बाधाभावादिसाम्याद् विहतिमति भवेल्लोकवद् गौणतादि ॥ ४४

चिन्ता०—यदीश्वरानुमानं न स्यात् विप्रतिपन्नं शरीरं सात्मकं प्राणादिमत्त्वादिति भवद्भिरभिधीयमानं परात्मानुमानमपि भज्येत । यदि परात्मानुमानमङ्गीकुरुषे, अङ्गीकुरुष्व त्वमीश्वरानुमानमपि ; तस्यापि परात्मत्वादित्याशङ्क्य विषमोऽयं दृष्टान्त इत्याह—यद्यपीति । वैषम्यमेव दर्शयति—तथाऽपीति । लिङ्गभेदैः रात्मान्तरानुमानसद्भावेऽपि तत्र प्रत्यक्षव्याप्तिमर्यादाभङ्गाभावादौचित्यमेवावतिष्ठते । ईश्वरानुमाने तु तद्भङ्गादनौचित्यमेव । नहि लोके कश्चित्कर्ता नित्यज्ञानचिकीर्षाप्रयत्नवान् दृश्यते । नच निष्प्रयोजनः कर्ताऽस्ति । ईश्वरस्यापि सप्रयोजनत्वे जीवत्वप्रसङ्ग इत्यादिबहुदोषदुष्टत्वात् न्यायवादिनामिष्टमिदमनुमानं कष्टमेवासंभाविताद्दष्टार्थपरिकल्पनाबाहुल्यात् । तर्ह्यदृष्टार्थोपवर्णनं शास्त्रस्यापि न स्यादित्याशङ्क्याह—आम्नायेत्विति । तुशब्दो विशेषमाह । शास्त्रे ह्यपूर्वार्थकथनं भूषणमेव । 'शास्त्रं शब्दविज्ञानादसन्निकृष्टेऽर्थे विज्ञानम्' इति तान्त्रिकैरुपवर्णनात् । लोकदृष्टक्रमाच्चामुमर्थमुपपादयति—तादृशेति । लोके हि देशान्तरादागतः कश्चिदत्यन्तादृष्टपूर्वमिष्टादिकमाचष्टे । स चाप्तत्वादप्रतिक्षेप्य एव । तथा वेदेऽपि कारणदोषादिरहिते प्रामाण्यस्यावर्जनीयत्वात् । ननु देशान्तरादागतपुरुषवाक्यं क्वचिदप्रमाणमपि स्यात् । ततस्तद्बाधकप्रमाणसद्भावेऽप्रमाणम् , तदभावे प्रमाणमिति स्वतः प्रामाण्यन्यायसिद्धं प्रामाण्यमवतिष्ठते ; एतदिहापि समानम् , तदिदमाह—बाधेति । तथाऽपि 'आदित्यो यूपः' 'यजमानः प्रस्तरः' इत्यादीनां बाधो दृश्यत इत्याशङ्क्याह—विहतिमतीति । अयमाशयः—द्वयं खल्वर्थवादवाक्यमबाधितं बाधितं चेति । 'यन्न दुःखेन संभिन्नम्' इत्यादिकमबाधितम् । तच्च प्रतिपन्नार्थत्वतया तथैवावतिष्ठते । 'आदित्यो यूपः' 'यजमानः प्रस्तरः' इत्यादिकं बाधितम् । तत् मुख्यार्थं परित्यज्योपचारिकार्थे वर्तते । स चात्र प्राशस्त्यादिरेव । तस्माद्बाधितमबाधितं वा वेदवाक्यं सार्थकमेवेति सुशोभनमेतत् ॥ ४४ ॥

पद०—यद्यपीत्यादि । यद्यपि लिङ्गभेदैः—हेतुविशेषैः, विप्रतिपन्नं शरीरं सा[illegible]त्वादित्यादिहेतुभिरित्यर्थः । आत्मान्तरादेः—परात्मप्रभृतेः । अनुमितिरनघा नि[illegible]शेषः । तथाऽपि—तादृशपरात्मानुमितेरङ्गीकारेऽपि । पक्षभेदे कुत्रचित्—तादृशेश्वरानुमितिव्य[illegible]

नुमितिसाध्याश्रये क्वापि । प्रत्यक्षव्याप्तिशैली न शिथिलिता खलु—प्रत्यक्षसिद्धव्याप्तिमर्यादा न भग्ना खलु । ईश्वरानुमितौ तद्भङ्गादनौचित्यमेव । नहि लोके कश्चित् कर्ता नित्यज्ञानचिकीर्षाप्रयत्नवान् दृश्यते । नच निष्प्रयोजनः कर्ताऽस्ति । अतो नानुमानान्तरतौल्यमिति भावः । आम्नाये तु—वेदे तु । अद्भुतोक्तिः–अपूर्वार्थप्रतिपादनम् । तादृशाप्तोक्तिनीत्या—अस्मदपरिदृष्टदेशान्तरागतपुरुषवक्तृकविचित्रार्थोक्तिन्यायेन । बाधाभावादिसाम्यात्—बाधकज्ञानाभावकारणदोषराहित्यादीनां तुल्यत्वात् । वितथा न भवति—अप्रमाणं न भवति । विहतिमति—प्रत्यक्षादिप्रमाणान्तरविरुद्धार्थे 'आदित्यो यूपः' इत्यादौ । गौणतादि—लक्षणयाऽविरुद्धार्थान्तरपरत्वादि । लोकवत् भवेत्—यथा लौकिकवाक्येष्वपि केषांचित् प्रमाणत्वं केषांचित् प्रमाणान्तरविरोधेऽविरुद्धार्थान्तरपरत्वं च सर्वसंमतम्, तद्वदेव भवेत् । न च तावता सर्ववाक्यप्रामाण्यहानिरिति भावः ॥ ४४ ॥

नन्वाम्नायप्रधानाः कचिदनुकथयन्त्यस्मदादेरशक्यैः
कार्यैः कर्ताऽनुमेयः पर इति तदभिप्रैति जन्मादिवाक्यम् ।
तस्मादीशानुमानत्यजनमनुचितं वैदिकस्येति चेन्न
काप्यौचित्योपदेशाद् यत इति च सदाद्युक्तिसिद्धानुवादात् ॥ ४५ ॥

इति शास्त्रयोनित्वाधिकरणम् ॥ ३ ॥

चिन्ता०—अत्र पूर्वपक्षवादी पुनश्चोदयति—नन्विति । इत्थं किल तदभिप्रायः—लोके हि भवन्मतानुसारिणः सर्वेऽपि ब्रह्मादिपिपीलिकान्तस्य विचित्ररचनस्य नारायणमन्तरेण सृष्टिर्न संभवतीति सर्वथा वदन्ति । तदेव केचित् प्रबन्धेषु प्रकरणरूपेषु युक्तिभिः प्रतिष्ठापयन्ति । तदेवानुमानम् । तच्चाभिप्रैति जन्मादिवाक्यम् । तस्मादनुमानमेव परस्मिन्ब्रह्मणि प्रमाणम् । तस्मादनुमानस्य जगत्कर्तृसाधने प्राबल्यमित्यनुमानसिद्धानुवादमात्रमेतज्जगज्जन्मादिवाक्यम् । अनुवादत्वं च 'यतो वा इमानि' इति यच्छब्दयोगादवगम्यत इत्येतस्मादेव हेतोर्वैदिकस्य भवत ईश्वरानुमानत्यजनमनुचितमिति । तदिदं प्रतिक्षिपति—नेति । तत्र हेतुमाह—क्वापीति । औचित्यम्–योग्यतातिशयः । नारायणस्यैव ऽपि तत्र [illegible]णेतिहासलोकप्रसिद्ध्यादयो भूयांसः संवदन्त इत्यास्माकानां प्रवादः । नच तावता [illegible] प्रतिष्ठाप्यते । केषांचिद्ग्रन्थनिदर्शनेऽपि 'यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः' इत्यु[illegible]क्रियया ऽऽगमानुकूलतर्कमात्रमनुमन्यते । नपुनरागमविरुद्धनिमित्तमात्रेश्वरानुमानं परवादिभिरु-

पकल्पितं प्रमाणतया प्रतिष्ठाप्यते। यत इत्यनुवादश्चास्य पूर्वप्रसिद्धिमात्रमेवाक्षिपेत्। नपुनरनुमानेनैव प्रसिद्धिम्। अत्र तु प्रसिद्धिः पुरुषसूक्तादिवाक्यैरिति पूर्वमेवोक्तमस्माभिः। इह च सद्विद्योपादानं सर्ववाक्योपलक्षणम् ॥ ४५ ॥

इति शास्त्रयोनित्याधिकरणम् ॥ ३ ॥

पद०—नन्वाम्नायप्रधाना इत्यादि। ननु—प्रश्नार्थे। आम्नायप्रधानाः—आम्नायः वेद एव प्रधानं प्रमाणतमं येषां ते पराशरादयः। अस्मदादेः—अस्मत्प्रभृतेरल्पज्ञानशक्तिकस्य जीवस्य। अशक्यैः—कर्तुं सर्वथा ऽयोग्यैः। कार्यैः— मेघोदयसागरव्यवस्थादिभिः। कर्ता—तादृशाशक्यकार्यकर्ता। परः—परमात्मा। अनुमेयः—अस्ति कश्चिद्भगवानिति निर्धारणीयः। इति—एवम्। क्वचित्—विष्णुपुराणादौ। 'मेघोदयः सागरसंनिवृत्तिः' इत्यारभ्य 'एतानि विष्णोः प्रवदन्ति मायाम्' इत्यन्तेन। अनुकथयन्ति—प्रतिपादयन्ति। जन्मादिवाक्यम्—'यतो वा इमानि भूतानि जायन्ते' इत्यादिजगज्जन्मादिप्रतिपादकवाक्यम्। तदभिमैति—पराशरादिभिरुक्तं मेघोदयादिभिर्यदीश्वरानुमानं तदनुवादकतया तदभिप्रायकमेव। तस्मात्—महर्षिभिरेवेश्वरानुमानस्य प्रतिपादनात् वेदे च तदनुवादात्। वैदिकस्य—वेदप्रमाणकस्य विवेकिनः। ईशानुमानत्यजनमनुचितम्—इश्वरानुमानप्रहाणमयुक्तम्। इति चेन्न—एवमुच्यते चेन्नैतद्युक्तम्। क्वाप्यौचित्योपदेशात्—विष्णोरेव जगत्कारणत्वं श्रुतिप्रतिपन्नं तर्कानुमानैरपि साधितुं शक्यमित्येतावन्मात्रप्रतिपादनतत्परत्वादुदाहृतग्रन्थस्य। यत इति च—जन्मादिवाक्ये 'यतो वा इमानि' इत्यत्रानुवादकेन यतइति पदेन च। सदाद्युक्तिसिद्धानुवादात्—'सदेव सोम्येदमग्र आसीत्' 'एको हवै नारायण आसीत्' 'सहस्रशीर्षा पुरुषः' इत्यादिपूर्वोक्तपुरुषसूक्तार्थपर्यवसायिसमस्तकारणवाक्यसिद्धपुरुषनारायणानुवादात्, नपुनर्दूषणशतग्रन्थिलानुमानसिद्धानुवादादित्यर्थः ॥ ४५ ॥

इति शास्त्रयोनित्याधिकरणम् ॥ ३ ॥



## अथ समन्वयाधिकरणम् ॥ ४ ॥

सूत्रम् । तत्तु समन्वयात् ॥ ४ ॥

कर्तव्ये ह्यर्थ उक्ते निशमयितृफलं सिद्धरूपे तु न स्यात्
प्रीत्या साफल्यक्लृप्तौ वितथमपि वचः किं न दृष्टं तदर्थम् ।
विद्यार्थत्वे ऽन्यदृष्टैर्विषयवदनृतं तत्परीक्ष्यं न भावी-
त्याक्षेपे ऽनन्यशेषं निरवधिकसुखे शास्त्रतात्पर्यमाह ॥ ४६ ॥

चिन्ता० एवं सिद्धपराणां वेदान्तवाक्यानामप्राप्तत्वलक्षणं तात्पर्यलिङ्गं प्रसाध्य साफल्यलक्षणं तात्पर्यलिङ्गं समन्वयाधिकरणेन साध्यत इति संगतिः । अथवा शास्त्रयोन्यधिकरणे तार्किका निरस्ताः अधुना तान्त्रिका निरस्यन्त इति । एवं वा पूर्वं निमित्तमात्रेश्वरवादिनो निरस्ता इदानीं निरीश्वरवादिन इति । विषयस्तु शास्त्रारम्भ एव प्रधानः । अवान्तरविषयः पुनः—अशेषमपि वेदान्तवाक्यजातम् , संशय कारणं वैदिकानामवैदिकानां प्रामाण्याप्रमाण्यसाधारण्यम् । तदर्थविचारस्तु—वेदान्तशास्त्रमारम्भणीय-मनारम्भणीयं वेति । तदर्थं विचार्यते–सिद्धे ब्रह्मणि वेदान्तवाक्यानां स्वातन्त्र्येण विधिशेषत्वे-नापि वा प्रामाण्यं संभवति न वेति । स्वातन्त्र्यपक्षे तात्पर्यलिङ्गमस्ति न वेति । तदर्थं विचार्यते–वेदा-न्तानां ब्रह्मप्रतिपादने सप्रयोजनत्वमस्ति न वेति । तच्च प्रयोजनवत्त्वं वाक्यानां स्वरूपप्रतिपत्त्या स्वादा-र्थत्वमात्रेण उत कार्यरूपप्रयोजनपरत्वेनेति । स्वादार्थत्वे पुनरर्थमिथ्यात्वेऽपि प्रयोजनपरत्वमस्ति न वेति । फलफलिभावस्तु–स्वादार्थत्वेऽर्थमिथ्यात्वेऽपि प्रयोजनसिद्धेर्ब्रह्मयाथात्म्याभावात् प्रवृत्तिनिवृत्तिप्रयोजन-परत्वेऽपि वाक्यस्यान्यपरत्वेन परब्रह्मयाथात्म्याभावस्याविशिष्टत्वात् निष्प्रयोजनत्वेन तात्पर्यलिङ्गाभावाद-ऽपि तत्[illegible]न्त्र्येण पारतन्त्र्येण वा वाक्यप्रामाण्याभावाद् वेदान्तशास्त्रमनारम्मणीयमिति पूर्वपक्षे । [illegible]कार[illegible] [illegible] वर्णनीयः । शेषं सुगमम् । अत्र पूर्वपक्षमाह—कर्तव्य इति । 'स्वर्गकामो यजेत' इत्यादौ कर्तव्यार्थे प्रतिपादिते श्रोतुः फलं स्यात् । नतु नरष्टौ काकदन्ता इत्यादौ सिद्धरूपप्रतिपादने ।

इयं हि लोकमर्यादा । इयमेव मर्यादा वेदेऽप्यङ्गीकार्या य एव लौकिकास्त एव वैदिका इतिन्यायात् । तेनोपनिषदामूपरप्रायत्वमेव । ननूपनिषदामूपरप्रायत्वं प्रथमाधिकरणेऽप्युक्तमिहाप्युच्यत इति पौनरुक्त्यम् ; न पुनरुक्तिः—तत्र पदार्थप्रतिपत्तिर्न संभवतीति पूर्वपक्षः, अत्र पुनर्वाक्यार्थप्रतिपत्त्यनुपपत्तिकथनेनेति विभागः । विभागान्तरमपि—तत्र केवलं नियोगवाक्यार्थवादिनो निरस्ताः, अत्र पुनर्भावनावाक्यार्थवादिनश्चेति विशेषः । ननु सिद्धरूपत्वेऽपि तव गृहे निधिरस्ति पिता ते सुखमास्त इत्यादिवत् तादात्विकप्रीत्युत्पत्तिमात्रेण साफल्यं स्यात्, अर्थाभावेऽपि पिता ते सुखमास्त इत्यादि विप्रलम्भकवाक्यमपि प्रीतिमातनोति, तथा च वेदान्तवाक्यानां 'आनन्दो ब्रह्म' इति वाक्यमनर्थकमेव प्रीतिमातनोतीति मिथ्याभूततदर्थविचारात्मकं शारीरकशास्त्रं कथमिवारभ्येत? तर्हि स्वातन्त्र्येण माभूत्प्रामाण्यम्, 'परप्राप्तिकामो ब्रह्म विद्यात्' इति विद्याविधिशेषत्वेन स्वरूपप्रतिपत्तिहेतुभूतानां सत्यज्ञानादिवाक्यानां प्रामाण्यमस्तीति चेत् तत्रोत्तरमाह–विद्येति। अन्यदृष्टिः-गरुडमात्मानं जानीयादित्यादिदृष्टिः । तदर्थो मिथ्या । एवं 'ब्रह्म विद्यात्' इत्यत्रापि फलार्थं विद्याविधावेव तात्पर्यम् । न पुनः सिद्धे ब्रह्मणि । तथा च तात्पर्याविषयभूतवेद्यब्रह्मपरिशोधनात्मकं सत्यज्ञानादिवाक्यमप्रमाणमिति तदर्थविचारात्मकं शास्त्रमनारम्भणीयम् । एवं पूर्वपक्षमनूद्य सिद्धान्तमारभते—अनन्येति । अयमभिप्रायः—विधिशेषत्वपक्षस्तु भाष्यादावेवावादि । स्वातन्त्र्यपक्ष एव साक्षात्सिद्धान्तः । तस्यैव बहुन्यायसिद्धत्वादिति ॥ ४६ ॥

पद०—कर्तव्ये ह्यर्थ इत्यादि । कर्तव्येऽर्थे उक्ते हि निशमयितृफलम्—'स्वर्गकामो यजेत' इत्यादिरीत्या पुरुषप्रवृत्तिसाध्येऽर्थे प्रतिपादिते सति हि श्रोतुः फलं स्यात् । सिद्धरूपे तु न स्यात्—अष्टौ काकदन्ताः सन्तीत्यादिरीत्या सिद्धरूपेऽर्थे प्रतिपादिते श्रोतुः फलं न स्यात् । प्रीत्या साफल्यक्लृप्तौ—सिद्धपरत्वेऽपि तव गृहे निधिरस्ति पिता ते सुखमास्त इत्यादिष्विव तादात्विकप्रीत्युत्पत्तिमात्रेण सफलत्वसम्पादने । तदर्थम्—प्रीत्यर्थमुच्यमानम् । वितथमपि वचः । अयथार्थभूतं विप्रलम्भकवाक्यमपि । न दृष्टं किम्? तथा च तन्नार्थसद्भावे प्रमाणं भवितुमर्हतीति भावः । विद्यार्थत्वे—स्वातन्त्र्येण 'सत्यं ज्ञानम्' इत्यादिभिर्ब्रह्मप्रतिपत्तौ किलापादिता दोषाः । न वयं तथा वदामः । अपि तु 'परप्राप्तिकामो ब्रह्म विद्यात्' इति विधिशेषत्वेनैव ध्येयस्वरूपप्रतिपत्तिहेतुभूतानां सत्यादिवाक्यानां प्रामाण्यमितिचेन् । अन्यदृष्टेर्विषयवदनृतम्—'मनो ब्रह्मेत्युपासीत' इत्यादाविव अन्यस्मिन्नन्यतया या दृष्टि र्मनसि ब्रह्मत्वेन दृष्टि र्नाम्नि ब्रह्मत्वेन दृष्टि र्गवि परमात्मतया दृष्टिरि[illegible] विषयभूतमारोप्यमाणं वस्त्विवानृतं मिथ्याभूतं भवेत् । नपुनर्वास्तवं सिध्येत् । [illegible] परीक्ष्यं न भावि—निरुक्तसत्यज्ञानाद्युपनिषदर्थभूतं वस्तु विचारणीयं न भविष्यति । तद्विचारात्मक-

मिदं शास्त्रमनारम्भणीयं स्यात् । इत्याक्षेपे—एवमाशङ्किते सति । निरवधिकसुखे–अनवधिकसुखात्मके ब्रह्मणि । अनन्यशेषम्—विधिवाक्यशेषत्वमनापन्नं स्वातन्त्र्येणैव प्रवृत्तम् । शास्त्रतात्पर्यम्—शास्त्रस्य उपनिषदात्मकस्य तात्पर्यं बोधकत्वेन पर्यवसानम् । आह—तत्तु समन्वयादिति प्रतिपादयांमास ॥ ४६ ॥

तात्पर्यं ब्रह्मतत्त्वेऽप्यविहति विधिनाऽप्येकवाक्यत्वपक्षे
भेदेऽपि स्वादसिद्धेर्न भवति बलिभुग्दन्तसङ्ख्योक्तिसाम्यम् ।
स्वादार्थत्वं मृषात्वक्षममिति न मृषेत्यूहने प्रीत्ययोगाद्
बालोपच्छन्दनादिष्वपि विषयतथाभावबुद्ध्यैव हर्षः ॥ ४७ ॥

चिन्ता०—एवं विवक्षितं विधिशेषत्वपक्षमनङ्गीकृत्य स्वातन्त्र्यपक्षेण सामाधानमुक्तम् । इदानीं विधिशेषत्वपक्षेऽपि नास्माकं कश्चिद्दोष इत्युभयपक्षाङ्गीकारेण स्वाभीष्टमर्थं समर्थयते—तात्पर्यमिति । द्विविधं खल्वर्थवादप्रमितम्–विध्यपेक्षितमविहतमित्येकमनपेक्षितं विहतमित्यपरम् । तत्र पूर्वमङ्गीक्रियते तान्त्रिकैः । यथा दुःखासंभिन्नदेशविशेषादि । तद्वद् ब्रह्मणि विहत्यभावाद् विधिशेषत्वेन प्रामाण्यमस्त्येव । विहतपक्षस्त्वत्रानङ्गीकारेणैव निरस्तः । अनपेक्षितत्वं पुनरत्र नास्तीत्याह—न भवतीति । तत्र हेतुः—स्वादसिद्धेरिति । नैरर्थक्याभावादित्यर्थः । उत्तरपक्षेऽप्युद्धाटितामनुपपत्तिं परिहरति—स्वादार्थत्वमित्यादिना । तत्र हेतुमाह—मृषेति । अयमर्थः–तव गृहे निधिरस्ति, पिता ते सुखमास्ते इत्यादिवाक्यं मृषार्थमिति यदि प्रतिपद्येत, तदा कथमिव तस्य प्रीतिरुत्पद्यते? अतः सत्यत्वाध्यवसायादेव तत्रापि प्रीतिरुत्पद्यते । अस्मिन्नर्थे लोकदृष्टान्तमाह—बालेति । बालाः खलु पिता ते सुखमास्त इत्यादिकं परमार्थप्रतिपादकमिति मत्वा सन्तुष्यन्ति । अन्यथा सन्तोषाभावात् । अत्र पुनर्विशेषणानां निरतिशयानन्दादीनां पारमार्थ्यं यदि प्रतिपद्यते श्रोता, तदानीमस्मच्छिष्य एव । अथ न प्रतिपद्यते तदा परमार्थप्रतिपत्त्यभावात् पुरुषार्थप्राप्तिर्न स्यादेव । तथा च स्वादार्थत्वं मृषात्वक्षममित्यसंगतमेव ॥ ४७ ॥

ऽपि तत [illegible]

[illegible]कार [illegible]—तात्पर्यमित्यादि । विधिना, एकवाक्यत्वपक्षेऽपि—सत्यादिवाक्यानां वेदनविध्यप[illegible]ध्येयस्वरूपसमर्पणपरत्वेन तदेकवाक्यत्वपक्षेऽपि । ब्रह्मतत्त्वेऽपि—ब्रह्मस्वरूपेऽपि । अविहति—

हेत्वर्थं विशेषणम् । अविरुद्धत्वात् । तात्पर्यम्—बोधकतया पर्यवसानम् । अस्त्येवेति शेषः । भेदेऽपि—भिन्नवाक्यत्वेऽपि । स्वादसिद्धेः—प्रीतिसिद्धेः । नैरर्थक्याभावादिति चिन्तामणिः । बलिभुग्दन्तसंख्योक्तिसाम्यं न भवति—अष्टौ काकदन्ताः सन्तीत्यादिकाकदन्तसंख्यावचनतुल्यत्वं न भवति । स्वादार्थत्वं मृषात्वक्षममिति न—प्रीत्यर्थं वचनं मिथ्याभूतमपि भवेदिति शङ्कनं न युक्तम् । मृषेत्यूहने प्रीत्ययोगात्—तस्य वचनस्य मिथ्यात्वप्रतिपत्तौ सत्यां प्रीत्युत्पत्तेरसंभवात् । बालोपच्छन्दनादिष्वपि—बालोपलालनार्थेष्वपि कषायं पिब फलं दास्यामीत्यादिरूपेषु । विषयतथाभावबुद्ध्यैव हर्षः—भवतीति शेषः । विषयसत्यत्वज्ञानेनैव बालस्य हर्षो भवति । अन्यथा हर्षो न भवत्येव ॥ ४७ ॥

यत् प्रीत्यर्थं वचस्तन्निखिलमनृतमित्यर्भकप्रायवाक्यं
सत्योक्त्याऽऽनन्ददृष्टेर्न च विहतिरिहाध्यक्षतः शास्त्रतो वा ।
तेनानन्यार्थसिद्धोक्त्यनृतविषयताशङ्कनस्तम्भनेन
त्रय्यन्ताः सत्यनित्याद्भुतसुखपरमब्रह्मनिष्ठाः प्रमाणम् ॥ ४८ ॥

चिन्ता०—यत् प्रीत्यर्थं वाक्यं तत् वितथमित्युक्तं पूर्वपक्षिणा, तद् विकल्प्य दूषयति—यदिति । किं प्रीत्यर्थं वाक्यं निखिलमपि वितथमित्युच्यते ? किं वा यत्किंचित् ? न तावदाद्यः—अवितथेनापि पिता ते सुखमास्त इत्यादिना प्रीतिदर्शनात् । अतो व्यभिचरितार्थं वाक्यं वदन् अर्भकप्राय एव भवान् बालप्राय इत्यर्थः । तत्र हेतुमाह—सत्येति । परमार्थोक्त्याऽऽनन्ददृष्टेरित्यर्थः । उत्तरस्मिन्पक्षे व्याहतं वितथमित्युच्यते किमव्याहतमपि तत्र व्याहतिरत्र नास्तीत्याह—नचेति । तत्रापि विकल्पोऽभिप्रेतः किं प्रत्यक्षेण व्याहतिरुतागमत इति । अव्याहतिपक्षेऽपि लौकिकवैदिकसर्वव्यवहारोच्छेदप्रसङ्ग इति भावः । किं च केवलं व्याहतत्वस्यैव वैतथ्यहेतुत्वे संभवति प्रीत्यर्थत्वे सति व्याहतत्वादिति विशिष्टप्रयोगो विशेषणवैयर्थ्यादनुमानवार्तानभिज्ञतां दर्शयति । केवलं प्रीत्यर्थत्वादिति प्रयोगो व्यभिचारेण दुष्ट इतीदानीमेवोक्तम् । एवं परोक्तप्रक्रियां निराकृत्य स्वोक्तमर्थं निगमयति—तेनेति । पूर्वपक्षोक्तार्थाशङ्कनस्तम्भनेन वेदान्ताः परस्मिन् ब्रह्मणि प्रमाणमित्यर्थः ॥ ४८ ॥

पद०—यत्प्रीत्यर्थमित्यादि । यद्वचः प्रीत्यर्थं तन्निखिलमनृतमित्यर्भकप्राय प्रीत्युत्पत्तिप्रयोजनकं यद्यद् वचस्तत्सर्वं मिथ्यार्थकमिति बालतुल्यस्य वचनम् । सत्योक्त्या आनन्ददृष्टेः—

सत्यार्थकवचनादानन्दजननदर्शनेन व्यभिचारात् । इह—सत्यादिवाक्यावगते ब्रह्मणि । अध्यक्षतः शास्त्रतो वा—प्रत्यक्षेण वा शास्त्रेण वा । नच विहतिः—न विरोधः । तेन—उक्तरूपेण । अनन्यार्थसिद्धोक्त्यनृतविषयताशङ्कनस्तम्भनेन—अनन्यार्था विधिशेषत्वमनापन्ना स्वातन्त्र्येण प्रवृत्ता या सिद्धोक्तिः पुरुषप्रवृत्त्यसाध्यब्रह्मतत्त्वविषयिणी 'सत्यं ज्ञानम्' इत्याद्युपनिषदुक्तिस्तस्याः अनृतविषयताशङ्कनं मिथ्यार्थकताशङ्कनं यत् तस्य स्तम्भनेन निरोधनेन । सत्यनित्याद्भुतसुखपरमब्रह्मनिष्ठाः—सत्यं स्वरूपस्वभावविकाररहितम् , नित्यं कालपरिच्छेदरहितम् , अद्भुतं चेतनाचेतनविलक्षणस्वरूपस्वभावम् , सुखमानन्दरूपम् , परमं 'न परं पुण्डरीकाक्षात्' 'परः पराणां परमः' इत्यादिनीत्या स्वोत्कृष्टवस्तुशून्यम् , यद् ब्रह्म स्वरूपतो गुणतश्चानवधिकातिशयबृहत्त्वाश्रयभूतमाश्रितानामप्यानन्त्यहेतुभूतं वस्तु तन्निष्ठा स्तस्मिन्नेव तात्पर्येण पर्यवसन्नाः । त्रय्यन्ताः—उपनिषदः । प्रमाणम्—प्रमाकरणमिति सिद्धम् ॥ ४८ ॥

ब्रह्मैके निष्प्रपञ्चीकरणविधिपदं ध्यानविध्यर्थमन्ये
निर्धर्माद्वैतवाक्योपचरितमपरे सिध्यतीति ब्रुवन्ति ।
तेषामेषां स्वपक्षस्ववचनविहतिव्याकुलानेकजल्पः
कल्पोऽयं बाह्यकल्पः कृतमतिपरिषत्पीठमर्दैरमर्दि ॥ ४९ ॥

चिन्ता०—अस्मिन्नधिकरणे मृषावादिनां पक्षत्रितयमुपन्यस्तम् , तत्राद्यौ पक्षौ जरन्मायावादिभिरभिधीयेते, एकस्त्वाधुनिकैः, तेन च तौ निरस्तौ, सोऽपि पक्षोऽस्मत्पूर्वपक्षवादिना निरस्तः, स च वादी सिद्धान्तवादिनेति पक्षपञ्चकमुपन्यस्यते । तत्र पक्षत्रितयं भाष्यकारैरेवोपन्यस्य परास्तं तदनुवादिभिराचार्यैरपीति नास्माकमिह वक्तव्यं किंचिदवशिष्यत इत्यभिप्रायेणाह—ब्रह्मेति । तत्र निष्प्रपञ्चीकरणनियोगवाद एकः 'न दृष्टेर्द्रष्टारं पश्येः' इत्यादिनोपपादितः । अपरस्तु ध्याननियोगवादः 'ओमित्यात्मानं ध्यायीत' इत्यादिवाक्यसिद्धः । तृतीयोऽपि 'तत्त्वमसि' इत्यादिवाक्यसिद्ध इति तेषां प्रक्रिया । तेषामेकदर्शनेन दूषणं सूचयति—तेषामिति । स्वपक्षविहतिः—अपसिद्धान्तः । स्ववचनविहतिः—प्रतिज्ञाविरोधः । अत्र व्याकुलशब्दः प्रकारान्तरेण वैयाकुलीमुपलक्षयति । अनेन सर्वनिग्रहस्थानोपहतिरुच्यते । सङ्गतमेव ॥ [illegible]ाक्षाद् बाह्य एवायं पक्षः, अथापि वाङ्मात्रेण तद्भक्तैर्वादिभिर्यत्किञ्चिद्वैषम्यमुच्यत इति ऽपि तत्[illegible] [illegible]कार[illegible]यः—शिक्षितमतयः, तेषां परिषदि पीठमर्दैः—एकासनाधिरूढैरतिशयिततत्त्ववि[illegible]रित्यर्थः ॥ ४९ ॥

पद०- ब्रह्मैक इत्यादि । एके-जरन्मायावादिनः केचित् । ब्रह्म निष्प्रपञ्चीकरणविधिपदं सिध्यतीति ब्रुवन्ति—सप्रपञ्चतया भासमानं ब्रह्म निष्प्रपञ्चं कुर्यादित्येतदर्थकस्य 'न दृष्टेर्द्रष्टारं पश्येः' इत्यादिनिष्प्रपञ्चीकरणविधिवाक्यस्य विषयभूतं सद् ब्रह्म सिध्यतीति वदन्ति । अन्ये ध्यानविध्यर्थं ब्रुवन्ति—अपरे केचिज्जरन्मायिनो ब्रह्म 'ओमित्यात्मानं ध्यायीत' इति ध्यानविधिवाक्यार्थं वदन्ति । अपरे निर्धर्माद्वैतवाक्योपचरितं सिध्यतीति ब्रुवन्ति—आधुनिकास्तु मायिनो निर्धर्मं प्रतीयमानधर्मद्वयसम्बन्धरहितं यज्जीवब्रह्मणोरद्वैतमभेदस्तत्परं तत्त्वमसीत्यादिवाक्यं तेनोपचरितं जीवाभेदेन लक्षितं सद् ब्रह्म सिध्यतीति संगिरन्ते । तेषामेषाम्—जरन्माय्याधुनिकभेदभिन्नानां मायिनां संबन्धी । स्वपक्षस्ववचनविहतिव्याकुलानेकजल्पः—स्वपक्षविहतिरपसिद्धान्तः स्ववचनविहतिः प्रतिज्ञाविरोधः, ताभ्यां व्याकुला अनेके जल्पा यस्मिन् सः । बाह्यकल्पः—मायिभिर्भक्त्या स्वपक्षस्य बौद्धपक्षात्किंचिद्वैषम्यकथनेऽपि पर्यवसाने तादृशवैषम्यायोगात् बाह्यपक्षतुल्य एवायमित्यर्थः । अयं कल्पः—सङ्ग्रहेणोपन्यस्तस्तत्स्पक्षप्रकारः । कृतमतिपरिषत्पीठमर्दैः—कृतमतयः शिक्षितबुद्धयस्तेषां परिषदि ये पीठमर्दा नियुक्तकार्यकारिणस्तैः । अमर्दि—निर्मूलित इत्यर्थः ॥ ४९ ॥

अन्यार्थो ह्यर्थवादः स्तुतिमुखमुखतः स्थापितः प्रागिदानीं
स्वातन्त्र्येण प्रमाणीक्रियत इति ततः काण्डयोः स्याद्विरोधः ।
न स्यात् सामान्यतो हि प्रथममभिदधे मानतास्थापनार्थं
केषांचित् सार्थतोक्ता स्वत इह सुभगे बोधमात्रात्सुमर्थे ॥ ५० ॥

चिन्ता०—एवं परस्परविरोधात् प्रस्फुटदोषत्वाद् भाष्यकारैरेव सुव्यक्तमेव निरस्तत्वाद् वक्तव्याभावेन परपक्षानुपेक्ष्य भाष्योक्तपूर्वपक्षसिद्धान्तयोः परिस्खलितप्रकारमाक्षिप्य समाधत्ते—अन्यार्थ इति । अयमर्थः—पूर्वस्मिन् काण्डेऽर्थवादानां विधिशेषतयैव प्रामाण्यमुक्तम्, अत्र पुनः स्वातन्त्र्येण, तेन पूर्वोत्तरविरोधात् पूर्वोत्तरकाण्डयोरैकशास्त्र्यवादिनां युष्माकमनुचितमेवेदं भाषणमित्याक्षेपः । समाधिस्तु द्वौ खल्वर्थवादौ—एकस्तु विधिशेषतयैव निर्वाह्यः । अपरस्तु विधिशेषत्वमन्तरेणापि निर्वोढुं शक्यः । तेनोत्सर्गापवादन्यायेन पूर्वोत्तरकाण्डवाक्ययोर्विरोधोपशमनादैकशास्त्र्याक्षेपप्रसङ्गोऽपि न संघटते । एकत्रार्थवादसामान्यविषयत्वात् इतरत्र ब्रह्मपरार्थवादविशेषविषयत्वात् । अत्र हि ब्रह्मपरं विशेष... तयाऽपि प्रमाणमित्युच्यते । इतरत्र शिष्टान्यर्थवादवाक्यानि सर्वाणि विधिशेषतया प्रमाण... ननु सर्वोऽप्यर्थवादो विधिशेष एव 'परमाप्तिकामो ब्रह्म विद्यात्' इतिविधिशेषत्वात् 'तदेषाऽभ्यु-

क्ता' इत्यारभ्योक्तानां सर्वेषामपि वाक्यानाम् । तेन नरविषाणकल्पत्वात् स्वरूपपरार्थवादवाक्यस्य स्वरूपमेव नास्ति । कथमत्र विरोधपरिहारः ? उच्यते—'सहस्रशीर्षं देवम्' इत्यादिकं वाक्यं स्ववाक्ये विध्यदर्शनाद् विधिशेषमेव न भवति अपि तु परतत्त्वैकप्रतिपादनपरमिति त्वदुक्तोऽयमनुपालम्भः । मृषावादिभिरप्ययमेवार्थोऽङ्गीकार्यः; 'तत्त्वमसि' इत्यादिवाक्ये विध्यदर्शनात् केवलं तत्त्वपरमेवेदं वाक्यमिति तेषामुद्घोषः । एवमन्यान्यपि विधिदर्शनमन्तरेण ब्रह्मप्रतिपादकानि श्रौतानि पौराणिकान्यैतिहासिकान्यपि वाक्यानि प्रतिपत्तव्यानि ॥ ५० ॥

पद०---अन्यार्थो हीत्यादि । प्राक्—पूर्वकाण्डे । अर्थवादः---' वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयति' इत्यादिरूपोऽर्थवादः । स्तुतिमुखमुखतः—विधिवाक्यविहितार्थप्रशंसनप्रभृतिद्वारा । अन्यार्थः—विधिशेष इति । स्थापितः--- 'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्' इत्याद्यर्थवादाधिकरणे प्रतिपादितः । इदानीम्—समन्वयाधिकरण-प्रणयनावसरे । स्वातन्त्र्येण प्रमाणीक्रियते---विधिशेषत्वं विना स्वतन्त्रतयैव ब्रह्मप्रमाकरणतया ऽङ्गीक्रियते । इति ततः —अस्माद्धेतोः । काण्डयोः—पूर्वोत्तरयोः कर्मब्रह्मकाण्डयोः । विरोधः स्यात्—ऐकशास्त्र्यविरोधः प्रसरीसर्ति । न स्यात्---नैव भवेदेष विरोधः । प्रथमम्---पूर्वकाण्डार्थवादाधिकरणे । मानतास्थापनार्थम्—अक्रियार्थत्वप्रयुक्तानर्थक्यमूलकाप्रामाण्यपरिहारेण प्रामाण्यप्रतिष्ठापनार्थम् । सामान्यतो ह्यभिदधे—अर्थवादत्वसामान्याकारेण हि विधिशेषत्वमभ्यधायि । इह—अस्मिन्काण्डे समन्वयाधिकरणे तु । केषाञ्चित्—अर्थवादविशेषाणामेव । सुभगे—हेतुगर्भं विशेषणम् । आनन्दाद्यसंख्येय-कल्याणगुणगणमहोदधिरूपत्वात् । बोधमात्रात्पुमर्थे—यथाऽवस्थितस्वस्वरूपस्वभावावगतिमात्रेण पुरुषार्थभूते ब्रह्मणि विषये । स्वतः—स्वतन्त्रतया, विधिशेषत्वं विनैव । सार्थतोक्ता—अर्थवत्त्वं प्रत्यपादि । तथा च पूर्वकाण्डार्थवादाधिकरणे सामान्येनार्थवादानां विधिशेषत्वस्थापनात् समन्वयाधिकरणे ऽर्थवाद-विशेषाणां स्वतःपुरुषार्थभूतब्रह्मरूपार्थवत्त्वेन विधिशेषत्वं विनैव प्रामाण्यप्रतिष्ठापनाच्चोत्सर्गापवादन्यायेन विरोध एव नास्तीति भावः ॥ ५० ॥

त्रेधा सर्वत्र वेदे नियतविभजने चोदनाद्यंशभेदै-
श्चत्वारोऽप्यर्थवादा मुनिभिरभिहिता ब्राह्मणांशस्य शेषाः ।
[illegible]तोक्तौ स्मृतिहतिरिति चेत् तद्धि दत्तोत्तरं त—
त्सामान्योक्तिर्हि सेयं ततउपरि यथा मन्त्रविध्यन्यतोक्तिः ॥ ५१ ॥

चिन्ता०—एवं काण्डद्वयवाक्यविरोधमुत्सर्गापवादन्यायेन परिहृत्य पूर्वपक्षिणोत्थापितं कल्पसूत्रादिवाक्यविरोधमपि तेनैव न्यायेन परिहरति—त्रेधेति । इदमत्र विरोधागासोपपादनं 'कर्मचोदना ब्राह्मणानि' इत्युपक्रम्य 'ब्राह्मणशेषोऽर्थवादो निन्दा प्रशंसा परकृतिः पुराकल्पश्च' इति चतुर्णामप्यर्थवादानां ब्राह्मणशेषत्वमाह भगवानापस्तम्बः । एवमन्यदपि द्रष्टव्यम् । तथा च कथमर्थवादानां विधिशेषत्वमन्तरेण ब्रह्मणि प्रामाण्यमुच्यते ? अत्रोत्तरमाह—दत्तोत्तरमिति । अयमर्थः—अर्थवादानां विधिशेषत्ववचनं सामान्यम् । अत्र पुनर्ब्रह्मविषयार्थवादानां स्वातन्त्र्येण प्रामाण्यकथनं तस्यैवापवादः । अतस्तेनैवोत्सर्गापवादन्यायेन विरोधप्रशमनात् स्मृतिविरोधकथनमनुपालम्भ एव । तमेवोत्सर्गापवादन्यायमजानानस्य शिष्यस्य विशेषतः प्रकटयति—सामान्येति । इममेवार्थं तद्वाक्यस्थेनैव दृष्टान्तेनोपपादयति—तत इति । तस्मिन्नेव ह्यापस्तम्बवाक्ये मन्त्रविध्योः परस्परमन्यत्वं ह्युपरि कथ्यते 'ततोऽन्ये मन्त्राः' इति । 'ततः' विध्यर्थवादाभ्यां 'अन्ये मन्त्राः' इति । एतत्तु सामान्यमेव मन्त्राणामपि विधायकत्वस्वीकारात् । मन्त्रो हि विधत्त इति ह्याहुस्तान्त्रिकाः । तेन मन्त्राणां विध्यन्यत्ववचनमुत्सर्गः, विधायकत्ववचनमपवाद इति भवद्भिः परिगृह्यते । तद्वदत्रापि ब्राह्मणशेषत्ववचनमुत्सर्गः स्वातन्त्र्येण प्रतिपादकत्ववचनमपवाद इति परिगृह्य परितुष्यतु भवान् ॥ ५१ ॥

पद०—त्रेधेत्यादि । चोदनाद्यंशभेदैः—चोदना विधिः । आदिशब्देन मन्त्रार्थवादग्रहणम्, विधिमन्त्रार्थवादरूपभागविशेषैः । त्रेधा—त्रिप्रकारेण । नियतविभजने—नित्यसिद्धविभागे । सर्वत्र वेदे—ऋग्यजुस्सामादिरूपे सर्वत्र वेदे । चत्वारोऽर्थवादा अपि—निन्दाप्रशंसापरकृतिपुराकल्परूपाश्चतुर्विधा अर्थवादा अपि । ब्राह्मणांशस्य शेषा मुनिभिरभिहिताः—ब्राह्मणांशेनैकवाक्यतामापन्ना एव भवन्तीत्यापस्तम्बादिभिरभिहिताः । अत्र—शारीरकशास्त्रे । अतच्छेषतोक्तौ- अर्थवादानां विधिशेषत्वं विना स्वातन्त्र्येण प्रामाण्यकथने । स्मृतिहतिः—स्मृतिविरोधः प्रसज्यते । इति चेत्—एवमाशङ्क्यते चेत् । तद् दत्तोत्तरं हि—तदाशङ्कनं पूर्वमेव दत्तोत्तरम् । सेयम्—अर्थवादानां चतुर्णामपि ब्राह्मणशेषत्वस्मृतिः । तत्सामान्योक्तिर्हि—अर्थवादसामान्यस्य विधिशेषत्ववचनरूपा हि । समन्वयाधिकरणे त्वर्थवादविशेषाणां स्वातन्त्र्येण प्रामाण्यकथनादुत्सर्गापवादन्यायेनार्थवादसामान्यस्य विधिशेषत्वपरस्मृतिवचनेन विरोध एव नास्ति । अन्यथा 'न हिंस्यात् सर्वा भूतानि' इति हिंसासामान्यस्य निषिद्धत्वात् 'अग्नीषोमीयं पशुमालभेत' इति विहितस्तद्विशेषोऽपि निषिध्येत । तत उपरि—अर्थवादानां ब्राह्मणशेषत्ववचनादुपरि । मन्त्रविध्यन्यतोक्तिः—विध्यर्थवादाभ्यामन्ये मन्त्रा इत्येतद्दर्शि[illegible]
मन्त्राः' इत्युक्तिर्मन्त्रविध्योः परस्परभेदं ब्रुवती । यथा—यथा मन्त्रोऽपि विधत्त इत्यङ्गीकार[illegible]
न्यस्यैव विधिभिन्नत्वपरतया नेया, तथेयमपि तत्सामान्योक्तिर्नेयेत्यन्वयः ॥ ५१ ॥

आम्नातैरैहिकार्थैरविगुणसफलैः शाकुनज्योतिषाद्यैः
पारत्रिक्या प्रवृत्त्याऽप्यतिनिपुणधियामागमाश्वाससिद्धौ ।
शब्दे तस्माच्च बोधे सति परविषये दोषबाधव्यपेते
मानं तत्र स्वतोऽसौ न कथमितरथा नैगमाध्वापलापः ॥ ५२ ॥

इति समन्वयाधिकरणम् ॥ ४ ॥

चिन्ता०—बहुषु प्रामाण्यहेतुषु विद्यमानेषु दूषणमुपनिषद्वाक्यानामभिदधतां निरीश्वरमीमांसकानां साहसमेव तद्व्यवहारनिबन्धनमिति प्रतिपादयन् सर्वनिगममार्गापलापप्रतिबन्दीमारचयति—आम्नातैरिति। वेदे 'कारीर्या वृष्टिकामो यजेत' इति दृष्टफलवाक्यानुसारेण 'स्वर्गकामो यजेत' इत्यदृष्टफलवाक्यानां प्रामाण्यं परिकल्प्यते। अविगुणसफलैरिति कर्मकर्तृसाधनवैगुण्यादेव क्वचित्कारीर्यादिषु फलासिद्धिरित्यर्थः । शाकुनज्योतिषाद्यैरिति--यथाहि अविगुणसफलैर्वेदोक्तैः कारीर्यादिभिः फलसिद्धिः तथैवाविगुणसफलैः शाकुनज्योतिषाद्यैर्वेदोक्तैरपि फलसिद्धिर्वर्ण्यत एव। तेन वेदे प्रामाण्यं दृष्टफलेषु क्वचित्प्रतीयते। तथा शिष्टानामदृष्टार्थप्रवृत्त्या ऽपि वेदप्रामाण्यं सर्वत्र निश्चीयत इत्याह—पारत्रिक्येति। अतिनिपुणेति—महानुभावानां परलोकहेतुभूतया प्रवृत्त्यापि वेदप्रामाण्यं निश्चीयत इत्यर्थः। अनेन महाजनपरिग्रहोऽभिधीयते। आगमाश्वाससिद्धौ—एवं बहुभिर्हेतुभिर्वेदप्रामाण्ये निश्चिते सति। अप्रामाण्यकारणाभावमाह—शब्द इति। शब्दे तस्माच्च बोधे सतीत्यनुत्पत्तिलक्षणाप्रामाण्यनिरासः। परविषये-ईश्वरविषये। दोषबाधव्यपेत इति कारणदोषबाधकप्रत्ययौ निरस्येते। अनादिनिधनाविच्छिन्नसंप्रदायत्वात् कारणदोषाभावाच्च अलौकिकार्थविषयत्वाद् बाधकप्रत्ययाभावाच्च प्रामाण्ये सति असति चाप्रामाण्यकारणे पुनरसौ वेदः परस्मिन् ब्रह्मणि मानमेव। एवं च कारणमन्तरेण वेदान्तवाक्यानामप्रामाण्यकथने तेनैव न्यायेन कर्मभागेऽप्यप्रामाण्यं कथनीयमिति वेदमार्गापलाप एव स्यादित्यर्थः ॥ ५२ ॥

इति समन्वयाधिकरणम् ॥ ४ ॥

[illegible]गतमेव ॥

[illegible]—आम्नातैरित्यादि । आम्नातैः—वेदावगतैः । अविगुणसफलैः—कर्मकर्तृ-[illegible]त फलासिद्धावपि तादृशवैगुण्याभावे फलाविनाभूतैः । ऐहिकार्थैः—'वृष्टिकामः कारीर्या यजेत' इत्यादिविहितैर्दृष्टफलैः कारीर्यादिभिः । शाकुनज्योतिषाद्यैः—संकीर्णमन्त्रार्थवादादिमूलक-

शकुनज्योतिश्शास्त्रसिद्धतत्तद्भाव्यर्थानर्थसूचनतत्साधनपरिहरणक्रियाविशेषैः । अत्रिगुणसफलैरित्यस्यापि विशेषणम् । अतिनिपुणधियाम्—शिष्टानां संबन्धिन्या । पारत्रिक्या प्रवृत्त्याऽपि—परलोकहेतुभूतया प्रवृत्त्याऽपि । आगमाश्वाससिद्धौ—वेदप्रामाण्ये निश्चिते सति । परविषये—परमात्मविषयके । दोषबाधव्यपेते—अनादिनिधनाविच्छिन्नसम्प्रदायतया कारणदोषरहिते अलौकिकार्थविषयत्वात् बाधकप्रत्ययरहिते । शब्दे तस्माद्बोधे च सति—वेदाख्याक्षरराशौ तस्मादेव करणादुत्पद्यमाने ज्ञाने च जाग्रति सति । अप्रामाण्यकारणे चासतीति शेषः । असौ—वेदः । तत्र—ब्रह्मणि विषये । कथं स्वतो न मानम्—कुतः स्वातन्त्र्येण न प्रमाणं भवेत् । स्वातन्त्र्येण प्रमाणं भवेदेवेत्यर्थः । इतरथा—कारणमन्तरेण वेदान्तवाक्यानामप्रामाण्यकथने । नैगमाध्वापलापः—तेनैव न्यायेन कर्मभागेऽप्यप्रामाण्यं कथनीयमिति वेदमार्गापलाप एव स्यादित्यर्थः ॥ ५२ ॥

इति समन्वयाधिकरणम् ॥ ४ ॥

शास्त्रारम्भोपपत्त्यै चतुरधिकरणीपेटिकेयं प्रवृत्ता
लक्ष्यस्योक्तं विशेषद्वयमिह घटते वक्ष्यमाणोपजीवि ।
सद्ब्रह्माद्युक्तिवेद्यः पर इति हि वदेत् कारणत्वाधिकारे
वक्ष्यत्यस्य द्विलिङ्गाद्यधिकृतिषु पुनस्तादृशानन्दतादीन् ॥ ५३ ॥

इत्यारम्भपेटिका

चिन्ता०—एवं चतुर्णामधिकरणानामर्थान् विभागेनाभिधाय सामान्यार्थानुवादपूर्वकमत्रत्ययोर्जन्माद्यधिकरणसमन्वयाधिकरणयोरुत्तरत्रवक्ष्यमाणाभ्यां कारणत्वाधिकरणोभयलिङ्गाधिकरणाभ्यां पौनरुक्त्यमाशङ्क्योत्तरत्र तत्तदधिकरणार्थप्रसाधनम्, अत्र पुनर्वक्ष्यमाणार्थोपजीवनेन तत्तदर्थाभिधानमिति न पौनरुक्त्यमित्याह—शास्त्रेत्यादिना । विशेषद्वयमेवम्—ब्रह्मादिशब्दानां श्रीनिवासपर्यवसानं द्वितीयाधिकरणोक्तम् । वेदान्तवेद्यस्य ब्रह्मणो निरतिशयानन्दरूपत्वं चतुर्थाधिकरणोक्तम् । तत्र पूर्वं वक्ष्यमाणं कारणत्वाधिकरणमुपजीवति । उत्तरमुभयलिङ्गाधिकरणमिति सुशोभनमेतत् ॥ ५२ ॥

इत्यारम्भपेटिका

पद०—शास्त्रारम्भेत्यादि। इयं चतुरधिकरणीपेटिका शास्त्रारम्भोपपत्त्यै प्रवृत्ता—एषा जिज्ञासाधिकरणजन्माद्यधिकरणशास्त्रयोनित्वाधिकरणसमन्वयाधिकरणरूपचतुरधिकरणवती पेटिका शास्त्रारम्भविरोधिव्युत्पत्त्यभावप्रतिपत्तिदौस्स्थ्यान्यलभ्यत्वाफलत्वाशङ्कानिरसनद्वारा ब्रह्मविचारात्मकशारीरकशास्त्रारम्भनिर्वाहाय तदुपोद्घातरूपतया प्रावर्तत। लक्ष्यस्य—ब्रह्मणः। इह—द्वितीयचतुर्थाधिकरणयोः। उक्तम्—प्रतिपादितम्। विशेषद्वयम्—सद् ब्रह्मादिसामान्यशब्दानां पुरुषसूक्तप्रतिपाद्ये नारायणे पर्यवसानं द्वितीयाधिकरणोक्तम्, चतुर्थाधिकरणोक्तं वेदान्तवाक्यावगतस्य ब्रह्मणो निरतिशयानन्दरूपत्वम्, इदमुभयं च विशेषद्वितयम्। वक्ष्यमाणोपजीवि घटते—कारणत्वाधिकरणोभयलिङ्गाद्यधिकरणेषु वक्ष्यमाणमेवार्थमुपजीव्य निरुक्तप्रयोजनायात्र प्रदर्शितमिति युज्यते। अतो न पौनरुक्त्याशङ्केति भावः। कारणत्वाधिकारे—'कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः' इत्यधिकरणे। सद्ब्रह्माद्युक्तिवेद्यः—'सदेव सोम्येदमग्र आसीत्' 'ब्रह्म वा इदमेकमेवाग्र आसीत्' 'आत्मा वा इदमेक एवाग्र आसीत्' 'न सन्नचासच्छिव एव केवलः' 'सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते' इत्यादिकारणवाक्यघटकसद्ब्रह्मात्मशिवाकाशादिशब्दवाच्यः। पर इति—'एको ह वै नारायण आसीत्' 'विष्णुस्तदा सीद्धरिरेव निष्कलः' इति विशेषशब्दमूर्धन्यनारायणविष्णुपुरुषादिशब्दार्थभूतः पराणां परमः परमात्मैवेति। वदेद्धि—वदिष्यति किल। अस्य पुनः—समन्वयाधिकरणे पुरुषार्थरूपतया प्रतिपादितस्यास्यैव ब्रह्मणः। द्विलिङ्गाद्यधिकृतिषु—'न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि' इत्युभयलिङ्गाधिकरणेऽधिकरणान्तरेषु च। तादृशानन्दतादीन्—निरतिशयानन्दरूपत्वादीन्। वक्ष्यति—तदुपजीवनेनैवात्र विशेषद्वयं प्रतिपाद्यत इति न पौनरुक्त्यमाशङ्क्यमिति भावः॥ ५३॥

इत्यारम्भपेटिका

## ईक्षत्यधिकरणम् ॥ ५ ॥

सूत्रम् ॥ ईक्षतेर्नाशब्दम् ॥ ५ ॥

आत्मन्येवं परस्मिन्नकृत इति मते विश्वहेतुत्वलक्ष्ये
शास्त्रैकस्थापनीये निरुपधिपरमप्रेमयोग्ये प्रसक्ते ।
ईदृक्त्वं स्याद्यथार्हं प्रकृतिपुरुषयोर्नानुमानाद्ययोग्यौ
दुःखास्पृष्टौ च तावित्यथ परकथनं दोधवीति क्रमेण ॥ ५४ ॥

चिन्ता०—अत्र शारीरकशास्त्रारम्भहेतुभूतचतुस्सूत्र्यात्मकप्रथमपेटिकार्थं सामान्यतो विशेषतश्च दर्शयित्वा तदनन्तरं शास्त्रारम्भरूपद्वितीयपेटिकार्थाभिधानेन तयोः संगतिमप्याह—आत्मन्येवमिति । अत्र खलु चतुरधिकरण्यामात्मा ज्ञातव्य इत्यर्थैक्यम्, अकृत इतिमत इत्यादिकमर्थचतुष्टयमधिकरणार्थविभागः; ब्रह्मविशेषप्रतिपादकत्वात् सर्वेषामधिकरणानाम् । अथ द्वितीयपेटिकापूर्वपक्षानुवादमुखेन संगतिमपि दर्शयन् पेटिकाप्रवृत्तिप्रकारमपि विशदं दर्शयति—ईदृक्त्वमिति । पूर्वपेटिकाप्रोक्तमर्थजातं यथार्हं प्रकृतिपुरुषयोरेव स्यादिति परकथनं न तावनुमानाद्ययोग्यौ दुःखास्पृष्टौ चेत्युत्तराभ्यां द्वाभ्यामधिकरणाभ्यां क्रमेण दोधवीतीत्यर्थः । अथवा ईदृक्त्वमित्यारभ्य इतिशब्दपर्यन्तं पूर्वपक्षवाक्यमेव । प्रकृतिपुरुषयोरेव जगत्कारणत्वादिकं प्रमाणसिद्धं तयोरनुमानाद्ययोग्यत्वं दुःखास्पृष्टत्वं च नास्तीति पूर्वाधिकरणाक्षेपे उत्तरं योग्याभिरुक्तिभिर्दोधवीतीति । अथ—समनन्तरपेटिकया पादशेषेण वा । पूर्वं हि शास्त्रयोन्यधिकरणसमन्वयाधिकरणाभ्यां वेदान्तवेद्यस्यार्थस्यानुमानाद्ययोग्यत्वं दुःखासंस्पृष्टत्वं चोक्तम्, उभयमपि प्रकृतिपुरुषयोरन्यतरस्य वेदान्तवेद्यत्वाङ्गीकारे न संभवतीति पूर्वोक्तावान्तरपेटिकासंगतिरप्यत्रोच्यते । अकृत इति—प्रथमाधिकरणे 'नास्त्यकृतः कृतेन' इति विषयवाक्योक्तमकृतत्वं प्रधानार्थं इति दर्शयति । एवं द्वितीयाधिकरणादिष्वपि विश्वहेतुत्वादिकं प्रधानार्थं इत्यनुक्रमेण मन्तव्यम् । तत्र हि वेदान्तवाक्यानां ब्रह्मण्ययोगव्यवच्छेदपरे प्रथमपादे प्रकृत्याद्यन्ययोगव्यवच्छेदकथनमयोगव्यवच्छेदशेषत्वेन नपुनः प्राधान्येनेति समाधानात् ईक्षत्यधिकरणादीनामसंगतिरनाशङ्कनीया । अयं किल पेटिकाविभागः—प्रथमपादे शास्त्रारम्भार्था चतुरधिकरणी तावदेका । तत्र द्वयोरव: ... त्वम् । पुनरीक्षत्यधिकरणानन्दमयाधिकरणयोरेकपेटिकात्वमुच्यते । अतः परं पञ्चानामप्यधिकरणानां प्रकृ...र-

पुरुषविशेषपरत्वात् एकपेटिकात्वं प्रतिपद्यते। अथवा ईक्षत्यधिकरणादीनि त्रीण्येका पेटिका सदात्मपुरुषरूपसामान्यशब्दात्मकश्रुत्या समुत्थितस्य पूर्वपक्षिण ईक्षत्यादिविशेषलिङ्गेन प्रतिक्षेपस्य तुल्यत्वात्। श्रुतिलिङ्गयोर्हि सामान्यश्रुत्यपेक्षया विशेषलिङ्गं प्रबलमिति तान्त्रिकाः। ततः परमाकाशप्राणज्योतिरादिविशेषश्रुत्या समुत्थितस्य पूर्वपक्षिणो न्यायानुकूल्यौगिकश्रुत्यर्थाङ्गीकारेणाकाशप्राणाधिकरणाभ्यां तावन्निराकरणं क्रियते। आकाशप्राणशब्दयोस्तु यौगिकार्थविवाङ्गीक्रियेते। नतु रूढिर्योगमपहरति। क्लृप्तो योगः कल्प्यां रूढिं बाधत इतिन्यायेन बाध्यते। तेनाकाशप्राणाधिकरणयोः सिद्धमवान्तरपेटिकात्त्वम्। ज्योतिरधिकरणेन्द्रप्राणाधिकरणयोस्तु रूढिभङ्गं विहाय तत्तद्रूढार्थविशिष्टपरमात्मपरत्वमुच्यत इति तयोरपि पेटिकान्तरत्वं सिद्धम्। अत्र चतुःसूत्र्यां सम्यगर्थावबोधनाय प्रमेयसंग्रहपरिश्रमशालिभिर्भवितव्यम्। अवलोकनीया च नियतमाचार्यकृता शतदूषणी ॥ ५४ ॥

पद०—आत्मन्येवगित्यादि। अकृत इति मते—जिज्ञासाधिकरणविषयवाक्ये 'नास्त्यकृतः कृतेन' इत्युक्त्या अकृतः सिद्ध इति चिन्तिते। विश्वहेतुत्वलक्ष्ये—जगत्कारणत्वस्य लक्षणस्य लक्ष्ये आश्रये तेनेतरव्यावृत्ततयाऽवगते। शास्त्रैकस्थापनीये—शास्त्रेणैकेनैवाधिगन्तव्ये। निरवधिपरमप्रेमयोग्ये—अनवधिकातिशयानन्दरूपतया निरवधिपरमप्रेमरूपभक्तेर्योग्ये। परस्मिन्नात्मनि—परमात्मनि। एवम्—व्युत्पत्त्यभावादिनिरसनक्रमेण। प्रसक्ते—विचारणीयत्वेन संसिद्धे सति। ईदृक्त्वम्—पूर्वपेटिकाप्रोक्तमथजातम्। यथार्हम्—प्रकृतिपुरुषस्वभावानुगुण्येन। प्रकृतिपुरुषयोः स्यात्—प्रधानपुरुषयोरेवास्तु। इति परकथनम्—एवं पूर्वपक्षिण उपन्यसनम्। तौ—प्रकृतिपुरुषौ। अनुमानाद्ययोग्यौ न—अनुमानयोग्यत्वेन शास्त्रैकसमधिगम्यौ न भवतः। अयमीक्षत्यधिकरणार्थः। दुःखास्पृष्टौ च न—दुःखास्पृष्टो हि ज्ञेयतामर्हति। इमौ तु दुःखसंस्पर्शिनावेवेत्यर्थः। अयमानन्दमयाधिकरणार्थः। इति क्रमेण—एवं सिद्धान्तप्रतिपादनक्रमेण। अथ—ईक्षत्यानन्दमयाधिकरणयोः, यद्वा पादशेषेण। दोधवीति—प्रतिक्षिपति ॥ ५४ ॥

गौणेक्षासाहचर्यात् सति बहुभवनप्रेक्षणं नैव मुख्यं
दृष्टान्ताद्यैरिहाभात्यनुमितिरचितस्तादृशाज्जन्म युक्तम्।
शब्दस्तेन मूलप्रकृतिमविकृतिं व्याहरेदित्ययुक्तं
श्रुत्याऽन्येषां निरोधात् त्वदभिमततिरस्कारिलिङ्गादिभिश्च ॥ ५५ ॥

चिन्ता०--पूर्वं परमात्मनो वेदान्तवेद्यत्वमुक्तम्। इदानीं प्रकृत्यादीनां तदेव वेदान्तवेद्यत्वं न संभवतीत्युच्यते। तत्रापि सांख्यादिशास्त्रोक्तप्रकृतिपुरुषयोः प्रकृतेर्विश्वाकारेण परिणतायाः सर्वलोकप्रसिद्धत्वात् तदपेक्षया पुरुषस्य सूक्ष्मत्वात् सैव प्रथमं निराक्रियत इति संगतिः। अथवा पूर्वाधिकरणे वेदान्तवेद्यस्य वस्तुनः पुरुषार्थरूपत्वमुक्तम्, तन्न घटते अपुरुषार्थरूपायाः प्रकृतेरेव कारणत्वादिति। एवं वा- सर्वेषामपि वेदान्तवाक्यानां प्रकृतिपुरुषोत्तीर्णब्रह्मपरत्वमुक्तं पूर्वाधिकरणे, सर्ववेदान्तसारभूता सद्विद्या तावत् प्रकृतिमेवाचष्टे, किमन्यैर्वाक्याभासैरिति। एवं संभावितं संगत्यन्तरमपि वाच्यम्। विषयस्तु परमेव ब्रह्म, पूर्वं शास्त्रारम्भ इति ततो विभागः। संशयः पुनः किं प्रकृतिविलक्षणं ब्रह्म सद्विद्यावेद्यम्, उत प्रकृतिरिति। संशयोत्थानकारणं तु सदितिसामान्यश्रुतिः। सर्वभाववाचकस्य सच्छब्दस्य प्रकृतिपुरुषेश्वरसाधारणत्वात्। तदर्थविचारस्तु—सच्छब्दः किं परमात्मपरः, उत प्रकृतिपरः। प्रकृतिपरत्वे 'तदैक्षत' इत्युक्तमीक्षणं न घटते, उत घटत इति। तदर्थं पुनर्विचार्यते—इदञ्चेक्षणं मुख्यमुत गौणमिति। पुनश्च विचार्यते—अत्र गौणेक्षणसाहचर्यं नास्ति उतास्त्येवेति। तत्रापि विचार्यते--- 'तत्तेज ऐक्षत' इत्यादिकं तेजःप्रभृतीक्षणं मुख्यमुतामुख्यमिति। अतोऽपि विचार्यते—किं मुख्यत्वानुरूपा हेतवो ऽनुरोद्धव्याः, उतामुख्यत्वानुरूपा हेतवोऽपीत्यादि। फलफलिभावस्तु अमुख्यत्वानुरूपाणां बहूनामपि युक्तीनामत्र विद्यमानत्वात् 'तत्तेज ऐक्षत' इत्यत्रेक्षणस्य गौणत्वात् गौणेक्षासाहचर्यस्य चात्र विद्यमानत्वेन सदीक्षणस्यापि गौणत्वात् अत्रोक्तमीक्षणं प्रकृतिपरत्वेऽपि संघटत इति सांख्याद्युक्तं प्रधानमेवात्र सच्छब्दः प्रतिपादयतीति पूर्वपक्षे। सिद्धान्ते फलफलिभावस्तु वैपरीत्येन। उक्तमर्थमनुक्रमेणाचष्टे—गौणेक्षासाहचर्यादिति। बहुभवनप्रेक्षणं नैव मुख्यमिति—इत्थं किल पूर्वपक्षी मन्यते ईक्षणगुणयोगात् प्रकृतिकारणत्वं निराक्रियते ब्रह्मवादिभिः, तच्चेक्षणं गौणम्, कूलं पिपतिषति, वृष्टिप्रतीक्षाः शालय इत्यादिवत् चेतनधर्मस्याचेतनेऽपि योजयितुं शक्यत्वात्, अत्र गौणत्वे निदानं 'तत्तेज ऐक्षत' इत्यादिगौणेक्षणसाहचर्यमेव। किं च मृत्तत्कार्यदृष्टान्तादेर्भेदानां परिणामादित्यादिसांख्योक्तं प्रधानानुमानमेव प्रतिभातीत्याह—दृष्टान्ताद्यैरिति। न च श्रुतिप्रतिभानमात्रमेव, युक्तियुक्तमपीदमित्याह—तादृशादिति। अचेतनरूपकार्यस्याचेतनादेव जन्मयुक्तम्। ननु सविकारे प्रधाने कथं सच्छब्दः स्यादित्याशङ्क्याह—सदिति। महदादीनां विकाराणां क्वाचित्कत्वेन सच्छब्दवाच्यत्वं मा भूत्, अविकृतिरूपायाः प्रकृतेर्नित्यसिद्धत्वेन सच्छब्दवाच्यत्वं भवेदिति पूर्वपक्षे राद्धान्तमाह—अयुक्तमिति। श्रुत्या—चेतनासाधारणात्मशब्दादिश्रुत्या। प्रकृत्यादीनां निरोधात्। न केवलं श्रुत्या, अपितु त्वदभिमतप्रकृतिकारणत्वतिरस्कारकेक्षणादिलिङ्गवाक्यप्रकरणैरप्ययमेवार्थ इति निश्चीयत इत्याह—त्वदभिमतेति ॥ ५५ ॥

पद०—गौणेक्षेत्यादि । गौणेक्षासाहचर्यात्—सद्विद्यायां 'तत्तेज ऐक्षत, ता आप ऐक्षन्त' इत्यादिगौणेक्षासाहचर्यात् । सति—सच्छब्दार्थभूते वस्तुनि । बहुभवनप्रेक्षणं मुख्यं नैव—'तदैक्षत बहु स्यां प्रजायेय' इति बहुभवनानुकूलं पर्यालोचनं मुख्यं नैव भवति अपितु 'वृष्टिप्रतीक्षाः शालयः' 'कूलं पिपतिषति' 'वर्षेण बीजं प्रतिसंजहर्ष' इत्यादिषु वृष्टिप्रतीक्षादीनां वृष्टिसापेक्षम्लानत्वाद्यवस्थादि-रूपत्वेन गौणत्ववदिहापि सृष्टयौन्मुख्यादिरूपगौणार्थरूपं भवति । किं च इह—सद्विद्योपक्रमे । दृष्टान्ताद्यैः—'यथा सोम्यैकेन मृत्पिण्डेन' इत्यादिनिदर्शितदृष्टान्तप्रभृतिभिः । अचितोऽनुमिति-राभाति—साङ्ख्योक्तप्रधानानुमितिरियमिति न्यायविदां प्रतिभाति । तादृशाज्जन्म युक्तम्—अचेतन-रूपकार्यस्याचेतनादेव जन्म युक्तम् । तेन—उक्तोपपादनेन । सच्छब्दः—'सदेव सोम्येदमग्र आसीत्' इत्यत्र सच्छब्दः । 'अविकृतिं मूलप्रकृतिं व्याहरेत्—विकाररहिततया सच्छब्दार्थतायोग्यां मूल-प्रकृतिमभिदध्यात् । इत्ययुक्तम्—इत्याशङ्कनमयुक्तम् । श्रुत्या—'स आत्मा' इत्यादिषु चेतनैकान्ता-त्मशब्दश्रुत्या । अन्येषाम्—प्रकृत्यादीनाम् । निरोधात्—सच्छब्दार्थतानिरसनात् । त्वदभिमत-तिरस्कारिलिङ्गादिभिश्च—त्वदभिमतप्रकृतिकारणत्वतिरस्कारकेक्षणादिलिङ्गवाक्यप्रकरणैरपि निरोधादि-त्यन्वयः ॥ ५५ ॥

ज्ञाते ह्येकत्र सर्वं विदितमिति भवत्यैक्यसिद्ध्यै प्रतिज्ञा
मृत्तत्कार्यादयश्च त्रय इह कथितास्तस्य दृष्टान्तभेदाः ।
तेनाव्यक्तानुमानं कथितमिति वृथोत्कण्ठितं हेत्वनुक्तेः
सारूप्यादेश्च हेतोरुपरि परिहृतेरत्र संभावनोक्तेः ॥ ५६ ॥

चिन्ता०—अत्र सांख्योक्तानुमानिकप्रक्रियाप्रत्यभिज्ञानमाशङ्क्य निराकरोति—ज्ञात इति । अत्रैवं किल पूर्वपक्षी मन्यते एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा तावद् दृश्यते 'येनाश्रुतं श्रुतम्' इत्यादिना । न केवलं प्रतिज्ञामात्रं, दृष्टान्तोऽप्यस्तीत्याह—मृत्तदिति । आदिशब्दात् श्रुत्युक्तो नखनिकृन्तनादिर्गृह्यते । एवमनुमानप्रधानभूतयोः प्रतिज्ञादृष्टान्तयोरुपपादनेनेदं वाक्यं सांख्योक्तानुमानानुवादकमेव स्यादित्याह—तेनेति । निराकरोति—वृथेति । तत्र हेतुमाह—हेत्वनुक्तेरिति । अनुमानावयवेष्वत्यन्तप्रधानभूत-हेत्वनुक्तेः । सन्ति सारूप्यादयो हेतवः सांख्यानामिति चेत् तन्न ; तेषामुपरत्र सांख्याधिकरणे निराकरणादित्याह—सारूप्यादेरिति । ननु तत्रचात्र च निराकरणे पौनरुक्त्यमित्याशङ्क्याह—अत्रेति ।

उत्तरत्र प्रधानकारणत्वनिश्चायकहेतवो निरशेषमुन्मूलयिष्यन्ते। अत्र प्रधानकारणत्वानुमानसंभावनामात्रं निराक्रियत इति न पौनरुक्त्यावकाशः ॥ ५६ ॥

पद०—ज्ञाते ह्येकत्रेति। एकत्र ज्ञाते सर्वं विदितं भवतीति प्रतिज्ञा ऐक्यसिद्ध्यै हि भवति—'येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्' इत्यादिवाक्ये एकस्मिन् सद्वस्तुनि ज्ञाते सर्वं वस्तु विज्ञातं भवतीति एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा कार्यकारणयोरैक्यसिद्ध्यै हि प्रतिपादिता भवति। इदं चैक्यं प्रधान एव संभवतीत्यर्थः। तस्य—एकविज्ञानेन सर्वविज्ञानस्य। मृत्तत्कार्यादयश्च त्रयो दृष्टान्तभेदा इह कथिताः—'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात्, यथा सोम्यैकेन लोहमणिना, यथा सोम्यैकेन नखनिकृन्तनेन' इत्यादिवाक्यत्रयेण मृत्तत्कार्यनिखिलमृन्मय सुवर्णपिण्डविशेषात्मकलोहमणितत्कार्यनिखिलकटकमकुटाद्याभरण कृष्णायसपिण्डात्मक नखनिकृन्तनतत्कार्यभूतासिवास्यादिसर्वकार्ष्णायसरूपाश्च त्रयो निदर्शनविशेषाः प्रतिपादिताः। तेन—अनुमानत्वेपापेक्षितप्रतिज्ञादृष्टान्तोपादानेन। अव्यक्तानुमानं कथितम्—मूलप्रकृतेः साङ्ख्योक्तमनुमानमेवात्रत्यवाक्यरूपमिति। इति वृथोत्कण्ठितम्—इति चिन्तनं वृथा मनोरथ एव। कुत इत्यत्रोच्यते—हेत्वनुक्तेः। अनुमानप्रधानाङ्गभूतहेतूपादानस्यात्रादर्शनात्। कार्यकारणयोः सारूप्यं प्रतीयमानं हेतुर्भविष्यतीत्यत्राह—सारूप्यादेर्हेतोश्च उपरि परिहृतेः। यत् सरूपं तत् परस्परं कार्यकारणभावभाक् यथा मृद्घटादीत्याद्यनुमानहेतुभूतकार्यकारणसारूप्यरूपहेतोश्च द्वितीयाध्यायद्वितीयपादे परिहरिष्यमाणत्वात्। तर्ह्यत्र तत्र चेति पौनरुक्त्यमित्यत्राह—अत्र संभावनोक्तेः। उत्तरत्रैव प्रधानकारणत्वनिश्चायकहेतुसर्वस्वनिराकरणम्। अत्र तु प्रधानकारणत्वानुमानसंभावनामात्रस्य परिहारात्। अत्र संभावनोक्तेरित्यत्रापि परिहृतेरित्यनुषङ्गः। पञ्चम्यन्तानां वृथोत्कण्ठितमित्यनेनान्वयः ॥ ५६ ॥

आदेशात्मस्वशब्दैरनितरशरणैस्त्वन्तदैक्योपदेशात्
जीवेन स्वेन साहङ्करणमनहमो ऽचिद्गणस्य प्रवेशात्।
एकज्ञानेन सर्वं विदितमितिगिरा सर्वतादात्म्यवाचा
शाखाविद्यान्तरादेरपि बहुभविता विश्वविद्विश्वमूर्तिः ॥ ५७ ॥

इति ईक्षत्यधिकरणम् ॥ ५ ॥

चिन्ता०—एवं प्रतिपक्षप्रक्रियां निरस्य स्वपक्षानुकूलान् विषयवाक्यार्थान् हेतून् संगृह्णाति—आदेशेति। 'उत तमादेशमप्राक्ष्यः' इत्युपक्रमे तावदादेशशब्देन सच्छब्दवाच्यं ब्रह्म निर्दिश्यते। आदेशशब्दो ऽप्यादेष्टारमेवाह। आदेष्टृत्वं पुनर्नियन्तृत्वमेव। नच तत् प्रधानपक्षे संभवति तस्याचेतनत्वात्। आत्मशब्दोऽप्युत्तरत्र श्रूयते 'स आत्मा' इति। स तु चेतनस्यैवासाधारणः। तत्र सुषुप्तिप्रसङ्गे 'स्वमपीतो भवति' इति सुषुप्तिस्थानं परमात्मा स्वशब्देन निर्दिश्यते। अन्तर्यामित्वात् परमात्मैव स्वशब्देन निर्देशार्हः। न पुनः प्रधानम्। तस्य सुषुप्तं प्रत्यनन्तर्यामित्वात्। अनितरशरणैः—अनन्यथासिद्धैरित्यर्थः। एते हि शब्दाः परमात्मविषयत्वे मुख्याः, प्रधानविषयत्वे पुनर्जघन्यवृत्तय—इत्यर्थः। हेत्वन्तरमप्याह—त्वमिति। तच्छब्दवाच्येन सह त्वंशब्दवाच्यस्य जीवस्यैक्यमत्र व्यपदिश्यते। यदि तच्छब्दः प्रधानपरः, तदानीमतत्त्वोपदेश एवायं स्यात्; चेतनाचेतनयोरैक्योपदेशस्य देहात्मोपदेशवत् भ्रान्तिहेतुत्वात्। अत्र साधकान्तरमाह—जीवेनेति। स्वेन—स्वात्मकेनेत्यर्थः। 'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि' इत्युत्तमपुरुषसिद्धाहङ्कारपूर्वकमहमर्थव्यतिरिक्ताचिद्गणस्य प्रवेशात्, अत्र जीवशरीरकः परमात्मा जीवद्वारा जीवव्यतिरिक्तमचेतनजातं प्रविशतीत्यर्थः। तेन प्रवेष्टव्यस्याचिद्वस्तुनः साहङ्करणमहङ्कारसहितं प्रवेष्टृत्वं न योयुज्यत इत्युक्तं भवति। किं च 'येनाश्रुतं श्रुतं भवति' इत्येकविज्ञानेन सर्वविज्ञानप्रतिज्ञा दृश्यते। सा पुनरीश्वरकारणत्व एव घटते नपुनः प्रधानकारणत्वे, प्रधानस्य चेतनं प्रत्यकारणत्वादित्याह—एकेति। हेत्वन्तरमप्याह—सर्वेति। 'ऐतदात्म्यमिदं सर्वम्' इति हि श्रूयते, प्रधानस्य कारणत्वे कथं तत्तादात्म्यं सर्वशब्दान्तर्गतस्य जीवस्य वक्तुं शक्यत इत्यर्थः। न केवलं छान्दोग्यश्रुत्यैव ब्रह्मकारणत्वं प्रतीयते, अपितु श्रुत्यन्तरेणापि। छान्दोग्येऽपि न केवलं सद्विद्यावाक्येन, किं तु दहरविद्याभूमविद्यादेरपि। अत्र आदिशब्देन उपबृंहणस्मृतिपुराणादिकं गृह्यते। अत्र विश्वविदिति निमित्तत्वोपयुक्तं सार्वज्ञ्यं गृह्यते। विश्वमूर्तिरित्युपादानत्वोपयुक्तं सर्वशरीरत्वं गृह्यत इति विभागः। अत्र पूर्वपक्षसिद्धान्तोपन्यासप्रक्रियाविभागः श्रीमतिभाष्ये न्यायसुदर्शनादौ च द्रष्टव्यः। अत्र चोपक्रमोपसंहारमहावाक्योपपत्तिः श्रुत्यन्तरविद्यान्तरादिप्रकाशनपराणां सूत्राणामनुक्रमोऽपि तत्रैवानुसन्धेयः॥ ५७॥

इति ईक्षत्यधिकरणम्॥ ५॥

पद०—आदेशेत्यादि। अनितरशरणैः—अनन्यथासिद्धैः। आदेशात्मस्वशब्दैः—'उत तमादेशमप्राक्ष्यः' इत्यत्र प्रयुक्तेन नियन्तृत्वरूपादेष्टृत्वपरेणादेशशब्देन, 'स आत्मा' इत्यत्र प्रयुक्तेन शरीरप्रतिसंबन्धिचेतनपरेणात्मशब्देन सुषुप्तिप्रसङ्गे 'स्वमपीतो भवति' इति प्रयुक्तेन स्वप्नान्तर्यामिभूतसुषुप्तिस्थान-

भूतपरमात्मपरतयैव लब्धसार्थक्येन स्वशब्देन च। द्वन्द्वान्ते श्रूयमाणस्य प्रत्येकं सम्बन्धात् आदेशशब्दश्चात्मशब्दश्च स्वशब्दश्चादेशात्मस्वशब्दास्तैरादेशात्मस्वशब्दैः । त्वन्तदैक्योपदेशात्—'तत्त्वमसि' इत्यत्र त्वम्पदार्थस्य जीवस्य तत्पदार्थेन परमात्मना, ऐक्यमभेदस्तस्योपदेशस्तस्मात् । स्वेन जीवेन साहङ्करणमनहमोऽचिद्गणस्य प्रवेशात् । स्वेन—स्वात्मकेन । जीवेन—जीवात्मना । प्रवेशक्रियाकर्तृभूतस्यापि जीवस्य साधकतमत्वविवक्षया करणत्वमभिप्रेत्य तृतीया । साहङ्करणम्—'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि' इत्युत्तमपुरुषसिद्धाहंशब्दोल्लेखपूर्वकम् । अनहमः—अहमर्थव्यतिरिक्तस्य । अचिद्गणस्य—महदादिसृज्यवर्गस्य । प्रवेशात्—प्रवेशवचनात् । एकज्ञानेन सर्वं विदितमिति गिरा—कारणभूतैकसत्पदार्थविज्ञानेन तद्व्यतिरिक्तं सर्वं चेतनाचेतनरूपं कार्यजातं विदितं भवतीत्येतदर्थकेन 'येनाश्रुतं श्रुतं भवत्यमतं मतम्' इत्यादिश्रुतिवाक्येन । सर्वतादात्म्यवाचा—'ऐतदात्म्यमिदं सर्वम्' इति श्रुत्या सर्वशब्दार्थान्तर्गतस्य चेतनस्याप्येतच्छब्दार्थभूतसत्तादात्म्यप्रतिपादनेन । प्रधानस्य सत्पदार्थत्वे चेतनस्य सत्तादात्म्यमनुपपन्नं भवेदिति भावः । सिद्धान्ते तु सूक्ष्मचेतनाचेतनशरीरकस्यैव परमात्मनः सत्पदार्थत्वात् तत्तादात्म्यं 'इदं सर्वम्' इति निर्दिष्टस्य सचेतनस्य जगतः सुतरामुपपद्यते । प्रधानस्य चेतनाचेतनशरीरित्वमसंभावितमिति न परपक्षे निरुक्तोपपत्तिलाभः । शाखाविद्यान्तरादेरपि—अन्या शाखा शाखान्तरम् । अन्या विद्या विद्यान्तरम् । आदिशब्देन स्मृतिपुराणादिसंग्रहः । सुस्पष्टतया ब्रह्मकारणत्वं वदद्भिः 'ब्रह्मविदाप्नोति परम् । सत्यं ज्ञानमनन्तंब्रह्म, सोऽकामयत बहु स्यां प्रजायेयेति, तदात्मानं स्वयमकुरुत' 'अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः । उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते'

'विष्णोः सकाशादुद्भूतं जगत्तत्रैव च स्थितम् ।
स्थितिसंयमकर्ताऽसौ जगतोऽस्य जगच्च सः ॥'

इत्यादिरूपैः शाखान्तरविद्यान्तरस्मृतिपुराणादिवचनैश्चेत्यर्थः । उक्तैर्हेतुभिः । विश्ववित्—जगन्निमित्तकारणत्वोपयुक्तं 'यः सर्वज्ञः सर्ववित्' इत्यादिश्रुतिसिद्धं सर्वज्ञत्वादिकल्याणगुणजातं वहन् । विश्वमूर्तिः—जगदुपादानत्वोपयुक्तसर्वशरीरकत्वविशिष्टः परमात्मैव । बहुभविता—'बहुस्याम्' इति सङ्कल्पपूर्वकं चेतनाचेतनात्मकनिखिलजगद्रूपेण बहुभवनशाली, नान्यदित्यर्थः ॥ ५७ ॥

इति ईक्षत्यधिकरणम् ॥ ५ ॥

## आनन्दमयाधिकरणम् ॥ ६ ॥

सूत्रम् ॥ आनन्दमयोऽभ्यासात् ॥ १३ ॥

मुख्येक्षा यद्यभीष्टा भवतु तदुचिते सा पुनर्जीवतत्त्वे
सद्विद्यायां हि शब्दैस्त्रिभिरुपरि सतस्तस्य जीवैक्यमुक्तम् ।
इत्यूहादुज्जिहानं प्रशमयितुमथ प्रस्तुतो विश्वकर्ता
जीवस्याप्यन्तरात्मा निरुपधिकमहानन्दथुः स्थाप्यतेऽत्र ॥ ५८ ॥

चिन्ता०--पूर्वोत्तराधिकरणयोस्संगतिद्वयोक्तिपूर्वकमुत्तराधिकरणार्थं संग्रहेणोपदर्शयति—मुख्येति । यदि सतो मुख्यमीक्षणमिष्टम्, तर्हि चेतनत्वात् मुख्येक्षणार्हो जीव एव जगत्कारणमस्त्विति पूर्वपक्षोत्थानादेका संगतिः । अन्या च सद्विद्यावाक्ये तत्त्वमसीति त्रिभिः पदैर्जीवब्रह्मणोरैक्यमेव नवकृत्वः प्रदर्शितम्, तथा च जीव एव जगत्कारणं ब्रह्मास्त्विति पूर्वपक्षोत्थानमिति । इत्यूहादुज्जिहानं पूर्वपक्षिणं निराकर्तुं पूर्वप्रस्तुतो विश्वकर्ता जीवस्याप्यन्तरात्मा निरुपाधिकमहानन्दवान् अत्राधिकरणे स्थाप्यते । तदर्थविचारस्तु—'ब्रह्मविदाप्नोति परम्' इत्यस्मिन्वाक्ये यः पुनरानन्दमय उच्यते स किं जीव उत परमात्मा । पुनर्विचार्यते—अत्र मयड् विकारार्थः प्राचुर्यार्थो वा । तदर्थं विचार्यते—उपक्रमगतान्नमयशब्दस्थमयटो विकारार्थत्वानुसारेण अत्रापि मयटो विकारार्थत्वमेव युक्तम्, उत प्राचुर्यार्थत्वम् । पुनश्च विचार्यते—उपक्रमावगतस्य मध्ये प्राणमयमनोमयादिभिर्विच्छेदोऽस्ति नवेत्यादि । फलफलिभावस्तु तत्राविच्छेदादुपक्रमावगतविकारार्थत्वस्यैवात्रापि ग्रहीतुं योग्यत्वेनानन्दमयशब्दस्थमयटो विकारार्थत्वादानन्दमयो जीव इति पूर्वपक्षे । व्यत्ययेन राद्धान्ते फलफलिभावः ॥ ५८ ॥

पद०--मुख्येक्षेत्यादि । मुख्येक्षा--मुख्येक्षणम् । अभीष्टा यदि—अभिमता चेत् । सा—मुख्येक्षा भवदभिमता । तदुचिते—चेतनत्वान्मुख्येक्षणार्हे । जीवतत्त्वे—जीववस्तुनि । भवतु—स्यात् । कारणवाचिसदादेशात्मस्वशब्दास्तत्परा भवन्त्वित्यर्थः । ननु सच्छब्दार्थात् परमात्मनो हि जीवो भिन्नः, अतस्तस्य कथं 'स्वमपीतः' इत्यादौ स्वशब्दोल्लेखः ? 'ऐतदात्म्यम्' इत्युक्तं सर्वतादात्म्यं वा कथमुपपद्येतेत्यत्रोच्यते—सद्विद्यायामुपरि तस्य सतस्त्रिभिः शब्दैर्जीवैक्यमुक्तं हि । छान्दोग्ये षष्ठाध्याये

'श्वेतकेतुर्हारुणेय आस' इत्यादौ सद्विद्याशब्दिते प्रकरणे। उपरि—उपरितनखण्डेषु। तस्य सतः—'सदेव सोम्येदमग्र आसीत्' इत्युपक्रमे प्रतिपन्नस्य सत्पदार्थस्य। त्रिभिः शब्दैः—तत्, त्वम्, असि, इति त्रिभिः शब्दैः। जीवैक्यं प्रतिपादितं हि। अतस्सर्वं पूर्वोक्तमुपपद्यत इति भावः। इत्यूहात्—एवमाशङ्कनेन। उज्जिहानम्—शिर उत्क्षिप्याक्षिपन्तं पूर्वपक्षिणम्। प्रशमयितुम्—निराकर्तुम्। अत्र—शारीरकप्रथमपादे। अथ—आनन्दमयाधिकरणे। प्रस्तुतो विश्वकर्ता—पूर्वप्रस्तुतो जगत्कारणभूतः परमात्मा। जीवस्याप्यन्तरात्मा निरवधिकमहानन्दथुः स्थाप्यते—'तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर आत्माऽऽनन्दमयः' इति विज्ञानमयशब्दितस्य जीवस्यापि नियन्तृतया तच्छरीरी 'ते ये शतम्' इत्युपक्रम्य निरतिशयदशाशिरस्कतया ऽभ्यस्यमानस्यानन्दभूम्नो निधिरिति च 'आनन्दमयोऽभ्यासात्। नेतरोऽनुपपत्तेः। भेदव्यपदेशाच्च' इत्यादिभिः सूत्रैः प्रतिष्ठाप्यते ॥ ५८ ॥

दृष्टः पूर्वं विकारे मयडिति चरमेऽप्येवमस्त्वित्ययुक्तं
मध्ये तद्भङ्गदृष्टेः प्रचुरमिह वदेत् प्रत्ययोऽन्यस्य बाधात्।
आनन्दप्राचुरी च प्रकृतपरसुखाल्पत्वलब्धावधित्वात्
दुःखाल्पत्वानपेक्षा परदुरितभिदः शासितुस्तद्विरोधात् ॥ ५९ ॥

चिन्ता०—अत्र कश्चिदाह 'आत्मन आकाशः संभूतः' इत्यादिना सृष्टेरेवाभिधानात् पूर्वं 'स वा एष पुरुषोऽन्नरसमयः' इत्यत्र विकारे मयड् दृश्यत इति चरमेऽपि 'अन्यो ऽन्तर आत्माऽऽनन्दमयः' इत्यत्रापि एवमस्तु मयटो विकारार्थत्वमेवास्तु पूर्वोक्तस्य मयटो विकारार्थत्वप्रत्यभिज्ञानादिति, तदिदमाह—दृष्ट इति। तन्निराकरोति—अयुक्तमिति। तत्र हेतुमाह—मध्य इति। प्राणमयादिषु विकारार्थत्वभङ्गदृष्टेरित्यर्थः। फलितमाह—प्रचुरमिति। विकारार्थत्वे को दोष इत्याशङ्क्याह—अन्यस्येति। आनन्दमयादतिरिक्तस्य वस्तुनो बाधेन विकारार्थत्वस्य बाधितत्वादित्यर्थः। नन्वत्रानन्दप्राचुर्याभिधाने दुःखाल्पत्वमेव स्यात् यथा ब्राह्मणप्रचुरो देश इत्युक्ते शूद्राल्पत्वं प्रतीयत इति, तत्प्रतिक्षिपति—आनन्देति। अत्रानन्दप्राचुरी मनुष्यानन्दमारभ्य चतुर्मुखानन्दपर्यन्ततया प्रकृतपरसुखाल्पत्वलब्धावधित्वात् आनन्दमयनिष्ठदुःखाल्पत्वं नापेक्षते, अपि तु चतुर्मुखादिनिष्ठानन्दप्राचुर्यनिवृत्तिमेव। यथा 'अन्नमयो यज्ञः' इत्यादि। नन्वानन्दप्राचुरी दुःखाल्पत्वेनापि निर्वक्तुं शक्यत इत्याशङ्क्य नेत्याह—परेति। परदुरितभित् संश्रितानां दुरितं भिनत्ति 'आनन्दमयः' इति हि श्रूयते। 'अथ सोऽभयं गतो भवति' 'एतं ह वाव न तपति' 'न कर्मणा लिप्यते पापकेन' इत्यादिकं वाक्यजातं शतशो

ध्यधीमहि । तस्मादत्र दुःखाल्पत्वशङ्का न संघटत इति । किं च 'भीषास्माद्वातः पवते' 'तस्य ह्वा एतस्य प्रशासने गार्गि' 'प्रशासितारं सर्वेषाम्' इत्यादिभिः प्रशासितृत्वेन प्रतिपन्नस्यानन्दमयस्य पापारूपत्वविरोध इत्याह—शासितुरिति ॥ ५९ ॥

पद०—दृष्टः पूर्वमित्यादि । पूर्वम्—आनन्दमयविद्यायां पञ्चकोशावतारे प्रथमं 'स वा एष पुरुषोऽन्नरसमयः' इत्यत्र । मयट्—मयट्प्रत्ययः । विकारे दृष्टः—पुरुषशब्दवाच्यस्य शरीरस्यान्नरसविकारात्मकत्वादेवान्नरसमयत्वं वक्तव्यमिति विकारार्थे प्रयुक्तो दृष्टः । इति—अस्माद्धेतोः । चरमेऽप्येवमस्तु—आनन्दमयकोशविषयके 'तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर आत्माऽऽनन्दमयः' इत्यत्रानन्दमयशब्देऽपि 'अन्नरसमयः' इत्यत्रेव मयटो विकारार्थत्वमेवास्तु । जीवात्मनः स्वत आनन्दरूपस्य संसारित्वावस्था तद्विकार एवेत्यानन्दमयशब्दवाच्यत्वं संभवति । इत्ययुक्तम्—इति शङ्कनमयुक्तम् । मध्ये तद्भङ्गदृष्टेः—अन्नमयानन्दमययोर्मध्ये प्राणमय इत्यत्र मयटो विकारार्थत्वभङ्गदर्शनात् । तत्र प्राणवृत्तिप्राचुर्यादेव हि प्राणमयत्वम् । न तु प्राणविकारत्वेन ; असंभवात् । इह प्रत्ययोऽन्यस्य बाधात् प्रचुरं वदेत्—आनन्दमय इत्यत्र मयट्प्रत्ययो निर्विकारे परब्रह्मणि विकारस्य बाधितत्वात् प्रकृत्यर्थमानन्दं प्रचुरमभिदध्यात् । प्राचुर्यार्थिको मयडित्यर्थः । आनन्दप्राचुरी च प्रकृतपरसुखाल्पत्वलब्धावधित्वात् परदुरितभिदः शासितुस्तद्विरोधात् दुःखाल्पत्वानपेक्षा—आनन्दप्राचुर्यं च मनुष्यानन्दमारभ्य चतुर्मुखानन्दपर्यन्ततया प्रकृतं मनुष्यादिचतुर्मुखान्तजीवगतानन्दाल्पत्वमवधितयाऽऽसाद्य कृतार्थत्वात् 'अथ सोऽभयं गतो भवति' इति संश्रितदुरितभेदिनः सर्वप्रशासितुर्दुःखक्लेशसंबन्धस्यापि विरुद्धत्वाच्च स्वावधितया दुःखाल्पत्वं नापेक्षते । स्वाश्रयव्यधिकरणसजातीयाल्पत्वस्य प्रकरणेन समर्पितस्यावधितया लाभात् कृतार्थं प्राचुर्यं स्वाश्रयसमानाधिकरणविसजातीयाल्पत्वं प्रमाणशतेन बाधितमवधितया न मार्गत इति भावः ॥ ५९ ॥

आत्मा तस्यैष एवेत्युदितमनितरात्मत्वमस्यैव वक्तुं
शारीरोक्तिश्च तस्मिन्नखिलतनुतया स्यादसङ्कोचवृत्तिः ।
शोध्यत्वं तत्तदर्थानुगुणमिति विभोस्तत्प्रसाद्यत्वमात्रं
प्राप्येऽस्मिन् प्राप्तिरूपा परविद उपसंक्रान्तिरानन्दसिन्धौ ॥ ६० ॥

चिन्ता०—नन्वस्मत्पक्षे भवद्भिरानन्दमयत्वलक्षणं लिङ्गं विरुद्धमिति ह्युक्तम् । अस्माकमेक एवायं विरोधः, भवतां बहवो विरोधाः । आनन्दमयेऽपि 'तस्यैष एव शारीर आत्मा यः पूर्वस्य' इत्यात्मान्तर-

कथनं विरुध्यते । शारीरत्वकथनमपि शरीरस्य कर्मफलत्वान्न युज्यते । न च घटते शोध्यत्ववादः परस्मिन्ब्रह्मण्यशुद्धिप्रसङ्गाभावात् । श्रूयते ह्यानन्दमयेऽपि 'अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमया मे शुध्यन्ताम्' इति शोध्यत्ववादः । किं च तस्मिन्नेवानन्दमये फलनिर्देशदशायामुपसंक्रमितव्यत्वमुच्यते— तदपि विरुद्धम् । परमात्मनि नित्यमेव वर्तमानस्य जीवस्य कथमपूर्वमुपसंक्रमणमिति । एवं चतुरोऽपि विरोधाननूद्य चतुर्भिरपि पादैरनुक्रमेण समाधत्ते—आत्मेति । इयं किल समाधानप्रक्रिया 'तस्यैष.... आत्मा' इत्युक्तिरानन्दमये 'स्वयं दासास्तपस्विनः' इतिवदात्मान्तरनिवृत्त्यर्थेति को विरोधः? शारीरत्व-कथनमपि भगवतः सर्वशरीरकत्वादानन्दमय एव विशेषेणोपपद्यते । शोध्यत्वमपि 'विशुद्धमेव राजहृदयम्' इत्यादिवदानन्दमयस्य प्रसाद्यत्वमेव । न पुनः पूर्वमशुद्धस्य कश्चित् शुद्धिविशेषः । लोकेऽपि राजहृदयं विशुद्धमित्यादौ निग्रहनिवृत्तिरेवोच्यते ; अनुगुणस्यैवार्थस्य तत्रतत्र स्वीकार्यत्वात् । आकाङ्क्षासंनिधान-वद्योग्यत्वस्यापि वाक्यार्थनिर्णयाङ्गत्वात् । अत्रोपसंक्रमणमेव हि शिष्यते, तदपि संघटते ; प्राप्तिरेव ह्युपसं-क्रमणमुच्यते । प्राप्तिश्च पूर्वमननुभूतस्य ब्रह्मणः पश्चादनुभवसंभवः । एतदेवाभिधीयते 'सोऽश्नुते सर्वान् कामान् सह' इति । अथवा देशविशेषप्राप्तिरेव ह्यस्माभिर्वक्तुं शक्यत इति । तदेव ह्युच्यते 'वैकुण्ठे तु परे लोके' इति । अतोऽस्मत्पक्षे न विरोधावकाशः । अत्र पदार्थकथनं स्वयमेव भाव्यम् ॥ ६० ॥

पद०—आत्मा तस्यैष इत्यादि । अस्यैवानितरात्मत्वं वक्तुं तस्यैष एवात्मेत्युदितम्— आनन्दमयशब्दितस्य परमात्मनोऽन्नमयादीनां विज्ञानमयपर्यन्तानामिवान्तरात्मान्तरराहित्यं प्रतिपादयितुं तस्यानन्दमयस्य एष एव आनन्दमय एव आत्मेत्युक्तम् । स्वयमेव स्वस्यात्मेत्युक्तिः स्वभिन्नदास-निषेधार्थिका 'स्वयं दासास्तपस्विनः' इत्युक्तिरिव स्वस्य स्वभिन्नात्मकत्वं निषेधतीत्यर्थः । शारीरोक्तिश्च तस्मिन्नखिलतनुतया ऽसङ्कोचवृत्तिः स्यात्—'शारीर आत्मा' इति शारीरत्वकथनं च परमात्मनि अखिलजगच्छरीरकतया पुष्कलार्थकमिति न तद्विरोधाशङ्कनं युक्तम् । शोध्यत्वं तत्तद्योग्यानुगुणमिति विभोस्तत्प्रसाद्यत्वमात्रम्—'अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमया मे शुध्यन्ताम्' इति विरजा-मन्त्रोक्तं शोध्यत्वं च तत्तद्वस्त्वनुगुणं शोधनमिति न्यायेन 'शुद्धं राजहृदयम्' इत्यादाविव भक्त्या शान्तनिग्रहसंकल्पस्वरूपं विभोः प्रसाद्यत्वमेव तद् भविष्यति । आनन्दसिन्धौ प्राप्ये ऽस्मिन्परविद उपसंक्रान्तिः प्राप्तिरूपा—अनवधिकानन्दनिधौ अत एव स्वयंप्राप्यभूतेऽस्मिन् परमात्मनि ब्रह्मविदः 'एतमानन्दमयमात्मानमुपसङ्क्रामति' इत्युक्तोपसंक्रान्तिः प्राप्तिरूपा । पूर्वमननुभूतस्वरूपरूपगुणदिव्यस्था-नादिविशिष्टस्यानुभवरूपा देशविशेषप्राप्तिरूपा च भविष्यतीति न कापि हानिरित्यर्थः ॥ ६० ॥

निर्देहेऽस्मिन्निरंशे नहि भवति शिरःपक्षपुच्छादि किञ्चित्
तस्मात्पुच्छं प्रतिष्ठेत्युदितमिह परब्रह्मभावीति चेन्न ।
सोढा पुच्छत्वक्लृप्तिं यदि कथमितरन्नानुमन्येत कल्प्यं
ब्रह्मण्यात्मप्रतिष्ठावचनमनितराधारताख्यापनाय ॥ ६१ ॥

इत्यानन्दमयाधिकरणम् ॥ ६ ॥

चिन्ता०—अत्र पुच्छब्रह्मवादी प्रत्यवतिष्ठते—निर्देह इति । आनन्दमयस्यैव ब्रह्मत्वे तस्य निरंशत्वात् 'तस्य प्रियमेव शिरः' इत्यादिना शिरःपक्षादिभेदेन पञ्चप्रकारावयवक्लृप्तिर्न घटते । तस्मात् 'पुच्छं प्रतिष्ठा' इत्युक्तं सर्वभूताधिष्ठानतया विश्वप्रतिष्ठारूपं पुच्छमेव परं ब्रह्म, आनन्दमयस्य ब्रह्मत्वे शिरःपक्षादिक्लृप्तीनामयोग्यत्वादिति । इमं पक्षं प्रतिबन्द्या दूषयितुमुपक्रमते—सोढेति । देशकालपरिच्छेदरहिततया भवद्भिरङ्गीकृतस्य सच्चिदानन्दरूपस्य ब्रह्मणः पुच्छत्वकथनं कथं युज्यते । श्रुतिप्रामाण्यसिद्ध्यर्थमस्माभिः पुच्छत्वकल्पनं सोढव्यमिति चेत् हन्त तर्ह्यस्माभिरपि आनन्दमये निरंशे प्रियमोदादितत्तद्विभागविवक्षया शिरःपक्षादिकल्पनं सोढव्यमिति संतोष्टव्यमायुष्मतेत्याह—कथमिति । इतरत्—शिरःपक्षादिकमित्यर्थः । तर्ह्यस्त्यन्तविरुद्धमेतत् , यदानन्दमयस्य ब्रह्मण एव स्वप्रतिष्ठारूपत्वमिति । तच्च न विद्यते । स्वस्यैव स्वप्रतिष्ठानत्ववचनमनितराधारताख्यापनाय 'स भगवः कस्मिन्प्रतिष्ठितः स्वे महिम्नि' इति श्रुत्यन्तरप्रकारेण सर्वप्रतिष्ठारूपस्य ब्रह्मणः प्रतिष्ठान्तरनिवृत्तिरेव ह्यत्रोच्यत इति को विरोधः । अत्र पुच्छब्रह्मवादिनां बहून्यपि दूषणानि भाष्य एव व्यक्तमुक्तानीति श्लोकार्थमेव प्रदर्श्य विरमामः ॥ ६१ ॥

इत्यानन्दमयाधिकरणम् ॥ ६ ॥

पद०—निर्देह इत्यादि । निर्देहे—देहरहिते । निरंशे—निरवयवे । अस्मिन्—परमात्मनि । शिरःपक्षपुच्छादि किञ्चित् न भवति हि—'तस्य प्रियमेव शिरः । मोदो दक्षिणः पक्षः । प्रमोद उत्तरः पक्षः ।' इत्यादिभिरुक्तं शिरःपक्षपुच्छादिकं किमपि न भवितुमर्हति हि । निर्भागत्वादेवेत्यर्थः । तस्मात्—हेतोः । इह—प्रकरणे । पुच्छं प्रतिष्ठेत्युदितं परब्रह्मभावि—पुच्छं प्रतिष्ठेत्युक्तं सर्वभूताधिष्ठानतया विश्वप्रतिष्ठारूपं पुच्छमेव परब्रह्म भवितुमर्हति नत्वानन्दमयरूपम् । इति चेन्न—

इति शङ्क्यते चेत् तन्न सम्भवति । पुच्छत्वक्लृप्तिं सोढा यदि—निरंशस्य ब्रह्मणः पुच्छत्वकल्पनं भवान् सहिष्यते यदि । इतरदपि कल्प्यं कथं नानुमन्येत—शिरःपक्षादिरूपमपि श्रुत्युक्तं काल्पनिकतया निरंशब्रह्मस्वरूपदोषानावहं कुतो नाङ्गीकुर्यात् । ब्रह्मणि—एतादृशे आनन्दमयशब्दिते ब्रह्मणि । आत्मप्रतिष्ठावचनम्—'ब्रह्मपुच्छं प्रतिष्ठा' इति स्वस्य स्वयमेव प्रतिष्ठेत्यभिधानम् । अनितराधारताख्यापनाय—'स भगवः कस्मिन्प्रतिष्ठितः । स्वे महिम्नि ।' इत्यादिश्रुत्यन्तरोक्तन्यायेन स्वभिन्नाधाररहित्यप्रकाशनायेति न कोऽपि विरोध इति सुसङ्गतमेतत् ॥ ६१ ॥

इत्यानन्दमयाधिकरणम् ॥ ६ ॥

## अन्तरधिकरणम् ॥ ७ ॥

सूत्रम् । अन्तस्तद्धर्मोपदेशात् ॥ २१ ॥

भूयिष्ठानन्तपुण्योपचयबलसमुद्बुद्धपूर्वोक्तभूम्नां
शक्रादिन्यायतः स्यात् त्रिगुणतनुभृतामीश्वराणां प्रवाहः ।
तन्नाकर्मोत्थदिव्याकृतिजनिमहिमा शासिता सर्वपुंसां
नित्यश्रीर्ब्रध्नबिम्बे श्रुत इति स य इत्युक्त एवैष एकः ॥ ६२॥

चिन्ता०—ईक्षत्यधिकरणविषयवाक्ये 'तस्य तावदेव चिरम्' इति शरीरपातपर्यन्तो दुःखसंबन्ध उच्यते । तेन 'तस्यैष एव शारीर आत्मा' इति शरीरसंबन्धी पुरुषो जीव एव स्यादित्याशङ्क्य परिहृतमानन्दमयाधिकरणे कर्माधीनकरणकलेबरपरिग्रहस्यैव संसारात्मकत्वम्, नपुनः स्वाभाविकस्यैव विश्वशरीरस्येति । अतः परमन्तरादित्याधिकरणं प्रवर्तते अस्मिन्नधिकरणे न केवलमन्तर्यामित्वावस्थानमात्रेण शरीरात्मभाव उच्यते, अपितु पाणिपादाक्षिकेशादिविभागवच्छरीरसंबन्धी पुरुषः, तादृशशरीरसंबन्धित्वं जीवस्यैव संभवतीति पूर्वपक्षोत्थानेन संगतिः । पूर्वं जीवसामान्यस्य निरासः, इदानीं जीवविशेषस्य निरास इति च संगतिः । तदिदमाह—भूयिष्ठेति । पूर्वोक्ताः खलु मनुष्यानारभ्य प्रजापतिपर्यन्ता भूयिष्ठानन्तपुण्योपचयबलसमुद्बुद्धैश्वर्याः केचित्पुरुषाः, तेष्वेव कश्चिदीश्वरः प्रवाहरूपेण वर्तत इति कल्प्यतामिति च पूर्वाधिकरणसंगत्यन्तरमुच्यते । अयमर्थः—पापोत्तराः पुण्यपापयोस्तुल्यवृत्तयश्च मा भूवन्, अपि तु पुण्योत्तराः केचिदीश्वरत्वेन प्रकल्प्येरन्निति । अत्रोत्तरम्—तन्नेति । तत्र हेतून्प्रमाणानुसारेण संगृह्णाति—अकर्मेति । अकर्माधीनदिव्यशरीरवान् । जनिः—जन्म । महिमा—माहात्म्यम् । सर्वपुंसां स्वाभाविकनियन्ता । नित्यश्रीः—नित्यमेव लक्ष्मीसंबन्धवान् । एवंभूतः पुरुषः, ब्रध्नबिम्बे—सूर्यमण्डले, श्रुत इति, 'स य एषोऽन्तर्हृदय आकाशः' इत्यनुवाकश्रुतः परमपुरुषः एक एव—'एषोऽन्तरादित्ये' इत्यन्तरादित्यविद्यायां श्रूयत इति न जीवविशेषशङ्कावकाशः । 'एष सर्वेभ्यः पाप्मभ्य उदितः उदेति हवै सर्वेभ्यः पाप्मभ्यो य एवं वेद' इत्यत्रैव हि श्रूयते । 'समस्ताः शक्तयश्चैता नृप यत्र प्रतिष्ठिताः' इत्यादिकमत्र भाव्यम् । 'न सा कर्मनिमित्तजा' इति हि तत्रोच्यते । ऐतिहासिकमपि 'व्यक्तमेष महायोगी' इत्यादिकं सुप्रसिद्धमेव । अत्रोक्तं शासितृत्वं हि 'अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा' 'प्रशासितारं सर्वेषाम्' इत्यादि—बहुप्रमाणसिद्धत्वात् सर्वविषयमेवानुसन्धातव्यम् । अयमत्र संग्रहः—सूर्यमण्डलान्तर्वर्तिनो भगवद्विग्रहस्याकर्मा-

धीनत्वादप्राकृतत्वादाश्रितानुग्रहार्थत्वाच्च विग्रहसंबन्धमात्रेण जीवविशेषत्वाशङ्कावचनं परमपुरुषविद्वेषिणां पापिष्ठानां प्रलापः। अत्र तदर्थविचारोऽपि किंचिदालिख्यते। आदित्यमण्डलान्तर्वर्ती पुरुषः किं जीवविशेषः उत परमात्मेति। तदर्थं विचार्यते—किं पाणिपादादिविभागवच्छरीरादिसंबन्धो जीवत्वं प्रसाधयति न वेति। तदर्थं पुनर्विचार्यते—किमयं शरीरसम्बन्धः कर्माधीनः, उताकर्माधीन इति। पुनरपि विचार्यते—सर्वपाप्मोदितत्वादिवचनं किं कर्माधीनत्वं निवारयति उत नेति। तदर्थमपि पुनर्विचार्यते—तत्र पाप्मशब्दः किं पापमात्रपरः, उत पुण्यपापात्मककर्ममात्रपर इति। फलफलिभावस्तु पाप्मशब्दस्य पापमात्रपरत्वेन सर्वपाप्मोदितत्वादिवचनस्य कर्माधीनत्वनिवारकत्वाभावात् शरीरसंबन्धस्य कर्माधीनतया नियमेन जीवकर्माधीनत्वादादित्यमण्डलान्तर्वर्ती पुरुषो जीव इति। राद्धान्ते फलफलिभावोऽन्तेवासिभिः स्वयमेवोह्यः॥ ६२॥

पद०—भूयिष्ठेत्यादि। भूयिष्ठानन्तपुण्योपचयबलसमुद्बुद्धपूर्वोक्तभूम्नाम्—भूयिष्ठानां महत्तमानामनन्तानामसङ्ख्यातानां पुण्यानामुपचयस्य अतिशयस्य बलेन सामर्थ्येन समुद्बुद्धः आविर्भूतः प्राप्त इति यावत्, पूर्वोक्तः—आनन्दमयाधिकरणविषयवाक्यप्रकरणे 'तस्येयं पृथिवी सर्वा वित्तस्य पूर्णा स्यात्। स एको मानुष आनन्दः' इत्यारभ्य 'स एकः प्रजापतेरानन्दः' इत्यन्तसन्दर्भेण पूर्वपूर्वशतगुणितातिशयितोत्तरोत्तरक्रमेण प्रतिपादितः, भूमा ऐश्वर्यातिशयो येषां ते तादृशानाम्। त्रिगुणतनुभृताम्—सृष्टिस्थितिसंहारहेतुभूतरजस्सत्त्वतमःप्रचुरदेहशालिनाम्। ईश्वराणाम्—जगत्स्रष्ट्यादिकारणभूतपुरुषाणाम्। प्रवाहः—यावदुत्तरकालानुवृत्तनष्टसजातीयपरम्परा। शक्रादिन्यायतः—यथैकस्मिन् शक्रे मन्वन्तरावसाने नष्टे सति पुनरुपरितनमन्वन्तरे शक्रान्तरस्य सम्भवस्तदन्ते चान्यस्य शक्रस्येत्येवंन्यायेन। स्यात्—अस्तु। सर्वेष्वपि कालेष्वीश्वरेणैकेनैव भाव्यमिति कुतो निर्बन्ध इति भावः। तन्न—तदाशङ्कनमपि न युक्तम्। अकर्मोत्थदिव्याकृतिजनिमहिमा सर्वपुंसां शासिता नित्यश्रीर्ब्रध्नबिम्बे श्रुत इति स य इत्युक्तः, एष चैक एवेति च हेतोस्तन्नेत्यन्वयः। अकर्मोत्थाः अकर्माधीनाः दिव्याकृतिजनिमहिमानो यस्य सः। दिव्या—आश्चर्यकरी शुद्धसत्त्वमयी च। आकृतिः—तनुः। जनिः—अवतारः। महिमा—गुणविभूत्यतिशयः। सर्वपुंसाम्—सर्वजीवानाम्। शासिता—नियन्ता। नित्यश्रीः—नित्यमेव लक्ष्मीसम्बन्धवान्। एवम्भूतः पुरुषः, ब्रध्नबिम्बे—सूर्यमण्डले। 'भास्कराहस्करब्रध्नप्रभाकरविभाकराः' इतिकोशात्। श्रुत इति—'अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आ प्रणखात् सर्व एव सुवर्णस्तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी' इत्यादिश्रुत्या प्रतिपन्न इति हेतोः। स य इत्युक्तः—'स य

एषोऽन्तर्हृदय आकाशः। तस्मिन्नयं पुरुषो मनोमयः। अमृतो हिरण्मयः।' इति श्रुतिप्रतिपन्नः पुरुषः। एषच—'अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषः' इत्यादिपूर्वोपात्तश्रुतिप्रतिपन्नः पुरुषश्च। एक एवेति च हेतोः—उभयत्र पुरुषशब्दश्रवणात् 'स यश्चायं पुरुषे। यश्चासावादित्ये। स एकः' इति साक्षादेव द्वयोः पुरुषयोरैक्यश्रुत्या, उभयत्रापि जीवासम्भावितविशेषणश्रवणैकरूप्येण चैक एवेति सुप्रतिपन्न इति हेतोश्च पूर्वोक्तशङ्कनं न युक्तमित्यर्थः। 'अथ तस्योदितिनाम' इति सर्वोत्कर्षप्रतिपादकनामबलेन कप्यासश्रुतिघटकपुण्डरीकपदस्य रक्ताम्बुजपरत्वस्थापनेन 'रक्ताक्षं न जहाति श्रीः' इति सामुद्रिकोक्तरीत्या कर्मसम्बन्धाभावकण्ठोक्त्या 'सयश्चायम्' 'स य एषः' इत्यादिश्रुत्यन्तरैकार्थ्येन च अकर्मोत्थेत्यादि विशेषणलाभ इति भावः॥ ६२॥

सर्वेभ्यः कल्मषेभ्यो ह्युदित इति वदत्यन्तरादित्यविद्या
तस्माच्छेषाभ्यनुज्ञानयत इह विभौ पुण्ययोगोऽस्ति मैवम्।
आम्नातोऽनन्यशास्यः स्ववशपरफलः साधुना नैष भूयान्
स्यात्पुण्ये लक्ष्मयोगादपि न सुकृतमित्यादिना पाप्मशब्दः॥ ६३॥

चिन्ता०—अत्र चोदकः प्राह—अन्तरादित्यविद्यायां 'सर्वेभ्यः पाप्मभ्य उदितः' इति भगवतः सर्वपापरहितत्वमुच्यते, विशेषनिषेधे शेषाभ्यनुज्ञानमिति तान्त्रिकाणां प्रक्रिया, तथा चादित्यमण्डलान्तर्वर्तिनि पुरुषे पापनिषेधात् पुण्याभ्यनुज्ञानमस्तीति। तदिदमाह—सर्वेभ्य इत्यादिना। तन्निराकरोति—मैवमिति। अत्र हेतूनाह— आम्नात इत्यादिना। 'न तस्येशे कश्चन' इत्यादिभिर्बहुभिः प्रमाणैर्भगवतोऽनन्यशास्यत्वं प्रतीयते, अन्यशास्यो हि राजकिंकरः शासनातिलङ्घनात् प्रत्यवायमुपेयात्, तदनुपालनादनुकूलं फलम्। ईश्वरस्यानन्यशास्यत्वाद् दुरितवत् परशासनानुवर्तनरूपं सुकृतमपि न संभवतीत्ययमेको हेतुः। हेत्वन्तरमाह—स्ववशेति। 'फलमत उपपत्तेः' इति न्यायेन परेषामिष्टमनिष्टं वा फलं भगवानेव ददातीत्युच्यते तस्य कथं सुकृतसंबन्धः संभवतीति। किं च 'स न साधुना कर्मणा भूयान्नो एवासाधुना कनीयान्' इति ह्यर्थात् सुकृतसंबन्धः प्रतिक्षिप्यते, तच्च विरुद्धं तव। तर्हि पाप्मशब्दः पुण्ये कथं प्रयुज्यते? इत्यत्राह—स्यादिति। पुण्येऽपि पापलक्षणयोगादिह पाप्मशब्दः प्रयुज्यते। अस्ति हि पुण्येऽपि पापलक्षणयोगः; अनिष्टफलसंबन्धित्वात्। लोके हि कस्यचिदिष्टं फलमन्यस्यानिष्टं भवति। तथा च स्वर्गादिकमिष्टं फलमध्यात्मविदामनिष्टमित्यधिकारिविशेषापेक्षया पापमेव काम्यं कर्म। अत्र श्रौतप्रयोगरूपं प्रबलव्यवस्थापकमाह—न सुकृतमित्यादिनेति। अत्र हि सुकृतं दुष्कृतमुभयमपि निर्दिश्य द्वयोरपि

पाप्मशब्देन निर्देशः स्पष्टमेव क्रियते। तस्मात् दुरितवत् सुकृतस्यापि पाप्मशब्दवाच्यत्वात् सर्वपाप्मोदित-वचनं सुकृतनिवृत्तिमप्याहेति सिद्धम् ॥ ६३ ॥

पद०—सर्वेभ्य इत्यादि। अन्तरादित्यविद्या—'अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषः' इत्यादिका अन्तरादित्यविद्यासमाख्या श्रुतिः। सर्वेभ्यः कल्मषेभ्य उदित इति वदति हि—'स एष सर्वेभ्यः पाप्मभ्य उदितः' इतिवाक्यशेषेण अयं पुरुषः सर्वेभ्यः पापेभ्यो बहिर्भूत इति प्रतिपादयति हि। ततः किमित्यत्राह—तस्मात् पुण्यपापयोर्मध्ये पापमात्रनिषेधात्। शेषाभ्यनुज्ञानयतः—विशेषनिषेधे शेषाभ्यनुज्ञानमितिन्यायेन। इह विभौ—एतद्विद्यावेद्ये पुरुषविशेषे। पुण्ययोगोऽस्ति—अनिषिद्धपुण्यसम्बन्धोऽस्तीति प्रतिभाति। मैवम्—एवं मा शङ्किष्ठाः। एषः—जगत्कारणभूतपुरुषवरः। अनन्यशास्यः—इतरशासनीयो न भवति इति। स्ववशपरफलः—'चतुर्होतारो यत्र सम्पदं गच्छन्ति देवैः इतिवेदार्थसंग्रहोपात्तश्रुत्या 'फलमत उपपत्तेः' इति सूत्रेण 'अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च' इत्यादिस्मृत्या च परेषामिष्टमनिष्टं वा फलं भगवानेव ददातीत्युक्तम्। स्ववशं स्वाधीनं परसम्बन्धि फलं पुण्यपापफलं यस्येति विग्रहः। साधुना—सुकृतेन। न भूयान्—नोत्कृष्टो भवति। यथा ब्रह्मादयः

'युगकोटिसहस्राणि विष्णुमाराध्य पद्मभूः।
पुनस्त्रैलोक्यधातृत्वं प्राप्तवानिति शुश्रुम॥'

इत्याद्युक्तरीत्या सुकृतातिशयेनातिशयितफलभाजो भवन्ति' न तथाऽयम्। अपि तु स्वतःसिद्धदिव्यैश्वर्य इत्यर्थः। इति च, आम्नातः—'न तस्येशे कश्चन' 'चतुर्होतारः' 'स न साधुकर्मणा भूयान्' इत्यादिश्रुतिभिः सर्वशाखाप्रत्ययन्यायेन जगत्कारणभूतपरवस्तुपराभिः प्रतिपादितः। इति हेतो र्मैवमित्यन्वयः। लक्ष्मयोगात्—अधिकारिविशेषापेक्षयाऽनिष्टफलकत्वरूपपापलक्षणस्य पुण्येऽपि विद्यमानत्वात्। न सुकृतमित्यादिना—'न सुकृतं न दुष्कृतम्। सर्वे पाप्मानोऽतो निवर्तन्ते' इति सुकृतदुष्कृतयोर्द्वयोरपि विषये पाप्मशब्दं प्रयुञ्जानेन श्रुतिवाक्येन च। पाप्मशब्दः—'स एष सर्वेभ्यः पाप्मभ्य उदितः' इत्यादिप्रकृतश्रुतौ श्रुतः पाप्मशब्दः। पुण्येऽपि स्यात्—पुण्यविषयेऽपि वर्तितुमर्हति। तथा च सर्वकर्मसम्बन्धविदूरत्वमस्मिन् सिद्धमिति भावः ॥ ६३ ॥

प्रख्यातं शुद्धसत्त्वं किमपि तदनघं द्रव्यमव्यक्ततोऽन्यत्
तद्रूपं रूपमैशं दिवि कनति तथा शेषशेषाशनादेः ।
नित्यं तत्सूरिसेव्यं परतरमजहत्स्वस्वभावः स देवः
पुंसां संसारशान्त्यै विपरिणमयति व्यूहपूर्वैर्विभागैः ॥ ६४ ॥

चिन्ता०—अत्र पुनश्चोदयति परस्य ब्रह्मणो विग्रहोऽस्तीति भवद्भिरुक्तम्, स विग्रहः किं प्राकृतः, उताप्राकृतः, अप्राकृतत्वेपि किं भगवत्स्वरूपमेव उत तत्त्वान्तरम्। पूर्वत्रास्मदुक्तं संसारित्वमेवापद्यत इति घट्टकुटीन्यायः, द्वितीये पक्षे स्वरूपपरिणामप्रसङ्गः, तृतीयोऽपि पक्षो न घटते; प्रकृतिपुरुषेश्वरकालव्यतिरिक्ततत्त्वान्तराभावात्, अतः कथं तदिति। एतन्निराकरोति—प्रख्यातमिति। प्रख्यातम्—'पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि' वैकुण्ठे तु परे लोके' 'तमसः परमो धाता' 'स्वसचाभासकं सत्त्वम्' इत्यादिभिः। शुद्धसत्त्वम्—रजस्तमोरहितसत्त्वाश्रयभूतम्। दिव्यं किमपि द्रव्यं तत्। अनघत्वं संसारप्रवर्तनोपकरणत्वाभावादुच्यते। तस्याव्यक्ततोऽन्यत्वं 'त्रिपादस्यामृतं दिवि' इति व्यक्तमेवाभिधीयते। अनेन भगवतो रूपं प्राकृतं स्वरूपं च न भवति अपितु अप्राकृतं द्रव्यान्तरमित्याह—तद्रूपमिति। 'तद्विश्वरूपवैरूप्यं रूपमन्यद्धरेर्महत्' इति भगवान् पराशरः प्राह। वैरूप्यं विरूपमित्यर्थः। तेन विप्रतिपन्नं रूपं प्राकृतं रूपत्वात् तदनित्यं सावयवत्वादित्यादयः परेषां हेतवो निरस्ताः। तादृग्विधरूपसिद्धौ धर्मिग्राहकप्रमाणविरोधः। अप्राकृतानित्यत्वादिविशेषणयोगेनैव प्रमाणसिद्धत्वात्। असिद्धौ चाश्रयासिद्धेरिति स्वकीयां प्रक्रियां स्वयमेव स्मरतु हैतुकः। नन्वस्तु भगवतस्तादृशं रूपम्, अनन्तगरुडादीनां का गतिरिति चेत् भगवानेव गतिः। 'तद्विष्णोः परमं पदम्' 'आस्ते विष्णुरचिन्त्यात्मा भक्तैर्भागवतैः सह' इत्यादिप्रमाणशतव्याहतत्वात् शङ्कापिशाचिकायाः। अस्तु वैकुण्ठवासिनस्तादृशं रूपम्, अथापि तस्य नित्यत्वादौ निश्चायकं किमित्याशङ्क्य श्रुतिपुराणादीत्यभिप्रायेणाह—नित्यमिति। 'सदा पश्यन्ति' 'नित्यं नित्याकृतिधरम्' 'नित्यसिद्धे तदाकारे तत्परत्वे च पौष्कर' 'श्रीवत्सवक्षा नित्यश्रीः' इत्यादिप्रमाणसहस्रमनुसन्धेयम्। अस्तु सर्वं गुणजातं वैकुण्ठवासिनो भगवतः, रामकृष्णाद्यस्तु प्राकृताः कर्मवशेन सुखदुःखादिभाजश्च, कथं तेषामाराधनेनास्माकमापवर्गिकी सिद्धिरित्याशङ्क्य पराशरपाराशर्यादिमतानुसारेणाप्राकृतत्वादिकं गुणजातमाह—अजहदित्यादिना ग्रन्थशेषेण। 'समस्तशक्ति' इत्यादिपराशरवचनम्। 'न भूतसङ्घसंस्थानो देहोऽस्य परमात्मनः' इति पाराशर्यवचनमप्यनुसन्धेयम्। 'व्यक्तमेष महायोगी परमात्मा सनातनः' इति वल्मीकसंभवोऽप्याह। तेनावतारेषु शोकमोहाद्यनुकरणं

नटानां नाटकेष्विव परिहासरूपमेवेति मन्तव्यम् । परव्यूहादिविभागः पञ्चरात्रादिषु स्पष्टमेवानुसन्धेयः ॥ ६४ ॥

पद०—प्रख्यातमित्यादि । प्रख्यातम्—'पादोऽस्य विश्वा भूतानि । त्रिपादस्यामृतं दिवि ।' 'वैकुण्ठे तु परे लोके' इत्यादिश्रुतिस्मृतिपुराणादिषु प्रसिद्धम् । शुद्धसत्त्वम्—'स्वसत्ताभासकं सत्त्वं गुणसत्त्वाद्विलक्षणम् ।' इत्यादिप्रमाणानुसाराद् रजस्तमोरहितसत्त्वाश्रयभूतम्, शुद्धं रजस्तमोभ्याममिश्रं सत्त्वं यस्य तत् शुद्धसत्त्वम् । अनघम्—संसारप्रवर्तनोपकरणत्वाभावात्, न विद्यते संसारप्रवर्तनोपकरणस्वरूपमघं यस्य तदनघम् । अव्यक्ततोऽन्यत्—'गुणसत्त्वाद्विलक्षणम्' इत्यादिप्रमाणादव्यक्ताख्यत्रिगुणद्रव्यतोऽन्यत् । किमपि तद् द्रव्यम्—अनिर्वचनीयं श्रीमत्पाञ्चरात्रप्रसिद्धं वक्ष्यमाणोपयोगविशिष्टतया बुद्धिस्थं द्रव्यम् । तद्रूपम्—तादृशशुद्धसत्त्वद्रव्यात्मकमेव । ऐशे रूपम्—ईश्वरसम्बन्धि शरीरम् । दिवि—परमव्योमनि । कनति—प्रकाशते । तथा—तद्वदेव । शेषशेषानादेः—शेषो भगवच्छय्यासनादिरूपः फणिराजः । शेषाशनो विष्वक्सेनः । 'त्वदीयभुक्तोज्झितशेषभोजिना' इत्यादौ, पाञ्चरात्रशास्त्रे च विष्वक्सेनस्य शेषाशनत्वं प्रसिद्धम् । आदिशब्देन गरुडादिग्रहणम् । शेषशेषाशनौ आदी यस्य भगवत्परिजनवर्गस्य स शेषशेषाशनादिः । तस्यापि रूपं तद्रूपमेव दिवि कनतीति पूरणीयम् । स देवः—सर्वप्रमाणप्रसिद्धः परमपुरुषः । अजहत्स्वस्वभावः सन्नेव—ज्ञानबलैश्वर्यादि स्वासाधारणं स्वभावमविजहदेव । अजहत् स्वस्मादविश्लिष्टः स्वस्वभावो यस्य स इति विग्रहः । नित्यम्—'नित्यं नित्याकृतिधरम्' इति प्रमाणेन नाशरहितम् । सूरिसेव्यम्—'तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः' इति प्रमाणेन नित्यसूरिपरिषन्नित्यानुभाव्यम् । परतरम्—व्यूहविभवान्तर्याम्यर्चारूपेभ्यः श्रेष्ठतमम् । तत्—पूर्वोक्तं शुद्धसत्त्वात्मकं दिव्यविग्रहमेव । पुंसां संसारशान्त्यै—व्यूहादिस्थानेषु वर्तमानानां देहिनां स्वसाक्षात्कारादिभिः संसारनिवृत्त्यै । व्यूहपूर्वैः—व्यूहप्रभृतिभिः । विभागैः—स्वासिकाभेदैः । विपरिणमयति—यथाऽभिमतं वैविध्येन परिणमयति । तथाच भगवद्रूपं सर्वमपि शुद्धसत्त्वरूपं दिव्यम्, तद्ग्रहणस्य फलं च मोक्षोपयोग एवेति भावः ॥ ६४ ॥

देहत्वात् सप्तधातु त्रिमलमघभवं दुःखकृन्नाशयुक्तं
सांशत्वादेश्च हेतोरिति यदि तदसद् धर्मिमानोपरोधात् ।
बाधः शास्त्रैकवेद्ये क्वचिदपि न भवेदन्यथाऽतिप्रसङ्गात्
यत्तु स्वेच्छावतारेष्वभिनयति तदप्यासुरोपप्लवार्थम् ॥ ६५ ॥

इत्यन्तरधिकरणम् ॥ ७ ॥

चिन्ता०—उक्तमेवार्थं पूर्वपक्षानुवादपूर्वकं प्रतिबन्द्या स्थिरीकुर्वन् दुःखित्वादि नटनफलमपि प्रदर्शयति—देहत्वादिति। इहैवं प्रतिबन्दी–यदि शास्त्रैकवेद्यार्थे बाधः क्वचिदिष्यते–तर्हि अग्नीषोमीयहिंसादावपि बाधः स्यादिति। अत्र श्रुतिसिद्धत्वान्न बाध इति प्रतिबन्दीमोचने बन्दीमोचनमपि तथैव स्यादिति। भगवद्विग्रहादेरपि श्रुतिसिद्धत्वात् दुःखमिश्रत्वादिवचनमासुरोपप्लवार्थमित्युक्तम्। आसुराः—कंसादयः। कृष्णादीनां बाल्यादिनटनं परमार्थ एवेति मत्वा पुनःपुनः प्रातिकूल्ये प्रवर्तेरन् तत्प्रवृत्त्यैव विध्वंसेरन्निति। 'विनाशाय च दुष्कृताम्' इत्युक्तदुष्कृद्विनाशफलं बाल्यादिनटनमित्यर्थः॥ ६५॥

इत्यन्तरधिकरणम्॥ ७॥

पद०—देहत्वादित्यादि। भगवच्छरीरं सप्तधातु—त्वक्चर्ममांसरुधिरमेदोऽस्थिमज्जारूपसप्तधातुयुक्तम्। त्रिमलम्—मलत्रयवत्। अघभवम्—कर्ममूलकम्। दुःखकृत्–दुःखहेतुभूतम्। देहत्वात्, इत्येकः प्रयोगः। तत् नाशयुक्तं च–नाशवच्च। सांशत्वादेः–सावयवत्वादेः, हेतोः। अयमपरः प्रयोगः। इति यदि—इत्युच्यते चेत्। तदसत्—तदयुक्तम्। धर्मिमानोपरोधात्—'न भूतसङ्घसंस्थानो देहोऽस्य परमात्मनः।' 'न तस्य प्राकृता मूर्तिर्मांसमेदोऽस्थिसम्भवा।' इत्यादिभिर्निरुक्तसाध्याभावसमर्पकैर्भगवद्विग्रहधर्मिग्राहकप्रमाणैरुपरोधात् बाधात्। नहि वह्निरनुष्णः पदार्थत्वादित्यनुमितिः प्रत्यक्षविरुद्धवह्न्यनुष्णत्वसाधनाय प्रभवति। शास्त्रैकवेद्ये—शास्त्रैकप्रमाणसमधिगतेऽर्थे। क्वचिदपि—कुत्रापि। बाधो न भवेत्–प्रमाणाभासेनान्यथासिद्धशास्त्रान्तरेण वा कालात्ययापदेशो न भवेत्। अन्यथा–शास्त्रैकसिद्धस्यार्थस्य प्रत्यक्षादिना अन्यथासिद्धशास्त्रान्तरेण वा बाधाङ्गीकारे। अतिप्रसङ्गात्—अग्नीषोमीयहिंसादावपि बाधप्रसङ्गात्। स्वेच्छावतारेषु—स्वेच्छाकृतेषु रामकृष्णाद्यवतारेषु। यत्त्वभिनयति—

'राज्याद्भ्रंशो वने वासः सीता नष्टा हतो द्विजः।
ईदृशीयं ममालक्ष्मीर्निर्दहेदपि पावकम्॥'

इत्यादिरीत्या दुःखमभिनयतीति यत्। तदपि–तथा दुःखनटनमपि। आसुरोपप्लवार्थम्–आसुरः असुरसम्बन्धी उपप्लवो मनुष्यत्वभ्रान्त्या प्रातिकूल्याचरणेन स्वयमेव विनाशस्तदर्थमिति मन्तव्यमित्यर्थः। तथाचावतारेषु दुःखबाणक्षतरुधिरदर्शनादिप्रतिपादकप्रमाणाभासानामन्यथासिद्धत्वात् तैरुपरोधो न सम्भवतीति भावः॥ ६५॥

इत्यन्तरधिकरणम्॥ ७॥

## आकाशाधिकरणम् ॥ ८ ॥

इत्थं विद्यात्रयेण स्थिरचरचिदचिद्देहिनः सर्वहेतोः
अव्यक्ताज्जीववर्गादपि समधिकता यद्यपि स्यात्तथापि ।
उत्थानद्वारभेदात् क्रमत इह मृदूपक्रमक्रूरनिष्ठान्
अध्यायेऽस्मिन्निरुन्धन्नधिकरणगणैस्तद्गुणानुद्गृणाति ॥ ६६ ॥

चिन्ता०- अत्रोक्तानामधिकरणानामर्थैक्यादेकपेटिकात्वमध्यायपरिसमाप्तिपर्यन्तमागामिनामधिकरणानामर्थविशेषाभावान्नैरर्थक्यमाशङ्कमानस्य पूर्वपक्षवादिनः प्रकारभेदेन प्रयोजनवत्त्वमुपपादयन् सर्वाधिकरणसाधारणं भगवद्गुणविशेषानुसन्धानरूपं प्रधानं प्रयोजनं प्रकटमेवाचष्टे--इत्थमिति। विद्यात्रयेण सद्विद्याद्यधिकरणत्रयोक्तेन स्थावरजङ्गमात्मकचेतनाचेतनात्मकस्य सर्वकारणस्य भगवतः प्रधानाज्जीववर्गाच्चादित्यादेरप्याधिक्यं यद्यपि स्यात्। तथापि 'अस्पष्टतरमस्पष्टं स्पष्टं छायानुसारि च' इत्युक्तक्रमेणोत्थानद्वारभेदात् क्रमेणोत्थितान् मृदूपक्रमक्रूरनिष्ठान् प्रतिवादिनो ऽस्मिन्नध्याये निरुन्धन् सन् शिष्टैरधिकरणैर्भगवद्गुणानपि विशेषतः प्रकाशयतीतिशब्दार्थः। अयमत्र भावः—यथा युद्धेषु पदात्यश्वगजरथानां पूर्वपूर्वदुर्बलानां दुर्बलभङ्गे प्रबलयोधनम्, एवमस्पष्टतरजीवादिलिङ्गानां पूर्वपूर्वभङ्गे पुनरुत्तरोत्तरपरिग्रहेण पूर्वपक्षः प्रवर्तते। तत्प्रवृत्तिकुण्ठनमन्तरेण जातमपि तत्त्वज्ञानं न प्रतितिष्ठतीति। तेनाध्यायशेषोऽप्यारम्भणीय एव। किं च सर्वेष्वप्यधिकरणेषु तत्तदधिकरणप्रतिनियता भगवद्गुणा विशेषतः प्रकाश्यन्ते, तेषां गुणानां कार्त्स्न्येनानुसन्धानमध्यायशेषप्रयोजनमित्यास्माको मार्गः। निर्विशेषवादिनां तु एकेनैवाधिकरणेन निर्विशेषं प्रतिपन्नमिति प्रतिपाद्यगुणविशेषाभावादुत्तरेषामधिकरणानां नैष्फल्यमेवेति हृदयम् ॥ ६६ ॥

पद०-इत्थमित्यादि। इत्थं विद्यात्रयेण—विचारितेन सद्विद्यानन्दमयविद्याऽन्तरादित्यविद्यात्रयेण। स्थिरचरचिदचिद्देहिनः—स्थावरजङ्गमात्मकनिखिलचेतनाचेतनशरीरिणः। सर्वहेतोः—सर्वजगन्निमित्तोपादानभूतस्य परमात्मनः। अव्यक्तात्—प्रधानात्। जीववर्गादपि—निखिलचेतनसमुदायाच्च। समधिकता—वैलक्षण्यम्। यद्यपि स्यात्—यद्यपि भवेदेव। तथाऽपि—भगवतोऽचेतनाच्चेतनाच्च वैलक्षण्यस्यैतावता सिद्धावपि। इह—शास्त्रे। अस्मिन्नध्याये—प्रथमाध्याये। क्रमतः—प्रथमद्वितीयतृतीयचतुर्थपादक्रमेण। उत्थान-

द्वारभेदात्—अस्पष्टतरास्पष्टस्पष्टच्छायानुसारिजीवलिङ्गकवेदान्तवाक्यरूपशङ्कोत्थापकभेदात् । मृदूपक्रमक्रूरनिष्ठान्—मृदुरुपक्रमो येषां ते, क्रूरा निष्ठा येषां ते च मृदूपक्रमक्रूरनिष्ठाः तान् । प्रमाणप्रमेयाङ्गीकारिण इव प्रथममुपक्रम्य अन्ते सर्वशून्यत्वे निपतिष्णून् पूर्वपक्षिणः । निरुन्धन्—निराकुर्वन् । अधिकरणगणैः—इत उपरि शिष्टैः सर्वैरप्यधिकरणैः । तद्गुणान्—भगवतस्तत्तदधिकरणप्रतिनियतान् गुणान् । उद्गृणाति—प्रतिपादयति । अयमाशयः—ईक्षत्यधिकरणे भगवतो जगत्कारणभूतस्याचेतनाद्व्यावृत्तिः प्रत्यपादि, आनन्दमयाधिकरणे चेतनसामान्यवैलक्षण्यमभ्यधायि, अन्तरधिकरणे जीवविशेषवैजात्यं च निरणायि, अत एतावता शास्त्रेण कृत्यं कृतमेव, अथाप्येतस्स्थिरीकरणार्थं पूर्वपक्षिणो निगृह्य प्रत्यधिकरणं प्रतिनियतान् भगवद्गुणांस्तद्भक्तिवर्धनाय प्रतिपादयति, तेच गुणास्तत्तत्पादावसाने 'स्वेच्छातः सर्वहेतुः' इत्यादिभिः सङ्गृहीता इति ॥ ६६ ॥

शब्दैः सद्ब्रह्ममुख्यैः श्रुतिशिरसि मितं कारणं किञ्चिदेकं
सङ्कल्पाभ्यासरूपैरतदननुगुणैश्चिन्तितस्तद्विशेषः ।
भूताकाशादिशङ्काजननसमुचितैर्नामभिः कारणस्थैः
क्षिप्त्वा तत् पादशेषे श्रुतिसमुदयनासम्भवोक्त्या भुनक्ति ॥ ६७ ॥

चिन्ता०—एवं पूर्वपेटिकया सहाध्यायशेषस्य संगतिमुक्त्वा पादशेषस्य संगतिं वक्तुं पूर्वोत्तरपेटिकयोः स्वरूपमपि विशेषतः प्रकाशयति—शब्दैरिति । 'अथातो ब्रह्मजिज्ञासा' इति शारीरकशास्त्राद्यपेटिकायां ब्रह्म जिज्ञास्यमित्युक्तम् । तत् ब्रह्मसदात्मपुरुषरूपसाधारणशब्दप्रतिपन्नं ब्रह्म किं प्रकृतिः किं वा जीवः अथवा उपचितपुण्यविशेषः कश्चिज्जीवविशेषः, पाप्मशब्दस्य साधारणत्वेन पुण्यापुण्यरूपपाप्मोदितत्वेऽपि किं पुण्डरीकाक्षः, अन्यो वा कश्चिच्चतुर्मुखविरूपाक्षादिरित्याशङ्क्य पुण्डरीकाक्ष एवेति निर्धारितं पूर्वपेटिकायाम् । तत्रेतरव्यावर्तकलिङ्गान्याह—संकल्पेति । संकल्पात् प्रधानव्यावृत्तिः । आनन्दाभ्यासाज्जीवसामान्यं व्यावर्त्यते । अप्राकृतरूपविशेषादुपचितपुण्यविशेषो जीवोऽपि । तत्रापि पुण्डरीकाक्षत्वश्रवणात् चतुर्मुखादिरपीति हार्दो भावः । अतदननुगुणैः—अनन्यथासिद्धैरित्यर्थः । अत्र पूर्वपक्षी प्रत्यवतिष्ठते—पूर्वाधिकरणत्रये लिङ्गैरेव सामान्यश्रुतिबाधेन प्रधानादिव्यावृत्तिर्भवद्भिरभिहिता । लिङ्गाद् विशेषश्रुतिर्बलीयसी । सा हि रूढिशक्त्या वर्तते । तेनाकाशप्राणज्योतिरिन्द्रादिविशेषश्रुत्या लिङ्गानि बाधित्वा प्रसिद्धाकाशादिकमेव जिज्ञास्यब्रह्मत्वेन स्वीकार्यमिति । तेन पादशेषात्मकपेटिकासांगत्यमुक्तं भवति । तदेतदाह—भूतेति । आकाशो द्विविधः—'यदेष आकाश आनन्दो न स्यात्' इत्यध्यात्मवित्सम्मत-

एकः, पामरपरीक्षकाविशेषेण सर्वलोकप्रसिद्धो भूताकाशोऽपरः। तेन प्रसिद्ध्यतिशयानुसारेण भूताकाश एवात्र ग्राह्यः। एवं प्राणादावपि द्रष्टव्यम्। एवमाकाशादीनां विशेषश्रुत्या पूर्वाधिकरणत्रयोक्तं लिङ्गं बाधित्वा पूर्वपक्ष्यभिप्रायेण निरस्य सिद्धान्ती पुनराकाशादिविशेषश्रुतिसमुदायासंभवप्रतिपादनेन तदेव ब्रह्मप्रतिपादकं लिङ्गं प्रधानादिव्यावर्तकं भुनक्ति—रक्षतीत्यर्थः। 'भुजोऽनवने' इति रक्षणव्यतिरिक्तार्थविवक्षायामात्मनेपदविधानात्। अयमाशयः—रूढिर्योगमपहरतीति सिद्धमेव, अथापि प्रमाणपरिक्लृप्तो योगो रूढिमेव बाधत इति न्यायविदां निर्णयः। अत्र च 'सर्वाणि ह वा इमानि' इति प्रसिद्धवन्निर्देशो दृश्यते। हवा इति प्रसिद्धिप्रतिपादकाव्ययदर्शनात्। प्रसिद्धिश्च कारणवाक्येषु। तेषु च छागपशुन्यायादिना नारायणपरत्वं सिद्धमेव। अतो नारायणप्रत्यभिज्ञापकप्रसिद्धवन्निर्देशयुक्तानन्यथासिद्धवाक्यस्थसर्वकारणत्वलिङ्गपरिक्लृप्तो योग आकाशशब्दस्य रूढिं बाधत इति युक्तमेव। शेषं भाष्ये॥ ६७॥

पद०—शब्दैरित्यादि। श्रुतिशिरसि सद्ब्रह्ममुख्यैः शब्दैः किञ्चिदेकं कारणं मितम्—शारीरकाद्याधिकरणे 'सदेव सोम्येदम्' 'आत्मा वा इदम्' 'ब्रह्म वा इदम्' 'यतो वा इमानि भूतानि ...तद्ब्रह्म' इति पुरोवादानुवादवाक्यगतैः सद्ब्रह्मात्मादिसामान्यशब्दैः किमप्यभिन्ननिमित्तोपादानभूतं कारणवस्तु जिज्ञास्यमित्युक्तम्। अतदनुगुणैः सङ्कल्पाभ्यासरूपैस्तद्विशेषश्चिन्तितः—ततः परमीक्षत्यधिकरणानन्दमयाधिकरणान्तरधिकरणेषु परमात्मभिन्नप्रधानचेतनसामान्यचेतनविशेषासम्भावितैः 'बहुस्याम्' इत्यादिरूपजगत्सृष्टिसङ्कल्पनिरतिशयदशाशिरस्काभ्यस्यमानानन्दाप्राकृतस्वासाधारणविग्रहविशेषैस्तस्य परमकारणभूतस्य वस्तुनः प्रधानव्यावृत्तत्व चेतनसामान्यव्यावृत्तत्व चेतनविशेषव्यावृत्तत्वविशिष्ट नारायणस्वरूपविशेषः क्रमेण निश्चितः। इत उपरि पादशेषे भूताकाशादिशङ्काजननसमुचितैः कारणस्थै र्नामभिस्तत् क्षिप्त्वा श्रुतिसमुदयनासम्भवोक्त्या भुनक्ति—इतः पश्चात् पादशेषे—एतत्पादस्थशिष्टाधिकरणेषु। भूताकाशादिशङ्काजननसमुचितैः—रूढ्या प्रसिद्धाकाशप्राणज्योतिरादिशङ्काजननानुगुणैः। कारणस्थैः—कारणविषये श्रुतैः। नामभिः—आकाशप्राणज्योतिरादिरूढिशब्दैः श्रुतिरूपैः। तत्—पूर्वोपात्तपरमात्मलिङ्गजातम्। क्षिप्त्वा—आक्षिप्य। श्रुतिसमुदयनासम्भवोक्त्या—प्रमाणपरिकल्पितयोगबलेन बाधितत्वात् केवलरूढियुक्तश्रुतेः समुत्थानं न सम्भवतीति प्रतिपादनेन। भुनक्ति—परमात्मलिङ्गजातं रक्षतीत्यर्थः। भुजोऽनवन इति रक्षणव्यतिरिक्तार्थविवक्षायामात्मनेपदविधानादत्र रक्षणार्थकतया परस्मैपदम्। अयमाशयः—रूढिर्योगमपहरतीति सिद्धमेव। अथापि प्रमाणपरिक्लृप्तो योगो रूढिमेव बाधते इतिन्यायात् 'सर्वाणि हवा इमानि भूतान्याकाशादेव समुत्पद्यन्ते' इत्यादिवाक्येषु प्रसिद्धिसूचकहवैशब्ददर्शनेन प्रसिद्धिसापेक्षत्वात् निरुक्तसद्ब्रह्मात्म-

नारायणशब्दघटितकारणवाक्येषु छागपशुन्यायेन सदादिसामान्यशब्दानां विशेषशब्दमूर्धन्यनारायणशब्दार्थे पर्यवसानेन नारायण एव निखिलजगत्कारणमिति प्रसिद्ध्या तदवलम्बनेनात्रत्याकाशादिशब्दानां प्रकाशादिगुणयोगेन तादृशनारायणपरत्वसम्भवात् तद्बाधनाय केवलभूताकाशादिप्रसिद्धिर्नपर्याप्तेति परमात्मलिङ्गं सुरक्षितमिति ।

आकाशप्राणशब्दावनितरगतिकौ रूढिभङ्गेन नेयौ
ज्योतिश्शब्दस्तु रूढ्या प्रथयति पुरुषं दिव्यतेजोविशिष्टम् ।
प्रख्यातेन्द्रादिशब्दस्तदनु नियमितस्तद्विशिष्टप्रवृत्त्ये-
त्येवं स्यात् पेटिकैषा द्विकयुगलवती शब्दवृत्तिक्रमेण ॥ ६८ ॥

चिन्ता०—अतःपरमुत्तरेषां चतुर्णामधिकरणानां युगद्वयेन भेदमन्योन्यसंगतिमप्याह—आकाशेति । आकाशप्राणशब्दावनितरगतिकौ प्रसिद्धाकाशप्राणप्रतिपादनानर्हौ परस्मिन्ब्रह्मणि रूढिं हित्वा योगशक्त्यैव प्रतिपादनीयौ । तेन द्वयोरधिकरणयोरेकपेटिकात्वसिद्धिः । तथोत्तराधिकरणयोरूढिभङ्गमन्तरेण रूढार्थविशिष्टब्रह्मपरत्वादेकपेटिकात्वं सिद्धम् । तत्र ज्योतिश्शब्दस्य तावद्रूढार्थविशिष्टपरत्वं दर्शयति—ज्योतिरिति । 'न तत्र सूर्यो भाति' 'नचोदेति नास्तमेति' 'यदादित्यगतं तेजः' इत्यादिकं हि प्रमाणजातमुपलभ्यते । एवमिन्द्रादिशब्दोऽपि इन्द्रादिविशिष्टपरमात्मपरतया रूढ्यभङ्गेन विशेषणमात्रापर्यवसानमाश्रित्य नेतव्यः । तथाचार्थभेदात् पेटिकाद्वयसिद्धिरिति निगमयति—इत्येवमिति । एकत्र यौगिकशक्तिरन्यत्र विशेषणमात्रापर्यवसिता रूढिशक्तिरिति शब्दप्रवृत्तिक्रमः ॥ ६८ ॥

पद०—आकाशप्राणशब्दावित्यादि । अनितरगतिकौ—प्रसिद्धाकाशप्राणप्रतिपादनानर्हौ । आकाशप्राणशब्दौ—आकाशाधिकरणविषयवाक्यप्राणाधिकरणविषयवाक्ययोः क्रमेण श्रुतावाकाशप्राणशब्दौ । रूढिभङ्गेन नेयौ—प्रसिद्धाकाशप्राणरूढिं त्याजयित्वा केवलयोगेन ब्रह्मणि नेयौ । ज्योतिश्शब्दस्तु—'ज्योतिश्चरणाभिधानात्' इत्याधिकरणविषयवाक्ये 'अथ यदतः परो दिवो ज्योतिर्दीप्यते' इत्यादौ श्रुतो ज्योतिश्शब्दः । दिव्यतेजोविशिष्टं पुरुषं रूढ्या प्रथयति—दिव्यतेजोविशिष्टविग्रहयोगिनं परमपुरुषं रूढ्यत्यागेन रूढ्यैव प्रतिपादयति । तदनु—ततः पश्चात् । प्रख्यातेन्द्रादिशब्दः—'त्रिशीर्षाणं त्वाष्ट्रमहनम्' इत्यादिजीवविशेषलिङ्गसमर्पकविशेषणयुक्त इन्द्रशब्दः, 'यावद्ध्यस्मिञ्छरीरे प्राणो वसति तावदायुः' इति प्रसिद्धप्राणविशेषणयुक्तः प्राणशब्दश्च । तद्विशिष्टप्रवृत्त्या नियामितः—

इन्द्रप्राणरूढ्यर्थभूतेन्द्रप्राणविशिष्टपरमात्मबोधनेन व्यवस्थापितः। इतिं—उक्तोपपादनाद्धेतोः। एवम्—उक्तरीत्या। शब्दवृत्तिक्रमेण—प्रथमद्विके यौगिकशक्तिरन्यत्र विशेषणमात्रापर्यवसिता रूढिशक्तिरिति शब्दप्रवृत्तिक्रमेण। एषा पेटिका—आकाशाधिकरणप्राणाधिकरणज्योतिरधिकरणेन्द्रप्राणाधिकरणरूपचतुरधिकरणयुक्तेयं पेटिका। द्विकयुगलवती स्यात्—अधिकरणद्वयात्मकद्विकद्वययुक्ता भवतीत्यर्थः॥ ६८॥

सूत्रम्—आकाशस्तल्लिङ्गात्॥ २३॥

अत्राकाशस्त्वशेषप्रसवविलयभूः साम्नि दृष्टः स्वनाम्ना
निर्दिष्टस्तैत्तिरीयेऽप्यनितरजनितः स्वात्मनः सम्भवोक्त्या।
मैवं सिद्धानुवादो ह्ययमथ च परप्राप्यतादिर्न तस्मिन्
तत्कर्तात्मा विपश्चित् श्रुत इति विहता स्वात्मनस्तत्प्रसूतिः॥ ६९॥

इत्याकाशाधिकरणम्॥ ८॥

चिन्ता०—पूर्वं 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषः' इत्यादित्यान्तर्वर्तिनः कस्यचित् पुरुषस्य विशेषलिङ्गात् वेदान्तवेद्यत्वमुक्तम्। इदानीं तदभावादाकाशस्य विशेषश्रुत्या वेदान्तवेद्यत्वमाशङ्क्य परिह्रियत इति संगतिः। प्रसिद्धाकाशब्रह्मणोराकाशशब्दयोगसाधारण्यं संशयबीजमित्यादि स्वयमेव भाव्यम्। तदर्थविचारस्तु 'सर्वाणि हवा इमानि भूतानि' इत्यादिच्छान्दोग्यवाक्यस्थाकाशशब्दः किं प्रसिद्धाकाशपर उत परमात्मपर इति; तदर्थं विचार्यते—किमयमाकाशशब्दो रूढिशक्त्या वर्तते उत नेति, तदर्थमपि विचार्यते—किं रूढिर्योगमपहरतीतिन्यायापवादकं न्यायान्तरं न विद्यते, उत विद्यत इति। पुनश्च विचार्यते—प्रसिद्धवन्निर्देशयुक्तमत्रत्यकारणत्वादिकं चेतनमात्रविषयमुत चेतनाचेतनविषयमित्यादि। फलफलिभावस्तु 'इमानि भूतानि' इति प्रसिद्धार्थविषयकारणत्वानुवादस्याचेतनमात्रविषयत्वेन योगशक्तिकल्पकन्यायान्तराभावात् आकाशशब्दो रूढ्यैव वर्तत इत्ययं शब्दः प्रसिद्धाकाशपरः। सिद्धान्तेऽपि स्वयमेव वाच्यः। अत्र पूर्वपक्षवादी मन्यते—छान्दोग्ये ह्याकाशशब्दः सर्वोत्पत्तिविलयकारणवाचकतया दृश्यते, स चाकाशस्तैत्तिरीयेऽनन्योत्पाद्यतया कथ्यते 'आत्मन आकाशः संभूतः' इति, तस्यानन्योत्पाद्यत्वं सर्वकारणत्वेन नित्यत्वादेव युज्यते इति। तदिदमाह—अत्रेत्यादिना। तन्निराकरोति—मैवमिति। तत्र हेतुमाह—सिद्धेति।

'हवै' इति प्रसिद्धवन्निर्देशयुक्तस्यास्य वाक्यस्य सिद्धानुवादविषयत्वात् पूर्वप्रसिद्धिरवश्यापेक्षणीया । प्रसिद्धिश्च कारणवाक्येषु, तानि च नारायणविषयाणीति प्रागेवोक्तम् । तस्मादाकाशशब्दो न प्रसिद्धाकाशपर इत्यर्थः । किं च 'आकाशः परायणम्' इति आकाशस्य परमप्राप्यत्वमत्रैव श्रूयते । नह्यचेतनं किंचित् परमप्राप्यमित्यात्मविदो वदन्ति । तदिदमाह—अथेति । तस्मिन्नाकाशे परमप्राप्यत्वं न संभवतीत्यर्थः । दूषणान्तरमाह—तदिति । 'तदैक्षत, तत्तेज ऐक्षत, ता आप ऐक्षन्त' इत्यादिषु तत्तत्कर्ता विपश्चित्त्वेनैव हि श्रुतः । तथाचाकाशस्य विविधदर्शनं न संभवति । अथवा तत्कर्तेति आकाशकर्तेति । ब्रह्मवल्ल्यां विपश्चिता ब्रह्मणेति जगत्कारणं वस्तु विपश्चित्त्वेनैव हि श्रूयते । विविधं पश्यच्चित्त्वं हि विपश्चित्त्वमिति व्याचख्युः । तेनात्मशब्दः परमात्मवाचकः । यत्तूक्तमात्मन आकाश इति स्वात्मन आकाशोत्पत्तिरभिधीयत इति, तत्र मुख्यार्थस्वीकारे बाधः, अमुख्यार्थस्वीकारे स एव दोषः । तस्मादात्मनः परमात्मन आकाशः संभूत इत्ययमेवार्थ इत्यभिप्रायेणाह—विहृतेति ॥ ६९ ॥

इत्याकाशाधिकरणम् ॥ ८ ॥

पद०—अत्राकाश इत्यादि । अत्र साम्नि—अन्तरधिकरणविषयभूते सामवेद एव क्वचित् प्रदेशान्तरे 'सर्वाणि हवा इमानि भूतान्याकाशादेव समुत्पद्यन्ते । आकाशं प्रत्यस्तं यन्ति' इत्यादिवाक्ये । आकाशस्तु—आपण्डितपामरं प्रसिद्धोऽयमाकाश एव । स्वनाम्ना—स्वस्मिन् रूढेन श्रुतिरूपेण शब्देन । अशेषप्रसवविलयभूः—अशेषस्य समस्तस्य जगतः प्रसव उत्पत्तिः, विलयो नाशस्तयोर्भूः उपादानकारणतया तत्स्थानभूत इति । दृष्टः—प्रतिपन्नः । तैत्तिरीयेऽपि—यजुर्वेदेऽपि । तित्तिरिरूपेण ऋषिणा प्रोक्तत्वाद्यजुषस्तैत्तिरीयत्वम् । स्वात्मनः सम्भवोक्त्या—'आत्मन आकाशः सम्भूतः' इति स्वस्मादेव स्वयमाकाश उत्पन्न इति वचनेन । अनितरजनितो निर्दिष्टः—इतरस्माज्जातो नेति प्रतिपादितः । मैवम्—एवं मा शङ्किष्ठाः । अयं सिद्धानुवादो हि—'सर्वाणि हवा इमानि' इत्यादिवाक्ये हवा इति निर्देशस्य प्रसिद्धिसूचकतयाऽन्यत्रसिद्धार्थानुवादरूपं हीदं वाक्यम् । अन्यत्र च सद्ब्रह्मात्मनारायणशब्दघटितवाक्यै र्नारायण एव जगत्कारणमितिनिर्णयात् तदन्यथाकरणशक्तिरस्य नास्तीति भावः । अथ च—तदुपरि च । परमाप्यतादिः—'आकाशो ज्यायानाकाशः परायणम्' इत्यादिवाक्यसिद्धं परमप्राप्यत्वरूपं परायणत्वम् । आदिशब्दार्थभूतं सर्वज्यायस्त्वञ्च । तस्मिन् न—भूताकाशे न सम्भवति । तत्कर्ता आत्मा—'आत्मन आकाशः' इत्यत्राकाशकर्तृत्वेन प्रतिपन्न आत्मा । श्रुतो विपश्चित्—'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता' इति पूर्ववाक्ये श्रुतः सर्वज्ञत्वरूप-

विपश्चित्त्वाश्रयः परमात्मा । इति—हेतोः । स्वात्मनस्तत्प्रसूतिः—आकाशस्य स्वस्मादुत्पत्तिः । विहता—बाधिता । 'विपश्चिता' इति पूर्ववाक्ये श्रुतो विपश्चिदेव हि 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः' इत्यत्र तच्छब्दैतच्छब्दविशेषितात्मशब्देन निर्दिश्यते न पुनराकाशस्य स्वरूपम्; तच्छब्दैतच्छब्दविशेषणायोगात् । सिद्धान्ते तु 'ब्रह्मविदाप्नोति परम्' इति ब्राह्मणप्रतिपन्नात् 'सत्यं ज्ञानम्' इत्यादितद्व्याख्यानभूतमन्त्रप्रतिपन्नात् परमात्मनः सकाशादित्यर्थोपपत्तेः सार्थक्यमिति भावः ॥ ६९ ॥

इत्याकाशाधिकरणम् ॥ ८ ॥

## प्राणाधिकरणम् ॥ ९ ॥

सूत्रम् ॥ अत एव प्राणः ॥ २४ ॥

प्राणायत्तं हि देहादिकमिह विदितं तेन तत्कारणत्वं
श्रुत्युक्तं रूढिशक्त्या सुदृढमिति न तद् व्योमवद्बाधनीयम् ।
तत्र प्राणस्य काष्ठादिषु महिमहतेः पूर्ववच्चानुवादा-
दाकाशोक्तेरिवोक्तेर्भगवति निखिलप्राणनस्यापि दृष्टेः ॥ ७० ॥

इति प्राणाधिकरणम् ॥ ९ ॥

चिन्ता०—अत्रैवं पूर्वपक्षवादी मन्यते—प्रसिद्धाकाशे जगदुत्पत्तेरप्रत्यक्षत्वात् आकाशशब्दे रूढिभङ्गो न्याय्यः, इह तु प्राणे सर्वेषामपि पुरुषाणां प्राणायत्तप्रवृत्तिकत्वस्योपलम्भादस्माकमनुकूललिङ्गं यत् तदेव युष्माकं प्रतिकूललिङ्गम्, तेनानुकूललिङ्गसध्रीची प्राणरूढिशक्तिरभञ्जनीयेति । तदिदमाह—प्राणायत्तमिति । तन्निराकरोति—तत्रेति । तत्र हेतुमाह—प्राणस्येति । 'सर्वाणि हवै' इति चेतनाचेतनविभागाभावेन कृत्स्नस्यापि प्रपञ्चस्य प्राणायत्तप्रवृत्तिकत्वमुच्यते । अचेतनेष्वेव केपुचिच्छिलाकाष्ठादिषु प्राणायत्तप्रवृत्तिकत्वं न दृश्यते । तेन सर्वसाधारणप्रवर्तकत्वगुणाभावात् प्राणस्यापि प्रवर्तकः परमात्मैव प्राणयतीति व्युत्पत्तिमाश्रित्य प्राणशब्दवाच्यतया स्वीकार्य इत्यर्थः । पूर्वाधिकरणोक्तं हेतुमत्रापि योजयति—पूर्ववदिति । उभयत्रापि हवा इति शब्दस्य विद्यमानत्वादित्यर्थः । अत्र भगवति प्राणशब्दस्य श्रौतं प्रयोगं सदृष्टान्तमाह—आकाशेति । यथा परमात्मविषयस्याकाशशब्दस्य श्रुतौ तत्रतत्रोपलभ्यमानत्वादाकाशशब्दः परमात्मविषयः, एवं निखिलप्राणिप्राणनोक्तेर्दृष्टत्वात् प्राणशब्दोऽपि परमात्मविषय इत्युक्तं भवति । तदर्थविचारफलफलिभावौ पूर्वाधिकरणवत् स्वयमेव कल्पनीयौ । संगतिः पुनरातिदेशिकी ॥ ७० ॥

इति प्राणाधिकरणम् ॥ ९ ॥

पद०—प्राणायत्तं हीत्यादि । इह—लोके । देहादिकम्—आस्माकीनदेहेन्द्रियादिकम् । प्राणायत्तं विदितं हि—प्राणाधीनमिति सर्वलोकविदितं हि । तेन—प्राणायत्तप्रवृत्तिकत्वस्य

सर्वलोकविदितत्वेन । श्रुत्युक्तम्—छान्दोग्ये उपस्तिब्राह्मणप्रकरणे 'सर्वाणि ह्वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते' इत्यादिश्रुत्युक्तम् । तत्कारणत्वम्—प्राणस्य सर्वजगत्कारणत्वम् । रूढिशक्त्या—मुख्यप्राणे प्राणशब्दस्य रूढिशक्त्याच । सुदृढमिति—सर्वलोकविदितत्वेनाप्रत्यक्षाकाशीयजगदुत्पादनवैलक्षण्येनात्यन्तदृढमिति हेतोः । तत्—प्राणस्य जगत्कारणत्वम् । व्योमवत्—पूर्वाधिकरणनिरस्ताकाशकारणत्ववत् । न बाधनीयम्—न प्रतिक्षेप्यमिति । तन्न—तदिदमाशङ्कनं न सम्भवति । प्राणस्य—मुख्यप्राणस्य । काष्ठादिषु—काष्ठशिलादिषु । महिमहतेः—स्वायत्तप्रवृत्तिकत्वरूपमहिमादर्शनात् । पर्ववदनुवादाच्च—आकाशवाक्य इव अत्रापि हवैशब्ददर्शनेनानुवादरूपत्वावगमेन पुरोवादकल्पहाशक्तेः । आकाशोक्तेरिव भगवत्युक्तेः—श्रुतौ 'यदेष आकाश आनन्दो न स्यात्' 'दहरोऽस्मिन्नन्तराकाशः' इत्यादिषु भगवद्विषये आकाशशब्दप्रयोगवत् 'स प्राणस्य प्राणः' 'प्राणस्य प्राणम्' 'अमृतस्य प्राणम्' इत्यादिषु प्राणशब्दस्यापि भगवत्यपि प्रयोगदर्शनात् । निखिलप्राणनस्य दृष्टेरपि—प्राणशब्दप्रवृत्तिनिमित्तस्य निखिलप्राणिप्राणनहेतुत्वस्य 'को ह्येवान्यात्कः प्राण्यात्' इत्यादिषु प्रतिपादनाच्च । तन्नेति पूर्वेणान्वयः ॥ ७० ॥

इति प्राणाधिकरणम् ॥ ९ ॥

## ज्योतिरधिकरणम् ॥ १० ॥

सूत्रम् । ज्योतिश्चरणाभिधानात् ॥ २५ ॥

नोक्तिं व्याहन्ति लिङ्गं किमपि भवति तु ख्याततत्त्वानुकूलं
शब्दश्चानन्यनिष्ठः श्रुत इति न परो ज्योतिराद्युक्तिवेद्यः ।
विश्वोत्पत्त्युक्त्यभावेऽप्यवगतमिह तल्लिङ्गमित्याक्षिपन्तं
रुन्धेऽथाधिक्रियाभ्यां तदुचितचिदचिद्वर्गवैशिष्टययुक्त्या ॥ ७१ ॥

चिन्ता०—पूर्वोक्ताधिकरणद्वयसाध्यप्रसाधकयुक्तीनामुत्तराधिकरणद्वयविषयवाक्ययोरभावेनोज्जिहानस्य पूर्वपक्षिणो निराकरणं प्रकारान्तरेणात्र क्रियत इति पूर्वोत्तरपेटिकावैषम्यं प्रकाशयति शिष्यानुग्रहेण नोक्तिमिति । यत् सिद्धान्तानुकूलं लिङ्गं तत् पूर्वपक्षविरुद्धं यत् पुनः पूर्वपक्षानुकूललिङ्गं तदेव सिद्धान्ताविरुद्धमिति विरोधाविरोधप्रक्रिया । अत्राकाशादिविशेषशब्देन पूर्वयोरधिकरणयोः *स्वसाध्योपस्थापकसिद्धान्तानुरूपपूर्वपक्षयुक्तिदार्ढ्यात् सिद्धान्तनिर्णयः कृतः । अत्र तावत् पूर्वपक्षवादी मन्यते—यथा पूर्वयोरधिकरणयोः सर्वकारणत्वादिकं लिङ्गं विशेषोक्तिं व्याहन्ति तथोत्तरयोरधिकरणयोः किमपि लिङ्गं विशेषोक्तिं न व्याहन्ति । अपि तु पूर्वपक्षोक्तप्रसिद्धज्योतिरिन्द्रयोरनुकूलं कौक्षेयज्योतिरैक्यादिकं लिङ्गमप्यस्तीति दर्शयति–भवतीति । तदेव सिद्धान्तभूतपरब्रह्मत्वप्रतिकूलम् । नकेवलं लिङ्गेनैव वदामः, किंतु प्रधानभूतया श्रुत्यापीति दर्शयति—शब्द इति । अनन्यनिष्ठः—विशेषशब्द इत्यर्थः । एवं चतुर्भिर्हेतुभिः परमात्मा न ज्योतिराद्युक्तिवेद्य इति पूर्वपक्षिणो विशेषाभिप्रायसंग्रहः । एवं तर्हि ज्योतिरादिषु साक्षात्कारणत्वकथनाभावे कथं ज्योतिरादिकारणत्वशङ्कावकाश इत्याशङ्क्य साक्षात्कारणत्वकथनाभावेऽपि कारणत्वाक्षेपकयत्किञ्चिदाभासनिरतिशयदीप्त्यादिलिङ्गेन ज्योतिरादिकारणत्वं शङ्कितुमपि कथंचिच्छक्यमित्याह–विश्वेति । एवमाक्षिपन्तमनन्तराधिकरणाभ्यां निराकरोति—रुन्ध इति । तदुचितेति–भगवत इद्द्युत्यनुरूपचेतनाचेतनवैशिष्ट्यप्रदर्शनेन निरुन्ध इति शब्दार्थः ॥ ७१ ॥

पद०—नोक्तिमित्यादि । किमपि लिङ्गं उक्तिं न व्याहन्ति—यथा पूर्वयोरधिकरणयोः सर्वकारणत्वादिकं लिङ्गं विशेषोक्तिं विरुणद्धि तथोत्तरयोरधिकरणयोः किमपि लिङ्गं विशेषोक्तिं न विरुणद्धि ।

* पूर्वपक्षे स्वसाध्योपस्थापकसिद्धान्ता (न) नुरूपयुक्तिदार्ढ्यात् इति क्वचित्पाठः ।

विशेषशब्दविरोधि जगत्कारणत्वादिलिङ्गं नास्तीत्यर्थः । ख्याततत्त्वानुकूलं लिङ्गं तु भवति—पूर्वपक्षोक्तप्रसिद्धज्योतिरिन्द्रयोरनुकूलं कौक्षेयज्योतिरैक्यादिकं लिङ्गमप्यस्ति । अनन्यनिष्ठः शब्दश्च श्रुतः—ज्योतिः, इन्द्रः, इति विशेषशब्दश्च श्रुत इत्यर्थः । इति—अस्माद्धेतोः । परो ज्योतिराद्युक्तिवेद्यो न—परमात्मा ज्योतिरिन्द्रशब्दवाच्यो न भवति । इह—ज्योतिरिन्द्रवाक्ये । विश्वोत्पत्त्युक्त्यभावेऽपि—जगत्कारणत्वप्रतिपादनाभावेऽपि । तल्लिङ्गमवगतम्—तादृशजगत्कारणत्वव्याप्तमवभासाद्यात्मकं लिङ्गमवगतम् । इति—एवम् । आक्षिपन्तम्—आशङ्कमानं पूर्वपक्षिणम् । अथाधिक्रियाभ्याम्—अनन्तराधिकरणाभ्याम् । तदुचितचिदचिद्वर्गवैशिष्ट्ययुक्त्या—चिदचिदित्यत्र न क्रमो विवक्षितः । 'द्युतेरिसिन्नादेश्च जः' इत्युणादिसूत्रेण 'द्युत दीप्तौ' इतिधातोरिसिन्प्रत्यये दकारस्य जकारे गुणेच ज्योतिश्शब्दनिष्पत्तिः । 'इदि परमैश्वर्ये' इत्यस्माद्धातोः 'ऋज्रेन्द्राग्रवज्रविप्रकुत्रचुञ्चक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लगौरवत्रेरामालाः' इत्यौणादिकसूत्रेण रन्प्रत्ययान्ततया निपातनात् सिद्ध इन्द्रशब्दः । अत्र तच्छब्देन पूर्वार्धोपात्तज्योतिराद्युक्तिवेद्यो गृह्यते । ज्योतिश्शब्दप्रकृतिभूतद्युतधात्वर्थस्य दीप्तिरूपस्य इन्द्रशब्दप्रकृतिभूतेदिधात्वर्थस्य परमैश्वर्यरूपस्यच उचितोऽनुगुणः, अर्थानुगुण्येनाचिचिद्वर्ग इति योज्यम् , यः अचिद्वह्निरूपः, यश्चिदिन्द्ररूपश्च तयोर्वर्गः समूहः, ज्योतिषां स्वतोबहुत्वेन कल्पभेदसिद्धेन्द्रव्यक्तिबहुत्वेन च वर्गसिद्धिः, तस्य वैशिष्ट्यम्—शरीरशरीरिभावेन तदाश्रितत्वम् , तस्य युक्त्या—युक्तियोगः सङ्गतिस्तया तत्प्रदर्शनेन । रुन्धे—निरुणद्धीत्यर्थः ॥ ७१ ॥

कौक्षेयज्योतिषैक्यं कथितमिह परज्योतिषस्तस्य विश्वो-
पादानत्वं च विद्यान्तरविदितमतः कारणं वह्निरस्तु ।
मैवं पुंसूक्तवाक्योदितपरपुरुषप्रत्यभिज्ञप्त्यबाधात्
गायत्र्युक्तिस्तु साम्यादपि च निगदितास्तस्य भूतादिपादाः ॥७२॥

चिन्ता०—अत्राकाशादिषु त्रिष्वधिकरणेषु 'आकाशाद्वायुः' इत्यादिश्रुत्युक्तक्रमेण पूर्वपक्षोत्थानं समाधानं चेति संगतिः । प्रसिद्धज्योतिःपरमात्मनोस्तत्रतत्र ज्योतिश्शब्दप्रयोगसाधारण्यं संशयकारणम् । तदर्थविचारस्तु—'अथ यदतःपरोदिवः' इत्यादिवाक्ये ज्योतिश्शब्दः प्रसिद्धज्योतिर्वाचकः, उत परमात्मवाचकः । तदर्थं विचार्यते—स्ववाक्ये परमात्मासाधारणलिङ्गाभावेऽप्युपक्रमस्थं परमात्मासाधारणं लिङ्गं ज्योतिश्शब्दस्य परमात्मवाचकत्वं न प्रतिपादयति, उत प्रतिपादयतीति । तदर्थमपि विचार्यते—उपक्रमे-ऽपि परमात्मासाधारणं लिङ्गं नास्ति उतास्तीति । ततश्च विचार्यते—'गायत्री वा इदं सर्वम्' इत्युपक्रमस्थगाय-

त्रीशब्दःपरमात्मपरत्वं बाधते न वेति । पुनश्च विचार्यते—एतद्वाक्यस्थो भूतादिपादव्यपदेशो गायत्त्रीमात्रपरत्वं न व्यावर्तयति, उत व्यावर्तयतीति । फलफलिभावः स्वयमेवोन्नेयः । अत्र पूर्वपक्षी मन्यते—आकाशप्राणाधिकरणयोरिव ज्योतिरधिकरणविषयवाक्ये ज्योतिश्शब्दस्य परमपुरुषवाचकत्वस्थापकं सर्वकारणत्वादिकं प्रसिद्धज्योतिर्विरुद्धलिङ्गं नोपलभ्यते । उपलभ्यते चानुकूललिङ्गं कौक्षेयज्योतिषैक्यम् । तदिदमाह—कौक्षेयेति । तथा च तदेव जगत्कारणम् । न केवलमनया विद्यया प्रतीयते अपितु वैश्वानरविद्यायामपि तदेव जगत्कारणत्वेन प्रतीतमित्याह—तयेति । फलितमाह—अत इति । निराकरोति—मैवमिति । हेतुमाह—पुंसूक्तेति । उपक्रमे हि 'पादोऽस्य सर्वा भूतानि' इति वाक्येन पुरुषसूक्तस्थं 'पादोऽस्य विश्वा भूतानि' इत्यादिवाक्यं प्रत्यभिज्ञाप्यते । पुरुषसूक्ते हि नारायणपरत्वं सुप्रसिद्धमेव । तच्च कारणत्वं नारायणे 'ह्रीश्च ते लक्ष्मीश्च पत्न्यौ' इति लक्ष्मीपतित्वलिङ्गसामर्थ्यात्, 'भगवानितिशब्दः' इति पराशरवाक्याच्च । तर्हि वाक्यशेषस्थकौक्षेयज्योतिरैक्यस्य का गतिरिति चेत् तस्य न्यायविरोधेन बाध एव गतिः । उपक्रमोपसंहारयोरुपक्रमो बलीयानिति हि न्यायविदः । अत्राश्वप्रतिग्रहेष्टिन्याय एवोदाहरणम् । ननु सर्वोपक्रमे 'गायत्त्री वा इदं सर्वम्' इति गायत्त्रीपरत्वदर्शनादुपक्रमवाक्यं गायत्त्रीमेव प्रतिपादयति न पुनः परमपुरुषमित्याशङ्क्य तस्याप्यन्यथासिद्धिमाह—गायत्त्रीति । गायत्त्र्युक्तिश्चतुष्पात्त्वसाम्यादेव, न पुनर्गायत्त्रीस्वरूपत्वात् । इत्थमवगमे को हेतुरित्याशङ्क्य नियामकं हेतुमाह—अपि चेति । अस्मिन्खलु वाक्ये गायत्त्रीशब्दवाच्यस्य परस्य ब्रह्मणः सादृश्येन भूतपृथिवीशरीरहृदयानि निर्दिश्यन्ते । गायत्त्रीशब्दस्य परमात्मपरत्वे नियामकं परमात्मनो विश्वात्मकत्वं न केवलमक्षरसंघातरूपायां गायत्त्र्याम्, अत उपक्रमवाक्यानुसारेणैवोपसंहारस्य वर्णयितुं शक्यत्वात् ज्योतिश्शब्दवाच्यं परमेव ब्रह्मेति निर्णयः । प्रयुज्यते च 'तं देवा ज्योतिषां ज्योतिः' इत्यादिषु परस्मिन्नेव ब्रह्मणि ज्योतिश्शब्दः स्थलान्तरेष्वपि ॥ ७२ ॥

पद०—कौक्षेयेत्यादि । इह—ज्योतिरधिकरणविषयवाक्ये । परज्योतिषः—'अथ यदतः परो दिवोज्योतिर्दीप्यते' इति प्रस्तुतस्य परज्योतिषः । कौक्षेयज्योतिषा—जाठरानलेन सह । ऐक्यम्—अभेदः । कथितम्—प्रत्यपादि । 'इदं वाव तद्यदिदमस्मिन्नन्तःपुरुषे ज्योतिः' इति वाक्येनेति शेषः । तस्य—परज्योतिषः । विश्वोपादानत्वम्—जगदुपादानकारणत्वम् । विद्यान्तरविदितं च—न केवलमस्यां विद्यायामेव प्रतीयते किंतु वैश्वानरविद्याप्रतिपन्नं च । अतः—एवं लिङ्गबलात् श्रुत्या प्रसिद्धेश्च । वह्निः—प्रसिद्धो वह्निरेव । कारणमस्तु—जगत्कारणमित्यङ्गीकार्यम् । मैवम्—एवं मा शङ्किष्ठाः । पुंसूक्तवाक्योदितपरपुरुषप्रत्यभिज्ञप्त्यबाधात्—पुंसूक्तवाक्यं एतद्विद्योपक्रमे श्रुतं

'एतावानस्य महिमा । ततो ज्यायाँश्च पूरुषः । पादोऽस्य सर्वा भूतानि । त्रिपादस्यामृतं दिवि ।' इत्येवंरूपं तेन उदिताया: परपुरुषप्रत्यभिज्ञप्तेः पुरुषसूक्तप्रतिपादितः पुरुषोत्तम एवायमित्येवंरूपाया: अबाधात् बाधासम्भवात् । मैवमित्यन्वयः । गायत्र्युक्तिस्तु—'गायत्री वा इदं सर्वं भूतम्' इत्यस्मिन्नेव ज्योतिश्शब्दवाच्ये गायत्रीशब्दप्रयोगस्तु । साम्यात्—चतुष्पात्त्वपाङ्विध्यरूपगायत्रीसाधर्म्यात् न पुनर्गायत्रीस्वरूपत्वात् । 'इन्द्रः शचीपतिर्बलेन पीडितः । दुश्च्यवनो वृषा समित्सुसासहिः' इतीयमृक् चतुष्पदा प्रतिपादं षडक्षरात्मकतया षड्विधा । चतुर्विंशत्यक्षरात्मकतया गायत्र्यृक्च । अतो गायत्र्या-श्चतुष्पात्त्वं षाड्विध्यञ्च प्रसिद्धम् । तस्य—निरुक्तगायत्रीसादृश्येन गायत्रीशब्दितस्य ब्रह्मणः । भूतादि-पादा अपि च निगदिताः—भूतशब्दितात्मवर्ग एकः पादः, कर्मार्जित भोगस्थानरूपः पृथिवीलोक एकः पादः, भोगोपकरणं शरीरमेकः पादः, आत्मस्थित्यनुगुणप्रदेशविशेषरूपं हृदयमेकः पाद इति भूतपृथिवी-शरीरहृदयरूपाः केवलगायत्र्या असम्भाविताः परमात्मनः सर्वाश्रयत्वेन तस्यैव सम्भाविताश्च चत्वारः पादा आम्नाताः । चकारात् षाड्विध्यं चोक्तमित्यर्थः । तत्र सर्वभूतलक्षणपादस्य ब्रह्मात्मकवाक्कर्तृकगान-कर्मत्वत्राणकर्मत्वलक्षणं विधाद्वयम् । पृथिवीलक्षणस्य पादस्य सर्वभूतप्रतिष्ठात्वसर्वभूतानतिवर्तित्वलक्षणं विधाद्वयम् । शरीरहृदयलक्षणयोः पादयोः प्राणप्रतिष्ठात्वतदनतिवर्तित्वलक्षणं विधाद्वयमेव द्वयोरपि विधाद्वययोर्भेदाभावात् । ततश्च ब्रह्मरूपा गायत्री भूतपृथिवीशरीरहृदयरूपपादचतुष्टयवत्तया चतुष्पदा गानकर्मत्वत्राणकर्मत्वसर्वभूतप्रतिष्ठात्वसर्वभूतानतिवर्तित्वसर्वप्राणप्रतिष्ठात्वसर्वप्राणानतिवर्तित्वलक्षणविधाषट्-कयुक्ततया षड्विधा च । अतश्च चतुष्पात्त्वषाड्विध्याभ्यां ब्रह्मणि गायत्रीसाम्यात् गायत्र्युक्तिरिति भावः । उक्तपादचतुष्टयषड्विधास्वरूपादिकं सर्वं छान्दोग्ये विषयवाक्यदीपिकायां च स्पष्टं द्रष्टव्यम् ॥ ७२ ॥

उत्थानं ज्योतिरादावधिकरणयुगे कारणव्याप्तलिङ्गा-
दित्याभाष्यान्यलिङ्गं स्ववचसि विहितं नेति भाष्यं कथं स्यात् ।
इत्थं विश्वादिलिङ्गं सदिह न तु पराभीष्टलिङ्गं समस्ती-
त्युत्पश्यन् पूर्वपक्षी व्यवहरति तथा व्याहतिस्तन्न शङ्क्या ॥ ७३ ॥

इति ज्योतिरधिकरणम् ॥ १० ॥

चिन्ता०—श्रीमद्भाष्यग्रन्थे मन्दप्रतिबोधनार्थं पूर्वोत्तरवाक्ययोः परस्परं व्याहतिमाशङ्क्य परिहरति—उत्थानमित्यादिना इत्थमित्यन्तेन । एतदधिकरणारम्भे ज्योतिरादावधिकरणयुगे कारणव्याप्तलिङ्गादुत्थानमिति भाष्यकारैरेवाभाष्य पुनरपि पूर्वपक्षोपन्याससमये प्रसिद्धवन्निर्देशेऽप्याकाशप्राणादिवत् स्ववाक्योपात्तपरमात्मलिङ्गविशेषादर्शनादित्युक्तम् , अतः कथमविरोध इति । अत्र निराकरणहेतुमाह—विश्वेति । अयं किल भाष्यकाराभिप्रायः—एवं किल मन्यते पूर्वपक्षी "विश्वतःपृष्ठेषु सर्वतःपृष्ठेष्वनुत्तमेषूत्तमेषु' इत्यादिकं कारणत्वाक्षेपकमवभासात्मकं लिङ्गमस्ति । अथाप्युभयलिङ्गत्वादिगिशिष्टपरमपुरुषप्रतिष्ठापकं जगत्कारणत्वादिकं स्ववाक्ये लिङ्गं नास्तीति । अतो न विरोधइत्याह—व्याहतिरिति । अयमर्थः—सिद्धान्तोपन्यासभाष्ये यद्यपि 'अथ यदतः परोदिवो ज्योतिः' इत्येतस्मिन्वाक्ये परमपुरुषासाधारणं लिङ्गं नोपलभ्यत इत्यङ्गीकारद्योतकयद्यपिशब्दप्रयोगात् स्ववाक्येऽपि परमपुरुषासाधारणं लिङ्गमस्तीति भाष्यकारहृदयम् । अनुत्तमेषूत्तमेषु लोकेषु द्योतत इति विशेषणद्वयोपादानमप्राकृतदिव्यलोकवासिनो ज्योतिष एव संघटते । न पुनरण्डान्तर्वर्तिनो बहिर्वर्तिनो वा ज्योतिर्मात्रस्येति भावः ॥ ७२ ॥

इति ज्योतिरधिकरणम् ॥ १० ॥

पद०—उत्थानमित्यादि । ज्योतिरादावधिकरणयुगे कारणव्याप्तलिङ्गादुत्थानमित्याभाष्य स्ववचसि विहितमन्यलिङ्गं नेति भाष्यं कथं स्यात्—एतदधिकरणारम्भे 'अतः परं जगत्कारणत्वव्याप्तेन येन केनापि निरतिशयोत्कृष्टगुणेन जुष्टं ज्योतिरिन्द्रादिशब्दैरर्थान्तरे प्रसिद्धैरप्यभिधीयमानं परं ब्रह्मैवेत्यभिधीयते' इत्यवतरणभाष्ये ज्योतिरिन्द्रप्राणाधिकरणद्वये कारणत्वव्याप्तलिङ्गादुत्थानमिति भाषित्वा पूर्वपक्षोपन्याससमये 'प्रसिद्धवन्निर्देशेऽप्याकाशप्राणादिवत् स्ववाक्योपात्तपरमात्मव्याप्तलिङ्गविशेषादर्शनात्' इत्याभाषि, अतः परस्परविरुद्धार्थकं भाष्यवाक्यद्वयं कथमुपपन्नं स्यात् । इत्थम्—एवं तस्य निर्वाह इत्यर्थः । इह विश्वादिलिङ्गं सत् पराभीष्टलिङ्गं तु न समस्ति—'विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु' इत्यादिकं कारणत्वाक्षेपकमवभासात्मकं लिङ्गमस्ति, अथाप्युभयलिङ्गत्वादिविशिष्टपरमपुरुषत्वप्रतिष्ठापकं जगत्कारणत्वादिकं स्ववाक्ये लिङ्गं नास्तीत्यर्थः । इत्युत्पश्यन् पूर्वपक्षी तथाव्यवहराति—एवं विचिन्त्य पूर्वपक्षी पूर्वोक्तरीत्या व्यवहरति । तत्—तस्मात् । व्याहतिर्नशङ्क्या—भाष्यवाक्ययोर्द्वयोर्विरोधो न चिन्त्य इत्यर्थः ॥ ७२ ॥

इति ज्योतिरधिकरणम् ॥ १० ॥

## इन्द्रप्राणाधिकरणम् ॥ ११ ॥

सूत्रम् । प्राणस्तथानुगमात् ॥ २९ ॥

विद्या प्रातर्दनी सा वदति हिततमोपास्तिकर्मैन्द्रमेव
ख्यातप्राणेन्द्रचिह्नान्वितमपि तदसौ विश्वकर्तेति चेन्न ।
ब्रह्म त्रेधा ह्युपास्यं बहुविधचिदचित्कञ्चुकं स्वात्मना च
प्राणेन्द्रप्रक्रमोऽपि प्रबलतरमहावाक्यवैघट्यभग्नः ॥ ७४ ॥

चिन्ता०—अत्र संगतिर्भाष्यकारैरेवोक्ता 'निरतिशय' इत्यादिना। आदित्यादिपरज्योतिश्शब्दे निरस्ते परो ज्योतिषामधिपतित्वेन परिकल्पित इन्द्रोऽपि जगत्कारणत्वेनाशङ्क्य निरस्यत इति। अथवा उपक्रमप्राबल्यादुपसंहारोक्तार्थनिरासः पूर्वाधिकरण उक्तः, तर्हि तेनैव न्यायेन प्रतर्दनविद्यायामपि उपक्रमप्राबल्यादुपसंहारवाक्यप्रतिपन्नपरमपुरुषपरिकल्पनं बाध्यतामिति पूर्वपक्षोत्थानेन संगतिः। तदर्थविचारस्तु—प्रतर्दनविद्यायां किं प्रसिद्ध एवेन्द्रः प्रतिपाद्यते उतेन्द्रशरीरकः परमात्मा। एवं प्राणेऽपि वाच्यम्। तदर्थं विचार्यते—पूर्वाधिकरणोक्तोपक्रमाधिकरणन्यायेनात्राप्यर्थोपवर्णनं न्याय्यम्, अथवा नेति। उपक्रमाधिकरणन्यायबाधकमुपक्रममहावाक्यविरोधे महावाक्यमेवानुसरणीयमिति न्यायान्तरं न विद्यते, अथवा विद्यत इति। पुनर्विचार्यते—अस्मिन्वाक्ये सर्वत्र परब्रह्मत्वनिश्चायकं हेतुजातं नानुगम्यते, उतानुगम्यत इति। अत्र पूर्वपक्षी मन्यते—पूर्वमुपक्रमानुसारेणैवोपसंहारवर्णनं न्याय्यमिति भवद्भिरुक्तम्, प्रतर्दनविद्यायामुपक्रमे पूर्वमिन्द्रशब्दः प्रयुज्यते, स तु विशेषश्रुतिः, तेनोपक्रमस्थश्रुत्यानुगुण्यमस्त्येव, किं च 'त्वमेव मे वरं वृणीष्व यं त्वं मनुष्याय हिततमं मन्यसे' इति हिततमोपास्तिकर्मत्वं तथैवोच्यते, तच्च परब्रह्मत्वलिङ्गम्, तेनोपक्रमस्थश्रुतिलिङ्गाभ्यामिन्द्र एव परमपुरुषः, किं च त्वदभिमतनारायणविरुद्धं प्रसिद्धेन्द्रासाधारणं त्वाष्ट्रवधादिकं चोपलभ्यते, तच्च परमपुरुषविरुद्धमेव। फलितमाह—तदिति। तस्मात्। असौ—शक्रादिपदवाच्य इन्द्र एव, जगत्कर्ता। परिहरति—नेति। अयमाशयः—उपक्रमस्थहिततमोपास्तिकर्मत्वं प्रसिद्धेन्द्रस्य न घटते, एवं हिततमोपास्तिरपवर्गार्थोपासनम्, प्रसिद्धेन्द्रस्तु देवगणान्तर्गतः स्वर्गादिपरिमितदेशवासी कश्चित्कीटकल्पः, स कथं हिततमोपास्तिकर्म भवेत्, तेनार्थविरोधात् शब्दार्थासंकोचसिद्ध्यर्थं

चेन्द्रशब्देन परमपुरुष एवाभिधीयते, 'इदि परमैश्वर्ये' इति हि व्युत्पादयन्ति, निपुणनिरूपणे पितामहोऽप्युदुम्बरकीटः, किमुत मेघनादादिजितः प्रसिद्धेन्द्र इति त्वमेव भावय। तर्हि मामुपास्स्वेति स्वोपासनं विदधातीन्द्रः, त्वाष्ट्रवधादिकं चास्मिन्नेव प्रकरणे प्रख्याप्यते परमपुरुषविरुद्धं प्रसिद्धेन्द्रानुकूलं लिङ्गम्, तत्कथमिति चेदत्र समाधिमाह—ब्रह्मेत्यादिना स्वात्मना चेत्यन्तेन। अयमभिप्रायः—त्रेधा ह्युपास्यं ब्रह्म अचिद्विशिष्टोपासनं चिद्विशिष्टोपासनं केवलं परमात्मोपासनमिति। तेन प्रसिद्धेन्द्रादिकमपि ब्रह्मविशेषणत्वेनोपास्यतयाऽभिधीयते। तेन विशेषणभूतप्रसिद्धेन्द्रादिप्रतिपत्त्यर्थं त्वाष्ट्रवधादिकमपि लिङ्गं सार्थकमेव न पुनर्विरुद्धम्। अयमत्र निर्णयः—हिततमोपास्तिकर्मत्वादिभिः परमपुरुषस्यैव प्रतर्दनविद्यायामिन्द्रशब्दप्रधानवाच्यत्वं सिद्धमेव। त्वाष्ट्रवधादिना लिङ्गेन तद्विशेषणत्वेन प्रसिद्धेन्द्रोऽपि परिगृह्यते। एवं प्राकरणिकेन लिङ्गविशेषेण प्रसिद्धप्राणोऽपि स्वीक्रियतां, न तु स्वरूपेण। स्वरूपेण परमात्मोपासनं सुप्रसिद्धमेव। तेनोपासात्रैविध्यसिद्ध्यर्थं प्रसिद्धेन्द्राद्यसाधारणलिङ्गं प्रतर्दनविद्यायामुक्तमिति न विरोधः। अत इन्द्रादिविशिष्टः परमात्मैव प्रतर्दनविद्यायामुपास्य इतीन्द्रादिरूढिशक्त्या विशेषणापरित्यागेन विशेष्यपर्यन्ताभिधानमिति सिद्धम्। कथं तर्हि उपक्रमविरोधे वाक्यार्थनिर्णय इत्याशङ्क्याह—प्राणेन्द्रेति। उभयमिह प्रकाश्यते उपक्रमोपसंहारयो रुपक्रमो बलीयान्, उपक्रममहावाक्ययोर्विरोधे महावाक्यमेव बलीय इति। इदं पुनर्विरोधे सत्येव। अत्र पुनर्विरोध एव नास्तीति भाष्यकारहृदयम्। महावाक्यगतोपक्रमस्यापीन्द्रविशिष्टपरमात्मविषयत्वेनाध्यात्मविद्भिरनुसन्धानादिति ॥ ७४ ॥

पद०—विद्या प्रातर्दनीत्यादि। सा—प्रसिद्धा। प्रातर्दनी—'प्रतर्दनो हवै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम' इत्यादिका प्रतर्दनाख्यक्षत्रियाख्यानप्रतिपादिका। विद्या—कौषीतकिब्राह्मणे वरं वृणीष्वेतीन्द्रेणोक्तेन प्रतर्दनेन 'त्वमेव मे वरं वृणीष्व यं त्वं मनुष्याय हिततमं मन्यसे' इति भवभयाभितप्तजनहिततमोपायं सर्वज्ञस्त्वमेव चिन्तयेति पुनरुक्ते 'सहोवाच मामेव विजानीह्येतदेवाहं मनुष्याय हिततमं मन्ये यन्मां विजानीयात्' इतीन्द्रवचनरूपा श्रुतिः। इन्द्रमेव हिततमोपास्तिकर्म वदति—इन्द्रमेव भवभयाभितप्तजनहिततमोपासनविषयं वदति। किंच ख्यातप्राणेन्द्रचिह्नान्वितमपि—प्राणश्चेन्द्रश्च प्राणेन्द्रौ ख्यातौ जीवशरीरधारणमुख्योपकरणवायुरूपतया त्रयस्त्रिंशद्देवाधिपतितया च प्रसिद्धौ च तौ प्राणेन्द्रौच ख्यातप्राणेन्द्रौ तयोश्चिह्नैस्त्रिशीर्षत्वाष्ट्रहननारुन्मुखयतिशिक्षणादिरूपैरायुस्सत्तानियामकस्वसत्तादिरूपैश्च चिह्नैरन्वितं युक्तमपि। हिततमोपास्तिकर्म वदति—'त्रिशीर्षाणं त्वाष्ट्रमहनमरुन्मुखान् यतीन् सालावृकेभ्यः प्रायच्छं यावद्ध्यस्मिन् शरीरे प्राणो वसति तावदायुः' इत्यादिवाक्यैः 'स होवाच प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्स्व' इति वाक्येन चेत्यर्थः। तत्—तस्मात्।

असौ—प्रसिद्धेन्द्र एव। विश्वकर्ता—जगत्कारणम्। इति चेन्न—इति शङ्क्यते चेत् तन्न सम्भवति। अयमाशयः—उपक्रमस्थं हिततमोपास्तिकर्मत्वं प्रसिद्धेन्द्रस्य न घटते; हिततमोपासनस्यापवर्गार्थत्वात्। तादृशोपासनकर्मत्वं परिमितदेशवासिनि मेघनादादिविजिते कीटकल्पे प्रसिद्धेन्द्रे न सम्भवतीति। तर्हि प्रसिद्धेन्द्रादिलिङ्गं कथमुपपद्येतेत्यत्राह—ब्रह्मेत्यादि। ब्रह्म बहुविधचिदचित्कञ्चुकं स्वात्मनाच त्रेधा उपास्यं हि—परमात्मा चिद्विशिष्टतया, अचिद्विशिष्टतया, स्वरूपेण चेति त्रेधा उपास्यो हि। इदं हृदयम्—चिद्विशिष्टतया, अचिद्विशिष्टतया, स्वरूपेणच ब्रह्मण उपास्यत्वात् प्रसिद्धेन्द्रादिकमप्युपास्यविशेषणतयाऽवगन्तव्यमेवेति। तथोपास्यविशेषणीभूतेन्द्रादिप्रतिपत्त्यर्थत्वात् त्वाष्ट्रवधादिकमपि लिङ्गं सार्थकमेव न विरुद्धमिति। प्राणेन्द्रप्रक्रमोऽपि प्रबलतरमहावाक्यवैघट्यभग्नः—प्रसिद्धप्राणेन्द्रश्रुतिलिङ्गयुक्ततया उपक्रमोऽपि महावाक्यविरोधेन बाधितः। इदमाकूतम्—उपक्रमोपसंहारयोरुपक्रमो बलीयान्, उपक्रममहावाक्ययोर्विरोधे महावाक्यमेव बलीय इति, इदं च पुनर्विरोधे सत्येव। अत्र पुनर्विरोध एव नास्ति; महावाक्यान्तर्गतोपक्रमस्यापीन्द्रविशिष्टपरमात्मविषयत्वेनाध्यात्मविद्भिरनुसन्धानादिति ॥ ७४ ॥

यल्लिङ्गं कारणैकस्थितमिति कथितं ज्योतिषीन्द्रे च तत्तु
प्रख्यातान्यैकनिष्ठं प्रथममितमतस्तन्मुखोत्थित्ययोगः।
अप्राप्ते तद्विमर्शे प्रकृतशिथिलता नेति चेत् सत्यमेतत्
विष्णूत्पत्त्युक्तिरीतिभ्रमत इह पुरोवादमुत्प्रेक्ष्य शङ्का ॥ ७५ ॥

चिन्ता०—अत्राधिकरणारम्भानुपपत्तिमाशङ्क्य समाधत्ते—यदिति। अयमर्थः—ज्योतिषीन्द्रे च यल्लिङ्गं कारणैकस्थितमिति कथितं भवता ज्योतिषि तावत् 'अथ यदतः' इत्याद्युक्तमुत्तमेषु लोकेषु निरतिशयदीप्तियुक्तत्वम्, यच्चेन्द्रे त्वमित्याद्यभिप्रेतं 'मामुपास्स्व' इति साक्षान्मुक्त्यर्थं मुमुक्षूपास्यत्वम्, तदुभयमपि प्रख्यातान्यैकनिष्ठं कारणत्वेन प्रख्यातनारायणैकनिष्ठं प्रथममितम्—आकाशाधिकरण एव प्रमितम्। नन्वाकाशाधिकरणे सर्वकारणत्वमेव परमपुरुषविषयतया प्रमितम्, न पुनरिदं सर्वकारणत्वव्याप्तं लिङ्गद्वयम्, तत्कथमुच्यते। यथा सर्वजगत्कारणत्वं परमपुरुषविषयतया प्रथममितम्, तद्वत्, तेन समव्याप्तं लिङ्गद्वयमपि तथैव प्रमितमेवेत्यर्थः। फलितमाह—अत इति। निरतिशयदीप्तियुक्तत्वलिङ्गस्य मुमुक्षूपास्यत्वस्य च परमपुरुषनिष्ठतया पूर्वमेव प्रमितत्वात् कारणत्वव्याप्तलिङ्गेन पूर्वपक्षोत्थानमिति न घटते।

इत्थं लिङ्गद्वयस्य परमपुरुषस्थितत्वपरामर्शे दूषणमुक्तम् । तदभावेऽपि दूषणमाह—अप्राप्त इति । लिङ्गद्वयस्य सर्वकारणस्थितत्वपरामर्शाभावे लिङ्गद्वयान्वितं यत्किंचिज्ज्योतिरस्तु यः कश्चिदिन्द्रोऽस्तु न चैतावता पूर्वोक्तमेकनिष्ठं कारणत्वं परमकारणत्वं भ्रश्यति किमर्थमधिकरणाम्भ इत्याशङ्क्यार्धाङ्गीकारेण परिहरति सत्यमिति । यद्यप्यधिकरणप्रयोजनं नास्ति, अथापि किंचित्प्रयोजनमस्ति, यद्यपि लिङ्गद्वयं परमपुरुषैकनिष्ठम् , अथापि स एव परमपुरुष उपेन्द्रत्वमास्थाय वर्तते, अतः सोऽप्युपास्य एव, तस्य श्रुतिः पुराणादिरिवोपेन्द्रोत्पत्तिं वावदीतीति कश्चित् बालबुद्धि र्भ्रम्यति, तच्छङ्कानिराकरणार्थमधिकरणारम्भइत्यर्थः । उपेन्द्रस्य परमपुरुषत्वं श्रुतिस्मृतीतिहासपुराणेषु प्रसिद्धम् , तेष्वेवेन्द्रस्य पुरुषोत्तमकिङ्करत्वमपि तत्रैव प्रसिद्धमिति भावः ॥ ७५ ॥

पद०—यल्लिङ्गमित्यादि । ज्योतिषि इन्द्रे च यल्लिङ्गं कारणैकस्थितमितिकथितम्—ज्योतिरधिकरणविषये ज्योतिषि, इन्द्रप्राणाधिकरणविषय इन्द्रे च उत्तमेषु लोकेषु निरतिशयदीप्तियुक्तस्वरूपं हिततमोपासनकर्मत्वरूपञ्च यत् लिंङ्गं ज्ञापकं जगत्कारणभूतवस्त्वेकनिष्ठमिति हेतोः पूर्वपक्षोत्थापकतया प्रतिपादितम् । तत्तु प्रख्यातान्यैकनिष्ठं प्रथमामितम्—तदेव लिङ्गं कारणत्वेन प्रख्यातनारायणैकनिष्ठतया जन्माद्यधिकरणप्रभृत्याकाशाधिकरणपर्यन्तसूत्रैरेव निश्चितम् । जन्माद्यधिकरणविषयवाक्यापेक्षितजगत्कारणभूतपुरुषप्रापकसमानशाख पुरुषसूक्तप्रसिद्धामृतत्वप्राप्त्युपायभूतवेदनविषयत्वस्य 'उदेति हवै सर्वेभ्यः पाप्मभ्यो य एवं वेद' इत्यन्तरधिकरणविषयवाक्यस्फुटीकृतस्याकाशाधिकरणविषयवाक्ये परायणत्वेन तद्व्याप्तेन स्थापनात् तत्रैवासमन्तात् काशनस्य च परमात्मनिष्ठतयाऽऽकाशशब्दप्रवृत्तिनिमित्तलाभाय स्थापनाचेति भावः । अतः—निरुक्तलिङ्गद्वयस्य पूर्वमेव परमात्मैकनिष्ठत्वस्थापनात् । तन्मुखोत्थित्ययोगः—उक्तलिङ्गद्वारा पूर्वपक्षोत्थानं न युज्यते । तद्विमर्शे अप्राप्ते—उक्तलिङ्गस्य परमात्मैकनिष्ठत्वप्रत्यवमर्शाभावे । प्रकृतशिथिलता न—प्रकृतस्य परमपुरुषनिष्ठजगत्कारणत्वस्य भ्रंशो न भवति । इदं हृदयम्—लिङ्गद्वयस्य परमपुरुषैकनिष्ठत्वविमर्शाभावेन पूर्वपक्षोत्थानमिति चेत् तर्हि ज्योतिश्च प्रसिद्धमेव किञ्चिदस्तु, इन्द्रश्च प्रसिद्ध एवास्तु, किं तद्विचारार्थमधिकरणप्रणयनेन फलम्? तदप्रणयने च निरुक्तपरमात्मकारणत्वहान्यभावादिति । इति चेत्—एवमधिकरणवैफल्यं शङ्क्यते चेत् । एतत् सत्यम्—शङ्कितमत्यन्तवैफल्यं न युक्तम् , अधिकप्रयोजनं तु नास्त्येवेत्यङ्गीकृतमित्यर्थः । इह—अधिकरणद्वयविषयवाक्यजाते । पुरोवादमुत्प्रेक्ष्य—'अथ यदतः परोदिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतःपृष्ठेष्वनुत्तमेषूत्तमेषु लोकेष्विदं वाव तद्यदिदमस्मिन्नन्तःपुरुषे ज्योतिः' 'प्रतर्दनो हवै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम युद्धेन च पौरुषेण च तं हेन्द्र उवाच वरं ते ददानीति स होवाच प्रतर्दनस्त्वमेव मे वरं वृणीष्व

यं त्वं मनुष्याय हिततमं मन्यसे' इत्येवंरूपमुपक्रमवाक्यजातं पारिप्लवदृष्ट्या समालोचयतां बालानाम्। विष्णूत्पत्त्युक्तिरीतिभ्रमतः—

'ततस्त्वमपि दुर्धर्षस्तस्माद्भावात्सनातनात्।
रक्षार्थं सर्वभूतानां विष्णुत्वमुपजग्मिवान्॥'

इत्यादिरूपा या विष्णूत्पत्त्युक्तिस्तद्रीति रस्मिन् पुरोवादेऽस्तीति भ्रमेण। शङ्का—'अत्र भवति तन्निरासायेदमधिकरणद्वयप्रणयन' मिति शेषः। अत्रास्मिन्प्रकरणे निखिलजगत्कारणभूतमुमुक्षूपास्यपरमपुरुषावतारभूत उपेन्द्रोऽप्युपास्यतया विधित्सित इति शङ्का भवति, तन्निरासार्थमिदमधिकरणद्वयप्रणयनमित्यन्वयः। तथाहि—'परोदिवः' प्राकृतस्थानविशेषस्योपरिष्टात्। 'विश्वतः पृष्ठेषु' व्यष्टिबहिर्भूतेषु। 'सर्वतः पृष्ठेषु' समष्टिबहिर्भूतेषु। 'अनुत्तमेषु' स्वावधिकोत्तमरहितेषु। 'उत्तमेषु लोकेषु' उत्तमस्थानविशेषेषु। 'यत् ज्योतिर्दीप्यते' तस्य भासा सर्वमिदं विभातीत्यवभासकतया ज्योतिःशब्दितः परमात्मा यः प्रकाशते। 'तत्' ज्योतिः। 'अस्मिन्नन्तः पुरुषे' अस्मिंस्त्रैलोक्येऽन्तर्विद्यमानस्वकिङ्करभूतेन्द्रसमीपे। 'यदिदं ज्योतिः' यदेतदुपेन्द्ररूपं ज्योतिर्वर्तते। 'इदं वाव तत्' इदमेव तदित्यन्वयः। अस्मिन्वाक्ये उदाहृतवचनार्थरीत्याऽर्थः प्रतीयते। एवं 'दैवोदासिः' 'अग्निरवमो देवतानां विष्णुः परमः' इत्युक्तरीत्या सर्वदेवेभ्य उत्कृष्टतया परमपदे विद्यमानः, दैवेभ्यो देवेभ्य उदास्ते उत्कृष्टतयाऽऽस्त इति दैवोदासिरितिव्युत्पत्तिः। 'प्रतर्दनः' परमपुरुषः। 'युद्धेन च पौरुषेण च' युद्धसाधनेन चक्राद्यायुधेन सह स्वासाधारणेन श्रीवत्सादिचिह्नेन च सह। पुरुषस्य विष्णोरिदं पौरुषमितिव्युत्पत्तिः। 'इन्द्रस्य प्रियं धाम' स्वर्गलोकम्। 'उपजगाम' उपेन्द्ररूपेणावततार। 'तम्' उपेन्द्रम्। 'इन्द्र उवाच' ते वरमहं ददानीति। स 'प्रतर्दनः' परमात्मा। स्वस्यावाप्तसमस्तकामत्वात् स्वार्थं वरं निषिध्य तापत्रयातुरजनहितभूतं वरं परिचिन्तयेत्युवाचेत्यर्थः प्रतीयते। अत एवमापातजनितोपेन्द्रपरत्वभ्रमेण तदुपासनमप्यत्र विधित्सितमिति भ्रमसम्भवात् तन्निराकरणमधिकरणद्वयप्रणयनप्रयोजनम्। तन्निराकरणप्रकारोऽयम्—पूर्ववाक्ये 'अस्मिन्नन्तःपुरुषे' इत्यस्य त्रैलोक्यान्तर्वर्तीन्द्रपरत्वं न सम्भवति; त्रैलोक्यस्येदंशब्देन निर्देशानर्हत्वात्। सन्निकृष्टं हीदंशब्दनिर्देशार्हम्। पुरुषशब्दश्चेन्द्रपरो न भवितुमर्हति; तथा प्रयोगादर्शनात्। नच 'राजपुरुषः' इत्यादाविव पुरुषशब्दो भृत्यपरः सन् पुरुषोत्तमकिङ्करमिन्द्रमभिदधातीति वाच्यम्; इन्द्रवाचकविशेष्यपदादर्शनेन 'तत्पुरुषाय विद्महे' इत्यादौ पुरुषोत्तमभृत्यत्वेन पुरुषशब्दात् महादेवादीनामेव श्रुतत्वेन, इन्द्रस्य तथाऽश्रुतत्वेन, च तथाकल्पनानौचित्यात्। द्वितीयवाक्येऽपि दिवोदासापत्यभूतः स्वपितृजेतृवीतहव्यविजेतृतया बलपौरुषातिशययुक्त इत्यानुशासनिकादि

प्रसिद्धः क्षत्रियः प्रतर्दन एव प्रतीयते । 'उपजगाम' इत्यस्य चोपेन्द्रतयावततारेत्यर्थपरिकल्पनं चास्य-न्तौपचारिकम् । उभयत्राप्युपरितनवाक्यार्थानन्वयादिदोषाश्चेति । अतो यथोक्तरीत्या प्रसिद्धज्योतिरिन्द्र-शरीरकः परमात्मैव प्रकरणद्वयविवक्षित इति ॥ ७५ ॥

ज्योतिःप्राणेन्द्रशब्दाः परतरविषयाः कारणव्याप्तधर्मात्
इत्येतत् साध्वमीषां बहुविहतिमती ख्यातमात्रे तु वृत्तिः ।
तत् कौक्षेयानलात्मा कथित इह तथाध्यानतस्तत्फलाप्त्यै
मुख्यप्राणादिलिङ्गं तदपि हितपरोपासनान्मोक्षणाय ॥ ७६ ॥

चिन्ता०—एवमुक्तयोरधिकरणयोर्विरोधाभासं शमयित्वा पूर्वपक्षिणा परिगृहीतेऽर्थे संमतासंमत-विभागं दर्शयन् विरोधिलिङ्गत्वेन कथितस्य कौक्षेयज्योतिषैक्यस्य मुख्यप्राणादिलिङ्गस्य चोपासनार्थत्वेन प्रयोजनमपि दर्शयति—ज्योतिरिति । ज्योतिरादिशब्दानां विशेषणविशिष्टपरमवस्तुवाचित्वं संमतम् । विशेष-णमात्रवाचित्वमसंमतम् । कौक्षेयज्योतिषैक्यमुपासनार्थम् । तथा मुख्यप्राणलिङ्गमप्युपास्यविशेषणप्रकाश-नार्थमिति श्लोकार्थसंक्षेपः । स्पष्टमेवावशिष्टम् ॥ ७६ ॥

पद०—ज्योतिःप्राणेत्यादि । ज्योतिःप्राणेन्द्रशब्दाः—'अथ यदतः परोदिवो ज्योतिः' इति पूर्वाधिकरणविषयवाक्ये 'प्रतर्दनो हवै' इत्यारभ्य 'इन्द्रस्य प्रियं धाम, मामेव विजानीहि प्राणोऽस्मि प्रज्ञात्मा' इत्यादिरूपे इन्द्रप्राणाधिकरणविषयवाक्ये च श्रुता ज्योतिश्शब्दप्राणशब्देन्द्रशब्दाः । कारण-व्याप्तधर्मात्—जगत्कारणत्वव्याप्तदीप्तिविशेषहिततमोपासनकर्मत्वरूपधर्मसम्बन्धात् । परतरविषयाः—प्रसिद्धज्योतिःप्राणेन्द्ररूपविशेषणविशिष्टपरमात्मविषयाः । इत्येतत् साधु—एवं निर्वहणं युक्तम् । विशेषणविशेष्यरूपयावच्छक्यार्थाप्रहाणेन प्रवृत्तेरिति भावः । अमीषाम्—पूर्वोक्तज्योतिःप्राणेन्द्रशब्दा-नाम् । ख्यातमात्रे वृत्तिस्तु—प्रसिद्धज्योतिः प्राणेन्द्रमात्रपरत्वं तु । बहुविहतिमती—बहुविरोधयुक्ता । वाच्यैकदेशे भञ्जनात् निरुक्तपरमात्मलिङ्गानन्वयाच्चेतिभावः । तत्—तस्मात् । इह—ज्योतिरधिकरण-विषयवाक्ये 'इदं वाव तद्यदिदमस्मिन्नन्तःपुरुषे' इत्यत्र । तथाध्यानतः—कौक्षेयानलशरीरकतया ध्यानेन । तत्फलाप्त्यै—'चक्षुष्यः श्रुतो भवति य एवं वेद' इति तद्विद्यावसानवाक्यावगता-भिरूप्यकीर्तिमत्त्वरूपफललाभाय । कौक्षेयानलात्मा कथितः—शरीरशरीरिभावेन कौक्षेयानलाभिन्नतया

श्रुत्या प्रतिपादितः। परमात्मेति शेषः। मुख्यप्राणादिलिङ्गम्—इन्द्रप्राणाधिकरणविषयवाक्ये 'यावद्ध्यस्मिन्शरीरे प्राणो वसति तावदायुः' इत्यादिना 'त्रिशीर्षाणं त्वाष्ट्रमहनम्' इत्यादिना च प्रतिपन्नमायुस्सत्ताहेतुस्वसत्ताकत्वरूपं मुख्यप्राणलिङ्गं त्वाष्ट्रहननादिरूपमिन्द्रलिङ्गञ्च। तदुपाहितपरोपासनात्—मुख्यप्राणेन्द्रविशिष्टपरमात्मोपासनेन। मोक्षणाय—मोक्षाख्यपुरुषार्थलाभायैव नतु फलान्तरार्थम्; अनाम्नानादिति भावः॥ ७६॥

कार्यं यत् कर्मवश्यं यदपि दृढमितं तन्निरूढैस्तु शब्दै-
र्निर्दिष्टे ब्रह्मणि स्यात् क्वचिदगतिहता रूढिरैन्द्रीनयेन।
तल्लिङ्गानन्यथासिद्ध्यधिगमनबलात् तद्विशिष्टे विवक्षा
स्यादीशे ज्योतिरिन्द्राद्यभिलपनपरेऽहन्त्वमादीरिते च॥ ७७॥

इति इन्द्रप्राणाधिकरणम्॥ ११॥

चिन्ता०—अथ शिष्यानुग्रहार्थं आकाशज्योतिराद्यधिकरणोक्तार्थवैशद्यायेतरवाचिशब्दानां ब्रह्मणि प्रयोगे विषयभेदेन नियमं दर्शयति—कार्यमिति। यत् कार्यमिति दृढमितमधिगतमाकाशादिकं यदपि कर्मवश्यमिति दृढमितं प्रजापत्यादिकं तयो र्निरूढैः प्रसिद्धैः शब्दैः ब्रह्मणि निर्दिष्टे सति क्वचित् आत्मावस्थितेष्वाकाशादिशब्देषु गत्यन्तराभावाद्रूढिर्बाध्या। अगतिहता—रूढित्वेन निर्वाहासंभवस्त्विह अगतिः तया निवार्यते रूढिः। तेन योग एवाश्रीयत इत्यर्थः। क्वचिदन्यत्र प्रकारान्तरेण निर्वाहमाह—तदिति। ज्योतिषि लिङ्गं कौक्षेयज्योतिरैक्यम्, इन्द्रे त्वाष्ट्रवधादिकं तदुभयमनन्यथासिद्धं व्याप्तमित्यर्थः। तच्चल्लिङ्गानन्यथासिद्धेर्ज्ञानबलात् तद्विशेषणविशिष्टविषयत्वं स्यात्। अत्रोदाहरणचतुष्टयमाह—ज्योतिरिति। ज्योतिर्विशिष्टे ब्रह्मणि ज्योतिश्शब्दः। इन्द्रविशिष्टे पुनरिन्द्रशब्दः। एवमहं ब्रह्मास्मीत्यत्राहंशब्दः स्वात्मविशिष्टं परमात्मानमाह। तत्त्वमसीत्यत्र त्वंशब्दः पुनरभिमुखचेतनविशिष्टं परमात्मानमेवाचष्टे। अत्र ऐन्द्रीनयेनेत्येतदवशिष्यते, तदप्याचक्ष्महे 'ऐन्द्र्या गार्हपत्यम्' इत्यत्रेन्द्रशब्दस्य गार्हपत्ये रूढिशक्त्यभावात् गौणीवृत्तिर्व्युत्पत्तिर्वा समाश्रयणीया। उभयमप्याहुः

'इन्द्रत्वमग्नौ गौणं स्यात् यज्ञसम्बन्धकारितम्।
इन्द्रत्यर्थानुसाराद्वा स्वकार्ये सोऽपि हीश्वरः॥' इति।

तेनाकाशप्राणशब्दयोरस्माभिः परस्मिन् ब्रह्मणि व्युत्पत्तिरेवाश्रीयत इति सुसंगतमेतत् । अयमर्थः—

व्युत्पत्त्या परमात्मानं तत्तदुक्तिः प्रकाशयेत् ।
तल्लिङ्गानन्यथासिद्धौ तद्विशिष्टावलम्बिनी ॥ इति ॥ ७७ ॥

इति इन्द्रप्राणाधिकरणम् ॥ ११ ॥

पद०—कार्यमित्यादि । यत् कार्यं दृढमितम्—यद्वस्तु कार्यत्वेन दृढप्रमितिसिद्धमाकाशादिकम् । यदपि कर्मवश्यं दृढमितम्—यच्चेतनवस्तु कर्मवश्यजीवत्वेन दृढप्रमाणसिद्धम् । तन्निरूढैः शब्दैः—तादृशेऽचेतने चेतने वा प्रसिद्धैराकाशप्रजापत्यादिशब्दैः । ब्रह्मणि निर्दिष्टे—परमात्मनि निर्दिष्टे सति । क्वचित्—तादृशे क्वापि स्थले । रूढिः—अचेतने चेतने वा रूढिशक्तिः । ऐन्द्रीनयेन—'ऐन्द्र्या गार्हपत्यमुपतिष्ठते' इत्यत्रेन्द्रशब्दस्य गार्हपत्ये रूढिशक्त्यभावात् गौणीवृत्तिर्व्युत्पत्तिर्वा समाश्रयणीया । उभयमपि तान्त्रिकैरुक्तम्,

'इन्द्रत्वमग्नौ गौणं स्याद्यज्ञसम्बन्धकारितम् ।
इन्दत्यर्थानुसाराद्वा स्वकार्ये सोऽपि हीश्वरः ॥'

इति, तन्न्यायेन । अगतिहता स्यात्—अगत्या रूढिनिर्वाहासम्भवरूपया बाधिता भवेत् । रूढिनिरासेन योग एवाश्रीयेतेत्यर्थः । तेनाकाशप्राणशब्दयोरस्माभिः परस्मिन्ब्रह्मणि योगव्युत्पत्तिरेवाश्रितेतिभावः । ईशे—परमात्मनि । ज्योतिरिन्द्राद्यभिलपनपरे—ज्योतिरिन्द्रशिवहिरण्यगर्भसूर्यादिशब्दवाच्ये सति । अहन्त्वमादीरिते च—'अहं ब्रह्मास्मि' 'तत्त्वमसि' इत्यादावहंत्वमित्यादिशब्दैर्निर्दिष्टे च सति । तल्लिङ्गानन्यथासिद्ध्यधिगमनबलात्—चेतनाचेतनलिङ्गानामनन्यथासिद्धत्वज्ञानबलेन । तद्विशिष्टे विवक्षा स्यात्—तादृशचेतनाचेतनविशिष्टे परमात्मनि शब्दप्रवृत्तिर्वक्तव्येत्यर्थः । तथा च ज्योतिःशब्दस्य ज्योतिर्विशिष्टे परमात्मनि, इन्द्रशब्दस्येन्द्रविशिष्टे परमात्मनिच शक्तिर्निरूढा । एवमहं ब्रह्मास्मीत्यत्राहंशब्दस्य स्वात्मविशिष्टपरमात्मपरत्वं तत्त्वमसीत्यत्र त्वंशब्दस्याभिमुखचेतनविशिष्टपरमात्मपरत्वं च सिद्धम् । तद्वदेव शिवहिरण्यगर्भसूर्यादिशब्दनिर्देशेऽपि प्रबलतमपरमात्मलिङ्गवशेन प्रकरणस्य परमात्मपरत्वे निश्चिते जीवलिङ्गानां चानन्यथासिद्धौ तत्तज्जीवविशिष्टपरमात्मोपासनसिद्ध्यर्थं तत्तज्जीवविशिष्टपरमात्मपरत्वं शिवहिरण्यगर्भसूर्यादिशब्दानां सुसङ्गतमिति भावः ॥ ७७ ॥

इति इन्द्रप्राणाधिकरणम् ॥ ११ ॥

स्वेच्छातस्सर्वहेतुश्शुभगुणविभवानन्तनिस्सीमहर्षः
शुद्धाकर्मोत्थदिव्याकृतिरनुपधिकाकाशनादिस्वभावः ।
सप्राणाप्राणभेदव्यतिभिदुरजगत्प्राणनो दिव्यदीप्तिः
प्राणेन्द्राद्यन्तरात्मा प्रभुरधिकरणैस्सप्तभिः प्रत्यपादि ॥ ७८ ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु अधिकरणसारावल्यां

प्रथमस्याध्यायस्य प्रथमः पादः

चिन्ता०—पूर्वं तद्गुणानुद्गृणातीत्यागामिनामधिकरणानां प्रत्येकमेकैकभगवद्गुणप्रकाशने तात्पर्यमिति प्रतिपादितम् । अधुना पुनरतीतानां सप्तानामधिकरणानां सप्तसु भगवद्गुणेषु तात्पर्यमनुक्रमादाचष्टे—स्वेच्छात इत्यादिना । शुभेति—शुभगुणविभवरूपानन्तनिस्सीमहर्ष इत्यर्थः । अनुपधिकेति—देशकालवस्तुपरिच्छेदराहित्येनेत्यर्थः । सप्राणेति—सप्राणानामप्राणानां प्राणनहेतुरित्यर्थः । तत्र प्रभुरितिकथनं सर्वाधिकरणोक्तवैभवप्रकाशनार्थम् ॥ ७८ ॥

इति निखिलतार्किकचूडामणिना सर्वतन्त्रस्वतन्त्रेण
श्रीमद्वरदार्यापरनाम्ना कुमारवेदान्ताचार्येण
विरचिते शारीरकाधिकरणचिन्तामणौ

प्रथमस्याध्यायस्य प्रथमः पादः

पद०—स्वेच्छातः इत्यादि । स्वेच्छातः सर्वहेतुः—जिज्ञासाधिकरणजन्माद्यधिकरणशास्त्रयोनित्वाधिकरणसमन्वयाधिकरणानां शास्त्रारम्भसमर्थनार्थत्वेनोपोद्घातरूपत्वात्, ईक्षत्यधिकरणमारभ्यैव शास्त्रत्वात् तदधिकरणलब्धः परमात्मगुणः स्वेच्छातः सर्वहेतुत्वम् । 'तदैक्षत बहुस्यां प्रजायेयेति । तत्तेजोऽसृजत' इति तदधिकरण विषयवाक्येन परमात्मनः स्वेच्छापूर्वकसर्ववस्तुसृष्टिप्रतिपादनात् भगवतः स्वेच्छामात्राधीनसर्वस्रष्टृत्वरूपो गुण ईक्षत्यधिकरणलब्ध इत्यर्थः । शुभगुणविभवानन्तनिस्सीमहर्षः—'शुभगुणविभवरूपानन्तनिस्सीमहर्ष इत्यर्थः' इति चिन्तामणिः । अयमानन्दमयाधिकरणार्थः । शुद्धाकर्मोत्थदिव्याकृतिः—सत्त्वैकरूपतया रजस्तमस्सम्बन्धाभावेन शुद्धा, स्वेच्छैकमूलकतया अकर्मोत्था, अत्यद्भुतसंस्थानविशिष्टतया

दिव्या आकृति र्विग्रहो यस्य स शुद्धाकर्मोत्थदिव्याकृतिः। अयं 'अन्तस्तद्धर्मोपदेशात्' इत्यधिकरणार्थः। तद्विषयवाक्ये 'अथ यएषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते' इत्यारभ्य 'एवमक्षिणी' इत्यादिना भगवद्दिव्यविग्रहप्रतिपादनात्। अनुपधिकाकाशनादिस्वभावः—अनुपधिकः कर्माद्युपाधिरहितः, यद्वा सङ्कोचरहितः 'तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति' इति प्रकाश्यप्रकाशक विभागं विना सर्ववस्त्ववभासकत्वात्। अत्राकाशशब्दे आकाशत इति, आकाशयतीति च व्युत्पत्तिद्वयाश्रयणेन स्वयम्प्रकाशाश्रयत्वं सर्ववस्तुप्रकाशकत्वं चाकाशनशब्दार्थः। आदिशब्देन 'अस्य लोकस्य का गतिरित्याकाश इतिहोवाच' इत्युक्त्या पृथिवीलोकगतिभूतत्वं 'आकाशो ज्यायान्' इत्याद्युक्तिसिद्धं सर्वज्यायस्त्वं परायणत्वं च विवक्षितम्। अनुपधिकाकाशनादिरूपः स्वभावो यस्य स इति विग्रहः। अयं 'आकाशस्तल्लिङ्गात्' इत्यधिकरणार्थः। सप्राणाप्राणभेदव्यतिभिदुरजगत्प्राणनः—सप्राणाः देवतिर्यङ्मनुष्यादिरूपाः, अप्राणाः केवलदारुशिलादयः, तद्रूपा ये भेदा विशेषास्तैर्व्यतिभिदुरस्य नानाकारस्य जगतः प्राणनः सत्ताहेतुः। अयं 'अत एव प्राणः' इत्यधिकरणार्थः। दिव्यदीप्तिः—दिव्या अप्राकृता सर्वलोकव्यापिनी दीप्तिः प्रकाशो विग्रहगुणो यस्य स दिव्यदीप्तिः। अयं 'ज्योतिश्चरणाभिधानात्' इत्यधिकरणार्थः। प्राणेन्द्राद्यन्तरात्मा—इन्द्रप्राणाधिकरणविषयवाक्यघटकप्राणेन्द्रशब्दार्थयोः प्रसिद्धप्राणेन्द्रयोः, एवमचेतनविशेषजीवविशेषलिङ्गविशिष्टश्रुतिवाक्यघटकतत्तदचिद्विशेषरूढशिवहिरण्यगर्भसूर्यादिजीवविशेषरूढशब्दार्थानां तत्तदचिद्विशेषचिद्विशेषाणां चान्तरात्मा। अयमिन्द्रप्राणाधिकरणार्थः। प्रभुः—एवं सर्वाधिकरणोक्तवैभवविशिष्टः परमात्मा। सप्तभिरधिकरणैः—ईक्षत्यादिभिः सप्तभिरधिकरणैः। प्रत्यपादि—प्रतिपादितः। सर्वेषामप्यधिकरणानां तत्तद्भगवद्गुणप्रतिपादनं प्रधानकृत्यम्, विचारोपयुक्तार्थप्रतिपादनप्रकारस्तु यथासम्भवमधिगन्तव्या इति भावः॥ ७८॥

इति श्रीमद्रङ्गनाथशठमथनयतिराजकटाक्षलब्धोभयवेदान्तहृदयस्य भारद्वाजस्य श्रीनिवासराघवदासस्य (श्रीमदहोबिलमठमहास्थाननिर्वहणधुरन्धर श्रीमद्वेदमार्गप्रतिष्ठापनाचार्य परमहंसपरिव्राजकाचार्य सर्वतन्त्रस्वतन्त्रोभयवेदान्ताचार्य श्रीभगवद्रामानुजसिद्धान्तनिर्धारणसार्वभौम श्रीलक्ष्मीनृसिंहदिव्यपादुकासेवकश्रीवण्शठकोपश्रीशठकोपरामानुजमहादेशिकस्य) कृतौ अधिकरणसारावलीव्याख्यायां पदयोजनाख्यायां

प्रथमस्याध्यायस्य प्रथमः पादः॥

सर्वत्रप्रसिद्धाधिकरणम् ॥ १२ ॥

सूत्रम् ॥ सर्वत्रप्रसिद्धोपदेशात् ॥ ३३ ॥

अत्रायोगान्ययोगव्यपनयननयै र्ब्रह्म पादत्रिपादी-
व्यूहारूढैर्मृदूपक्रमकठिनपरैः प्राय आद्ये प्रसाध्यम् ।
कृत्स्नाक्षेपोपशान्त्यै प्रथम इह ततः पाद उक्तस्त्रिपादी
काचित्काक्षेपपूर्वाखिलकलहसमुन्मूलनाय प्रणीता ॥ ७९ ॥

चिन्ता०—इह खलु भगवता भाष्यकारेण 'अथातो ब्रह्मजिज्ञासा' इत्यारभ्य पूर्वोक्तानामेकादशानामधिकरणानां परस्परमर्थविभागः संगतिविशेषोऽपि व्यक्तमभ्यधायि । 'तत्रास्पष्ट' इत्याद्युपक्रमेण चतुर्णामपि पादानां संगतिरपि प्रत्यपादि । तद्भाष्य एव विस्तरेण द्रष्टव्यम् । इदानीं भाष्यकाराभिप्रायस्थं संगतिद्वयमप्याचष्टे । द्वौ खल्वत्र प्रथमाध्याये विवक्षितौ परमपुरुषायोगव्यवच्छेदः प्रथमपादे तदन्ययोगव्यवच्छेदस्त्रिपाद्यामिति । अत्रायोगव्यवच्छेदप्रधानः प्रथमपादः अन्ययोगव्यवच्छेदप्रधाना त्रिपादीति विभागविशेषः । तेनोभयत्राप्युभयमस्तीति न सङ्करदोपशङ्कावकाशः । तदिदमाह—अत्रायोगेति । अयमर्थः—अयोगान्ययोगव्यपनयननयैर्व्यपनयनप्रधानैः प्रथमपादत्रिपादीविभागारूढैरधिकरणैर्मृदूपक्रमकठिनपरैराद्येऽध्याये ब्रह्म प्रतिपाद्यम्, अत्र प्राय इति वचनं भूयस्त्वप्रकाशनेन सङ्करदोपनिराकरणार्थम्, ब्रह्मायोगव्यवच्छेदभूयस्त्वं प्रथमपादे, तदन्ययोगव्यवच्छेदभूयस्त्वं त्रिपाद्यामिति । तथायमपि विभागः पर इत्याह—कृत्स्नेति । कृत्स्नवेदान्ताक्षेपपरिहारः प्रथमपादे । उपक्रमदशायामेकदेशवाक्याक्षेपपूर्वककृत्स्नवेदान्ताक्षेपकलहसमुन्मूलनाय प्रवृत्ता त्रिपादीति । अयमर्थः—वेदान्ताः परं ब्रह्म प्रतिपादयन्तु नाम, इदं तु वाक्यमन्यदेव किञ्चित् प्रतिपादयतीति कलहपूर्वकं क्रमेण कृत्स्नमपि वाक्यं न प्रतिपादयतीति वदन्तं प्रतिक्षिपतीति पादत्रिपादीविभागः । अत्र शब्दार्थः सुव्यक्तः ॥ ७९ ॥

पद०—अत्रायोगेत्यादि । अत्र आद्ये—अस्मिन्नाद्येऽध्याये । मृदूपक्रमकठिनपरैः—मृदुरुपक्रम आरम्भः, कठिनः पर उपसंहारश्च येषां तैः । उपक्रमस्य मृदुत्वं नाम—सिद्धान्त्यङ्गीकृत एव वस्तुविशेषे धर्मविशेषाशङ्कनरूपतया, यथा आकाशाधिकरणे सिद्धान्त्यङ्गीकृत एवाचिद्विशेषे जगत्कारणत्वशङ्क-

नम् । उपसंहारस्य कठिनत्वं नाम—सर्वशून्यत्वादिमहासाहसमार्गपतनहेतुत्वम्—यथा तस्मिन्नेवाधिकरणे आकाशस्य जगत्कारणत्वमवलम्ब्य तत्स्वरूपस्यावरणाभावरूपत्वं प्रसाध्य तस्य 'असद्वा इदमग्र आसीत्' इति श्रुतिवाक्यमेव सहायीकृत्यान्ततो जगत्कारणस्याभावात्मकत्वसाधनेन तत्कार्यस्यापि जगतोऽभावरूपत्वसिपाधयिपया सर्वशून्यत्वापत्तिपर्यवसायित्वम् । पादत्रिपादीव्यूहारूढैः—प्रथमपादात्मकं तत्परपादत्रयात्मकं च विभागमारूढैः । प्रायः, अयोगान्ययोगव्यपनयननयैः—बाहुल्येन परमात्मायोगव्यवच्छेदपरैः बाहुल्येन परमात्मान्ययोगव्यवच्छेदपरैश्चाधिकरणैः । प्रायःपदप्रयोगेण भूयस्त्वप्रतीतेः सङ्करदोषनिराकरणार्थं ब्रह्मायोगव्यवच्छेदभूयस्त्वं प्रथमे पादे, तदन्ययोगव्यवच्छेदभूयस्त्वं त्रिपाद्यामिति लभ्यते । ब्रह्म प्रसाध्यम्—प्रतिपाद्यम् । इह—शास्त्रे प्रथमाध्याये । कृत्स्नाक्षेपोपशान्त्यै—कृत्स्नवेदान्ताक्षेपपरिहाराय । प्रथमः पाद उक्तः । ततः परं क्वाचित्काक्षेपपूर्वाखिलकलहसमुन्मूलनाय—उपक्रमदशायामेकदेशवाक्याक्षेपपूर्वककृत्स्नवेदान्ताक्षेपकलहनिवृत्तये । त्रिपादी—द्वितीयतृतीयचतुर्थपादात्मिका पादत्रयी । प्रणीता—रचिता ॥ ७९ ॥

अस्पष्टस्पष्टरूपस्फुटतरचिदचिल्लिङ्गवद्वाक्यचिन्ता
भाष्ये दीपावतारेऽप्यगणि नयगणैः संप्रवृत्ता त्रिपाद्याम् ।
अत्यन्तास्पष्टलिङ्गान्वितविषयमुशन्त्याद्यपादं तु केचित्
तत्रेदं तारतम्यं नियतनिजबलैः प्राच्यतार्तीयमानैः ॥ ८० ॥

चिन्ता०—एवं संगतिमुक्त्वा भाष्यतद्व्याख्यानोक्तामपि संगतिं विशदं प्रकाशयन् अस्पष्टतरत्वादिकल्पने निदानं कर्मकाण्डतृतीयाध्यायोक्तश्रुत्यादितारतम्यमित्याह—अस्पष्टस्पष्टेति । आद्यपादस्यास्पष्टतरजीवादिलिङ्गवाक्यविषयत्वं भाष्याभिप्रायज्ञैर्व्याख्यातृभिरुक्तमित्याह—अत्यन्तेति । ननु वाक्यानां वैषम्यं भवद्भिरुच्यते तच्च न वाक्यस्वरूपस्थम्; अदर्शनात्, नापि वाच्यस्थम्; तत एव, इत्याशङ्क्य तत्प्रतिपादनप्रकारस्थमित्याह—तत्रेति । श्रुतिलिङ्गादिभिः षड्भिः प्रमाणैः संभावितमेव हि वाक्यमस्पष्टत्वादिकं प्रकाशयति । तेषां च श्रुतिलिङ्गादीनां तारतम्यं पूर्वकाण्ड एव परिकल्पितम् । असूत्रयच्च भगवाञ्जैमिनिः 'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्' इति । तेन झटिति प्रत्यायकानि वाक्यानि स्पष्टतराणि, ततोऽन्यानि स्पष्टानि, ततोऽन्यान्यस्पष्टानि, ततोऽन्यान्यस्पष्टतराणि, इति वाक्येषु विभागः । एवमर्थेऽपि विभागो द्रष्टव्यः ॥ ८० ॥

पद०—अस्पष्टेत्यादि । भाष्ये—श्रीभाष्ये द्वितीयपादोपक्रमे । दीपावतारेऽपि—वेदान्तदीपेऽप्यवतारिकादानप्रकरणे । त्रिपाद्याम्—द्वितीयतृतीयचतुर्थपादेषु विद्यमानैः । नयगणैः—अधिकरणगणैः । अस्पष्टस्पष्टरूपस्फुटतरचिदचिल्लिङ्गवद्वाक्यचिन्ता सम्प्रवृत्ता अगणि—अस्पष्टानि विलम्बितप्रत्ययविषयभूतानि स्पष्टरूपाणि झटितिप्रत्ययविषयभूतानि स्फुटतराणि अत्यन्तझटितिप्रत्ययविषयभूतानिच यानि चिदचिल्लिङ्गानि चेतनाचेतनज्ञापकानि तद्वतां श्रुतिवाक्यानां विचारः प्रवृत्त इति निरणायि । केचित्तु—श्रीभाष्याभिप्रायविदः केचिदाचार्यास्तु । आद्यपादम्—प्रथमाध्यायप्रथमपादम् । अत्यन्तास्पष्टलिङ्गान्वितविषयमुशन्ति—अत्यन्तविलम्बितप्रत्ययचिदचिल्लिङ्गयुक्तवाक्यविषयं प्रतिपादयन्ति । तत्र—प्रतिपादितविषये । इदं तारतम्यम्—इदानीं प्रतिपादितमस्पष्टत्वस्पष्टत्वस्फुटतरत्वरूपं तारतम्यम् । नियतनिजबलैः—व्यवस्थितस्वस्वसामर्थ्यैः । अत्र सामर्थ्यं साक्षादर्थप्रत्यायकत्वैकद्वित्र्यादिप्रमाणव्यवधानसहितार्थप्रत्यायनादिरूपम् । तत्र च तारतम्यमव्यवधानैकव्यवधानद्विव्यवधानत्रिचतुरादिव्यवधानक्रमेण । यथा श्रुतिस्मृत्याचारादेः । अत एव च श्रुतिलिङ्गादीनां प्राबल्यदौर्बल्ये । तच्च सूत्रितं 'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्' इति । अत्रार्थविप्रकर्षश्च एकद्वित्र्यादिव्यवधानकृतः प्रत्ययविलम्ब एव । प्राच्यतार्तीयमानैः—पूर्वकाण्डस्थतृतीयाध्यायप्रतिपन्नश्रुतिलिङ्गादिरूपप्रत्यायकैरेवेत्यर्थः । तथाच पूर्वपक्षानुगुणश्रुतिलिङ्गादिबलाबलविचिन्तनक्रमभाविप्रत्ययविलम्बतारतम्यकृतमस्पष्टत्वादिरूपं तारतम्यमिति भावः ॥ ८० ॥

पूर्वत्रासिद्धरूपैः स्वमतिविरचितोन्नीतिभिः पूर्वपक्षः
सिद्धैः साधारणैरप्युपधिनियमितैः प्रत्यवस्था द्वितीये ।
स्पष्टासाधारणत्वैरुपरि परमतानूक्तिकल्पैरथेति
न्यायैकत्रिंशदत्र प्रतिचरणविभक्त्यन्विताऽन्वेषणीया ॥ ८१ ॥

चिन्ता०—अत्र शिष्याणां विशेषेण स्पष्टतरत्वादिप्रतिपत्त्यर्थं प्रकारभेदेनापि पूर्वपक्षहेतूनां विभागमाह—पूर्वत्रेति । असिद्धरूपैः—स्वरूपेणासिद्धैः, केवलं वादिपरिकल्पितैर्हेतुभिः पूर्वपक्षोत्थानम् । द्वितीयपादे प्रत्यवस्थानप्रकारमाह—सिद्धैरिति । स्वरूपतः सिद्धैर्व्यभिचारिभिः कयापि तु कुसृत्या विशेषणेन नियमितैर्हेतुभिः पूर्वपक्षोत्थानम् । तृतीये तु स्पष्टासाधारणत्वैः स्वपक्षस्यैव प्रसाधकैरुत्थानमित्याह—स्पष्टेति । चतुर्थे पुनः परसिद्धान्तानुवादप्रायैरुत्थानमित्याह—परमतेति । अत्राधिकरणानामन्योन्य

सङ्करव्यावृत्त्यर्थं मतान्तरव्यावृत्त्यर्थं चाधिकरणसंख्यामाह—इतीति । प्रतिपादमधिकरणसंख्याविभागं पूर्वमेवोक्तं स्मारयति—प्रतिचरणेति ॥ ८१ ॥

पद०—पूर्वत्रेत्यादि । पूर्वत्र—प्रथमाध्याये प्रथमपादे । असिद्धरूपैः—स्वरूपेणासिद्धैः । स्वमतिविरचितोन्नीतिभिः—केवलं वादिपरिकल्पितैर्हेतुभिः । पूर्वपक्षः—पूर्वपक्षोत्थानम् । द्वितीये—द्वितीयपादे तु । सिद्धैः साधारणैरप्युपधिनियामितैः प्रत्यवस्था—स्वरूपतःसिद्धैर्व्यभिचारिभिरथापि कुसृष्ट्या विशेषणेन नियमितैः परिहृतव्यभिचारैर्हेतुभिः पूर्वपक्षोत्थानम् । उपरि—तृतीयपादे । स्पष्टासाधारणत्वैः—स्वपक्षस्यैव साधकैर्हेतुभिः पूर्वपक्षोत्थानम् । अथ—चतुर्थपादे । परमतानूक्तिकल्पैः—परसिद्धान्तानुवादप्रायैर्हेतुभिः पूर्वपक्षोत्थानम् । अत्र—प्रथमाध्याये । प्रतिचरणविभक्त्यन्विता—अक्षोर्मीत्यादिपूर्वोक्तरीत्या प्रतिपादमियन्त्यधिकरणानीतिविभागयुक्ता । इति—पूर्वोक्तपादविभागादिक्रमेण । न्यायैकत्रिंशत्—अधिकरणानामेकत्रिंशद्रूपा न्यूनाधिकव्यवच्छेदिका संख्या । अन्वेषणीया—निश्चेतव्येत्यर्थः । अत्र 'अक्षोर्मि' इत्युक्तरीत्या प्रथमाध्याये पञ्चत्रिंशदधिकरणानां विद्यमानत्वेऽपि आद्याधिकरणचतुष्टयस्य शास्त्रोपोद्घातरूपत्वेन शास्त्रानन्तर्भावात्, ईक्षत्यधिकरणप्रभृतिसर्वव्याख्यानाधिकरणान्तमन्तर्विद्यमानानामधिकरणानामेकत्रिंशत्त्वमभिमतं वेदितव्यम् ॥ ८१ ॥

विश्वं पादे द्वितीये वपुरिति कथयंश्चिन्त्यते वाङ्मयवर्गो
विश्वाधारः स आत्मेत्यभिलपनपरस्तर्कणीयस्तृतीये ।
तुर्ये सांख्यादिपक्षोदितपरिपठनभ्रान्तिरुन्मूलनीये-
त्येवं केचित् त्रिपादीं जगदुरयमपि श्रोतृबुद्धेः समाधिः ॥ ८२ ॥

चिन्ता०—प्रकारान्तरेणाप्याचार्यैरुक्तां त्रिपादीसंगतिमनुवदति—विश्वमित्यादिना । द्वितीयपादे विश्वं भगवतः शरीरमिति प्रतिपाद्यते । तृतीयपादे विश्वशरीरत्वोपपादकं विश्वाधारत्वमुच्यते । चतुर्थे पुनरुक्तार्थपरिपन्थिरूपसांख्यादिसिद्धान्तप्रक्रिया समुन्मूल्यत इति विभागः । तमेतं विभागं श्रोतृबुद्धिसमाधानार्थत्वादाद्रियामह इत्याह—अयमिति ॥ ८२ ॥

पद०—विश्वमित्यादि । द्वितीये पादे विश्वं वपुरिति कथयन् वाक्यवर्गश्चिन्त्यते—द्वितीयपादे जगत् भगवतः शरीरमिति प्रतिपादयन् श्रुतिवाक्यगणो विचार्यते । आत्मा स विश्वाधार इत्यभिलपनपरस्तृतीये तर्कणीयः—द्वितीयपादोक्तरीत्या जगत आत्मा परमात्मा विश्वशरीरत्वप्रतिपादकविश्वाधारत्ववानिति प्रतिपादयन् वाक्यगणस्तृतीये पादे विचारणीयः । तुर्ये—चतुर्थपादे तु । साङ्ख्यादिपक्षोदितपरिपठनभ्रान्तिरुन्मूलनीया—इमाः श्रुतयः साङ्ख्यादिसिद्धान्तोक्तार्थपरिपठनरूपा इति केषुचित् श्रुतिवाक्येषु जायमाना भ्रान्तिः पूर्वोक्तार्थविरुद्धतया परिहरणीया । इत्येवम्—उक्तक्रमेण । केचित्—केचिदाचार्याः । त्रिपादीं जगदुः—त्रिपादीप्रवृत्तिप्रकारभेदं निरवहन् । अयमपि—अयं प्रकारोऽपि । श्रोतृबुद्धेः समाधिः—श्रोतृजनानां बुद्धेः प्रसादहेतुः । अतोऽयमपि प्रकारभेदः स्वीकार्य इति भावः ॥८२॥

यस्य प्राणः शरीरं स खलु हिततमोपास्तिकर्म प्रसक्त-
स्तस्मिन् जीवत्वशङ्कां जगदुपजनके सौति शाण्डिल्यविद्या ।
पूर्वन्यायाच्च युक्तं दमनमिह महावाक्यतः प्रक्रमस्ये-
त्युत्थाने प्रक्रमोक्तानुगुणमिति महावाक्यमेकीकरोति ॥ ८३ ॥

चिन्ता०—पादादिसंगतीनां स्पष्टमेवोक्तत्वादधिकरणसंगतिरवशिष्यते । तामप्याह—यस्येति । अत्र द्वयी संगतिः—अर्थैक्यादेका, प्रतिपादकन्यायानुसारादपरा । तथाहि इन्द्रप्राणाधिकरणे 'प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृत मित्युपास्स्व' इति स एव हिततमोपास्तिकर्मतया प्रख्याप्यते । अस्यां च शाण्डिल्यविद्यायां 'मनोमयः प्राणशरीरो भारूपः' इति तदेव प्रतिसंधीयते । प्राणशरीरस्तु जीव एवेति पूर्वन्यायाक्षेपेण संगतिः । संगत्यन्तरमप्याह—पूर्वेति । पूर्वं हि परमात्मप्रतिपादनानुकूलमहावाक्यात् जीवप्रतिपादनानुकूलमुपक्रमवाक्यं निराचष्ट तर्हि तेनैव न्यायेन जीवप्रतिपादनानुकूलमहावाक्यात् परमात्मप्रतिपादनानुकूलमुपक्रमवाक्यं निराक्रियतामिति प्रतिबन्दीप्रयोगः । एवं पूर्वपक्षिते सति वैषम्यं दर्शयति—प्रक्रमेति । तत्रोपक्रममहावाक्ययो र्विरोधाद्युक्तो महावाक्येनोपक्रमोपरोधः । इह पुनः प्रक्रमोक्तमर्थमुपबृंहयति महावाक्यम् । तेन कस्य विरोधः केन वा निरास इति निरूपयतु भवान् । अयमर्थः—शाण्डिल्यविद्या खलूपक्रममारभ्योपसंहारपर्यन्तं ब्रह्मकारणत्वानुकूला, तेन तया विद्यया परमपुरुष एव जगत्कारणमिति निश्चीयत इति । अत्रेयमपि काचित् संगतिः स्फुरति—पूर्वाधिकरणे हिततमोपास्तिकर्मत्वेन हेतुना परमपुरुष एवेन्द्रशब्दवाच्य इति निर्धारितम् । तदेतद्धिततमोपास्तिकर्मत्वमस्मिन्नधिकरणे 'यथा क्रतुरस्मिन्लोके पुरुषो भवति' इत्युक्तन्यायेन विव्रियत इति । अयमेव हि

तत्क्रतुन्यायः—यद्गुणविशिष्टं परमात्मानमुपास्ते तद्गुणविशिष्टमेव परमात्मानं स्वयमपि तद्भोगसाम्येन भुङ्क्त-इति। तथाचेदृग्विधोपभोगसाधनात् परमपुरुषोपासनादन्यः को वा हिततम इति भावः। इत्थमपि संगतिर्वक्तुं शक्यते—पूर्वं ह्यधिकरणप्रयोजनकथनावस्थायां केचिद् व्युत्पादनीया इति पूर्वकाण्डानुक्ताः शारीरके व्युत्पादनीया इत्युक्तम्। अत्र पूर्वाधिकरणे विशेषणवाचिशब्दस्य विशेष्यपर्यन्ताभिधानोपपाद-नार्थमुपासात्रैविध्यादित्यपूर्वन्यायविशेषः प्रतिपादितः। इह पुनरत्यन्तापूर्वस्तत्क्रतुन्यायो व्युत्पाद्यत इति वेदान्तोपयुक्तापूर्वन्यायविनियोगस्तत्र चात्रच व्युत्पाद्यत इति। अत्र पूर्वोत्तरपेटिकयोः संगतिर्वक्तव्या। सा चात्रैव भविष्यति। उपासकशरीरबहिर्भूतज्योतिरिन्द्रप्राणवैशिष्ट्येनोपासनचिन्ता पूर्वत्र। इह पुनरेकपेटिकात्वेन कल्पितेषु त्रिष्वधिकरणेष्वल्पस्वरूपतयावस्थितोपासकशरीरान्तर्गतहृदयगुहाक्षिवासी परमात्मा चिन्त्यत इति। तदर्थविचारस्तु—'सर्वं खल्विदं ब्रह्म' इति शाण्डिल्यविद्यायामुपदिष्टं ब्रह्म किं जीव उत वेदान्तप्रसिद्धः परमपुरुष इति। तदर्थं चिन्त्यते—महावाक्यानुसारेणोपक्रमो नेतव्य इति पूर्वाधिकरणोक्तन्यायविशेषोऽत्र जीवपरत्वकल्पनायामुपयुज्यते नेति। पुनश्चिन्त्यते—अत्र महावाक्यस्य जीवपरत्वमस्ति नेनि। ततोऽपि विचार्यते—एतस्मिन् महावाक्ये जीवपरत्वानुरूपहेतवो विद्यन्ते नेति। पुनश्चिन्त्यते—तद्बाधकाः परमपुरुषत्वसाधनसमर्था हेतवो न सन्ति यदि वा सन्तीत्यादि ॥ ८३ ॥

पद०—यस्येत्यादि। यस्य प्राणः शरीरं स हिततमोपास्तिकर्मप्रसक्तः खलु—पूर्वमिन्द्र-प्राणाधिकरणे 'प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्स्व' इत्यत्रोपासात्रैविध्याय प्राणेन्द्रशब्दयोः प्राणेन्द्रशरीरकपरमात्मपरत्वस्थापनात् प्राणशरीरको हिततमोपास्तिकर्मतया प्रसक्तः खलु। तस्मिञ्जगदुपज-नके—प्रसक्ते प्राणशरीरके जगत्कारणे वस्तुनि। शाण्डिल्यविद्या—'सर्वं खल्विदं ब्रह्म' इत्युपक्रमवती 'इति हस्माह शाण्डिल्यः' इत्यन्ता छान्दोग्यस्था शाण्डिल्यविद्या। जीवत्वशङ्कां सौति—'मनोमयः प्राणशरीरो भारूपः' इति वचनेन जीवासाधारणमनोमयत्वसमर्पकेण जीवत्वशङ्कां जनयति। अत्र प्राणशरीरकस्य मनोमयशब्देन जीवत्वप्रतिपादनात् पूर्वाधिकरणे प्राणशरीरकस्य जगत्कारणत्वमुक्तम्, तन्न सम्भवतीत्याक्षिपतीत्यर्थः। पूर्वाधिकरणेनास्याधिकरणस्याक्षेपसङ्गतिरिति भावः। किं च। पूर्वन्या-यात्—इन्द्रप्राणाधिकरणन्यायात्। इह—शाण्डिल्यविद्यायाम्। महावाक्यतः प्रक्रमस्य दमनं युक्तम्—पूर्वाधिकरणे परमात्मानुगुणमहावाक्यबलेन त्वाष्ट्रहननादि जीवविशेषलिङ्गयुक्तमुपक्रमवाक्यं निराक्रि-यत खलु, तद्रीत्याऽत्र जीवानुगुणमहावाक्येन 'सर्वं खल्विदं ब्रह्म' इति परमात्मानुगुणोपक्रमवाक्यनिरा-करणं युक्तम्। इत्युत्थाने—एवं पूर्वपक्षोत्थाने सति। प्रक्रमोक्तानुगुणमिति—उपक्रमप्रतिपन्नार्थ-विरुद्धार्थप्रतिपादनशून्यं तदनुकूलार्थप्रतिपादकं चेतिहेतोः। महावाक्यमेकीकरोति—उपरितनवाक्य-

जातमुपक्रमसमानार्थकमिति स्थापयतीत्यर्थः । इदं हृदयम्—पूर्वाधिकरणे उपक्रममहावाक्ययोर्विरोधात् बलवता महावाक्येनोपक्रमवाक्यमन्यथाऽकारि, इहतूपक्रमावगतार्थविवरणरूपतया महावाक्यं तदनुकूलमित्यन्यतरनिराकरणमेवासाम्प्रतमित्येकहृदयत्वं सम्पादयतीति । इति च सङ्गतिरिति भावः ॥ ८३ ॥

**अन्वारुह्यात्र भेदं प्रथममधिकृतिर्भाषिता किं निमित्तं**
**विध्यैकत्वेऽनुवादः पर इह गुणविध्यर्थ एवेति युक्तम् ।**
**सत्यं ब्रह्मानुमत्य क्वचिदुपनिषदि क्वापि कल्प्ये विवादे**
**चिन्तैषोदाहृतिः स्यात् परमतरचितेत्यर्थसिद्धिस्तु बोध्या ॥ ८४ ॥**

चिन्ता०—इह खलु भाष्ये वाक्यभेदमङ्गीकृत्य शाण्डिल्यविद्यायां योजना पूर्वमभिहिता । तस्यां योजनायां पूर्वस्मिन् खण्डे पूर्वपक्षिणाऽपि ब्रह्मसद्भावोऽङ्गीकृतः । उत्तरस्मिन् खण्डे ब्रह्मासद्भावाभिधानेनोत्थितस्य पूर्वपक्षिणस्तत्रापि ब्रह्मसद्भावः प्रसाध्यत इत्यधिकरणक्लृप्तिः । योजनान्तरमप्यभिहितम्—'सर्वं खल्विदं ब्रह्म' इत्यारभ्य तस्यामेव शाण्डिल्यविद्यायां समाप्तिपर्यन्तं सर्वत्रापि ब्रह्म न विद्यत इति पूर्वपक्षः । सर्वत्रास्तीति सिद्धान्तः । पूर्वत्र वाक्यभेदमङ्गीकृत्याधिकरणनिर्वाहः । स पुनरपन्यायमूलः 'संभवत्येकवाक्यत्वे वाक्यभेदस्तु नेष्यते' इति न्यायविरोधात् । अपि च 'स क्रतुं कुर्वीत' इत्युपासनविधिर्मनोमयत्वादिगुणविधिर्नपुनःस्वरूपविधिरिति संभाव्यते विहितस्य विधानायोगात् 'शान्त उपासीत' इति महावाक्यएवोपासनस्य विहितत्वाच्च । 'स क्रतुं कुर्वीत' इति गुणविध्यर्थमनुवादतयोपपत्तेः । अत्रार्याङ्गीकारे सत्यमिति । इयं चिन्ता तस्या मर्यादाया उदाहृतिर्दृष्टान्त इत्यर्थः । अत्रायं विशेषः प्रतिभाव्यः—एकस्यामुपनिषदि ब्रह्माङ्गीकृत्योपनिषदन्तरे ब्रह्म नास्तीति विवादः प्रायशः प्रवर्तते । अत्र पुनरेकस्मिन्नेवोपनिषद्वाक्ये पूर्वखण्डे ब्रह्मास्ति, उत्तरखण्डे ब्रह्म नास्तीति विवादः । अथापि जघन्योऽयं पक्षः किमर्थं परिगृह्यत इत्यत्राह—परेति । परवादिपरिकल्पितत्वादस्माभिरप्यनूद्यते । नपुनः सिद्धान्ततया स्वीक्रियत इति । अयमर्थः सूक्ष्मत्वात्सावधानैरेव शिष्यैरवबोध्य इत्याह—बोध्येति ॥ ८४ ॥

पद०—अन्वारुह्येत्यादि । अत्र—सर्वत्रप्रसिद्धाधिकरणे । प्रथमम्—प्रथमयोजनायाम् । भेदमन्वारुह्य—'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत' इति प्रथमवाक्यस्य 'सक्रतुं कुर्वीत मनोमयः प्राणशरीरो भारूपः' इत्याद्युपरितनवाक्यस्य च परस्परं भेदं परमतानुसारेणाङ्गीकृत्य । अधिकृतिः—विषयसंशयपूर्वपक्षसिद्धान्तोपन्यासरूपमधिकरणम् । किंनिमित्तम्—किंनियामकत्वेन स्वीकृत्य । भाषिता—भाष्यकारैरभाष्यत । 'सम्भवत्येकवाक्यत्वे वाक्यभेदस्तु नेष्यते' इतिन्याय-

विरोधादिति भावः । इह—शाण्डिल्यविद्याप्रकरणे । विद्यैकत्वे—विद्यैक्ये सति । परोऽनुवादो गुण-विध्यर्थ एवेति युक्तम्—'स क्रतुं कुर्वीत मनोमयः प्राणशरीरो भारूपः' इत्याद्युत्तरवाक्यसन्दर्भः 'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत' इति पूर्ववाक्यविहितोपासनानुवादरूपस्सन्नुपासन-विध्यपेक्षितमनोमयत्वादिगुणविध्यर्थ एवेति खलु साधु । यथा 'अग्निहोत्रं जुहोति' इति विहितस्याग्नि-होत्रस्य 'दध्ना जुहोति' इति गुणविधिः । सत्यम्—शङ्कितमर्धमङ्गीकृतमित्यर्थः । उपनिषदि क्वचित् ब्रह्मानुमत्य क्वापि विवादे कल्प्ये परमतरचिता एषा चिन्ता उदाहृतिः स्यात् इत्यर्थ-सिद्धिस्तु बोध्या—एकस्यामुपनिषदि ब्रह्माङ्गीकृत्य उपनिषदन्तरे ब्रह्मानङ्गीकारेण विवादः प्रायशः प्रवर्तते, अत्र पुनरेकस्यामेवोपनिषदि क्वचिद्भागे प्रतिपाद्यतया ब्रह्म नास्ति अस्तीति विवादे बुद्धिवैशद्याय कल्पनीये सिद्धे सति मतान्तरग्रन्थाङ्गीकृत एवमाकारो विचार उदाहरणं भवेत् ।इत्येवंविच्छित्तिविशेष-व्युत्पत्तिः फलत्वेन प्रतिपत्तव्या । परमतरचिताऽपीयं कल्पना शिष्यबुद्धिवैशद्याय, उत्तरयोजनापेक्षया दोष-युक्तत्वप्रदर्शनाय च भाष्यकारैर्न्यदर्शीति भावः ॥ ८४ ॥

**सर्वत्वं कर्मभिः स्वैर्जनिमति घटते ब्रह्मशब्दोऽपरे चे-**
**त्यल्पस्थानोऽल्पमानः सुखतदितरभुग्जीव एवेति चेन्न ।**
**तज्जत्वादेरनूक्तेर्विविधगुणभिदादर्शनात् सर्वतादेः**
**स्वारस्यादप्यणुत्वं ह्युपधिकृतमिहोपास्तये ज्यायसि स्यात् ॥ ८५ ॥**

इति सर्वत्रप्रसिद्धाधिकरणम् ॥ १२ ॥

चिन्ता०—अस्मिन्नधिकरणे पूर्वपक्षसिद्धान्तयुक्तिद्वयं पूर्वोत्तरार्धाभ्यां सङ्गृह्य दर्शयति—सर्वत्वमिति । अयमर्थः—'सर्वं खल्विदं ब्रह्म' इति सर्वसामानाधिकरण्यं जीवे न घटत इति भवन्तो वदन्ति तत्तु घटत एव देवतिर्यङ्मनुष्यस्थावररूपेण जननवति जीवे तत्तच्छरीरसामानाधिकरण्येन निर्देशस्याविरो-धात्, तथा हृदयान्तरवस्थितत्वेनाल्पस्थान इत्यल्पमानोऽणीयानितिचात्र प्रतिपाद्यार्थः श्रूयते, तच्च जीवत्वमेव प्रसाधयति, किं च सुखदुःखभागी देहे जीव एव वर्तते अतो जीवादन्यः परमपुरुषोऽत्र नास्तीति । परिहरति—नेति । हेतुमाह—तज्जत्वादेरिति । 'सर्वं खल्विदं ब्रह्म' इत्यनन्तरमेव तज्जत्वात्तल्लत्वात्तदन्त्वादिति हेतुत्रयमनूद्यते, स तु परमपुरुषधर्म एव 'यतो वा इमानि भूतानि' इत्यादिवाक्ये तस्यैव प्रसिद्धत्वात् । विविधगुणभिदादर्शनात्—'मनोमयः प्राणशरीरो भारूपः

सत्यकामः सत्यसंकल्पः' इत्यादिना ब्रह्मासाधारणगुणविशेषदर्शनात्। सर्वतादेः स्वारस्यादपि— 'सर्वं खल्विदं ब्रह्म' इति चेतनाचेतनविभागाभावेनाविशेषेण सर्वेषामपि ब्रह्मतादात्म्यमुच्यते। तत्तु जीवे न संभवति; एकस्य चेतनस्य चेतनान्तरं प्रति शरीरत्वाभावात्। परमात्मनि तत् संभवत्येव 'यस्यात्मा शरीरम्, यस्य पृथिवी शरीरम्' इति सर्वशरीरत्वश्रवणात्। तर्हि 'अणीयान्' इत्यणुत्वकथनं कथमिवोच्यत इत्यत्राह—अणुत्वमिति। उपधिकृतम्—अवच्छेदकस्थानकृतमित्यर्थः। न केवलमल्पत्वकथनम्। 'ज्यायानेष पृथिव्याः' इत्यादिना ज्यायस्त्वमप्युच्यते। तेन ज्यायसि ब्रह्मण्युपाधिकृतमल्पत्वमुपासार्थमेव। तदिदमाह सूत्रकारः—'निचाय्यत्वात्' इति। ध्येयत्वादित्यर्थः॥ ८५॥

इति सर्वत्रप्रसिद्धाधिकरणम्॥ १२॥

पद०—सर्वत्वमित्यादि। स्वैः कर्मभिः—स्वकीयैः पुण्यपापरूपैः कर्मभिः। जनिमति—देवमनुष्यतिर्यक्स्थावररूपेण जननभाजि जीवे। सर्वत्वं घटते—'सर्वं खल्विदं ब्रह्म' इति तत्तच्छरीरवाचिशब्दसामानाधिकरण्येन सर्वात्मकत्वं घटत एव। ब्रह्मशब्दश्च, अपरे—जीवे। घटते—युज्यते। जीवेऽपि ब्रह्मशब्दस्य तत्र तत्र प्रयोगादिति भावः। इति—हेतोः। अल्पस्थानः—'एष म आत्माऽन्तर्हृदयः' इति हृदयरूपाल्पस्थानवान्। अल्पमानः—'अणीयान् व्रीहेः' इत्यत्रत्यवचनेनाल्पपरिमाणतया प्रतिपन्नः। सुखतदितरभुग्जीव एव—सुखदुःखभागी जीव एवायम्। इति चेन्न—एवं शङ्क्यते चेत् तन्न सम्भवति। तज्जत्वादेरनूक्तेः—'सर्वं खल्विदं ब्रह्म' इत्यनन्तरं 'तज्जलानिति' इतिवचनेन जगतस्ततोजातत्वात् तज्जत्वं तदधीनस्थितिमत्त्वात् तदन्त्वं तस्मिंल्लीनत्वात् तल्लत्वमितीमे धर्मा अनूद्यन्ते, तस्यैतस्य तज्जत्वादिधर्मजातस्य जीवेऽसम्भवात् 'यतो वा इमानि' इत्यादिकारणवाक्यैर्जगज्जन्मस्थितिलयानां परमपुरुषैकहेतुकत्वस्थापनात्। विविधगुणभिदादर्शनात्—'मनोमयः प्राणशरीरो भारूपः सत्यकामः सत्यसङ्कल्पः' इत्यादिना ब्रह्मासाधारणनानाविधगुणविशेषदर्शनात्। सर्वतादेः स्वारस्यादपि—'सर्वं खल्विदं ब्रह्म' इति चेतनाचेतनविभागं विनाऽविशेषेण सर्वेषामपि ब्रह्मतादात्म्यमुच्यते, तस्य जीवेऽस्वारस्यात् परमात्मन्येव स्वारस्याच्च। इति चेन्नेति पूर्वेणान्वयः। इह—प्रकरणे। अणुत्वम्—'अणीयान्' इत्यनेन प्रतिपन्नमणुत्वम्। उपाधिकृतम्—हृदयाख्यसूक्ष्मस्थानरूपोपाधिप्रयुक्तम्। ज्यायसि—'ज्यायान्पृथिव्याः' इत्यादिना सर्वज्यायस्त्वेन प्रतिपन्ने परमात्मनि। उपास्तये स्यात्—तथोपासनार्थमुक्तमित्युपपन्नं भवेत्॥ ८५॥

इति सर्वत्रप्रसिद्धाधिकरणम्॥ १२॥

## अत्त्रधिकरणम् ॥ १३ ॥

सूत्रम्—अत्ता चराचरग्रहणात् ॥ ४२ ॥

अत्ता खल्वोदनादेर्भवभृदिति कठश्रुत्यधीतोऽप्यसौ स्यात्
न स्यान्मृत्यूपसिक्तस्थिरचरनिखिलग्रासतस्तल्लयोक्तेः ।
जीवव्यावर्तनं च प्रकरणविदितं भोक्तृतोक्तिर्द्वयोस्तु
प्रेर्यत्वप्रेरकत्वप्रतिनियतरसा च्छत्रिनीत्याऽथवा स्यात् ॥ ८६ ॥

चिन्ता०—अत्राधिकरणसंगतिर्भाष्य एव सुव्यक्तमुच्यते 'संभोगप्राप्तिरिति चेन्न वैशेष्यात्' इत्यत्र । भगवतः सर्वान्तर्यामित्वेनावस्थितस्यापि भोक्तृत्वं नास्तीत्युक्तम् । तर्हि 'यस्य ब्रह्म च क्षत्रं च' इत्यत्र भोक्तृत्वेन प्रतिपन्नः परमपुरुषो न स्यादिति पूर्वपक्षोत्थानेन संगतिः । अपि च पूर्वाधिकरणे हृदयरूपाल्पस्थानवर्तित्वेन परमपुरुषश्चिन्त्य उक्तः, अत्र 'गुहां प्रविष्टौ' इति हृदयगुहान्तर्वर्ती परमपुरुष एव चिन्त्यतयोच्यत इति भावः । कठवल्ल्यां भोक्तृत्वेनोपदिष्टः किं जीवः, उत परमात्मा । तदर्थं विचार्यते—अत्रौदनोपसेचनसूचितमत्तृत्वं किं कर्माधीनभक्षणमुत सर्वसंहर्तृत्वमात्रेण । तदर्थमपि विचार्यते—किमस्मिन् प्रकरणे विश्वजगत्संहर्तृत्वरूपपरमपुरुषत्वनियामकानि श्रुतिलिङ्गादीनि न विद्यन्ते उत विद्यन्ते इति । अत्रायं पूर्वपक्षी मन्यते—लोके खल्वोदनादेरत्ता भवभृज्जीव एवेति कठश्रुतौ 'यस्य ब्रह्म च क्षत्रं च' इत्युक्तोऽत्ता स एव स्यादिति । तत् प्रतिक्षिपति—न स्यादिति । हेतुमाह—मृत्यूपसिक्तेति । अत्र हि साक्षादत्ता नोच्यते । अपि तु मृत्यूपसिक्तजङ्गमाजङ्गमसंहारक एव । तेन परमात्मैवात्ता । किंचैतस्मिन् प्रकरणे जीवव्यावर्तनं सुस्पष्टं विदितम् । ननु यदि परमात्मनो भोक्तृत्वं नास्ति कथं 'ऋतं पिबन्तौ' इति जीवपरमात्मनोर्द्वयोरपि भोक्तृत्वमुच्यत इत्याशङ्क्य परिहरति—प्रेर्यत्वेति । प्रेर्यत्वप्रेरकत्वप्रतिनियतरसा—जीवो हि परमात्मप्रेर्यः कर्मफलं भुङ्क्ते तेन जीवो रसिकः, परमात्मा तु जीवस्य प्रेरकत्वेन व्यपदिश्यत इत्यर्थः ॥ ८६ ॥

पद०—अत्ता खल्वित्यादि । ओदनादेरत्ता—भक्षकः । भवभृत् खलु—जीवएव किल । इति—अत्तृत्वस्य जीव एव प्रसिद्धत्वात् हेतोः । कठश्रुत्यधीतोऽप्यसौ स्यात्—

' यस्य ब्रह्म च क्षत्रञ्च उभे भवत ओदनः ।
मृत्युर्यस्योपसेचनं क इत्थावेद यत्र सः ॥ '

इति कठवल्लीपठितोऽप्यत्ताजीव एव स्यात् । मृत्यूपसिक्तस्थिरचरनिखिलग्रासतस्तल्लयोक्ते-र्न स्यात्—मृत्युना उपसिक्तस्योपसेचनवतः स्थिरचरात्मकस्य निखिलस्य वस्तुनो ग्रसनेन स्थिरचरात्म-कनिखिलवस्तुलयस्यैव प्रतिपादनात् । केवलान्नादनाप्रतिपादनादाशङ्कितं न सम्भवतीत्यर्थः । 'ग्रासतत्तल्ल-योक्तेः' इति पाठे ग्रासरूपस्य तत्तद्वस्तुलयस्यैव प्रतिपादनादिति योज्यम् । जीवव्यावर्तनं च प्रकरणविदितम्—

' विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः ।
सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम् ॥ '

इत्यादिप्रकरणवशेन एतद्विद्याप्रतिपाद्यस्योपासकत्वप्राप्तृत्वाद्याश्रयाज्जीवादुपास्यत्वप्राप्यत्वादिरूप-व्यावर्तकधर्मजातं च विदितम् । द्वयोर्भोक्तृतोक्तिस्तु—'ऋतं पिबन्तौ' इति वाक्ये जीवपरमा-त्मनोर्द्वयोस्तुल्यतया कर्मफलभोक्तृत्वोक्तिः । प्रेर्यत्वप्रेरकत्वप्रतिनियतरसा—जीवगतप्रेर्यत्व परमात्म-गतप्रेरकत्वाभ्यां व्यवस्थितरसवती । तुल्यतया भोक्तृत्ववचनेऽपि परप्रेरितो जीवः साक्षाद्भोक्ता, तत्प्रेरण-द्वारा परमात्मा भोक्ता, नतु साक्षात्परमात्मा भोक्ता, 'पिबन्तौ' इत्यत्र पातृत्वपाययितृत्वयोस्तन्त्रे-णोक्तिः, तेन न द्वयोस्तुल्यभोक्तृत्वं प्रतिपत्तव्यमिति भावः । अथवा—पक्षान्तरे । छत्रिनीत्या स्यात्—यथाछत्रिणो गच्छन्तीत्यत्रच्छत्रिशब्देन लक्षणया छत्रिणामच्छत्रिणां च ग्रहणम् एवं 'पिबन्तौ' इत्यत्रापि लक्षणया पिबतो जीवस्य, अपिबतः परमात्मनश्च ग्रहणं भविष्यति, एवंरीत्यापि शङ्का सुनिरसेति भावः ॥ ८६ ॥

सत्त्वं स्याद्धत्त्यनश्नन्-ज्ञ इति विभजनात् पैङ्ग्यधीतं तु सत्त्वं
बुद्धिः प्राणोऽथवेति त्वृतमिह पिबतोर्जीव एकस्तयोश्च ।
मैवं जन्तौ च सत्त्वश्रुतिरियमुचिता कर्मभुङ्नाप्यनश्नन्
तत्प्रश्नप्रक्रमोऽन्याशय इदमपिचाभापि पूर्वापराद्यैः ॥ ८७ ॥

इति अत्त्रधिकरणम् ॥ १३ ॥

चिन्ता०—ननु 'द्वा सुपर्णा' इत्यस्य वाक्यस्य व्याख्यानरूपायां पैङ्गिश्रुतौ 'तयोरन्यः पिप्पलं स्वाद्वत्तीति सत्त्वम्' इति पूर्वांशस्यान्तःकरणपरत्वम्, 'अनश्नन्नन्यो अभिचाकशीतीति ज्ञः' इत्युत्तरांशस्य जीवपरत्वं चोक्तम्, तावेतौ सत्त्वक्षेत्रज्ञाविति तत्रैव निर्णीतम्, तत्कथं द्वासुपर्णादिवाक्ये जीवपरमात्मपरत्वमुच्यत इत्याशङ्कते—सत्त्वमिति। निराकरोति—मैवमिति। विवृणोति—जन्ताविति। सत्त्वशब्दसामर्थ्यात् खलु भवताऽन्तःकरणपरत्वमुच्यते, स तु सत्त्वशब्दो जीवेऽपि प्रयुज्यते 'सत्त्वमस्त्री तु जन्तुपु' इति, अतोऽयं सत्त्वशब्दो जीवपर इत्यर्थः। 'अनश्नन्नन्यो अभिचाकशीति' इति जीव एवोच्यत इति च भवतोक्तं, तदपि च न घटते कर्म भुग्जीवो ह्यनश्नन्निति नैव वक्तुं शक्यत-इत्याह—कर्मभुगिति। अथापि प्रश्नोपक्रमे किंचिदानुकूल्यमस्तीत्याशङ्क्याह—तदिति। महावाक्यस्यायमर्थ इति निर्णये सति उपक्रमे तद्विपरीतं यदि किञ्चित्प्रतिपन्नं तदभिप्रायविशेषेण महावाक्यानुकूलतया समाधेयमित्यर्थः। तर्हि सर्वमिदं भवदीयभाष्यकारैः किमर्थं नोक्तमित्याशङ्क्याह—इदमपि चेति। प्रधानवाक्यार्थकथने पूर्वापरवाक्यादिभिरवधेयमर्थजातं स्वयमेव कथितं भवतीत्यर्थः। अयमाशयः— 'द्वा सुपर्णा' इत्यत्र वाक्ये

'समाने वृक्षे पुरुषो निमग्नो नीशया शोचति मुह्यमानः।
जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः॥'

इत्यनेन 'द्वा सुपर्णा' इति मन्त्रस्य जीवपरमात्मानावेव विषय इति निर्णीयते, तेन निर्णीतस्यार्थस्य पैङ्गिश्रुत्यपेक्षैव नास्ति, अपेक्षायामपि जीवपरमात्मपरत्वेन तद्वाक्यमपि जीवात्मपरतया वर्णितमेव, तस्मात् 'द्वा सुपर्णा' इति जीवपरमात्मानावेवोच्येते इति सिद्धम्। विस्तरस्त्वाचार्यव्याख्याने द्रष्टव्यः। क्षेत्रज्ञशब्दस्य 'क्षेत्रज्ञं चापि मां विद्धि' इति भगवतैव परमात्मपरत्वं स्फुटतममेवोक्तमिति तत्रापि समाधेयं न किञ्चिदवशिष्यते। भगवतः सर्वक्षेत्रज्ञान्तर्यामित्वात् विश्वशरीरत्वेन परमक्षेत्रज्ञत्वाच्च॥ ८७॥

इति अत्त्रधिकरणम्॥ १३॥

पद०—सत्त्वमित्यादि। सत्त्वं स्वाद्वत्त्यनश्नन् ज्ञ इति विभजनात्—'द्वा सुपर्णा' इत्यस्य वाक्यस्य व्याख्यानरूपायां पैङ्गिश्रुतौ 'तयोरन्यः पिप्पलं स्वाद्वत्तीति सत्त्वम्' इति पूर्वांशस्यान्तःकरणपरत्वेन 'अनश्नन्नन्यो अभिचाकशीतीति ज्ञः' इत्युत्तरांशस्य जीवपरत्वेन च विभजनात्। तावेतौ सत्त्वक्षेत्रज्ञावितिनिर्णीतत्वाच्च। पैङ्ग्यधीतं सत्त्वं तु बुद्धिः, अथवा प्राणः—उदाहृतपैङ्गिश्रुतिपठितं

सत्त्वशब्दितं वस्तु 'द्रव्यासुव्यवसायेपु सत्त्वम्' इति कोशात् बुद्धिरस्तु अथवा प्राणोऽस्तु । इति— हेतोः । इह—प्रकरणे । ऋतं पिबतोः—'ऋतं पिबन्तौ' इति श्रुत्युक्तयोः, ऋतं कर्मफलं पिबतोरनुभवतोः । तयोश्च— बुद्धिप्राणान्यतरक्षेत्रज्ञयोः । जीव एकः—जीवात्मा एकः । क्षेत्रज्ञशब्दितस्तयोरन्यतर इत्यर्थः । मैवम्–एवं मा शङ्किष्ठाः । इयं सत्त्वश्रुतिर्जन्तौ चोचिता–'द्रव्यासुव्यवसायेपु सत्त्वमस्त्री तु जन्तुपु' इति कोशात् 'जन्तुजन्यशरीरिणः' इति जन्तुशब्दस्य जीववाचकत्वाच्च पैङ्गिश्रुत्युक्तः सत्त्वशब्दो जन्तौ जीवात्मनि वर्तत इत्युचितम् । कर्मभुक्—कर्मफलभोक्ता जीवः । अनश्नन्—अनश्नन्नित्यभिलप्यो न भवति । कर्मफलमश्नतोऽनश्नत्त्वं हि विरुद्धम् । अपीति दूषणान्तरसमुच्चये । तत्—तस्मात् । प्रश्नप्रक्रमोऽन्याशयः—

'येयं प्रेते विचिकित्सा मनुष्ये अस्तीत्येके नायमस्तीति चैके ।
एतद्विद्यामनुशिष्टस्त्वयाऽहं वराणामेप वरस्तृतीयः ॥'

इति यमं प्रति नचिकेतसस्तृतीयप्रश्नप्रक्रमः, अयं हि ज्ञातव्यतत्त्वार्थप्रश्नप्रक्रमः, अस्मिन् प्रश्ने हि शरीरवियुक्तस्य जीवास्यास्तित्वनास्तित्वविप्रतिपत्त्या तत्त्वजिज्ञासा प्रतीयते न तु परमात्मस्वरूपजिज्ञासादिकम्, अतः प्रश्नप्रक्रमः प्रकरणस्य जीवात्मपरतामवगमयतीति चेत् सोऽन्याशयः—न मृतात्मास्तित्वनास्तित्वविप्रतिपत्तिमूलकजीवात्ममात्रतत्त्वजिज्ञासामूलकः, किन्तु मोक्षयाथात्म्यविज्ञानाय तदुपायभूतपरमात्मोपासनपरावरात्मजिज्ञासामूलकः । इदमपिच—प्रश्नप्रक्रमस्य निरुक्तजिज्ञासामूलकत्वं च । पूर्वापराद्यैः—उपक्रमोपसंहाररूपैः पूर्वोत्तरवाक्यसन्दर्भैः । आद्यशब्देन युक्त्यन्तरैश्च । अथापि— श्रीभाष्यकारैरेवास्मिन्नधिकरणे समाभाष्यत । अत्रेयं भाष्यपङ्क्तिः 'अत्र परमपुरुषार्थरूपब्रह्मप्राप्तिलक्षणमोक्षयाथात्म्यविज्ञानाय तदुपायभूतपरमात्मोपासनपरावरात्मजिज्ञासयाऽयं प्रश्नः क्रियते' इत्यादिः । अतस्तद्विपये नास्माभिः साधनीयमस्तीति हृदयम् ॥ ८७ ॥

इति अत्त्रधिकरणम् ॥ १२ ॥

## अन्तराधिकरणम् ॥ १४ ॥

सूत्रम्—अन्तर उपपत्तेः ॥ ४५ ॥

यद्वृत्तादेर्य एषोऽक्षिणि पुरुष इति श्रूयमाणस्तु जीवो
यद्वाऽक्ष्णोर्देवताऽर्कः प्रतिकृतिरथवा तत्र दृश्येति चेन्न ।
एतद्ब्रह्मैतदेवामृतमभयमिदं कं खमित्याद्यधीतेः
संयद्वामत्वमुख्यैः स्थितिनियतिबलादर्चिराद्युक्तितश्च ॥ ८८ ॥

चिन्ता०—पूर्वाधिकरणेऽप्युपासकस्य हृदयगुहान्तर्वर्ती परमात्मा निरूपितः, इदानीमुपासकस्य चक्षुर्वर्ती परमपुरुषो निरूप्यत इति संगतिः । तदर्थविचारस्तु—किमक्ष्यन्तर्वर्तितया निर्दिश्यमानः प्रतिविम्बचक्षुरधिष्ठातृजीवानामन्यतमः, उत परमात्मेति । किममृतत्वादयो यथाकथञ्चिन्नेया उत मुख्यतया नेया इति । किं 'कं ब्रह्म खं ब्रह्म' इति प्रकृतस्य सुखविशिष्टस्य ब्रह्मण उपासनस्थानविधानार्थं संयद्वामत्वादिगुणविधानार्थञ्चान्तरक्षिणीति निर्देश उत नेति । किं मध्यस्थाग्निविद्यया ब्रह्मप्रकरणविच्छेदोऽस्ति नेति । किमग्निविद्या ब्रह्मविद्याङ्गं नेति । किमग्निविद्याफलं ब्रह्मविद्याङ्गत्वानुगुणं नेति । अत्रायं पूर्वः पक्षः—'य एषोऽक्षिणि पुरुषो दृश्यते' इति प्रसिद्धवन्निर्देशरूपयच्छब्दादेः प्रतीयमानः पुरुषो जीवोऽस्तु, यद्वा चक्षुर्देवतात्वेन श्रूयमाणः सूर्यः, अथवा चक्षुषि दृश्यमाना प्रतिकृतिरेवास्त्विति । निराकरोति—नेति । कुत इत्यत्र श्रूयमाणपरमपुरुषासाधारणगुणानुपपत्तिं हेतुमाह—एतदिति । एतद्ब्रह्मेति—ब्रह्मत्वम् । एतदमृतमिति—अमृतत्वम् । इदमभयमिति अभयत्वम् । कमिति—सुखरूपत्वम् । खमिति—आकाशवद्विपुलत्वम् । संयदिति—अनुकूलत्वम् । अन्यैश्च तादृशैः परमपुरुषलिङ्गैः स्थितिनियतिबलात्—'दृश्यते' इति वर्तमाननिर्देशेन चक्षुष्यवस्थाननियतत्वं ब्रह्मनिष्ठानामेवासाधारण्येन प्रतिपाद्यमानार्चिरादिमार्गगमनस्यात्रोपदेशाच्च परमपुरुष एवायमक्ष्यन्तरः पुरुष इति निर्णीयते ॥ ८८ ॥

पद०—यद्वृत्तादेरित्यादि । यद्वृत्तादेर्य एषोऽक्षिणि पुरुष इति श्रूयमाणस्तु जीवः—'य एषोऽक्षिणि पुरुषो दृश्यते' इति च्छान्दोग्यश्रुतौ प्रसिद्धवन्निर्देशरूपयच्छब्दादे र्ज्ञापकात् 'अक्षिणि' चक्षुषि, 'य एष पुरुषो दृश्यते' योऽसौ पुरुषात्मा दृश्यत इति श्रूयमाणस्तु जीवात्मा । उन्मीलितनिमिषित-

चक्षुरुद्वीक्षणेन शरीरे जीवात्मनः स्थितिगतिनिश्चयदर्शनादिति भावः । यद्वा—पक्षान्तरे । य एषो ऽक्षिणि पुरुष इति श्रूयमाण इत्युद्देश्यांशः सर्वविधेयविकल्पेष्वनुवर्तयितव्यः । अक्ष्णोर्देवता अर्कः— ‘ आदित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशत् ’ इति चक्षुर्देवताभूतः सूर्यो वा । अथवा—पक्षान्तरे । तत्र— अक्षणि । दृश्या—दृश्यमाना । प्रतिकृतिर्वा—पुरुषान्तरप्रतिकृतिर्वाऽस्तु । तस्यां ‘ दृश्यते ’ इत्यस्योपपन्नत्वादितिभावः । इति चेन्न—इतिशङ्क्यते चेत् तन्न सम्भवति । एतद्ब्रह्म एतदेवामृतमभयं इदं कं खं इत्याद्यधीतेः—अनन्तरवाक्ये ‘ एतदमृतमभयम्, एतद्ब्रह्म प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म ’ इत्यादिश्रुतेः । एतच्छ्रुत्युक्तानाममृतत्वाभयत्वनिरतिशयबृहत्त्वापरिच्छिन्नसुखरूपत्वादिधर्माणां परमात्म- भिन्नेष्वसम्भवादित्यर्थः । संयद्वामत्वमुख्यैः—‘ एतं संयद्वाम इत्याचक्षते एष उ एव वामनिः एष उ एव भामनिः ’ इत्यादिश्रुत्युक्तैः सर्वकल्याणगुणाश्रयत्वरूपसंयद्वामत्वस्वाश्रितशोभनप्रापकत्वरूप- वामनित्वसर्वलोकव्यासदीप्तिमद्विग्रहयुक्तत्वरूपभामनित्वादिगुणैः । स्थितिनियतिबलात्—‘ यश्चक्षुषि तिष्ठन् ’ इति श्रुतिलब्धात् चक्षुष्यवस्थाननैयत्यात् । अर्चिराद्युक्तितश्च—ब्रह्मविदसाधारणगमनस्या- र्चिरादिमार्गस्याक्षिपुरुषविद्यानिष्ठगन्तव्यतया प्रतिपादनाच्च । इति चेन्नेति योजना ॥ ८८ ॥

स्वातन्त्र्योत्तंसितासु श्रुतिषु न फलदस्यैव वेद्यत्ववादः
कल्याणालोकनादेरिव विधिबलतो वेदनस्यार्थवत्त्वात् ।
तस्मादक्ष्यन्तरस्थः प्रतिकृतिपुरुषो युज्यते पूर्वपक्षे
सेयं पूर्वापरास्वप्यधिकृतिषु यथासंभवं नीतिरूह्या ॥ ८९ ॥

चिन्ता०—अत्र कश्चिच्चोदयति--इह खलु मोक्षार्थमुपास्य एव चक्षुषि प्रतिपाद्यते, चक्षुषि दृश्यमानः
प्रतिकृतिपुरुषः स्वयं फलप्रदो न भवति अफलप्रदस्य कथमुपास्यत्वमिति । अस्योत्तरमाह—स्वातन्त्र्येति ।
अयमत्राशयः—श्रुत्युक्तार्थे यथाश्रुति विश्वास एव करणीयः, दर्पणदर्शनात् मङ्गलं पापण्डिदर्शनादमङ्गल-
मिति श्रुत्योच्यते तत्र किंनियामकम्? श्रुतिस्वातन्त्र्यमेव, तथा ज्योतिष्टोमादिकं धर्मो ब्रह्महत्यादि-
कमधर्म इति चोच्यते, एवं सर्वत्र धर्माधर्मेषु श्रुतिस्वातन्त्र्यमेव पुरस्कुर्महे नपुनः कामपि युक्तिम्,
एवमत्रापि मिथ्याभूतप्रतिबिम्बोऽस्तु तद्दर्शनमेव फलं यच्छति यथा मिथ्यात्वेऽपि दर्पणस्थस्वात्म-
प्रतिबिम्बदर्शनात् मङ्गलावाप्तिः, एवमक्षिपुरुषस्यैवोपास्यत्वे तदुपासनात् मङ्गलावाप्तिरिति सुसंगतमेतदिति ।
अयमर्थः—स्वातन्त्र्येण श्रुतेः स्वाभाव्यम् । स्वातन्त्र्यारूढासु श्रुतिषु फलदस्यैव वेद्यत्वमिति व्यवहार-

नियमो नास्ति, अफलदस्यापि वेद्यत्वमस्तीत्यत्र दृष्टान्तमाह—कल्याणेति । कल्याणवस्त्ववलोकनादेरिव शास्त्रबलतस्तत्तद्वस्त्ववलोकनस्यैव फलदत्वात्, न पुनर्वेद्यस्य । नह्याज्यपण्यस्त्रीकपिलादिकमवलोकयितुः फलं ददाति, अपि तु तत्तदवलोकनमेव । एतदाह तस्मादिति—एवंयुक्तियुक्तत्वात् । अक्ष्यन्तरस्थः प्रतिकृतिपुरुषो ध्येयतया पूर्वपक्षिणा कल्पयितुं युज्यत इति एवं समाधानपरिपाटी न केवलमस्मिन्नेवाधिकरणे सर्वेष्वधिकरणेष्वयोग्यार्थपरिकल्पनायां यथासंभवं परिहारत्वेन कल्पनीयेत्याह—सेयमिति ॥ ८९ ॥

पद०—स्वातन्त्र्येत्यादि । स्वातन्त्र्योत्तंसितासु—स्वातन्त्र्यारूढासु । 'यद्वेदात्प्रभुसंमितादधिगतं शब्दप्रमाणाच्चिरम्' इत्युक्तरीत्योद्दण्डमहाराजवत् स्वातन्त्र्येण वेदः किमपि विदधाति, न तत्र युक्तत्वायुक्तत्वविचारः कार्य इति भावः । श्रुतिषु—वेदेषु । वेद्यत्ववादः—उपास्यत्वविधिः । फलदस्यैव न—फलप्रदानसमर्थदेवतादिवस्तुन एवेति न नियमोऽस्ति । विधिबलतः—चोदकप्रामाण्यबलात् । कल्याणालोकनादेरिव—-

'सुवर्णं चन्दनं रत्नं पञ्चगव्यानि रोचना । प्रियङ्गु सर्षपं क्षौद्रं मङ्गलानि प्रयुञ्जते ॥'
'राजानं ब्राह्मणं कन्यां श्वेतपुष्पाणि चन्दनम् । धेनुं सवत्सां वृषभं मृत्तिकां गोमयं तिलान् ॥
सुवर्णमक्षतान्रत्नं दूर्वां दधि घृतं मधु । शम्यश्वरथार्कदहनान् हरिद्रां लवणं गुडम् ॥
गोरोचनां मृदङ्गं च दर्पणं धान्यमेव च । जीरकं राजमाषं च प्रातः पश्येत्सदा बुधः ॥'

इत्यादिवचनविहितसुवर्णचन्दनरत्नदर्पणादिमङ्गलद्रव्यावलोकनस्पर्शनादेर्मङ्गलहेतुत्ववत् । वेदनस्यार्थवत्त्वात्—वस्तुमिथ्यात्वेऽपि तदुपासनस्य फलसाधनत्वात् । तस्मात्—एवमुपपादनात् । पूर्वपक्षे—अन्तराधिकरणपूर्वपक्षोपन्यासे । अक्ष्यन्तरस्थः प्रतिकृतिपुरुषो युज्यते—चक्षुरन्तरवर्ती पुरुषान्तरप्रतिबिम्बात्मा पुरुष उपास्यकोटिविकल्पेष्वन्यतमतया निवेशमर्हत्येव । सेयं नीतिः—-श्रुत्युक्तेऽर्थे यथाश्रुति प्रतिपत्तव्यं नपुनस्तत्र युक्तायुक्तविचारकथा प्रचारणीयेत्ययं न्यायः । पूर्वापरास्वधिकृतिष्वपि—-इतःपूर्वाधिकरणेषु इत उपरितनाधिकरणेष्वपि । यथासम्भवम्—औचित्येन । ऊह्या—पर्यालोच्यताम् ॥ ८९ ॥

पूर्वन्यायेऽग्निविद्या पुरत उपनता मध्यतस्त्वत्र तस्मात्
तद्वन्न ब्रह्मविद्यानुगतिरिति भवेदाक्षिविद्या ततोऽन्या ।
मैवं विच्छित्तिरङ्गैर्नहि भवति मिता चाङ्गताऽनेकधाऽस्याः
प्रोक्तं च ब्रह्मविद्यानुगुणमिह फलं प्राक्च न ब्रह्मदृष्टिः ॥ ९० ॥

इत्यन्यराधिकरणम् ॥ १४ ॥

चिन्ता०---पूर्वाधिकरणवैषम्येण पूर्वपक्षोत्थानोक्तिपूर्वकं पूर्वपक्षसिद्धान्तावारचयति–पूर्वेति । पूर्वाधि-
करणविषयभूतायां कठवल्ल्यामग्निविद्याया ब्रह्मविद्यामपेक्ष्य पूर्वमेवोक्तत्वादग्निविद्याया ब्रह्मविद्याविच्छेद-
शङ्कावकाशो माऽस्तु, अत्र तु ब्रह्मविद्यामध्यपातित्वादग्निविद्याया विच्छेदकत्वमस्तु, तेन पूर्वं ब्रह्मविद्या मध्ये-
ऽग्निविद्या अन्ततो जीवप्रकृत्यादिविद्येति विद्याभेदोऽस्ति, अतो 'य एषोऽक्षिणि' इति प्रतिपाद्यमानः पूर्वं
प्रतिपन्नब्रह्मणो ऽन्य इति पूर्वः पक्षः । राद्धान्तमाह-मैवमिति । नहि स्वाङ्गं स्वव्यवधायकमिति न्यायानुसारेण
पूर्वपक्षोक्तमर्थमन्यथयति-विच्छित्तिरिति । अग्निविद्याया ब्रह्मविद्याङ्गत्वादित्यर्थः । कथमङ्गत्वमित्यत्राह-
मितेति । यद्यपि फलवत्सन्निधावफलं तदङ्गमितिन्यायो विद्यते, अथाप्यङ्गानामस्ति फलम् , तेषां
प्रधानफलेनैव फलवत्त्वस्य तान्त्रिकैरेवोक्तत्वात् , अथापि फलान्तरं नास्तीति चेत् तदप्यस्ति;
अवान्तरापूर्वादेरङ्गफलत्वात् , नह्यवान्तरापूर्वादेरङ्गफलत्वम् , दृष्टफलस्यापरित्याज्यत्वात् । वैतुष्यादेर-
वघातफलत्वेन तान्त्रिकैरेवाभिधानात् । तत्त्ववान्तरापूर्वरूपत्वेनाव्यवहितं फलमिति चेत् एवं तर्हि अत्रापि
तादृग्विधं फलमस्त्येव तत्किमिति चेत् यदग्निविद्यायां श्रूयमाणं ब्रह्मविद्यानुकूलं फलं सर्वायुःप्राप्त्या-
दिकम् । तर्ह्यङ्गस्याफलत्वं किमुच्यते । यदङ्गिप्रतिकूलं यच्च तदनपेक्षितं तदुभयमङ्गफलं न स्यादि-
त्यर्थः । अत्र ब्रह्मविद्यानुकूलफलस्याग्निविद्यायां श्रूयमाणत्वात् ब्रह्मविद्याप्रकरणपठितत्वाच्च सिद्धमग्नि-
विद्याया ब्रह्मविद्याङ्गत्वम् । ननु ब्रह्मविद्यायां सत्यामेवाग्निविद्यया ब्रह्मविद्याविच्छेदो नास्तीति वक्तुं
शक्यते, पूर्वं तु दृष्टिविधिमात्रमेव, कथं विद्यानुवृत्तिरत्रोच्यत इत्यत्राह—प्रागिति । पूर्वत्रापि ब्रह्मविद्यैव
नपुनर्दृष्टिविधिरित्यर्थः । अत्रातीतेषु त्रिष्वधिकरणेषु अर्थभेदात् वाक्यभेदमाशङ्क्यार्थैक्यादेकवाक्यत्वं
समर्थितम् । तथा च त्रयाणामेकवाक्यत्वादेकपेटिकात्वं भवति ॥ ९० ॥

इत्यन्तराधिकरणम् ॥ १४ ॥

पद०—पूर्वन्याय इत्यादि । पूर्वन्याये—इतःपूर्वतनेऽत्रधिकरणे । अग्निविद्या पुरत-उपनता—नाचिकेताग्निविद्या ब्रह्मविद्यायाः पूर्वमेवोपदिष्टा । अत्र तु—अक्ष्यन्तराधिकरणे तु । मध्यत-उपनता—ब्रह्मविद्यामध्ये उपदिष्टा । तस्मात्—पूर्वाधिकरणवैषम्यात् । तद्वत् ब्रह्मविद्यानुगतिर्न—पूर्वाधिकरण इव ब्रह्मविद्याया अनुगतिरनुस्यूतिर्न । किन्तु मध्यप्रविष्टयाऽग्निविद्यया ब्रह्मविद्याया विच्छेदोऽस्तीति भावः । इति—अस्माद्धेतोः । अक्षिविद्या ततोऽन्या—प्रथमं ब्रह्मविद्या, ततः परमग्निविद्या किल, ततः परमुपदिश्यमानाऽक्षिविद्या ब्रह्मविद्या न भवितुमर्हति, अपि तु भिन्नैवेयमन्यफला विद्या । मैवम्—एवं मा शङ्किष्ठाः । अङ्गैर्विच्छित्तिर्न भवति हि—स्वाङ्गैः स्वव्यवधानं न भवतीति प्रसिद्धं खलु । 'नहि स्वाङ्गं स्वव्यवधायकम्' इति न्यायवादिवचनादिति भावः । तथा चाग्निविद्याया ब्रह्मविद्याङ्गत्वात् न तया ब्रह्मविद्याव्यवधानं शङ्कितुं युक्तमिति भावः । अस्या अङ्गता चानेकधा मिता—अस्या अग्निविद्याया ब्रह्मविद्याङ्गत्वमसमासत्रब्रह्मविद्यामध्यगतत्वब्रह्मविद्याधिकृतोपकोसलोद्देश्यकोपदेशकर्मत्व ब्रह्मविद्यासमुच्चयोपदेशादिगिरनेकहेतुभिः प्रामीयतेत्यर्थः । इह ब्रह्मविद्यानुगुणं फलञ्च प्रोक्तम्—अग्निविद्यावसाने ब्रह्मविद्यानुकूलमेव फलमुक्तम्, नतु ब्रह्मविद्याननुकूलमित्यर्थः । तथा सति ह्यनङ्गत्वमिति भावः । फलवत्संनिधावफलं तदङ्गमितिन्यायस्य यदङ्गिप्रतिकूलं यच्च तदनपेक्षितं तदुभयमङ्गफलं न भवतीत्येवमर्थपरत्वादिति हृदयम् । प्राक्च ब्रह्मदृष्टिर्न—पूर्वत्रापि ब्रह्मविद्यैव, न पुन र्दृष्टिविधिः । अतस्तद्रीत्या दृष्टिविधिरूपत्वं च नाशङ्कनीयमिति भावः ॥ ९० ॥

इत्यन्तराधिकरणम् ॥ १४ ॥

## अन्तर्याम्यधिकरणम् ॥ १५ ॥

सूत्रम्-अन्तर्याम्यधिदैवाधिलोकादिषु तद्धर्मव्यपदेशात् ॥ ५१ ॥

अन्तर्यामी स जीवो बहुविधकरणायत्तधीवृत्त्यनूक्ते-
र्नान्यो द्रष्टेति चोक्तेरिति यदि न नियन्त्रन्तरस्य व्युदासात् ।
द्रष्टृत्वाद्यं तु तत्तद्विषयघटितधीरूपमीशे हि मुख्यं
तद्धर्माः काण्वमाध्यन्दिनपरिपठितास्तस्य चात्मा शरीरम् ॥ ११ ॥

चिन्ता०—अत्र पेटिकासंगतिस्तावदुच्यते । पूर्वमुपासकशरीरस्थहृदयादिपरिमितदेशावच्छिन्नः परमपुरुष उपास्यतया प्रतिपन्न इति त्रयाणामधिकरणानां संबन्ध उक्तः । उत्तरत्र त्रिष्वधिकरणेषु विपुलदेशावस्थितः परमात्मोपास्यतया प्रतीयत इति विभागः । अक्ष्यधिकरणान्तर्याम्यधिकरणयोस्तु संगतिर्भाष्यकारैरेवोक्ता "यश्चक्षुषि तिष्ठन्नित्यन्तर्याम्यधिकरणे सूचितं परमपुरुषस्य चक्षुष्यवस्थानं 'य एषोऽक्षिणि पुरुषो दृश्यते' इत्यक्ष्यधिकरणे सूचितमिति, अधुना चक्षुष्यवस्थानं परमात्मनो जीवस्य वेति चिन्त्यते" इति । आचार्यास्तु प्रकारान्तरेणापि संगतिमाहुरन्तः पूर्वपक्षसिद्धान्तौ संग्रहेण प्रकटयन्ति—अन्तर्यामीति । तदर्थविचारस्तु—किमन्तर्यामी प्रत्यगात्मा उत परमात्मेति । किं द्रष्टृत्वं 'अदृष्टो द्रष्टाऽश्रुतः श्रोता' इत्यादिद्रष्टृत्वादिश्रवणमन्तर्यामिणि जीवभावमवगमयति नेति । किं द्रष्टृत्वं जीवस्यैव उत परमात्मनोऽपि संभवति । किं द्रष्टृत्वादिकं चक्षुरादिजन्यज्ञानकर्तृत्वमुत रूपाद्यपरोक्षज्ञाना-श्रयत्वमिति । 'अदृष्टो द्रष्टा' इत्यादिना पुरुषस्य शरीरकरणायत्तधीवृत्तिद्रष्टृत्वादिकमुच्यते । तेन पूर्वेषु विद्याविशेषेष्वस्तु परमात्मा प्रतिपाद्यः । अन्तर्यामिब्राह्मणे पुनर्न परमपुरुषः प्रतिपाद्यः । तद्विरुद्ध-करणायत्तधीवृत्त्यनूक्तेर्दर्शनादिति पूर्वाधिकरणोक्ताक्षेपेण संगतिः । किञ्च 'नान्योऽतोऽस्ति द्रष्टा' इति साक्षादेव तस्माज्जीवादतिरिक्तस्य परमपुरुषस्य निषेधो दृश्यते । स च पूर्वाधिकरणोक्ताक्षेपः, अनेनैव पूर्वपक्षोपन्यासश्च संक्षेपतः कृतः । पूर्वपक्षं प्रतिक्षिपति—नेति । तत्र हेतुमाह—नियन्त्रिति । लोके

हि कश्चिदर्थमुक्त्वाऽन्यप्रयोगे तत्सदृशस्य वा सजातीयसंनिकृष्टयोरन्यतरस्य वा तेन प्रतिपादनं प्राप्तमिति वदन्ति प्राज्ञाः। उदाहरन्ति च 'एष वाव प्रथमो यज्ञो यज्ञानां यो ज्योतिष्टोमः' इत्युक्त्वा पुनरपि 'तेनानिष्ट्वा नान्येन यजेत' इति च तत्सदृशवस्त्वन्तरयजनविषय एव योग्यत्वादुच्यते, न पुनर्यज्ञान्तरमात्रम्। नह्यत्र यज्ञशब्दवाच्यत्वमात्रेण ब्रह्मयज्ञादिकमपि व्यावर्त्यते। एवमिष्टौ 'समानमितरत् श्येनेन' इत्यादौ इष्टिवैशेषिकधर्माणामेव पूर्वप्रकृतत्वादितरशब्देन श्येनवैशेषिकधर्म एवोच्यते, न पुनः 'प्रकृतिवद्विकृतिः कर्तव्या' इति चोदकप्राप्ताः सामान्यधर्माः। एवमग्रजः समागतो नान्य इत्युक्ते तत्संनिकृष्टः स्वानुज एव प्रतीयते। इत्थं अद्वितीयादिशब्देष्वपि भाव्यम्। एवं 'नान्योऽतोस्ति द्रष्टा' इत्यत्रापि 'अदृष्टो द्रष्टा' इत्यादिप्रतिपन्नपुरुषसदृशनियन्त्रन्तरमेव निषिध्यते नपुनः पुरुषमात्रम्। नहीश्वरस्येश्वरान्तरमस्ति। यत्तु द्रष्टृत्वाद्यं करणायत्तज्ञानवत्त्वस्वरूपत्वादीश्वरे न संभवतीत्युक्तम्, तत् समाधत्ते—द्रष्टृत्वाद्यमिति। नह्यत्र द्रष्टृत्वं चक्षुर्जन्यज्ञानवत्त्वम्, अपितु रूपविषयज्ञानवत्त्वमिति विषयतो निरूप्यते न पुनः करणतः। एवं श्रोतृत्वमिति शब्दविषयज्ञानवत्त्वमेव कथ्यते नपुनः श्रोत्ररूपकरणसापेक्षत्वम्। तेनेश्वरस्य तत्तत्करणसापेक्षत्वाभावेऽपि स्वाभाविकतत्तद्विषयसाक्षात्करणादिव्यवहारो युज्यते। किञ्चेश्वरत्वनियामका धर्मा विश्वनियमनादयः काण्वपाठे माध्यन्दिनपाठेच परिपठिताः सर्वद्रष्टुरीश्वरत्वे नियामकानि लिङ्गानीत्याह—तद्धर्मा इति। तस्य चात्मा शरीरमिति—उक्तमन्यत् सर्वमस्तु, इदमेव समाधानमीश्वरत्वनियामकं यत् पृथिव्यादिरिव 'यस्यात्माशरीरम्' इति जीवोऽपीश्वरस्य शरीरतया निर्दिश्यत इति। अतो जीवादन्य एवान्तर्यामीति सिद्धम्॥ ९१॥

पद०—अन्तर्यामीत्यादि। अन्तर्यामी—यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरः' इत्यादिवाजसनेयकश्रुतौ 'एष त आत्माऽन्तर्याम्यमृतः' इति प्रतिपन्नोऽन्तर्यामी। स जीवः—सर्वशरीरेषु आत्मतया वर्तमानः प्रसिद्धो जीवात्मैव। कुतः? बहुविधकरणायत्तधीवृत्त्यनूक्तेः—'द्रष्टा श्रोता' इत्यादिवाक्यशेषे नानाविधचक्षुरादीन्द्रियजन्यबुद्धिवृत्तिमत्तयाऽनुवादात्। किंच, नान्यो द्रष्टेत्युक्तेश्च—'नान्योऽतोऽस्ति द्रष्टा' इत्यादिना 'अतः' करणायत्तधीवृत्तिमतो द्रष्टुः 'अन्यः' ईश्वरादिः 'न' नान्तर्यामी इत्युपपादनाच्च। इति यदि—एवं शङ्क्यते यदि। न—न तद्युक्तम्। नियन्त्रन्तरस्य व्युदासात्—'यं पृथिवी न वेद' 'यमात्मा न वेद' इत्यादिभिर्वाक्यैः पृथिव्यात्मादिनियाम्यैरनुपलभ्यमान एव नियमयतीति यत्पूर्वमुक्तम्, तदेव 'अदृष्टो द्रष्टाऽश्रुतः श्रोता' इति निगमय्य 'नान्योऽतोऽस्ति द्रष्टा' इत्यादिना तस्य नियन्तुर्नियन्त्रन्तरस्यैव निषिध्यमानत्वात्। द्रष्टृत्वाद्यं तु तत्तद्विषयघटितधीरूपमीशे मुख्यं हि—'द्रष्टा श्रोता' इत्यादिश्रुत्यवगतं द्रष्टृत्वादिकं रूपशब्दादिविषयक-

बुद्धिविशेषात्मकं सत् करणानायत्तज्ञानेऽपि परमात्मनि मुख्यमेव हि भवति। नहि चक्षुर्जन्यज्ञानवानेव द्रष्टा, श्रोत्रजन्यज्ञानवानेव श्रोतेति च व्यवहार्य इति राजाज्ञेति भावः। काण्वमाध्यन्दिनपरिपठिता-स्तद्धर्माः—यदेकस्यैव सतः सर्वलोकसर्वभूतसर्वदेवादिनियमनम्, एवमादयः काण्वमाध्यन्दिना-ख्याध्यापकविशेषपरिपठिताः परमात्मैकयोग्या धर्माश्च परमात्मत्वनिर्णायकाः सन्ति। तस्यात्मा शरीरं च—तस्य अन्तर्यामिणः, आत्मा जीवात्मा शरीरं च शरीरमिति चोच्यते। 'य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरम्' इत्यादिश्रुतेरित्यर्थः। न हि जीवस्य जीवः शरीरं भवितुमर्हतीति भावः ॥ ९१ ॥

स्थानैक्यादत्र शाखाद्वयपरिपठितावात्मविज्ञानशब्दा-
वेकार्थावित्यकम्प्यं तदपि कथयतो बुद्धिमेवेत्यपार्थम्।
लोकाम्नायप्रसिद्धयोरनुगमत इमौ चेतने ह्येकतानौ
बाधः केनापि नास्मिन् भवति च स त इत्यादिभिः सामरस्यम् ॥९२॥

इत्यन्तर्याम्यधिकरणम् ॥ १५ ॥

चिन्ता०—कश्चिदाह—यद्यप्यात्मविज्ञानशब्दयोरन्योन्यस्थानयोरन्योन्यपाठादेकार्थत्वमस्ति तथापि जीवपरत्वं नास्ति उभाभ्यामपि शब्दाभ्यामन्तःकरणस्यैवाभिधानात् तेन कथमत्र जीवपरमात्मनोः शरीरात्मभावेन भेदः प्रतीयत इति, तदिदमुच्यते—स्थानेति। प्रतिक्षिपति—अपार्थमिति। हेतुमाह—लोकेति। शब्दार्थनिर्णये लोकवेदप्रसिद्धिरेव नियामिका। आत्मविज्ञानशब्दौ लोकवेदयोश्चेतना-साधारणतया निर्णीतौ। अतो नान्तःकरणपरावित्यर्थः। तयोर्गौणी वृत्तिरस्त्विति चेत्; नेत्याह—बाध इति। बाधे सत्येव ह्यौपचारिकी वृत्तिराश्रयणीया, अत्र त्वात्मविज्ञानशब्दयोर्जीवपरत्वे बाधो नास्तीत्यर्थः। न केवलं बाधाभाव एव, अपि तु प्रतिपर्यायमनुग्राहकमेव निगमनवाक्यमित्याह—भवतीति। त इति—बोध्यशरीरभूतजीवनिर्देशः। 'अन्तर्याम्यमृतः' इति शरीरगतदोषासंस्पृष्टोऽन्तर्यामी प्रतीयत इति व्यक्तमेव भेदः प्रतीयते जीवपरमात्मनोः ॥ ९२ ॥

इत्यन्तर्याम्यधिकरणम् ॥ १५ ॥

पद०—स्थानैक्यादित्यादि । अत्र—वाजसनेयकेऽन्तर्यामिब्राह्मणे । शाखाद्वयपरिपठितौ—काण्वमाध्यन्दिनाख्यशाखाद्वये एकस्यां 'आत्मनि' इति अन्यस्यां 'विज्ञाने' इति च पठितौ । आत्मविज्ञान-शब्दौ स्थानैक्यात्—'यः पृथिव्याम्' इत्यादिषु समसङ्ख्येषु पर्यायेषु गतेषु तत एकस्मिन्पर्याये आत्म-विज्ञानशब्दयोः शाखाभेदेन श्रवणात् स्थानैक्यं तस्मात्, यत्स्थाने एकस्यां शाखायामात्मशब्दः पठित-स्तत्स्थान एव शाखान्तरे विज्ञानशब्दश्रवणादितियावत् । एकार्थावित्यकल्प्यम्—यदर्थक आत्मशब्द-स्तदर्थकएव विज्ञानशब्द इति निश्चलमुपपादनम् । तदपि—स्थानैक्यादैकार्थ्यावश्यकत्वमङ्गीकृत्यापि । बुद्धिमेव—अन्तःकरणमेव । इति—आत्मविज्ञानशब्दार्थत्वेन । कथयतः—केवलधार्ष्ट्येन जल्पतः । अपार्थम्—अपकृष्टार्थकं वचनम् । अप्रसिद्धार्थकं भवेदित्यर्थः । लोकाम्नायप्रसिद्धयोरनुगमत इमौ चेतने ह्येकतानौ—'आत्मा यत्ने धृतौ जीवे' 'आत्मा तु स मकारेण पञ्चविंशः प्रकीर्तितः' 'आत्मानं रथिनं विद्धि' 'विज्ञानं यज्ञं तनुते' 'विज्ञानघन एव' 'विज्ञानात्मा' इत्यादिलोकवेदप्रसिद्ध्यनुस्यूति-बलात् एतावात्मविज्ञानशब्दौ चेतनैकवर्तिनाववगम्येते हि । अस्मिन् केनापि बाधो न—अस्मिन्नर्थे प्रबलेन केनचित्प्रमाणेन प्रतिरोधोऽपि न भवति । प्रत्यक्षबाधेन हि 'आदित्यो यूपः' इत्यत्र गौणी वृत्तिराश्रिता । अत्र न तथा प्रमाणबाधः ; येन मुख्यार्थप्रहाणेन गौणार्थकत्वकल्पनेतिभावः । स त इत्यादिभिः सामरस्यं च भवति—'स त आत्माऽन्तर्याम्यमृतः' इति खलु वाक्यनिगमनम् । अत्र 'ते' इति शरीरभूतजीवनिर्देशः, 'अन्तर्याम्यमृतः' इति शरीरगतदोषासंस्पृष्टोऽन्तर्यामी प्रतीयते, एवं च पूर्वोक्तरीत्याऽऽत्मविज्ञानशब्दि-तस्य जीवात्मनः परमात्मशरीरत्वाङ्गीकारे सत्येव प्रतिपर्यायं निरुक्तार्थकनिगमनवाक्यसामरस्यं च सिध्यति । अतोऽप्यात्मविज्ञानशब्दार्थो जीवात्मैवेतिभावः ॥ ९२ ॥

इत्यन्तर्याम्यधिकरणम् ॥ १५ ॥

## अदृश्यत्वादिगुणकाधिकरणम् ॥ १६ ॥

सूत्रम् । अदृश्यत्वादिगुणको धर्मोक्तेः ॥ ५४ ॥

दृश्यत्वादेर्निषेधो विकृतिमति भवत्यक्षरे सन्निकर्षात्
पञ्चम्युक्ताक्षरं तत्तदवधिकपरः पञ्चविंशोऽस्तु मा भूत् ।
सर्वज्ञत्वादिदृष्टेः प्रथमसमुदितं त्वक्षरं ब्रह्म शुद्धं
पश्चादुक्तं तु जीवादिकमवधितया भेदतस्तत्परोक्तेः ॥ ९२ ॥

इत्यदृश्यत्वादिगुणकाधिकरणम् ॥ १६ ॥

चिन्ता०—अत्र भाष्ये संगतेः स्फुटत्वादधिकरणमेवारचयति—दृश्यत्वादेरिति । इयं किलात्र संगतिः—पूर्वाधिकरणे परमपुरुषस्य जीवस्यापि नियन्तृत्वेन 'अदृष्टो द्रष्टा' इति द्रष्टृत्वेनाभिधानाज्जीवो नान्तर्यामीत्युक्तम् । इह तु न तादृशं द्रष्टृत्वादिकमुच्यते । अतः प्रकृतिर्जीवो वा अदृश्यत्वादिगुणकमक्षरमिति । तदर्थविचारस्तु—'अथ परा यया तदक्षरम्' इत्यादिवाक्येऽदृश्यत्वादिगुणकमक्षरात्परतः परश्च किं प्रधानपुरुषौ, उत परमात्मेति । पृथिव्यादिसंबन्धितया दृष्टं स्थूलत्वादिकं निषिध्यमानं पृथिव्यादिसजातीयमचेतनमाश्रयमुपस्थापयति उत नेति । किं 'यथोर्णनाभिः सृजते गृह्णते च' इत्यादिदृष्टान्तोपादानमचेतनाश्रयोपस्थापकं नेति । किं 'अक्षरात्संभवतीह विश्वम्' इत्यत्र विश्वशब्दश्चेतनाचेतनप्रपञ्चमुपस्थापयति, उताचेतनमात्रमिति । अत्रायं पूर्वपक्षः—पूर्वं विश्वनियन्तृत्वेनान्तर्यामी परमात्मास्तु, इह पुनः परविद्याप्रसङ्गे 'यत्तदद्रेश्यम्' इत्यादिना मूलप्रकृतिर्जीवो वाऽभिधीयते, 'अद्रेश्यम्' इति यत्र श्रूयते, अद्रेश्यत्वमदृश्यत्वम्, तेन प्रकृतिकार्यपृथिव्यादिषु दृष्टदृश्यत्वनिषेधः सन्निकर्षात् प्रकृतिमेव उपस्थापयति न पुनरसंनिकृष्टं परमात्मानम्, यथा क्षत्रब्राह्मण इति संनिकृष्टं क्षत्रियमेव कथयति न पुनरसंनिकृष्टानन्यान्, अथवा अक्षरशब्दोऽर्थसामर्थ्याज्जीवं कथयतु तस्यापि प्रकृत्यधिष्ठातुः प्रकृतिद्वारा दृश्यपृथिव्यादिकार्यधीनिर्णेतव्यत्वात्, उत्तरत्र 'अक्षरात्परतः परः' इति पञ्चम्युक्ताक्षरशब्दः परतोऽक्षरादिति सामानाधिकरण्येन तदेवाक्षरमाह । तस्मात्परइति तु जीव एवाभिधीयते । तेनात्र प्रकृतिपुरुषा-

तिरिक्तः परमपुरुषो नास्तीति। राद्धान्तमारभते—मा भदिति। हेतुमाह—सर्वज्ञत्वादिदृष्टेरिति। 'यः सर्वज्ञः सर्ववित्' इति सर्वज्ञत्वादेः परमात्मासाधारणगुणस्यात्र दृष्टेः, प्रथमसमुदितं त्वक्षरं परमपुरुष एव। तर्हि 'अक्षरात्परतः परः' इति द्वितीयाक्षरशब्दस्य कोऽर्थः ? प्रकृतिरेव। 'अक्षरात्' प्रकृतेः 'परतः' जीवात् 'परः, परमपुरुष इति वाक्ययोजना। अत्र जीवादिकमित्युक्त्या जीवोऽप्यक्षरशब्दवाच्यः, तदा समानाधिकरणे पञ्चम्यौ प्रकृतेः परतोऽक्षराज्जीवात्पर इति। तेन प्रकृतिपुरुषाभ्यां परः परमपुरुष एवात्रोच्यते ॥ २३ ॥

इत्यदृश्यत्वादिगुणकाधिकरणम् ॥ १६ ॥

पद०— दृश्यत्वादेरित्यादि। दृश्यत्वादेर्निषेधः—मुण्डकोपनिषदि 'अथ परा यया तदक्षरमधिगम्यते यत्तदद्रेश्यमग्राह्यम्' इत्यादिवाक्ये 'अद्रेश्यम्' इत्यस्य अदृश्यमित्यर्थकतया दृश्यत्वनिषेधो लब्धः, सोऽयं दृश्यत्वनिषेधः, आदिशब्देन ग्राह्यत्वनिषेधः। सन्निकर्षात्—पृथिव्यादिषु दृष्टदृश्यत्वनिषेधसन्निकर्षात्। विकृतिमत्यक्षरे भवति—पृथिव्यादिविकृतिशालिनि प्रकृत्यात्मकेऽक्षरे भवितुमर्हति। पञ्चम्युक्ताक्षरं तत्—उत्तरत्र 'अक्षरात्परतः परः' इतिवाक्ये पञ्चम्युक्ताक्षरं 'अक्षरात्' इति पञ्चमीविभक्त्यन्तत्वेनोक्तं यदक्षरपदं तदर्थभूतमक्षरं वस्तु चात्रोच्यमानं प्रधानमेव। तदवधिकपरः पञ्चविंशोऽस्तु—तस्मिन्नेव वाक्ये अक्षरात्पर इत्यक्षरापेक्षया परत्वाश्रयत्वेन पर इति निर्दिश्यमानश्च जीवोऽस्तु। 'आत्मा तु स मकारेण पञ्चविंशः प्रकीर्तितः' इतिप्रमाणेन प्रकृत्यादिचतुर्विंशतितत्त्वेभ्यः परत्वेन जीवः पञ्चविंश इत्युच्यते। 'परतः' इति तसिलन्तस्य 'अक्षरात्' इति पदं प्रति विशेषणत्वात् स्वविकृतिभ्यः परभूतादक्षरात्प्रधानात् परो जीव इत्यर्थ इति भावः। मा भूत्—इदमाशङ्कनं न सम्भवति। सर्वज्ञत्वादिदृष्टेः—'यः सर्वज्ञः सर्ववित्' इत्यादिना परमात्मासाधारणसर्वज्ञत्वादिगुणप्रतिपादनात्। प्रथमसमुदितमक्षरं तु—'अथ परा यया तदक्षरमधिगम्यते' इति प्रथमवाक्योक्तमक्षरम्। शुद्धं ब्रह्म—स्वरूपस्वभावविकाररूपाशुद्धिरहिततया क्षरणरहितं परं ब्रह्मैव। पश्चादुक्तं तु जीवादिकम्—'अक्षरात्परतः परः' इति वाक्ये पञ्चम्यन्ताक्षरपदवाच्यं तु जीवो वा भवति प्रधानं वा भवति। कुत इति चेत् अवधितया भेदतस्तत्परोक्तेः—पञ्चम्यन्ताक्षरशब्दार्थस्य प्रथमान्तपरशब्दार्थभूतपरत्वनिरूपकत्वात् तद्भिन्नतया तस्मात्परइति परमात्मनः प्रतिपादनाद्धेतोरित्यर्थः। अक्षरशब्दस्य जीवपरत्वे 'परतः' प्रकृत्यपेक्षया परभूतात् 'अक्षरात्' जीवात् 'परः' इतियोजना। अक्षरशब्दस्य प्रधानपरत्वे 'अक्षरात्' प्रधानात् 'परतः' परभूताज्जीवात् 'परः' इति योजना ॥ ९३ ॥

इत्यदृश्यत्वादिगुणकाधिकरणम् ॥ १६ ॥

## वैश्वानराधिकरणम् ॥ १७ ॥

सूत्रम्—वैश्वानरस्साधारणशब्दविशेषात् ॥ ५६ ॥

स्वर्लोकादित्यवाताम्बरसलिलमहीरूपमूर्धादिक्लृप्त्या
ध्येयो वैश्वानरात्माऽस्थिरबहुविषयः शब्दलिङ्गादिसाम्यात् ।
मैवं ब्रह्मेत्यधीतेर्भुवनतनुतया योगतस्त्वग्निशब्दो
वैशिष्ट्याद्वा क्रियाङ्गं स्ववपुपि परधीर्गार्हपत्यादिधीश्च ॥ ९४ ॥

चिन्ता०—पूर्वं 'रूपोपन्यासाच्च' इत्यत्र भगवतो विश्वरूपोपन्यासेन द्युमूर्धत्वादिना भगवतः परमपुरुषत्वं प्रसाधितम्, इदानीं तत्प्रसङ्गात् वैश्वानरविद्या चिन्त्यते । अत्रापि द्युमूर्धत्वादिपरिक्लृप्त्या वैश्वानरः परमपुरुषश्चिन्त्यत इति । तेनात्र त्रिष्वधिकरणेषु कासुचिदुपनिषत्सु परमात्मानमङ्गीकृत्य कस्यांचिदुपनिषदि परमात्मानङ्गीकारेण पूर्वपक्षोत्थानमिति पेटिकाविभागः । पूर्वत्रैकस्मिन्नेव प्रकरणे परमात्मानङ्गीकारपरिक्लृप्त्योत्थानमिति । किमयं वैश्वानर आत्मा परमात्मेति शक्यनिर्णयः, उताशक्यनिर्णय इति संशयपुरस्कारेण पूर्वपक्षः । तदर्थविचारस्तु—किमात्मब्रह्मोपक्रमो वैश्वानरशब्दार्थस्य ब्रह्मभावमवगमयति नेति । किं 'एषोऽग्निर्वैश्वानरः' इत्यग्निसामानाधिकरण्यादग्नित्रयकल्पनात्प्राणाहुत्याधारत्वादग्नि-वैश्वानरशब्दार्थस्य ब्रह्मभावविरोधो नेति । किं 'एषोऽग्निर्वैश्वानरः' इत्यग्निशब्दोऽग्निमात्रपरः, उतान्यवस्थितपरमात्मपर इति । किमनेन वाक्येनाग्निमात्रोपासनं ज्ञाप्यते, उत परमात्मोपासनमिति । अत्र पूर्वपक्षसिद्धान्तयोः फलफलिभावः स्वयमेवोन्नेयः । अत्र पूर्वपक्षसिद्धान्तौ संगृह्य दर्शयति—स्वर्लोकेति । स्वर्लोकादित्यादिमूर्धादिपरिक्लृप्त्या वैश्वानरात्मा ध्येयतया ऽभिधीयते । वैश्वानरशब्दस्तु अस्थिरबहुविषयः अग्निर्वा देवता वेत्यादिरूपेणानेकेष्वर्थेषु लिङ्गादीनां तुल्यत्वादिति । तत्रोदाहरणानि भाष्य एव द्रष्टव्यानि । उक्तमर्थं प्रतिक्षिपति—मैवमिति । तत्र हेतुमाह—ब्रह्मेत्यधीतेरिति । उपक्रमे 'को न आत्मा किं ब्रह्म' इति ब्रह्मशब्दप्रयोगाद् भुवनान्तर्यामिणो विश्वस्यापि प्रपञ्चस्य भगवद्विग्रहत्वेन वैश्वानरविद्याया-मुपवर्णनात् । कथं तर्हि 'स एषोऽग्निर्वैश्वानरः' इत्यग्निशब्दः परमात्मनि प्रयुज्यते ? तत्राह—योगत इति । पक्षान्तरमप्याह—वैशिष्ट्याद्वेति । द्वयी हि गतिरत्र प्रयुज्यमानस्याग्निशब्दस्य । अग्रनयनादिना योगेनेत्येका, सर्वेषामग्रनयनं भगवानेव हि करोति । अपरा त्वग्निवैशिष्ट्येनेति सर्वविशिष्टस्यैव

भगवतः सर्वसामानाधिकरण्यं युक्तमिति वेदान्तसिद्धान्तः। तर्हि किमर्थमत्र स्वशरीरे परमात्मधीः, गार्हपत्यादिपरिकल्पनं च तत्राह—क्रियेति। प्राणाहुत्यादिक्रियाङ्गमित्यर्थः। सा च क्रिया ब्रह्मविद्याङ्गत्वेन परविद्याफलायैव भवतीति भावः॥ ९४॥

पद०—स्वर्लोकेत्यादि। स्वर्लोकादित्यवाताम्बरसलिलमहीरूपमूर्धादिक्लृप्त्या वैश्वानरात्मा ध्येयः—स्वर्लोकसूर्यवाय्वाकाशजलपृथिवीरूपाणां शिरश्चक्षुःप्राणमध्यकायमूत्रस्थानपादानां कल्पनया वैश्वानरात्मा ध्यातव्य इति च्छान्दोग्ये वैश्वानरविद्यायामुच्यते। अत उपरिवैश्वानरशब्द इत्यध्याहारः। वैश्वानरशब्दस्तु शब्दलिङ्गादिसाम्यात् अस्थिरबहुविषयः—अत्रोपास्यपरतया प्रयुक्तो वैश्वानरशब्दस्तु प्रयोगसाम्यादुपक्रमादिगतलिङ्गानां च सर्वेष्वर्थेषु नेयतासाम्याच्चास्थिरबहुविषयः। अयमेक एवेति नियमाभावेनास्थिरबहुविषयकः। जाठरानलमहाभूततृतीयदेवताविशेषपरमात्मरूपचतुरर्थक इत्यर्थः। अतश्च निर्णयानर्ह इत्यर्थः। वैश्वानरात्मा स्थिरबहुविशयः शब्दलिङ्गादिसाम्यात् इत्यपि पाठान्तरं दृश्यते। अस्मिन्पाठे स्थिरबहुविशय इतिच्छेदो युक्तः। स्थिरो निश्चलो दुर्निवार इत्यर्थः, तादृशो बहुः जाठरानलमहाभूततृतीयदेवताविशेषपरमात्मरूपबहुशिरस्कः विशयः संशयो यस्य सः स्थिरबहुविशयः। शब्दलिङ्गादीत्यस्यायमर्थः—वैश्वानरशब्दस्य उपक्रमादिगतलिङ्गानां च साम्यादिति। अस्मिन्पाठे स्वर्लोकादित्यवाताम्बरसलिलमहीरूपमूर्धादिक्लृप्त्या ध्येयो वैश्वानरात्मा शब्दलिङ्गादिसाम्यात् स्थिरबहुविशय इत्येकवाक्यतया योजना। पूर्वपाठ इव वैश्वानर शब्दाध्याहारश्च नास्ति। शब्दलिङ्गादीत्यत्रशब्दपदस्य प्रयोगपरत्वकल्पनं च नापेक्षितम्। अतोऽयमेव पाठः साधुरिति भाति। अत्र चिन्तामणि पङ्क्तिः 'स्वर्लोकेति। स्वर्लोकादित्यादिमूर्धादिपरिक्लृप्त्या वैश्वानरात्मा ध्येयतयाऽभिधीयते। वैश्वानरशब्दस्त्वस्थिरबहुविषयः। अग्निर्वा देवता वेत्यादिरूपेणानेकेष्वर्थेषु लिङ्गादीनां तुल्यत्वादिति तत्रोदाहरणानि भाष्य एव द्रष्टव्यानि' इत्यादिरूपा। मैवम्—एवं मा शङ्किष्ठाः। ब्रह्मेत्यधीतेः—उपक्रमे 'को न आत्मा किं ब्रह्म' इति मीमांस्यवस्तुनि ब्रह्मशब्दपठनात् तस्य च परमात्मन्येव मुख्यवृत्तत्वात्। भुवनतनुतया—परमात्मनः प्रपञ्चशरीरकताऽन्यत्रप्रसिद्धा, अत्रापि वैश्वानरात्मनः प्रपञ्चशरीरकता प्रतिपाद्यते, तया च परमात्मलिङ्गभूतया मैवमितियोजना। अग्निशब्दस्तु योगतः—'स एषोऽग्निर्वैश्वानरः' इति वाजसनेयकश्रुतौ वैश्वानरविद्याप्रकरणे वैश्वानरपदसमानाधिकरणतया श्रुतोऽग्निशब्दस्तु अग्रं नयतीत्यग्निरिति योगव्युत्पत्त्या परमात्मपरो भवति। वैशिष्ट्याद्वा—वा पक्षान्तरे। वैशिष्ट्यात् शरीरशरीरिभावेनाग्निवैशिष्ट्यात्। अग्निशब्दोऽग्नि शरीरकपरमात्मपरो भवति। स्ववपुषि परधीर्गार्हपत्यादिधीश्च क्रियाङ्गम्। स्ववपुषि परधीः—उपासकेन स्वशिरश्चक्षुःप्राणमध्यकायमूत्र-

स्थानपादरूपे स्वशरीरे 'तस्य हवा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मा सन्देहो बहुलो वस्तिरेव रयिः पृथिव्येव पादौ' इति श्रुत्या विधीयमाना सुतेजोनामकद्युलोकात्मकपरमात्ममूर्धविश्वरूपनामकादित्यात्मकपरमात्मचक्षुःपृथग्वर्त्मनामकवाय्वात्मकपरमात्मप्राणबहुलनामकाकाशात्मकपरमात्ममध्यकायरयिनामकसलिलात्मकपरमात्ममूत्रस्थानप्रतिष्ठाख्यनामकपृथिव्यात्मकपरमात्मपादत्वेन कल्पनात्मिका बुद्धिः, स्ववपुषि गार्हपत्यादिधीश्च--उरोलोमहृदयमनआस्यरूपे स्वावयवे 'उर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन आस्यमाहवनीयः' इति श्रुत्या विधीयमाना वेदिर्बर्हिर्गार्हपत्यदक्षिणाग्न्याहवनीयरूपेण कल्पनारूपा बुद्धिश्च। क्रियाङ्गम्--वैश्वानरविद्याङ्गभूतप्राणाहुतिक्रियाङ्गभूता वेदितव्या॥ ९४॥

अन्यस्मिन्नन्यदृष्ट्या न भवति विदुषां क्वापि निश्श्रेयसाप्ति-
स्तस्माद्वैश्वानरोऽसौ न पर इति फलं चान्नसिद्ध्यादि मैवम्।
ब्रह्मैव ह्यन्यदृष्ट्यन्वितघटितमिह ब्रह्मशब्दाद्यबाधात्
सर्वाघध्वंस उक्तः फलमपि परमं ब्रह्म च व्याप्तमन्नम्॥ ९५॥

चिन्ता०--अत्र कश्चिच्चोदयति--परब्रह्मोपासनादेव मोक्षप्राप्तिः; नपुनर्गरुडमात्मानं विजानीयादितिवदन्यदृष्टिमात्रेण, कथमत्र नामब्रह्मेत्यादिवत् ब्रह्मदृष्ट्यन्वितेनात्मान्तरध्यानेनापवर्गप्राप्तिरिति, तदिदमाह--अन्यस्मिन्निति। अन्यस्मिन्नन्यदृष्ट्या विदुषां क्वापि निःश्रेयसाप्तिर्न भवति। तस्मात्--अपवर्गावाप्तिहेतुत्वाभावात्। असौ वैश्वानरात्मा परमपुरुषो न भवति। किंचात्र कथ्यमानमपि फलमन्नसिद्ध्यादि अपवर्गविरुद्धमेव। अतोऽपि न परः। उक्तमर्थं प्रतिक्षिपति--मैवमिति। अयमर्थः--अस्मिन्प्रकरणे ब्रह्मदृष्टिघटितमन्यत् प्राधान्येन ध्येयतया नोच्यते। अपितु द्युमूर्धादिदृष्ट्यन्वितस्वरूपघटितं ब्रह्मैव ध्येयत्वेनोच्यते। अतो ब्रह्मण एव प्राधान्यमित्यर्थः। तत्र हेतुमाह--ब्रह्मेति। उपक्रमस्थब्रह्मात्मशब्दयोरबाधादित्यर्थः। किं चास्मिन्प्रकरणे सर्वपापविमोक्षः फलतया निर्दिश्यते। स च ब्रह्मविद्यायामेव युज्यते, कथं तर्हि सर्वत्रावस्थितान्नप्राप्तिः फलतयोपदिश्यत इत्यत्राह--ब्रह्मचेति। अद्यत इत्यन्नमिति व्युत्पत्त्या 'अहमन्नमहमन्नादः' इति श्रुत्या च परमेव ब्रह्म अन्नशब्देनाभिधीयते। तथा च ब्रह्मविद्यया ब्रह्मप्राप्तिरिति को विरोधः॥ ९५॥

पद०--अन्यस्मिन्नित्यादि। विदुषाम्--उपासकानाम्। यद्वा परीक्षकाणाम्, परीक्षका ह्ययथावस्थितज्ञानेन मुक्तिं नाङ्गीकुर्वन्ति। अन्यस्मिन्--वस्तुनि। अन्यदृष्ट्या--वस्त्वन्तरत्वारोपणरूपो-

पासनेन । क्वापि—यत्र क्वचिदपि । निश्श्रेयसाप्तिर्न भवति—मोक्षप्राप्तिर्नोपपद्यते । यथाक्रतुन्यायेनायथावस्थितज्ञानस्यायथावस्थितफलहेतुतया यथावस्थितमुक्तिहेतुत्वायोगादिति भावः । तस्मात्—उक्तोपपत्तिबलात् । असौ वैश्वानरः—विचार्यमाणो वैश्वानरात्मा । न परः—न परमात्मा । फलं चान्नसिद्ध्यादि—अत्रोपदिश्यमानमुपासनफलञ्चान्नसिद्ध्यादिरूपमपवर्गविरुद्धमेवावगम्यते । इतिशब्दः पूर्वपक्षसमाप्त्यर्थः । इहेति पाठे इह प्रकरणे कीर्त्यमानं च फलमन्नसिद्ध्यादिरूपमित्यन्वयः । मैवम्—एवं मा शङ्किष्ठाः । इह—वैश्वानरविद्यायाम् । ब्रह्मैव ह्यन्यदृष्ट्यन्वितघटितम्—अन्यत् ब्रह्मदृष्ट्यन्वितघटितं न, अपितु ब्रह्मैव द्युमूर्धादिदृष्ट्यन्वितस्वरूपघटितं ध्येयत्वेनोच्यते । अतो ब्रह्मणएव प्राधान्यात् न नामाद्युपासनतुल्यतेत्याशयः । ब्रह्मशब्दाद्यबाधात्—'को न आत्मा किं ब्रह्म' इत्युपक्रमगतब्रह्मात्मशब्दाबाधाच्च । अन्यथा हि तयोर्बाध एव भवेदित्यर्थः । सर्वाघध्वंसः फलमप्युक्तः—किञ्चास्मिन्प्रकरणे 'तद्यथैषीकतूलमग्नौ प्रोतं प्रदूयेत एवं हास्य सर्वे पाप्मानः प्रदूयन्ते' इति श्रुत्या सर्वपापविमोक्षः फलतया निर्दिश्यते च । व्याप्तमत्त्वं च परमं ब्रह्म—'सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति' इत्येतद्विद्याफलतया निर्दिष्टं सर्वलोकसर्वभूतसर्वात्मव्याप्तमत्त्वं च सर्वव्यापकं निरतिशयभोग्यरूपं ब्रह्मैव । प्रसिद्धाग्नस्य सर्वलोकादिव्याप्तत्वासम्भवादिति भावः ॥ ९५ ॥

त्रिष्वत्रोपासितॄणां मितहृदयगुहाक्ष्यन्तरश्चिन्त्य उक्तो
विश्वान्तर्यामितादेर्विपुलपरिमितिश्चिन्तनीयस्त्रयेऽथ ।
षट्सु ब्रह्मात्मशब्दौ पुरुषपदमपि क्षेत्रतज्ज्ञप्रपञ्च-
व्यावृत्ते विश्वहेतौ प्रकरणनियमान्नामवृत्त्या नमन्ति ॥ ९६ ॥

चिन्ता०—अत्रोक्तमधिकरणषट्कम्, अत्र पूर्वत्रिकमुपासितॄणामल्पीभूतहृदयगुहाक्ष्यन्तरस्थपरमपुरुषोपासनं प्रतिपादयति, उत्तरत्रिकं तु विश्वान्तर्यामित्वादिना विपुलपरिमितेर्भगवतश्चिन्तनीयत्वमुपपादयति, अतस्त्रिकद्वयविभागो द्रष्टव्य इत्याह—त्रिष्विति । अथ षट्स्वधिकरणेषु साधारणार्थमाह—षट्स्विति । ब्रह्मशब्द आत्मशब्दः पुरुषशब्दश्च त्रयोऽपि भगवदसाधारण्येन सुप्रसिद्धा लोके वेदे च । ब्रह्मशब्दस्तावत् 'ब्रह्म परिवृढं सर्वतः' इति, आत्मशब्दोऽपि 'आत्मन आकाशः संभूतः' इति, पुरुषशब्दस्तु 'पुरुष एवेदं सर्वम्' इति । एवं त्रयोऽपि शब्दा योगतो लोकवेदप्रसिद्धरूढिविशेषाच्च परमपुरुष एव श्रीनिवासे विशेषवृत्त्या वर्तन्ते । तेन षट्स्वधिकरणेषु ब्रह्मात्मपुरुषशब्दाः प्राचुर्येण नामवृत्त्या

रूढ्यैव प्रकरणप्रमाणानुसाराच्च नमन्ति वर्तन्त इत्यर्थः। क्षेत्रेत्यादि–चेतनाचेतनव्यावृत्ते जगत्कारण इत्यर्थः ॥ ९६ ॥

पद०—त्रिष्वत्रेत्यादि। अत्र—अस्मिन् द्वितीयपादे। त्रिषु—आदितः सर्वत्रप्रसिद्धाधिकरणात्त्वधिकरणाक्ष्यन्तराधिकरणेषु त्रिषु। उपासितॄणाम्—उपासकानाम्। मितहृदयगुहाक्ष्यन्तरश्चिन्त्य-उक्तः—अल्पीभूतहृदयगुहाचक्षुरन्तर्वर्तितया चिन्तनीय इत्युक्तः। परमात्मेतिशेषः। 'एष म आत्माऽन्तर्हृदये' 'तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठम्' 'य एषोऽक्षिणि पुरुषः' इति क्रमेणाधिकरणत्रयविषयवाक्येषु श्रवणादिति भावः। अथ—तदुपरि। त्रये—अधिकरणत्रये। विश्वान्तर्यामितादेः—जगदन्तर्यामित्वविभुत्वाभिविमानत्वगुणैः। विपुलपरिमितिश्चिन्तनीयः—महापरिमाणतया चिन्तनीय उक्तः। 'यः पृथिव्यां, योऽप्सु, यस्तेजसि' इत्यादिश्रवणात् 'नित्यं विभुं सर्वगतम्' इति श्रवणात् 'यस्त्वेतमेव प्रादेशमात्रमभिविमानम्' इति श्रवणाच्चेति भावः। षट्सु—उक्तेष्वेतत्पादाधिकरणेषु षट्सु। ब्रह्मात्मशब्दौ पुरुषपदमपि—ब्रह्मात्मपुरुषशब्दा इति लक्ष्यार्थः; अन्यथा 'नमन्ति' इत्यनेनानन्वयापत्तेः। क्षेत्रतज्ज्ञप्रपञ्चव्यावृत्ते—उक्ताधिकरणविषयवाक्येषु चेतनाचेतनयोर्भगवच्छरीरत्वप्रतिपादनात् क्षेत्रक्षेत्रज्ञात्मकप्रपञ्चात् स्वशरीरभूतात् शरीरितया तद्विलक्षणे। विश्वहेतौ—जगत्कारणभूते श्रीमन्नारायणे। प्रकरणनियमात्—स्वप्रकरणस्य समानप्रकरणस्य च नियम्यत इति नियमः सामर्थ्यं तस्मात्। नामवृत्त्या—रूढिशक्त्या। नमन्ति—वर्तन्त इत्यर्थः। अयं चिन्तामणिग्रन्थस्थपाठः। पाठान्तरमपि दृश्यते नामवृत्त्यामनन्तीति। तदा नामवृत्त्या आमनन्तीतिच्छेदः। ब्रह्मात्मशब्दौ पुरुषपदमिति पदद्वयं द्वितीयान्तम्। भाष्यकारादय इति शेषः। भाष्यकारादयः षट्सूक्तेष्वधिकरणेषु ब्रह्मात्मशब्दौ पुरुषपदमपि क्षेत्रतज्ज्ञप्रपञ्चव्यावृत्ते विश्वहेतौ प्रकरणनियमात् नामवृत्त्याऽऽमनन्ति–वर्तन्त इति प्रतिपादयन्तीत्यर्थः ॥ ९६ ॥

तज्ज्ञत्वादेर्हि सर्वं जगदभिगदितं ब्रह्मभावेन पूर्वं
सर्वान्तर्यामिता च प्रभवितुरुदिता सर्वतद्देहता च।
तस्माद्विश्वैक्यबाधप्रभृतिबहुविधापार्थसम्भ्रम्यमाण-
क्षुद्रक्षीवोक्तिजालं निखिलमिह नयैः सूत्रकारो निरास ॥ ९७ ॥

इति वैश्वानराधिकरणम् ॥ १७ ॥

चिन्ता०—अस्मिन्पादे परपक्षप्रतिक्षेपः सूत्रकारेणैव साक्षात् कृत इत्याह—तज्जत्वादेरिति । 'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत' इति पादारम्भे तज्जत्वात् तल्लत्वात् तदन्त्वाच्च 'सर्वं खल्विदं ब्रह्म' इति तज्जत्वादिकमेव सामानाधिकरण्यहेतुः, न पुनः स्तुतिदृष्टिविधिबाधादिकमित्युक्तम् । अतस्तत्रैव शरीरात्मभावसिद्धिः । मध्ये पुनरन्तर्यामिब्राह्मणे 'यस्यात्मा शरीरं, यस्य पृथिवी शरीरं, स त आत्माऽन्तर्याम्यमृतः' इति शरीरशरीरिभावकथनपूर्वकं तदुपपादकान्तर्यामित्वं प्रतिष्ठापितम् । तदिद-माह—सर्वान्तर्यामितेति । सर्वान्तर्यामिता प्रभवितुर्भगवत उदिता । सर्वतद्देहता च उदितेत्यर्थः । एवं सूत्रकारवचनस्य प्रयोजनमाह—तस्मादिति । एवं वचनाद् विश्वैक्यं भास्करादीनाम्, बाधन्तु मृषावादिनाम् । राजा राष्ट्रमित्यादिवत् स्तुत्यर्थसामानाधिकरण्यं भाक्तमिति केषांचित् । जगन्मायावादिनां दृष्टिविधिरुक्तिः दृष्टिविधिदर्शनादिति । इत्थं बहुविधापार्थरूपसामानाधिकरण्यकारणकथनबम्भ्रम्यमाण-क्षुद्रहृदयवचनजालं निखिलमेवेह पादे षड्भिर्नयैरधिकरणैः सूत्रकारो निरास ॥ ९७ ॥

इति वैश्वानराधिकरणम् ॥ १७ ॥

पद०—तज्जत्वादेरित्यादि । पूर्वम्—सर्वत्रप्रसिद्धाधिकरणे । सर्वं जगत् तज्जत्वादेः—ब्रह्मणो जातत्वात् ब्रह्माधीनाननत्वात् ब्रह्मणि लीनत्वाच्च । ब्रह्मभावेन—ब्रह्माभिन्नतया । हि—यस्मात् कारणात् । अभिगदितम्—'सर्वं खल्विदं ब्रह्म तज्जलानिति' इति श्रुत्या प्रतिपादितम् । प्रभवितुः—परमात्मनः । सर्वान्तर्यामिता च उदिता—सर्वस्य चेतनाचेतनात्मकसर्ववस्तुजातस्य अन्तर्यामिता अन्तः प्रविश्य नियन्तृता आत्मतेत्यर्थः, चोऽप्यर्थः प्रतिपक्षविरोधार्थः । अद्वैतिमतमूलहरा परमात्मान्तर्यामिता चोक्ता । सर्वतद्देहता च—सर्वस्य चेतनाचेतनात्मकप्रपञ्चस्य तच्छरीरत्वमपि 'यस्य पृथिवी शरीरम्, यस्यात्मा शरीरम्' इत्यादिस्वशब्देनैव बह्व्या वृत्त्या प्रतिपादितम् । तस्मात्—जगद्ब्रह्मणोरभेदस्य 'सर्वं समाप्नोषि ततोऽसि सर्वः' इति गीतावचनरीत्या 'तत्स्थत्वादनुपश्यन्ति ह्येक एवेति साधवः' इति 'अवस्थितेः' इति सूत्रसमानार्थकभारतवचनरीत्या च 'देवासुराः संयत्ता आसन् ते देवा बिभ्यतोऽग्निं प्राविशन् तस्मादाहुरग्निः सर्वा देवताः' इति श्रुतिदर्शिताग्निसर्वदेवतातादात्म्यवत् 'यावती वै देवतास्ताः सर्वा वेदविदि ब्राह्मणे वसन्ति ब्राह्मणो वै सर्वा देवताः' इति श्रुतिदर्शितब्राह्मणसर्वदेवतातादात्म्यवच्च कारणत्वेन कार्यवस्तुव्याप्त्यादिमूलकत्वप्रतिपादनात् जगद्ब्रह्मभेदवज्रटङ्कायमानपरमात्मान्तर्यामित्वजगत्तच्छरी-रत्वप्रतिपादनक्रियासमभिहाराच्च । विश्वैक्यबाधप्रभृतिबहुविधापार्थबम्भ्रम्यमाणक्षुद्रक्षीवोक्तिजालं निखिलम्—ब्रह्मैव जगद्रूपेण परिणमत इति भास्कराङ्गीकरणात् विश्वैक्यं तन्मतानुसारेण जगतो ब्रह्म-

स्वरूपैक्यमित्यर्थः । बाधः मृषावादिनां मते ब्रह्मण्येव विश्वमारोपितं तत्त्वमस्यादिवाक्यजन्यज्ञानेन तस्य बाध इत्यभ्युपगमात् विश्वस्य बाधः । प्रभृतिशब्देन जगद्ब्रह्मणोरभेदनिर्देशो राजा राष्ट्रमित्यादिनिर्देशवत् भाक्त इति ये माध्वादयो ब्रुवते तद्ग्रहणम् । सर्वस्मिन्नपि ब्रह्मस्वरूपस्य व्याप्तत्वात् तन्मूलकतया तादात्म्यनिर्देशस्य मुख्यतयोपपत्तौ केवलगौणत्वकल्पनमन्याय्यम् । ऐक्यञ्च बाधश्च ऐक्यबाधौ विश्वस्यैक्यबाधौ विश्वैक्यबाधौ तौ प्रभृतिः आदिर्येषां ते विश्वैक्यबाधप्रभृतयः । बहुविधाः—बहुप्रकाराः ऐक्यादिपक्षेषु तत्तद्भाष्यकारव्याख्यानकाराद्यङ्गीकारभेदेन विधानां बहुत्वम्, एवम्भूता ये अपार्था अपन्यायमूला अर्थाः तेषु बम्भ्रम्यमाणाः पुनःपुनः परिवर्तनपरा ये क्षुद्रा बहुविधजन्मान्तरार्जितदुरितवशेन पुनःपुनरुपरितननरकादिमहानर्थहेतुभूतवेदार्थविप्लवनाय प्राप्तभूम्यवताराः पापैकसाराः शङ्करभास्करादिप्रच्छन्नबौद्धास्सन्ति तेषां क्षीबोक्तिजालमुन्मत्तप्रलापजालं सर्वमपि । इह—अस्मिन् प्रथमाध्यायद्वितीयपादे । सूत्रकारः—श्रीबादरायणः । निरास—स्वयमेव कण्ठोक्त्या निराचकार । सूत्रकारकण्ठोक्तिनिरस्तेषु दुर्दर्शनेषु कथं विवेकिनोऽपि परिभ्रमन्तीत्याशयः ॥ ९७ ॥

इति वैश्वानराधिकरणम् ॥ १७ ॥

स्वाधीनाशेषसत्तास्थितियतनतया सर्वभावेन तिष्ठन्
ग्रस्ताशेषोऽक्षिनित्यास्थितिरखिलतनुः कल्पिताग्न्यादिगात्रः ।
स्वर्लोकाद्यङ्गवैश्वानरमतिविषयो लक्षणस्यादिमस्य
प्रोक्तः पादे द्वितीये श्रुतिनिकरशिरश्शेखरः श्रीनिवासः ॥ ९८ ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु अधिकरणसारावल्यां

प्रथमस्याध्यायस्य द्वितीयः पादः

चिन्ता०—षण्णामधिकरणानां विशेषतो भगवद्गुणविशेषप्रख्यापकत्वमाह—स्वाधीनेति । अत्र शाण्डिल्यविद्याविषये प्रथमाधिकरणे भगवतः स्वाधीनाशेषसत्तास्थितियतनतया सर्वात्मभावेनावस्थानमुच्यते । अत्र द्वितीयाधिकरणे पुनः कठवल्लीप्रतिपाद्यस्य तस्यैव परत्वमुच्यते । तदप्याह—ग्रस्ताशेष-

इति। समनन्तराधिकरणार्थमाह—अक्षिनित्यस्थितिरिति। अथान्तर्याम्यधिकरणार्थमाह—अखिलतनुरिति। सर्वशरीरत्वमेव हि तत्र विशेषतः प्रकाश्यते। अदृश्यत्वाद्यधिकरणार्थमाह—कल्पितेति मूर्धादित्वेन परिकल्पितेत्यर्थः। स्वर्लोकेत्यादिना वैश्वानराधिकरणार्थः प्रकाश्यते। अस्यादिमस्य लक्षणस्य अध्यायस्य द्वितीये पादे एवंभूतगुणविशिष्टः श्रुतिनिकरशिरश्शेखरः श्रीनिवासः प्रतिपाद्यत इत्यर्थः॥ ९८॥

इति निखिलतार्किकचूडामणिना सर्वतन्त्रस्वतन्त्रेण
श्रीमद्वरदार्यापरनाम्ना कुमारवेदान्ताचार्येण
विरचिते शारीरकाधिकरण चिन्तामणौ

प्रथमस्याध्यायस्य द्वितीयः पादः॥

पद०—स्वाधीनाशेषेत्यादि। स्वाधीनाशेषसत्तास्थितियतनतया सर्वभावेन तिष्ठन्—स्वाधीनानि अशेषवस्तूनां सत्तास्थितियतनानि यस्य तस्य भावस्तया तिष्ठन् वर्तमानः। 'सर्वं खल्विदं ब्रह्म तज्जलान्' इतिवाक्यविषयकसर्वत्रप्रसिद्धाधिकरणार्थोऽयम्। ग्रस्ताशेषः—ग्रस्तं कबलीकृतमशेषं येन स ग्रस्ताशेषः। 'यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः। मृत्युर्यस्योपसेचनम्' इति वाक्यविषयकात्त्रधिकरणार्थोऽयम्। अक्षिनित्यस्थितिः—अक्ष्णि नित्या स्थितिरवस्थानं 'यश्चक्षुषि तिष्ठन्' इत्यादिना प्रतिपादितं यस्य सः अक्षिनित्यस्थितिः। शरजन्मा, चक्रपाणिरित्यादिवत्समासः। 'य एषोऽक्षिणि पुरुषो दृश्यते' इत्यादिवाक्यविषयकाक्ष्यन्तराधिकरणार्थोऽयम्। अखिलतनुः—चेतनाचेतनात्मकमखिलं वस्तु तनुः शरीरं यस्य सः अखिलतनुः 'यः पृथिव्यां तिष्ठन्, य आत्मनि तिष्ठन्' इत्यादिवाक्यविषयकान्तर्याम्यधिकरणार्थोऽयम्। कल्पिताग्न्यादिगात्रः—कल्पितं मूर्धादित्वेन परिकल्पितं अग्निशब्दितद्युलोकचन्द्रसूर्यदिग्वेदवायुविश्वपृथिवीरूपं मूर्धचक्षुःश्रोत्रवाग्व्यापारप्राणहृदयपादात्मकं गात्रं शरीरं यस्य सः कल्पिताग्न्यादिगात्रः। 'अथ परा यया तदक्षरमधिगम्यते यत्तदद्रेश्यमग्राह्यम्' अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ' इत्यादिवाक्यविषयकादृश्यत्वाधिकरणार्थोऽयम्। स्वर्लोकाद्यङ्गवैश्वानरमतिविषयः—स्वर्लोकादीनि स्वर्गलोकादित्यवाय्वाकाशजलपृथिवीरूपाणि अङ्गानि यस्य सः स्वर्लोकाद्यङ्गः स चासौ वैश्वानरः, तद्विषयिणी या मतिः उपासना तद्विषयः 'प्राचीनशाल औपमन्यवः' इत्यारभ्य 'मूर्धा त्वेष आत्मन इति होवाच," "चक्षुष्ट्वेतदात्मन इति होवाच' इत्यादिवाक्यविषयकवैश्वानराधि-

करणार्थोऽयम् । एवम्भूतः श्रुतिनिकरशिरश्शेखरः—निखिलवेदान्तभूषणभूतः । श्रीनिवासः—श्रीमान् नारायणः । आदिमस्य लक्षणस्य—शारीरकप्रथमाध्यायस्य । द्वितीये पादे प्रोक्तः—प्रकर्षेण प्रतिपादितः, इमे गुणा अस्मिन् पादे प्रतिपत्तव्या इति भावः ॥ ९८ ॥

इति श्रीमद्रङ्गनाथशठमथनयतिराजकटाक्षलब्धोभयवेदान्तहृदयस्य भारद्वाजस्य श्रीनिवासराघवदासस्य
(श्रीमदहोबिलमठमहास्थाननिर्वहणधुरन्धर श्रीमद्वेदमार्गप्रतिष्ठापनाचार्य परमहंसपरिव्राजकाचार्य
सर्वतन्त्रस्वतन्त्रोभयवेदान्ताचार्य श्रीभगवद्रामानुजसिद्धान्तनिर्धारणसार्वभौम श्रीलक्ष्मी-
नृसिंहदिव्यपादुकासेवकश्रीवण्शठकोपश्रीशठकोपरामानुजमहादेशिकस्य)
कृतौ अधिकरणसारावलीव्याख्यायां पदयोजनाख्यायां

प्रथमस्याध्यायस्य द्वितीयः पादः

द्युभ्वाद्यधिकरणम् ॥ १८ ॥

सूत्रम्—द्युभ्वाद्यायतनं स्वशब्दात् ॥ ६६ ॥

स्पष्टैर्जीवादिलिङ्गैर्युतमिह हि वचस्साध्यते ब्रह्मनिष्ठं
मध्येऽत्राधिक्रियोक्तिस्त्रिषु किमिति न तत्तत्प्रसङ्गात्तदुक्तेः ।
किञ्चास्यामर्धलोकायतिकनिरसनं प्रस्तुतार्थोपयुक्तं
ब्रह्मोत्कर्षश्च सिध्येद्गलति दिविषदां कारणैक्यभ्रमश्च ॥ ९९ ॥

चिन्ता०—अतीताभ्यां पादाभ्यामस्पष्टतरास्पष्टजीवादिलिङ्गकानि वाक्यानि निरूपितानि उत्तराभ्यां पुनः पादाभ्यां स्पष्टस्पष्टतरजीवादिलिङ्गकानि वाक्यानि क्रमेण निरूप्यन्ते । अत एव द्वितीय-तृतीयपादयोः परस्परसंगतिरपि सिद्धा । अधिकरणसंगतिस्तु पूर्वपादान्ते द्युपृथिव्यादिसंबन्धिनः परमात्मत्वमुक्तम्, तदेवाक्षिप्य समाधीयते। किंचादृश्यत्वाद्यधिकरण एव त्रैलोक्यशरीरत्वेन परमात्मत्वं प्रसाधितम्, तत्प्रसङ्गात् वैश्वानराधिकरणेऽपि जीवत्वमाशङ्क्य निराकृतम् । अत्र पुनः प्रासङ्गिकपरिसमाप्तौ पूर्वाधिकरणोक्तार्थशेषाभिधानेन पुनर्द्युभ्वादिवाक्यमेव समाधीयते । इह तृतीयपादे निवेशस्तु निरसनीयजीवादि-लिङ्गानां स्पष्टत्वात् । अस्मिन्खलु पादे सप्तैवाधिकरणानि साक्षात्संगतानि । मध्ये देवताधिकरणादीनि त्रीण्यर्थान्तरत्वात् न संगतानीत्याशङ्क्य परिहरति—स्पष्टैरिति । स्पष्टैर्जीवादिलिङ्गैर्युतमस्मिन् तृतीये पादे ब्रह्मनिष्ठं वचः प्रसाध्यते मध्ये त्रिष्वधिकरणेषु विद्याधिकारोक्तिः किमर्था ? तत्र प्रसङ्गादुक्तेः 'हृद्यपेक्षया तु मनुष्याधिकारत्वात्' इत्यधिकारप्रसङ्गात् तदुक्तेः समुचितत्वात् । किं च देवताधिकरणाद्युक्तौ अर्धलोकायतिकानां निरीश्वरमीमांसकानां निरसनं परमपुरुषस्य चतुर्मुखादिपिपीलिकान्तसकलजगत्कारणत्वरूपप्रस्तुतार्थ प्रसाधनोपयुक्तमेव । देवतानामभावे तदपेक्षया कारणत्वापादनायोगात् । तदपेक्षयापि भगवत आराध्यत्वेन ब्रह्मोत्कर्षश्च सिध्येत् । तासां देवतानां कारणैक्यभ्रमोऽपि गलत्येव ॥ ९९ ॥

पद०—स्पष्टैरित्यादि । अथ—अस्मिन् प्रथमाध्यायतृतीयपादे । स्पष्टैर्जीवादिलिङ्गैर्युतं वचो हि ब्रह्मनिष्ठं साध्यते—पूर्वनिरुक्तस्पष्टतायुक्तचेतनाचेतनलिङ्गवत् श्रुतिवाक्यं हि ब्रह्मपरमिति साध्यते । अत्र—तृतीये पादे । मध्ये—पश्चात् प्रमिताधिकरणादुपरि अर्थान्तरत्वाद्यधिकरणाद्दशमादर्वाङ्

मध्ये। त्रिषु—'तदुपर्यपि बादरायणः सम्भवात्'। 'मध्वादिष्वसम्भवादनधिकारं जैमिनिः'। 'शुगस्य तदनादरश्रवणात्तदाद्रवणात् सूच्यते हि' इत्युक्तेषु त्रिष्वधिकरणेषु। अधिक्रियोक्तिः—ब्रह्मविद्याधिकार-प्रतिपादनम्। किमिति—किमर्था। ब्रह्मगुणप्रतिपादनमध्ये अधिकारप्रतिपादने सङ्गतिहान्यापत्तिरिति भावः। तत् न—इदमाशङ्कनं न युक्तम्। तत्प्रसङ्गात् तदुक्तेः—'हृद्यपेक्षया तु मनुष्याधिकारत्वात्' इति सूत्रेऽधिकारप्रसङ्गात् प्रसक्तप्रतिपादनस्य सङ्गतत्वेन समुचितत्वात्। किञ्च--युक्त्यन्तरञ्चेत्यर्थः। अस्याम्—देवताधिकरणाद्युक्तौ। अर्धलोकायतिकनिरसनम्—अर्धलोकायतिकानां निरीश्वरमीमांसकानां शब्दमयीमेव देवतां कर्मैव सकलफलप्रदमीश्वराभावं चाभ्युपगच्छतां निरसनं देवतानामर्थित्वसामर्थ्यरूप-ब्रह्मविद्याधिकारोपयुक्ततया स्वरूपविग्रहहविरादानादिव्यापारज्ञानशक्त्यादिविशेषभवभयादिविवेककार्यप्रतिपा-दनेन शब्दातिरिक्तदेवतास्वरूपादिस्थापनात् क्रियमाणं तत्पक्षविध्वंसनं च। प्रस्तुतार्थोपयुक्तम्—प्रस्तु-तार्थस्य परमपुरुषनिष्ठचतुर्मुखादिपिपीलिकान्तनिखिलभुवनकारणत्वरूपप्रकृतार्थस्य उपयुक्तं उपयोग्येव। देव-तानामभावे भगवतस्तन्निरूपितकारणत्वायोगात्। ब्रह्मोत्कर्षश्च सिध्येत्—ब्रह्मादीनां भगवदुपासकत्वप्रति-पादनेन तदुपास्यत्वरूपो भगवत उत्कर्षश्च सिध्येत्। दिविपदां कारणैक्यभ्रमश्च गलति—हिरण्यगर्भ-शिवेन्द्रादीनामन्तरधिकरणन्यायेन इन्द्रप्राणाधिकरणन्यायेन च स्वरूपेण जगत्कारणत्वस्य निरासेऽपि रामकृष्णादिवत् तेऽपि भगवदवतारतया तदभिन्नाःसन्तो जगतः कारणं स्युः, एवं च सति हिरण्यगर्भादि-शब्दानां रूढ्यर्थत्यागतद्विशिष्टपर्यन्तताकल्पनक्लेशोऽपि न स्यादिति शङ्का परं जागर्ति, साच तेषामत्र भगवदुपासकत्वप्रतिपादनेन राजभृत्यैक्यवत् भगवदैक्यस्य सुतरां निरस्तत्वादुन्मूलिता भवतीति भावः। प्रसङ्गादधिकरणत्रयकथनमिति नासङ्गत्यञ्च ॥ ९९ ॥

न्यायास्सप्तैव साक्षात्परविषयतया सङ्घटन्तेऽत्र पादे
सर्वाधारः स आत्मा स्वमहिमनिलयस्तत्र तात्पर्यभूमिः।
तत्सिद्ध्यै शासनाद्यं कथितमिह मिथस्स्यूतमालोचनीयं
सर्वेशत्वं च षष्ठप्रमितनयमितं पश्चिमन्यायरक्ष्यम् ॥ १०० ॥

चिन्ता०—अतः सप्तानामधिकरणानां साक्षात् संगतिः, प्रसङ्गादन्येषाम्, तदिदमनूद्य साक्षात्संग-तेषु सप्तसु षष्ठदशमयोः परस्परसंगतिं चाह—न्याया इति। सप्तैव न्यायाः साक्षात्परविषयतया संघट-न्तेऽत्रपादे। किंचास्मिन् पादे सर्वाधारः स एवात्मा 'कस्मिन्प्रतिष्ठितः स्वे महिम्नि' इत्युक्तप्रकारेण

भगवतः स्वमहिमनिलयत्वोपपादनमनन्याधारत्वं च पादस्य तात्पर्यविषयः। उक्तं हि पूर्वमेव स्रष्टा देही स्वनिष्ठः इति 'स्वयं दासास्तपस्विनः' इतिवत्। एतस्य तात्पर्यस्य प्रसिद्ध्यर्थं भगवतः सर्वप्रशासितृत्वादिकं तत्तदधिकरणार्थजातं कथितं मिथस्स्यूतं परस्परसंश्लिष्टमालोचनीयम्। तर्हि त्रिभिरधिकरणैः पष्ठदशमयोर्व्यवधाने कथं सम्बन्ध इत्याशङ्क्य पष्ठाधिकरणप्रमितं भगवतः सर्वेशत्वं दशमाधिकरणेन तस्यैव मोक्षप्रदत्वप्रतिष्ठापनेन संरक्षणीयमिति परस्परसंबन्धः सिध्यत्येव ॥ १०० ॥

पद०—न्याया स्सप्तेत्यादि। अत्र पादे—अस्मिंस्तृतीयपादे। सप्तैव न्यायाः—द्युभ्वादिन्यायो भूमन्यायो ऽक्षरन्याय ईक्षतिकर्मन्यायो दहरन्यायः प्रमितन्यायश्चेत्यमी षट् न्यायाः, अन्ते अर्थान्तरत्वादिन्यायश्चेत्यमी सप्त न्याया एव। साक्षात्—अव्यवधानेन। परविषयतया—परमात्मविषयतया। सङ्घटन्ते—सङ्घटिताः। तत्र तात्पर्यभूमिः सर्वाधारः स आत्मा स्वमहिमनिलयः—तत्पादतात्पर्यविषयस्तु सर्वाधारभूतः परमात्मा 'स भगवः कस्मिन्प्रतिष्ठितः, स्वे महिम्नि' इत्युक्तरीत्या स्वमहिमनिलय इति। स्वमहिमनिलयत्वकृतमनन्याधारत्वं तात्पर्यविषयभूतभगवद्गुण इत्यर्थः। तत्सिद्ध्यै—अनन्याधारत्वसिद्ध्यर्थम्। इह—पादे। कथितम्—प्रतिपादितम्। शासनाद्यम्—अक्षराधिकरणादिप्रतिपन्नं सर्वशासितृत्वादिकमर्थजातम्। मिथस्स्यूतम्—परस्परसंश्लिष्टमालोचनीयम्। पष्ठप्रमितनयमितं सर्वेशत्वं च पश्चिमन्यायरक्ष्यम्—आलोचनीयमित्यनुपञ्जनीयम्। पष्ठेन 'शब्दादेव प्रमितः' इत्यधिकरणेन निश्चितं सर्वेश्वरत्वं 'आकाशोऽर्थान्तरत्वादिव्यपदेशात्' इति पादान्त्याधिकरणेन 'आकाशो ह वै नामरूपयोर्निर्वहिता' इत्यारभ्य 'प्रजापतेः सभां वेश्म प्रपद्ये' इत्यादिवाक्यविषयकेण सर्वेश्वरत्वोपपादकमोक्षप्रदत्वप्रतिपादनेन रक्षणीयम्। तथा च पष्ठाधिकरणप्रतिपन्नसर्वेश्वरत्वोपपादकमोक्षप्रदत्वप्रतिष्ठापकत्वादन्त्याधिकरणस्य तयोः परस्परं सङ्गतिरिति भावः ॥ १०० ॥

सिद्धं प्रागेव मुण्डोपनिषदि परमं ब्रह्म तद्धर्मभेदै-
र्भेदोक्तेश्चेत्यकाण्डे किमिति पुनरिमां पिष्टपेषं पिनष्टि।
सत्यं क्षेत्रज्ञधर्मैः पटुभिरुपनता प्रक्रियाभेदशङ्का
प्रख्याप्य प्रत्यभिज्ञामपुनरुदयमुन्मूल्यते शब्दपूर्वैः ॥ १०१ ॥

चिन्ता०—सूत्रे द्युभ्वादीतिपदद्वयोपादानमूर्ध्वाधोलोकोपलक्षणार्थमिति मन्तव्यम्। अत्राधिकरणारम्भमाक्षिप्य समाधत्ते—सिद्धमित्यादिना। प्रागेव—अदृश्यत्वाधिकरण एव। मुण्डोपनिषदि

परं ब्रह्म स्वव्यवस्थापकैस्तत्तद्धर्मभेदैः सिद्धमेदमेव । भेदोक्तेश्च—साक्षाजीवपरयोर्भेदकथनाच्च । तथा च सति किमर्थमिमामुपनिषदं पिष्टपेपं पिनष्टि विशिष्य पुनःपुनः पिनष्टीत्यर्थः । अर्धाङ्गीकारेण समाधत्ते—सत्यमित्यादिना । अस्तु पूर्वमेव विचारितं मुण्डोपनिषद्वाक्यम्, अथापि विचार्यते तत् किमर्थमित्यत्राह—क्षेत्रज्ञेति । नाड्याधारत्वादिभिरसाधारणैर्जीवधर्मैरुपनता मुण्डोपनिषदि जीवपरमात्मनोः प्रकरणभेदशङ्का परस्परं प्रत्यभिज्ञां प्रख्याप्यापुनरुदयं शङ्कायाः पुनरुदयाभावेनोन्मूल्यते शब्दपूर्वैः श्रुत्यादिभिः प्रमाणैः । अयमर्थः—मुण्डोपनिषद्वाक्ययोरुभयत्रापि परमपुरुषगुणप्रत्यभिज्ञानात् प्रकरणभेदशङ्कैव नास्ति । नाडीसम्बन्धादयश्चाभासहेतवः । तत उचितैः समाधानहेतुभिर्भाष्यकाराभिप्रेतैरेव समाधेया इति । तदर्थविचारस्तु—किं द्युपृथिव्याद्यायतनं जीव उत परमात्मेति । तदर्थं पुनर्विचार्यते—'यस्मिन्द्यौः' इत्यादिवाक्यजातं किमदृश्यत्वादिगुणकप्रकरणात् भिन्नमुताभिन्नमिति । तदर्थं पुनः प्राणादिसम्बन्धः किमुपकार्योपकारकत्वनिबन्धन उताधाराधेयभावलक्षणः । तदर्थं द्युपृथिव्याद्यायतनत्वामृतसेतुत्वादिधर्माः किं कर्मफलानुभवितुर्जीवस्य संभवन्ति उत नेति ॥ १०१ ॥

पद०—सिद्धं प्रागेवेत्यादि । प्रागेव—पूर्वपादेऽदृश्यत्वाधिकरण एव । मुण्डोपनिषदि परमं ब्रह्म, तद्धर्मभेदैर्भेदोक्तेश्च सिद्धम्—'अदृश्यत्वादिगुणको धर्मोक्तेः । विशेषणभेदव्यपदेशाभ्यां च नेतरौ' इति सूत्रसिद्धेः 'यः सर्वज्ञः सर्ववित्' इत्यादिवाक्यप्रतिपादितैर्भगवदसाधारणैः सर्वज्ञत्वादिधर्मविशेषैः 'अक्षरात्परतः परः' इति वाक्यप्रतिपन्नजीवपरमात्मभेदव्यपदेशाच्च प्रतिपाद्यतया निश्चितमेव हि । इति—एवं कर्तव्यस्य कृतत्वात् । अकाण्डे—अनवसरे 'काण्डोऽस्त्री दण्डबाणार्ववर्गावसरवारिषु' इति कोशात् । किमिति—कुतो हेतोः । पुनः, इमाम्—मुण्डोपनिषदम् । पिष्टपेपम्—पिष्टस्य पुनः पुनः पेपणवत् व्यर्थतया । पिनष्टि—विचारयति । सूत्रकार इति शेषः । सत्यम्—अर्धमङ्गीकृतमित्यर्थः । पटुभिः—जीवात्मत्वसाधनसमर्थैः । क्षेत्रज्ञधर्मैः—मुण्डकोपनिषद्येव उपरि 'यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्चसर्वैः । अरा इव रथनाभौ संहता यत्र नाड्यः स एषोऽन्तश्चरते बहुधा जायमानः' इत्यादिश्रवणात् एषु प्रतीयमानैर्मनःप्राणाधारत्वनाड्याधारत्वबहुधाजायमानत्वरूपैर्जीवासाधारणधर्मैः । उपनता—प्राप्ता । प्रक्रियाभेदशङ्का—पूर्वं परमात्मप्रकरणम्, इदं जीवप्रकरणमिति प्रकरणभेदशङ्का । प्रत्यभिज्ञां प्रख्याप्य—'अमृतस्यैष सेतुः' इत्यादिप्रतिपन्नमोक्षप्रदत्वादिभगवदसाधारणगुणैः स एवात्रापि परमात्मा प्रतीयत इति प्रत्यभिज्ञां प्रदर्श्य । शब्दपूर्वैः—श्रुत्यादिभिः प्रमाणैः । अपुनरुदयम्—पुनश्च शङ्का यथा नोत्पद्येत तथा, क्रियाविशेषणम् । उन्मूल्यते—उद्ध्रियते परिह्रियत इत्यर्थः ॥ १०१ ॥

यस्मिन्नोतं मनोऽन्यैस्सह करणगणैर्जायते यश्च नाना
नाड्याधारश्च योऽन्तश्चरति स करणी कर्मभोक्तेति चेन्न ।
विश्वाधारात्मभावादमृतवितरणान्मुक्तसृप्यत्ववादात्
प्रागुक्तप्रक्रियैक्यादनशनसहितात् काशनाच्चान्यसिद्धेः ॥ १०२ ॥

चिन्ता०—अत्र पूर्वपक्षसिद्धान्तौ संगृह्णाति—यस्मिन्नोतमित्यादिना । 'यस्मिन् द्यौः पृथिवी च' इत्यादिवाक्येष्वन्यकरणैस्सह मनो यस्मिन्नोतं यस्मिन्नैरन्तर्येण संबद्धम् । यश्च नाना जायते नाड्याधारश्च यश्च देहेऽन्तश्चरतीति कथ्यते, स चक्षुरादिना करणी करणवान् कर्मभोक्तैवेति चेत्, उक्तमर्थं प्रतिक्षिपति—नेति । तत्र हेतूनाह—विश्वेति । विश्वाधारात्मभावेनास्मिन् प्रकरणे परमपुरुषस्य कथनात् 'अमृतस्यैष सेतुः' इति मोक्षप्रदत्वप्रतिपादनात् मुक्तप्राप्यत्वप्रतिपादनात् पूर्वोक्तब्रह्मप्रकरणविच्छेदाभावात् 'अनश्नन्नन्यो अभिचाकशीति' इति कर्मफलभोक्तृत्वाभावेन निरतिशयदीप्तियोगात् चकारादन्यस्मादपि ब्रह्मासाधारणगुणयोगात् त्वदुक्तं न घटत इत्यन्वयः ॥ १०२ ॥

पद०—यस्मिन्नित्यादि । यस्मिन् मनोऽन्यैः करणगणैः सह ओतम्—'यस्मिन्द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः' इति श्रवणात् यस्मिन् आत्मनि मनः प्राणशब्दितैरितरैरिन्द्रियगणैः सह ओतं नैरन्तर्येण सम्बद्धम् । यश्च नाना जायते—'अरा इव रथनाभौ संहता यत्र नाड्यः स एषोऽन्तश्चरते बहुधा जायमानः' इति श्रवणात् यश्चात्मा देवादिरूपेण नाना जायते । नाड्याधारश्च यः— उक्तवचनादेव यो नाड्याधारश्च प्रतीयते । योऽन्तश्चरति—तत एव वचनात् यश्च सर्वदेहेष्वन्तर्हृदयदेशे चरति सञ्चरति । अणुपरिमाणतया मुख्यसञ्चरणाश्रय इत्यर्थः । स कर्मभोक्ता करणी—सोऽयं पुण्यापुण्यकर्मफलभोक्ता करणग्रामवान् जीवात्मैवास्तु । इति चेन्न—इति शङ्क्यते चेत् तन्न सम्भवति । विश्वाधारात्मभावात्—उदाहृतश्रुतिवाक्यप्रतिपन्नादेव द्युपृथिव्याद्युपलक्षितजगदाधारत्वयुक्तनिरुपाधिकात्मत्वात् । अमृतवितरणात्—'अमृतस्यैष सेतुः' इति श्रुतात् मोक्षप्रदत्वात् । मुक्तसृप्यत्ववादात्—

" यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् ।
तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति ॥ "

'परात्परं पुरुषमुपैति दिव्यम्' इति श्रुत्या कर्मबन्धविमुक्तमुक्तात्मप्राप्यत्ववचनात् । प्रागुक्तप्रक्रियैक्यात्—अदृश्यत्वाधिकरणोक्तपरमात्मप्रकरणविच्छेदाभावाच्च । अनशनसहितात् काशनाच्च—'अनश्नन्नन्यो अभिचाकशीति' इति श्रुत्युक्तात् कर्मफलानशनसहितात् दीप्तियोगाच्च । अन्यसिद्धेः—जीवादन्यस्य परमपुरुषस्यैव एतत्प्रकरणेऽपि प्रतिपाद्यत्वसिद्धेः । इति चेन्नेत्यन्वयः ॥ १०२ ॥

व्याप्तेऽस्मिन्नक्षमोतं यदि किमिह ततो जन्म चास्येच्छयोक्तं
नाडीचक्रस्य नाभिर्भवति च स परो हार्दरूपेण तिष्ठन् ।
निष्कम्पव्यापिनोऽन्तश्चरणमपि शुभैर्विग्रहैरस्ति लोके
सौबालाम्नातवद्वा चरणमिदमपि स्यादधिष्ठानमात्रम् ॥ १०३ ॥

इति द्युभ्वाद्यधिकरणम् ॥ १८ ॥

चिन्ता०—अथ पूर्वपक्षयुक्तीनामन्यथासिद्धिं वक्तुमारभते—व्याप्त इति । सर्वव्याप्ते भगवति इन्द्रियादिकमोतं चेत् किमिह ततः किं नोपपद्यत इत्यर्थः । भगवतो जन्म नोपपद्यत इति चेत्तचोपपद्यते ऐच्छत्वाजन्मन इत्याह—जन्मेति । 'अजायमानो बहुधा विजायते' इति हि श्रूयते । नाडीचक्रस्येति—'अरा इव रथनाभौ संहता यत्र नाड्यः' इति नाडीचक्रस्य नाभिर्भवति च भगवान् । हार्दरूपेण तिष्ठन् हृदयान्तर्वर्तित्वेन वर्तमानः । सर्वासामपि नाडीनां हृदयान्तर्वर्तिपरमपुरुषसम्बन्धित्वात् । श्रूयते हि 'शतं चैका च हृदयस्य नाड्यः' इति । तर्हि सर्वव्यापिनः कथमन्तश्चरणमिति चेत्तदप्यनूद्य समाधत्ते—निष्कम्पेति । द्विरूपं खल्वन्तर्यामित्वं भगवतः, विग्रहपरिग्रहेणैकम्, सर्वव्याप्तेन स्वरूपेणापरम् । विग्रहेण देहान्तश्चरणं तावन्मुख्यत एव स्वरूपेणान्तश्चरणं तु 'यः पृथिवीमन्तरे सञ्चरन्' इत्यादिना सुबालोपनिषदाम्नातसर्वान्तर्यामित्वरूपचरणवदत्रापि संघटत एव । अन्तर्यामित्वेनाधिष्ठानमात्रस्यैव चरणशब्दवाच्यत्वादित्यर्थः ॥ १०३ ॥

इति द्युभ्वाद्यधिकरणम् ॥ १८ ॥

पद०—व्याप्तेऽस्मिन्निति । व्याप्ते—सर्वव्यापके । अस्मिन्—परमात्मनि । अक्षम्—इन्द्रियादिकम् । ओतं यदि—निरन्तरं सम्बद्धं चेत् । तत इह किम्—तावता किमनिष्टमापतति । सर्वाधारस्येन्द्रियाधारत्वं किं नोपपद्यत इति वाऽर्थः । अस्य च—परमात्मनोऽपि । इच्छया जन्म उक्तम्—

'इच्छागृहीताभिमतोरुदेहः' इत्याद्युपबृंहितेन 'अजायमानो बहुधा विजायते' इति प्रमाणेन स्वेच्छामात्रेण मत्स्यकूर्मादिरूपेण जन्म प्रतिपादितमेव। तत्परमत्रत्यं 'बहुधा जायते' इति वचनमित्यर्थः। हार्दरूपेण तिष्ठन्—अन्तर्यामिरूपेणान्तर्विद्यमानः। स परः—स परमपुरुषश्च। नाडीचक्रस्य नाभिर्भवति—'सन्ततं सिराभिस्तुलम्बत्याकोशसन्निभम्' इत्यारभ्य 'तस्याः शिखाया मध्ये परमात्मा व्यवस्थितः' इति वचनोक्तरीत्या नाडीचक्रस्य नाभिवदाधारो भवत्येव। निष्कम्पव्यापिनोऽपि लोकेऽन्तश्चरणं शुभैर्विग्रहैरस्ति—निश्चलतया सर्वव्यापिनोऽपि भगवतः 'स एषोऽन्तश्चरते' इत्यत्रत्य श्रुत्युक्तं लोकेऽन्तश्चरणं सञ्चरणं ध्यातृजनपापनिवर्तकैरन्तर्यामिविग्रहैस्तत्तज्जन्तुचितैरस्त्येव। अतो व्यापकस्य कथमन्तःसञ्चरणमिति न शङ्क्यमिति भावः। सौबालाम्नातवद्वा इदमपि चरणमधिष्ठानमात्रं स्यात्—यद्वा 'यः पृथिवीमन्तरे सञ्चरन्' इत्यादिसुबालोपनिषदुक्तपृथिव्यादिसञ्चरणवत् एतच्छ्रुत्युक्तमिदमपि लोकेऽन्तःसञ्चरणमन्तर्यामित्वेनाधिष्ठानमात्रमेव भवेत्। अनन्यथासिद्धसर्वव्याप्तिश्रुतिबलेन सञ्चरणश्रुतिःगौणीति कल्पनीयेति नैतावन्मात्रेण बहुश्रुतिलिङ्गादिसिद्धं परमात्मपरत्वमपनोद्यमिति भावः॥ १०२॥

इति द्युभ्वाद्यधिकरणम्॥ १८॥

## भूमाधिकरणम् ॥ १९ ॥

सूत्रम्—भूमा सम्प्रसादादध्युपदेशात् ॥ ७२॥

आत्मज्ञानाभिलापादनुपरतशुचे नारदाय प्रयुक्तं
प्राणे सानत्कुमारं विरमति वचनं हिंसनार्हस्स जीवः ।
अल्पप्रत्यर्थिभूमा निरवधिकसुखोऽप्येष एवेति चेन्न
प्राणाख्यात् सत्यशब्दोदितमधिकतयोपास्यमत्र ह्युपात्तम् ॥ १०४ ॥

चिन्ता०—परमात्मप्रकरणाविच्छेदात् मुण्डोपनिषदि आपादचूडं परमात्मपरत्वमेव प्रसाधितम् । तर्हि च्छान्दोग्ये भूमविद्यायां जीवप्रकरणाविच्छेदात् जीव एव प्रतिपाद्यत इति पूर्वपक्षोत्थानेन प्रमाणद्वारा संगतिः । अर्थद्वारापि संगतिरभिधीयते—पूर्वत्र 'ओतं मनः सह प्राणैः' इति प्राणसम्बन्धी पुरुष उक्तः, अत्रापि प्राणसम्बन्धित्वेन प्राणशब्दवाच्यो जीवएवोच्यत इति । तदर्थविचारस्तु किं भूमशब्दनिर्दिष्टः प्रत्यगात्मा उत परमात्मेति । किं भूमशब्दनिमित्तवैपुल्येन प्रत्यगात्मानिर्दिश्यते उत परमात्मेति । किं प्राणशब्दनिर्दिष्टप्रत्यगात्मनि प्रश्नप्रतिवचनाभ्यां भूमापि समाप्तो नेति । किं च 'स वा एष एवंपश्यन्नेवं-मन्वान एवंविजानन्नतिवादी भवति' इत्यतिवादित्वं प्राणातिवादिन उक्त्वा 'एष तु वा अतिवदति यः सत्येनातिवदति' इति प्राणातिवादिनः सत्यवदनमङ्गतया विदधाति उत सत्यशब्देन परमात्मानं निर्दिश्य तदतिवादिनः प्राणातिवादिनोऽप्यतिवादित्वं वदतीति । किमस्मिन्वाक्ये 'एष तु वा अतिवदति' इत्यत्र प्राणातिवादिनः प्रत्यभिज्ञास्ति नेति । किं तुशब्दः प्रत्यभिज्ञाविरोधी नेति । अत्र पूर्वपक्षसिद्धान्तौ संगृह्णाति—आत्मेति । इह खलु भूमविद्यायां सनत्कुमारो गुरुर्नारदः शिष्यः । स च सर्वमपि विद्या-स्थानं परिज्ञातवान् तथापि च भगवज्ज्ञानशून्योऽहमिति 'सोऽहं भगवो मन्त्रविदेवास्मि नात्मवित्' इति आत्मज्ञानाभिलापादनुपरतशोको नारदः । अस्मै नारदाय प्रवृत्तं सनत्कुमारवचनं प्राणे पर्य-वस्यति । तदेव प्रतिपादयति—प्राण इति । स च प्राणाख्यो जीव एव तस्मिन्नेव प्रकरणे तस्य हिंसनार्हत्वेन कथनात् । किं च अत्राल्पप्रत्यर्थित्वेनाभिधीयमानो भूमशब्दवाच्योऽर्थो निरवधिकसुखा-श्रयो जीव एव स्यादित्याशङ्क्य प्रतिक्षिपति—नेति । तदेव विवृणोति—प्राणाख्यादिति । तत्र हि प्राणशब्देन जीवमुक्त्वा प्राणवेदिनश्चेतरसुखातिशयितसुखरूपजीववेदिनोऽतिवादित्वमुक्त्वा तस्यापि जीव-

स्याल्पत्वेन परमात्मसुखवेदिन एवान्ततोऽतिवादित्वं प्रतिष्ठाप्यते। तेन प्राणाख्यादधिकं सत्यशब्द-वाच्यं परं ब्रह्मैवास्मिन्प्रकरणे प्रधानप्रतिपाद्यमुच्यत इति ॥ १०४ ॥

पद०—आत्मज्ञानाभिलापादित्यादि। आत्मज्ञानाभिलापात्—'ऋग्वेदं भगवोऽध्येमि' इत्यादिश्रुत्युक्तरीत्या अधिगतसर्वविद्यास्थानत्वेऽपि 'सोऽहं भगवो मन्त्रविदेवास्मि नात्मवित्' इत्यत्रत्य-श्रुत्युक्तरीत्याऽऽत्मविज्ञानशून्यताप्रयुक्तवैकल्यनिवर्तयिषाजनितादात्मविज्ञानाभिलापात्। अनुपरतशुचे नारदाय—अनिवृत्तशोकाय नारदाय। प्रयुक्तम्—उपदिष्टम्। सानत्कुमारं वचनम्—भूमविद्यो-पदेष्टृसनत्कुमारसम्बन्ध्युपदेशरूपं छान्दोग्यसप्तमाध्यायारम्भप्रभृतिकं नामाद्याशापर्यन्तवेद्यवर्गे प्रश्नपूर्वकमु-पर्युपरि प्रत्युत्तररूपतया प्रवृत्तं वचनम्। प्राणे विरमति—प्राणाख्यं वस्तूपदिश्य तावता समाप्तं दृश्यते। सः—प्राणशब्दार्थः। जीवः- जीवात्मैव। हिंसनार्हः—हेत्वर्थं विशेषणम्। 'पितृहा, मातृहा' इत्यादिप्रकरणवचनेन प्राणशब्दितस्य हिंसनार्हत्वप्रतीतेरित्यर्थः। अल्पप्रत्यर्थिभूमापि निरव-धिकसुख एष एव—'यत्रान्यत् पश्यत्यन्यत् शृणोत्यन्यद्विजानाति तदल्पं यत्र नान्यत् पश्यति नान्यत् शृणोति नान्यद्विजानाति स भूमा' इति वचनेनाल्पप्रत्यर्थित्वेनाभिधीयमानो भूमशब्दार्थोऽपि निरवधिकसु-खाश्रयो जीव एव भवेत्। इति चेन्न—इति शङ्क्यते चेन्नैतद्युक्तम्। अत्र—अस्मिन् प्रकरणे। हि—यस्मात् कारणात्। सत्यशब्दोदितमुपास्यम्—'एष तु वा अतिवदति यः सत्येनातिवदति' इति वचनेन सत्याख्यवस्तुनोपास्येनोपलक्षितो यः स्वात्मानमतिवदति स एवातिवादीत्यर्थकेन सत्यशब्दो-दितमुपास्यम्। प्राणाख्यादधिकतया—'स वा एष एवंपश्यन्नेवंविजानन्नतिवादी भवति' इति प्राणोपासकस्यातिवादित्वनिमित्तात् प्राणशब्दिताज्जीवादधिकतया। उपात्तम्—'एष तु वा अतिवदति यः सत्येन' इत्युदाहृतवचनेन प्रतिपादितम्। तस्मान्नेत्यन्वयः ॥ १०४ ॥

नामाद्याशान्तवेद्ये प्रतिवचनवशात् प्रश्नतश्चाधिकोक्तेः
प्राणे विश्रान्तिदृष्ट्या भवतु तदवधिः प्रस्तुतात्मोपदेशः।
मैवं जातो हि नामादिवदिह परमादात्मनः प्राण उक्तः
स्वस्मादित्यत्र तत् स्यादिति न विघटनात् स्वारसिक्या विभक्तेः ॥१०५॥

चिन्ता०—पूर्वपक्षाभिप्रायं विस्तरेणोक्त्वा स्वाभिप्रायमपि तथैव कथयति—नामेति। नामोपक्रम्य आशान्ते दिक्पर्यन्ते वेद्ये प्रश्नप्रतिवचनयोरनुवृत्तत्वादुत्तरोत्तरमतिशयितफलत्वेनाधिकोक्तेश्च दृष्टत्वात्

प्राणे तादृगभिधानस्य विश्रान्तिदर्शनाच्च प्रस्तुतात्मोपदेशः प्राणावधिः स्यात् । ततः प्राणस्योपरि सत्यशब्दवाच्यतया आत्मोपदेशो नास्ति । उक्तमर्थं प्रतिक्षिपति—मैवमिति । इह—अस्मिन्प्रकरणे । नामादिवत् प्राणोऽपि परस्मादात्मनो जात उक्तः । जातस्य तस्य कथं परमात्मत्वम् । नन्वत्रात्मशब्दः स्वात्मपरः, तेन स्वस्माज्जात इति प्रकरणाविरोधः स्यादित्याशङ्क्य प्रतिक्षिपति—नेति । तत्र हेतुमाह—विघटनादिति । कार्यकारणभावप्रतिपादिकायाः स्वारसिक्या विभक्तेर्विघटनात् । कार्यकारणभावोऽपि भेदगर्भ एव । स्वात्मन उत्पत्तिकथनं क्लिष्टमेवेति भावः ॥ १०५ ॥

पद०—नामादीत्यादि । नामाद्याशान्तवेद्ये—नाम आदि यस्य तन्नामादि आशा अन्तो यस्य तत् आशान्तम्, उभयत्र तद्गुणसंविज्ञानो बहुव्रीहिः । नामादि च आशान्तं च नामाद्याशान्तम् । तच्च तत् वेद्यञ्च नामाद्याशान्तवेद्यं तस्मिन् नामाद्याशान्तवेद्ये । प्रतिवचनवशात् प्रश्नतश्च—प्रश्नप्रतिवचनयोरनुवृत्तत्वात् । अधिकोक्तेः—उत्तरोत्तरमधिकफलवत्त्वेनाधिकोक्तेश्च दृष्टत्वात् । प्राणे विश्रान्तिदृष्ट्या—प्राणे तादृगभिधानस्य विश्रान्तिदर्शनाच्च । प्रस्तुतात्मोपदेशः—सनत्कुमारेण नारदाय प्रस्तुत आत्मोपदेशः । तदवधिर्भवतु—प्राणपर्यन्त एव स्यात् । तथा च प्राणशब्दितस्य जीवस्यैव वेद्यात्मत्वमिति भावः । मैवम्—एवं मा शङ्किष्ठाः । इह—अस्मिन् प्रकरणे । परमादात्मनः—आत्मशब्दितात् परमात्मनः सकाशात् । नामादिवत्—नामादितुल्यतया । प्राणः—प्राणशब्दार्थोऽपि । जात उक्तो हि—जात इति यस्मात् कारणादुक्तः । तस्मात् जातस्य परमात्मत्वासम्भवात् मैवमित्यन्वयः । तथा हि श्रूयते 'तस्य ह वा एतस्यैवंपश्यत एवंमन्वानस्यैवं विजानत आत्मतः प्राण आत्मत आशात्मतः स्मर आत्मत आकाश आत्मतस्तेज आत्मत आप आत्मत आविर्भावतिरोभावौ आत्मतोऽन्नमात्मतो बलमात्मतो विज्ञानमात्मतो ध्यानमात्मतश्चित्तमात्मतः सङ्कल्प आत्मतो मन आत्मतो वागात्मतो नामात्मतो मन्त्राः' इत्यादि । अत्र—श्रुतिवाक्ये । तत्—आत्मत इति पदम् । स्वस्मादिति स्यात्—स्वस्मादिति पदार्थे स्वात्मनइत्यर्थे भवतु । आत्मत इत्यस्य स्वात्मत इत्यर्थः स्यादिति शङ्का । इति न—इति शङ्कनमयुक्तम् । स्वारसिक्या विभक्तेः—कार्यकारणभावप्रतिपादने स्वरसप्रवृत्तायाः पञ्चमीविभक्तेः । विघटनात्—वैयर्थ्यापादनादित्यर्थः । स्वात्मनः स्वस्योत्पत्तिकथनं च क्लिष्टमेवेति भावः ॥ १०५ ॥

प्राणद्रष्टातिवादी तदनुवदनतश्चोदितस्सत्यवादः
तस्मात् सर्वाहमर्थस्सकलजनयिता प्राण एवेति चेन्न ।
एष त्वित्यन्यतोक्तेरतिवदनकृतः प्राक्तनादस्य तद्वत्
न त्वन्योऽस्त्यग्निहोत्री स्वमहिमनिलये ह्यत्र धर्मोपपत्तिः ॥ १०६ ॥

चिन्ता०—शिष्यप्रतिबोधनार्थं पूर्वपक्षाभिप्रायं विविच्य तदुचितमुत्तरमप्याह—प्राणद्रष्टेति । अत्र हि प्राणद्रष्टा अतिवादित्वेनोक्तः, तदनूद्य सत्यवादोऽङ्गत्वेन विधीयते, तस्मात् सर्वाहमर्थो जीवः स्वस्वदृष्टद्वारा सकलतत्त्वोत्पादकः प्राण एवेति चेत् तदेतत्प्रतिक्षिपति—नेति । प्रतिक्षेपहेतुं विवृणोति—एष इति । 'एष तु वा अतिवदति' इति तुशब्दशिरस्केनैतच्छब्देन प्राणातिवादिनः प्राक्तनादस्य सत्यातिवादिनोऽन्यत्वप्रतिपादनात् । ननु 'एष तु वा अग्निहोत्री यः सत्यं वदति' इत्यत्रापि तुशब्द-शिरस्क एषशब्दो दृश्यते अथापि तत्राधिकार्यन्तरं न कल्प्यते तद्वदत्रापि स्यादित्याशङ्क्याह—तद्वदिति । तत्र ह्यग्निहोत्रिद्वयं न प्रमितम्, इह तु प्रमितमेव । पूर्वं प्राणातिवादिनमुक्त्वा पुनश्च 'एष तु वा अतिवदति यः सत्येनातिवदति' इति द्विवारमतिवादित्वमुच्यते नैवमग्निहोत्रिवाक्ये द्विवारमग्निहोत्रित्व-मुच्यते । तेन पूर्वाग्निहोत्रिणमुद्दिश्य सत्यवदनमङ्गतया विधीयत इति युक्तम् । अत्र पुनस्तुशब्दसहितै-तच्छब्देनातिवाद्यन्तरं प्रतीयत इति विशेषः । अन्यथा पुनरत्रापि 'एष तु वा अतिवदति यः सत्येनाति-वदति' इत्यधिकार्यन्तरं न श्रूयेत । किं च यदि जीवे विश्रान्तिः स्याद्वाक्यस्य तदानीमेतत्प्रकरणो-क्तानां परमात्मासाधारणधर्माणामनुपपत्तिः स्यात् । तेन स्वमहिमनिलये परमात्मन्येव सर्वधर्मोपपत्तिः स्यादित्ययमपि हेतुः परमात्मसाधने भवति ॥ १०६ ॥

पद०—प्राणद्रष्टेत्यादि । प्राणद्रष्टा—नामाद्याशान्तवेद्यपरम्परोपरितनप्राणद्रष्टा । अतिवादी—अतिक्रान्तस्वोपास्यवस्तुवादितया अतिवादीति प्रतिपादितः । 'स वा एष एवंपश्यन्नेवंमन्वान एवंविजा-नन्नतिवादी भवति' इति श्रुतेरिति भावः । तदनुवदनतः—'एष तु वा अतिवदति यः सत्येनाति-वदति' इति वाक्ये प्राणातिवाद्यनुवादेन । सत्यवादश्चोदितः—सत्यवचनं विहितं भवतु । 'एष तु वा अग्निहोत्री यः सत्यं वदति' इत्यत्र तथादर्शनादिति भावः । तस्मात्—एष तु वा इति वाक्यस्य प्राणोपासनाङ्गभूतसत्यवचनचोदकत्वेन प्राणभिन्नसत्याख्यपरमात्मपरत्वाभावात् । सर्वाहमर्थः सकलजन-यिता—'अहमेवाधस्तात्' इत्यादिना 'अहमेवेदं सर्वम्' इत्यन्तेन वाक्येन सर्वाहमर्थतया प्रतिपन्नः,

'आत्मतः प्राण आत्मत आशा' इत्यादिवाक्येन सकलजनयितृत्वेन प्रतिपन्नश्च। प्राण एव—अत्रोपदेशावसानभूमिभूतः प्राणशब्दितो जीवात्मैव। इति चेन्न—इति शङ्क्यते चेन्नैतद्युक्तम्। एष त्विति—'एष तु वा अतिवदति' इति तुशब्दशिरस्कैतच्छब्देन। अस्य—सत्यातिवादिनः। प्राक्तनात्—ततःपूर्वप्रकृतात्। अतिवदनकृतः—प्राणातिवादिनः। अन्यतोक्तेः—अन्यत्वप्रतिपादनात्। तद्वन्—प्राणातिवादिभिन्नसत्यातिवादिवत्। अन्योऽग्निहोत्री तु नास्ति—प्रकृतादग्निहोत्रिणोऽन्योऽग्निहोत्री तु न प्रमितः, अतस्तस्यैवानुवादेन सत्यवचनमङ्गतया विहितम्। अत्र त्वतिवादिद्विरुक्त्या तुशब्देन चातिवाद्यन्तरस्यैव प्रतीतेरिति भावः। स्वमहिमनिलये—'स भगवः कस्मिन्प्रतिष्ठितः स्वे महिम्नि' इत्युक्ते स्वमहिमैकनिलये। अत्र हि—परमात्मन्येव हि। धर्मोपपत्तिः—एतत्प्रकरणप्रतिपन्नानां स्वाभाविकामृतत्वानन्याधारत्वसर्वात्मत्वसर्वोत्पादकत्वादिधर्माणामुपपत्तिः, नतु जीवात्मनीतिभावः॥ १०६॥

नामादौ वाक् च तस्योपरि तदनु मनश्चाथ सङ्कल्पनामा
चित्तं ध्यानञ्च तस्मात् परमपि च बलं स्याच्च विज्ञानपूर्वम्।
अन्नं तोयञ्च तेजो गगनमपि ततो मन्मथः स्यात्तथाशा
प्राणस्सत्यः परात्मा सकलनियमिता गम्यते भूमवाक्ये॥ १०७॥

इति भूमाधिकरणम्॥ १९॥

चिन्ता०—अत्र भूमविद्यायां नामाद्याशापर्यन्तवस्तूनां स्वरूपप्रतिपत्त्यर्थं तत्संग्रहश्लोकमाह—नामेति। आदौ नाम तस्योपरि वाक् तदनु मनः अथ संकल्पनामा ततश्चित्तं ततोऽप्यनन्तरं ध्यानं ततो विज्ञानं ततो बलं तस्मादन्नं तस्मात्तोयं तस्मादपि तेजः ततः पुनराकाशस्ततो मन्मथः तत आशा ततः प्राणशब्दवाच्यो जीवः सर्वेषामुपरि सत्यशब्दवाच्यः परमात्मा सर्वनियन्ताऽयमेवेति गम्यत इति॥ १०७॥

इति भूमाधिकरणम्॥ १९॥

पद०—नामादावित्यादि। भूमवाक्ये—सनत्कुमारेण नारदायोपदिश्यमाने भूमविद्यावाक्यसमुदाये। आदौ—प्रथमतः। नाम—नामात्मकः शब्दः। गम्यते इत्यस्यानुकर्षः, स्यात् इति

पदस्य वा। अधिगन्तव्यः स्यादित्यर्थः। तस्योपरि—नाम्नः पश्चात्। वाक् च गम्यते। तदनु—वाचः पश्चात्। मनश्च गम्यते। अथ—मनसः पश्चात्। सङ्कल्पनामा—-सङ्कल्पाख्यः पदार्थः, गम्यते। अथ चित्तं गम्यते। अथ ध्यानं गम्यते। तस्मात् परमपि च–ध्यानात् परमपि च। विज्ञानपूर्व बलं च स्यात्–विज्ञानं पूर्वं यस्य तत् विज्ञानपूर्वं विज्ञानं पूर्वं पश्चात् बलमित्यर्थः। ततः—बलानन्तरम्। अन्नं च स्यात्। ततोऽन्नात्परं तोयं जलम्। ततश्च तोयात्परं च तेजः। ततोऽपि—ततः पश्चाच्च। गगनमाकाशः। अत्र सर्वत्र 'ततः स्यात्' इति पदे अनुषञ्जनीये। ततः—आकाशात् परम्। मन्मथः स्यात्—स्मरशब्देन मन्मथ उक्तः स्यात्। ततो मन्मथात्परम्। तथा–पौर्वापर्येण। आशा—आशाशब्दिता दिक्। प्राणः—प्राणशब्देनोक्तः प्राणसहचारी प्रत्यगात्मा च स्यात्। ततः परं सकलनियमिता—नामादिनिखिलतत्त्ववर्गनियन्ता। सत्यः–सत्यशब्दवाच्यः। परात्मा गम्यते—'तरति शोकमात्मवित्' इत्युपक्रमविवक्षित उपदेश्य आत्मेत्यवगम्यते ॥ १०७ ॥

इति भूमाधिकरणम् ॥ १९ ॥

# अक्षराधिकरणम् ॥ २० ॥

सूत्रम्—अक्षरमम्बरान्तधृतेः ॥ ७४ ॥

प्रख्याताकाशपूर्वस्वविकृतिवहनादक्षराख्यं प्रधानं
तस्याप्याकाशतोक्तौ धृतनिखिलजगत् क्षेत्रितत्त्वं तु तत् स्यात् ।
मैवं द्रष्टृत्वपूर्वैरनितरानियतैश्शासनायत्तधृत्या
किञ्च द्रष्ट्रन्तरस्य व्युदसनमिह तत्तुल्यतद्द्रष्ट्रपोहः ॥ १०८ ॥

इत्यक्षराधिकरणम् ॥ २० ॥

चिन्ता०—पूर्वाधिकरणे स्वमहिमप्रतिष्ठितत्वमुक्तम् । तत्तु परमपुरुषव्यतिरिक्तेऽपि श्रूयत इति पूर्वपक्षोत्थानेन संगतिः । अथवा 'येनाक्षरं पुरुषं वेद सत्यम्' इति सत्याक्षरशब्दाभ्यां निर्दिष्टस्य परस्य ब्रह्मणः सत्यशब्दवाच्यत्वं पूर्वत्र प्रतिष्ठापितम्, अत्राक्षरशब्दवाच्यत्वं प्रतिष्ठाप्यत इति वा संगतिः । एवंवा—पूर्वं जीवनिरासः, इह तु जीवप्रधानयोर्द्वयोरपि निरास इति । तदर्थविचारस्तु 'एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्ति' इति वाक्ये पुनरक्षरशब्दनिर्दिष्टं प्रधानं वा जीवो वा परमपुरुषो वेति । तदर्थं चिन्त्यते—'कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्च' इत्यत्र प्रतीयमानमाकाशाधारत्वं किं प्रधानस्य किं वा जीवस्य उत परमात्मन एवेति । किमत्राकाशशब्दनिर्दिष्टो भूताकाश उत अव्याकृताकाश इति । अत्र पूर्वपक्षसिद्धान्तावनुक्रमेणाचष्टे—प्रख्यातेति । 'कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्च' इत्यादौ प्रसिद्धाकाशपूर्वस्वकार्यवहनादक्षरशब्दवाच्यं प्रधानमेवेत्येकः पक्षः । तस्यापि प्रधानस्य कारणाकाशत्वेन आकाशत इति व्युत्पत्त्या अवधारितस्याप्याधारत्वेनाभिधीयमानमक्षरं धृतनिखिलजगत् समष्टिजीवतत्त्वमेव स्यात् प्रकृतेर्जीवाधिष्ठानत्वात् । पक्षद्वयमपि व्युदस्यति—मैवमिति । तत्र हेतुमाह—द्रष्टृत्वेति । चेतनाचेतनयोरसंभावितैः सर्वद्रष्टृत्वादिभिर्धर्मैर्भगवदसाधारणैः 'सा च प्रशासनात्' इत्युक्तप्रकारेण स्वशासनायत्तधारणाच्च । किंच अस्मिन्प्रकरणे द्रष्ट्रन्तरस्य व्युदसनं दृश्यते । तत्तु परमात्मपक्ष एव संभवति, न पुनर्जीवपक्षे द्रष्टुर्जीवादन्यस्य जीवान्तरस्य सर्वद्रष्टुः परमात्मनो विद्यमानत्वात् । तेन द्रष्ट्रन्तरनिराकरणमीश्वरान्तरनिराकरणमेव । तदिदमाह—द्रष्ट्रन्तरस्येति । विश्वाधारतया नियन्तृत्वेन

विश्वद्रष्टुः परमपुरुषादन्यस्य द्रष्टुर्व्युदसनं परमपुरुषाधिकतया परमपुरुषनियन्तृत्वेनावस्थिततत्सदृशेश्वरान्तरनिरास इत्यर्थः ॥ १०८ ॥

इत्यक्षराधिकरणम् ॥ २० ॥

प्रख्यातेत्यादि । अक्षराख्यम्—'कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्च' इति गार्ग्या पृष्टेन याज्ञवल्क्येनाकाशाधारतया 'एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्ति । अस्थूलमनणु' इत्यादिवाक्येनोक्तमक्षराख्यं वस्तु । प्रख्याताकाशपूर्वस्वविकृतिवहनात्—प्रसिद्धाकाशप्रभृतिस्वकार्यवहनात् । प्रधानम्—मूलप्रकृतिः । तस्यापि—प्रधानस्यापि । आकाशतोक्तौ—कारणाकाशरूपत्वेन 'कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्च' इति वाक्यघटकाकाशपदवाच्यत्वाभिधाने । तत्तु—अव्याकृताकाशस्याप्याधारभूतमक्षरं तु । धृतनिखिलजगत् क्षेत्रितत्त्वं स्यात्—प्रकृतेर्जीवाधीनत्वात् धृतनिखिलाचेतनवर्गं समष्टिजीवतत्त्वं स्यात् । मैवम्—एवं मा शङ्किष्ठाः । अनितरनियतैः—चेतनाचेतनयोरसम्भावितैः । द्रष्टृत्वपूर्वैः—भगवदसाधारणैर्द्रष्टृत्वादिभिः । शासनायत्तधृत्या—'सा च प्रशासनात्' इत्युक्तरीत्या स्वशासनायत्तधारणेन च । मैवमित्यन्वयः । किञ्च—युक्त्यन्तरञ्चास्तीत्यर्थः । इह—अस्मिन्प्रकरणे । द्रष्ट्रन्तरस्य व्युदसनं व्युदासः । दृश्यत इति शेषः । तत्तु परमात्मपक्ष एव सम्भवति नपुनर्जीवपक्षे द्रष्टुर्जीवादन्यस्य सर्वद्रष्टुः परमात्मनो विद्यमानत्वात् । तेन तत्—द्रष्ट्रन्तरनिराकरणम् । तुल्यतद्द्रष्ट्रपोहः—विश्वाधारतया नियन्तृभूतपरमात्मतुल्येश्वरान्तरनिराकरणरूपमेवेत्यर्थः ॥ १०८ ॥

इत्यक्षराधिकरणम् ॥ २० ॥

## ईक्षतिकर्माधिकरणम् ॥ २१ ॥

सूत्रम्—ईक्षतिकर्मव्यपदेशात् सः ॥ ७७ ॥

लक्ष्मीभूतोऽयमेकः खलु पुरुष इह ध्यायतेरीक्षतेश्च
क्षेत्रज्ञः सोऽयमण्डाधिप इतरपरात् स्वान्यजीवात् परोऽसौ ।
नो चेद् भौमादिभोगप्रकरणविहतिर्बोभवीतीत्ययुक्तं
तस्मिञ्छान्तामृतत्वप्रभृतिपरगुणख्यात्यनूक्त्योरयोगात् ॥ १०९ ॥

चिन्ता०—सूत्रे 'सः' इति पुल्लिङ्गनिर्देशः परमपुरुषविवक्षया । पूर्वत्र खलु 'अदृष्टो द्रष्टा' इति परमात्मनोऽन्यैरदृष्टत्वमुक्तम्, तर्हीक्षतिकर्मत्वेनाभिधीयमानः परमपुरुषो न स्यादेवेति पूर्वपक्षोत्थानेन संगतिः । अथवा पूर्वत्राकाशशब्दस्यार्थविरोधादर्थान्तरपरत्वं प्रत्यपादि, तद्वदेवान्तरिक्षशब्दस्यापि मुखान्तरेण निर्वाहः संभवेदिति शङ्कया संगतिरिति चाहुः । यद्वा आकाशशब्दस्याम्बरान्तपरत्वत् ब्रह्मलोकशब्दस्याप्यन्यथानिर्वाहोऽस्तीति सङ्गतिः । तदर्थविचारस्तु 'यः पुनरेतं त्रिमात्रेणोमित्यनेनैवाक्षरेण परमपुरुषमभिध्यायीत' इति निर्दिष्टः चतुर्मुख उत परमात्मेति । किं 'पुरुषमीक्षते' इत्यत्रेक्षतिकर्मत्वं चतुर्मुखस्य उत परमात्मन इति । किं जीवघनशब्देन चतुर्मुखस्यापि ग्रहणमस्ति नेति । किमत्र ब्रह्मलोकशब्दश्चतुर्मुखस्थानवचन उत परमव्योमवचन इति । ईक्षतिकर्मविषयतयोदाहृते श्लोके 'यत्तत्कवया वेदयन्ते' इति वैष्णवं पदं प्रत्यभिज्ञायते नेति । अत्र पूर्वपक्षमुक्त्वा क्रमेण प्रत्याचष्टे—लक्ष्मीभूत इति । अस्मिन् प्रकरणे यथोपासनं फलमिति न्यायेन य एव ध्यानविषयस्स एव प्राप्य इति द्वयोरपि वादिनोः सम्मतो ध्यायतेरीक्षतेश्च विषयभूतः पुरुषः । स तु मुख्यो जीव एक एव क्षेत्रज्ञः । स एवाण्डाधिपतिः । 'परात्परं पुरिशयं पुरुषमीक्षते' इति तस्यैव ईक्षतिकर्मत्वेन व्यपदेशः । अस्य परात्परत्वं प्रकृत्यादिभ्यः परस्माज्जीवात्परत्वेन । इत्थमनङ्गीकारे दोषमाह—नो चेदिति । परिहरति—अयुक्तमिति । प्रणवोपास्ये तस्मिन् परस्मिन्वस्तुनि शान्तामृतत्वादिपरमात्मगुणोपवर्णनस्य तदनुवादस्य चायोगात् । तेन परमात्मासाधारणगुणान्वयादेतत्प्रकरणप्रतिपाद्यः परमपुरुष एवेत्यर्थः ॥ १०९ ॥

पद०--लक्षीभूत इत्यादि । इह—आथर्वणिकैः पठ्यमाने सत्यकामप्रश्ने 'यः पुनरेतं त्रिमात्रेणो-मित्यनेनैवाक्षरेण परमपुरुषमभिध्यायीत' इत्यारभ्य 'एतस्माज्जीवघनात् परात्परं पुरिशयं पुरुषमीक्षते' इत्यादिवाक्ये । ध्यायतेरीक्षतेश्च—प्रथमतो ध्यानवाचिध्यैधातोः पश्चादीक्षणवाचीक्षधातोश्च । लक्षीभूतः—ध्यानेक्षणक्रियाद्वारा विषयभूतः । अयं पुरुषः एकः खलु—उभयत्र द्वितीयान्तपुरुषशब्दवाच्य एकः खलु । ध्यानफलभूतत्वादीक्षणस्य यथाक्रतुन्यायेन ध्यातस्यैवेक्षणीयत्वमिति सैवैरप्यङ्गीकरणीयं किलेत्यर्थः । सोऽयम्—एवं ध्यानेक्षणकर्मभूतोऽयं पुरुषः । अण्डाधिपः क्षेत्रज्ञः—चतुर्मुखात्मा जीव एव । 'परात्परं पुरिशयं पुरुषम्' इति परात्परत्वं कथमित्यत्राह—असौ—अण्डाधिपतिश्चतुर्मुखः । इतरपरात्—अचेतना-पेक्षया परभूतात् । स्वान्यजीवात्—स्वभिन्नजीववर्गात् । परः—पर एव । अतोऽस्मिन् परात्परत्वमुप-पन्नम् । नो चेत्—एवं नाङ्गीक्रियते चेत् । भौमादिभोगप्रकरणविहतिर्वोभवीति—एकमात्रद्विमात्र-प्रणवोपासनयोः क्रमेण मनुष्यलोकप्राप्तिमन्तरिक्षलोकप्राप्तिञ्चाभिधाय त्रिमात्रप्रणवोपासनफलतया 'स सामभिरुन्नीयते ब्रह्मलोकम्' इति ब्रह्मलोकप्राप्तिं प्रतिपादयतः प्रकरणस्य विरोधो भवति । इत्ययुक्तम्—इति शङ्कनमसाधु । तस्मिन्—ध्यानेक्षणविषयभूते परपुरुषे । शान्तामृतत्वप्रभृतिपर-गुणख्यात्यनूक्त्योरयोगात्—'तमोङ्कारेणैवायनेनान्वेति विद्वान् यत्तच्छान्तमजरममृतमभयमपरं च' इति वचनेन 'यत्तत्' इति प्रसिद्धिसूचकयत्तत्पदघटितेन प्रतिपन्नयोः शान्तत्वामृतत्वप्रभृतिपरमात्मासाधारण-गुणप्रसिद्धितदनुवादयोरसम्भवात् । अयुक्तमिति पूर्वेणान्वयः ॥ १०९ ॥

नन्वत्रोङ्कारमात्रात्रयफलगणनारूढभूम्यन्तरिक्ष-
प्रत्यासत्त्या निवासस्सरसिजवसतेर्ब्रह्मलोकोऽस्तु मैवम् ।
पापोन्मुक्तेन लभ्यो ह्ययमिति कथितस्सूर्यसम्पत्तिपूर्वं
सोढव्यो मध्यलोकैर्व्यवधिरिति समस्तत्समाधानमार्गः ॥ ११० ॥

इति ईक्षतिकर्माधिकरणम् ॥ २० ॥

चिन्ता०—अत्र चोदयति—नन्विति । पूर्वमेकद्विमात्रप्रणवोपासनफलतया निर्दिष्टभूम्यन्तरिक्ष-गणनानिर्दिष्टो ब्रह्मलोकः त्रिमात्रप्रणवोपासनफलतया निर्दिश्यमानः पूर्वोक्तप्रत्यासत्त्या चतुर्मुखलोक एव स्यात् । न स्यादित्याह—मैवमिति । तत्र हेतुमाह—पापोन्मुक्तेनेति । अस्मिन्प्रकरणे सर्वपापविनि-

मुक्तस्य प्राप्यतया श्रूयमाणो ब्रह्मलोको न क्षयिष्णुचतुर्मुखस्थानं भवितुमर्हति । किं च 'स तेजसि सूर्ये सम्पन्नः' इति सूर्यसम्पत्तिपूर्वकं प्राप्यतया श्रूयमाणो ब्रह्मलोकः 'संवत्सरादादित्यम्' इत्यर्चिरादिमार्गप्रत्यभिज्ञानान्मुक्तप्राप्यो वैकुण्ठ एव स्यादिति । अस्मिन्नपि प्रकरणे 'यत्तत्कवयो वेदयन्ते' इति सूरिदृश्यत्वमुच्यते । तदिदमाह—सूर्यसम्पत्तिपूर्वमिति । नन्वन्तरिक्षलोकप्रत्यासत्त्या चतुर्मुखलोक एव स्यादिति चेन्न ; मध्ये स्वर्गादीनां बहूनां लोकानां व्यवधानेन प्रत्यासत्तेरभावात् । तावद्व्यवधानं सोढव्यमिति चेत् समः समाधिः । अत्र चतुर्मुखलोकव्यवधानमपि सोढव्यमिति तदाह—सोढव्य इत्यादिना । किंचोपक्रमे 'परमपुरुषमभिध्यायीत' इतिध्यानविषयस्यैवेक्षतिकर्मत्वं वाच्यम् । अन्यथा तत्क्रतुन्यायविरोधः स्यादित्यादिदूषणमूह्यम् । तस्मादीक्षतिकर्मत्वेन व्यपदिश्यमानः परमात्मैवेति सिद्धम् ॥ ११० ॥

इति ईक्षतिकर्माधिकरणम् ॥ २१ ॥

पद०—नन्वित्यादि नन्विति प्रश्ने । अत्र—निरुक्तप्रकरणे । ओङ्कारमात्रात्रयफलगणनारूढभूम्यन्तरिक्षप्रत्यासत्त्या—ओङ्कारसम्बन्ध्येकमात्राद्विमात्रात्रिमात्रारूपमात्राविभागत्रयफलानुकथनप्रसक्तयोर्भूम्यन्तरिक्षयोः प्रत्यासत्त्या तदूर्ध्ववर्तित्वरूपसम्बन्धवशेन । ब्रह्मलोकः—त्रिमात्रप्रणवोपासनफलतया निर्दिश्यमानो ब्रह्मलोकः । सरसिजवसतेः—भगवन्नाभिकमलनिवासिनश्चतुर्मुखस्य । निवासोऽस्तु—वासस्थलभूतः सत्यलोक एवाऽस्तु । मैवम्—एवं मा शङ्किष्ठाः । हि—यतः कारणात् । अयम्—ब्रह्मलोकः । पापोन्मुक्तेन सूर्यसम्पत्तिपूर्वं लभ्य इति कथितः—सर्वपापविनिर्मुक्तेन सूर्यसम्पत्तिपूर्वकं प्राप्य इति 'स तेजसि सूर्ये सम्पन्नो यथा पादोदरस्त्वचा विनिर्मुच्यत एवं हैव स पाप्मना विनिर्मुक्तः स सामभिरुन्नीयते ब्रह्मलोकम्' इति वाक्येन प्रतिपादितः । अतो मैवमिति सम्बन्धः । मध्यलोकैर्व्यवधिः सोढव्य इति तत्समाधानमार्गः समः—अन्तरिक्षलोकब्रह्मलोकयोर्मध्यवर्तिभिः स्वर्गादिबहुलोकैर्व्यवधानं सोढव्यमिति प्रत्यासत्त्यनुबन्ध्याक्षेपसमाधानसरणिर्युष्माकमस्माकं च तुल्यैव । ब्रह्मलोकशब्दस्यान्तरिक्षलोकप्रत्यासत्त्या चतुर्मुखलोकपरत्वं कथयतामपि व्यवधानरहितप्रत्यासत्तिर्न सिध्यति । मध्ये स्वर्गलोकादीनां बहूनां व्यवधायकत्वात् । तत्सहनरूपन्तु समाधानं युष्माकमस्माकं च तुल्यम् । ब्रह्मलोकशब्दस्य श्रीवैकुण्ठाख्यदिव्यलोकपरत्वे तु सर्वपापविनिर्मुक्तप्राप्यत्वं सूर्यसम्पत्तिसूचितार्चिरादिमार्गगम्यत्वं 'कवयो वेदयन्ते' इति प्रकरणवाक्यसिद्धसूरिजनदृश्यत्वञ्चेत्येवमादीनि बलीयस्तराणि लिङ्गानि । प्रथमश्लोके 'नो चेद्भौमादिभोगप्रकरणविहतिः' इत्युक्तस्यैव प्रत्यासत्त्यनुबन्ध्याक्षेपस्य पक्षद्वयतुल्यतारूपं साक्षात् समाधानमस्मिन् श्लोके कृतमिति न पौनरुक्त्यशङ्कावकाशः ॥ ११० ॥

इति ईक्षतिकर्माधिकरणम् ॥ २१ ॥

# दहराधिकरणम् ॥ २२ ॥

सूत्रम्—दहर उत्तरेभ्यः ॥ ७८ ॥

दह्रं हृत्पुण्डरीके गगनमभिहितं तैत्तिरीयश्रुतौ यत्
छन्दोगैस्तत्र गीतं यदपि च दहराकाश इत्येतदेकम् ।
भूताद्यं तत्प्रसिद्धेर्महिमत इति न प्रत्यनीकैरनेकैः
श्रौती च स्यात् प्रसिद्धिर्भगवति बलिनी लिङ्गवर्गैस्सनाथा ॥११४॥

चिन्ता०—पूर्वाधिकरणे 'परात्परं पुरिशयं पुरुषम्' इत्युक्तस्य पुरिशयपुरुषस्य परमात्मत्वं साधितम्, अत्र पुरिशयस्याकाशशब्दवाच्यस्य परमात्मत्वं निरस्यत इति संगतिः। पूर्वं ब्रह्मलोकशब्दस्य परमात्मस्थानपरत्वमुक्तम्। तद्वदिहापि ब्रह्मलोकशब्दब्रह्मपुरशब्दयोः स्थानपरत्वं स्यादिति शङ्कया संगतिः। यद्वा पूर्वत्रान्तरिक्षशब्दस्य प्रसिद्धान्तरिक्षपरत्वं व्यावर्तितम्, तद्वत् दहराकाशस्य प्रसिद्धाकाशधर्मिपरत्वं प्रतिपाद्यत इति संगतिः। परस्मिन्नन्वेष्टव्यान्तरप्रतीत्यनुपपत्तेः पक्षद्वयेऽप्युपमानोपमेयभावानुपपत्तेश्च संशयः। तदर्थविचारस्तु—किं दहराकाशो भूताकाश उत जीवोऽथ परमात्मेति। तदर्थमन्वेष्टव्यान्तरनिर्देशः किं दहराकाशस्य परमात्मत्वविरोधी उत नेति। 'तस्मिन्यदन्तः' इति निर्देशः किं गुणजातविषय उतार्थान्तरपरः। 'एष आत्मा' इति वाक्योक्तमपहतपाप्मत्वादिकं किं प्रजापतिवाक्योक्तजीवधर्मः उत न। जीवधर्मत्वेऽपहतपाप्मत्वादिश्रुतिस्वारस्यमस्ति उत नेति। फलफलिभावस्तु यदा 'तस्मिन्यदन्तः' इति निर्देशोऽर्थान्तरपरः, तदाऽन्वेष्टव्यशब्दस्य गुणविषयत्वाभावेन दहराकाशस्य भूताकाशत्वं स्यात्। यदा 'एष आत्मा' इति वाक्योक्तगुणाष्टकस्य प्रजापतिवाक्योक्तजीवधर्मत्वे स्वारस्यमस्ति, तदानीं 'एष आत्मा' इति वाक्यस्य जीवविषयतया दहराकाशो जीवः स्यादिति पूर्वपक्षे फलफलिभावः। यदा तस्मिन्यदन्तः' इति गुणजातविषयोक्तिस्तदाऽन्वेष्टव्यशब्दस्य गुणजातविषयत्वाद् दहराकाशो भूताकाशादतिरिक्तः स्यात्, यदा 'एष आत्मा' इति वाक्यस्य प्रजापतिवाक्योक्तधर्मविषयत्वे स्वारस्यं नास्ति तदा स्वरसतो गुणाष्टकविशिष्टपरमात्मप्रतिपादकतया स दहराकाशः परमात्मा स्यादिति राद्धान्ते फलफलिभावः। विषयवाक्यशोधनपूर्वकं पूर्वपक्षसिद्धान्तौ संगृह्णाति—

दहं हृत्पुण्डरीक इति । अयमर्थः—'दहरोऽस्मिन्नन्तराकाशः' इति च्छान्दोग्ये 'तत्रापि दहं गगनं विशोकः' इति तैत्तिरीये च गगनाकाशशब्दयोः पर्यायत्वेनाकाश एवोक्तः, स चाकाशो भूताकाश एव स्यात्, आकाशशब्दस्य भूताकाशे ब्रह्मणि च प्रसिद्धत्वेऽपि भूताकाशे प्रसिद्धिप्रकर्षादिति । तदाह—प्रसिद्धेर्महिमत इति । तदेतत्प्रतिक्षिपति—नेति । तत्र हेतुमाह—प्रत्यनीकैरिति । 'एष आत्माऽपहतपाप्मा' इत्यादिवाक्यगतैर्निरुपाधिकात्मत्वापहतपाप्मत्वसत्यसंकल्पत्वादिभिः परमात्मासाधरणैर्धर्मैरत्राकाशशब्दनिर्दिष्टस्य विशेष्यमाणत्वात् । किंच द्विविधा हि प्रसिद्धिर्वैदिकी लौकिकी चेति । तत्र वैदिकी प्रसिद्धिर्वेदविदां व्यवहारेषु बलवती तेनात्राकाशशब्दनिर्दिष्टः परमात्मैव । किंच निरुपाधिकापहतपाप्मत्वादिलिङ्गसनाथायाः 'यदेष आकाश आनन्दो न स्यात्' इत्यादिश्रुत्यन्तरसिद्धाया आकाशशब्दप्रसिद्धेर्भगवति बलीयस्त्वाच्च । तदिदमाह—श्रौती चेति । नकेवलं श्रौतप्रसिद्धिः, लिङ्गान्यपि विद्यन्त इत्याह—लिङ्गवर्गैरिति ॥ १११ ॥

पद०—दहमित्यादि । तैत्तिरीयश्रुतौ—तित्तिरिरूपर्षिप्रोक्ते यजुषि 'अम्भस्यपारे' इति प्रश्ने 'अणोरणीयान्' इत्यनुवाके 'न कर्मणा न प्रजया धनेन' इत्यादिदशकमध्ये । हृत्पुण्डरीके दहं यत् गगनमभिहितम्—'दहं विपाप्मं परवेश्मभूतं यत्पुण्डरीकं पुरमध्यसंस्थम् । तत्रापि दहं गगनं विशोकः' इत्यत्र वाक्ये तत्रेतिशब्दस्य पूर्ववाक्योपात्तपुरशब्दितशरीरमध्यवर्तिहृदयपुण्डरीकपरत्वात् तथोक्ते हृदयपुण्डरीके दहं सूक्ष्मं यद् गगनं प्रतिपादितम् । छन्दोगैस्तत्र दहराकाश इति यदपि च गीतम्—सामवेदिभिश्छान्दोग्याख्यायामुपनिषद्यष्टमाध्याये 'अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः' इत्यादिवाक्ये 'अस्मिन्नन्तराकाशः' इत्यत्रास्मिन्निति शब्दिते हृदयपुण्डरीके 'दहर आकाशः' इति दहरपदविशेषिताकाशशब्देन यद्वस्त्वपि चाभिहितम् । एतदेकम्—एतद्द्वयमेकमेव । स्थानसाम्यपर्यायशब्दप्रयोगादिभिस्तयोरैक्यस्य सर्वसम्मतत्वादिति भावः । तत्—दहगगनदहराकाशशब्दितं वस्तु । प्रसिद्धेर्महिमतः—प्रसिद्ध्यतिशयात् । भूताद्यम्—'आकाशाद्वायुः । वायोरग्निः । अग्नेरापः । अद्भ्यः पृथिवी' इत्युक्तेषु पञ्चसु भूतेषु आद्यं प्रथममाकाशशब्दितं शब्दगुणकं भूतं भवितुमर्हति । इति न–एवं न शङ्कनीयम् । अनेकैः प्रत्यनीकैः—'एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामस्सत्यसङ्कल्पः' इत्युत्तरवाक्यप्रतिपन्नैर्निरुपाधिकात्मत्वापहतपाप्मत्वप्रभृतिभिः सत्यसङ्कल्पत्वपर्यन्तैरन्यैश्च परमात्मासाधारणैः पक्षान्तरविरोधिलिङ्गादिरूपैर्हेतुभिः । इति नेति पूर्वेण सम्बन्धः । लिङ्गवर्गैस्सनाथा—उदाहृतपरमात्मलिङ्गवर्गैस्सहिता । बलिनी–अत एव केवलभूताकाशप्रसिद्ध्यपेक्षया बलवती । श्रौती प्रसिद्धिश्च—'को ह्येवान्यात्कः प्राण्यात् । यदेष

आकाश आनन्दो न स्यात्' इत्यादिश्रुत्यन्तरसम्बन्धिनी आकाशशब्दप्रसिद्धिश्च । भगवति स्यात्—भगवति सिद्धैव । अतः केवलप्रसिद्धिबलेन प्रत्यवस्थानं हेयमिति भावः ॥ १११ ॥

बाह्याकाशश्च यावानयमपि हि तथेत्येतदक्लिष्टमीशे
सत्यात्मब्रह्मशब्दा नभसि न कथमप्यन्वयं प्राप्नुवन्ति ।
कामाधारश्च योऽसौ समगणि दहराकाशवाचाऽत्र नित्य-
स्तस्यैव ह्येष आत्मेत्यनुवदनमतस्तद्गुणाश्चिन्त्यकामाः ॥ ११२ ॥

चिन्ता०—पुनरपि भूताकाशत्वनिरासकान् विषयवाक्यस्थान् हेतून् संगृह्णाति—बाह्याकाश इत्यादिपूर्वार्धेन । तस्यायमर्थः—'यावान्वायमाकाशस्तावानेषोऽन्तर्हृदय आकाशः' इत्युपमानोपमेयभावस्तु दहराकाशस्य भूताकाशत्वे नोपपद्यते उपमानोपमेयभावस्य भेदगर्भत्वात् । हृदयावच्छेदनिबन्धन उपमानोपमेयभाव इति चेत् तथा सति हृदयावच्छिन्नस्य 'उभे अस्मिन्द्यावापृथिवी' इत्यादिप्रतिपादितसर्वाश्रयत्वानुपपत्तेः । किंच 'एतत्सत्यं ब्रह्मपुरमेष आत्मा' इत्यादिनिर्दिष्टसत्यात्मब्रह्मशब्दवाच्यत्वं भूताकाशे न संभवतीति । तदिदमाह—सत्येति । ननु 'तस्मिन्यदन्तस्तदन्वेष्टव्यम्' इत्याकाशान्तर्वर्त्यन्वेष्टव्यान्तरनिर्देशाद् दहराकाशो न परमात्मेति चेत् तत्राह—कामाधारश्चेति । अत्र यः कामाधारः समगणि गणित उक्तः, नित्यः स एव दहराकाशवाचाप्युक्तः, अतस्तस्यैव एष आत्मेत्यनुवदनं तद्गुणाश्च चिन्त्यकामा इति योजना । अयं भावः—किं तदत्र विद्यते यदन्वेष्टव्यमिति प्रश्नपूर्वकं 'तस्मिन्कामाः समाहिताः' इति दहराकाशशब्दनिर्दिष्टस्य परमात्मनस्तदन्तर्वर्तिनो गुणाष्टकस्य च प्रथममुपासनं विधीयते । अत एव फलवाक्ये 'अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामान्' इत्युभयोरप्युपास्यत्वं निर्दिश्यत इति दहराकाशः परमात्मा । तदन्तर्वर्त्यन्वेष्टव्यं चापहतपाप्मत्वादिगुणजातं कामशब्देनोच्यत इति । काम्यन्त इति कामाः कल्याणगुणाः ॥ ११२ ॥

पद०—बाह्याकाशश्चेत्यादि । बाह्याकाशश्च यावानयमपि तथा इत्येतदीशे हि अक्लिष्टम्—'यावान्वायमाकाशस्तावानेषोऽन्तर्हृदय आकाशः' इति वाक्यप्रतिपन्नं बाह्याकाशो यावान् अन्तर्दहराकाशशब्दितोऽयमाकाशोऽपि तथा तावान्' इत्येवमुपमानोपमेयभावकथनं परमात्मन्येव ह्यक्लिष्टम्—अगौणम् । भूताकाशे त्विदं नोपपद्यते ; उपमानोपमेयभावस्य भेदगर्भस्यैकस्मिन्नसम्भावितत्वात् । हृदया-

वच्छेदनिबन्धनत्वे 'उभे अस्मन् द्यावापृथिवी अन्तरेव समाहिते' इत्यादिप्रतिपन्नसर्वाश्रयत्वस्य हृदयावच्छिन्नाकाशेऽसम्भवादिति भावः। **सत्यात्मब्रह्मशब्दा नभसि कथमप्यन्वयं न प्राप्नुवन्ति**— 'एतत्सत्यं ब्रह्मपुरमेष आत्मा' इत्यादिनिर्दिष्टाः सर्वप्रकारविकारशून्यत्वनिरुपाधिकात्मत्वनिरतिशयबृहत्त्वबृंहणत्वनिमित्तकाः सत्यात्मब्रह्मशब्दा भूताकाशे कथञ्चिदपि प्रतिपादकत्वेन संबन्धं न लभन्ते। **यश्च कामाधारस्समगणि नित्योऽसावेवात्र दहराकाशवाचा समगणि**—'अस्मिन् कामास्समाहिताः' इत्युपरितनवाक्ये यः कामाधारत्वेनाभिहितः स्वरूपस्वभावविकारशून्यतया सदातनैकरूपस्वरूपस्वभाववतया नित्यप्रकाश इति नित्योऽसौ परमात्मैवात्र दहरविद्योपक्रमे दहराकाशशब्देन प्रत्यपादि। 'अस्मिन् कामाः समाहिताः' इति वाक्यस्य 'तस्मिन् यदन्तः' इति वाक्यस्य च समानार्थकत्वस्वारस्यादिति भावः। **किञ्च एष आत्मेति तस्यैव ह्यनुवदनम्**—तदुपरितनवाक्ये 'एष आत्मापहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासस्सत्यकामस्सत्यसङ्कल्पः' इत्यादिरूपे दहराकाशशब्दवाच्यमात्मशब्देन, अन्तश्शब्दवाच्यमपहतपाप्मेत्यादिभिश्च दर्शयति एतच्छब्दविशेषितात्मशब्देन दहराकाशस्यैव ह्यनुवादो युक्तः। **अतः**—एवमुपपादनात्। **चिन्त्यकामाः**—'तद्य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान्' इत्यादिवाक्यैश्चिन्त्या उपास्यतया प्रतिपन्नाः कामाः काम्यमानत्वयोगिनः। **तद्गुणाः**— तस्य दहराकाशस्य सम्बन्धिनोऽपहतपाप्मत्वादिकल्याणगुणा एव॥ ११२॥

**सर्वेशाधारतोक्त्या भवतु च हृदयव्योम तद्वाज्यधीतं**
**छान्दोग्यस्थो निषादस्थपतिनयपदं ब्रह्मलोकादिशब्दः।**
**आपस्तम्बश्च वैभाजनपुरमवदद्ब्रह्म सर्वात्मभूतं**
**पूस्तस्य प्राणिनस्स्युस्तदपि तदपि हि स्यात्पुरं सर्ववासात्॥ ११३॥**

चिन्ता०—छान्दोग्ये दहराकाशः परमात्मेत्यभिधीयते, वाजसनेयिनां तु शाखायां 'य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते सर्वस्य वशी सर्वस्येशानः' इत्याकाशे शयान एव परमात्मत्वेनाभिधीयते, प्रसिद्धाकाश एव तद्वाचकेन शब्देनोच्यते, तत्कथमुभयोरन्वयः। अत्र समाधिमाह—**सर्वेशेति**। वाजिनां तु शाखायां सर्वेश्वरस्याधारतया हृदयव्योमाभिधीयते तेन तत्र व्योमशब्दाभिधेयंलिङ्गविशेषात् प्रसिद्धाकाश एवेत्यङ्गीकुर्महे। छान्दोग्यस्थ आकाशशब्दः सर्वकामाधारत्वकथनालिङ्गात् परमपुरुषपर एव। ननु च्छान्दोग्ये ब्रह्मलोकशब्दः प्रयुज्यते ननु ब्रह्मैव लोको ब्रह्मलोक इति समासः, ब्रह्मणो लोको ब्रह्मलोक इति षष्ठीतत्पुरुषसमासाश्रयणस्य न्याय्यत्वादिति चेन्न 'एतया निषादस्थपतिं याजयेत्' इत्यत्र

कर्मधारयसमासस्यैवाश्रयणात् तेन न्यायानुसारेण ब्रह्मैव लोको ब्रह्मलोक इत्यस्माभिर्व्याख्यातमिति न कश्चिद्दोषः । तदिदमाह—छान्दोग्येति । निर्णायकन्यायाभावे ह्यर्थान्तरमाशङ्क्यते । अस्य च ब्रह्मणः सर्वाधारत्वेन लोकशब्दवाच्यत्वं च युज्यते । इममेवार्थमापस्तम्बोऽपि वदतीति दर्शयति—आपस्तम्ब इति । 'स वै वैभाजनं पुरं स च भूतं स भव्यम्' इति सर्वात्मभूतं ब्रह्मैव सर्वेषां पुरत्वेन प्रतिपादयति । स वैभाजनम्—सर्वेषां पदार्थानां प्रत्येकविभजनेन स्थातुं योग्यं स्थानम् । 'पूः प्राणिनः सर्व एव गुहाशयस्य' इत्यप्याह । सर्वे प्राणिनो गुहाशयस्य परमात्मनः पुरमित्यर्थः । तेन प्राणिनः परमात्मनः पुरमावासस्थानम् । तदपि—तथापि । तदपि—ब्रह्मापि । तेषां पुरं सर्वाधारत्वेन सर्वेषामस्मिन्वासात् । तेन 'सर्वत्रासौ समस्तं च वसत्यत्रेति वै यतः' इति वासुदेवशब्दार्थोऽनुस्मृतो भवति ॥ ११३ ॥

पद०—सर्वेशाधारतोक्त्येत्यादि । वाज्यधीतम्—'य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते सर्वस्य वशी सर्वस्येशानः' इति वाजिभिर्वाजसनेयशाखिभिरधीतं पठितम् । तत्—आकाशशब्दवाच्यम् । सर्वेशाधारतोक्त्या—सर्वेश्वरस्याधारतयाऽभिधानेन । हृदयव्योम भवतु च—हृदयसुषिररूपं हृदयव्योम भवतु च । छान्दोग्यस्थो ब्रह्मलोकादिशब्दः—'एतं ब्रह्मलोकं न विन्दन्ति' 'एतत्सत्यं ब्रह्मपुरम्' इत्यादिच्छान्दोग्यदहरविद्यापठितो ब्रह्मलोकशब्दः, आदिशब्देन ब्रह्मपुरशब्दो विवक्षितः । निषादस्थपतिनयपदम्—'एतया निषादस्थपतिं याजयेत्' इत्यत्र कर्मधारयसमासस्यैवाश्रयणात् तन्न्यायविषयभूतस्सन् ब्रह्मैव लोको ब्रह्मलोक इति समानाधिकरणवृत्त्या ब्रह्मात्मकलोकपरः । आपस्तम्बश्च—कल्पसूत्रादिप्रणेता आपस्तम्बाख्यो महर्षिश्च । सर्वात्मभूतं ब्रह्म—सर्वेषामात्मतया आधारभूतं ब्रह्म । वैभाजनपुरमवदत्—सर्वेषामपि पदार्थानां प्रत्येकं विभजनेन स्थातुं योग्यं स्थानमित्यर्थविवक्षया 'स वै वैभाजनं पुरम्' इतिवचनेन वैभाजनं पुरमित्यभ्यधत्त । उज्ज्वलायां तु 'स एव च वैभाजनं पुरं विविधैर्भोगैर्भजनीयं विभाजनमेव वैभाजनम् । प्रज्ञादित्वात् स्वार्थेऽण् । अनुशतिकादित्वादुभयपदवृद्धिः । यथा समृद्धं पुरं सर्वैरर्थिभिः प्राप्यते एवमयमपि' इति व्याख्यातम् । किञ्च 'पूः प्राणिनः सर्व एव गुहाशयस्य' इत्यप्याह । सर्वे प्राणिनो गुहाशयस्य परमात्मनः पुरमित्यर्थः । अतः प्राणिनः—सर्वेऽपि प्राणिनः । तस्य—परमात्मनः । पूः—पुरमावासस्थानम् । स्युः—भवेयुरेव । तदपि—तथापि । तदपि—ब्रह्मापि । सर्ववासात् पुरं स्यात् हि—सर्वाधारतया सर्वेषामपि तस्मिन् वासात् तेषां पुरं भवति हि । अतो ब्रह्मलोकपदब्रह्मपुरपदयोः कर्मधारयवृत्त्या ब्रह्मात्मकलोकब्रह्मात्मकपुरपरत्वमेवोचितमिति भावः ॥ ११३ ॥

जीवस्तर्ह्येष आत्मा गुणगणघटनात् तत्परामर्शदृष्टेः
अल्पत्वाद्युक्तितश्चेत्यसदनुपधिकात् सत्यसंकल्पतादेः ।
विश्वैकाधारतादेरपि स खलु परे दहतौपाधिकी स्यात्
प्राजापत्ये तु वाक्ये परसमदशया तद्गुणोक्तिर्विमुक्ते ॥ ११४ ॥

चिन्ता०—इत्थं दहराकाशस्य प्रसिद्धाकाशत्वमाशङ्क्य निराकृतम् । इदानीं जीवत्वमाशङ्क्य निराक्रियते—जीव इति । तर्हि गुणाधारत्वानुपपत्त्या प्रसिद्धाकाशत्वे निवृत्तेऽप्यपहतपाप्मत्वादिगुणोपपत्तेः 'एष आत्मा' इति जीवस्यैव परामर्शनात् 'तत्रापि दहं गगनं विशोकः' इति अल्पप्रमाणत्वकथनाच्च जीव एव दहराकाशः स्यादित्याशङ्क्य प्रतिक्षिपति—असदिति । अत्र हेतुमाह—अनुपधिकादिति । स्वाभाविकादित्यर्थः । परमात्मनो हि स्वाभाविकं सत्यसंकल्पत्वादिकम् । जीवस्य तु तत्प्रसादलभ्यम् । 'परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' इति वचनात् । किंच प्रपञ्चाधारत्वं परमपुरुषस्यात्र कथ्यते तेनापि पर एव प्रतिपाद्यः । ननु दहरत्वमुक्तं तस्य तत्कथमित्याशङ्क्य परिहरति—औपाधिकीति । नात्र परमात्मनः स्वाभाविकं दहरत्वमुच्यते अपितु हृदयावच्छेदनिबन्धनं तदुच्यत इत्यर्थः । ननु प्रजापतिवाक्ये जीवस्याप्यपहतपाप्मत्वादिगुणाष्टकमभिधीयते तेनापहतपाप्मत्वादीनां भगवदसाधारण्यं कथं सिध्यतीत्याशङ्क्याह—प्राजापत्य इति । अयमर्थः—दहरवाक्यप्रकरणसमाम्नातं प्रजापतिवाक्यं दहरवाक्यशेषमेव तत्र प्रतिपाद्योऽपि जीवः परमपुरुषप्रसादलभ्यतत्साम्यदशयाऽपहतपाप्मत्वादिगुणैः परिकर्मितः स्यात् । तथा च न कश्चिद्दोषः ॥ ११४ ॥

पद०—जीवस्तर्हीत्यादि । तर्हि—अपहतपाप्मत्वादिगुणाधारत्वानुपपत्त्या प्रसिद्धाकाशस्य दहराकाशत्वेऽनुपपन्ने । एष आत्मा—दहराकाशशब्दित एष आत्मा । गुणगणघटनात्—अपहतपाप्मत्वादिगुणगणोपपत्तेः । तत्परामर्शदृष्टेः—'एष आत्मा' इति जीवस्यैव परामर्शदर्शनात् । अल्पत्वाद्युक्तितश्च—जीवात्मन्युपपन्नस्याल्पपरिमाणत्वादेः 'दहरोऽस्मिन्' इत्यादिना अभिधानाच्च । जीवः—जीवात्मा भवतु । इत्यसत्—इति शङ्कनमसाधु । अनुपधिकात् सत्यसङ्कल्पतादेः—स्वाभाविकात् सत्यसङ्कल्पत्वादिगुणगणात् । आदिशब्देन सत्यकामत्वापहतपाप्मत्वादिग्रहणम् । जीवस्य स्वाभाविकसत्यसङ्कल्पत्वाद्यसम्भवात् । परमात्मप्रसादेन हि जीवस्य सत्यसङ्कल्पत्वादिकम् । अतो न तस्य तादृशसत्यसङ्कल्पतादिसम्भव इति भावः । विश्वैकाधारतादेरपि—'उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते । अथ य आत्मा स सेतुर्विधृतिः' इत्यादि-

वाक्यप्रतिपन्नात् विश्वैकाधारत्वादिधर्मादपि। स खलु—परमात्मैव खलु दहराकाशशब्दित आत्मेत्यभ्युपगन्तव्यम्। दह्रता परे औपाधिकी स्यात्—'दहरोऽस्मिन्' इत्युक्ता सूक्ष्मता परमात्मनि हृदयावच्छेदरूपोपाधिप्रयुक्ता सती उपपन्नैव भवेत्। प्राजापत्ये वाक्ये—'य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासस्सत्यकामस्सत्यसङ्कल्पस्सोऽन्वेष्टव्यस्स विजिज्ञासितव्यस्स सर्वांश्च लोकानाप्नोति सर्वांश्च कामान् यस्तमात्मानमनुविद्य विजानातीति ह प्रजापतिरुवाच' इत्युक्ते प्रजापतिवाक्ये ऽनन्तरपठिते। विमुक्ते—मुक्तात्मनि विषये। तद्गुणोक्तिस्तु—अपहतपाप्मत्वादिगुणप्रतिपादनं तु। परसमदशया—परमपुरुषप्रसादलभ्यया 'निरञ्जनः परमं साम्यमुपैति' इत्यादिश्रुत्युक्तया मुक्तिदशासम्बन्धिन्या परमात्मसाम्यदशया। तादृशदशाविवक्षयेति भावः। दहराकाशस्य तु स्वतस्सिद्धास्ते गुणाः उपाध्यकथनात्। प्रजापतिवाक्यप्रतिपाद्यस्य जीवात्मनस्तु तत्प्रकरणे बद्धदशाभिधानपूर्वकं 'एष सम्प्रसादो ऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' इति परज्योतिः प्राप्त्यनन्तरमपहतपाप्मत्वादिस्वरूपाविर्भाववचनात् न स्वाभाविका इति भावः ॥ ११४ ॥

दह्राकाशोऽपवर्गप्रद इति गदितुं सम्प्रसादोक्तिरत्र
प्राजापत्ये तु वाक्ये परपरिपठनं प्राप्यनिष्कर्षणार्थम्।
आकाङ्क्षाद्यैस्तदेवं परतदितरयोरन्विते वाक्ययुग्मे
युक्तं नान्योन्यबाधप्रभृति किमपि तत्सामरस्यं हि सौत्रम् ॥ ११५ ॥

इति दहराधिकरणम् ॥ ६२ ॥

चिन्ता०—तर्हि प्रजापतिवाक्यं दहरवाक्याद्भिन्नमेव स्यात्, तत्प्रतिपाद्योऽपि जीवः स्वतन्त्र एव स्यात्, किमर्थं निराकाङ्क्षयोर्द्वयोरपि वाक्ययोः परस्परसंबन्धो भवद्भिरुपपाद्यत इत्याशङ्क्य परिहरति—दह्राकाश इति। नास्माभिरत्राकाङ्क्षा परिकल्प्यते अपितु वाक्यस्वाभाव्यादेव। अत्र हि पूर्वस्मिन् वाक्ये प्रतिपन्नस्य भगवतो मोक्षप्रदत्वं प्रतिपादयितुं जीवकथनम्। संप्रसादो जीवः। भगवत्संबन्धज्ञानरसिकत्वेन प्रसन्नस्वभावत्वात्। उत्तरत्र प्रजापतिवाक्येऽपि प्रतिपाद्यस्य जीवस्य प्राप्यविशेषनिर्धारणार्थं तस्मिन्वाक्ये परमात्मपरिपठनम्। तदेवमाकाङ्क्षासन्निधियोग्यत्वैरुभयोरपि वाक्ययोरन्वितत्वे सति न वाक्यभेदः परिकल्प्यः। तथा च न पूर्वोत्तरवाक्ययोरन्योन्यबाधः शङ्क्यः। नच नैरपेक्ष्यं परिकल्प्यम्;

संभवत्येकवाक्यत्वे वाक्यभेदस्तु नेष्यत इति न्यायेनैकवाक्यत्वे संभवति वाक्यभेदाङ्गीकारस्यान्याय्यत्वात् । अतो द्वयोरपि वाक्ययोः सामरस्यमेव सूत्रकारः प्राहेति दर्शयति—तदिति ॥ ११५ ॥

इति दहराधिकरणम् ॥ २२ ॥

पद०—दह्राकाश इत्यादि । अत्र—दहरविद्याप्रकरणे । सम्प्रसादोक्तिः—'एष सम्प्रसादो ऽस्माच्छरीरात्' इत्यादिनोपरितनप्रजापतिवाक्यप्रभृतिकप्रत्यगात्मविद्याप्रकरणस्थवाक्यतुल्येन वाक्येन सुषुप्तिस्थानवाचकसम्प्रसादशब्दलक्षितस्य जीवात्मनश्चरमशरीरत्यागपूर्वकपरज्योतिःप्राप्तिस्वरूपाविर्भावादिप्रतिपादनम् । दह्राकाशोऽपवर्गप्रद इति गदितुम्—दह्राकाशशब्दितस्य भगवतो मोक्षप्रदत्वरूपमहागुणं प्रतिपादयितुम् । प्राजापत्ये वाक्ये परपरिपठनं तु—'मघवन्मर्त्यं वा इदं शरीरम्' इत्यादौ इन्द्रोद्देश्यकतया प्रवृत्ते प्रजापतिवाक्यसन्दर्भे 'स उत्तमः पुरुषः' इति वाक्ये उत्तमपुरुषपदेन परमात्मप्रतिपादनं तु । प्राप्यनिष्कर्षणार्थम्—जीवात्मनः प्राप्यविशेषनिर्धारणार्थम् । जीवात्मनः प्राप्यः स्वभिन्नः परमात्मैव स च पुरुषोत्तम एवेति विशेषप्रदर्शनार्थमिति भावः । तत्—तस्मात् कारणात् । एवम्—उक्तरीत्या । आकाङ्क्षाद्यैः—परस्पराकाङ्क्षासत्तियोग्यताभिः । वाक्ययुग्मे—दहरविद्याप्रजापत्युपदिष्टप्रत्यगात्मविद्यावाक्यद्वयसन्दर्भे । परतदितरयोरन्विते—परमात्मजीवात्मनोर्विषये समन्विते सति । अन्योन्यबाधप्रभृति—द्वयोर्वाक्ययोरन्योन्यस्मिन् अन्योन्यप्रसक्तिबाधः अन्योन्यप्रसक्त्यभावरूपः, तन्मूलकं वाक्यभेदादिकं च । किमपि—प्रत्यगात्मविद्यायाः स्वतन्त्रविद्यात्मकत्वादिकं च । न युक्तम्—न युक्तिसहम् । सम्भवत्येकवाक्यत्वे वाक्यभेदस्तु नेष्यत इति न्यायादिति भावः । तत्सामरस्यं सौत्रं हि—तयोर्वाक्यसन्दर्भयोर्द्वयोरपि सामरस्यं साङ्गविद्याकप्रधानैकविद्यानिष्ठत्वरूपमैकरस्यं सूत्रैरेव प्रतिपन्नं हि । 'उत्तराच्चेदाविर्भूतस्वरूपस्तु । अन्यार्थश्च परामर्शः' इत्यादिसूत्रैस्तदेकवाक्यत्वप्रतीतिः सुलभैव हीति भावः ॥ ११५ ॥

इति दहराधिकरणम् ॥ २२ ॥

## प्रमिताधिकरणम् ॥ २३ ॥

सूत्रम्—शब्दादेव प्रमितः ॥ ८८ ॥

प्राणेशोऽङ्गुष्ठमात्रः क्वचिदनुकथितस्सञ्चरन् कर्मभिस्स्वै-
रन्यत्राङ्गुष्ठमात्रं पुरुषमपि यमो निश्चकर्षेति दृष्टम् ।
तस्मादेतत्प्रमाणप्रमितमुपनिषज्जीवमाहेत्ययुक्तं
वाक्यस्थेशानतादेर्नरहृदयपरिच्छित्तितस्तद्धि मानम् ॥ ११६ ॥

चिन्ता०—पूर्वं दहरविद्यायामल्पत्वेन श्रुतः परमपुरुष इति 'अल्पश्रुतेरिति चेत्तदुक्तम्' इति सूत्रे प्रत्यपादि, तदल्पपरिमाणयुक्तत्वं जीवस्यैवान्यत्र श्रूयत इति पूर्वपक्षोत्थानेन संगतिरिति भाष्य एवोक्तम् । तदर्थविचारस्तु 'अङ्गुष्ठमात्रः पुरुषः' इत्यङ्गुष्ठप्रमितः प्रत्यगात्मा उत परमात्मेति । तदर्थविचारस्तु किमीशानत्वं देहेन्द्रियाद्यपेक्षम् , उत सर्वापेक्षमिति । तदर्थविचारस्तु—किमुपक्रमगतप्रमितत्वमीशानत्वलिङ्गस्वारस्यविरोधि न वेति । तदर्थं विचार्यते—किं तत्प्रमितत्वं जीवे समञ्जसमुत उभयत्रासमञ्जसमिति । अत्र विषयवाक्यानि भाष्यदीपयोर्व्यक्तं द्रष्टव्यानि । तत्र पूर्वपक्षमुक्त्वा प्रतिक्षिपति—प्राणेशइति । 'प्राणाधिपस्सञ्चरति स्वकर्मभिः । अङ्गुष्ठमात्रो रवितुल्यरूपः' इति श्रुतिरत्राभिसन्धीयते । कर्मभिः स्वैस्सञ्चरन् प्राणेश एव क्वचित् श्रुतावङ्गुष्ठमात्रः कथितः । अन्यत्र वाक्ये पुनः 'अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलात्' इति दृष्टम् । तस्मादेतत्प्रमाणप्रमितमङ्गुष्ठमात्रं जीवमुपनिषदाहेति पूर्वपक्षपरिकल्पनम् । तदयुक्तं स्ववाक्यस्थितेन 'ईशानो भूतभव्यस्य' इत्युक्तेनेशानत्वादिना लिङ्गेन निरस्तत्वात् । कथं तर्हीशानस्याङ्गुष्ठप्रमितत्वमित्याशङ्क्याह—नरेति । उपासकहृदयपरिच्छेदापेक्षया तदङ्गुष्ठप्रमितत्वमुच्यते नपुनः स्वाभाविकम् ॥ ११६ ॥

पद०—प्राणेश इत्यादि । स्वैः कर्मभिः—स्वकीयैः पुण्यपापरूपैः कर्मभिः । सञ्चरन्—देवतिर्यगादिदेहेषु सञ्चरन् । प्राणेशः—प्राणनियन्ता जीवात्मैव । क्वचित्—'प्राणाधिपः सञ्चरति कर्मभिः । अङ्गुष्ठमात्रो रवितुल्यरूपः' इत्येवंरूपायां कस्याञ्चित् श्रुतौ । अङ्गुष्ठमात्रः—अङ्गुष्ठमात्रत्वेन । अनुकथितः—प्रतिपादितः । अन्यत्र—भारतादौ । अङ्गुष्ठमात्रं पुरुषं यमो निश्चकर्षेत्यपि दृष्टम्—

स्ववशिक्षणीयं जीवात्मानं नरकनिपातनाय पूर्वशरीरादुद्दिधीर्षुः सर्वात्मपुण्यपापानुरूपफलप्रदाता यमः अङ्गुष्ठमात्रमेतत्प्रमितं पुरुषं जीवात्मानं निश्चकर्ष पूर्वशरीरात्पृथगाचकर्षेत्यर्थः, एवं स्पष्टतया जीवात्मनि अङ्गुष्ठप्रमितत्वपरं वचनमपि भारतादौ दृष्टम्। तदिदं वचनम्—

‘अथ सत्यवतः कायात् पाशबन्धवशं गतम्।
अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलात्॥’

इति। तस्मात्—जीवात्मलिङ्गस्याङ्गुष्ठप्रमितत्वस्यात्र दर्शनात्। एतत्प्रमाणप्रमितं जीवमुपनिषदाह—निरुक्ताङ्गुष्ठप्रमाणपरिमितं जीवात्मानमेव कठवल्ल्युपनिषत् प्रतिपादयति। इत्ययुक्तम्—इति शङ्कनमयुक्तम्। वाक्यस्थेशानतादेः—‘ईशानो भूतभव्यस्य न ततो विजुगुप्सते’ इति वाक्यप्रतिपन्नभूतभव्येशानत्ववात्सल्यातिशयाभ्यां पुरुषशब्देन च परमपुरुषासाधारणेनेत्यर्थः। तत् मानं हि—प्रतिपादितमङ्गुष्ठप्रमितत्वरूपं परिमाणं हि। नरहृदयपरिच्छित्तितः—उपासकमनुष्यहृदयपरिच्छेदापेक्षया नतु स्वतः, अपरिच्छिन्नत्वादिति भावः॥ ११६॥

न ह्यङ्गुष्ठप्रमाणं हृदयमखिलजन्त्वाश्रयं तत् परस्मिन्
व्याप्ते तन्मात्रतोक्तिः क्वचिदिति मनुजाधिक्रियोक्तिप्रसङ्गे।
सूत्रद्वन्द्वद्वयान्तस्त्रिभिरधिकरणैश्चिन्त्यते तद्विशेषः
तार्तीयैस्स्थापनीया त्ववजिगमिषिता नेतिकर्तव्यताऽत्र॥ ११७॥

इति प्रमिताधिकरणम्॥ २३॥

चिन्ता०—अत्राधिकरणमध्ये मनुष्याधिकारत्वप्रसङ्गादधिकरणत्रयकथनं तेनात्र तृतीयाध्यायप्रसाध्याधिकारचिन्तनादध्यायसङ्करप्रसङ्ग इत्यत्राह—नहीत्यादिना। इत्थं किल कश्चिन्मन्यते—पूर्वत्राङ्गुष्ठप्रमितत्वं परमपुरुषस्योक्तं तच्च हृदयापेक्षयेत्युक्तं नहि सर्वेषां जन्तूनां हृदयमङ्गुष्ठप्रमितम्; अङ्गुष्ठाभावात् तेनाखिलजन्त्वाश्रयंहृदयमङ्गुष्ठप्रमितमिति वक्तुं न शक्यत इति। सत्यमेतत्, सर्वाश्रयं हृदयमङ्गुष्ठप्रमितमिति नोच्यते अपितूपासकहृदयम्। तेन सर्वव्याप्ते परस्मिन् ब्रह्मण्यङ्गुष्ठप्रमितत्वकथनं क्वचिन्मनुष्याधिकारापेक्षयेति मन्तव्यम्। तेनाधिकारप्रसङ्गेनास्मिन्नधिकरणे सूत्रचतुष्टयात्मके द्वयोर्द्वयोः सूत्रयोर्मध्ये त्रिभिरधिकरणैरधिकारविशेषश्चिन्त्यते। न पुनरत्र तृतीयाध्यायस्थैरधिकरणैः स्थापनीयाऽधिक्रिया

अवगन्तुमिष्टा तेन नाध्यायसङ्करप्रसङ्गः। तदिदमाह—तार्तीयैरिति। इतिकर्तव्यता नाम अङ्गकलापः ॥ ११७ ॥

इति प्रमिताधिकरणम् ॥ २३ ॥

पद०—न ह्यङ्गुष्ठेत्यादि। अखिलजन्त्वाश्रयम्—अखिलजन्तवः आश्रयो यस्य तत्, अखिलजन्तुवर्तीत्यर्थः। हृदयम्—शरीरान्तरङ्गविशेषः। अङ्गुष्ठप्रमाणं नहि—अङ्गुष्ठपरिमाणतुल्यपरिमाणं नहि। खरभुजगविहगादीनां मक्षिकामशकादीनां चाधिकन्यूनपरिमाणहृदयत्वादिति भाव। तत्—तस्मात् कारणात्। व्याप्ते—सर्वव्यापके। परस्मिन्—परमात्मनि। तन्मात्रतोक्तिः—अङ्गुष्ठमात्रत्वोक्तिः। क्वचित्—ब्रह्मविद्याधिकृतमनुष्यहृदयापेक्षया कुत्रचिदेव। इति—एवं रीत्या। मनुजाधिक्रियोक्तिप्रसङ्गे—मनुष्याधिकारप्रतिपादनलब्धोपस्थितिरूपे सन्दर्भे। तद्विशेषः—अधिकारविशेषः। देवादीनामप्यधिकारोऽस्ति नेत्येतद्योग्यायोग्यपुरुषरूपोऽधिकारानुबन्धिविशेषः। सूत्रद्वन्द्वद्वयान्तः—द्वन्द्वयोर्द्वयं द्वन्द्वद्वयं, सूत्राणां द्वन्द्वद्वयं सूत्रद्वन्द्वद्वयं 'शब्दादेव प्रमितः। हृद्यपेक्षया तु मनुष्याधिकारत्वात्। कम्पनात्। ज्योतिर्दर्शनात्।' इतिसूत्रचतुष्टयात्मके प्रमिताधिकरणे पूर्वमेकं सूत्रद्वन्द्वमुत्तरमेकं सूत्रद्वन्द्वं तयोर्द्वयं च सिद्धम्। सूत्रद्वन्द्वद्वयस्य अन्तर्मध्ये सूत्रद्वन्द्वद्वयान्तः। पूर्वोत्तरसूत्रद्वन्द्वमध्यइत्यर्थः। त्रिभिरधिकरणैः—'तदुपर्यपि बादरायणस्सम्भवात्। मध्वादिष्वसम्भवादनधिकारं जैमिनिः। शुगस्य तदनादरश्रवणात् तदाद्रवणात् सूच्यते हि' इत्यादिभिस्त्रिभिरधिकरणैः। चिन्त्यते—विचार्यते। तार्तीयैः स्थापनीया—तृतीयेऽध्याये भवानि तार्तीयानि तैस्तृतीयाध्यायस्थैरधिकरणैः स्थापनीया। इतिकर्तव्यता तु—अङ्गकलापरूपेतिकर्तव्यता तु। अत्र—प्रकरणे। नात्रजिगमिषिता—नावगन्तुमिष्टा। अधिकारविशेषविचारमात्रमत्र प्रसङ्गात् क्रियते तद्भिन्नः सर्वोऽप्यधिकारविचारभागस्तत्तदाश्रमभेदभिन्नाङ्गकलापविचारसहितस्तृतीयाध्यायएव करिष्यते अतो नाध्यायार्थसाङ्कर्यप्रसङ्गइति भावः ॥ ११७ ॥

इति प्रमिताधिकरणम् ॥ २३ ॥

## एतद्गर्भं देवताधिकरणम् ॥ २४ ॥

सूत्रम्—तदुपर्यपि बादरायणस्संभवात् ॥ ९० ॥

शब्दात्मा लौकिकार्थाकृतिरियमथवा देवताऽतो न तस्या
ब्रह्मोपासेत्यनार्षं श्रुतपरिहरणं कल्पनं चाश्रुतस्य ।
विश्वस्रष्टा च मा भूदनुमितिविषयस्तत्परैस्त्वेष शास्त्रै-
र्निर्बाधैस्स्थापितः प्राक् स्वयमपि विभुना नैव शक्यापलापः ॥ ११८ ॥

चिन्ता०—पूर्वस्मिन्नधिकरणे 'हृद्यपेक्षया तु मनुष्याधिकारत्वात्' इति ब्रह्मोपासनस्य मनुष्याधिकारत्वमुक्तम् । तर्हि देवादीनां ब्रह्मविद्यायामधिकारो न स्यादित्याशङ्कया संगतिः । तदर्थविचारस्तु किं ब्रह्मविद्यायां देवादीनामधिकारोऽस्ति नेति । किं तेषां साङ्गविद्योपसंहारसामर्थ्यं संभवति नेति । किं तेषां विग्रहवत्त्वं संभवति नेति । किं तद्विग्रहप्रतिपादकानां मन्त्रार्थवादानां तत्परत्वं संभवति नेति । किं मन्त्रार्थवादानामनुष्ठेयार्थप्रकाशनस्तुतिपरत्वाभ्यां प्रतीयमानविग्रहपरत्वाविवक्षा शक्याभिधाना नेति । किं विग्रहवत्त्वमनुष्ठेयार्थप्रकाशनस्तुत्युपयोगि नेति । अत्र देवताधिकरणपूर्वपक्षमुक्त्वा प्रतिक्षिपति—शब्दात्मेति । चतुर्थ्यन्तः शब्द एव देवता अथवा लौकिकाग्न्यादिरर्थ एव यद्वा अर्थोपश्लिष्टशब्दो देवता अतस्तस्या ब्रह्मोपासनं न संभवतीति । अनार्षम्—अवैदिकमित्यर्थः । देवताया अभावे सति देवतायाः फलप्रदत्वमेव न स्यात् । तथा च 'स एनं प्रीतः प्रीणाति' इति श्रुताया देवतायाः प्रीतेः परिहरणं परित्यागः स्यात् । अश्रुतस्य अपूर्वस्य कल्प्यस्य वाच्यस्य वा मतभेदेन परिकल्पनं भवेत् । तच्चायुक्तमेव श्रुतहानाश्रुतकल्पनयोरत्यन्तजघन्यत्वात् । नन्वेवं सति शास्त्रयोन्यधिकरणे निरस्तमीश्वरानुमानं तत्कथमत्र देवताङ्गीकारः ? ईश्वरस्यापि देवतान्तर्भावादित्याशङ्कय परिहरति—विश्वस्रष्टेति । तत्रेश्वरस्यानुमानिकत्वं निरस्यतेऽस्माभिः न पुनरागमिकत्वम्, तेन प्राक् शास्त्रयोन्यधिकरणे निर्बाधैस्तात्पर्यशालिभिः शास्त्रैः स्थापितः परमपुरुषस्तेनापि सर्वशक्तिनाऽपलपितुमशक्यः । तेनागमिकेश्वरवादिनामस्माकं न कोऽपि दोष इति ॥ ११८ ॥

पद०—शब्दात्मेत्यादि । इयं देवता—ब्रह्मोपासनाधिकारविचारविषयभूता देवता । शब्दात्मा—'इन्द्राय स्वाहा' इत्यादिवेदवाक्येषु यश्चतुर्थ्यन्त इन्द्रादिशब्दस्तत्स्वरूपैव । अथ वा—पक्षान्तरे । लौकिकार्थाकृतिः—लोकप्रसिद्धाग्न्यादिरूपार्थस्वरूपाऽस्तु । अतः—देवताया अचेतनशब्दादिरूपत्वेन चेतनकृत्यानर्हत्वात् । तस्याः—देवतायाः । ब्रह्मोपासा न—ब्रह्मोपासनं न सम्भवति । इत्यनार्षम्—इति कथनमवैदिकम् । वैदिकगोष्ठ्यनर्हमित्यर्थः । 'एतं ह वाव तदृषिरभ्यनूवाचेन्द्रो दधीचो अस्थभिः' इत्यादौ ऋषिशब्दस्य वेदे प्रयोगोऽवगन्तव्यः । श्रुतपरिहरणमश्रुतस्य कल्पनञ्च—'वायव्यं श्वेतमालभेत भूतिकामो वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयति' 'स एनं प्रीतः प्रीणाति' इत्यादिवाक्येषु फलसाधनतया श्रुतस्य देवताप्रीत्यात्मकस्यार्थस्य परिहरणं त्यागः, अश्रुतस्य श्रुतिवाक्यानवगतस्यैवापूर्वादेः कालान्तरभाविफलसाधनत्वेन कल्पनञ्च । समापततीति शेषः । श्रुतहानाश्रुतकल्पनयोरत्यन्तजघन्यत्वादिति भावः । ननु विश्वस्रष्ट्रीं देवतामनुमिनुम इत्यस्मद्वचनं शास्त्रयोन्यधिकरणे न्यषेधि, अत्र सा कथं सेत्स्यतीत्यत्र प्रत्युच्यते—विश्वस्रष्टेत्यादिना । विश्वस्रष्टा अनुमितिविषयो मा भूच्च—जगन्निर्माता परदेवतात्मा परमात्मा भवद्बुद्धिसिद्धानुमितिगोचरो मा भूत्, न तावता कापि हानिरिति भावः । तर्हि परदेवतास्तिता केन प्रमीयेतेत्यत्राभिदधाति—तत्परैरित्यादि । एष तु—परमात्मा तु । तत्परैर्निर्बाधैः शास्त्रैः प्राक् स्थापितः—परमात्मनि तात्पर्यशालिभिः प्रमाणान्तरबाधशून्यैश्च 'सत्यं ज्ञानमनन्तं ब्रह्म । यो वेद' इत्यादिशास्त्रैरेव प्रमाणमूर्धाभिषिक्तैः शास्त्रयोन्यधिकरण एव प्रतिष्ठापितः । विभुना स्वयमपि शक्यापलापो नैव—स एष सर्वशक्तिः स्वयमप्यसमरसमक्षं स्वात्मानं नास्तितयाऽपलपितुं न शक्नोत्येव । अतः परदेवताऽसिद्धिशङ्काया नावकाश इति भावः ॥ ११८ ॥

सामर्थ्यं देवतानामुचिततनुभृतामर्थिता तापभाजां
सम्पद्येतेति तासामपि भवति परोपास्तिवर्गाधिकारः ।
ख्यातं मन्त्रार्थवादप्रभृतिषु निखिलं बाधदोषाद्यभावे
मिथ्येत्युद्घोषयन्तस्स्वत इह कथितां मानतां विस्मरन्ति ॥ ११९ ॥

चिन्ता०—अर्थित्वसामर्थ्ययोः सद्भावात् देवतानामुक्तमेवाधिकारं विशेषेण स्थापयति—सामर्थ्यमिति । अर्थी समर्थो विद्वान् शास्त्रेणापर्युदस्त इति चातुर्विध्येनाधिकार उच्यते । अथवाऽर्थित्वं सामर्थ्यं

चेति द्विधैवाधिकारः । सामर्थ्यं पुनस्त्रिधा जन्मसामर्थ्यं कर्मसामर्थ्यं बुद्धिसामर्थ्यं चेति, तदेतत्सर्वमपि देवतानामस्तीत्युच्यते—उचिततनुभृतामिति । शरीरसंबन्धस्य प्रमाणप्रतिपन्नत्वात् बुद्धिसामर्थ्यं कर्मसामर्थ्यं चास्त्येव । दृश्यते हि क्वचिज्जन्मान्तराविस्मरणाद् बुद्धिसामर्थ्यम् , क्वचिदुपदेशाच्च । श्रूयते हीन्द्रादीनां ब्रह्मविद्योपदेशः । जन्मसामर्थ्यं सत्त्वोत्पत्तिशरीरपरिग्रहादेव । अर्थित्वं तु तापत्रयाभिहतत्वादेव सम्पद्यत इति तासामपि देवतानां भगवदुपासनवर्गाधिकारो भवत्येव । अत्र निरीश्वरमीमांसकाः प्रत्यवतिष्ठन्ते देहादीनामनुपलम्भाद्देवादीनां ब्रह्मविद्यायामधिकारो नास्तीति । तत्प्रतिक्षिपति—ख्यातमिति । यत्प्रमाणान्तरेणानुपलब्धं तदेव हि प्रख्याप्यते वेदेनेति तान्त्रिकमर्यादा । तथा च प्रमाणान्तराप्रतिपन्नार्थप्रत्यायकमन्त्रार्थवादप्रमितं सकलमपि देवताविग्रहादिकं कारणदोषबाधकप्रत्ययाभावे सति तथ्यमित्यङ्गीकरणीयम् , ये पुनस्तन्मिथ्येत्युद्घोषयन्ति निरीश्वरमीमांसकाः ते तु स्वोक्तमेव वेदस्य स्वतःप्रामाण्यं विस्मरन्ति । स्वत एव प्रामाण्यं, परतःपुनरप्रामाण्यमिति हि मीमांसकानां मर्यादा । परं पुनः कारणदोषादिकं तत्र नास्तीत्यर्थः ॥ ११९ ॥

पद०—सामर्थ्यमित्यादि । उचिततनुभृतां देवतानां सामर्थ्यं सम्पद्येत—'उचिततनुभृतां वज्रहस्तः पुरन्दरः तेनेन्द्रो वज्रमुदयच्छत्' इत्यादिप्रमाणानुसारेण पटुतरकरणकलेवरयुक्तान देवतानां जन्मसामर्थ्यं कर्मसामर्थ्यं बुद्धिसामर्थ्यमिति त्रिविधमपि सामर्थ्यं संपद्येत सिध्येदेव । तापभाजां देवतानामर्थिता सम्पद्येत—वेदापहारगुरुपातकदैत्यपीडामेघनादपराजयमूलकाध्यात्मिकाधिभौतिकादितापयुक्तानां तासां सर्वदुःखसामान्यनिवृत्तिमन्मोक्षाख्यफलापेक्षारूपाऽर्थितापि सम्भाव्येत । इति—एवमधिकारविशेषसिद्धेः । तासामपि परोपास्तिवर्गाधिकारो भवति—तासां देवतानामपि परमात्मोपासनवर्गे योग्यता भवत्येव । मन्त्रार्थवादप्रभृतिपु निखिलं ख्यातम्—'वज्रहस्तः' इत्यादिरूपेपु मन्त्रेपु, अर्थवादेष्वन्येपु ब्राह्मणादिपु चापेक्षितं देवतानां विग्रहहविरादानज्ञानशक्त्यादिकं सर्वमपि प्रसिद्धमेव । बाधदोपाद्यभावे—प्रमाणान्तरबाधकारणदोषव्याघातादीनामभावे । मिथ्येत्युद्घोपयन्तः—देवताविग्रहादिकं मिथ्येति निरर्थकशब्दकारिणो निरीश्वरमीमांसकाः । कथिताम्—मीमांसारम्भे स्वप्रतिपादिताम् । स्वतो मानताम्—वेदस्य स्वतःप्रामाण्यम् । इह—देवताविग्रहविचारसमये । विस्मरन्ति—न स्मरन्तीत्यर्थः । अन्यथा कथं श्रुतिप्रतिपन्नाबाधितार्थापलाप इति भावः ॥ ११९ ॥

द्वेधा वृत्तिस्स्तुतौ स्यात् स्वपरगुणमुखी प्राक्तनी तावदर्थ्या
निर्धार्यः पश्चिमायामपि निपुणधिया मुख्यधर्मैकदेशः ।
रुच्यर्थायां च तस्यामनृतकथनतो रोचना न ह्यमुग्धे
भूतार्थे का स्तुतिस्स्यादिति मुनिगदितं गौणतादेर्निवृत्त्यै ॥ १२० ॥

चिन्ता०—अत्र कश्चिदाह—अर्थवादादेः स्तुतिपरत्वमुच्यते तान्त्रिकैः, अर्थपारमार्थ्ये स्तुतित्वं बाध्यत इति। इमामाशङ्कां परिहरति—द्वेधा वृत्तिरिति । गुणेन गुणिनः सम्बन्धाभिधानं हि स्तोत्रम् । तद् द्विविधं मुख्यमौपचारिकं चेति । मुख्यं तावद्यथार्थम्—'अपहतपाप्मा विरजः' इत्यादिकम् । औपचारिकं तु राजादिविषयं त्वमिन्द्रश्चन्द्र इत्यादिकम् । तत्रापि तत्तदिन्द्रचन्द्रादिगुणसम्बन्धकथनं परमार्थविषयमेव ; तदेतत्सर्वमत्र पूर्वार्धेनोक्तम् । तथाहि । स्तुतौ द्वेधावृत्तिः स्वगुणमुखी काचित् परगुणमुखी चान्या । तत्र प्राक्तनी तावदर्थ्या अर्थादनपेता । पश्चिमायामपि स्तुतौ मुख्यधर्मैकदेशो निपुणधीभिरनुमन्तव्यः । ननु बालोपच्छन्दनार्थमनृतमपि कथ्यते तच्चौषधादिस्तुतिरूपं, तन्मिथ्यैव अतः स्तुतिमिथ्यात्वं दृष्टमेवेत्याशङ्क्याह—रुच्यर्थायामिति । अयमर्थः—यत्र रुच्यर्थमप्यनृतमुच्यते तत्रापि श्रोता न मुग्धश्चेत् अनृतकथनतः प्ररोचना नैव सिध्यति । मुग्धश्चेत् परमार्थविषयत्वप्रतिपत्त्यैव तद्वाक्यं तस्मै रोचते । अतोऽर्थपारमार्थ्यं स्तुत्युपयुक्तमेव । ननु भूतार्थे का स्तुतिः स्यात् इति मुनिभिरुक्तम्, कविभिरपि 'भूतार्थव्याहृतिः सा हि न स्तुतिः परमेष्ठिनः' इति, ततः स्तुतेः पारमार्थ्यं नास्तीत्युच्यते; तन्न औपचारिकनिवृत्त्यर्थत्वात्तद्वाक्यस्य । नपुनः सर्वथा पारमार्थ्यं निषिध्यते स्तुतीनाम् । परमेष्ठिन स्तुतिस्त्वौपचारिकस्तुतिर्न भवति, अपि तु तात्त्विकीत्यर्थः ॥ १२० ॥

पद०—द्वेधेत्यादि । स्तुतौ—सर्वत्र वेदे वा लोके वा गुणगुणिसम्बन्धाभिधानरूपे स्तुतिसामान्ये । वृत्तिः—प्रवृत्तिः । स्वपरगुणमुखी—स्वगुणद्वारिका परगुणद्वारिका चेति । द्वेधा स्यात्—प्रकारद्वयशालिनी स्यात् । तत्र प्राक्तनी—स्वगुणद्वारिका स्तुतिः । अर्थ्या तावत्—'यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे' इति कोशात् तावच्छब्दोऽवधारणार्थः । अर्थादनपेतैव सार्थिकैव खल्वित्यर्थः । ईदृशी स्तुतिस्तु 'अपहतपाप्मा विजरः' इत्यारभ्य 'सत्यकामस्सत्यसङ्कल्पः' इत्यादिरूपा । पश्चिमायामपि—परगुणद्वारिकायामपि स्तुतौ । निपुणधिया—सूक्ष्मार्थविवेचनसमर्थबुद्धिशालिना: पुरुषेण । मुख्यधर्मैकदेशो निर्धार्यः—त्वमिन्द्रश्चन्द्र इत्यादिरूपेषु स्तुतिवचनेषु स्तव्ये पुरुषे परमैश्वर्यसर्वजनाह्लादकत्वादिधर्मसौष्कल्याभावेऽपि इन्द्रचन्द्रादिरूपस्तुतिघटकपदमुख्यार्थभूतनिरुक्ततत्तद्गुणैकदेश एव

स्तुतिप्रवृत्तिनिमित्तमित्यवधार्यः। तथा च तादृशस्तुतिवचनान्यौपचारिकाणि न त्वेकान्ततो ऽर्थशून्यानि तथा सति सर्वत्र प्रवर्तितव्यत्वात्, तथा लोकेऽदर्शनादिति भावः। रुच्यर्थायां तस्यां च—औषधादिविषये बालोपच्छन्दनार्थायां तस्यां स्तुतौ। अनृतकथनतः—अमृतमिदमौषधं पिबेत्यादिरूपानृतवचनेन। अमुग्धे—मोहरहिते बालादौ। रोचना नहि—औषधे अमृतत्वबुद्धिपूर्विका रुचिर्नैव भवति इदं प्रसिद्धं खलु। तथा च स्तुतिकार्यरुच्यसम्पादनात् स्तुतित्वाभावोऽवगत एवेति भावः। मुग्धे तु परमार्थविषयत्वभ्रमादेव रुचिजननम्, रज्जौ सर्पत्वभ्रान्त्या भयजननेऽपि रज्जुः परमार्थसर्पो भवतीति भावः। भूतार्थे का स्तुतिः स्यादिति मुनिगदितं गौणतादेर्निवृत्त्यै—'भूतार्थे कतमा स्तुतिः' इत्यादिरूपं परमार्थविषयस्तुतेः स्तुतित्वाक्षेपकं मुनिवचनं तु औपचारिकस्तुतित्वनिवृत्त्यर्थं न तु सर्वथा पारमार्थ्यं निषिध्यत इत्यर्थः। 'भूतार्थव्याहृतिस्सा हि' इति तु परमेष्ठिनः स्तुतिरौपचारिकी न भवति अपि तु पारमार्थिकीत्येतदर्थकमिति भाव्यम् ॥ १२० ॥

नानादेहाप्तिशक्ताः कथमिह युगपत्कर्मसंनिध्यनर्हाः
तत्तद्वृत्तान्तसत्त्वे श्रुतिषु भवति नानित्ययोगः प्रवाहात्।
काण्डादौ कर्तृवादः प्रवचननियतो वेदनित्यत्वसिद्धेः
ईशः प्राचीनकल्पक्रमत उपदिशेद्वर्णसर्गेऽपि वेदान् ॥ १२१ ॥

चिन्ता०—अत्र 'विग्रहो हविरादानम्' इत्यादिना विग्रहादिपञ्चकनिरासेन देवतानामधिकारो ब्रह्मविद्यायां नास्तीति प्रलापं प्रत्याचष्टे—नानेति। नानादेहपरिग्रहसमर्था देवादय इति श्रुतिपुराणादिषु प्रसिद्धमेव तेन तादृशशक्तियुक्तानां देवतानां युगपत्कर्मसन्निधिः कथमिव न संयोयुज्यते। ननु सविग्रहाणां देवतानां तद्व्यापाराणां च प्रतिपादने तासामनित्यत्वात् श्रुतीनां नित्यत्वात् नित्यानित्यसंयोगदोषः प्रसज्येतेत्याशङ्क्य परिहरति–तत्तदिति। तत्र हेतुमाह—प्रवाहादिति। अनित्येष्वपि देवताविग्रहेषु तत्तद्वृत्तान्तेषु तादृग्विधेषु अनित्यसंयोगदोषो नास्ति श्रुतीनाम्, इन्द्रादिप्रवाहस्य नित्यत्वात्। तर्हि श्रुतीनां नित्यत्वमुच्यते भवद्भिः, तन्नोपपद्यते काठकं विश्वामित्रस्य सूक्तमित्यादिषु सकर्तृकत्वं प्रतीयते। नेत्याह—काण्डादाविति। श्रुतिषु केषांचित् कर्तृत्ववादः प्रवचनादेव। नपुनः साक्षात्कर्तृत्वेन। तत्कथमितिचेत्तत्र हेतुमाह–वेदेति। वेदनित्यत्वस्य प्रमाणप्रतिपन्नत्वादित्यर्थः। अस्तु मध्ये जातानां वेदप्रवर्तकानां प्रवर्तकत्वमेव व्यासविश्वामित्रादीनाम्। आदिकल्पे भगवानेव वेदं विविधं

करोतीति 'तस्य ह वा एतस्य महतो भूतस्य निश्वसितमेतत्' इत्यादिभिः श्रुतिभिः प्रतिपन्नमित्याशङ्क्य परिहरति–ईश इति । 'धाता यथापूर्वमकल्पयत्' इति भगवतोऽपि पूर्वकल्पक्रमेण प्रवर्तकत्वमभिधीयते । यद्यपि वेदो भगवच्छासनम्, तथापि भगवतो नित्यमेकरूपेण वाक्येन प्रशासितृत्वान्नित्यत्वं नापभ्रश्यतीति भगवच्छासनत्ववादः । अत्र वर्णसर्गेऽपीति वर्णेष्वनित्यत्वमङ्गीक्रियते तेन वर्णनित्यत्ववादिभ्यो निरीश्वर-मीमांसकेभ्यो भेदः सिध्यति ॥ १२१ ॥

पद०—नानादेहेत्यादि । नानादेहाप्तिशक्ताः–युगपदिच्छानुसारेणानेकदेहप्रवेशतदधिष्ठान-शक्तियुक्ता देवताः । इह—लोके । कथं युगपत्कर्मसन्निध्यनर्हाः—एककालक्रियमाणनानायज्ञकर्मस्वा-त्मानं संनिधापयितुं कथमनर्हाः स्युः । तत्तद्वृत्तान्तसत्त्वे—एकैकमन्वन्तरादिपरिमितकालवर्तिसशरीरेन्द्रा-दिव्यापारवृत्तान्तसम्बन्धेऽपि । श्रुतिषु—वेदेषु । प्रवाहात्—पूर्वपूर्वेन्द्रादिसजातीयेन्द्रादिपरम्पराया यावदु-त्तरकालानुवृत्तेः । अनित्ययोगो न भवति—तादृशप्रवाहस्य नित्यत्वेनानित्यार्थसंयोगप्रसङ्गो न भवति । वेदनित्यत्वसिद्धेः—कर्तृस्मरणाभावसहितेन 'वाचा विरूपनित्यया' इत्यादिप्रमाणबलेन वेदानां नित्य-त्वस्य सिद्धत्वात् । काण्डादौ—काण्डेषु विषये । कर्तृवादः—प्रजापतिसोमाग्निविश्वदेवानां कर्तृत्व-प्रवादः । 'मन्त्रकृतो वृणीते नम ऋषिभ्यो मन्त्रकृद्भ्यः, अयं सो अग्निरिति विश्वामित्रस्य सूक्तं भवति' इत्यादिषु मन्त्रकृत्त्वसूक्तकृत्त्वप्रवादः सर्वोऽप्ययम् । प्रवचननियतः—काण्डादिप्रवचनतः प्राप्तः । न तु कर्तृत्वात् । वर्णसर्गेऽपि—निरीश्वरवादिन इव वेदान्तिनो वर्णनित्यत्वानङ्गीकारेण वर्णानामहङ्कार-तत्त्वात् सृष्ट्यङ्गीकारेऽपि । ईशः—पुरुषोत्तमः । प्राचीनकल्पक्रमतः—पूर्वपूर्वकल्पेषु यादृशानुपूर्वी-विशिष्टो वेदाक्षरराशिः उत्तरोत्तरकल्पेष्वपि तादृशानुपूर्वीविशिष्टक्रमेणैव । वेदानुपदिशेत्—'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै' इत्युक्तरीत्या स्वपुत्राय चतुर्मुखाय स्वयमुपदिशेत् । ततः स च नवप्रजापत्यादिपरम्परया लोके वेदान् प्रवर्तयतीति भावः ॥ १२१ ॥

वेदानामीशबुद्ध्या क्रमनियमहतिः कल्पभेदे यदीष्टा
मन्त्रांशानां तथा स्यान्न खलु तदुचितं व्रीहिसोमादिसाम्यात् ।
इत्थं विध्यर्थवादक्रम इति नियमे पाक्षिके वा तथात्वे
पक्षोऽसावाक्षपादः परमतपरिषत्कोटिमाटीकतां नः ॥ १२२ ॥

चिन्ता०—अत्र न्यायवादिनां पक्षमनूद्य निराकरोति—वेदानामिति । 'प्रतिमन्वन्तरं चैषा श्रुतिरन्या विधीयते' इत्युक्तत्वाद् वेदानामीश्वरबुद्ध्या क्रमनियमहतिस्तेषु कल्पेष्वन्यथा भवतीति यदीष्टा यज्ञादिषु प्रयुज्यमानानां मन्त्राणामपि तथैवान्यथाकरणं स्यात् । अस्त्वन्यथाकरणमित्याशङ्क्य प्रतिक्षिपति—नेति । तत्र हेतुमाह—व्रीहीति । अयमर्थः—लोके कार्यकारणभावो नियत एव दृश्यते यथा कपालेन घटस्तन्तुना पट इति । नहि कल्पभेदेन तन्तुभ्यो घटो जायते पटो वा कपालेभ्य इति परिकल्प्यते न्यायवादिभिः । एवं वैदिकेऽप्युदाहरणे 'व्रीहिभिर्यजेत, सोमेन यजेत' इत्यादौ सर्वेष्वपि कल्पेषु व्रीहिसोमयोरेव तत्रतत्र कारणत्वेनोपादानमुच्यते नपुनरन्ययोः कोद्रवदुरालभयोः । एवं सर्वेष्वपि कल्पेषु तत्तत्कार्यहेतुभूतानां मन्त्राणामन्यथाकरणं न संघटत एव । तथा च वेदनित्यत्वसिद्धिः । तर्हिस्तु मन्त्राणां क्रमनियम आवश्यकत्वात्, मास्तु विध्यर्थवादयोरिति चेत् तत्रोत्तरमाह—इत्थमिति । अयमर्थः मन्त्राणामिव विध्यर्थवादयोरपि तेषुतेषु ज्ञानेषु कारणत्वमस्त्येव तत्र यथास्वं नियममन्तरेण न कारणत्वम् । एवं क्रमनियममन्तरेण न कारणत्वमिति भवतैव विचार्य सन्तोष्टव्यम् , तथाच कार्यकारणयोरन्यथाकरणशङ्काया नावकाशः । अत्र यथेश्वरशिक्षितक्रम इति प्रागल्भ्याद् यदि वदसि अथापि क्रमनियमः कदाचिद् भवताऽङ्गीकृत एव । तथा च नित्यमेवायमङ्गीकार्यः क्रमनियम इति श्रेयानेवायं पक्ष इत्यभिप्रायेणाह—पाक्षिक इति । तर्हि न्यायमार्गः किं भेदवादिना भवता परित्यज्यते? परित्यज्यत एवेत्याह—पक्ष इति । अयमाक्षपादः पक्षोऽस्माकं वेदान्तिनां बाह्यसिद्धान्तकोटिं प्राप्नोतु का नो हानिरित्यर्थः ॥ १२२ ॥

पद०—वेदानामित्यादि । कल्पभेदे—चतुर्मुखदिनभूते चतुर्युगसहस्रकालात्मके एककल्पेऽतीते पुनस्तादृशे कल्पान्तरे प्राप्ते । ईशबुद्ध्या—ईश्वरबुद्धिवशेन । वेदानां क्रमनियमहतिरिष्टा यदि—'अग्निमीळे' 'इषे त्वा' अग्न आयाहि' 'शन्नो देवीः' इत्येवमारभ्य क्रमविशेषविशिष्टतयैव नियमेन सावधानैरध्यापकैः पठ्यमानानामृग्यजुस्सामाथर्वनाम्नां वेदाख्याक्षरराशीनां आनुपूर्वीनियमान्यथाकरणमभिमतं यदि । 'प्रतिमन्वन्तरं चैषा श्रुतिरन्या विधीयते' इत्युक्तवचनापातप्रतीतिरीत्या एकस्मिन् कल्पादावेकानुपूर्वी कल्पान्तरेचान्यादृशी नत्वेकैवानुपूर्वीति नियम इत्यङ्गीक्रियते यदि । मन्त्रांशानां तथा स्यात्—वेदान्तर्भूतानामनुष्ठेयार्थप्रकाशकाक्षरराशिभागानामप्यानुपूर्वीनियमान्यथाकरणं भवेत् । तत्—मन्त्रांशानामानुपूर्व्यन्यथाकरणम् । उचितं न खलु—युक्तं न किल । कुतः? व्रीहिसोमादिसाम्यात्—यागकारणीभूतानां व्रीहिसोमादीनामिव मन्त्राणामपि यागीयज्ञानकारणत्वेन कल्पभेदेऽप्यन्यथाकरणानर्हत्वसाम्यात् । अयमाशयः—कारणत्वस्य नियमघटितत्वेन कल्पभेदेऽपि कपालतन्त्वादीनामेव घटपटादिकारणत्ववत् व्रीहिसोमलतादीनामेव व्रीहित्वादिवैशिष्ट्येन यागकारणत्वस्यास्मिन्कल्प इव सर्वेष्वपि

कल्पेषु सिद्धतया मन्त्राणामपि व्रीहिसोमादिवत् यागीयप्रयोगसमवेतार्थज्ञानादृष्टादिकारणत्वात् कारणत्वस्य च तदानुपूर्वीविशेषावच्छिन्नत्वेन कल्पान्तरे तदन्यथाकरणे तेषां ज्ञानादृष्टादिकारणत्वासम्भवापातात् मन्त्राणामानुपूर्व्यन्यथाकरणमयुक्तमिति । तथा च न्यायपरिशुद्धौ शब्दाध्याये द्वितीयाह्निके आचार्यसूक्तिः 'मन्त्रादिषु क्रमभङ्गानुपपत्तिश्च कल्पान्तरेऽपि तच्छक्त्यनपायादेव, तथात्वेऽपि वा यथापूर्वोच्चारणेऽपि तदनपायात् । अन्यथा कल्पनागौरवादिति । तथापि सर्गप्रलयसम्भवात् सम्प्रदायविच्छेदे सर्ववेदोच्छेदात् पश्चादीश्वरस्तत्स्रष्टा स्यात् । न स्यात्, तथापि प्राचीनवेदसाक्षात्कारिणस्तस्य तत्प्रवर्तनमात्रौचित्यात् शक्तस्यापि तज्जातीयवेदान्तरकल्पने गौरवात् । शक्तावपि सिद्धोपजीवनस्यास्मदादिषु दृष्टेः । एषामेव च मन्त्राणां कल्पान्तरेऽपि मन्त्रत्वाविरोधात्' इति । इत्थं विध्यर्थवादक्रम इति—'एवंमन्त्रनित्यत्वे च तुल्यन्यायतया ब्राह्मणनित्यत्वस्यापि दुस्त्यजत्वात् तद्दृष्टान्तेन वा तन्नित्यत्वसाधनात्' इत्युपरितनन्यायपरिशुद्ध्युक्तिक्रमेण प्रतिपादितस्य मन्त्रनित्यत्वन्यायस्यानुपूर्वीविशेषावच्छिन्नतयैव यागादिकर्तव्यतादिज्ञानतदपेक्षितप्राशस्त्यादिज्ञानकारणभूतयोर्विध्यर्थवादयोरपि सामान्येन तयोरप्यानुपूर्वीनित्यत्वरूपोऽयमेव क्रम इति हेतोः । नियमे—वेदत्वावच्छेदेन कल्पभेदेऽप्यानुपूर्वीनियमे । पाक्षिके तथात्वे वा—वेदपौरुषेयत्ववादिमतानुसारेणास्मिन्कल्पे इयमानुपूर्वी कल्पान्तरे त्वन्यानुपूर्वीति व्रीहियवादिवद्वैकल्पिकतया एकैककल्पादिकल्पावसानपर्यन्तक्रमनियमे वा । विचार्ये ग्राह्ये सतीति शेषः । अयं पक्षस्साधुर्वा अयं पक्षस्साधुर्वेति विचार्यान्यतरपक्षे संग्राह्ये सति । असौ आक्षपादः पक्षः—प्रतिकल्पमीश्वरेण वेदोऽन्यथान्यथा निर्मीयत इत्येवंरूपः कल्पभेदेन वेदानुपूर्वीभेदावलम्बिगौतमकल्पितः पक्षः । नः—पक्षद्वयेऽपि पक्षपातं विना युक्तत्वमयुक्तत्वं च विचार्यायं युक्त इति निश्चितवतां वेदान्तिनामस्माकम् । परमतपरिपन्थिकोटिमाटीकताम्—बाह्यसिद्धान्तगोष्ठीनिविष्टतां प्राप्नुताम् । तावता किं नश्छिन्नमिति भावः ॥ १२२ ॥

सौक्ष्म्यात् तुल्याभिघारात् सहकृदपगमात् छादकादान्यपर्यात्
अत्यासत्त्यातिदूराद् बलवदभिभवानुद्भवाक्षोपघातैः ।
नेक्ष्यन्ते वर्तमानान्यपि हि सुरगणास्तद्वदन्तर्धिशक्तेः
प्रख्याताः सिद्धिभेदा अपि जननतपोयोगमन्त्रौषधिभ्यः ॥ १२३ ॥

इति देवताधिकरणम् ॥ २४ ॥

चिन्ता०—यदि देवतानां विग्रहादिकमस्ति तर्हि किमर्थमस्माभिर्नोपलभ्यत इत्याशङ्क्यानुपलब्धिकारणानां बहुत्वमाचष्टे—सौक्ष्म्यादिति । 'अतिदूरात् सामीप्यात्' इति साङ्ख्यग्रन्थे हि विद्यमाना-

नामप्यनुपलब्धिकारणानि परिपठितानि । सौक्ष्म्यात्परमाण्वादीनामनुपलब्धिः । तुल्याभिघारात् तैलसिक्तस्य तैलबिन्दोः । सहकृदपगमात् सहकार्यभावादन्धकारवर्तिनो घटादेः । छादकात् पटावारितानां पदार्थानाम् । आन्यपर्यात् व्यासक्तहृदयस्याग्रतः स्थितानां पदार्थानाम् । अत्यासत्त्या स्वनयनगतस्य । अतिदूरात् देशान्तरगतस्य । बलवदभिभवात् मध्यन्दिनोल्काप्रकाशस्य । अनुद्भवात् चाक्षुषकिरणसंघातरूपादेः । अक्षोपघातात् रुग्णनयनस्य पुरोऽवस्थितस्य वस्तुनोऽनुपलब्धिरिति सर्वत्रान्वयः । एतेभ्यस्सर्वेभ्यो हेतुभ्यः पुरतो वर्तमानान्यपि नोपलभ्यन्ते । तद्वदग्नीन्द्रादिदेवतागणोऽप्यन्तर्धानशक्त्या नोपलभ्यते । किं च शास्त्रेषु जन्मना तपसा योगेन मन्त्रौषधादिभिश्च माहात्म्यात् सिद्धिविशेषाः प्रख्याताः । जन्मतः पिशाचादीनाम् , तपसो महर्षीणाम् , योगतो योगिनामन्तर्धिशक्तिरस्त्येव । मन्त्रौषधिभ्यस्तच्च प्रसिद्धमेव । तेन देवादीनामन्तर्धिशक्तेरनुपलम्भ इति सुष्ठूक्तम् ॥ १२३ ॥

इति देवताधिकरणम् ॥ २४ ॥

पद०—सौक्ष्म्यादित्यादि । सौक्ष्म्यात्—परमाण्वादीनामिवानुपलब्धिकारणात् सूक्ष्मपरिमाणात् । तुल्याभिघारात्—तैलसिक्ततैलबिन्द्वादीनामिवात्यन्तसजातीयविक्षरणात् । सहकृदपगमात्—अन्धकारवर्तिनो घटादेरिव उपलम्भसहकारिकारणभूतालोकादिसमवधानाभावात् । छादकात्—पटावारितानामिवावारकवशात् । आन्यपर्यात्—व्यासक्तहृदयस्याग्रतः स्थितानां वस्तूनामिव वस्त्वन्तरचिन्ताक्रान्तमानसान्यपरत्वात् । अत्यासत्त्या—स्वनयनगततारकारक्तिमादीनामिव नैरन्तर्येण । अतिदूरात्—देशान्तरगतानामिव चाक्षुषरश्मिप्रसरविरोधिदेशव्यवधानात् । यद्वा चाक्षुषरश्मिगमनानर्हदूरदेशवर्तित्वात् । बलवदभिभवानुद्भवाक्षोपघातैः—प्रबलतरभास्करप्रभाभिभूतमध्यन्दिनोल्कादीनामिव उपलभ्यवस्त्वत्यन्तसजातीयवस्त्वन्तरबहुलीभूतगुणकृतग्राह्यग्राहकगुणवैकल्यं बलवदभिभवः चाक्षुषकिरणरूपादीनामिव बहिरिन्द्रियग्रहणायोग्यतापादकः स्वरूपसम्पूर्णनिष्पत्त्यभावोऽनुद्भवः नयनरोगादिरक्षोपघातः तैः । वर्तमानान्यपि नेक्ष्यन्ते हि—विद्यमानान्यपि वस्तूनि नोपलभ्यन्ते खलु । नहि कारणान्तरप्रयुक्तानुपलब्धिमात्रेण वस्त्वभावो निश्चेय इति भावः । तद्वत्—तद्रीत्यैव । सुरगणाः—विद्यमाना एवाग्नीन्द्रादिदेवतागणाः । अन्तर्धिशक्तेः—अन्तर्धानशक्तिवशात् । नेक्ष्यन्ते—नोपलभ्यन्ते । अपिच शास्त्रेषु जननतपोयोगमन्त्रौषधिभ्यः—जातिमात्रात् पिशाचादीनाम्, तपसो महर्षीणाम् , योगप्रभावात् योगिनाम् , मन्त्रशक्तिवशात् जप्तॄणाम् , औषधिशक्तिविशेषेभ्यश्च दिव्यगुलिकामूलिकादिशालिनां सिद्धानां च । सिद्धिभेदाः—अन्तर्धानशक्त्यादिविशेषाः । प्रख्याताः—प्रसिद्धाः । अतो देवादीनामनुपलम्भ इति न तावता तेषामभाव इति भावः ॥ १२३ ॥

इति देवताधिकरणम् ॥ २४ ॥

## एतद्गर्भे—मध्वधिकरणम् ॥ २५ ॥

सूत्रम्—मध्वादिष्वसम्भवादनधिकारं जैमिनिः ॥ ९५ ॥

स्यादेवं देवमात्रे मनुज इव परोपास्तिमात्रं तथापि
स्वस्यैवाराध्यभावः स्वपदमपि फलं यत्र नात्राधिकारः ।
मैवं सर्वान्तरात्मा स्वतनुभृदिति चोपासते मुक्तिकामाः
कामादावर्तते तु स्वपदमपि फलं कल्पमन्वन्तरादौ ॥ १२४ ॥

इति मध्वधिकरणम् ॥ २५ ॥

चिन्ता०—पूर्वस्मिन्नधिकरणे देवतासामान्यस्य भगवदुपासनाधिकारश्चिन्तितः, इदानीं पुनर्देवताविशेषस्योपासनाविशेषाधिकारो निरूप्यत इति संगतिः । यद्वा पूर्वत्राधिकारसंभव उक्तः अधुना मध्वादिविद्यायामेतदसंभवेन पूर्वपक्षोत्थानमिति संगतिः । तदर्थविचारस्तु—मध्वादिविद्यासु या देवतोपास्या तासु किं तस्या अधिकारोऽस्ति उत नेति । किं तस्यास्तद्विद्योपसंहारसामर्थ्यमस्ति उत नेति । किं मधुविद्यायां वस्वादिदेवतामात्रमुपास्यमुत तदवस्थं ब्रह्मेति । किं वसुत्वमात्रं विद्याफलमुत ब्रह्मप्राप्तिपर्यन्तं वसुत्वमिति । अत्र संगत्यभिधानगर्भं पूर्वपक्षप्रकारमनूद्य तत्र पूर्वपक्षेण विरोधद्वयमाशङ्क्य परिहरति—स्यादेवमिति । मनुष्येष्विव देवतासामान्ये परमपुरुषोपासनसामान्यमेवं भवत्येव तथापि मध्वादिषु केषुचिदुपासनेषु यासां देवतानामुपास्यत्वं तासामेवोपासकत्वं न स्यात् । तथा च यासां देवतानां प्राप्यतादिनिवेशस्तासामेव देवतानां प्राप्तृत्वं विरुद्धमेव । तथाचोपास्योपासकयोः कर्मकर्तृविरोधेन मध्वादिषु वस्वादीनामधिकारो न स्यात् । शब्दार्थस्तु—वस्वादिभुज्यमानस्यादित्यस्याराध्यभावात् विशेषणतया निविष्टस्य वस्वादेराराधकभावो विरुद्ध एव । तथा च वसुप्राप्तिपूर्वकपरमात्मप्राप्तेः फलत्वात् स्यादेव पूर्वमेव विद्यमानवस्वादीनां वसुपदस्याप्राप्यत्वात्तत्रापि विरोध एव । तेन तत्राधिकार एव न स्यादिति । उक्तमिमं पूर्वपक्षं निराकरोति—मैवमिति । तत्रोपासनविरोधं तावत्परिहरति—सर्वान्तरात्मेति । न केवलं स्वात्मोपास्यः अपि तु स्वविशिष्टः परमात्मा तेन परमात्मप्रधानस्यात्मनो नोपासनानधिकारः । नच फलप्राप्तावपि विरोध इत्याह—कामादिति । वसुत्वेन वर्तमानस्य वर्तमानमेव वसुपदं फलञ्चेत् तदा

ह विरोधः स्यात्। अत्र हि कल्पान्तरे मन्वन्तरेऽपि वसुपदप्राप्तिः फलत्वेन प्राप्यते। तथा च को विरोध इति ॥ १२४ ॥

इति मध्वधिकरणम् ॥ २५ ॥

पद०—स्यादेवमित्यादि । एवम्—'तदुपर्यपि' इत्याद्युक्तार्थित्वसामर्थ्यादिस्थापनाक्रमेण । मनुज इव—मनुष्याणामिव । देवमात्रे—सामान्येन देवानाम्। परोपास्तिमात्रं स्यात्—परमात्मोपासनसामान्यमधिकार्थमस्तु । तथापि—एवमङ्गीकारेऽपि । यत्र—यस्मिन्नुपासने । स्वस्यैवाराध्यभावः—वस्वादिरूपस्य देवस्य स्वस्यैवोपास्यत्वं शास्त्रावगतम् । किंच फलमपि स्वपदम्—यस्मिन्नुपासने फलमपि वसुत्वादिस्वपदप्राप्तिरूपमेव शास्त्राधिगतम् । अत्र—एतादृशोपासने। अधिकारो न—उपास्यतया श्रुतानां देवतानामधिकारो नास्त्येव। स्वस्य स्वोपासकत्वासम्भवात् लब्धस्य च स्वपदस्य लब्धव्यत्वासम्भवादिति भावः। मैवम्-एवं मा शङ्किष्ठाः। मुक्तिकामाः—मुमुक्षव एव वस्वादिदेवाः । सर्वान्तरात्मा स्वतनुभृदिति चोपासते—स्वात्मिकां तनुं बिभर्तीति स्वतनुभृत्। सर्वान्तरात्मत्वेन स्वात्मशरीरकत्वेन च परमात्मानमुपासते। अतः परमात्मप्रधानस्य स्वात्मनो नोपासनानधिकारः। स्वपदं फलमपि—अस्मिन्कल्पेऽस्मिन्मन्वन्तरे वा स्वेनावाप्तं यद्वसुत्वरूपं पदं स्थानं तदात्मकं तादृशोपासनफलमपि । कामात्—उपासनदशायां वसुत्वादिपदप्राप्तिपूर्वकमोक्षकामनावशात् । कल्पमन्वन्तरादौ—विद्यमानवसुत्वादिपदनिवृत्तिकालभूते कल्पान्तरे मन्वन्तरे वा। आवर्तते—पुनरावर्तते। विद्यमाने वस्वादिपदे एतन्मन्वन्तरावसाने निवृत्ते सति इदानीं क्रियमाणोपासनाविशेषबलेनागामिनि मन्वन्तरादौ पुनर्वस्वादिपदं लभ्यते तेन लब्धस्य लभ्यत्वानुपपत्तिर्नाशङ्क्येति भावः ॥ १२४ ॥

इति मध्वधिकरणम् ॥ २५ ॥

## एतद्गर्भे–अपशूद्राधिकरणम् ॥ २६ ॥

सूत्रम्—शुगस्य तदनादरश्रवणात् तदाद्रवणात् सूच्यते हि ॥ ९८ ॥

जैमिन्युक्तापशूद्राधिकरणसरणेर्नास्ति विद्याभिलब्धिः
शूद्रादीनां तथापि स्मृतपरभजनाधिक्रिया जाघटीति ।
श्रोतृत्वाद्भारतादेस्स्वजनिसमुचितैः कर्मभिश्चेत्ययुक्तं
प्राप्ते ब्रह्मोपदेशे ह्युपनयनपरामर्शनादि प्रसिद्धम् ॥ १२५ ॥

चिन्ता०—मनुष्यव्यतिरिक्तानां देवतानां वस्वादिदेवताविशेषाणां चार्थित्वसामर्थ्ययोस्संभवादधिकारोऽस्तीत्युक्तम्, तद्वदर्थित्वसामर्थ्ययोः प्रयोजकत्वे मनुष्यविशेषाणां शूद्रादीनामप्यधिकारः स्यादित्याशङ्कया संगतिः । तदर्थविचारस्तु—किं ब्रह्मविद्यायां शूद्रस्याधिकारोऽस्ति नेति । किं तस्य तदुपसंहारसामर्थ्यमस्ति नेति । किं ब्रह्मविषयमनोवृत्तिरूपा ब्रह्मविद्या ऽनधीतवेदस्यापि संभवति नेति । किं वेदादेव ब्रह्मावगतिः, उतेतिहासपुराणादिनापि संभवतीति । किमितिहासपुराणयोर्वेदोपबृंहणं कुर्वतोरेव ब्रह्मावगतिहेतुत्वमुत स्वातन्त्र्येणेति । किं जानश्रुतेः पौत्रायणस्य शूद्रेत्यामन्त्र्य विद्योपदेश इतिहासपुराणयोर्निरपेक्षब्रह्मावबोधकत्वमुपोद्बलयति नेति । किमत्र शूद्रशब्दो वृपलजातिपर उत शुगस्येति विगृह्य 'शुचेर्दश्च' इति रक्प्रत्यययोगवृत्त्या शोकवत्परः । यद्यपि पूर्वकाण्डे भगवता जैमिनिना शूद्राणामग्निविद्ययोरभावात् कर्माधिकारो नास्तीत्युक्तम् । अथापि

"मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः ।
स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् ॥"

इति भगवद्वचनादधिकारशङ्कया पूर्वपक्षमाह—जैमिन्युक्तेति । 'मां हि' इति शूद्राणामधिकारित्वं भगवतैव स्मर्यते तस्मादधिकारो ऽस्ति इति । अथापि ज्ञानाभावे कथमुपासनं संयोयुज्यत इत्याशङ्क्याह—श्रोतृत्वादिति । अयमर्थः—वेदाध्ययनपूर्वकं भगवज्ज्ञानं मा भूच्छूद्रादेः । अथापि भारतादिश्रवणपूर्वक-

मस्त्येव भारतादेः श्रोतृत्वात्—श्रोतुं योग्यत्वादित्यर्थः । अस्तु ज्ञानं भारतादिश्रवणात् तथापि कर्मभिरपक्वकषायस्य कथं भगवतः सत्यवचनादुपासनं जायत इति पुनरप्याशङ्क्य निराकरोति—स्वजनीति । यथा ब्राह्मणादयः स्वाधिकारानुरूपैर्यज्ञादिभिः कर्मभिर्विद्याविरोधिपापनिवर्हणं कुर्वते, एवं शूद्रोऽपि स्वाधिकारानुरूपैः शुश्रूषादिभिर्ब्रह्मोपासनविरोधिपापनिवर्हणं कुर्यादित्यर्थः । इत्थं पूर्वपक्षमनूद्य निराकरोति—अयुक्तमिति । तत्र हेतुं दर्शयति—प्राप्त इति । ब्रह्मोपदेशे प्राप्ते सति 'संस्कारपरामर्शात्तदभावाभिलापाच्च' इत्यादिभिः सूत्रैरुपनयनसद्भावावश्यंभावः सूत्रकारैरेव प्रदर्शितः । अतस्त्रैवर्णिकानामेव ब्रह्मविद्यायामधिकारो न शूद्रादीनामित्यर्थः ॥ १२५ ॥

पद०—जैमिन्युक्तेत्यादि । जैमिन्युक्तापशूद्राधिकरणसरणेः—पूर्वकाण्डे जैमिन्युक्तापशूद्राधिकरणमार्गेण । शूद्रादीनाम्—शूद्राणां सङ्कीर्णजातानाञ्च । विद्याग्निलब्धिर्नास्ति–विद्याधिकारोऽग्न्यधिकारश्च नास्त्येव । तथापि–स्वाध्यायाध्ययनाधिकारेऽग्न्याधानाद्यधिकारेचाविद्यमानेऽपि । भारतादेः श्रोतृत्वात्–'श्रावयेच्चतुरो वर्णान् कृत्वा ब्राह्मणमग्रतः' इत्यादिशास्त्रानुमतात् ज्ञातव्यसर्वार्थोपपादनयुक्तमहाभारतरामायणाद्यर्थश्रवणात् । कर्तव्यभगवदुपासनादितत्त्वावगमलाभादिति भावः । स्वजनिसमुचितैः कर्मभिश्च—स्वजात्यनुगुणैः सत्यवचनब्राह्मणादिशुश्रूषानामकीर्तनतीर्थस्नानादिभिस्तत्कर्मभिश्च । स्मृतपरभजनाधिक्रिया जाघटीति—

"मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः ।
स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् ॥"

इत्यादिस्मृतिसिद्धः परमात्मोपासनाधिकारः सम्यग्घटत एव । इत्ययुक्तम्—इत्याशङ्कनमयुक्तम् । ब्रह्मोपदेशे प्राप्ते उपनयनपरामर्शनादि प्रसिद्धं हि—ब्रह्मोपदेशकरणसमये 'नैतदब्राह्मणो विवक्तुमर्हति समिधं सोम्याहर उप त्वा नेष्ये तं होपनिन्ये' इत्याद्युपनिषद्वाक्योक्तरीत्या उपदेश्यस्य ब्राह्मणत्वाब्राह्मणत्वविचारपूर्वकमुपनयनपरामर्शनादिकमुदाहृतवाक्यादिषु 'संस्कारपरामर्शात् तदभावाभिलापाच्च' इत्यादिसूत्रविषयभूतेषु प्रसिद्धं हि । शूद्रस्य च 'न शूद्रे पातकं किञ्चिन्न च संस्कारमर्हति' इत्यादिनिषेधेनोपनयनाद्यभावात् तस्य ब्रह्मविद्यायां नाधिकार इति भावः ॥ १२५ ॥

शूद्राणां भारतादेश्श्रवणमनुमतं पापशान्त्यादिसिद्ध्यै
वेदार्थापातबुद्धिर्यदनाधिकरणा नोपबृंह्येत तैस्सः।
विद्यास्थानानि शूद्रैर्मुरभिदकथयत् पाण्डवाय द्विसप्ता-
प्यस्प्रष्टव्यानि तस्मान्नहि विकलधियां स्यादुपासाधिकारः॥ १२६ ॥

चिन्ता०—शूद्रादीनां भारतादिश्रवणं किमर्थमनुमतमित्याशङ्क्याह—शूद्राणामित्यादिना। पापशान्त्यर्थं नपुनः श्रौतज्ञानार्थं शास्त्रात् प्रतिपन्नार्थविशदीकरणार्थमित्यर्थः। तदेव विवृणोति—वेदार्थेति। वेदार्थापातबुद्धिः शूद्रस्य यदि स्यात् तदानीं शूद्र इतिहासपुराणैरुपबृंह्येत विशदज्ञानवान् परिकल्प्येतेत्यर्थः। नच शूद्रस्यापातबुद्धिरेवास्ति। तस्य ब्राह्मण्याभावादुपनयनाभावः, तदभावाद्वेदाध्ययनाभावः। तस्मादापातप्रतीतिरेव नास्ति। सा पुनरापातप्रतीतिर्यदनधिकरणा यच्छूद्रानाधारा स शूद्र इतिहासपुराणैर्नोपबृंह्येत तत्त्वज्ञानवत्तया नोपबृंह्येतेत्यर्थः। तस्मादितिहासपुराणश्रवणं शूद्रस्य पापक्षयार्थमेव। नपुनस्तत्त्वज्ञानाभिवृद्ध्यर्थमिति। यद्वा वेदार्थापातबुद्धिरित्यादेरयमर्थः—वेदो हि द्विविधः अधीतोऽनधीतश्चेति। अधीतो ब्राह्मणादेः। अनधीतस्तु शूद्रस्य, अधीतो वेद आपातप्रतीतिं जनयति अनधीतस्तु न जनयति। तथा च वेदार्थापातबुद्धिर्यदनाधिकरणा यस्मादनधीताद्वेदान्न जायते। सोऽनधीतो वेदस्तैरितिहासपुराणाद्यैर्नोपबृंह्येत। आपातप्रतिपन्नार्थविशदीकरणं ह्युपबृंहणम्। शूद्रविषये त्वापातप्रतीतिजनकत्वाभावात् वेदस्योपबृंहणीयत्वं न युज्यत इति। किंच भगवानेव साक्षात् द्विसप्त चतुर्दश विद्यास्थानानि मया मनीषिणां पावनत्वेनोपदिष्टानि शूद्रस्य न स्प्रष्टव्यानीति महाभारते पाण्डवायोपादिशत्

'आदावेव मयोक्तानि पावनानि मनीषिणाम्।
तस्मान्नैतानि शूद्राद्यैः स्प्रष्टव्यानि युधिष्ठिर॥" इति।

कथं तर्ह्यैतिहासिकानि पौराणिकानि च भगवत्स्तोत्राणि शूद्रैः पठ्यन्ते? इत्थम्। केवलसंकीर्तनत्वेन तेषां पाठो न पुनर्वेदोपबृंहणत्वेनेति विभागः। तस्मादित्यादि—एवं वेदार्थज्ञानोपायाभावात् विकलधियामल्पज्ञानानां शूद्राणामुपासाधिकारो नहि भवेदित्यर्थः॥ १२६॥

पद०—शूद्राणामित्यादि। शूद्राणां भारतादेः श्रवणं पापशान्त्यादिसिद्ध्यै अनुमतम्—उदाहृतस्मृतिवचनादौ शूद्राणां भारतादिश्रवणं तन्मात्रेण पापनिवृत्त्युत्कृष्टजन्मलाभादिफलविशेषसिद्ध्यर्थ-

मेवाभ्यनुज्ञातं न तु श्रौतार्थविशदीकरणार्थमित्यर्थः। कुत इत्यत्राह—वेदार्थापातबुद्धिर्यदनाधिकरणा—वेदार्थविषयिणी संशयविपर्ययसहिष्णुतया जिज्ञासोत्पादनी आपातबुद्धिर्यच्छूद्रानाधारा। सः—शूद्रः। तैः—इतिहासपुराणादिभिः। नोपबृंह्येत—ज्ञानवत्तया न क्रियेत। शूद्राणां स्वसंवादेन इतिहासपुराणादिश्रवणं पापक्षयार्थमेव नपुनस्तत्तद्वेदवाक्यार्थविषयकसंशयविपर्ययनिरासकनिश्चयात्मक तत्त्वज्ञानाभिवृद्ध्यर्थमिति भावः। यद्वा अधिक्रियते ऽनेनेत्यधिकरणं करणमेव वेदार्थापातबुद्धिरनधीतत्वेन यद्वेदकरणिका न भवति। सः—तथाऽनधीततयाऽनुत्पादितापातप्रतीतिको वेदः। तैः—इतिहासपुराणादिभिः। नोपबृंह्येत—तत्त्वज्ञानवर्धनाय न विशदीक्रियेत। आपातप्रतिपन्नार्थविशदीकरणं ह्युपबृंहणम्। शूद्रविषये त्वापातप्रतीतिजनकत्वाभावात् वेदस्योपबृंहणीयत्वं न युज्यते इति। किञ्च मुरभित्—श्रीकृष्णः। द्विसप्तापि विद्यास्थानानि—

'अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः।
पुराणं धर्मशास्त्रञ्च विद्या ह्येताश्चतुर्दश॥'

इत्युक्तानि चतुर्दशापि विद्यास्थानानि। शूद्रैरस्पृष्टव्यानि—नाध्येयानीति। पाण्डवाय—युधिष्ठिराय। अकथयत्—

'आदावेव मयोक्तानि पावनानि मनीषिणाम्।
तस्मान्नैतानि शूद्राद्यैः स्प्रष्टव्यानि युधिष्ठिर॥'

इति व्यासवचनेन प्रतिपादयामासेत्यवगम्यते। तस्मात्—भारतश्रवणादे र्वेदार्थज्ञानोपयोगित्वाभावात्। विकलधियाम्—अल्पज्ञानानां शूद्रादीनाम्। उपासाधिकारो नहि स्यात्—भगवदुपासनाधिकारो न सम्भवत्येव हि। उपासनाविषयकयथावज्ज्ञानाभावान्नाधिकारः शूद्राणां तास्विति भावः॥ १२६॥

**गीतं शूद्रादिकानामपि परभजनं केवलं स्वार्हधर्मै-**
**र्धर्मव्याधस्तुलाधृग्विदुर इति च ते प्राग्भवाभ्याससिद्धाः।**
**वक्ता शूद्रेति जानश्रुतिमभिमुखयन् शोकमस्य व्यनक्ति**
**क्षत्तृप्रैपादिलिङ्गैस्स्फुटतरविदितं क्षत्रियत्वं हि तस्य॥ १२७॥**

इत्यपशूद्राधिकरणम्॥ २६॥

चिन्ता०—ननु शूद्रादीनामपि परभजनं 'ब्राह्मणैः क्षत्रियैर्वैश्यैः' इत्यादिना 'मां हि पार्थ व्यपाश्रित्य' इत्यादिना चोक्तं तत्कथमुपपद्यत इत्याशङ्क्याह—गीतमिति। तदनुष्ठानं स्वजात्यनुरूपधर्मानुष्ठानेन मालाकरणदीपारोपणप्रदक्षिणनमस्कारोपलेपनादिमात्रेणेति न विरोधः। ननु तर्हि शूद्राणामुपासनाधिकारो नास्तीति भवद्भिरुच्यते तथा च सति धर्मव्याधादीनां ब्रह्मविद्यानुष्ठानश्रवणं न योयुज्यत इत्याशङ्क्याह—धर्मेति। धर्मव्याधस्तुलाधारो विदुर इत्येवमादयस्तु महानुभावाः पूर्वजन्माभ्याससंसिद्धाः, न पुनरेतस्मिन्नेव जन्मनि वेदाभ्यासादिजनितज्ञानवन्त इति तत्रापि न विरोधः। अस्त्वेतत्समाधानम्, असमाधेयमेतत् दृश्यते यज्जानश्रुतेर्ब्रह्मविद्योप देशार्थं शूद्रेत्यामन्त्रणमित्याशङ्क्य तदप्यन्यथासिद्धमित्याह—वक्तेति। जानश्रुतिमभिमुखयन्नाचार्यो रैक्वः शूद्रेति वक्ता जानश्रुतेः शोकमेव व्यनक्ति नपुनः शूद्रजातित्वम्। शूद्रशब्दे रूढिं परित्यज्य योगः किमर्थमङ्गीक्रियते तथा च रथकारन्यायविरोधः, रूढिपरित्यागोऽन्याय्य इति रथकारन्यायइत्याशङ्क्याह—क्षत्तृप्रैपादीति। क्षत्ता राजाज्ञाकर्ता तस्य प्रैषः प्रेषणम्। अयमर्थः—रैक्वपरिज्ञानार्थं क्षत्तृप्रेषणेनान्यैरपि 'उत्तरत्र चैत्ररथेन लिङ्गात्' इत्यादिभिः सूत्रस्थैर्लिङ्गैर्जानश्रुतेः क्षत्रियत्वं स्फुटतरविदितमेव। ततश्च 'शुचेर्दश्च' इति व्युत्पत्त्या 'शोचनाच्छूद्रः' इति निरुक्तेन च शूद्रशब्दो जानश्रुतौ प्रयुज्यते नपुनः शूद्रजातित्वेनेति निर्णय इति ॥ १२७ ॥

इत्यपशूद्राधिकरणम् ॥ २६ ॥

पद०—गीतमित्यादि। गीतम्—गीतायां 'मां हि पार्थ' इत्यादिवचनेन प्रतिपादितम्। शूद्रादिकानामपि परभजनम्—शूद्रादीनामपि परमात्मोपासनम्। स्वार्हधर्मैः केवलम्—स्वजात्यनुरूपैः मालाकरणदीपारोपणप्रदक्षिणनमस्कारोपलेपनादिरूपैर्धर्मैरेव, नतूपनिषद्भिर्विहितव्यवस्थितगुणविद्याविशेषावलम्बनेन। धर्मव्याधस्तुलाधृग्विदुर इति ये भारतादिषु प्रसिद्धास्ते च, प्राग्भवाभ्याससिद्धाः—पूर्वजन्मारब्धविद्याभ्यासेनास्मिञ्जन्मनि सिद्धिं प्राप्तवन्तः। 'विद्यारम्भदशायामेव त्रैवर्णिकजन्मापेक्षितम्। नत्वनुवृत्तभवान्तराधिगतविद्यास्मृतेस्तदभ्यासे' इति तात्पर्यचन्द्रिकायामनुगृहीतमिह स्मर्तव्यमिति भावः। वक्ता—संवर्गविद्याया उपदेष्टा रैक्वः। जानश्रुतिम्—जानश्रुतिनामानं शिष्यम्। शूद्रेत्यभिमुखयन्—'आजहारेमाः शूद्रानेनैव मुखेनालापयिष्यथाः' इत्याद्युक्तरीत्या शूद्रेति सम्बोधनेन स्वोपदेशश्रवणेऽभिमुखीकुर्वन् सन्। अस्य शोकं व्यनक्ति—जानश्रुतेर्ब्रह्मविद्याऽलाभप्रयुक्तशोकाविष्टत्वं प्रकाशयति। शुचेर्धातोः स्फायितञ्चीत्याद्यौणादिकसूत्रेण रक्प्रत्ययानुवृत्तौ 'अमितम्योर्दीर्घश्च' इति सूत्रात् दीर्घानुवृत्त्योकारस्य दीर्घे 'शुचेर्दश्च' इतिसूत्रेण रक्प्रत्ययसन्नियोगेन चकारस्य दकारे शूद्र इति निष्पत्तौ केव-

लयौगिकेनानेन शूद्रशब्देन शोकाविष्टत्वमेवोच्यते न चतुर्थवर्णत्वमिति भावः । हि—यस्मात्कारणात् । क्षत्त्रैपादिलिङ्गैः—'सह सञ्जिहान एव क्षत्तारमुवाच' इत्यादिवाक्यावगतैः क्षत्तृ राजाज्ञप्तसारथ्यादि-कार्यकारिणः सूतस्य रैक्वान्वेषणाय जानश्रुतिना यत्प्रेषणं 'बहुदायी बहुपाक्यः' इत्याद्यवगतं जनपदा-धिपत्यादिकंच यत् तदादिभिः क्षत्रियत्वलिङ्गैः । तस्य—जानश्रुतेः । क्षत्रियत्वम्—क्षत्रियजातीयत्वम् । स्फुटतरविदितम्—स्पष्टतयाऽवगतम् । अतः शोकमेव व्यनक्तीति पूर्वेणान्वयः ॥ १२७ ॥

इत्यपशूद्राधिकरणम् ॥ २६ ॥

## अर्थान्तरत्वादिव्यपदेशाधिकरणम् ॥ २७ ॥

सूत्रम्—आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॥ १०७ ॥

धूत्वेति प्राच्यवाक्यप्रकृत इह भवेन्मुक्त आकाशनामा
बद्धोऽसौ नामरूपे वहति तदनु च ब्रह्मभावे जहाति ।
इत्यन्याय्यं पुरोक्तः पुनरयमभिसंभाव्य एव ह्युपात्तो
ब्रह्मत्वं न ह्यवस्था श्रुतिषु च युगपज्ज्ञाज्ञतादिर्विभक्तः ॥ १२८ ॥

इति अर्थान्तरत्वादिव्यपदेशाधिकरणम् ॥ २७ ॥

चिन्ता०—पूर्वं दहराधिकरणे दहराकाशस्य हृदयपरिमितत्वेनाल्पत्वमुक्तम् । तत्प्रसङ्गेनानन्तराधिकरणे परमात्मन एवाङ्गुष्ठप्रमितत्वमुक्तम् । तत्रैव च मनुष्याधिकारत्वप्रसङ्गादधिकरणत्रयं मध्ये निवेशितम् । तदनन्तरं पूर्वाधिकरणशेषोऽपि समापितः । अधुना पूर्वश्रुतदहरविद्यायां वेदनस्थानत्वेन तदनन्तराधीतस्य 'आकाशो ह वै नाम' इत्यादिप्रकरणस्य जीवपरत्वमाशङ्क्य निराक्रियत इति संगतिः । तदर्थविचारस्तु—छान्दोग्ये 'आकाशो ह वै नामरूपयोर्निर्वहिता' इत्यत्राकाशशब्दनिर्दिष्टः किं मुक्तात्मा उत परमात्मेति । किं 'धूत्वा शरीरमकृतं कृतात्मा' इतिमुक्तस्यानन्तरप्रकृतत्वमाकाशशब्दस्य मुक्तपरतामवगमयति नेति । किं मुक्तस्यापि नामरूपनिर्वोढृत्वं संभवति नेति । किमत्र नामरूपनिर्वोढृत्वं नामरूपभजनेन उत नामरूपकर्तृतयेति । किं 'ते यदन्तरा' इतिनिर्देशः कर्तृतया निर्वोढृत्वमुपपादयति नेति । 'आकाशो ह वै नामरूपयोर्निर्वहिता' इत्यत्र श्रूयमाण आकाशो 'धूत्वा शरीरमकृतं कृतात्मा' इति पूर्वत्रप्रतिपन्नजीव एव सर्वत्रापि प्रकृतग्रहणस्य न्याय्यत्वात् । असौ जीवो बन्धकाले नामरूपे गृह्णाति । तदनु च ब्रह्मभावे नामरूपे विजहाति । अतः पूर्ववाक्योक्तो जीव एवोत्तरवाक्यस्थो भेदेन प्रतिपाद्यते । स एव मुक्त एवाकाश इति पूर्वपक्षमनूद्य निराकरोति—धूत्वेत्यादिना ऽन्याय्यमित्यन्तेन । तदेव विवृणोति—पुरोक्त इति । अयमर्थः—द्वौ खलु 'धूत्वा शरीरम्' इत्यत्र पुरोक्तौ । अभिसंभविता कश्चिदेको जीवः, अभिसंभाव्यस्तु परमपुरुष एव । 'ब्रह्मलोकमभिसंभवानि' इति ब्रह्मलोकशब्देन तस्यैवोपादानात् ।

ब्रह्मलोकशब्दस्य निषादस्थपतिन्यायेन सामानाधिकरण्येन परमपुरुषनिष्ठत्वात् स एवाभिसंभाव्यतया पूर्वोक्तः परमपुरुष एवायमुत्तरवाक्ये पुनराकाशशब्देनोच्यते । तेनाकाशशब्दस्य प्रकृतपरामर्शित्वं सुस्थमेव । प्रधानतया प्रकृतस्य परमपुरुषस्योपादानात् । ननु 'ब्रह्मलोकमभिसंभवानि' इत्यत्र जीव एव मुक्तावस्थो ब्रह्मलोकशब्देनोच्यत इति किमर्थं न कल्प्यत इत्याशङ्क्याह—ब्रह्मत्वमिति । अत्र हि ब्रह्मत्वं नित्यसिद्धं स्वाभाविकमेवोच्यते नपुनः कादाचित्कं क्रियाविशेषसाध्यं मुक्तरूपम् । तेन पूर्वावस्थाप्रहाणेनोत्तरावस्थाग्रहणमेव जीवस्य ब्रह्मत्वमुचितमित्यसंगतमेतत् । किंच भवता जीवस्य पूर्वमुक्तत्वमनीशत्वमब्रह्मत्वम्, मुक्तावस्थायां तस्यैव सर्वज्ञत्वमीशत्वं ब्रह्मत्वमित्युच्यते, तच्छ्रुतिविरुद्धमेव । श्रुतिषु युगपदेव 'ज्ञाज्ञौ द्वावजावीशनीशौ' इति जीवब्रह्मणोर्विभक्तत्वेनाभिधानात् । अतो नित्यसिद्धबृहत्त्वबृंहणत्वगुणयोगी परमपुरुष एवाकाशशब्देनोच्यत इति सिद्धम् ॥ १२८ ॥

इति अर्थान्तरत्वादिव्यपदेशाधिकरणम् ॥ २७ ॥

पद०—धूत्वेत्यादि । इह—छान्दोग्याष्टमाध्यायोपान्तवाक्ये 'आकाशो ह वै नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म तदमृतम्' इत्यादिरूपे । आकाशनामा—आकाशशब्दवाच्यः । धूत्वेति प्राच्यवाक्यप्रकृतो मुक्तो भवेत्—'धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवानि' इति पूर्ववाक्ये शरीरत्यागपूर्वकब्रह्मलोकशब्दितब्रह्माभिसम्भवितृत्वेन प्रकृतो मुक्तात्मा भवेत् । 'नामरूपयोर्निर्वहिता ते यदन्तरा' इत्यत्रत्यवाक्यार्थः कथं तस्मिन्नित्यत्राह—बद्ध इत्यादि । असौ बद्धो नामरूपे वहति तदनु ब्रह्मभावे जहाति च—असौ मुक्तात्मा पूर्वं बद्धस्सन् नामरूपे देवदत्तादिनाम पिण्डविशेषात्मकं रूपञ्च वहति उवाह तदनु बन्धनिवृत्त्यनन्तरं ब्रह्मभावे ब्रह्मभावापत्तिरूपमुक्तिदशायां देवदत्तादिनामरूपे परित्यजति च । अतस्तस्मिन् अत्रत्यवाक्यार्थः समन्वित इति भावः । इत्यन्याय्यम्—इत्याशङ्कनमन्याय्यम् । अभिसम्भाव्यः पुरोक्त एवायं हि पुनरुपात्तः—पूर्ववाक्ये 'ब्रह्मलोकमभिसम्भवानि' इत्यत्राभिसम्भाव्यो ब्रह्मलोकशब्दितः परमात्मैवायमस्मिन्वाक्ये आकाशशब्देनोपात्तः । ननु 'ब्रह्मलोकमभिसम्भवानि' इत्यत्र जीव एव मुक्तावस्थो ब्रह्मलोकशब्देनोच्यत इति कुतो न कल्प्यत इत्यत्राह—ब्रह्मत्वमित्यादि । ब्रह्मत्वमवस्था न हि—ब्रह्मभाव आगन्तुकधर्मो न भवति 'अन्यद्द्रव्यं हि नैति तद्भूयतां यतः' इति न्यायेन पूर्वमब्रह्मण इदानीं ब्रह्मत्वं न सेत्स्यति, यच्चेदानीं ब्रह्म तत्पूर्वमपि ब्रह्मैव, अत्रत्यवाक्ये 'तद्ब्रह्म तदमृतम्' इति नित्यसिद्धं ब्रह्मैवोच्यते नपुन र्ब्रह्मप्रसादलब्धतत्समानशुद्धिमत्त्वरूपगौणब्रह्मत्वाश्रयभूतं वस्त्विति भावः । कुत एवमित्यत्रोच्यते—श्रुतिषु युगपत् ज्ञाज्ञतादिर्विभक्तश्च । 'ज्ञाज्ञौ द्वावजावीशनीशौ' इत्यादि-

श्रुतिषु युगपदेव ज्ञत्वेशत्वाज्ञत्वानीशत्वादिधर्माः परमात्मजीवात्मासाधारणा विभक्ताः। अतो नित्यसिद्ध-ब्रह्मत्वगुणयोगी परमपुरुष एवाकाशशब्देनोच्यत इति सिद्धम् ॥ १२८ ॥

इति अर्थान्तरत्वादिव्यपदेशाधिकरणम् ॥ २७ ॥

विश्वात्मानन्तभूमा नियमनधृतिकृन्मुक्तभोग्यस्वभावो
दहस्वाधारसर्वो हृदयपरिमितावस्थया सर्वयन्ता ।
देवादीनामुपास्यो वसुमुखविबुधैस्स्वात्मभावेन सेव्यः
शूद्राद्योपास्त्यनर्हः प्रभुरिह बुबुधे नामरूपैककर्ता ॥ १२९ ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु अधिकरणसारावल्यां

प्रथमस्याध्यायस्य तृतीयः पादः

चिन्ता०—उक्तानां दशानामधिकरणानां प्रधानार्थभूतान् भगवद्गुणान् परिसङ्क्षिपे—विश्वात्मेति । सर्वान्तर्याम्यनन्तैश्वर्यविशिष्टो नियमनेन सर्वकार्याधारो मुक्तैरुपभोग्यस्वभावः परिमितपरिमाणरूपदहस्वाधारसर्वलोको हृदयपरिमितावस्थया सर्वयन्ता देवादीनामुपास्यो वसुमुखैर्देवैः स्वान्तर्यामित्वेन सेव्यः शूद्रादीनामुपासनानर्हो नामरूपैककर्ता प्रभुर्नारायण इह तृतीये पादे बुबुधे बोधित इत्यर्थः ॥ १२९ ॥

इति निखिलतार्किकचूडामणिना सर्वतन्त्रस्वतन्त्रेण
श्रीमद्वरदार्यापरनाम्ना कुमारवेदान्ताचार्येण
विरचिते शारीरकाधिकरण चिन्तामणौ

प्रथमस्याध्यायस्य तृतीयः पादः

पद०—विश्वात्मेत्यादि । विश्वात्मा—विश्वस्य जगत आत्मत्वेनाधारभूतः 'यस्मिन्द्यौः पृथिवी' इत्यादिमुण्डकोपनिषद्वाक्यविषयकस्य द्युभ्वाद्यधिकरणस्यायमर्थः । अनन्तभूमा—अनन्तैश्वर्यः । 'यत्र नान्यत् पश्यति' इत्यादिच्छान्दोग्यसप्तमाध्यायवाक्यविषयकभूमाधिकरणार्थोऽयम् । नियमनधृतिकृत्—

नियमनेन शासनेन सर्वकार्याधारः । 'एतस्य वा अक्षरस्य' इत्यादिबृहदारण्यकवाक्यविषयकाक्षराधिकरणस्यायमर्थः । **मुक्तभोग्यस्वभावः**—'परात्परं पुरिशयं पुरुषमीक्षते' इत्याथर्वणप्रश्नोपनिषद्वाक्यविषयकस्य ईक्षतिकर्माधिकरणस्यायमर्थः । **दह्रस्वाधारसर्वः**—सूक्ष्मस्वाधारकसर्ववस्तुकः 'उभे अस्मिन्द्यावापृथिवी अन्तरेव समाहिते' इत्यादिच्छान्दोग्याष्टमाध्यायवाक्यविषयकदहराधिकरणार्थोऽयम् । **हृदयपरिमितावस्थया सर्वयन्ता**—हृदयेन परिमिता इयतीति निश्चिता या अवस्था अङ्गुष्ठमात्रस्वरूपा तया सर्वनियमनकर्ता । 'अङ्गुष्ठमात्रः पुरुषः । ईशानो भूतभव्यस्य' इति कठवल्लीवाक्यविषयकप्रमिताधिकरणार्थोऽयम् । **देवादीनामुपास्यः**—अत्रादिशब्देनासुरराक्षसादिग्रहणम् । 'देवानां दानवानां च सामान्यमधिदैवतम्' इति हि स्मर्यते । प्रह्लादादयश्च महत्तमा असुरेषु विभीषणादयो रक्षस्सु चित्रसेनादयो गन्धर्वेषु घण्टाकर्णादयः पिशाचेष्वन्येषु चान्ये भागवतोत्तमा हि सन्ति । अयं 'तदुपर्यपि' इत्याद्यधिकरणार्थः । **वसुमुखविबुधैः स्वात्मभावेन सेव्यः**—वसवो मुखमादिर्येषां वसुरुद्रादित्यमरुत्साध्यरूपाणां विबुधानां ते वसुमुखास्तेच ते विबुधाश्च वसुमुखविबुधास्तैः स्वात्मभावेन स्वशरीरकत्वेन सेव्यः उपास्यः । 'असौ वा आदित्यो देवमधु तद्यत्प्रथमममृतं तद्वसव उपजीवन्ति अथ यद्द्वितीयममृतं तद्रुद्रा उपजीवन्ति अथ यत् तृतीयममृतं तदादित्या उपजीवन्ति अथ यच्चतुर्थममृतं तन्मरुत उपजीवन्ति अथ यत्पञ्चममृतं तत्साध्या उपजीवन्ति' इत्यादिच्छान्दोग्यवाक्यविषयकस्य 'मध्वादिष्वसम्भवात्' इत्यधिकरणस्यायमर्थः । **शूद्राद्योपास्त्यनर्हः**—शूद्रादीनामुपासनानर्हः । अयं 'शुगस्य' इत्यधिकरणार्थः । **नामरूपैककर्ता**—नामरूपयोरेको मुख्यः कर्ता व्याकर्ता । 'आकाशो हवै नामरूपयोर्निर्वहिता' इत्यादिच्छान्दोग्याष्टमाध्यायवाक्यविषयकस्य 'आकाशोऽर्थान्तरत्वादि' इत्याद्यधिकरणस्यायमर्थः । एवम्भूतः प्रभुः पुरुषोत्तमः । **इह**—प्रथमाध्यायतृतीयपादे । **बुबुधे**—बोधितः ॥ १२९ ॥

इति श्रीमद्रङ्गनाथशठमथनयतिराजकटाक्षलब्धोभयवेदान्तहृदयस्य भारद्वाजस्य श्रीनिवासराघवदासस्य
(श्रीमदहोबिलमठमहास्थाननिर्वहणधुरन्धर श्रीमद्वेदमार्गप्रतिष्ठापनाचार्य परमहंसपरिव्राजकाचार्य
सर्वतन्त्रस्वतन्त्रोभयवेदान्ताचार्य श्रीभगवद्रामानुजसिद्धान्तनिर्धारणसार्वभौम श्रीलक्ष्मी-
नृसिंहदिव्यपादुकासेवकश्रीवणशठकोपश्रीशठकोपरामानुजमहादेशिकस्य)
कृतौ अधिकरणसारावलीव्याख्यायां पदयोजनाख्यायां

प्रथमस्याध्यायस्य तृतीयः पादः ॥

अधिकरण सारावल्यां प्रथमस्याध्यायस्य चतुर्थः पादः ।

आनुमानिकाधिकरणम् ॥ २८ ॥

सूत्रम्—आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीते र्दर्शयति च ॥ ११० ॥

निर्णीतं वाक्यजातं परविषयतया स्पष्टजीवादिलिङ्गं
तत्तच्छायानुसारि प्रथयति तु वचस्तत्परं तुर्यपादे ।
षड्भिर्द्वाभ्यां च तत्र प्रशमयति नयैस्सांख्ययोगोत्थशङ्कां
घट्टौ जाघट्ट इत्थं कथितनिगमनं त्वष्टमं केचिदूचुः ॥ १३० ॥

चिन्ता०—एवं त्रिभिः पादैरस्पष्टतरास्पष्टस्पष्टरूपजीवादिलिङ्गकानि वाक्यानि जीवपरत्वेनाशङ्क्य परमात्मपरतया निर्णीतानि अथ स्पष्टतरजीवादिलिङ्गकानि वाक्यानि चतुर्थपादे परमात्मपरतया निर्णीयन्त इति पादसंगतिः । तान्येव तत्तच्छायानुसारीणीत्यभिधीयन्ते । पूर्वत्राकाशशब्दस्य तत्पूर्ववाक्योक्तजीवपरत्वमाशङ्क्य तद्वाक्यप्रतिपन्नब्रह्मलोकपरत्वं सूचितम्, तद्वदिहाप्यव्यक्तशब्दस्य सांख्योक्तप्रधानपरत्वमाशङ्क्य रूपकविन्यासप्रतिपादकवाक्यान्तरोक्तशरीरपरत्वं सिद्धान्तिना स्थाप्यत इत्यधिकरणसंगतिः । यद्वा पूर्वस्मिन्नधिकरणे जीवस्य प्रतिपाद्यत्वं निराकृत्य परमात्मनः प्रतिपाद्यत्वमुक्तम्, इह पुनः प्रधानस्य प्रतिपाद्यत्वं निराकृत्य परमात्मनः प्रतिपाद्यत्वमुच्यत इति संगतिः । तदर्थविचारस्तु-कठवल्लीषु 'इन्द्रियेभ्यः परा ह्यर्थाः' इत्यत्राव्यक्तशब्देनाब्रह्मात्मकं प्रधानमभिधीयते नेति । किमस्मिन्मन्त्रे तन्त्रसिद्धप्रक्रियाप्रत्यभिज्ञानमस्ति नेति । किमत्र परत्वं वशीकार्यतया उत तान्त्रिककारणभेदेनेति । अत्र तृतीयचतुर्थपादयोः संगतिकथनपूर्वकं चतुर्थपादस्थानामष्टानामधिकरणानां पेटिकाद्वयरूपत्वमप्याह—निर्णीतमिति । तृतीयपादे परविषयतया स्पष्टजीवादिलिङ्गं वाक्यजातं निर्णीतम् । चतुर्थपादे तु तत्तत्साङ्ख्योक्तच्छायानुसारिवाक्यजातं परमेव पुरुषं प्रतिपादयतीति पादयोः संगतिः । तत्रावान्तरपेटिकाविभागमाह—षड्भिरित्यादिना । षड्भिरधिकरणैः साङ्ख्योक्तार्थशङ्कां प्रतिक्षिपति द्वाभ्यामधिकरणाभ्यां योगसिद्धान्तोक्तमर्थं प्रतिक्षिपतीति विभागः । तथा च घट्टौ—पेटिके । जाघट्टः—परस्परं संघटेते इत्यर्थः । केचित्पुनराचार्या अष्टमं पुनरधिकरणमुक्तार्थनिगमनमित्याहुः । अध्यायपरिसमाप्तिरूपत्वादस्याधिकरणस्येति ॥ १३० ॥

पद०—निर्णीतमित्यादि । स्पष्टजीवादिलिङ्गम्—स्पष्टजीवप्रधानलिङ्गकम् । वाक्यजातम्—उपनिषद्वाक्यजातम् । परविषयतया—परमात्मपरत्वेन । निर्णीतम्—तृतीयपादे निश्चितम् । तुर्यपादे—चतुर्थपादे । तत्तच्छायानुसारि वचः—साङ्ख्याद्युक्तिच्छायानुसारीणि वेदान्तवाक्यानि स्पष्टतरजीवादिलिङ्गकानि वाक्यानीत्यर्थः । 'अथ स्पष्टतरजीवादिलिङ्गकानि वाक्यानि चतुर्थपादे परमात्मपरतया निर्णीयन्त इति पादसङ्गतिः । तान्येव तत्तच्छायानुसारीणीत्यभिधीयन्ते' इति चिन्तामणिदर्शनात् 'तत्राद्येऽत्यन्तगूढाविशदविशदसुस्पष्टजीवादिवाचः' इत्याचार्यसूक्तिदर्शनाच । तत्परं प्रथयति—परमात्मपरत्वेन प्रतिपादयति । तत्र—चतुर्थपादस्थाधिकरणाष्टके । षड्भिर्द्वाभ्यां च नयैः—आदित आरभ्य षड्भिरधिकरणैस्ततो द्वाभ्यामधिकरणाभ्यां चेत्यर्थः । साङ्ख्ययोगोत्थशङ्कां प्रशमयति—क्रमेण साङ्ख्योत्थशङ्कां योगोत्थशङ्कांञ्च परिहरति । इत्थम्—उक्तरीत्याऽधिकरणषट्काधिकरणद्विकात्मकत्वेन । घट्टः—पेटिकाद्वयविभागः । जाघट्टः—अतिशयेन घटते इत्यर्थः । अतीवोपपन्न इति यावत् । घट्टधातोश्चलनार्थाद्यङन्तात् पचाद्यचि 'यङोऽचि च' इति यङ्लुकि रूपं सुबन्तं घट्टपदविशेषणम् । अधिकरणषट्कद्विकयोः प्रत्येकमनुगतासाधारणार्थलाभात् मध्ये विभागोऽतीव युज्यत इति भावः । केचित्तु—केचनाचार्यास्तु । अष्टमम्—अस्मिन्पादे अष्टमं सर्वव्याख्यानाधिकरणम् । कथितनिगमनमूचुः—पादचतुष्टयप्रतिपादितार्थानां सङ्ग्रहेण समापनरूपमिदमभ्यधुः ॥ १३० ॥

द्वाभ्यां क्षेप्यं प्रधानं कपिलमतमथ त्वेकतोऽन्योक्तसंख्या
तुर्येणाव्याकृतोक्तेरपि विभुरवधिस्स्थाप्यते द्वारवृत्त्या ।
शुद्धाशुद्धौ च जीवावधिकरणयुगे ऽनन्तरं वारणीयौ
शेषं तन्त्रान्तरोक्तेश्वरनिरसनकृत् तुर्यपादाष्टकेऽस्मिन् ॥ १३१ ॥

चिन्ता०—तत्र चतुर्थपादस्थानामष्टानामधिकरणानामवान्तरार्थभेदेनापि भेदमाह—द्वाभ्यामिति । द्वाभ्यामधिकरणाभ्यां कपिलाभिमतं प्रधानं प्रतिक्षेप्यम् । अनन्तरमेकेनाधिकरणेन कपिलाभिमततत्त्वसंख्या प्रतिक्षिप्यते । तुर्येण—चतुर्थेनाधिकरणेन अव्याकृतशब्दस्यापि प्रकृतिद्वारवृत्त्या विभुः परमपुरुष एव अवधिरिति स्थाप्यते । तथा स प्रतिपाद्यत इत्यर्थः । अनन्तरमधिकरणयुगे शुद्धाशुद्धौ बद्धमुक्तौ जीवौ वारणीयौ परतत्त्वं न भवत इति प्रतिपादनीयावित्यर्थः । अवशिष्टमधिकरणद्वयं योगतन्त्रोक्तनिमित्तमात्रेश्वरनिरसनकृदिति चतुर्थपादाधिकरणार्थविभागः ॥ १३१ ॥

पद०—द्वाभ्यामित्यादि । अस्मिन् तुर्यपादाष्टके—चतुर्थपादाधिकरणाष्टके । द्वाभ्याम्—आनुमानिकाधिकरणचमसाधिकरणाभ्याम् । कपिलमतम्—कपिलस्य जगत्कारणतया अभिमतम् । प्रधानम्—मूलप्रकृतिशब्दितमचेतनं वस्तु । क्षेप्यम्—प्रतिक्षेप्यम् । अथ—तदुपरि । एकतस्तु—एकेन 'न सङ्ख्योपसंग्रहात्' इत्यधिकरणेन तु । अन्योक्तसङ्ख्या—कपिलाभिमततत्त्वसङ्ख्या । क्षेप्येति लिङ्गविपरिणामेनानुषङ्गः । तुर्येण—चतुर्थेन 'कारणत्वेन चाकाशादिषु' इत्याद्यधिकरणेन । अव्याकृतोक्तेरपि—'तद्धेदं तर्ह्यव्याकृतमासीत् । तन्नामरूपाभ्यां व्याक्रियत' इत्यादिवाक्यघटकाव्याकृतशब्दस्यापि । द्वारवृत्त्या—प्रकृतिद्वारवृत्त्या । विभुरवधिः स्थाप्यते—परमपुरुष एवाभिधेयकाष्ठेति स्थाप्यते स एव प्रतिपाद्य इति स्थाप्यत इत्यर्थः । अनन्तरमधिकरणयुगे—तत्पश्चात् 'जगद्वाचित्वात्' 'वाक्यान्वयात्' इत्याद्यधिकरणद्वये । शुद्धाशुद्धौ च जीवौ वारणीयौ—शुद्धः मुक्तः, अशुद्धः बद्धः, तथाविधौ जीवात्मानौ परतत्त्वं न भवत इति प्रतिपादनीयौ। अशुद्धो जीवो जगदधिकरणे वारणीयः, शुद्धो जीवो वाक्यान्वयाधिकरणे वारणीय इत्यतो न क्रमविवक्षा । शेषम्—अवशिष्टं प्रकृत्यधिकरणसर्वव्याख्यानाधिकरणद्वयम् । तन्त्रान्तरोक्तेश्वरनिरसनकृत्—योगादितन्त्रान्तरोक्तनिमित्तमात्रेश्वरनिरसनकृत् । इति विभागोऽवगन्तव्य इति शेषः ॥ १३१ ॥

अक्षाद्यव्यक्तनिष्ठं जडमथ पुरुषं तत्त्वकाष्ठां विविच्य
ब्रूते वल्ली कठानां परमतपठितां प्रक्रियामित्ययुक्तम् ।
तत्रत्यानेकवाक्योदितविविधवशीकार्यमुख्यक्रमोक्तेः
शान्तात्मा विष्णुरुक्तः पुरुष इह परः प्रत्यभिज्ञाप्यते च ॥ १३२ ॥

चिन्ता०—अत्र कठवल्ल्यां 'इन्द्रियेभ्यः परा ह्यर्थाः' इत्यादिवाक्यमिन्द्रियोपक्रममव्यक्तपर्यन्तं जडपदार्थं अथ अनन्तरं पुरुषं तत्त्वकाष्ठारूपं विभज्य परमतकथितां प्रक्रियामेव ब्रूत इति पूर्वपक्षमनूद्य प्रतिक्षिपति पूर्वार्धेन—अक्षादीति । अयुक्तत्वमेव विवृणोति—तत्रेति । अयमर्थः—अत्र खलूत्तरोत्तरं कारणपरम्परा नोच्यते अपितु वशीकार्यपरम्परामुक्त्वा पूर्वस्माद्वशीकार्यादुत्तरस्य वशीकार्यत्वे परत्वं मुख्यत्वमुच्यत इति । अयमत्र पदान्वयः—तत्प्रकरणस्थानेकवाक्यप्रतिपादितवशीकार्यप्रधानक्रमाभिधानादिति । किंचास्मिन्प्रकरणे 'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्' इति मुक्तप्राप्यस्थानाधिपतिर्विष्णुरेव 'पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः' इति प्रत्यभिज्ञाप्यते, स तु न जीवः, तेनेदं प्रकरणं सर्वमपि परमपुरुषपरमेवेत्याह—शान्तात्मेति ॥ १३२ ॥

पद०—अक्षादीत्यादि । कठानां वल्ली—कठाख्यमहर्षिदृष्टा वल्लीवत् परावरतत्त्वकुसुमसौरभ्यनिर्भरा उपनिषत् कठवल्ली

'इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः ।
मनसस्तु परा बुद्धि र्बुद्धेरात्मा महान्परः ।
महतः परमव्यक्तमव्यक्तात्पुरुषः परः ।
पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः ॥'

इत्यादिवाक्ये । अक्षादि अव्यक्तनिष्ठं जडं अथ तत्त्वकाष्ठां पुरुषं विविच्य परमतपठितां प्रक्रियां ब्रूते—प्रथमत इन्द्रियोपक्रमं प्रधानान्तं जडतत्त्ववर्गं तदुपरि तत्त्वकाष्ठाभूतं पुरुषञ्च विभज्य दर्शयन्ती साङ्ख्यपठितां तत्त्वपरम्पराप्रक्रियामेव वदति । इत्ययुक्तम्—इति शङ्कनमसाधु । कुतः ? तत्रत्यानेकवाक्योदितविविधवशीकार्यमुख्यक्रमोक्तेः—तत्रत्यानि कठवल्ल्यामेव पूर्वं पठितानि यानि अनेकानि वाक्यानि

'आत्मानं रथिनं विद्धि शरीरं रथमेव च ।
बुद्धिं तु सारथिं विद्धि मनःप्रग्रहमेव च ।
इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान् ॥'

इत्यादिरूपाणि तैः उदिता उक्ता विविधाश्च ये वशीकार्या मुमुक्षुणा स्वाधीनीकरणीयाः पदार्थास्तेषु ये मुख्याः प्रधानास्तेषां क्रमस्यास्मिन् वाक्ये प्रतिपादनात् । किं च उक्तः—अस्मिन्प्रकरणे 'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्' इति मुक्तप्राप्यस्थानाधिपतित्वेनोक्तः । शान्तात्मा—शान्ताः ज्ञानिनः आत्मानः नियन्तारः यस्य स शान्तात्मा । 'ज्ञानी त्वात्मैव मे मतम्' इति हि गीतम् । एवम्भूतो विष्णुः—'तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः' इत्युक्तरीत्या नित्यमुक्तसदानुभाव्यस्थानविशेषाधिपत्वेनाम्नातः पुरुषोत्तमः । इह—'पुरुषान्न परं किञ्चित्' इत्युदाहृतवाक्ये । परः पुरुषः—वशीकार्येभ्यः सर्वेभ्यः परभूतः पुरुष इति । प्रत्यभिज्ञाप्यते च—प्राप्य एव वशीकार्य इति युक्त्या विष्णुपुरुषशब्दाभ्यां च भगवति प्रसिद्धाभ्यामिह स एवायमितिप्रत्यभिज्ञाविषयीक्रियते चेत्यर्थः । अतो न तन्त्रसिद्धस्यतन्त्रप्रधानप्रतिपत्तिगन्ध इति भावः ॥ १३२ ॥

न ह्यर्था इन्द्रियाणां प्रकृतिरथ मनो हेतुरेषां न चेष्टं
बुद्धिश्चैतन्न सूते नच महति महाञ्जायते बुद्धिसंज्ञः ।
भोक्तुर्युक्तं महत्त्वं महति च न भवेदात्मता पारिशेष्यात्
अव्यक्तोक्तिश्शरीरे तदिह न कपिलप्रक्रियाप्रत्यभिज्ञा ॥ १३३ ॥

इत्यानुमानिकाधिकरणम् ॥ २८ ॥

चिन्ता०—अत्र साङ्ख्योक्तप्रक्रियाप्रत्यभिज्ञाभावं बह्वर्थविरोधप्रतिपादनेन कथयित्वा वाक्यस्य परमपुरुषपरत्वमेव निगमयति—न ह्यर्था इति । अत्र 'इन्द्रियेभ्यः परा ह्यर्थाः' इत्युक्तम्, न खलु साङ्ख्यसिद्धान्तप्रक्रियायामिन्द्रियाणामर्थाः प्रकृतिरिति कथ्यन्ते । अथ मनो हेतुरेषां न चेष्टम्—अथैषामर्थानामिन्द्रियाणां मनो हेतुरिति साङ्ख्यानां न चेष्टं सर्वेषामपीन्द्रियाणामाहङ्कारिकत्वात् । तत्र 'मनसस्तु परा बुद्धिः' इत्युच्यते सा बुद्धिरेतन्मनो न सूते अतस्तच्च विरुद्धम् । अयं च कश्चिद्विरोधः । 'बुद्धेरात्मा महान् परः' इत्युच्यते, साङ्ख्यसिद्धान्ते बुद्धिरेव महान् तेन महत एव महान् जायत इत्युक्तं भवति तदपि न घटते । तर्ह्यत्र महान्पर इति न घटते—उच्यते, जीव एव भोक्ता तस्य च महानितिविशेषणं युज्यत इत्याह—भोक्तुरिति । अत्र हेतुमाह—महतीति । ननु 'महतः परमव्यक्तम्' इति महतः कारणत्वेनाव्यक्ताभिधानम्, 'अव्यक्तात्पुरुषः परः' इति साङ्ख्योक्तपुरुषाभिधानात् साङ्ख्योक्तमेव प्रत्यभिज्ञाप्यत इत्यत्राह—पारिशेष्यादिति । अयमर्थः—पूर्वत्र 'आत्मानं रथिनं विद्धि शरीरं रथमेव च' इत्यादिना मन्त्रेणात्मशरीरादीनां रथिरथत्वादिरूपणं कृतम्, तेषु रूपितेष्वर्थेषु कस्मात्कस्य वशीकार्यत्वातिशय इतिशङ्कायां 'इन्द्रियेभ्यः परा ह्यर्थाः' इत्यादिना कस्माच्चित्कस्यचित् वशीकार्यत्वातिशय उच्यते, अत्र पूर्वमन्त्रोक्तार्थाः सर्वेऽप्युत्तरमन्त्रे निर्दिष्टाः शरीरमेकमेव न निर्दिष्टं पारिशेष्यात्तदेव शरीरमनेनाव्यक्तशब्देनोच्यत इति । अतोऽत्र कपिलप्रक्रियाप्रत्यभिज्ञा नास्तीत्याह—तदिति ॥ १३३ ॥

इत्यानुमानिकाधिकरणम् ॥ २८ ॥

पद०—न ह्यर्था इत्यादि । अर्थाः—शब्दादिविषयाः । इन्द्रियाणाम्—चक्षुरादीनां वागादीनां च । प्रकृतिः—कारणम् । न हि—साङ्ख्यसिद्धान्ते तथा नाङ्गीकृतं खलु । तथाऽङ्गीकारे सति हि

'इन्द्रियेभ्यः परा ह्यर्थाः' इति वाक्यं सुसंगच्छेत। अथ–तदुपरि। **मनश्च एषां हेतुर्नेष्टम्**—मनश्च विषयाणां कारणमिति नाभिमतम्। तथा सति हि 'अर्थेभ्यश्च परं मनः' इत्युपपद्येत। बुद्धिश्च, एतत्–मनः। **न सूते**—नोत्पादयति। अतो 'मनसस्तु परा बुद्धिः' इति चानुपपन्नमेवेति भावः। **बुद्धिसंज्ञो महान् महति न च जायते**—अत्र 'बुद्धेरात्मा महान्परः' इत्युक्त्या बुद्धिशब्दितस्य महतोऽपरत्वेन कार्यत्वमेष्टव्यम्, महत एव च परत्वोक्त्या कारणत्वं वक्तव्यम्, साङ्ख्यसिद्धान्ते च बुद्धिसंज्ञितो महान् महत्तत्त्वे जायत इति च नाङ्गीकृतम्। अत इदमपि नोपपन्नम्। **महत्त्वं भोक्तुर्युक्तम्**—'आत्मा महान्' इत्यत्र 'महान्' इत्यस्यात्मशब्दितं भोक्तारं प्रति विशेषणत्वेन योजनायां महत्त्वमात्मशब्दितस्य भोक्तुरुपपन्नं भवति। **आत्मता च महति न भवेत्**–'महान्' इत्यस्य विशेष्यत्वेन योजनायामात्मशब्दस्तद्विशेषणत्वेनाङ्गीकार्यः, तदानीमात्मत्वं महानिति शब्दिते महत्तत्त्वे नोपपन्नं भवेत्। आत्मत्वं हि शरीरप्रतिसम्बन्धित्वरूपम्। तत् महत्तत्त्वे अचिति कथमुपपद्येत। **अतः पारिशेष्यात् अव्यक्तोक्तिः शरीरे**–वर्तत इति शेषः। पूर्वं रथिरथादित्वेन रूपितानां शरीरव्यतिरिक्तानां स्वस्वशब्देनोक्तत्वात् शरीरमात्रस्य रथत्वेन रूपितस्यानुक्त्या तस्यैव परिशेषात् 'महतः परमव्यक्तम्' इत्यत्राव्यक्तशब्दः पूर्वं रथत्वेन रूपिते शरीरे वर्तते प्रतिपादकत्वेनावतिष्ठत इत्यर्थः। अयमाशयः—पूर्वत्र 'आत्मानं रथिनं विद्धि शरीरं रथमेव च' इत्यादिनाऽऽत्मशरीरादीनां रथिरथादित्वेन रूपणं कृतम्। तेषु रूपितेष्वर्थेषु कस्मात् कस्य वशीकार्यत्वातिशय इति शङ्कायां 'इन्द्रियेभ्यः परा ह्यर्थाः' इत्यादिना कस्माचित् कस्यचिद्वशीकार्यत्वातिशय उच्यते। तत्र पूर्वमन्त्रोक्ताः सर्वेऽप्युत्तरमन्त्रे स्वस्वशब्देन निर्दिष्टाः, शरीरमेकमेव च न निर्दिष्टम्, अतः पारिशेष्यात् तदेव शरीरमनेनाव्यक्तशब्देनोच्यत इति। **तत्**–तस्मात्। **इह**–कठवल्लीवाक्ये। **कपिलप्रक्रियाप्रत्यभिज्ञा न**–कापिलतन्त्रोक्ततत्त्वप्रक्रियाप्रत्यभिज्ञानं न सम्भवतीत्यर्थः॥ १३३॥

इत्यानुमानिकाधिकरणम्॥ २८॥

## चमसाधिकरणम् ॥ २९ ॥

सूत्रम्—चमसवदविशेषात् ॥ ११६ ॥

स्वातन्त्र्येण ह्यजाया निखिलजनकता सूच्यते क्वापि वाक्ये
वद्धोऽजस्तत्र शेते त्यजति पुनरिमां भुक्तभोगामजोऽन्यः ।
इत्युक्तेस्तान्त्रिकी सा त्वियमिति यदि नाजात्वमात्राभिधानात्
अस्वातन्त्र्यप्रसिद्धेस्सृजतिरपि परप्रेर्यतां नोपरुन्ध्यात् ॥ १३४ ॥

इति चमसाधिकरणम् ॥ २९ ॥

चिन्ता०—ननु पारिशेष्यस्थानप्रमाणाभ्यामव्यक्तकार्यभूतशरीरमात्रवाचकोऽव्यक्तशब्द इति पूर्वाधिकरणे समर्थितं तेन तद्वदेव 'अजामेकाम्' इत्यादिवाक्यमुभयाभ्युपगताव्यक्तस्यैव वाचकं स्यादित्युत्थानेन संगतिः । तदर्थविचारस्तु श्वेताश्वतरीयाजामेकामिति मन्त्रेणाब्रह्मात्मकप्रकृतिरभिधीयते नेति । किं मन्त्रे यौगिकोऽजाशब्दोऽब्रह्मात्मकप्रकृतिपरः, उत ब्रह्मात्मकप्रकृतिपर इति । किं 'बह्वीः प्रजाः सृजमानाम्' इति वाक्यावयवत्वमजाशब्दस्य स्वातन्त्र्येण सृष्टिपरतामवगमयति नेति । किं तैत्तिरीयाजामेकामित्यजाशब्दस्य ज्योतिरुपक्रमावाक्यावयवत्वं स्वातन्त्र्येण सृष्टिपरत्वावगमकत्वविरोधि नेति । किंच अजात्वं ज्योतिरुपक्रमात्वं च विरुध्येते नेति । अत्र पूर्वपक्षाभिप्रायमाह—स्वातन्त्र्येणेति । 'अजामेकाम्' इत्यत्र 'जनयन्तीम्' इति बहुप्रजाजनने स्वातन्त्र्येण कर्तृत्वमुच्यते प्रधानस्य । 'सृजमानाम्' इति तु श्वेताश्वतरवाक्येऽपि तच्च कर्तृत्वमेव । 'अजो ह्येको जुषमाणोऽनुशेते' इति बद्धस्य जुषमाणस्य प्रीतियुक्तस्य तस्यामेवाजायामनुशयनमुच्यते । 'जहात्येनाम्' इत्यादिना मुक्तस्य तत्परित्यागोऽप्युच्यते । श्रुतापि पुनरियमुक्तिस्तान्त्रिकी कपिलतन्त्रसिद्धेत्याशङ्क्य प्रतिक्षिपति—नेति । तत्र हेतुमाह—अजात्वमात्राभिधानादिति । अयमर्थः—अत्र ह्यजेत्यजात्वमात्रमभिहितम् । न पुनरब्रह्मात्मिकाजेत्युक्तम् । तेन साङ्ख्योक्ताब्रह्मात्मिकाया अजाया अभिधानासिद्धिरित्यर्थः । हेत्वन्तरमाह—अस्वातन्त्र्यप्रसिद्धेरिति । प्रसिद्धं खल्वचेतनाया मूलप्रकृतेरस्वातन्त्र्यं सर्वलोकेषु । तर्हि 'जनयन्तीम्' 'सृजमानाम्' इति सृष्टिकर्तृत्वं कथं नं

कथमित्याशङ्क्याह—सृजतिरिति। लोके हि स्रष्टृत्वं द्विप्रकारं प्रयोजककर्तृत्वं प्रयोज्यकर्तृत्वं चेति। तेन मूलप्रकृतेः श्रूयमाणं प्रयोज्यकर्तृत्वं प्रमाणसिद्धां परमात्मप्रेर्यतां नोपरुन्ध्यादित्यर्थः॥ १३४॥

इति चमसाधिकरणम्॥ २९॥

पद०—स्वातन्त्र्येणेत्यादि। क्वापि वाक्ये—'अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीं सरूपाम्' इति तैत्तिरीयके श्रूयते। श्वेताश्वतरे तु 'बह्वीः प्रजाः सृजमानां सरूपाः' इति विशेषः। अन्यत् सर्वं तुल्यम्। अस्मिन्वाक्ये। अजायाः—अजाशब्दिताया मूलप्रकृतेः। स्वातन्त्र्येण निखिलजनकता सूच्यते—'जनयन्तीम्' इतिपदेन 'सृजमानाम्' इतिच पदेन सृष्टिकर्तृत्ववाचिना 'स्वतन्त्रः कर्ता' इत्यनुशिष्टस्वातन्त्र्यघटितकर्तृत्वाभिधानात् निखिलजनकत्वं स्वातन्त्र्येणैव न त्वीश्वरपारतन्त्र्येणेति सूच्यते। किञ्च बद्धोऽजस्तत्र शेते—'अजो ह्येको जुषमाणोऽनुशेते' इत्युक्त्या जुषमाणपदेन तस्यां प्रीतियुक्तत्वावगमाच्च बद्धोऽजः जीवात्मा तस्यामजायामनुशेत इति सिद्धं खलु। किञ्च, अन्योऽजः पुनः भुक्तभोगामिमां त्यजति—'जहात्येनां भुक्तभोगामजोऽन्यः' इत्युक्त्याऽन्योऽजो बद्धाद्विलक्षणो मुक्तात्मा तु स्वेन बद्धदशायामनुभूततत्संसर्गसुखामिमामजां दूरतस्त्यजतीति च सिद्धं किल। इत्युक्तेः—एवं प्रतिपादनात्। सेयम्—बद्धात्मभिः प्रीतिपूर्वकमनुभूयमानतया मुक्तात्मभिस्त्यज्यमानतया स्वातन्त्र्येण बहुप्रजासर्गकर्तृत्वेन च प्रतिपाद्यमानैषाऽजा। तान्त्रिकी तु—तन्त्रप्रसिद्धा मूलप्रकृतिरेव। इति यदि न—इति शङ्क्यते चेत् तन्न। अजात्वमात्राभिधानात्—अजाशब्देनाजात्वमात्रमभिहितं न पुनरब्रह्मात्मिकाऽजेत्युक्तं यतस्तादृशीमिमां प्रतिपद्येमहि। अस्वातन्त्र्यप्रसिद्धेः—अचेतनाया मूलप्रकृतिरूपाया अस्या अजायास्तैत्तिरीयके 'अणोरणीयान्' इति ब्रह्मोपक्रम्य 'सप्त प्राणाः प्रभवन्ति तस्मात्' इत्यादिना ब्रह्मणः सर्वसृष्टिकथनपूर्वकमभिधानादस्याः परमात्मपारतन्त्र्यं प्रसिद्धम्। श्वेताश्वतरे च 'देवात्मशक्तिम्' इति भगवच्छक्तिरूपत्वेन 'मायिनं तु महेश्वरम्' 'यो योनिंयोनिमधितिष्ठति' इत्यादिना भगवदधिष्ठितत्वेन च प्रतिपादनाच्चास्या ब्रह्मपारतन्त्र्यं प्रसिद्धम्। अतोऽसौ न तान्त्रिक्यजा। सृजतिरपि परप्रेर्यतां नोपरुन्ध्यात्—'प्रजाः सृजमानाम्' इति सृजधातुप्रयोगः, अपिना 'जनयन्तीम्' इति शाखान्तरस्थजनिहेतुवाचिजनयतिग्रहणम्, स एष सृजतिर्वा जनयतिर्वा कर्तृत्ववाच्यपि सन् परमात्मप्रेर्यतामस्या निदर्शितप्रमाणप्रसिद्धां न निरुन्ध्यात्। प्रयोज्यकर्ता प्रयोजककर्तेति च कर्तारौ द्विविधौ तत्र प्रकृतिः परप्रेरिता सत्येव जगत्सृष्ट्यै प्रवर्तत इति प्रयोज्यकर्त्री, स्वातन्त्र्यञ्च तत्क्रियानिर्वर्तककलापस्य कियतश्चित् स्वप्रेर्यत्वात् सिध्यत्येव अतो न क्वापि हानिरिति भावः॥ १३४॥

इति चमसाधिकरणम्॥ २९॥

## संख्योपसंग्रहाधिकरणम् ॥ ३० ॥

सूत्रम्—न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च ॥ १२० ॥

यस्मिन्पञ्चेति मन्त्रे परपरिगणिता विंशतिः पञ्चयुक्ता
प्रोक्ता सप्तम्यधीतस्त्विह पुरुषगणोऽनन्यनिष्ठोऽस्तु मैवम् ।
आकाशस्य स्वनाम्ना पृथगनुकथनात् सप्तविंशत्यबाधात्
षड्विंशो ह्यत्र सर्वाश्रय इति विदितोऽनूद्यते ब्रह्मताद्यैः ॥ १३५ ॥

चिन्ता०—पूर्वाधिकरणे साङ्ख्योक्ताब्रह्मात्मकाव्यक्तप्रतिपादकाजामेकामित्यादिश्रुत्या समुत्थितस्य पूर्वपक्षिणः प्रतिक्षेपः कृतः । अधुना साङ्ख्योक्ततत्त्वसङ्ख्याप्रतिपादकश्रुतिमवलम्ब्य समुत्थितस्यापि तस्य प्रतिक्षेपः क्रियत इति संगतिः । तदर्थविचारस्तु—'यस्मिन्पञ्च पञ्चजनाः' इतिमन्त्रः किं कापिलतन्त्र-सिद्धतत्त्वप्रतिपादनपरो नेति । किं पञ्चपञ्चजनशब्देन पञ्चविंशतितत्त्वप्रतीतिरस्ति नेति । किं पञ्चपञ्च-जनशब्देन पञ्चपञ्चकान्युच्यन्ते उत पञ्च पदार्था इति । किं पञ्चजना इति समासः समाहारविषयः उत 'दिक्संख्ये संज्ञायाम्' इति संज्ञाविषय इति । किं समाहारसमासपक्षे अवान्तरसङ्ख्यान्वयनिमित्तमस्ति न वेति । किमाकाशस्य पृथङ्निर्देशः अवान्तरसंख्यान्वयविरोधी नेति । अत्र पूर्वपक्षी मन्यते—'यस्मिन्पञ्च पञ्चजनाः' इति वाक्ये यस्मिन्निति सप्तम्या निर्दिष्टः साङ्ख्योक्तप्रकृतेः परः पुरुषगणः । 'पञ्च पञ्चजनाः' इत्युक्तानि तु पञ्चविंशतितत्त्वान्येव । तथा च पञ्च सङ्ख्यया गणिताः पञ्च पदार्थाः पञ्चविंशतिसङ्ख्याका इति सुप्रसिद्धमेतत् । तमिमं पूर्वपक्षमनुवदति—यस्मिन्नित्यादिनाऽस्त्वित्यन्तेन । अनन्यनिष्ठः—परमात्मनिष्ठत्वरहित इत्यर्थः । उक्तं पूर्वपक्षं प्रतिक्षिपति—मैवमिति । तत्र हेतुद्वयमाह—आकाशस्येति । साङ्ख्यपक्षे हि पञ्चविंशतिसङ्ख्याकान्येव तत्त्वानि विद्यन्ते । नपुनः सप्तविंशतिसङ्ख्या-कानि । अत्र पुनराकाशस्य पृथगभिधानं विद्यते । यस्मिन्निति सप्तम्यन्तेन पुरुषोऽपि पृथङ् निर्दिश्यते । तेनैताभ्यामुभाभ्यां साङ्ख्योक्तपञ्चविंशतितत्त्वप्रत्यभिज्ञा न विद्यत इत्यर्थः । तर्हि भवत्पक्षे यस्मिन्निति क उच्यत इत्याशङ्क्याह—षड्विंश इति । षड्विंशः—परमपुरुषः । 'तं षड्विंशकमित्याहुः' इति श्रुति-प्रसिद्धेः । स तु सर्वाधारत्वाद् यस्मिन्निति धारकत्वेनानूद्यते । तत्र हेतुमाह—ब्रह्मताद्यैरिति । प्रकरण-प्रतिपन्नैर्ब्रह्मत्वामृतत्वाद्यैर्लिङ्गैः परमात्मेति निश्चीयत इत्यर्थः ॥ १३५ ॥

पद०—यस्मिन्पञ्चेत्यादि । यस्मिन्पञ्चेति मन्त्रे—

'यस्मिन्पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः ।
तमेवं मन्य आत्मानं विद्वान्ब्रह्मामृतोऽमृतम् ॥'

इतिवाजसनेयकशाखामन्त्रे । परपरिगणिता—साङ्ख्यसिद्धान्तिभिः परिगणिता । पञ्चयुक्ता विंशतिः—पञ्चविंशतिः पञ्चविंशतिसङ्ख्येत्यर्थः । प्रोक्ता—प्रतिपादिता,

'मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त ।
षोडशकश्च विकारो न प्रकृतिर्न विकृतिः पुरुषः ॥'

इति साङ्ख्योक्तरीत्या प्राकृततत्त्वानां चतुर्विंशतित्वात् पुरुषस्य पञ्चविंशत्वाच्च पञ्चविंशतितत्त्वसङ्ख्या साङ्ख्यतन्त्रप्रसिद्धैव । अस्मिंश्च मन्त्रे सा सङ्ख्या प्रतीयते । पञ्चानां जनानां समूहाः पञ्चजना एतादृशाः समूहाः पञ्चेति विशेष्यन्ते । अस्मिन्पक्षे पञ्चजन्य इति रूपाभावश्छान्दसः । अतः पञ्चशब्दविशेषितपञ्चजनशब्दात् साङ्ख्यतन्त्रप्रसिद्धपञ्चविंशतितत्त्वसङ्ख्या प्रतिपाद्यत इति । इह—अस्मिन्मन्त्रे । सप्तम्यधीतः पुरुषगणस्तु—'यस्मिन्' इति सप्तम्यन्तपदेन प्रतिपादितो जीवसमूहः । अनन्यनिष्ठोऽस्तु—परमात्मपरतन्त्रो मा भूत् । जीवगणो ब्रह्मणः शरीरतया जातिगुणादिवत् तदेकपरतन्त्र इति हि वेदान्तिनां सरणिः । निरीश्वरास्तु साङ्ख्या जीवगणं स्वनिष्ठं मन्यन्त इति भावः । मैवम्—एवं मा शङ्किष्ठाः । कुतः ? आकाशस्य स्वनाम्ना पृथगनुकथनात् सप्तविंशत्यबाधात्—'आकाशश्च प्रतिष्ठितः' इत्याकाशशब्देन पञ्चभ्यः पञ्चजनेभ्यः पार्थक्येन कीर्तनात् 'यस्मिन्' इति निर्दिष्टेनात्मना सह साकाशानां पञ्चपञ्चजनानां परिगणने कथञ्चिदपि सप्तविंशतिसङ्ख्याया लोपाभावात् । तर्हि युष्मत्पक्षे 'यस्मिन्' इति कोऽभिधीयत इत्यत्राह—षड्विंश इत्यादि । ब्रह्मताद्यैः—एतन्मन्त्रसिद्धैरेव निरुपाधिकब्रह्मत्वामृतत्वादिभिर्लिङ्गैः । इति—परमात्मेति । विदितः—निश्चितः । षड्विंशो हि—'तं षड्विंशकमित्याहुः' इत्यादिषु प्राकृतेभ्यश्चतुर्विंशतितत्त्वेभ्यः पञ्चविंशाज्जीवाच्च भिन्नतया ततोऽधिकः षड्विंशक इत्युक्तः परमात्मा हि । अत्र—अस्मिन्मन्त्रे । सर्वाश्रयोऽनूद्यते—'यस्मिन्' इति पदेन सर्वाधारत्वेनानूद्यते । अतो नास्मत्पक्षे काऽपि हानिरिति भावः ॥ १२५ ॥

संज्ञोपाधिस्समासो ह्ययमिह निगमे सप्तसप्तर्षिनीत्या
प्राणाद्यं तन्मनोऽन्तं प्रकरणनियतं पञ्चकं धीन्द्रियाख्यम् ।
ज्योतिश्शब्देन शाखान्तरविदितमिदं न्यूनवादस्तु पूर्यो
घ्राणं वक्त्यन्नशब्दो रसनमपि सह प्राणशब्दस्त्वगर्थः ॥ १३६ ॥

इति संख्योपसंग्रहाधिकरणम् ॥ ३० ॥

चिन्ता०—अत्र पूर्वपक्षवादी मन्यते—अयं खलु समाहारसमासः । तथा च पञ्चपूल्यादिवत्, पञ्चजना इतिच्छान्दसप्रक्रियया पुल्लिङ्गनिर्देशेन समाहारेऽभिहिते समाहाराणां पञ्चसंख्यया विशेषणे पञ्चविंशतितत्त्वसिद्धिरिति । तमिमं पक्षं प्रतिक्षिपन् 'दिक्संख्ये संज्ञायाम्' इति सूत्रोक्तप्रक्रियया सप्तसप्तर्षय इतिवत् पञ्च पञ्चजना इति संज्ञोपाधिरित्याह—संज्ञोपाधिरिति । तर्हि संज्ञोपाधिकतया प्रतिपाद्यं पञ्चकं किमित्याशङ्क्याह—प्राणाद्यमिति । 'प्राणस्य प्राणम्' इत्यादिवाक्योक्तं मनःपर्यन्तं पञ्चकं श्रुतावेव स्पष्टमुक्तं ज्ञानेन्द्रियात्मकम् । ननु क्वचिदन्नस्यान्नमिति काण्वपाठे न दृश्यते तत्कथं पञ्चकत्वसिद्धिरित्याशङ्क्याह—ज्योतिरिति । 'ज्योतिषैकेषामसत्यन्ने' इति सूत्रकारेणैव पञ्चकत्वमुपपादितमित्यर्थः । तत्र कथं न्यूनवाद इत्यत्राह—न्यूनवाद इति । एकत्र न्यूनवादोऽप्यन्यत्र दृष्टेनाधिक्येन पूरणीय इत्यर्थः । ज्ञानेन्द्रियाणि षट्संख्याकानि कथमिह पञ्चत्वसिद्धिरित्याशङ्क्याह—घ्राणमिति । तत्रान्नशब्दो घ्राणं रसनं चोभयमपि सहैवाह तेन पञ्चकत्वसिद्धिः । तर्हि त्वगिन्द्रियस्य कुत्र कथनमित्याशङ्क्य परिहरति—प्राणेति । अत्रहि प्राणशब्दस्त्वगिन्द्रियस्य प्राणेनाप्यायितत्वात् लक्षणया त्वगिन्द्रियमेवाचष्ट इति सर्वानुमतमेवेति । तदिदं भाष्य एव सुव्यक्तम् ॥ १३६ ॥

इति संख्योपसंग्रहाधिकरणम् ॥ ३० ॥

पद०—संज्ञोपाधिरित्यादि । निगमे—वेदे । सप्तसप्तर्षिनीत्या—सप्तसप्तर्षय इत्युक्तरीत्या । इह—'यस्मिन् पञ्च पञ्चजनाः' इत्यादिमन्त्रे । अयं समासः—पञ्चजना इत्ययं समासः । संज्ञोपाधिर्हि—संज्ञानिमित्तको हि । 'दिक्सङ्ख्ये संज्ञायाम्' इति सूत्रेण समानाधिकरणेनेत्यधिकारस्थेन दिग्वाचिशब्दः सङ्ख्यावाचिशब्दश्च समानाधिकरणेन समस्येते समुदायेन संज्ञायां गम्यमानायामित्यर्थकेन विहितो ह्ययं समासः । अतः सप्तर्षिशब्दवत् पञ्चजनशब्दः केषाञ्चित् संज्ञारूपः, नतु समाहारसमासः, पञ्चजना नाम केचन पदार्थाः सन्ति ते च पञ्चेति । तत् पञ्चकम्—पञ्चशब्दविशेषित-

पञ्चजनशब्दार्थभूतवस्तुपञ्चकञ्च । प्राणाद्यं मनोऽन्तं प्रकरणनियतं धीन्द्रियाख्यम्—'प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो मनो ये विदुः' इति वाक्यशेषोक्तरीत्या प्राणोपक्रमं मनोऽन्तं प्रकरणस्थवाक्यनियमितं ज्ञानेन्द्रियाख्यं वस्तुकदम्बमेव । इदम्—पञ्चजनशब्दाभिधेयं वस्तु । ज्योतिश्शब्देन—'तं देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम्' इति वाक्यस्थेन षष्ठीबहुवचनान्त-ज्योतिश्शब्देन । शाखान्तरविदितम्—काण्वशाखायां विदितम् । अयमाशयः—काण्वमाध्यंदिन-शाखयोर्द्वयोरपि पञ्चजनमन्त्रो वर्तते तदर्थनिर्णायकः 'प्राणस्य प्राणम्' इति वाक्यशेषो माध्यन्दिन-शाखायां सम्पूर्णतया वर्तते । अतस्तस्यां शाखायामुक्तरीत्याऽर्थनिश्चयोऽस्तु काण्वशाखायां तु 'प्राणस्य प्राणम्' इति वाक्यशेषे 'अन्नस्यान्नम्' इत्यंशो नास्ति अतस्तस्यां शाखायां कथमर्थनिर्णय इति चेत् तस्यां शाखायां निर्दिष्टवाक्यस्यापूर्णोक्त्या निर्णायकत्वाभावेऽपि पञ्चजनमन्त्रात्पूर्वपठिते 'तं देवाः' इत्यादिमन्त्रे ब्रह्माधीनप्रकाशानां केषांचित् ज्योतिषामवगमात् तानि च विषयप्रकाशकानि ज्ञानेन्द्रियाणीति तान्येवानन्तरे पञ्चजनमन्त्रे पञ्चजनशब्देनोच्यन्त इत्यवगन्तव्यमिति । न्यूनवादस्तु पूर्यः—काण्व-शाखायां निदर्शितरीत्या 'अन्नस्यान्नम्' इत्यंशस्य पाठाभावेन न्यूनवादस्तु माध्यन्दिनशाखादृष्टेन 'अन्न-स्यान्नम्' इत्यंशेन पूरणीयः । सोंऽशोऽत्रापि पठनीय इत्यर्थः । अन्नशब्दो घ्राणं रसनमपि सह वक्ति—'अन्नशब्दोदितपृथिवीसम्बन्धित्वात् घ्राणेन्द्रियमन्नशब्देन गृह्यते, अद्यतेऽनेनेत्यन्नमिति रसने-न्द्रियमपि गृह्यते' इति भाष्यस्य शक्यसम्बन्धप्रदर्शकत्वात् अन्नशब्दोऽन्नसम्बन्धिनोर्घ्राणरसनयोर्द्वयोरपि लक्षणया बोधक इत्यर्थः । अन्नेन घ्राणस्याप्यायितत्वलक्षणः सम्बन्धो रसनस्यान्नभक्षकतया सम्बन्ध इति द्वयोरपि ग्रहणं सम्भवति । प्राणशब्दस्त्वगर्थः—'प्राणस्य प्राणम्' इति वाक्यशेषेऽन्नशब्दस्य घ्राणरसनलक्षकत्वमुक्तम् । तथा षष्ठ्यन्तप्राणशब्दोऽपि प्राणपदशक्यवायुसम्बन्धित्वात् त्वगिन्द्रियस्य लक्षणया बोधक इत्यर्थः । एवञ्च घ्राणरसनयोस्तन्त्रेणोपादानात् पञ्चत्वाविरोधेन पञ्चशब्दविशेषितपञ्चजन-शब्दवाच्यत्वं सुस्थितमिति भावः ॥ १३६ ॥

इति संख्योपसंग्रहाधिकरणम् ॥ ३० ॥

## कारणत्वाधिकरणम् ॥ ३१ ॥

सूत्रम्—कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः ॥ १२३ ॥

विश्वोपादानवक्त्री श्रुतिषु सदसदव्याकृतोक्तिः परोक्ते
ह्यव्यक्तेऽन्वेति तस्मात् तदितरदखिलं नेयमत्रेति चेन्न ।
यत्रासत्त्वादि दृष्टं प्रकरणविदितं तत्र सर्वज्ञताद्यं
लिङ्गं स्यादित्यधीतं स्थिरमपि तदिहाबाध्य आत्मादिशब्दः ॥ १३७ ॥

चिन्ता०—एवं त्रिभिरधिकरणैः साङ्ख्योक्तच्छायानुसारिवाक्यानां परमात्मपरत्वमेव प्रसाध्य तैरेव सांख्यैरब्रह्मात्मकप्रधानपरतया परिगृहीतमव्याकृतादिशब्दसामर्थ्यमपि परमपुरुषपरत्वेनैव सुसंगतमित्याचक्षाण ईक्षत्याद्यधिकरणोक्तमर्थतत्त्वं सिंहावलोकनन्यायेन परामृशन् सम्यङ्न्यायकलापोक्तं स्थापयतीति संगतिः । तदर्थविचारस्तु—किं जगत्कारणवादिवेदान्तप्रतिपाद्यमव्यक्तं सांख्योक्तप्रधानमुत ब्रह्मेति । किं 'असद्वा इदमग्र आसीत्' इत्यसच्छब्दोऽव्याकृतनामरूपावस्थब्रह्मपरः, उताव्याकृतपर इति । किं 'तदप्येष श्लोको भवति' इति साक्षित्वेन निर्देशः 'असद्वा इदमग्र आसीत्' इत्यत्रासच्छब्दस्य प्रकृतब्रह्मपरतामवगमयति नेति । किं 'तद्धेदं तर्ह्यव्याकृतमासीत्' इत्यत्राव्याकृतशब्देनाव्याकृतशरीरं ब्रह्माभिधीयते उताव्यक्तमिति । किं 'स एष इह प्रविष्ट आनखाग्रेभ्यः पश्यत्यचक्षुः' इति प्रशासितुर्विदुषोऽव्याकृतशरीरब्रह्मतामवगमयति नेति । अत्र पूर्वपक्षयुक्तिमनुवदति—विश्वेति । श्रुतिषु सदसदव्याकृतोक्तिर्विश्वोपादानं वक्तीति परोक्ताव्याकृत एवान्वेति । तर्ह्यात्मादिशब्दा अपि कारणवाचिनो विद्यन्ते तेषां कथं निर्वाह इत्याशङ्क्याह—तस्मादिति । अव्याकृतादिशब्दानां लोकवेदप्रसिद्ध्या प्रकृतिवाचित्वस्य दृढप्रमितत्वादन्ये पुनरात्मादिशब्दास्तदानुगुण्येनैव कथंचिन्नेतव्या इत्यर्थः । इमामाशङ्कां प्रतिक्षिपति—नेति । तमेव प्रतिक्षेपं विवृणोति—यत्रेति । यस्मिन्वाक्येऽसदव्याकृतादि दृष्टं तत्र तस्मिन्नेव वाक्ये बहुस्यामिति प्रकरणसमुदितं सर्वज्ञताद्यं परमपुरुषलिङ्गम् । तच्च केवलं नापातप्रतिपन्नम् । अपितु उपक्रमोपसंहारादिषड्विधतात्पर्यलिङ्गोपेतत्वात् सुस्थिरमेव प्रतिपन्नम् । तस्मात् 'आत्मा वा इदमेक एवाग्र आसीत्' 'एको हवै नारायण आसीत्' इत्यादिवाक्यस्थात्मनारायणादिशब्दाः कारणवाक्यस्थाः प्रकृतेः कारणत्वमाश्रित्य अबाध्या इत्यर्थः ॥ १३७ ॥

पद०—विश्वोपादानवक्त्रीत्यादि । श्रुतिषु—वेदशाखासु । विश्वोपादानवक्त्री—जगदुपादानबोधिका । सदसदव्याकृतोक्तिः—क्वचित् सदित्युक्तिः क्वचिदसदित्युक्तिः क्वचिदव्याकृतमित्युक्तिश्च । परोक्ते—साङ्ख्योक्ते । अव्यक्ते हि अन्वेति—स्वतन्त्रमूलप्रकृतौ किल अगौणतया समन्वेति । सत्तासौक्ष्म्यनामरूपव्याकरणराहित्यरूपसदादिशब्दप्रवृत्तिनिमित्तानां प्रकृतौ विद्यमानत्वेन सदादिशब्दास्तस्यां मुख्यतया वर्तन्त इति भावः । तस्मात्—एवमवस्थानात् । तदितरदखिलमत्र नेयम्—उक्तसदादिशब्दभिन्नमात्मनारायणादिकारणवाक्यस्थपदजातं सर्वं सदादिशब्दमुख्यार्थभूतायां प्रकृतौ गौणवृत्त्या नेयमेव । इति चेन्न—इति शङ्क्यते चेत् तन्न युक्तम् । यत्र—यस्मिन्कारणवाक्ये । असत्त्वादि दृष्टम्—असदादिपदैरसत्त्वादिकमवगतम् । तत्र—तस्मिन्नेव वाक्ये । प्रकरण विदितम्—तत्प्रकरणप्रतिपन्नम् । सर्वज्ञताद्यम्—सर्वज्ञत्वादिकम् । लिङ्गं स्यात्—परमपुरुषलिङ्गं भवति । तैत्तिरीयकशाखायां 'असद्वा इदमग्र आसीत्' इति वाक्यं दृष्टं तत्र 'ब्रह्मणा विपश्चिता' इत्युपक्रमावगतं सर्वज्ञत्वरूपं विपश्चित्त्वमेव 'सोऽकामयत बहुस्यां प्रजायेयेति' इत्युत्तरत्र प्रपञ्च्यते एवं प्रकरणावगतं सर्वज्ञत्वादिकं परमपुरुषलिङ्गमसच्छब्दस्य तत्परतां द्रढयतीति भावः । एवं सदव्याकृतशब्दप्रकरणेऽपि सुगमम् । तत्—परमपुरुषलिङ्गञ्च । स्थिरमित्यप्यधीतम्—उपक्रमादिषड्विधतात्पर्यलिङ्गैरुपेतत्वात् स्थिरमिति च प्रतिपन्नम् । इह—कारणवस्तुनि विषये श्रुतः । आत्मादिशब्दः—आत्मनारायणादिशब्दः । अबाध्यः—प्रकृतेः कारणत्वमाश्रित्य न बाधितव्य इत्यर्थः ॥ १३७ ॥

आसीदग्रे त्वसद्वा इदमिति विलयावस्थतामात्रमुक्तं
नैवासीत् किञ्चिदित्याद्यपि विलयपरं शून्यतादेर्निषेधात् ।
सर्वस्याव्याकृतत्वं विभजनविरहात् तादृशावस्थतत्तद्-
द्रव्यस्तोमान्तरात्मा तदिह सदसदव्याकृताद्युक्तिवाच्यः ॥ १३८ ॥

इति कारणत्वाधिकरणम् ॥ ३१ ॥

चिन्ता०—नन्वव्याकृतादिशब्दस्य प्रकृतिवाचकत्वाभावे कथमिव परमात्मवाचकत्वमित्याशङ्क्य तद्वाचकत्वप्रकारमाह विस्तरेण—आसीदिति । अत्र खलु 'असद्वा इदमग्र आसीत्' इत्यादिना वाक्येन परिदृश्यमानस्य प्रपञ्चस्य लयावस्थतामात्रमुक्तम् । नपुनश्चिन्मात्ररूपत्वमसद्रूपत्वमत्यन्ताभावरूपत्वमत्यन्तासद्रूपत्वं वा । तर्हि 'नैवेह किंचनाग्र आसीत्' इति वाक्यं कथमुपपद्यत इत्याशङ्क्याह—

नैवेति । विलयो हि नाम वेदान्तसिद्धान्ते अवस्थान्तरप्राप्तिरेव नपुनर्द्रव्यस्वरूपनाशः । तत्कथमित्यत्राह—शून्यतादेर्निषेधादिति । द्रव्यस्वरूपविनाशो विलय इति हि वैशेषिकादीनां प्रलापः । स तु प्रत्यक्षादिप्रमाणविरोधात् प्रामाणिकैर्निषिद्ध एव । तर्हि कथमव्याकृतत्वमित्यत्राह—सर्वस्येति । सर्वस्याप्यर्थस्य कारणावस्थायामव्याकृतत्वं नामरूपविभागाभावादेवोच्यते । इत्थं सामान्यतश्चिन्तितमव्याकृतशब्दार्थं ब्रह्मण्यपि योजयति—तादृशेति । तत्—तस्मात्कारणात् । अव्याकृतत्वाद्यवस्थाविशिष्टतत्तद्द्रव्यसमूहान्तरात्मा परमपुरुष एव सदसदव्याकृतशब्दवाच्य इति वेदान्तनिष्णातैर्निर्णीयते । अतोऽव्याकृतशब्दस्य भगवत्परत्वेऽर्थो नास्तीति न भ्रमितव्यमिति ॥ १३८ ॥

इति कारणत्वाधिकरणम् ॥ ३१ ॥

पद०—आसीदित्यादि । आसीदग्रे त्वसद्वा इदमिति—इदं परिदृश्यमानं जगत् अग्रे प्रलयकाले असत्तुवै असदेव आसीत् अभवत् इति एवमर्थिकया 'असद्वा इदमग्र आसीत्' इति श्रुत्या । विलयावस्थतामात्रमुक्तम्—प्रलयरूपावस्थापन्नत्वमात्रमेव प्रतिपादितम् । न पुनश्चिन्मात्ररूपत्वमत्यन्ताभावरूपत्वमत्यन्तासद्रूपत्वं वेति भावः । नैवासीत् किञ्चिदित्याद्यपि विलयपरम्—किञ्चिदपि नैवासीदित्येवमर्थकं 'नैवेह किञ्चनाग्र आसीत्' इत्यादिश्रुतिवाक्यमपि पूर्ववत् प्रलयावस्थापरमेव । कुतः शून्यतादेर्निषेधात्—वैशेषिकैः प्रलपितस्य द्रव्यस्वरूपनाशरूपलयस्य प्रत्यक्षादिप्रमाणविरोधेनास्मदादिभिर्निषिद्धत्वात् । सर्वस्याव्याकृतत्वं विभजनविरहात्—'तद्धेदं तर्ह्यव्याकृतमासीत्' इति श्रुतिप्रतिपन्नं सर्वस्याप्यर्थस्य कारणावस्थायामव्याकृतत्वं विभागाभावादेवोच्यते । तत्—तस्मात् । इह—कारणवाक्यसमुदाये । तादृशावस्थतत्तद्द्रव्यस्तोमान्तरात्मा—अव्याकृतत्वाद्यवस्थाविशिष्टतत्तत्प्रधानादिद्रव्यसमूहान्तरात्मा परमपुरुष एव । सदसदव्याकृताद्युक्तिवाच्यः—सदसदव्याकृतादिशब्दवाच्यः ॥ १३८ ॥

इति कारणत्वाधिकरणम् ॥ ३१ ॥

## जगद्वाचित्वाधिकरणम् ॥ ३२ ॥

सूत्रम्—जगद्वाचित्वात् ॥ १२५ ॥

यस्यैतत्कर्म वेद्यस्स इति वचनतः कर्मवश्यप्रतीतेः
कर्ता पुंसां स एव स्वकृतपरिणतेरित्युपक्रान्तिभग्नम् ।
बालाक्यज्ञाततत्त्वान्तरमुपदिशतस्स्यादिहाजातशत्रोः
तज्ज्ञातोक्तिर्निरर्था जगति कृततया कर्मशब्दोऽत्र मुख्यः ॥ १३९ ॥

चिन्ता ०—पूर्वस्मिन्नधिकरणे खलु अनैकान्तिकादव्याकृतादिसमाख्यामात्रात् प्रकृतिपरत्वमाशङ्क्या-
नन्यथासिद्धप्रकरणादिप्राबल्येन परमपुरुषपरत्वमुक्तमव्याकृतादिशब्दस्य, तर्हि कर्मत्वाद्यनन्यथासिद्ध-
लिङ्गबलात् समाकृष्यमाणः पञ्चविंशकः पुरुष एव परतत्त्वमस्त्विति शङ्कया संगतिः । संगत्य-
न्तरमपि राद्धान्तेनोच्यते—पूर्वमव्याकृतशब्दस्य प्रकृतिपरत्वं निरस्य परमात्मपरत्वं निर्णीतम्, अधुना
पुनः कर्मशब्दस्य पुण्यपापरूपकर्मपरत्वं निरस्य कार्यरूपजगद्वाचित्वमुच्यत इति । तदर्थविचारस्तु—
किं जगत्कारणवादिवेदान्तप्रतिपाद्यः प्रकृत्यधिष्ठाता पुरुषः उत परमात्मेति । किं बालाक्यजातशत्रुसंवादे
'ब्रह्म ते ब्रुवाणि' इत्युपक्रम्य वेदितव्यतयोपदिष्टं ब्रह्म पुरुष उत परमात्मेति । किं 'एतेषां पुरुषाणां
कर्ता' इति कर्तृतया निर्दिश्यमानः पुरुषो जीव उत परमात्मेति । किं 'यस्य वैतत्कर्म' इति कर्मशब्दः
पुण्यापुण्यकर्मवाची उत जगद्वाचीति । किं प्रकरणाद्यसंकुचितवृत्तिप्रत्यक्षप्रमितजगत्परैतच्छब्दसामानाधि-
करण्येन कर्मशब्दस्य जगद्वाचित्वं युक्तम्, उत 'एतेषां कर्ता यस्य वैतत्कर्म' इति पृथङ्निर्देशावैयर्थ्याय
पुण्यापुण्यवाचित्वं युक्तमिति । किं 'तौ ह सुप्तं पुरुषमाजग्मतुः' इत्यादिजीवमुख्यप्राणलिङ्गे पुण्यापुण्य-
वाचितामुपोद्बलयतो नेति । किमेतल्लिङ्गे जीवपरे उत परमात्मपरे । किं 'क्वैष एतद्बालाके पुरुषोऽशयिष्ट ।
अथास्मिन्प्राण एवैकधा भवति' इति प्रश्नप्रतिवचनाभ्यां जीवातिरिक्तब्रह्मप्रतिपादनपरे उत नेति ।
अस्मिन्नधिकरणे पूर्वपक्षं आरचयति—यस्येति । यो वै बालाके परिदृश्यमानानामेतेषां पुरुषाणां कर्ता
यस्य परिदृश्यमानस्वपुत्रादिसकलपुरुषकारणपुण्यपापात्मकं कर्म स वै वेदितव्यः स जिज्ञासितव्य इत्युक्तेः

तत्फलभूतकर्मकर्ता जीव एव वेदितव्यो न परमपुरुष इत्युक्तं भवतीति पूर्वपक्षः। शब्दार्थस्तु—स्वकर्मपरिणतेः पुत्रादीनां पुरुषाणां कर्ता स एव पितृत्वेनावस्थितः पुरुष एव वेद्य इति। तदेतन्निराकरोति—उपक्रान्तीति। उपपादयति—बालाकीति। अत्र खलु बालाकेरज्ञातमेव तत्त्वमुपदिशत्यजातशत्रुः। नपुनर्ज्ञातं ज्ञातस्य ज्ञापने नैरर्थक्यात्। तदिदमाह—तज्ज्ञातोक्तिर्निरर्थेति। एतदुक्तं भवति—'यो वै बालाक एतेषां पुरुषाणां कर्ता' इत्येतच्छब्दनिर्दिष्टाः सर्वपुरुषा बालाकिपरिज्ञाता एव। अतस्तेषां ज्ञापने प्रयोजनं नास्ति। अतो जीवातिरिक्तः परमपुरुष एव स्वसृष्टिकर्मभूतविश्वजगत्कर्ता स वै वेदितव्य इत्युच्यते तदिदमाह—जगतीति। क्रियत इति कर्मेति व्युत्पत्त्या जगत ईश्वरापेक्षया कर्मत्ववचनं मुख्यमेवेति ॥ १३९ ॥

पद०—यस्यैतदित्यादि। यस्यैतत्कर्म वेद्यस्स इति वचनतः—कौषीतकिनां बालाक्यजातशत्रुसंवादे बालाकिं प्रति अजातशत्रुवचनरूपे 'यो वै बालाके एतेषां पुरुषाणां कर्ता यस्य वैतत्कर्म स वै वेदितव्यः' इति वाक्ये यस्य एतत् कर्म स वेद्य इत्युक्त्या। कर्मवश्यप्रतीतेः—वेद्यस्य कर्मवश्यत्वप्रतीतेः। स एव—कर्मवश्यो जीव एव। स्वकृतपरिणतेः—स्वकर्मपरिणामवशेन। पुंसाम्—सर्वेषामपि पुरुषाणाम्। कर्ता—स्रष्टा स्यात्। इति—इत्याशङ्कनम्। उपक्रान्तिभग्नम्—उपक्रमबाधितम्। इह बालाक्यज्ञाततत्त्वान्तरमुपदिशतोऽजातशत्रोस्तज्ज्ञातोक्तिर्निरर्था स्यात्—स्वयमेवागत्य 'ब्रह्म ते ब्रुवाणि' इति प्रतिज्ञायादित्यचन्द्रादीन् जीवविशेषान् ब्रह्मत्वेन वदन्तं गार्ग्यं बालाकिं त्वमब्रह्मवादीति निरस्य तदविदितं किमपि ब्रह्म विवक्षता अजातशत्रुनाम्ना काशिराजेन बालाकिं प्रत्युच्यमानस्य 'यो वै बालाके' इत्यादिवाक्यस्य तद्विदितजीवात्मवेद्यत्वार्थकत्वकल्पने तद्वचनं निरर्थकमेव स्यात्। अतस्तदविदितजीवभिन्नपरमात्मवेद्यत्वपरमेवेदं वाक्यमिति सिद्धम्। तर्हि 'यस्य वैतत्कर्म' इति कथं परमात्मन्युपपद्येतेत्यत्राह—जगतीत्यादि। अत्र कर्मशब्दः कृततया जगति मुख्यः—'यस्य वैतत्कर्म' इति वाक्ये कर्मशब्दः क्रियत इति कर्मेति व्युत्पत्तिलब्धया कृतिकर्मतया प्रवृत्तिनिमित्तभूतया जगति विषये मुख्यवृत्त्यैव वर्तते। इदं हृदयम्—यः खलु भवता वेद्यब्रह्मत्वेन मद्ब्रह्मुक्तानामादित्यादीनां जीवानां कर्ता, किं विशिष्य वचनेन एतत्परिदृश्यमानं कृत्स्नमपि जगद्यस्य कर्म कृतिविषयभूतं येनैव सृष्टं स खलु ब्रह्म स एव वेद्य इति सुसंगतार्थकमिति ॥ १३९ ॥

एवं जीवातिरिक्ते प्रकरणनियते तत्र यज्जीवमुख्य-
प्राणाख्यानं न तेन क्षतिरिह च तथा तद्विशिष्टे ह्युपासा ।
प्राणस्य प्राणभाजोऽप्यधिकरणतया वाजिवाक्योक्तरीत्या
ब्रह्मज्ञप्त्यै तदन्यप्रकथनमिति हि स्थापना सार्वभौमी ॥ १४० ॥

इति जगद्वाचित्वाधिकरणम् ॥ ३२ ॥

चिन्ता०—अस्मिन्प्रकरणे किमर्थं जीवाख्यानं प्राणाख्यानं चेत्याशङ्क्य जीवप्राणयोः परमात्मशरीरत्वेन तद्विशिष्टतया भगवत उपासनार्थमित्याह—एवमित्यादिना उपासेत्यन्तेन । एवं जीवातिरिक्ते परमात्मनि प्रकरणप्रतिपन्ने सति अस्मिन्प्रकरणे यज्जीवमुख्यप्राणकथनं तेनेह क्षतिर्विरोधो न भवति । कुत इत्यत्राह—तथेति । तथा सति तद्विशिष्टत्वेन कथने सति, तद्विशिष्टस्याप्युपासा संभवेदिति शब्दार्थः । अयं सार्वत्रिक इत्याह—प्राणस्येति । वाजसनेयके हि अन्तर्यामिब्राह्मणे प्राणस्य प्राणभाजो जीवस्याप्यधिकरणतया तच्छरीरित्वेनोच्यते परमपुरुषः । तथा च सति तेनैव न्यायेन ब्रह्मज्ञप्त्यै तदन्यप्रकथनमिति तद्विशेषणविशिष्टपरमात्मोपासनार्थं तत्रतत्र विशेषणरूपद्रव्यकथनमिति । अस्माकं स्थापना सर्वभूमौ वर्तत इत्यर्थः ॥ १४० ॥

इति जगद्वाचित्वाधिकरणम् ॥ ३२ ॥

पद०—एवमित्यादि । एवम्—उक्तरीत्या । जीवातिरिक्ते प्रकरणनियते—जीवविलक्षणे परमात्मनि प्रकरणपरामर्शेन निश्चिते सति । तत्र—तस्मिन्प्रकरणे । यज्जीवमुख्यप्राणाख्यानम्—अत्र प्रकरणे अजातशत्रुर्बालाकिना सह सुप्तस्य कस्यचित् पुरुषस्य समीपमागम्य बृहन् पाण्डरवासः सोमराजन्निति मुख्यप्राणनामभिरामन्त्रयाञ्चकार । तावता सुप्तः पुरुषो नोदतिष्ठत् । पुनश्च तं यष्ट्या ताडयामास तावता स उदतिष्ठत् । ततोऽजातशत्रुर्जीवात्मनः स्वप्नस्थानं सुषुप्तिस्थानं सुषुप्त्यनन्तरमुद्गमनस्यापादानस्थानं च किमिति पप्रच्छ । तत्सर्वं बालाकिर्न विजज्ञे । ततोऽजातशत्रुर्बालाकये हितानामनाड्यः स्वप्नस्थानं प्राणशरीरकः परमात्मा सुषुप्तिस्थानं स एव चोद्गमनापादानमित्युपदिदेश । बृहन्नित्यादीनां चतुर्णामर्थाः प्राणैकराज्यसमये तन्नामभिरामन्त्रणादीनां प्रयोजनादिकञ्च श्रुतप्रकाशिकाविषयवाक्यदीपिकादौ च द्रष्टव्यम् । अतो यदिदं जीवस्य मुख्यप्राणस्य च कथनम् । तेनेह न क्षतिश्च—स्पष्टम् । तथा—तथा सति

तद्विशिष्टत्वेन कथने सति। तद्विशिष्टे उपासा हि—जीवमुख्यप्राणविशिष्टस्य परमात्मन उपासना सम्भवति हि। इदमेव च तथाकथने फलमिति भावः। तदन्यप्रकथनम्—ब्रह्मभिन्नमुख्यप्राणजीवकथनम्। वाजिवाक्योक्तरीत्या—'य एष विज्ञानमयः पुरुषस्तदैतेषां प्राणानां विज्ञानेन विज्ञानमादाय य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते' इति वाजसनेयकबालाक्यजातशत्रुसंवादवाक्योक्तरीत्या। प्राणस्य—मुख्यप्राणेन्द्रियरूपस्य प्राणशब्दार्थस्य। प्राणभाजोऽपि—जीवस्यापि। अधिकरणतया—आधारत्वेन। ब्रह्मज्ञप्त्यै—ब्रह्मज्ञानाय। इति स्थापना हि—एवं निर्वहणप्रक्रिया किल। सार्वभौमी—उत्कृष्टतमा एतादृशस्थलेषु सर्वेषु सञ्चारयितुं योग्या च। जीवमुख्यप्राणकथनं तद्विशिष्टपरमात्मोपासनार्थमित्येको निर्वाहः, जीवमुख्यप्राणकीर्तनं तयोराधारभूतस्य परमात्मनो ज्ञापनार्थमित्युत्तमो निर्वाह एष सार्वत्रिकश्चेति भावः॥ १४०॥

इति जगद्वाचित्वाधिकरणम्॥ ३२॥

## वाक्यान्वयाधिकरणम् ॥ ३३ ॥

### सूत्रम्—वाक्यान्वयात् ॥ १२८ ॥

पत्यादीनां प्रियत्वं श्रुतिरनुवदति ह्यात्मनः कामसिद्ध्यै
तेनासौ पुण्यपापोदितफलभुगिति प्रक्रमादिप्रतीपम् ।
तत्तद्भोगप्रदातुः प्रथयति हि विभोः कामतस्तत्प्रियत्वं
द्रष्टव्यश्चैष मुक्त्यै श्रुतिनिकरमितः प्रत्यभिज्ञाप्यतेऽत्र ॥ १४१ ॥

चिन्ता०—'पूर्वस्मिन्नधिकरणे लिङ्गत्वेनाभिमतस्य कर्मशब्दवाच्यत्वस्यानैकान्तिकत्वेनालिङ्गत्वमुक्तम् । अत्र पूर्वपक्षी पुरुषनिर्णयेऽसाधारणतयाऽभिमतं लिङ्गमाह—कथम्? 'आत्मा वा अरे द्रष्टव्यः' इत्यारभ्य 'विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञास्ति' इति 'सर्वं तं परादाद्योन्यत्रात्मनः सर्वं वेद' 'यत्र हि द्वैतमिव भवति' 'विज्ञातारमरे केन विजानीयात्' इति पञ्चविंशाज्जीवादधिकं निषिध्य तेन च लिङ्गमात्रव्यपदेशादिति । तत्राह—'वाक्यान्वयात्' इति, इति श्रीविष्णुचित्तार्यैः संगतिमालायां व्यक्तमुपपादि संगतिः । तेनात्र पूर्वं सांख्योक्तप्रक्रियाशङ्कामुखेन त्रिभिरधिकरणैरेका पेटिका प्रवृत्ता । अधुना पुनः कारणत्वादिभिस्त्रिभिः अव्याकृतादिकर्मत्वादिलिङ्गाभ्यां सह जीवब्रह्मणोरैक्योपदेशादत्यन्ताभेदात् प्रकृत्यधिष्ठातुर्जीवत्वमाशङ्क्य निराक्रियत इति पेटिकान्तरमित्यप्याहुराचार्याः । तदर्थविचारस्तु—जगत्कारणवादिवेदान्तप्रतिपाद्यं पुरुषाधिष्ठितं प्रधानमुत परमात्मेति । बृहदारण्यके किं मैत्रेयीब्राह्मणे 'न वा अरे पत्युः कामाय पतिः प्रियो भवति' इत्युपक्रम्य 'आत्मा वा अरे द्रष्टव्यः' इत्यात्मा पञ्चविंशः पुरुष उत परमात्मेति । किमुपक्रमे पतिजायापुत्रादिप्रियसंबन्ध आत्मशब्दस्य पुरुषपरतामवगमयति नेति । किं वाक्यावयवानां सर्वेषां परमात्मन्येवान्वयसामर्थ्यमुत पुरुष इति । अत्र पूर्वपक्षमुपन्यस्यति—पत्यादीनामिति । 'न वा अरे पत्युः कामाय पतिः प्रियो भवति' इत्यादिनोपक्रमे पत्यादीनां प्रियत्वं श्रुतिरनुवदति ह्यात्मनः कामसिद्ध्यै स्वाभीष्टसिद्ध्य इत्यर्थः । तेन स्वाभीष्टसिद्ध्यर्थं पुत्रादीनां प्रियत्वोपपादनेन असावात्मा पुण्यपापोत्पन्नफलभुग्जीव एवेति पूर्वः पक्षः । तं निराकरोति—प्रक्रमादीति । इदमुपक्रमादिविरुद्धमिति । तर्ह्यस्मिन्वाक्ये मदुक्तं न भवति चेत् किं पुनरुच्यत इत्याशङ्क्याह—तत्तदिति । तत्तत्पुत्रादिनिमित्तभोगप्रदातुः परमपुरुषस्यैव संकल्पात्तेषां पुत्रादीनां पित्रादीन्प्रति प्रियत्वं भगवत्संकल्पायत्तमित्यर्थः ।

अस्य पितुरयं पुत्रः प्रियो भवत्विति भगवता संकल्पिते सति तथैव तत्प्रियत्वं भवतीत्यर्थः । अत्रात्मशब्देन भगवानेवोच्यते नपुनः पित्रादिरूपो जीवः । किं च सर्वेष्वपि वेदान्तेषु भगवान् पुरुषोत्तम एव मोक्षार्थं द्रष्टव्यतया श्रूयते तेन स एवात्मा 'आत्मा वारे द्रष्टव्यः' इत्यत्रात्मशब्देन प्रत्यभिज्ञाप्यते । गतिसामान्यस्य पूर्वमेवोक्तत्वादिति ॥ १४१ ॥

पद०—पत्यादीनामित्यादि । श्रुतिः—बृहदारण्यके मैत्रेयीब्राह्मणे 'नवा अरे पत्युः कामाय पतिः प्रियो भवति आत्मनस्तु कामाय पतिः प्रियो भवति' इत्यादिरूपा श्रुतिः । पत्यादीनां प्रियत्वमात्मनः कामसिद्ध्यै—द्रष्टव्यतया वक्ष्यमाणस्यात्मनः कामसिद्ध्यर्थमिति । अनुवदति हि—बहुपु पर्यायेष्वनुगततया वदति हि । तेन—कारणेन । असौ—आत्मा । पुण्यपापोदितफलभुक्—पुण्यपापोत्पन्नफलभुग्जीव एव । इति—एवमाशङ्कनम् । प्रक्रमादिप्रतीपम्—उपक्रमोपसंहारादिविरुद्धम् । उपक्रमे तावदमृतत्वप्राप्त्युपायं प्रार्थयमानायै मैत्रेय्यै याज्ञवल्क्य उपदेशाय प्रावर्ततेति प्रतिपन्नम् । मध्ये 'तस्य ह् वा एतस्य महतो भूतस्य निश्श्वसितमेतद्यदृग्वेदः' इत्यादिना जगत्सृष्टिरित्यादिसिद्धम् । एवमन्ते च द्रष्टव्यम् । तत्तद्भोगप्रदातुर्विभोः कामतो हि तत्प्रियत्वं प्रथयति—तत्तज्जीवकर्मानुगुणतया तत्तत्पुत्रवित्तपत्नीपश्वादिभोगं प्रदिशतः परमात्मनः स्वाराधकप्रियलम्भनेच्छया किल पुत्रादिकं वस्तु प्रियत्वं प्रख्यापयति । अतः कामाश्रय आत्मा परमात्मैव । अत्र—'आत्मा वा अरे द्रष्टव्यः' इत्यत्रत्यवाक्ये । मुक्त्यै—मुक्त्यर्थम् । द्रष्टव्यः—द्रष्टव्यत्वेन । श्रुतिनिकरमितः—'क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे' इत्यादिवेदान्तप्रतिपादितः । एषः—परमात्मा । प्रत्यभिज्ञाप्यते च—स एवायमिति प्रत्यभिज्ञाविषयीक्रियते च । अत आत्माऽसौ द्रष्टव्यत्वेनोक्तः परमात्मैवेति भावः ॥ १४१ ॥

व्युत्पत्त्या ह्यात्मशब्दः प्रथयति परमं ब्रह्म यद्वा समानात्
स्वार्थोऽयं जीवशब्दो वदति च परमं द्वारवृत्त्येति पक्षः ।
व्यक्त्यैक्यादाश्मरथ्यो निरुपधिकदशाद्वैततश्चौडुलोमिः
तत्स्थत्वात् काशकृत्स्नो निरवहदिह साध्वात्मशब्दं परस्मिन् ॥ १४२ ॥

चिन्ता०—अत्र प्रयुज्यमानानामात्मशब्दानां परमात्मपरत्वं व्युत्पत्त्येत्येकः पक्षः । अथवा तत्समानप्रकरणानुगुण्येन स्वार्थकोऽपि भवतीत्यपरः । तृतीयस्तु जीववाचकात्मशब्दो जीवद्वारा परमात्मानमेव वदतीति । तमिमं पक्षत्रयविभागमाह—व्युत्पत्त्येत्यादिना पूर्वार्धेन । अत्र जीववाचकानां परमात्मपरत्वे ऋषित्रयाभिमतपक्षान् पूर्वोक्ताननुक्रमेण शिष्यानुग्रहार्थं विशदयत्युत्तरार्धेन—व्यक्त्यैक्यादित्यादिना ।

जीवब्रह्मणोः स्वरूपैक्यात् जीवशब्देन परमात्माभिधानमित्याश्मरथ्यः । औडुलोमिस्तु निरुपाधिकदशाद्वैततो मुक्तदशायां जीवब्रह्मणोरद्वैतत्वात् जीवशब्देन परमात्माभिधानमित्याह । काशकृत्स्नः पुनस्तत्स्थत्वात् जीवस्य परमात्मशरीरत्वेन परमात्मनस्तन्निष्ठत्वादित्याह । अत्र काशकृत्स्नीयमेव राद्धान्तत्वेनोच्यत इति ॥ १४२ ॥

पद०—व्युत्पत्त्या हीत्यादि ।

व्युत्पत्त्या ह्यात्मशब्दः प्रथयति परमं ब्रह्म यद्वा समानात्
स्वार्थोऽयं जीवशब्दो वदति च परमं द्वारवृत्त्येति पक्षः ।
व्यक्त्यैक्यादाश्मरथ्यो निरुपधिकदशाद्वैततश्चौडुलोमिः
तत्स्थत्वात् काशकृत्स्नो निरवहदिह साध्वात्मशब्दं परस्मिन् ॥

इति साधुपाठः । इतोऽन्ये पाठास्त्याज्या एव । आत्मशब्दः—'आत्मा वारे द्रष्टव्यः' इत्यत्रात्मशब्दः । परमं ब्रह्म—वेदान्तैर्वेद्यत्वेनोक्तं परं ब्रह्म । व्युत्पत्त्या—आप्नोतीत्यात्मेति व्युत्पत्त्या । प्रथयति—प्रतिपादयति । हिशब्दोऽस्या व्युत्पत्तेः प्रसिद्धिं दर्शयति । एक इति पूर्वार्धवाक्यत्रयेऽपि प्रत्येकमध्याहारः । इतिशब्दपक्षशब्दयोः प्रथमे द्वितीये च वाक्येऽनुकर्षः । तथा च इत्येकः पक्ष इत्यन्वयः । यद्वा—पक्षान्तरे । अयम्—द्रष्टव्यपदविशेषित आत्मशब्दः । समानात् स्वार्थः—'आत्मनस्तु कामाय' इत्यत्र श्रूयमाणस्य समानस्यात्मशब्दस्य स्वशब्दार्थकत्वात् तदानुगुण्येन स्वशब्दसमानार्थकः ।

'यद्यत्परवशं कर्म तत्तद्यत्नेन वर्जयेत् ।
यद्यदात्मवशं तु स्यात् तत्तत्सेवेत नित्यशः ॥
सर्वं परवशं दुःखं सर्वमात्मवशं सुखम् ।'

इत्यादावात्मशब्द इव स्वात्मपर इत्यर्थः । इत्येकः पक्ष इति पूर्ववत् । यद्वा जीवशब्दः—जीवात्मपरतया वेदान्तव्युत्पत्तिशून्यैर्व्यवह्रियमाणोऽयमात्मशब्दः । परमम्—परमात्मानम् । द्वारवृत्त्या वदति—शरीरवाचकानां शरीरिपर्यन्तत्वन्यायेन द्वारभूतजीवापरित्यागेन तद्विशिष्टतया प्रतिपादयति । इत्येकः पक्ष इत्यन्वयः । इह—अस्मिन्प्रकरणे । आत्मशब्दम्—द्रष्टव्यादिपदविशेषितात्मशब्दम् । आश्मरथ्यः—एवन्नामकऋषिः । व्यक्त्यैक्यात्—मृद्घटयोरिव जीवब्रह्मणोः स्वरूपैक्यात् । निरवहत्—जीववाचकस्यापि ब्रह्मवाचकत्वं निर्व्यूढवान् । औडुलोमिश्च—उडुलोमनाम्नो मुनेरपत्यं कश्चिदृषिः ।

निरुपधिकदशाद्वैततः—निरुपधिकदशा अविद्योपाधिनिवृत्तिदशा मुक्तिदशेति यावत् तत्सम्बन्धि यत् अद्वैतं सायुज्यरूपं स्वरूपैक्यं तस्माद्धेतोः । आत्मशब्दं निरवहत् । मुक्तिदशायां 'ब्रह्मैव भवति इत्युक्त्या जीवब्रह्मणोः स्वरूपैक्यस्य सिद्धत्वात् जीववाचकस्यात्मशब्दस्य ब्रह्मवाचकत्वमुपपन्नमित्युवाचेति भावः । काशकृत्स्नः—काशं प्रकाशमानं कृत्स्नमपि वस्तुजातं यस्य सः काशकृत्स्नः सर्वज्ञः कश्चिदेव-नामकऋषिः । इह आत्मशब्दं परस्मिन् तत्स्थत्वात्—

'अन्यश्च राजन् स परस्तथाऽन्यः पञ्चविंशकः ।
तत्स्थत्वादनुपश्यन्ति ह्येक एवेति साधवः ॥'

इति मोक्षधर्मोक्तरीत्या परमात्मनो जीवात्मन्यन्तरात्मतया विद्यमानत्वात् जीववाचक आत्मशब्दः जीवशरीरकपरमात्मपर इति, अयो दहतीत्यत्रायश्शब्दस्याग्निवाचकत्ववत् पिण्डविशेषवाचकानां देवमनुष्यादिशब्दानां तत्तत्पिण्डविशिष्टजीवात्मवाचकत्ववच्च । साधु—सम्यक् सर्वश्रुत्यविरोधेन । निरवहत्—निर्व्यूढवान् । अत्र पूर्वार्धोक्तस्य पक्षत्रयस्य क्रमेणोत्तरार्धोक्तपक्षत्रयवाक्यैर्विवरणमिति चिन्तामणौ निश्चितम् ॥ १४२ ॥

**भेदोपाधिव्यपाये भवभृदयमियाद्ब्रह्मतामित्ययुक्तं**
**नित्यं तद्भेददृष्टेरतिपतितभवे साम्यसाधर्म्यशब्दात् ।**
**मृत्तत्कार्यक्रमश्च श्रुतिशतविहतस्तेन जीवोक्तिमीशे**
**तत्स्थत्वात् काशकृत्स्नो यदिह निरवहद् व्याससिद्धान्त एषः ॥१४३॥**

इति वाक्यान्वयाधिकरणम् ॥ ३३ ॥

चिन्ता०—औडुलोमीयं पक्षं निराकृत्य काशकृत्स्नीयमेव पक्षं स्वपक्षयति—भेदेति । भेदकाविद्योपाधिव्यपाये सति जीवोऽयं ब्रह्मतां प्राप्नुयादिति औडुलोमिमतमयुक्तम् । कुतस्तत्राह—नित्यं तद्भेददृष्टेरिति । 'नित्यो नित्यानाम्' इत्यादिश्रुत्या जीवपरयोर्भेदस्य नित्यत्वेन साक्षादेव दर्शनात् । अत्र हेत्वन्तरमप्याह—अतिपतितेति । अतीतसर्वबन्धे जीवे 'निरञ्जनः परमं साम्यमुपैति' 'मम साधर्म्यमागताः' इति साम्यसाधर्म्ययोः श्रुतत्वात् तयोश्च भेदगर्भत्वादित्यर्थः । तर्हि मृत्तत्कार्यदृष्टान्तः श्रुतावुच्यते स कथं जीवपरयोरत्यन्तभेदे भवद्भिरभिधीयमाने घटत इत्याशङ्क्याह—मृत्तदिति । नहि दृष्टान्तदार्ष्टान्तिकयोः सर्वथा साम्यं वाच्यम्, अपि तु प्रमाणानुगुणमेव, अन्यथा श्रुतिशतविरोधः स्यादित्याह—श्रुतिशतविहत इति । 'क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः' इति श्रुत्यैव

साक्षाच्चिदचिदीश्वराणां स्वरूपं विभज्य निर्णीयत इत्यर्थः । उक्तमर्थं काशकृत्स्नीयमतेन निगमयति— तेनेति । जीवशब्दमीश्वरेऽपृथक्सिद्धविशेषणवाचिनां शब्दानां विशेष्याभिधानसामर्थ्यादिति काशकृत्स्नो निरवहदिति यत् एष एव श्रीवेदव्याससिद्धान्त इति । इतरत् द्वितयं निरसनीयमेवेति ॥ १४२ ॥

इति वाक्यान्वयाधिकरणम् ॥ ३२ ॥

पद०—भेदोपाधीत्यादि । अयं भवभृत्—सर्वैरप्यहमुल्लेखेन प्रतीयमानस्संसार्यात्मा । भेदोपाधिव्यपाये—भिद्यते अन्यतया ज्ञायतेऽनेनेति भेदः, तादृशस्याविद्यारूपस्य उपाधेर्व्यपाये निवृत्तौ । ब्रह्मताम्—ब्रह्मभावम् । इयात्—प्राप्नुयात् । घटाद्युपाधिनाशे तदन्तराकाशो हि महाकाशतामेति तद्वदिति भावः । इत्ययुक्तम्—इति शङ्कनमप्ययुक्तम् । कुतः ? नित्यं तद्भेददृष्टेः—'नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्' इत्यादिश्रुत्या तयोर्जीवपरयोः भेदस्य नित्यत्वेन साक्षादेव दर्शनात् । किञ्च, अतिपतितभवे—अतिपतितोऽतिक्रान्तः भवः संसारबन्धो येन सः अतिपतितभवो मुक्त इत्यर्थः, तस्मिन् । साम्यसाधर्म्यशब्दात्—परमात्मना साकं साम्यप्रतिपादकशब्दात् तादृशसाधर्म्यशब्दाच्च । 'निरञ्जनः परमं साम्यमुपैति' 'मम साधर्म्यमागताः' इति साम्यसाधर्म्ययोः श्रवणात् तयोर्भेदगर्भत्वादिति भावः । मृत्तत्कार्यक्रमश्च—ब्रह्मणो जगतश्च 'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात् वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् एवं सोम्य स आदेशो भवति' इति श्रुत्युक्तो मृत्तत्कार्यघटशरावादीनां यः कार्यकारणभावरूपः क्रमः स च । श्रुतिशतविहतः—'क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः' इत्यादिभिर्बह्वीभिः श्रुतिभिरचेतनं चेतनमीश्वरं चात्यन्तविलक्षणतया दर्शयन्तीभिर्ब्रह्मनिर्विकारत्वादिप्रतिपादकश्रुतिसहिताभिः, विहतो बाधितः । अतो 'येनाश्रुतम्' इत्यादौ येनेत्यादिकारणवाचकशब्दानां जलं वहतीत्यादौ जलशब्दस्य जलविशिष्टघटपरत्ववत् सूक्ष्मचिदचिद्विशिष्टब्रह्मपरत्वमवश्यमेष्टव्यमिति भावः । तेन—जीवब्रह्मणोः स्वरूपैक्यस्य बाधितत्वेन । काशकृत्स्नः—एवन्नामकऋषिः । जीवोक्तिम्—जीववाचकमात्मशब्दम् । ईशे—परमात्मनि विषये । तत्स्थत्वात्—परमात्मनो जीवात्मन्यन्तरात्मतयाऽवस्थानात् । निरवहत्—निर्व्यूढवान् पिण्डविशेषवाचिदेवादिशब्दानां तदन्तर्वर्तितदात्मभूतजीवात्मवाचकत्ववत् जीववाचकानामप्यात्मादिशब्दानां जीवविशिष्टब्रह्मवाचकत्वमिति स्थापयामास । इति यत्—एवं 'अवस्थितेरिति काशकृत्स्नः' 'तत्स्थत्वादनुपश्यन्ति' इत्यादौ यो निर्वाहः प्रमाणप्रमातृगोष्ठीषु प्रसिद्धः । यदिति सामान्ये नपुंसकम् । एषः—अयमेव । इह—निर्दर्शिते पक्षत्रये । व्याससिद्धान्तः—सर्ववेदार्थमर्मज्ञस्य भगवतो वेदव्यासस्याभिमतोऽर्थनिष्कर्ष इत्यर्थः ॥ १४२ ॥

इति वाक्यान्वयाधिकरणम् ॥ ३२ ॥

## प्रकृत्यधिकरणम् ॥ ३४ ॥

सूत्रम्—प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ।। १३२ ।।

मृत्पिण्डादेः कुलालप्रभृतिरिह पृथक् तद्वदेवादिकर्ता
नोपादानं विकारैर्विरहत इति न द्वारमात्रे विकारात् ।
मृद्दृष्टान्तादिमात्रान्नच विकृतिरसौ स्यात् परस्य स्वरूपे
देहद्वारोर्णनाभिप्रभृतिविकृतिवद् व्यापृतेर्दर्शितत्वात् ॥ १४४ ॥

चिन्ता०—पूर्वत्र 'अवस्थितेरिति काशकृत्स्नः' इति भगवतो नियामकत्वेनावस्थानात् जीवसामानाधिकरण्यमित्युक्ते कश्चिदाह—यथा राजा राष्ट्रमित्यत्र राष्ट्रनियामकत्वेन राजाऽवतिष्ठते सामानाधिकरण्यमिहौपचारिकमस्ति अथापि नोपादानत्वम् , तद्वदत्रापि निमित्तमेव स्यान्नोपादानमित्याशङ्क्योत्थानात् संगतिः । तदर्थविचारस्तु—किं ब्रह्म जगतो निमित्तकारणमुतोपादानकारणमपीति । किं जगत्कारणवादिवेदान्तवाक्यं ब्रह्मण उपादानकारणत्वमपि प्रतिपादयति, उत निमित्तकारणत्वमात्रमिति । किमंन्यत्र निमित्तोपादानयोर्भेदनियमो निमित्तमात्रत्वं ब्रह्मणो व्यवस्थापयति नेति । किं निमित्तकारणत्वमात्रप्रतिपादकत्वे सत्येकविज्ञानेन सर्वविज्ञानप्रतिज्ञादृष्टान्तयोरुपरोधोऽस्ति नेति । अत्र पूर्वपक्षोक्तप्रकारमनूद्य दूषयितुमुपक्रमते—मृत्पिण्डादेरिति । लोके ह्युपादानान्मृत्पिण्डादेर्निमित्तभूतः कुलालादिः पृथगेवोपलभ्यते तद्वदेव जगतामादिकर्ता नोपादानं कुत इत्याशङ्क्य हेतुमाह—विकारैर्विरहत इति—विकाररहितत्वादित्यर्थः । उक्तमर्थं प्रतिषेधति—नेति । तदेव विवृणोति—द्वारेति । यथा बालो युवा जात इत्यत्र द्वारभूतदेहे विकारात् नात्मनि जीवे विकारः, एवमत्रापि जगदुपादानभूतभगवद्विशेषणे विकाराद् भगवति न विकार इत्यर्थः । ननु मृत्तत्कार्यदृष्टान्तो दृश्यते दृष्टान्तभूते मृदादौ तु स्वरूपएव विकारः तद्वदत्रापि स्वरूपएव विकारः स्यादित्याशङ्क्य नेत्याह—मृदिति । नहि दृष्टान्तदार्ष्टान्तिकयोः सर्वथासाधर्म्यमपेक्षितम् , अपि तु यथायोग्यमेव साधर्म्यं स्वीक्रियते । अत्र तु भगवति स्वरूपविकारस्यासंभवादचेतनवैशिष्ट्येनैवावस्थान्तरप्राप्तिरुपलभ्यते । तदिदमाह—देहेति । प्रभृतिपदेन "यथा सतः पुरुषात्केशलोमानि" इत्यादिनिदर्शनग्रहणम् । व्यापृतेर्दर्शितत्वात्–भगवद्व्यापारस्य दर्शितत्वात् । नह्यूर्णनाभेर्देह एवावस्थाप्राप्तिः, नापि केवलात्मनि, अपि तु देहविशिष्टात्मनीति लोकोपलम्भः , एवं प्रकृतिविशिष्टपरमात्मन्येवावस्थान्तरप्राप्तिरिति समञ्जसमेतत् ॥ १४४ ॥

पद०—मृत्पिण्डादेरित्यादि । इह—लोके । मृत्पिण्डादेः—घटं प्रत्युपादानभूतात् मृत्पिण्डात् पटं प्रत्युपादानभूतात् तन्तोश्च । कुलालप्रभृतिः—घटनिमित्तकारणभूतः कुलालः, पटनिमित्तकारणभूतः कुविन्दश्च । पृथक्—भिन्न एव । दृश्यत इति शेषः । तद्वदेव—घटपटनिमित्तकारणभूतकुलालकुविन्दरीत्यैव । आदिकर्ता—जगदादिनिमित्तभूतः परमात्मा । उपादानं न—उपादानकारणं न भवितुमर्हति । कुतः ? विकारैर्विरहतः—विकारशून्यत्वात् । परमात्मनो निर्विकारत्वेन श्रुतिप्रतिपन्नत्वात् विकाराश्रयस्यैवचोपादानत्वसम्भवादिति भावः । इति न—इत्युपन्यासो न साधुः । कुतः ? द्वारमात्रे विकारात्—निर्विकारस्य ब्रह्मणो विकारात्मकस्य जगतश्च बहुश्रुतिप्रतिपन्नकारणत्वकार्यत्वनिर्वाहाय कारणभूतब्रह्मविशेषणतयाऽङ्गीकृते सूक्ष्मचेतनाचेतनरूपद्वारकारणमात्र एव विकाराङ्गीकरणात् । तथा देहनिष्ठे बालत्वे युवत्वेऽपि निर्विकारेऽपि च सति जीवे बालो युवा जात इति व्यवहारदर्शनादिति भावः । मृद्दृष्टान्तादिमात्रात्—'यथा सोम्यैकेन मृत्पिण्डेन' इत्यादिश्रुतिनिदर्शितात् स्वरूपविकारयुक्तदृष्टान्तग्रहणमात्रात् । असौ विकृतिः—परिदृश्यमानजगद्रूपविकारः । परस्य स्वरूपे न च स्यात्—परमात्मस्वरूपे न भवेत् । नहि दृष्टान्तदार्ष्टान्तिकयोः सर्वथा साधर्म्यमेष्टव्यमिति भावः । अत्र किं नियामकमिति चेत्—ऊर्णनाभिप्रभृतिविकृतिवत् देहद्वारा व्यापृतेर्दर्शितत्वात् । 'यथोर्णनाभिः सृजते गृह्णते च' इत्यादिश्रुत्यैव लूताख्यतन्तुविसर्गसंग्रहकारिकृमिप्रभृतीनां तन्तुरूपविकारवत् स्वदेहभूतचिदचिद्द्वारैव परमात्मनो जगद्विकारव्यापरणस्य दर्शितत्वात् । अतो न स्वरूपविकारभयेन बहुश्रुतिसिद्धं लोकदृष्टान्तविख्यातं च परमात्मनो जगन्निमित्तभूतस्यापि तदुपादानत्वं त्याज्यमिति भावः ॥ १४४ ॥

स्वज्ञानाद्यं स्वजन्यं भवति सृजति च स्वान्यसंयोगमीशः
संयोगे मूर्तनिष्ठे प्रकृतिरपि हि तत् स्यान्निमित्तं क्रियातः ।
एकस्यादौ बहुस्यामिति बहुभवनं सौभरिन्यायसिद्धं
भेदाभेदश्रुतीनामविहतिरिह च स्याद् विशिष्टैक्ययोगात् ॥ १४५ ॥

चिन्ता०—एकस्यैव पदार्थस्य निमित्तत्वमुपादानत्वं च परस्परविरुद्धमिति परे प्रलपन्ति । तैरुक्तमर्थं तदङ्गीकृतप्रक्रियादृष्टान्तेनोपपादयितुमुपक्रमते—स्वज्ञानाद्यमिति । न्यायवादिनो भगवदुपादानत्वप्रतिक्षेपकाः स्वप्रक्रियाविरोधादेव भ्रश्यन्ति । ते खलु समवायिकारणमसमवायिकारणं निमित्तकारणमिति त्रिधा कारणं कल्पयन्ति । अथापि यदेव निमित्तकारणं तदेव समवायिकारणमिति ब्रुवते । तद्यथा स्वज्ञानाद्यं स्वजन्यमेव स्वकीयं हि ज्ञानचिकीर्षाप्रयत्नादिकं शास्त्राभ्यासादिभिः स्वयमेव करोति

जीवः । तेन तत्र कर्तृत्वान्निमित्तकारणं भवति । तथापि च स्वयमेव समवायिकारणं भवति स्वज्ञानादेः कार्यं यत्र समवैति तत् समवायिकारणमिति समवायिकारणलक्षणस्य स्फुटमुपलम्भात् । किंचेश्वरोऽपि सर्वव्याप्तस्य स्वस्य सर्वैरपि परमाण्वादिभिः **संयोगं** स्वयमेव **सृजति** सर्वकार्यहेतुत्वात् तथाच तत्र कर्तृत्वेन निमित्तकारणं भवति । समवायिकारणत्वमपि तं प्रति तस्य दृश्यते परमाण्वादिसंयोगस्येश्वरनिष्ठत्वात् । तेन यथा कर्तृत्वं समवायिकारणत्वं च युष्मत्सिद्धान्ते भवतीश्वरनिष्ठमेव तथाऽस्मत्सिद्धान्ते निमित्तत्वमुपादानत्वं चैकवस्तुनिष्ठमिति को विरोधः । अत्रायं विशेषः—समवायस्याप्रामाणिकत्वात् प्रत्ययोत्पत्तिवादस्यात्यन्तजघन्यत्वाच्च केवलमवस्थान्तरापत्तिमात्रमेव वयं स्वीकुर्महे इति । सृजतीत्यादि—स्वस्यान्यसंयोगमीश्वरः सृजतीति शब्दान्वयः । तत्रेश्वरस्योपादानत्वं विवृणोति—संयोग इति । तत्—तस्मात्कारणात् । ईश्वरो मूर्तैः सह स्वस्य संयोगे प्रकृतिरपि उपादानमपि क्रियातो निमित्तं स्वव्यापारान्निमित्तं स्यादित्यर्थः । तदपि मूर्तमीश्वरसंयोगे समवायिकारणं भवति । स्वनिष्ठकर्मद्वारा स्वयं निमित्तकारणं भवतीत्यर्थः । अत्र चोदयति—एकस्येश्वरस्य कथं बहुस्यामिति बहुभवनं स्यादिति । तच्चोदनां परिहरति—एकस्येति । यथा सौभरिरेक एव पञ्चाशच्छरीरपरिग्रहं सङ्कल्प्य तेन रूपेण जात इति प्रमाणसिद्धं तथा भगवानपि नानाविशेषणविशिष्टवेषेण स्वसंकल्पादेव जायत इति को विरोधः । काचिदभेदश्रुतिरपरा च भेदश्रुतिः, भेदाभेदौ परस्परविरुद्धावेवेत्याशङ्क्यास्मत्सिद्धान्ते विरोधगन्धोऽपि नास्तीत्याह—भेदाभेदेति । स्वरूपभेदाद्भेदश्रुतिरुपपद्यते, विशिष्टैक्यादभेदश्रुतिरिति निर्वाहे वयमेव विजयामह इति ॥ १४५ ॥

पद०—स्वज्ञानाद्यमिति । स्वज्ञानाद्यम्—स्वकीयज्ञानचिकीर्षाप्रयत्नादिकम् । स्वजन्यं भवति—शास्त्राभ्यासादिभिर्जीवेन स्वेनैव जन्यते । तेन कर्तृत्वान्निमित्तकारणं तथापि स्वयमेव समवायिकारणं च भवति स्वकीयज्ञानादेः कार्यं यत्र समवैति तत्समवायिकारणमिति समवायिकारणलक्षणस्य स्फुटत्वात् । किञ्च, ईशः—ईश्वरः । स्वान्यसंयोगम्—सर्वव्याप्तस्य स्वस्य अन्यैः परमाण्वादिभिः संयोगम् । सृजति—स्वयमेवोत्पादयति सर्वकार्यहेतुत्वात् । तथा च तत्रेश्वरः कर्तृत्वेन निमित्तकारणं समवायिकारणं च भवति । तत्—तस्मात् कारणात् । ईशः, मूर्तनिष्ठे संयोगे—मूर्तद्रव्यनिष्ठे स्वसंयोगे । प्रकृतिरपि—उपादानकारणमपि । क्रियातः—स्वव्यापारात् । निमित्तं स्याद्धि—निमित्तकारणं भवेद्धि । यद्वा एवं वा योजना—मूर्तनिष्ठे संयोगे तत् मूर्तं द्रव्यं प्रकृतिरपि स्यात् उपादानमपि स्यात् क्रियातो निमित्तमपि स्यादिति । एवं च भवत्सिद्धान्तरीत्या एकं कार्यं प्रति एकस्यैव निमित्तत्वोपादानत्वयोरङ्गीकृतत्वात् तद्रीत्यैव जगन्निमित्तोपादानमीश्वरो भवतीत्यत्र न कोऽपि न्यायविरोध इति भावः ।

आदौ—सृष्ट्यादिकाले। एकस्य—एकस्यैव सत ईश्वरस्य। बहुस्यामिति बहुभवनम्—'बहु स्याम्' इत्युक्तरीत्या बहुभवनं तु। सौभरिन्यायसिद्धम्—यथा सौभरिः एक एव पञ्चाशच्छरीरपरिग्रहं सङ्कल्प्य तेन रूपेण जात इति प्रमाणसिद्धं तथा भगवानपि नानाविशेषणविशिष्टवेषेण स्वसङ्कल्पादेव जायत इति निदर्शनन्यायसिद्धमित्यर्थः। इह—अस्मिन् सिद्धान्ते। भेदाभेदश्रुतीनामविहतिश्च विशिष्टैक्य-योगात् स्यात्—'द्वा सुपर्णा सयुजा सखाया' 'क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः' 'नित्यो नित्यानां चेतनश्चेतनानाम्' इत्याद्या भेदवादिन्यः श्रुतयः। 'नेह नानास्ति किञ्चन' इत्याद्या अभेदश्रुतयः। द्विविधानामपि श्रुतीनां परस्पराविरोधश्च स्वरूपभेदपरत्वात् भेदश्रुतीनां अभेदश्रुतीनां चेतनाचेतनविशिष्टप्रकार्यैक्यपरत्वयोगाच्च संसिध्यतीत्यर्थः॥ १४५॥

कार्यैक्ये हि प्रतिज्ञा तदनुगुण उदाहारि दृष्टान्तवर्गः
स्रष्टुस्स्यामित्यभिध्यां श्रुतिरिह वनतां वृक्षतादिं च वक्ति।
आत्मानञ्चैष एव स्वयमकुरुत तद्भूतयोनित्वमुक्तं
तस्मात् कर्तापि देवः प्रकृतिरपि भवेत् सर्वतत्त्वान्तरात्मा॥ १४६॥

चिन्ता०—उक्तनिमित्तत्वाविरुद्धापादानत्वोपपादकयुक्तिजातं संग्रहेण प्रदर्शयति—कार्यैक्ये इति। तत्र तावत् प्रतिज्ञावाक्यमेकविज्ञानेन सर्वविज्ञानप्रतिपादकं भगवत उपादानत्वमन्तरेण न संघटते। कारणस्य कार्येण सहैक्ये प्रतिज्ञा घटत इत्यर्थः। तदनुगुण इति—कार्यकारणयोरैक्यप्रतिज्ञानुगुण एव मृत्तत्कार्यादि-दृष्टान्तवर्ग उदाहारि। इत्थमुपादानत्वमुक्तम्। निमित्तत्वमप्याह—स्रष्टुरिति। स्रष्टुरीश्वरस्य स्यामिति श्रुतिरभिध्यानं वक्ति निमित्तत्वं वक्तीत्यर्थः। अन्या तु श्रुतिर्निमित्तत्वं सिद्धं कृत्वा उपादानत्वं सहकारित्वं च साक्षात् स्वयमेवाह 'किं स्विद्वनम्' इत्यादिना। वनतां वृक्षतादिं च वक्तीति—वक्तीत्यस्यावृत्त्यान्वयः। 'किं स्विद्वनम्' इत्युपादानप्रश्नः। 'क उ स वृक्ष आसीत्' इत्युपकरण-प्रश्नः। 'यतः' उपादानात् 'द्यावापृथिवी भगवान्निष्टतक्षुः' ससर्जेति वचनव्यत्ययश्छान्दसः। अथवा—मनीषिणो वनं मनसा बुद्ध्या निष्टतक्षुर्निश्चितवन्त इत्यर्थः। उपादानभूताद् भगवत एव सर्वोत्पत्तिरिति मनसा निरणैषुरित्यर्थः। अथवा मनीषिण इत्यस्योत्तरत्राप्यन्वये संबोधनान्तत्वमिति। 'यदध्यतिष्ठत्' इत्यादि—भुवनान्तर्यामित्वेन धारयन्नीश्वरो यदुपकरणमध्यतिष्ठदिति श्रुत्यन्वयः। 'ब्रह्म वनम्' इत्यादि—ब्रह्म वनमुपादानम्। 'ब्रह्म स वृक्षः' इति—ब्रह्मैवोपकरणमित्यर्थः। एतदुक्तं भवति—सूक्ष्मचिदचिद्विशिष्टमुपादानं विश्वस्योपकरणभूतकालादिविशिष्टः स एवोपकरणमिति। 'मनीषिणो मनसा पृच्छतेदुतत्' हेमनीषिणः

मनसाऽवधानेन सहैतच्छृणुतेत्यर्थः। 'मनीषिणो मनसा विब्रवीमि वः' इत्यत्र वः शृण्वतां भवतामनुग्रहपूर्वकावधानविशेषेण ब्रवीमीति। 'यदध्यतिष्ठत्' इति यदुपकरणं भगवानध्यतिष्ठदिति पूर्वमेवोक्तम्। तेन सर्वाधिष्ठातृत्वात् भगवतो निमित्तत्वसिद्धिः। किंच 'तदात्मानं स्वयमकुरुत' इति तस्यैव भगवतः स्वयमेव स्वात्मनोऽवस्थान्तरकरणादुपादानत्वं निमित्तत्वं च दृश्यते। तद्भूतयोनित्वमुक्तमिति—'यद्भूतयोनिं परिपश्यन्ति धीराः' इति तस्यैव भूतयोनित्वं साक्षादेवोच्यते। अतः कर्तृत्वं प्रकृतित्वं चोभयमपि प्रमाणसिद्धं भवतीति निगमयति—तस्मादिति। सर्वतत्त्वान्तरात्मेति—हेतुगर्भविशेषणम्। सर्वान्तर्यामित्वात् सर्वं संघटत इत्यर्थः॥ १४६॥

पद०—कार्यैक्य इत्यादि। कार्यैक्ये हि प्रतिज्ञा—घटत इति शेषः। कारणभूतस्य ब्रह्मणः कार्यभूतजगदैक्येसति हि एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा घटते अन्यथा न घटेतैवेत्यर्थः। तदनुगुणः—कार्यकारणैक्यप्रतिज्ञानुगुण एव। दृष्टान्तवर्गः—'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात्' इत्यादिश्रुत्या मृत्पिण्डादिरूपदृष्टान्तसमुदायः। उदाहारि—उदाहृतः। उदाहृतः सर्वोऽपि दृष्टान्त उपादानभूत एव न तु निमित्तभूतः कश्चिदपीति भावः। इह—सृष्टिप्रकरणे। श्रुतिः। स्रष्टुः—ईश्वरस्य। स्यामित्यभिध्याम्—अहं बहुस्यामिति सङ्कल्पम्। वक्तीत्यनुकर्षः। नहि कुलालो घटोऽहं स्यामिति सङ्कल्पयितुमीष्टे। किञ्च सैव श्रुति र्वनतां वृक्षतादिञ्च वक्ति—

'किंस्विद्वनं क उ स वृक्ष आसीत् यतो द्यावापृथिवी निष्टतक्षुः।'
'ब्रह्म वनं ब्रह्म स वृक्ष आसीद्यतोद्यावापृथिवी निष्टतक्षुः॥'

अत्र प्रथमं वाक्यं प्रश्नपरम्। द्वितीयमुत्तरपरम्। प्रश्नवाक्ये वनशब्द उपादानपरः। वृक्षशब्दः सहकारिपरः। निमित्तकारणत्वं सिद्धं कृत्वा उपादानसहकारिमात्रप्रश्नः कृतः। उत्तरवाक्येऽपि वनवृक्षशब्दयोस्तथैवार्थः। एवं च श्रुतिरियं ब्रह्मणः कार्यभूतं जगत्प्रति वनशब्दितामुपादानतां वृक्षशब्दितामुपकरणताञ्च वक्ति प्रतिपादयति। एषः—परमात्मा। आत्मानम्—स्वात्मानमेव जगदाकारविशिष्टम्। स्वयमेवाकुरुत च—स्वयं साक्षादेव निरमिमीत च। 'तदात्मानं स्वयमकुरुत' इति श्रुत्या तथावगतमित्यर्थः। तद्भूतयोनित्वमुक्तम्—'यद्भूतयोनिं परिपश्यन्ति धीराः' इति तस्य परमात्मनः सर्वभूतोपादानत्वरूपं भूतयोनित्वं साक्षात् श्रुत्यैवोक्तम्। तस्मात्—कारणात्। सर्वतत्त्वान्तरात्मा—कार्यकारणभूतसर्वतत्त्वान्तरात्मभूतत्वात्। हेत्वर्थं विशेषणम्। देवः—परमात्मा। कर्तापि—निमित्तभूतोऽपि। प्रकृतिरपि भवेत्—उपादानकारणमपि भवेत्। अस्मिन् श्लोके 'कार्यैक्ये हि प्रतिज्ञा तदनुगुण उदाहारि दृष्टान्तवर्गः' इत्यन्तेन

' प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ' इति प्रकृत्यधिकरणप्रथमसूत्रार्थ उक्तः । ' स्रष्टुः स्यामित्यभिध्याम् ' इत्यनेन ' अभिध्योपदेशाच्च ' इतिसूत्रार्थः । ' वनतां वृक्षतादिश्च वक्ति ' इत्यनेन ' साक्षाच्चोभयाम्नानात् ' इति सूत्रार्थः । ' आत्मानं चैष एव स्वयमकुरुत ' इत्यनेन ' आत्मकृतेः । परिणामात् ' इति सूत्रद्वयार्थः । ' भूतयोनित्वमुक्तम् ' इत्यनेन ' योनिश्च हि गीयते ' इति सूत्रार्थ उक्तः । 'तस्मात्' इत्यंशेनाधिकरणार्थनिगमनमित्येतस्मिन् श्लोके प्रकृत्यधिकरणार्थः स्पष्टतया पर्याप्तः सङ्गृहीतः ॥ १४६ ॥

नोपादानं निमित्तं किमपि तदितरत् कारणं तद्धि विद्मो
यद्वा सिद्धं निमित्तं न भजति तदुपादानतामित्ययुक्तम् ।
इष्टादाकारभेदादुभयघटनतो लोकवेदानुरोधे
सिद्धे स्वच्छन्दलक्ष्मप्रणयनकुसृतिः पाकचिन्ताविपाकः ॥ १४७ ॥

चिन्ता०—अत्र कश्चिदाह—यत्समवायिकारणं यच्चासमवायिकारणं तदुभयव्यतिरिक्तकारणं निमित्तकारणमिति हि न्यायवादिभिर्लक्षणमभाणि । तेन यदुपादानं तन्निमित्तं न भवति यच्च निमित्तं तदुपादानं न भवतीति नियमस्य सिद्धत्वात् निमित्तोपादानैक्यवादो न संघटत इति लक्षणविरोधमाशङ्क्य परिहरति—नोपादानमिति । किमप्युपादानं निमित्तं न भवति । उपादानव्यतिरिक्तं कारणं निमित्तमिति हि निमित्तकारणविदः । एवं यन्निमित्तत्वेनसिद्धं तदुपादानतां न भजतीति शब्दान्वयः । उक्तमर्थं प्रतिक्षिपति—अयुक्तमिति । अयुक्तत्वमेव लोकवेदप्रसिद्ध्योपपादयति—इष्टादित्यादिना । लोके हि तुलायां प्रमाणप्रमेयव्यवहारन्यायेनैकस्यैव पदार्थस्य सर्वलक्षणयोगे सति आकारभेदान्नानात्वव्यवहारयोगित्वं सिध्यतीति नियमे सिद्धे सति स्वकपोलकल्पितन्यायेनोपादानव्यतिरिक्तं निमित्तं निमित्तव्यतिरिक्तमुपादानमिति परस्परविरोधप्रणयनकुसृतिः कुयुक्तिर्बालचिन्ताविपाक इत्यर्थः । किंच युष्मत्संकेतसिद्धनिमित्तशब्दवाच्यत्वाभावेऽप्युपादानकारणस्यैव कर्तृत्वं सुप्रसिद्धमेव । तदेवमीश्वरस्योपादानत्वं कर्तृत्वं चाविरुद्धमिति न संकटं किञ्चित् ॥ १४७ ॥

पद०—नोपादानमित्यादि । उपादानं किमपि—उपादानकारणभूतं किमपि वस्तु । निमित्तं न—निमित्तकारणं न भवति । तत्—उपादानकारणम् । तदितरत् कारणं हि विद्मः—निमित्तकारणभिन्नं कारणं हि प्रतिपद्यामहे । निमित्तकारणभिन्नत्वे सति कारणत्वं ह्युपादानकारणस्य लक्षणतया ऽवगच्छाम इत्यर्थः । यत् वा निमित्तं सिद्धं तत् उपादानतां न भजति—यद्वस्तु वा

निमित्तकारणत्वेन सिद्धं तद्वस्तु उपादानतां न प्राप्नोति । कुतः ? तत् तदितरत्कारणं हि विद्मः—तत् निमित्तकारणं तदितरत्कारणं उपादानकारणभिन्नं कारणं हि प्रतीमः । तदितरत् कारणं तद्धि विद्म—इत्यस्य वाक्यस्यावृत्तिः कार्या । इत्ययुक्तम्—इति शङ्कनमयुक्तम् । इष्टात्—अस्माकं युष्माकञ्चाभिमतात् । आकारभेदात्—अवच्छेदकधर्मभेदात् । उभयघटनतः—एकस्यैव वस्तुन उपादानत्वनिमित्तत्वयोः सङ्घटनेन । लोकवेदानुरोधे सिद्धे—लोके उपादाननिमित्तयोर्भेददर्शनस्य वेदे एकस्यैव ब्रह्मण उपादानत्वनिमित्तत्वदर्शनस्य चानुरोधे आनुकूल्ये सिद्धे सति । स्वच्छन्दलक्ष्मप्रणयनकुसृतिः—स्वच्छन्देन स्वेच्छया लक्ष्मणः उपादानभिन्नकारणत्वं निमित्तकारणस्य लक्षणं निमित्तकारणभिन्नकारणत्वमुपादानकारणस्य लक्षणमित्येवमुपादाननिमित्तलक्षणस्य यत् प्रणयनं निर्वचनं तदात्मिका या कुसृतिः कुमार्गः सा । पाकचिन्ताविपाकः—पाको बालः 'पोतः पाकोऽर्भको डिम्भः' इति कोशात् । युक्तायुक्तानभिज्ञबालकर्तृकविचारपरिपाकोऽयम्, तत्तुल्य इत्यर्थः । अयमाशयः—उपादानतानवच्छेदकधर्मावच्छिन्नकारणत्वं निमित्तकारणत्वं निमित्तकारणतानवच्छेदकधर्मावच्छिन्नकारणत्वमुपादानकारणत्वमित्युभयाभिमतावच्छेदकभेदघटितनिमित्तोपादानलक्षणप्रणयनेन लोके तयोर्भेददर्शनस्य क्वचिल्लोके वेदे च तयोरभेददर्शनस्य चोपपत्तौ स्वाच्छन्द्येन लोकवेददर्शनविरुद्धलक्षणप्रणयनमनभिज्ञजनालोचनफलमिति । वेदान्तसिद्धान्ते च ब्रह्मणो जगत्प्रति उपादानत्वं शरीरशरीरिभावेन सूक्ष्मचिदचिद्वैशिष्ट्यवेषेण, निमित्तत्वं तु तत्तत्कार्यानुगुणबहुस्यामित्याद्याकारसङ्कल्पाश्रयत्ववेषेणेत्यवच्छेदकभेदेनैव निमित्तत्वमुपादानत्वञ्चेति न किञ्चिदपहीनमिति भावः ॥ १४७ ॥

उक्त्वा तत्त्वान्तराणां विलयमथ तमस्येकतामात्रमुक्तं
प्रोक्तञ्चानादितादि प्रकृतिपुरुषयोर्वेदतद्भेदिवाक्यैः ।
लीयेते तौ परस्मिन्निति तु लयवचस्त्यादयस्तोयनीत्या
तेनासौ भोक्तृभोग्यप्रमृतिकवचिताद्विश्वसृष्टिस्समीची ॥ १४८ ॥

इति प्रकृत्यधिकरणम् ॥ ३४ ॥

चिन्ता०—ननु स्वकारणे कार्यस्य 'पृथिव्यप्सु प्रलीयते' इत्यादिना लयो विनाश उक्तः, 'पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि' इति प्रकृतिपुरुषयोरपि लयो भगवता पराशरेण प्रतिपादितः, तेन तयोः प्रलयकाले विनष्टत्वात् कथं सूक्ष्मचिदचिद्विशिष्टपुरुषाद्विश्वसृष्टिर्भवद्भिरभिधीयत इत्याशङ्क्य

कार्यभूतपृथिव्यादिलयात् कारणभूतप्रकृतिपुरुषलये श्रुतिसिद्धं वैषम्यं दर्शयति—उक्त्वेत्यादिना। अयमर्थः—अत्र द्विविधो हि लयो विवक्षितः। एकस्तावत्स्वावस्थाप्रहाणेन पूर्वावस्थाप्राप्तिरूपः यथा पृथिवीत्वावस्था-प्रहाणेनाप्त्वावस्थाप्राप्तिः। इतरस्तु स्वावस्थाप्रहाणमन्तरेण वस्त्वन्तरविभागानर्हसंसर्गविशेषप्राप्तिः यथा प्रकृति-पुरुषयोः प्रकृतिरूपं पुरुषरूपं च नित्यसिद्धमबाधितत्वादपरित्यज्य विशेष्यभूतेन भगवता विभागानर्ह संसर्ग-विशेषप्राप्तिः। तदेव तमः पर एकीभवतीति विशिष्टैक्यरूपतयाभिधीयते। पूर्वं तु 'पृथिव्यप्सु प्रलीयते' इत्यादिना साक्षाल्लयशब्द एव प्रयुज्यते। अतः 'उभावेतौ लीयेते' इति पुराणस्थलयशब्द एकीभाव-मात्रमेव कथयतीति विभागः। संसर्गविशेषेऽपि लयशब्दः प्रयुज्यते—यथा वृक्षेषु पक्षिणो लीयन्त इति साक्षाल्लयशब्द एव प्रयुज्यते। तदिदं सर्वमस्मिन्ग्रन्थे यथापाठमनुसंधेयम्। अन्वयस्तु 'पृथिव्यप्सु प्रलीयते' इत्यादौ तत्त्वान्तराणां विलयमुक्त्वा तमसः पुनर्भगवत्येकतामात्रमेवोक्तं तम एकीभव-तीति। तेन तयोः प्रकृतिपुरुषयोर्न विनाशः। किं च

'प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि।
अचेतना परार्था च नित्या सततविक्रिया॥'

इत्यादिषु वेदपारवेदिनां पराशरादीनां वाक्येषु च प्रकृतिपुरुषयोरनादित्वं प्रोक्तम्। तस्मादपि तयोर्न साक्षाद्विलयः। पुराणोक्तं लयवचनं सदृष्टान्तमन्यथयति—स्यादिति। अयस्तोयनीत्येति—आयुधरूपेण परिणतेऽयसि परिगृहीतं तोयं तोयरूपेणैवावतिष्ठते। अन्यथा स्नेहानुवृत्त्याद्ययोगात्। तद्वत् प्रकृतिपुरुषावपि भगवत्यविभागार्हसंसर्गविशेषमात्रेणैकीभावव्यवहारविषयभूतौ विशेषेण जगत्सृष्ट्या-दावुपकुरुतः। उक्तमर्थं सहेतुकं निगमयति—तेनेति। सोपबृंहणनिपुणनिरूपितश्रुतिसिद्धत्वेन भोक्तृ-भोग्यप्रभृतिसहिताद् भगवतो विश्वसृष्टिः समीची। अत्र प्रभृतिशब्देन कालसंबन्धो विवक्षितः। तेन सूक्ष्मचिदचिद्विशिष्टस्योपादानत्वसिद्धिः कालवैशिष्ट्येनोपकरणत्वसिद्धिरित्यर्थः॥ १४८॥

इति प्रकृत्यधिकरणम्॥ ३४॥

पद०—उक्त्वा तत्त्वान्तराणामित्यादि। तत्त्वान्तराणां विलयमुक्त्वा—'पृथिव्यप्सु प्रलीयते आपस्तेजसि लीयन्ते तेजो वायौ लीयते वायुराकाशे लीयते आकाश इन्द्रियेषु इन्द्रियाणि तन्मात्रेषु तन्मात्राणि भूतादौ लीयन्ते भूतादिर्महति लीयते महानव्यक्ते लीयते अव्यक्तमक्षरे लीयते अक्षरं तमसि लीयते' इत्यन्तेन पृथिव्यादीनामक्षरान्तानां तत्त्वान्तराणां स्वस्वकारणक्रमेण विलयं स्वावस्थाप्रहाणेन पूर्वावस्थाप्राप्तिरूपम्, उक्त्वा प्रतिपाद्य। अथ—तदुपरि 'तमः परे देव एकीभवति' इत्यनेन वाक्येन।

तमसि—तमसस्तु । एकतामात्रमुक्तम्—स्वावस्थाप्रहाणमन्तरेण देवशब्दिते परमकारणे ब्रह्मणि विभागानर्हसंसर्गविशेपप्राप्तिरूपैकीभावमात्रं प्रतिपादितम् । न तु पूर्वतत्त्वेष्विव लयशब्दः प्रयुक्तः । वेदतद्वेदिवाक्यैः—'गौरनाद्यन्तवती सा' 'अविनाशी वा अरेयमात्मा'

'प्रकृतिं पुरुषञ्चैव विद्ध्यनादी उभावपि ।
अचेतनापरार्था च नित्या सततविक्रिया ॥'

'नित्यस्सर्वगतः स्थाणुरचलोऽयं सनातनः ।' इत्यादिभिर्वेदवाक्यैस्तद्वेदिनां व्यासादीनां च वाक्यैः । प्रकृतिपुरुषयोः—प्रधानजीवयोः । अनादितादि च—उत्पत्तिशून्यत्वं विनाशशून्यत्वं च । प्रोक्तम्—सुस्पष्टतया निगदितम् । अतः, तौ—प्रकृतिपुरुषौ । परस्मिन्—परमात्मनि । लीयेते—लयं प्राप्नुतः । इति लयवचस्तु—एवमर्थकं

'प्रकृतिर्या मया ख्याता व्यक्ताव्यक्तस्वरूपिणी ।
पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि ॥'

इति लयवचनं तु । अयस्तोयनीत्या स्यात्—अयसि तोयस्य लये यो न्यायस्तद्रीत्या भवेत् । नहि तोयस्य स्वावस्थाप्रहाणेनायस्ताप्राप्तिः, सलिलनिर्गममूलिकादिक्षोदलेपने पुनस्तावतस्सलिलस्य बहिर्निस्सरणदर्शनात् । अतः पृथक्प्रतिपत्त्यनर्हसंसर्गविशेषरूप एव तोयस्यायसि लयः, तादृश एवात्रापि लयो विवक्षितः । तथाङ्गीकरणीयतानियामकस्योक्तत्वादिति भावः । तेन—सोपबृंहणश्रुतिवाक्यनिपुणनिरूपणेन । भोक्तृभोग्यप्रभृतिकवचितात्—भोक्ता जीवः भोग्यं प्रकृतिः प्रभृतिशब्देन कालो ग्राह्यः । तथा च सूक्ष्मचिदचिद्विशिष्टतया उपादानकारणभूतात् कालविशिष्टतया सहकारिकारणभूतात् सङ्कल्पाश्रयतया निमित्तकारणभूताच्च परमात्मनः । असौ विश्वसृष्टिः—'तत्तेजोऽसृजत' इत्यादिश्रुतिस्मृतिप्रतिपन्ना जगतः सृष्टिरुत्पत्तिः । समीची—प्रमाणोपपत्तिसहिततया श्लाघनीया । न तु विवर्तोपादानभूतादवास्तवसङ्कल्पाश्रयान्मायिब्रह्मणस्सकाशात् जगत्सृष्टिरिव केवलनिमित्तभूतादीश्वराद्विश्वसृष्टिरिव च प्रमाणोपपत्तिप्रतिरोधेनाश्लाघ्यतमा भवतीति भावः ॥ १४८ ॥

इति प्रकृत्यधिकरणम् ॥ ३४ ॥

## सर्वव्याख्यानाधिकरणम् ॥ ३५ ॥

सूत्रम्—एतेन सर्वे व्याख्याता व्याख्याताः ॥ १३८ ॥

अग्रे संवर्तनं भात्यवितथवचसि क्वापि हैरण्यगर्भं
ग्रस्ताशेषस्वकार्ये तमसि च शिव एवेति केचित् पठन्ति ।
एतादृग्वाक्यवर्गस्फुटभवदधिकाशङ्कनस्तम्भनार्थं
प्रागुक्तान्नीतिभेदानतिदिशति परं शिष्यशिक्षैकचित्तः ॥ १४९ ॥

चिन्ता०—शास्त्रारम्भे जन्मादिसूत्रोक्तं भगवतो जगन्निमित्तोपादानत्वं प्रकृत्यधिकरणे निगमितम्, अतः परमुक्तावशिष्टानां श्रुतिवाक्यानामानन्त्यादशेषेण वक्तुमशक्यत्वेन तेनैव प्रकारेण निर्वाहस्स्वयमेवोहनीय इति संगतिः । अत्र चतुर्णां पादानां प्रथमाध्यायोक्तानामर्थविभागेन संगतिमाहुर्विष्णुचित्तार्याः 'इत्थं प्रथमाध्यायप्रथमपादेन प्रमाणलक्षणाभ्यां परमकारणतया सर्ववेदान्ताभिहितपरमपुरुषस्थापनम् । द्वितीयतृतीयाभ्यां विभूतेस्तस्य च संबन्धप्रकारौ । चतुर्थपादेन प्रतिपक्षनिरास इति । इत्थं सर्वश्रुतिनिर्वाह उक्त इत्याह—'एतेनेति' इति । तदर्थविचारस्तु—अनुदाहृताः कारणवादिवाक्यविशेषाः किमुक्तलक्षणचिदचिद्विलक्षणब्रह्मपरा उत नेति । तदर्थं ते किमुक्तन्यायागामविषया उत विषयाः । तदर्थं विषयत्वं संभवति न वेति । अस्मिन्नतिदेशाधिकरणे पूर्वं निश्चितकारणवाक्यप्रक्रिययाऽनिश्चितानामपि कारणवाक्यानां निर्वाह इत्युक्तम् । तानि कानि वाक्यानीत्याशङ्कायां कानिचिद्वाक्यान्युदाहृत्य तच्छायया सर्वाण्यपि वाक्यानि निर्वहणीयानीति वक्तुं प्रारभते—अग्र इति । 'हिरण्यगर्भस्समवर्तताग्रे भूतस्य जातः पतिरेक असीत्' इति हिरण्यगर्भपारम्यप्रतिपादकरूपमेकं वाक्यं तावदाभाति । तथा 'न सन्न चासच्छिव एव केवलः' इत्यपरमपि वाक्यं रुद्रपारम्यप्रतिपादकमिव दृश्यते । तत्र हि 'यदा तमस्तन्न दिवा न रात्रिः' इति प्रलयकाले रुद्रस्यैवावस्थानं कथ्यत इत्यापाततः प्रतीयते । तदिदमाह—ग्रस्तेति । एतद्वाक्यद्वितयमुपात्तम्, एतादृशानि वाक्यानि बहूनि विद्यन्ते, तद्वाक्यप्रभवं नारायणादधिकं तत्त्वमस्तीति शङ्काविशेषं स्तम्भयितुं प्रागुक्तानेव न्यायविशेषानन्यत्रातिदिशति सूत्रकारः, तत्किमर्थम्? शिष्यशिक्षार्थमिति चाह—एतादृगिति । अयमर्थः—एकत्र शिक्षितस्य न्यायस्येतरत्रापि योज्यत्वादयमर्थस्स्वयमेव सिध्यति तथापि शिष्यानुग्रहेण भगवान् सूत्रकारो वाचाप्याचष्ट इति ॥ १४९ ॥

पद०—अग्र इत्यादि । अवितथवचसि—वेदे । क्वापि—'हिरण्यगर्भस्समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्' इत्येवंरूपे कस्मिंश्चिद्वाक्ये । अग्रे—सृष्टेः प्राक्काले । हैरण्यगर्भम्—चतुर्मुखसम्बन्धि । संवर्तनम्—सर्वतत्त्वसूक्ष्मांशेनैकीभूय कारणावस्थयाऽवस्थानम् । भाति—प्रतीयते । तमसि—मूलप्रकृतौ । ग्रस्ताशेषस्वकार्ये—स्वावस्थापन्नाशेषस्वकार्यतत्त्ववर्गे सति, प्रलयकाल इत्यर्थः । शिव एव—रुद्र एक एव । आसीत् इति शेषः । इति च—एवमर्थकं 'यदा तमस्तन्न दिवा न रात्रिर्न सन्न चासच्छिव एव केवलः' इत्येवंरूपं वाक्यञ्च । केचित्—अध्यापकाः । पठन्ति—अधीयते । एतादृग्वाक्यवर्गस्फुटभवदधिकाशङ्कनस्तम्भनार्थम्—एतादृशा उदाहृतवाक्यद्वयतुल्येन वाक्यवर्गेण 'नकिरिन्द्र त्वदुत्तरः ।' 'इन्द्रो यातो वसितस्य राजा ।' 'सूर्य आत्मा जगतस्तस्थुषश्च' इत्यादिरूपेण श्रुतिवाक्यसमुदायेन स्फुटं दृढतया भवत् जायमानं यदधिकाशङ्कनं जगत्कारणभूतं परतत्त्वमयमेवास्तु अयमेव वास्तु इति वा अयं वा अयं वा जगत्कारणमिति वा जायमानमनुद्धृतमाशङ्कनं तस्य स्तम्भनार्थं निरोधाय । परम्—अतिशयेन । शिष्यशिक्षैकचित्तः—शिष्याणां शिक्षणे सर्वविरोधिमतनिरसनपूर्वकपरतत्त्वविद्योपपादने एकं मुख्यतयाऽवस्थितं चित्तं हृदयं यस्य स एतादृशस्सूत्रकारः । प्रागुक्तान् नीतिभेदान्—प्रागुक्तानेव न्यायविशेषान् । अतिदिशति—सामान्येनात्रानुसन्धेयत्वेनोपदिशतीत्यर्थः ॥ १४९ ॥

विश्वेशश्श्रीपतिश्चेद् भवतु कथमसौ त्राणमात्राधिकारी
दूरं गत्वापि दुःख्यद्रिधिशिवतुलया घट्टकुट्यां प्रभातम् ।
मैवं मत्स्यादिभावेष्विव निजविभवानुक्रियानाट्यमेतत्
ब्रह्मेशस्रष्टरि स्यान्निरवधिकबृहत्पौरुषे पूरुषे नः ॥ १५० ॥

इति सर्वव्याख्यानाधिकरणम् ॥ ३५ ॥

चिन्ता०—अत्र शास्त्रे श्रीपतिरेव सर्वेश्वर इति भवद्भिरभिधीयते न च श्रीपतिरेव ब्रह्म, ब्रह्मविष्णुरुद्रा इति त्रिमूर्त्यन्यतमत्वेन स श्रुत्यैवाभिधीयते, लोकेऽपि त्रिमूर्तिव्यवहारः सुप्रसिद्ध एव तत्र ब्रह्मरुद्रौ च कर्मवश्याविति तत्सहपठितो विष्णुरपि कर्मवश्य एव तथा च घट्टकुट्यां प्रभातं भगवतो नारायणस्येतरवैलक्षण्यं प्रतिपादयितुं प्रवृत्तस्यैव भवतः पुनरपि तत्सालक्षण्यमेवापन्नमिति । इमामाशङ्कां पूर्वार्धेनाशङ्कते—विश्वेश इति । दुःख्यद्रिधिशिवतुलया—कर्मवश्यतया दुःख्यद्रुहिणरुद्रसाधर्म्यात् । उक्तमर्थं प्रतिक्षिपति—मैवमिति । तदेव विवृणोति—मत्स्यादीति । मत्स्यादिभावेषु च भगवतो निजविभूतिभूतानां मत्स्यादीनां सजातीयत्वेनानुकरणनाट्यमेव दृश्यते । एवं निजविभूतिभूतयो-

ब्रह्मरुद्रयोः साधर्म्येणानुकरणं नाट्यमात्रमेतत् । कुत इत्यत्राह—ब्रह्मेशस्रष्टरीति । 'एको ह वै नारायण आसीत्' इत्युपक्रम्य 'तत्र ब्रह्मा चतुर्मुखोऽजायत ततस्तस्य ध्यानान्तस्थस्य ललाटात्स्वेदोऽपतत् स्वेदाद्बुद्बुदमभवत् बुद्बुदात्त्र्यक्षश्शूलपाणिः पुरुषोऽजायत' इति ब्रह्मरुद्रयोः स्रष्टृत्वेन सम्प्रतिपन्ने निरवधिकबृहत्त्वलक्षणपौरुषे पुरुषसूक्तप्रतिपाद्ये परस्मिन्ब्रह्मणि विभूत्यनुकारनाट्यमेतदित्यर्थः ॥ १५० ॥

इति सर्वव्याख्यानाधिकरणम् ॥ ३५ ॥

पद०—विश्वेश इत्यादि । श्रीपतिर्विश्वेशश्चेत्—श्रीमान्नारायण एव जगत्स्वामिभूतः परमात्मा यदि । असौ—नारायणः । त्राणमात्राधिकारी कथं भवतु—जगद्रक्षणमात्राधिकृतस्त्रिमूर्तिमध्यस्थो विष्णुः कथं भवतु नाम । अखिलजगत्सृष्टिस्थितिसंहारकारणं हि विश्वेशशब्दितम् । अतः दूरं गत्वापि—नारायणस्य ब्रह्मादिवैलक्षण्यप्रतिपादनप्रयासमनुभूयापि, अर्थान्तरे गन्तव्यमार्गं विहायान्धतमसे नानात्रनादिपरिवर्तनेऽपि । दुःस्थद्रिधिशिवतुलया—वेदापहारगुरुपातकदैत्यपीडाद्यापत्परम्परया दुःखं प्राप्नुवानयोर्विधिशिवयोस्तुलया 'ब्रह्मविष्णुरुद्रेन्द्रास्ते सर्वे सम्प्रसूयन्ते' इत्यादिश्रुतिसिद्धेन साम्येन । घट्टकुट्यां प्रभातम्—घृतगुडादिक्रेयवस्तुवाहकानां पथिकानां तत्तद्वस्त्वानुगुण्येन राजकृतव्यवस्थया राजदेयद्रव्यग्राहिभटावासकुटी घट्टकुटी तस्यामज्ञानेन स्वयमेवागतस्य गुडादिभारवाहिनः पान्थस्य तद्भयेन बहुदूरं कृतपरिवर्तनस्य राजभटग्रहणनिग्रहणानुगुणप्रकाशयुक्तप्रभातसमयसम्पात इवायं प्रयासस्संवृत्तः । वैलक्षण्यं प्रतिपिपादयिषतस्तत्साम्यस्यैवापातादिति भावः । मैवम्—एवं मा शङ्किष्ठाः । ब्रह्मेशस्रष्टरि—'एको ह वै नारायण आसीन्न ब्रह्मा नेशानः' इत्यारभ्य 'तत्र ब्रह्मा चतुर्मुखोऽजायत ततस्तस्य ध्यानान्तस्थस्य ललाटात्स्वेदोऽपतत् स्वेदाद्बुद्बुदमभवत् बुद्बुदात् त्र्यक्षः शूलपाणिः पुरुषोऽजायत' इति श्रुत्युक्तरीत्या ब्रह्मरुद्रजनयितरि । निरवधिकबृहत्पौरुषे—निरवधिबृहत्त्वशालिनि पुरुषसूक्तप्रतिपाद्यमहापुरुषत्वयोगिनि च । नः पूरुषे—अस्माकं स्वामिनि पुरुषोत्तमे । एतत्—ब्रह्मरुद्रमध्यपदस्थत्वतत्प्रयुक्तरक्षणादिमात्राधिकृतत्वादिकं सर्वमपि । मत्स्यादिभावेष्विव—मत्स्याद्यवतारेषु साधारणमत्स्यकूर्मवराहमनुष्यादिवत् स्वयमप्यज्ञानाशक्त्यादिकं यथा भगवानभिनयति तथैव । निजविभवानुक्रियानाट्यं स्यात्—निजविभूतिभूतब्रह्मरुद्रसाम्यानुकारलीलाविशेष एवायमिति भवेदेव युक्तम् ।

'ततस्त्वमपि दुर्धर्षस्तस्माद्भावात्सनातनात् ।
रक्षार्थं सर्वभूतानां विष्णुत्वमुपजग्मिवान् ॥'

इत्यादिप्रमाणसहस्रसिद्धोऽयं मार्ग इति भावः ॥ १५० ॥

इति सर्वव्याख्यानाधिकरणम् ॥ ३५ ॥

सांख्योक्तप्रक्रियोक्तेस्तदभिमतसृजेस्तत्प्रसंख्यानक्लृप्तेः
तत्प्रोक्ताव्याकृतैक्यात् स्ववृजिनवचनात् तत्फलावद्ययोगात् ।
भेदात् कर्तृप्रकृत्योर्द्रुहिणशिवमुखानेकहेतुश्रुतेश्च
क्षिप्तं पादत्रयोक्तं श्रुतिहृदयसमुद्घाटनादन्वरक्षत् ॥ १५१ ॥

चिन्ता०—अत्र चतुर्थपादस्थानामष्टानामधिकरणानां पूर्वपक्षोत्थानप्रक्रियां तत्प्रतिक्षेपं च शिष्याणां सुखग्रहणार्थं संगृह्णाति—सांख्योक्तेति । आनुमानिकाधिकरणे सांख्योक्तप्रक्रियाम्, चमसाधिकरणे तदुक्ताब्रह्मात्मकप्रधानसृष्टिप्रक्रियाम्, संख्योपसंग्रहाधिकरणे तदुक्तां तत्त्वसंख्यापरिक्लृप्तिम्, कारणत्वाधिकरणे सांख्योक्ताव्याकृतैक्यं कारणस्य, जगद्वाचित्वाधिकरणे कर्मशब्दस्य पुण्यपापरूपस्वकर्मवाचित्वम्, वाक्यान्वयाधिकरणे पतिपुत्रादिरूपकर्मफलावद्ययोगित्वम्, प्रकृत्यधिकरणे निमित्तोपादानयोर्भेदम्, सर्वव्याख्यानाधिकरणे ब्रह्मरुद्रादीनां कारणत्वञ्च पूर्वपक्षीकृत्य तन्निराकरणं सूत्रकारश्चकार । अत्र ग्रन्थे पञ्चम्योपादानं पूर्वपक्षोत्थानहेतुविशेषाणां विभज्य प्रदर्शनार्थम् । क्षिप्तमित्यादि—एतेभ्यो हेतुभ्यः पूर्वपक्षिकल्पितेभ्यः प्रतिक्षिप्तं पूर्वपादत्रयोक्तमर्थं चतुर्थपादे श्रुतिहृदयसमुद्घाटनात् श्रुत्यर्थानां विशदप्रकाशनात् सूत्रकारो रक्षितवान् ॥ १५१ ॥

पद०—सांख्योक्तप्रक्रियोक्तेरित्यादि । सांख्योक्तप्रक्रियोक्तेः—साङ्ख्योक्तायास्तत्त्वप्रक्रियाया उक्तेः श्रुतौ तथा वचनात्, अयमानुमानिकाधिकरणपूर्वपक्षहेतुः । तदभिमतसृजेः—साङ्ख्याभिमताब्रह्मात्मकप्रधानसृष्टिप्रक्रियायाः, अयं चमसाधिकरणपूर्वपक्षहेतुः । तत्प्रसंख्यानक्लृप्तेः—साङ्ख्योक्ततत्त्वसङ्ख्यापरिक्लृप्तेः, अयं 'न सङ्ख्योपसङ्ग्रहात्' इत्याद्यधिकरणपूर्वपक्षहेतुः । तत्प्रोक्ताव्याकृतैक्यात्—साङ्ख्योक्तात् जगत्कारणस्याव्याकृतैक्यात्, अयं कारणत्वाधिकरणपूर्वपक्षहेतुः । स्ववृजिनवचनात्—जगत्कारणस्य पुरुषस्य पुण्यपापवाचिकर्मशब्दात्, अयं जगद्वाचित्वाधिकरणपूर्वपक्षहेतुः । तत्फलावद्ययोगात्—पतिपुत्रादिरूपकर्मफलभूतावद्यसम्बन्धात्, अयं वाक्यान्वयाधिकरणपूर्वपक्षहेतुः । कर्तृप्रकृत्योर्भेदात्—जगति निमित्तोपादानयोर्भेदात्, अयं प्रकृत्यधिकरणपूर्वपक्षहेतुः । द्रुहिणशिवमुखानेकहेतुश्रुतेश्च—ब्रह्मरुद्रादिनानाव्यक्तिकारणत्वापातप्रत्यायकश्रुतेश्च हेतोः । अयं सर्वव्याख्यानाधिकरणपूर्वपक्षहेतुः । क्षिप्तम्—प्रतिक्षिप्तम् । पादत्रयोक्तम्—प्रथमद्वितीयतृतीयपादप्रतिपादितं परमपुरुषैकनिष्ठं जगत्कारणत्वादिरूपमर्थजातम् । श्रुतिहृदयसमुद्घाटनात्—श्रुत्यर्थविशदप्रतिपादनात् । अन्वरक्षत्—रक्षितवान् ॥ १५१ ॥

जिज्ञास्यत्वेन सिद्धे स्थिरचरचिदचिद्देहिनि ब्रह्मतत्त्वे
श्रुत्याद्यैरेव सूक्ता स्वरसगतिरियं कारणाम्नायवाचाम् ।
बाधं रोधञ्च बाह्यान्तरमिह बहुधा वर्णयन्तो मुसल्या-
निष्काल्येरन् परस्तान्निपदुपनिपदां निश्चलत्वप्रसिद्ध्यै ॥ १५२ ॥

चिन्ता०—एवं प्रथमाध्यायार्थे निश्चलतया निरूपिते सति द्वितीयाध्यायमारिप्सुः पूर्वोत्तराध्याययोः संगतिमनुवदति—जिज्ञास्यत्वेनेति । सिद्ध इति शास्त्रोपोद्घातचतुस्सूत्र्यर्थः प्रथमपादार्थश्च तन्त्रेणैवोपादीयते । स्थिरचरचिदचिद्देहिनीति द्वितीयपादार्थः । ब्रह्मतत्त्व इति तृतीयपादार्थः, ब्रह्मशब्देन भगवतस्सर्वाधारत्वप्रकाशनात् । श्रुत्याद्यैरित्यादिना चतुर्थपादार्थोऽपि तैस्सह संगृहीतः । श्रुतिलिङ्ग-वाक्यादिभिः प्रमाणैः कारणाम्नायवाचां कारणत्वप्रतिपादकाम्नायवाचां स्वारसिकी वृत्तिरियं सूक्तेत्यन्वयः। अथ वक्ष्यमाणं द्वितीयाध्यायार्थमाह—बाधमिति । तत्र हि कारणद्वारकबाह्यविरोधपरिहारपरं पूर्वं पादद्वयं तत्राप्येकं बाधपरिहारपरं अन्यत् प्रतिरोधपरिहारपरमिति विभागः । उत्तरं पादद्वयं कार्यद्वारकान्तरविरोधपरिहारपरम् । आन्तरविरोधस्तु श्रुतिवाक्यानामन्योन्यविरोधः । अत्र च कार्यावलम्बिविरोध एव परिह्रियत इति कारणावलम्बिविरोधपरिहारपरत्वेन पूर्वपादद्विकाद्विभागोऽपि सिध्यतीत्युक्तं भवति । शब्दार्थस्तु—बाधं प्रतिरोधं च बाह्यमूलमान्तरमूलं च बहुधा वर्णयन्तो मुसल्या मुसलप्रहर्तारः, अथवा मुसलेन वध्यत्वात् मुसल्याः, निष्काल्येरन्—निरस्येरन्नित्यर्थः । तत्किमर्थमित्याशङ्क्याह—निपदुपनिपदामिति । निपदामुपनिपदां च निश्चलत्वप्रसिद्ध्यर्थम् । निपच्चात्र पाञ्चरात्रोक्तार्थप्रकाशिका मूलश्रुतिरिति विख्यातसमाख्या भागवतैरभिधीयमाना काचित् । उपनिषत् पुनः सर्वेष्वपि वेदेषु सारतयाऽस्माभिरभिधीयमाना सुप्रसिद्धेति न वक्तव्यमत्र किञ्चित् ॥ १५२ ॥

पद०—जिज्ञास्यत्वेनेत्यादि । जिज्ञास्यत्वेन सिद्धे—प्रथमपादे प्रथमचतुस्सूत्र्या सिद्धव्युत्पत्त्यादिसाधनमुखेन मुमुक्षुभिर्ज्ञेयत्वेन, ईक्षत्याद्यधिकरणैस्तत उपरितनैः प्रधानात् चेतनात् चेतनविशेषेभ्यश्च व्यावृत्ततया च प्रतिपन्ने । स्थिरचरचिदचिद्देहिनि—द्वितीयपादेऽन्तर्याम्यधिकरणाद्युक्तरीत्या स्थावरजङ्गमात्मकचेतनाचेतनसमुदायान्तर्यामिणि । ब्रह्मतत्त्वे—स्वरूपगुणकृतनिरतिशयबृहत्त्वाश्रयत्वात् द्युभ्वादिपादप्रतिपन्नसर्वाधारत्वशालिनि परब्रह्मणि । श्रुत्याद्यैरेव—आनुमानिकपादोक्तश्रुतिलिङ्गाद्युपपत्तिविशेषैरेव । कारणाम्नायवाचाम्—कारणत्वप्रतिपादकवेदान्तवाक्यानाम् । इयं स्वरसगतिः—स्वारसिकीयं वृत्तिः । सूक्ता—सम्यगुक्ता, अयं प्रथमाध्यायार्थः । अस्य प्रथमाध्यायार्थस्य द्वितीयाध्यायेन सह सङ्गतिप्रदर्शनार्थ-

मुत्तरार्धेन द्वितीयाध्यायार्थ उच्यते । इह—प्रथमाध्यायप्रतिपादिते ब्रह्मकारणत्वे । बाह्यान्तरम्—बाह्य-श्चान्तरश्च तयोस्समाहारो बाह्यान्तरं बाधे रोधे च क्रमेणान्वयः । बाह्यं स्वतन्त्रयुक्तिमूलकम् । आन्तरं श्रुतिवाक्यानां परस्परविरुद्धार्थप्रतीतिमूलकम् । बाधम्—प्रथमाध्यायप्रतिपन्नार्थस्याप्रामाणिकत्वज्ञानहेतु-भूताभावानुमानम् । रोधश्च—विरोधं परस्परविरुद्धार्थकत्वप्रतीत्या श्रुतिवाक्यानां सर्वेषां तुल्यबलत्वेनार्थ-प्रतीतिप्रतिबन्धहेतुभूतमर्थविरोधप्रत्यायकयुक्तिजातं च । बहुधा वर्णयन्तः—बहुप्रकारयुक्ततया प्रतिपाद-यन्तः । मुसल्याः—मुसलेन प्रहर्तारो मुसलेन वध्या वा वादिनः । परस्तात्—द्वितीयाध्याये । निषदु-पनिषदाम् —श्रीमत्पाञ्चरात्रप्रतिपन्नभगवत्परस्वतद्दिव्यमङ्गलविग्रहविशेषसमाराधनादिप्रकारपरमैकान्तिनिष्ठो-पायफलादिप्रतिपादका रहस्याम्नायशब्दिताश्शाखाविशेषाः निषदः, तैत्तिरीयकादयस्तदितरे अव्यवधानेन ब्रह्मस्वरूपादिप्रतिपादका वेदभागा उपनिषदः, तासाम् । निश्चलत्वप्रसिद्ध्यै—प्रतिबन्धकराहित्येन स्वार्थ-प्रत्यायनाय । निष्काल्येरन्—निरसिष्यन्त इत्यर्थः ॥ १५२ ॥

निर्विशेषब्रह्मवादिनां प्रथमाध्यायार्थजातस्य दुर्घटत्वनिरूपणम् ।

आदौ जिज्ञास्यतास्तां बहुविहतिहता सह्यतां लक्षणोक्ति-
र्मृष्यामश्शास्त्रयोनिप्रलपितमपि वस्स्तात्समन्वित्यपोक्तिः ।
सूत्रैरेतैस्स्फुटार्थैस्सविषयवचनैर्निर्विशेषैक्यपक्षे
मुख्येक्षाद्यैस्स्वधर्मैः प्रकृतिपुरुषतो भेदवादः कथं स्यात् ॥ १५३ ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु अधिकरणसारावल्यां

प्रथमस्याध्यायस्य चतुर्थः पादः

अध्यायश्च समाप्तः ।

चिन्ता०—अत्रोपोद्धातमारभ्य प्रथमाध्यायप्रतिपाद्यं सकलमर्थजातं निर्विशेषब्रह्मवादिनां न घटत इत्यध्यायान्ते परपक्षप्रतिक्षेपमारचयति—आदाविति श्लोकेन । आदौ बहुविहतिहता जिज्ञास्यताऽऽस्ता-मित्यर्थः । अत्रापि 'अथातो ब्रह्मजिज्ञासा' इत्याद्यं सूत्रं प्रावर्तिष्ट । अस्मिन्सूत्रे ब्रह्मणो जिज्ञास्यत्वमुच्य-ते । तच्च जिज्ञास्यत्वमद्वैतवादिभिरप्युपक्षिप्यते । यदि जिज्ञास्यं ब्रह्म तदा दृश्यत्वान्मिथ्यात्वमिति प्रक्रियया मिथ्यात्वप्रसङ्गात् । यदि न जिज्ञास्यं ब्रह्म तदा पुनः 'अथातो ब्रह्मजिज्ञासा' इति सूत्रमेव त्यक्तं स्यात् । यदि सूत्रं परित्यज्यते तदा सकलमपि शास्त्रं परित्यक्तं स्यादित्यकामेनापि स्वीकर्तव्यम् ।

तत उभयतस्पाशा रज्जुरित्यद्वैतवादिनामपहास्यतैव अवशिष्यते। तदिदमाह—बहुविहतिहतेति। काकाक्षिन्यायेनात्राप्यनुपज्यते। 'जन्माद्यस्य यतः' इति लक्षणवाक्यमद्वैतवादिनामपि संमतम्। लक्षणं नामासाधारणो धर्मः। निर्धर्मकब्रह्मणि लक्षणकथनमद्वैतवादिनां न जाघटीति। ननु लक्षणं द्विप्रकारं तटस्थलक्षणं स्वरूपलक्षणं चेति, स्वरूपलक्षणं 'सत्यं ज्ञानम्' इत्यादिवाक्यप्रतिपाद्यं सत्यत्वज्ञानत्वानन्तत्वादि, तत्पुनः सामानाधिकरण्येन प्रतिपाद्यते, तटस्थलक्षणं च जगत्कारणत्वादि, तत्पुनर्वैयधिकरण्येनोच्यते 'यतो वा इमानि' इत्यादिवाक्येन प्रतिपादनात्, तथा च ब्रह्मणः स्वरूपलक्षणं मा भूत्, तटस्थलक्षणमस्तु स्वरूपसंबन्धाभावात्, यथा शाखाग्रे चन्द्र इत्युक्ते शाखाग्रं चन्द्रेण न संबध्यते, तेन जगत्कारणत्वादिकं ब्रह्मलक्षणं सत्यब्रह्मणा न संसृज्यते, अतो निर्विशेषमेव ब्रह्मावतिष्ठत इति न कश्चिदस्माकं दोष इति। अत्रोत्तरम्—यदि स्वरूपलक्षणं ब्रह्मणि न स्यात् तर्हि सत्यज्ञानादिवाक्यं ब्रह्मणि प्रतिपादकमेव न भवतीति महान्प्रहारः। व्यावृत्तिमुखेन प्रतिपादकमिति चेत् व्यावृत्तेरवाच्यत्वाल्लक्षणैव दोषः। वाक्यतात्पर्यानुरोधेन लक्षणापि स्वीकार्येति चेदस्तु लक्षणीयं किमिति स्वयमेव विशेषतो दर्शय, व्यावृत्तिरिति यदि वदसि तर्हि विकल्पयामः—व्यावृत्तिः स्वरूपं तदधिकं वा किंचित्। स्वरूपं चेत् एकेनैव पदेन स्वरूपं लक्षितमिति पदान्तरनैरर्थक्यप्रसङ्गः। अतिरिक्तं चेत् भेदवादप्रसङ्गः। नानालक्षणाभिधानञ्च निरर्थकं तत्तल्लक्षणैरपि लक्ष्यविशेषाकाराभावात् भावे वा भेदप्रसङ्गादित्येषा दिक्। तृतीयेऽपि सूत्रे शास्त्रयोनित्वकथनमपि विमृशामः। मृष्याम इति शब्देनामर्षणीयत्वमेव द्योत्यते। तेनापि बहुविहतिहतमित्यत्राप्यनुपज्यते। 'तत्तु समन्वयात्' इति समन्वयव्यवहारोऽप्यपष्ठुरेव स्यात्। समन्वयो नाम सर्वेषां कारणवाक्यानां ब्रह्मणि तात्पर्येण समन्वयः। स च ब्रह्मणि भवद्भिरभिधातुं न शक्यते। वाच्यवाचकभावादिखण्डनस्य स्वपक्षस्थापनादौर्बल्येन खण्डनमाश्रयद्भिर्भवद्भिरेवाभिधानात्। अस्तु मुख्यवृत्तिखण्डनम्, औपचारिकीं वृत्तिं ब्रह्मण्याश्रयाम इति चेत् तदपि हास्यमेव। मुख्याभावे कथमौपचारिकी वृत्तिरुच्यते। मुख्यार्थसंबन्धिन्यर्थान्तरे वृत्तिर्लक्षणा मुख्यार्थगुणयोगिन्यर्थान्तरे वृत्तिर्गौणीति सर्वलोकलक्षणप्रणयनविरोधात्। किं च गौणी वृत्तिरपि वृत्तिरेव, वृत्तिर्नाम शब्दस्यार्थबोधनम्। तथाच गौण्याऽपि वृत्त्या ब्रह्मणो बोध्यत्वमस्त्येव। तथाच बोध्यत्वान्मिथ्यात्वमिति स्ववचनं परिपालयतु भवान्। तर्हि तात्पर्यवृत्तिरस्त्विति चेत् सापि हि वृत्तिरेव तथाच सर्पो वा वृश्चिको वा भवतु बाधकत्वं द्वयोरपि साधारणमित्यलमत्र विस्तरेण। सर्वमप्यद्वैतवादिभिरुक्तमपार्थं सोढास्मः, इदमेकं न सोढास्मः। 'ईक्षतेर्नाशब्दम्' इत्यारभ्य 'एतेन सर्वे व्याख्याता व्याख्याताः' इत्यन्तैस्सूत्रैरेकस्य सूत्रस्यैकोऽर्थो भेदेन प्रतिपाद्योऽस्ति वा न वा—यद्यस्ति तदा

भेदवादप्रसङ्गः। यदि नास्ति तदा नैरर्थक्यमेव सूत्राणामिति। सन्त्यर्थाः, ते तु व्यावहारिका इति चेत् यदि वेदान्तसूत्रार्था व्यावहारिकाः, तर्हि पारमार्थिकं किमिति वद। न किंचिदिति चेत् किमर्थं शारीरकशास्त्रमारभ्यते। शारीरकशास्त्रस्यापारमार्थिकविषयत्वे च परोक्तानामर्थानां अपारमार्थिकत्वात् पुनरपि शास्त्रारम्भनैरर्थक्यम् अतिसुष्ठूक्तं भवता। अयमिह शब्दान्वयः—स्फुटार्थैस्सविषयवचनैरेतै-रसूत्रैर्निर्विशेषैक्यपक्षे सूत्रार्थतया प्रधानप्रतिपाद्यैरीक्षणादिगुणैर्ब्रह्मधर्मभूतैः प्रकृतिपुरुषतो ब्रह्मणो भेदवादः कथं भवतां स्यात्। प्रकृत्यधिकरणप्रतिपाद्यब्रह्मणः प्रकृतिपुरुषाभ्यां भेदो मिथ्या चेत् अधिकरणनैरर्थक्यम्, तत्त्वञ्चेत् भेदवादप्रसङ्गः। व्यावहारिकत्वकुसृतिः पूर्वमेव निरस्तेति न तत्र प्रयतामह इति ॥ १५३ ॥

इति निखिलतार्किकचूडामणिना सर्वतन्त्रस्वतन्त्रेण
श्रीमद्वरदार्यापरनाम्ना कुमारवेदान्ताचार्येण
विरचिते शारीरकाधिकरण चिन्तामणौ

**प्रथमस्याध्यायस्य चतुर्थः पादः**
**अध्यायश्च समाप्तः**

सुखेन विजयामहे सदसि लक्ष्मणार्योक्तिभिर्हयाननमुखोद्गतैर्हलहलोर्मिकोलाहलैः।
सुदर्शनमहाग्निना सपदि सर्वदुर्वादिनां चटच्चटदिति स्फुटत्वहह वैखरीमौखरी ॥

पद०—आदौ जिज्ञास्यतास्तामित्यादि। आदौ—'अथातो ब्रह्मजिज्ञासा' इति प्रथमसूत्रे। प्रतिपन्नेति शेषः। बहुविहतिहता—श्रीमच्छतदूषणीद्वितीयभङ्गोक्तरीत्या शुद्धोपहितविकल्पज्ञानतद्विषयतादिविकल्पभेदकृतबहुप्रकारविरोधविध्वस्ता। जिज्ञास्यता—ब्रह्मजिज्ञास्यता। आस्ताम्—तिष्ठतु। यदि जिज्ञास्यं ब्रह्म तदा दृश्यत्वात् मिथ्यात्वं ब्रह्मणः समापतति, एतद्भयाद्यदि न जिज्ञास्यं तदा प्रथमसूत्रं तद्रीत्या शास्त्रञ्च परित्यक्तं स्यात्। अत उभयतस्पाशा रज्जुरित्यादिरूपं तात्पर्यमस्यावगन्तव्यम्। लक्षणोक्तिरसह्यताम्—अत्रापि बहुविहतिहतेति पदस्य काकाक्षिन्यायेनान्वयः। लक्षणस्य असाधारणधर्मस्य उक्तिः 'जन्माद्यस्य यतः' इति सूत्रेण प्रतिपादनञ्च सह्यताम्। अस्माभिरिति शेषः। असाधारणधर्मस्यैव लक्षणत्वात् निर्धर्मके ब्रह्मणि असाधारणधर्मासम्भवात् सत्यज्ञानादिपदानां सत्यत्वादिपरत्वे सविशेषत्वापत्तेः व्यावृत्तिपरत्वे च लक्षणादोषादेकेतरपदवैयर्थ्यापत्तेः, जगत्कारणत्वस्य शाखायाश्चन्द्रमसं प्रतीव विशेष्यासंस्पर्शेन तटस्थलक्षणत्वपक्षेऽपि ज्ञाताकारोपलक्ष्याकारादिभिस्सविशेषत्वप्रसङ्गाच्चाद्वैतिनां ब्रह्मलक्षणकथनं बहुविरोधहतमेवेति हृदयम्। वः—युष्माकम्। शास्त्रयोनिप्रलपितमपि—

'शास्त्रस्य योनिः शास्त्रयोनिः, शास्त्रं योनिः प्रमाणं यस्येति वा शास्त्रयोनिर्ब्रह्म' इति शङ्करभाष्ये द्वेधा-प्रतिपादनात् पक्षद्वयेऽपि क्रमेण 'तस्य ह वा एतस्य महतो भूतस्य निश्श्वसितमेतद्यदृग्वेदः' इत्यादि-श्रुत्युक्तरीत्या वेदाख्यशास्त्रसृष्टिरूपशास्त्रयोनित्वप्रतिपादनं वा शास्त्रैकप्रमाणकत्वरूपशास्त्रयोनित्वकथनं वा। मृष्यामः—सहामह इत्यर्थः। अत्रापि बहुविहतिहतेति पदस्य लिङ्गविभक्तिविपरिणामेन विहतिहतमित्येवं-रूपस्य शास्त्रयोनिप्रलपितपदविशेषणत्वेनानुषङ्गः कार्यः। अत्रायमाशयः—वेदसृष्टिप्रकरणे 'आत्मावारे द्रष्टव्यः' इति श्रवणेन शुद्धस्यैव द्रष्टव्यत्वात् तस्य च नानाभेदास्पदकर्मब्रह्मभागात्मकवेदस्रष्टेरसम्भवात्, सम्भवे शुद्धस्यैव जगत्स्रष्टृत्वापातात्, मायोपहितस्य वेदविसर्गाङ्गीकारे वेदस्यैन्द्रजालिकसृष्टितुल्यत्वापाता-दिदोषादविषयस्य ब्रह्मणः शास्त्रविषयत्वे सविशेषत्वमिथ्यात्वाद्यनर्थापाताच्चासह्यमेव शास्त्रयोनित्वकथन-मद्वैतिनामिति। समन्वित्यपोक्तिः—समन्वयसूत्रार्थतया सर्वोपनिषदां ब्रह्मणि समन्वयोपपादनञ्च। स्तात्—अस्तु। अत्रापि बहुविहतिहतेति पदानुषङ्गः। समन्वयो हि नाम सर्वेषां कारणवाक्यानां ब्रह्मणि तात्पर्येण समन्वयः। स च न सम्भवति वाच्यवाचकभावस्य भवद्भिः खण्डितत्वात् मुख्यार्थसम्ब-न्ध्यर्थान्तरोक्तिरूपाया लक्षणायाश्च मुख्यार्थानङ्गीकारेणैव छिन्नमूलत्वात् मुख्यार्थगुणयोग्यर्थान्तरवृत्तिरूपाया गौण्याश्च मुख्यार्थानङ्गीकारगुणानङ्गीकारादिभिरसम्भवात् ब्रह्मणः सर्वपक्षेष्वपि बोध्यत्वापातेन मिथ्यात्वा-पत्तेश्चानर्थबाहुल्यादद्वैतिनां समन्वयप्रतिपादनं विरुद्धमेवेति तात्पर्यम्। इदं सर्वं तिष्ठतु—निर्विशेषैक्य-पक्षे—निर्विशेषब्रह्मणा सह जीवस्यैक्यं ह्यद्वैत्यभिमतं तत्पक्षे। स्फुटार्थैः—असन्दिग्धार्थैः। सविषय-वचनैः—औपनिषदविषयवाक्यसहितैः। एतैः—'नेतरोऽनुपपत्तेः, भेदव्यपदेशाच्चान्यः, आकाशोऽर्थान्त-रत्वादिव्यपदेशात्, सुषुप्त्युत्क्रान्त्योर्भेदेन, अवस्थितेरिति काशकृत्स्नः' इत्यादिरूपैः, श्रवणमात्रेण भेद-प्रतीतिहेतुभिरित्यानुपूर्वीप्रदर्शनम्। सूत्रैः—'अल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम्' इत्यादिप्रमाणे-नाक्षरांशेनापि नैरर्थक्यासहैः प्रमातृचूडामणेश्श्रीमतो भगवद्द्वैपायनस्य मुखारविन्दनिस्सृतैः 'ब्रह्मसूत्रपदै-श्चैव हेतुमद्भिर्विनिश्चितैः' इति गीताचार्येण च प्रमाणतयाऽभिमतैः 'ईक्षतेर्नाशब्दम्' इत्यादिभिस्सूत्रैः। मुख्येक्षाद्यैस्स्वधर्मैः—सूत्रार्थतया प्रधानप्रतिपाद्यैः 'गौणश्चेत्' इत्यादिना गौणतानिरसनकण्ठोक्त्या मुख्यभूतैः 'तदैक्षत' इत्यादिश्रुतिसिद्धैरीक्षणादिरूपैर्ब्रह्मधर्मैः। प्रकृतिपुरुषतो भेदवादः कथं स्यात्—प्रकृतिपुरुषाभ्यां ब्रह्मणः प्रतिपादितो भेदोपन्यासो भवतां कथमुपपद्येत। इदमत्राकूतम्—'ईक्षतेर्ना-शब्दम्' इत्यारभ्य 'एतेन सर्वे व्याख्याता व्याख्याताः' इत्यन्तेषु सूत्रेषु एकैकेन सूत्रेणैकैकोऽर्थो भेदेन प्रतिपाद्यत इत्यङ्गीक्रियते वा? न वा? आद्ये भेदवादप्रसङ्गः, द्वितीये सूत्राणां नैरर्थक्यमेव, सूत्रार्थाः परस्परं भिन्ना एव तथापि व्यावहारिका इति चेत् वेदान्तसूत्रार्थानामेव व्यावहारिकत्वे किमन्यत् पारमार्थिकम्?

न किञ्चिदिति चेन्निरर्थकस्य शास्त्रस्यारम्भ एव न स्यात् , शास्त्रस्यापारमार्थिकविषयत्वे परोक्तानां सर्वेषामप्यर्थानामपारमार्थिकत्वाच्च सुतरां शास्त्रारम्भासम्भव एवेति ॥ १५३ ॥

इति श्रीमद्रङ्गनाथशठमथनयतिराजकटाक्षलब्धोभयवेदान्तहृदयस्य भारद्वाजस्य श्रीनिवासराघवदासस्य (श्रीमदहोबिलमठमहास्थाननिर्वहणधुरन्धर श्रीमद्वेदमार्गप्रतिष्ठापनाचार्य परमहंसपरिव्राजकाचार्य सर्वतन्त्रस्वतन्त्रोभयवेदान्ताचार्य श्रीभगवद्रामानुजसिद्धान्तनिर्धारणसार्वभौम श्रीलक्ष्मी-नृसिंहदिव्यपादुकासेवकश्रीवण्शठकोपश्रीशठकोपरामानुजमहादेशिकस्य) कृतौ अधिकरणसारावलीव्याख्यायां पदयोजनाख्यायां

प्रथमस्याध्यायस्य चतुर्थः पादः

अध्यायश्च समाप्तः

## स्मृत्यधिकरणम् ॥ ३६ ॥

सूत्रम्—स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् ॥ १३९ ॥

तत्तादृक्तर्कतन्त्रक्रमनिपुणमहाबुद्धिसन्तोषसिद्धि-
यद्यप्युक्तेन लभ्या तदपि मृदुधियां हैतुकास्कन्दशङ्की ।
स्थूणाखातक्रमेण स्थिरयति कथितं ब्रह्मणः कारणत्वं
कार्यत्वं यस्य यादृक्श्रुतिभिरवगतं तस्य तत्तादृशं च ॥ १५४ ॥

चिन्ता०—प्रथमाध्याये चतुर्षु पादेषु अस्पष्टतरजीवादिलिङ्गकानि वाक्यानि पूर्वपक्षिणा चतुर्धा पुरस्कृतानि । तत्प्रतिपक्षवाक्यानि सिद्धान्तिना । तत्र पूर्वपक्षयुक्तीनां पौलस्त्यपरिकरन्यायेन प्रतिपादं क्षयः । प्रक्षीणानाञ्चापुनरुदयादुत्तरोत्तरपादोपाचानामुपपत्तीनां वाक्यानां च निस्सहायत्वेन दौर्बल्यात् क्रमेण सङ्क्षयो जातः । सिद्धान्तयुक्तीनां पुनः सुग्रीवसैनिकवत् प्रतिपादं प्रतिहतप्रतिपक्षाणामक्षतत्वेनैवावस्थानात् उत्तरोत्तरप्रतिपाद्यानां श्रुतिस्मृतियुक्त्यादीनां ससहायत्वेनोत्तरोत्तरं प्राबल्यात् सिद्धान्तप्रक्रिया निष्कण्टकमेवाभिवर्तत इति सर्वतोमुखी विजयसिद्धिरिति पूर्वाध्यायेन साङ्ख्यादिपक्षे निरस्ते पुनः प्रतिवादिनो नष्टे द्यूते बलघ्नं कुर्यादितिन्यायेन प्रकोपमात्रपरतन्त्रा युक्तिभिर्विरोधं वक्तुमारभन्त इति द्वितीयाध्यायसङ्गतिः । प्रथमाध्यायपरिसमाप्तौ साङ्ख्ययोगपक्षयोरनुक्रमेण निरस्तत्वात् साङ्ख्यवादी तावद्वेदान्तविरोधमाचष्टे, ततः पुनर्योगवादी, इत्यधिकरणसङ्गतिः, एकपेटिकात्वञ्च । अत्र पूर्वोत्तराध्यायसंगतिं सदृष्टान्तमाह–तत्तादृगिति । स च तादृक्च तत्तादृक् तत्तादृग्विधतर्कतन्त्रक्रमे निपुणानां महाबुद्धीनां सन्तोषसिद्धिः प्रथमाध्यायोक्तेन प्रकारेण यद्यपि लभ्या, तथापि मृदुधियां बालबुद्धीनां हैतुकै हैंतुवादिभिरास्कन्दमाक्रमणमाशङ्कमानः कथितमेव ब्रह्मणः कारणत्वं स्थूणानिखननन्यायेन स्थिरयति सूत्रकारः । कार्यत्वञ्च यस्याकाशादेर्यादृक् तच्च तादृशमेव स्थिरयतीति पुनरन्वयः । अयमर्थः–ब्रह्मणः कारणत्वमाकाशादेः कार्यत्वञ्च सप्रकारं बालिशबुद्धीनां प्रतिभटवादिभिरनाक्रमणाय स्थूणानिखननन्यायेन सूत्रकारः स्थिरयतीति प्रथमाध्यायोक्तार्थस्थापनमेव द्वितीयाध्यायकृत्यमित्युक्तं भवति । तथा च न पौनरुक्त्यशङ्कावकाश इति ॥ १५४ ॥

पद०—तत्तादृगित्यादि । तत्तादृक्तर्कतन्त्रक्रमनिपुणमहाबुद्धिसन्तोपसिद्धिः—स च तादृक् च तत्तादृक्, यद्वा स एव तादृक् यस्य स तत्तादृक् । उभयथापि स्वभिन्नसदृशशून्य इत्यर्थः, निस्सम इति यावत् । तत्तादृक् चासौ तर्कतन्त्रक्रमश्च तत्तादृक्तर्कतन्त्रक्रमः, तर्को नाम अर्थस्वभावविपर्ययेण सामग्रीविपर्ययेण वा निरूपणेनार्थविशेषे प्रमाणं व्यवस्थापयत् तदितिकर्तव्यतारूपमूहापरपर्यायं ज्ञानमिति नविलक्षणस्वाधिकरणभाष्योक्तः सर्वप्रमाणाङ्गभूतः शास्त्रस्य तु विशेषेणाकाङ्क्षासन्निधियोग्यताधीनप्रमाणभावस्य सर्वत्रैवापेक्षितस्वानुग्रहः—

'आर्षं धर्मोपदेशञ्च वेदशास्त्राविरोधिना ।
यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः ॥'

इति मनुना वेदार्थनिश्चयायावश्यकत्वेन विहितो ज्ञानविशेषः । तन्त्रं वेदान्तसिद्धान्तः । तर्केण युक्तं तन्त्रं तर्कतन्त्रम् । यद्वा तर्कश्च तन्त्रञ्च तर्कतन्त्रे तयोः क्रमः अङ्गाङ्गिभावेनोपयोगः, तस्मिन् निपुणानां महाबुद्धीनां

'ग्रहणं धारणं चैव स्मरणं प्रतिपादनम् ।
ऊहोऽपोहोऽर्थविज्ञानं तत्त्वज्ञानं च धीगुणाः ॥'

इत्युक्ताष्टाङ्गयुक्तबुद्धिशालिनां सन्तोपसिद्धिः अवश्यज्ञेयवेदान्ततात्पर्यार्थनिश्चलनिश्चयजननजनितमहानन्दलाभः । उक्तेन प्रथमाध्यायोक्तेन न्यायकलापेन । यद्यपि लभ्या—सुलभैव । तदपि—तथापि । मृदुधियाम्—बालबुद्धीनाम् । हैतुकास्कन्दशङ्की—हैतुकैर्हेतुवादिभिरास्कन्दम् आक्रमणमाशङ्कमानस्सूत्रकारः । कथितं ब्रह्मणः कारणत्वम्—प्रथमाध्यायोक्तमेव परमात्मनो जगन्निमित्तोपादानस्वरूपं कारणत्वम् । यस्य—वियदादेरात्मादेश्च यस्य वस्तुनः । कार्यत्वम्—पूर्वावस्थाप्रहाणेनोत्तरावस्थाप्राप्तिरूपम् । श्रुतिभिः यादृक् अवगतम्—स्वरूपविकाररूपं वा स्वभावविकाररूपं वा यथाऽवगतम् । तस्य—वस्तुनः । तादृशम्—तत्प्रकारम् । तच्च—कार्यत्वञ्च । स्थूणाखातक्रमेण—स्थूणानिखननन्यायेन । स्थिरयति—सुप्रतिष्ठितं करोति । द्वितीयाध्याय इति शेषः ॥ १५४ ॥

पादद्वन्द्वं द्वितीये परिहरति परे कारणे बाह्यपीडां
कार्यद्वारेण पादान्तरयुगमुदयत्यान्तरक्षोभशान्त्यै ।
हेतुत्वायोगभङ्गः प्रथममिह विभोस्तस्य सार्वत्रिकत्वा-
योगक्षेपः परस्तात्फलति स च भवेच्छ्रौतनित्यं विहाय ॥ १५५ ॥

चिन्ता०—पूर्वं प्रथमद्वितीययोरध्याययोस्संगतिरुक्ता अधुना पुनर्द्वितीयाध्याये पूर्वपादद्वन्द्वस्योत्तरपादद्वन्द्वस्य च परस्परसङ्गतिरभिधीयते । तच्छेषभूतश्चार्थतत्त्वमन्यदपि तत्रैव प्रकाश्यते—पादद्वन्द्वमित्यादिना । शब्दार्थस्तु—द्वितीयाध्याये प्रथमपादद्वन्द्वं परस्मिन्कारणभूते ब्रह्मणि वेदबाह्योक्तां बाधप्रतिरोधात्मिकां पीडां क्रमेण परिहरति । पादान्तरयुगं पुनर्वियत्पादः प्राणपादश्च कार्यद्वारेण समुत्थितं विरोधमान्तरप्रक्षोभशान्त्यै परिहरति । तेन बाधप्रतिरोधाभ्यां सह परमात्मविज्ञानस्यानुत्पत्तिलक्षणमप्रामाण्यमपि परिहृतं भवति । आन्तरक्षोभो नाम वेदान्तवाक्यानामन्योन्यविरोधः । इत्थं पादद्वयस्य पूर्वस्योत्तरेण पादद्वयेन सङ्गतिरुक्ता । प्रकारान्तरेणाप्यर्थभेदं सङ्गतिश्चाह—हेतुत्वेति । पूर्वेण पादद्वन्द्वेनेश्वरस्य कारणत्वायोगभङ्गः कृतः । द्वितीयेन तु पादद्वन्द्वेन तस्यैव हेतुत्वस्य सार्वत्रिकत्वायोगभङ्गः क्रियत इति । अयमर्थः—न्यायवादिन एवं मन्यन्ते—ईश्वरस्य हेतुत्वमस्तु नाम, अथाप्याकाशादेर्नित्यत्वात् तत्प्रति तस्य हेतुत्वं नास्ति । अत ईश्वरस्य हेतुत्वं न सार्वत्रिकमिति । तदपि विधूयते वियदादिपादेनेति । फलतीति—साक्षादर्थोऽयं न भवति फलितार्थ इत्यर्थः । आकाशादेः कार्यत्वोपपादने सति ईश्वरापेक्षया तस्य कार्यत्वं स्वयमेव फलितं भवतीति । ननु प्रकृतिपुरुषयोर्नित्यत्वं श्रूयते कथमीश्वरहेतुत्वस्य सार्वत्रिकत्वायोगक्षेप इत्याशङ्क्याह—स चेति । यस्सार्वत्रिकत्वायोगक्षेपः स तु श्रुतिसिद्धनित्यं विहाय भवेत् । यत्र नित्यत्वश्रुतिस्तद्व्यतिरेकेणान्यत्र सर्वत्रेश्वरस्य कारणत्वमित्यर्थः । ईश्वरस्वातन्त्र्यं नित्यानित्यसाधारणं नियतपूर्वभावित्वलक्षणं कारणत्वमनित्यमात्रे व्यवतिष्ठत इति भावः ॥ १५५ ॥

पद०—पादद्वन्द्वमित्यादि । द्वितीये—द्वितीयाध्याये । पादद्वन्द्वम्—स्मृतिपादरचनापादद्वयम् । परे कारणे—परस्मिन्कारणभूते ब्रह्मणि । बाह्यपीडाम्—वेदबाह्योक्तां बाधप्रतिरोधात्मिकां पीडाम् । क्रमेण परिहरति । पादान्तरयुगम्—वियत्पादप्राणपादद्वयम् । कार्यद्वारेण—वियदादिकार्यविशेषमूलक्::या । आन्तरक्षोभशान्त्यै आन्तरक्षोभो नाम वेदान्तवाक्यानामन्योन्यविरोधः, तस्य शान्त्यै निवर्तनाय । उदयति—उत्पद्यते । यद्वा उदयशब्दस्सूर्योदयपरः, तद्वदाचरतीत्युदयति । यथा सूर्योदयस्समस्त-

तमःक्षोभनिवृत्त्यै कल्पते तद्वदिदं पादद्वयमप्यान्तरक्षोभात्मकतमोनिवृत्त्यै कल्पत इति । अतोऽयते-रात्मनेपदित्वेन परस्मैपदित्वायोग इति न चिन्तनीयम् । इह—द्वितीयाध्याये । प्रथमम्—प्रथमपादद्विके । विभोः—परमात्मनः । हेतुत्वायोगभङ्गः—हेतुत्वस्य प्रथमाध्यायोक्तजगत्कारणत्वस्य स्मृतिविरोधादिभिर्यः अयोगः असम्भावना तस्य भङ्गः निवृत्तिः । क्रियत इति शेषः । तस्य—कारणत्वस्य । सार्वत्रिकत्वायोगे-क्षेपः—सार्वत्रिकत्वायोगस्य ब्रह्मणः कारणत्वं सार्वत्रिकं न भवति आकाशादेर्नित्यत्वेन तत्कारणत्वायो-गादिति न्यायवादिभिराशङ्कितस्य सर्ववस्तुसम्बन्धित्वायोगस्य क्षेपः प्रतिक्षेपः । परस्तात्—वियत्प्राणपाद-द्वये । फलति—वियदधिकरणादिभिराकाशादेः कार्यत्वोपपादने सति ईश्वरापेक्षया तस्य कार्यत्वं स्वयमेव फलितं भवति ततश्च कारणत्वस्य सार्वत्रिकत्वायोगक्षेपश्च सिद्ध एवेति भावः, स च—ईश्वरहेतुत्वस्य सार्वत्रि-कत्वायोगक्षेपश्च । श्रौतनित्यं विहाय भवेत्—श्रुत्या नित्यत्वेन प्रतिपन्नं यद्वस्तु प्रकृतिपुरुषाद्यात्मकं तद्भिन्नविषय एव भवेत् । ऐश्वरं कारणत्वं श्रुत्युक्तनित्यवस्तुव्यतिरिक्तेषु कार्यवस्तुषु व्यवतिष्ठत इति भावः ॥ १५५ ॥

तन्त्रच्छायानिदाने स्वयमुपनिषदामान्यपर्ये निषिद्धे
तन्त्रेभ्यो दुर्बलत्वात्तदनुसरणमित्युज्जिहीते परोऽद्य ।
इत्थं सत्यत्र तत्तत्स्मृतिनयपृतनातिक्रमं तत्तदर्हैः
प्रत्यस्त्रैर्वारयित्वा द्रढयति चलितं पादतः प्राच्यमर्थम् ॥ १५६ ॥

चिन्ता०—पूर्वमध्यायसङ्गतिरुक्ता अधुना पुनः प्रथमलक्षणचतुर्थपादेन द्वितीयलक्षणप्रथमपादस्य सङ्गतिरभिधीयते—तन्त्रेति । उपनिषदां तन्त्रच्छायानिदाने पूर्वस्मिन्पादे स्वयमन्यपरत्वे निषिद्धे तन्त्रेभ्यस्तासामुपनिषदां दुर्बलत्वात् तदनुसरणं तन्त्रानुसरणमेव न्याय्यमिति पर उज्जिहीते । अयमर्थः—सर्वव्याख्यानाधिकरणे 'व्याख्याताः' इत्युपनिषदां व्याख्यानमुक्तम् । व्याख्यानञ्चोपबृंहणमेव । तच्चोपबृंहणं श्रुतेः स्मृत्या कर्तव्यम् । मन्वादिस्मृतिस्तु कर्मप्रतिपादनपरत्वात् कर्मभागोपबृंहणम् । तथाचानाद्देशिकत्वादुपनिषत्तपस्विनी न्यायोपबृंहणे सांख्यस्मृतिमेवाश्रयते । तेन समाश्रयणीयसांख्यस्मृत्य-पेक्षया दुर्बलत्वात् तदनुरोधेनेयमुपनिषन्नेयेत्यधिकरणोत्थानेन सङ्गतिरप्यत्र परिस्फुरति । इत्थं पूर्वपक्षिणा वैयाकुलीमापादितां समाधत्ते पादान्तरेण सूत्रकार इत्याह—इत्थमिति । तत्तदित्यादि—तत्तत्सांख्या-दिस्मृतिन्यायाभ्यां कलितमतिक्रमं हिंसनं तत्तत्प्रतिक्षेपार्हैः प्रत्यस्त्रैर्वारयित्वा चलितं पूर्वपादोक्तमर्थं दृढीकरोति ॥ १५६ ॥

पद०—तन्त्रच्छायानिदान इति। उपनिषदाम्—'इन्द्रियेभ्यः परा ह्यर्थाः, महतः परमव्यक्तम्' इत्याद्युपनिषदाम्। तन्त्रच्छायानिदाने—साङ्ख्यतन्त्रोक्तिसमानाकारत्वमूलके। आन्यपर्ये—अन्यार्थपरत्वे। स्वयम्—सूत्रकारैस्साक्षादेव। निषिद्धे—निरुद्धे सति। अत्र—अस्मिन्नवसरे। परः—साङ्ख्यः। तन्त्रेभ्यो दुर्बलत्वात् तदनुसरणम्—उपनिषदामुपबृंहणं विनाऽर्थप्रत्यायनाशक्त्योपबृंहणसापेक्षत्वात् मन्वादिस्मृतीनां पूर्वभागोपबृंहणसावकाशत्वाच्च तत्त्वैदम्पराणां साङ्ख्यादितन्त्राणामेवाश्रयणीयत्वेन प्राबल्यात् उपनिषदाञ्च तदुपजीवकत्वेन दुर्बलत्वाच्च तन्त्रानुसरणमेव कर्तव्यम्। इत्युज्जिहीते—एवंप्रकारेणोत्तिष्ठति। इत्थं सति—एवंप्रकारेण परवाद्युत्थाने प्रसक्ते सति। अत्र—द्वितीयाध्यायप्रथमपादद्वये। तत्तत्स्मृतिनयपृतनातिक्रमम्—साङ्ख्यादिस्मृतिन्यायात्मिकायाः पृतनायास्सेनायाः, अतिक्रमं प्रथमाध्यायोक्तब्रह्मकारणत्वात्मकप्रधानवस्तुरक्षणौपयिकन्यायकलापात्मकदुर्गारोहणम्। तत्तदर्हैः—तत्तत्प्रतिक्षेपार्हैः। प्रत्यस्त्रैः—सन्न्यायकलापोपन्यासात्मकैः प्रत्यायुधैः। वारयित्वा—निवार्य। चलितम्—स्मृतिन्यायविरोधेन किञ्चिच्चलनयुक्तम्। प्राच्यमर्थम्—पूर्वोक्तं ब्रह्मकारणत्वरूपमर्थं, धनञ्च। द्रढयति—स्थूणानिखननन्यायेन सुप्रतिष्ठितं करोतीत्यर्थः॥ १५६॥

निर्णीतं कर्मकाण्डे स्मृतिनयविहतौ निश्चलत्वं श्रुतीनां
चर्चा तत्सिद्धयेऽसौ पुनरिति विफलस्स्याद् द्वितीयाद्यपादः।
मैवं गम्भीरनानाश्रुतिशिखरपरिच्छेद्यदुर्बोधताया-
माप्तोक्त्या तर्कतश्च क्षममनुसरणं पश्यतो ह्यत्र भङ्गः॥ १५७॥

चिन्ता०—द्वितीयाध्यायपादारम्भस्य नैरर्थक्यं परिहरति—निर्णीतमित्यादिना। कर्मकाण्डे हि विरोधाधिकरणादौ स्मृतिन्यायविरोधे श्रुतीनां निश्चलत्वं निर्णीतम्। वेदान्तोऽपि श्रुतिरेव। तत्सिद्धये पूर्वसिद्धार्थसिद्धये, पुनरियं चर्चेति द्वितीयाध्यायाद्यपादो विफल एव स्यात्। नेत्याह—मैवमिति। तदेव विवृणोति—गम्भीरेति। उपनिषदां गम्भीरत्वोपपादनात् तत्परिच्छेद्यस्यार्थस्य दुर्बोधत्वशङ्कायां कपिलाद्याप्ततमवाक्यैस्तदुपस्काररूपतर्कैश्च तत्त्वार्थपरिज्ञानानुसरणं प्राप्तमिति पश्यतः कस्यचिन्मन्दमतेरत्र भङ्गः क्रियत इति न पौनरुक्त्यशङ्कावकाश इति॥ १५७॥

पद०—निर्णीतमित्यादि। कर्मकाण्डे—कर्मविचाररूपे पूर्वकाण्डे विरोधाधिकरणादौ। स्मृतिनयविहतौ—स्मृतिन्यायविरोधे सत्यपि। श्रुतीनाम्—स्मृतिविरुद्धार्थानामपि श्रुतीनाम्। निश्चल-

त्वम्—निष्कम्पत्वम् । निर्णीतम्—निश्चितं खलु । तत्सिद्धये—पूर्वसिद्धार्थसिद्धये । पुनः—पुनश्च । असौ चर्चेति—स्मृतिपादे क्रियमाणो विचार इति हेतोः । द्वितीयाद्यपादो विफलस्स्यात्—द्वितीयाध्याप्रथमपादोऽयं कृतकरत्वात् विफलः स्यात् । मैवम्—एवं मा शङ्किष्ठाः । गम्भीरनानाश्रुतिशिखरपरिच्छेद्यदुर्बोधतायाम्—गम्भीराणि असमर्थैर्दुर्ग्रहतलानि नानाभूतानि च यानि श्रुतिशिखराणि वेदान्तवाक्यानि तेषां परिच्छेद्यस्य ब्रह्मस्वरूपाद्यर्थजातस्य दुर्बोधतायां दुर्ग्रहतायां सत्याम् । आप्तोक्त्या—'ऋषिं प्रसूतं कपिलम्' इत्यादिश्रुतिप्रसिद्धस्य परमाप्तस्य कपिलस्य उक्त्या साङ्ख्यतन्त्रेण । तर्कतश्च—प्रमाणाङ्गभूतेन ऊहापरपर्यायज्ञानेन च सह । अनुसरणम्—तत्त्वार्थपरिज्ञानप्रयतनम् । क्षमम्—युक्तमिति । पश्यतो हि—आलोचयतः कस्यचित् मन्दबुद्धेर्हि । अत्र—पादे । भङ्गः—निरासः क्रियते । अतो न पौनरुक्त्यशङ्कावकाश इति भावः ॥ १५७ ॥

द्वाभ्यां स्मृत्या विरोधं परिहरति ततस्त्वष्टभिस्तर्कबाधं
तेनोपादानभावं द्रढयति तु विभोः कर्तृतां तद्द्वयञ्च ।
तत्तत्क्षेपात्तुलाग्रद्वयनमनसमुन्नामनीत्या प्रवृत्ते
शङ्कावर्गे परीक्षासमनिहितमतिः पक्षपातं रुणद्धि ॥ १५८ ॥

चिन्ता०—स्मृतिविरोधपरिहारः कुत्र न्यायविरोधपरिहारश्च कुत्रेत्याशङ्क्य द्वाभ्यामधिकरणाभ्यः स्मृतिविरोधपरिहारो भवति, अष्टभिः पुनरधिकरणैर्न्यायविरोधपरिहार इति विभज्य दर्शयति—द्वाभ्यामित्यादिना । उभाभ्यामपि परिहाराभ्यां फलितमर्थमाह—तेनेति । उपादानत्वं निमित्तत्वञ्च भगवतः सुदृढमेव स्थापितं भवतीत्यर्थः । तद्द्वयं चेति—क्वचिदुपादानत्वं क्वचिन्निमित्तत्वं क्वचित्पुनरुपादानत्वं निमित्तत्वञ्चोभयमपि प्रकाशयतीत्यर्थः । तत्तद्वादिपरिकल्पितानां परस्परविरुद्धानामर्थतत्त्वानामेकप्रतिक्षेपे तदन्येषामर्थानां तुलाग्रनमनोन्नमनन्यायेन सद्भावासद्भावशङ्कावर्गे प्रवृत्ते परीक्षायां साम्येन निहितमतिः सूत्रकारः पक्षपातं रुणद्धि साम्यमेव स्थापयतीत्युत्तरार्धस्य योजना ॥ १५८ ॥

पद०—द्वाभ्यामित्यादि । द्वाभ्याम्—स्मृत्यधिकरणयोगप्रत्युक्त्यधिकरणाभ्याम् । स्मृत्याः—कपिलस्मृत्याः, हिरण्यगर्भस्मृत्याश्च । विरोधं परिहरति । ततस्तु—तत्परन्तु । अष्टभिः—नविलक्षणत्वाधिकरणैतेनशिष्टापरिग्रहाधिकरणभोक्त्रापत्त्यधिकरणारम्भणाधिकरणेतरव्यपदेशाधिकरणोपसंहारदर्शनाधिकरणकृत्स्नप्रसक्त्यधिकरणनप्रयोजनवत्त्वाधिकरणैरष्टभिः । तर्कबाधम्—युक्तिमूलकम्, उक्तब्रह्मकारणत्वस्य

वह्निना सिध्यतीतिवाक्यार्थवत् बाधितत्वं परिहरति। तेन तु—उक्तन्यायकलापदर्शकेन तु। विभोः—परमात्मनः। उपादानभावम्—उपादानकारणत्वम्। कर्तृताम्—निमित्तकारणत्वम्। तद्द्वयञ्च—उपादानत्वनिमित्तत्वद्वयञ्च। द्रढयति—सुप्रतिष्ठितं करोति। केषुचिदधिकरणेषूपादानकारणत्वं द्रढयति केषुचिदधिकरणेषु निमित्तकारणत्वं द्रढयति केषुचिदधिकरणेषु तदुभयञ्च द्रढयतीति भावः। तत्तत्क्षेपात्—तत्तद्वादिपरिकल्पितानां परस्परविरुद्धानामर्थानामेकप्रतिक्षेपात्। तुलाग्रद्वयनमनसमुन्नामनीत्या—तुलाग्रद्वयनमनोन्नमनक्रमेण। शङ्कावर्गे प्रवृत्ते—परस्परविरुद्धार्थेष्वन्यतमनिरासे तदन्यतद्विरुद्धार्थविषयकशङ्काया उत्थानम्, तस्या निरासे तदन्यतद्विरुद्धार्थशङ्कासमुन्मेषः, इत्येवंक्रमेण शङ्कावर्गे उपर्युपरि प्रवृत्ते। परीक्षासमनिहितमतिः—परीक्षायां तत्तद्युक्तीनां साधुत्वासाधुत्वचिन्तने समतया पक्षपातराहित्येन निहिता प्रवेशिता मतिर्येन स सूत्रकारः। पक्षपातम्—एकत्राभिनिवेशः पक्षपातः, तम्। रुणाद्धि—निवर्तयति। साम्यमेव स्थापयतीति भावः ॥ १५८ ॥

स्मर्ता श्रुत्यैव गीतः कपिलऋषिरसौ वासुदेवांशभूतः
ख्यातो रामायणादौ प्रणिधिनिपुणधीर्वक्ति वेदान्ततत्त्वम्।
तस्मादस्मद्विदूरे श्रुतिशिरसि तदुक्त्यैव निष्कर्षणं स्यात्
न स्यादेकार्थमन्वाद्यनघबहुगिरा तत्र तत्त्वार्थसिद्धेः ॥ १५९ ॥

इति स्मृत्यधिकरणम् ॥ ३६ ॥

चिन्ता०—अत्र संगतिः पूर्वमेवोक्ता। तदर्थविचारस्तु—उक्तं ब्रह्मणो जगत्कारणत्वं चालयितुं शक्यते न वेति। किं वेदान्तवाक्यानि ब्रह्मकारणत्वपराणि नेति। किमनवकाशसाङ्ख्यस्मृत्यनुसारे विरोधो वेदान्तवाक्यानां प्रधानपरत्वमापादयति नेति। किं साङ्ख्यस्मृत्या वेदोपबृंहणमुत मन्वादिस्मृत्येति। किं साङ्ख्यस्मृतिर्भ्रान्तिमूला न वेति। अत्रावश्यमेव वेदान्तानां कपिलस्मृत्यनुसारे कारणमनुक्रमेणाह—स्मर्तेति। 'ऋषिं प्रसूतं कपिलम्' इति श्वेताश्वतरश्रुत्यैवासौ कपिलऋषिर्विज्ञातार्थतत्त्वेन श्रूयते। ऋषित्वं हि ज्ञानवृद्धत्वम्, अभेद्योऽयं हेतुरिति। अपरोऽप्यस्ति रामायणादावयं कपिलो वासुदेवांश इति प्रख्यातः। नहि वासुदेवस्य भ्रान्तिस्सम्भवति। अपिचायं प्रणिधिनिपुणधीः योगाभ्यासातिशयनिपुणधीरिति श्रुतिपुराणादिषु सर्वत्रापि श्रूयते। अयमाशयः—मनुयाज्ञवल्क्यादयः केवलकर्मिणः, अयंतु ज्ञानैकनिष्ठः तेनैतद्वाक्येनैव वेदान्तोपबृंहणं क्रियत इति। एवमतिशययुक्तत्वा-

दस्माकमप्रत्यक्षार्थे श्रुतिशिरसि तदुक्त्यैव निष्कर्षणं स्यादित्याह—तस्मादिति । मैवमित्याह—न स्यादिति । तत्र हेतुचतुष्टयमाह—एकार्थेति । मन्वादिवाक्यानामेकार्थत्वेन परस्परविरोधाभावात् 'यद्वै किञ्चन मनुरवदत्तद्भेषजम्' इति सांसारिकसकलरोगभेषजत्वेन श्रुतत्वात् कपिलवदस्थानक्रोधादिदोषानुपहतपरमशान्तप्रणीतत्वात् बहुश्रुतत्वाच्च तद्वाक्यानुसरणमेव न्याय्यम् । तेन तद्वाक्यैरेव तत्त्वज्ञानसिद्धेः कपिलवाक्यानुसरणमन्याय्यमित्यर्थः ॥ १५९ ॥

इति स्मृत्यधिकरणम् ॥ ३६ ॥

पद०—स्मर्तेत्यादि । स्मर्ता—साङ्ख्यस्मृतिप्रणेता । कपिलः—कपिलाख्यः । ऋषिः—स्वयोगमहिमसाक्षात्कृतनिखिलवेदार्थतत्त्वो मुनिः । श्रुत्यैव गीतः—'ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानैर्बिभर्ति जायमानञ्च पश्येत्' इति श्रुत्यैव प्रशंसितः । रामायणादौ वासुदेवांशभूतः ख्यातः प्रणिधिनिपुणधीरसौ वेदान्ततत्त्वं वक्ति—

'यस्येयं वसुधा कृत्स्ना वासुदेवस्य धीमतः ।
कापिलं रूपमास्थाय धारयत्यनिशं धराम् ॥'

इति श्रीमद्रामायणे बालकाण्डे चत्वारिंशाध्याये देवान् प्रति पितामहवचने, भागवतादौ च वासुदेवांशभूतत्वेन प्रसिद्धोऽष्टाङ्गयोगानुष्ठानपटुतरबुद्धिरसौ कपिलऋषिर्वेदान्ततात्पर्यविषयभूतं तत्त्वार्थं साङ्ख्यस्मृतिरूपेण वचनेन प्रतिपादयति । तस्मात्—कपिलस्यासत्त्वमहर्षित्वादिगुणयोगेन तद्वाक्यस्य मन्वादिवाक्यवत् कर्माद्यनन्यपरत्वराहित्येन प्रमाणतमत्वात् । अस्मद्विदूरे—अस्माकमप्रत्यक्षार्थे । श्रुतिशिरसि—वेदान्ते । तदुक्त्यैव—कपिलोक्तिभूतसाङ्ख्यस्मृत्यैव । निष्कर्षणं स्यात्—अर्थनिश्चयस्सम्पादनीयस्स्यात् । न स्यात्—उक्तं न सम्भवेत् । एकार्थमन्वाद्यनघबहुगिरा—एकार्थया परस्परविरोधरहितया मन्वादीनां 'यद्वै किञ्चन मनुरवदत्तद्भेषजम्' इति सकलसांसारिकरोगभेषजवचनतया श्रुतानां मन्वादीनां अनघानां अस्थानक्रोधादिशून्यानां शान्तानां बहूनां मनुयाज्ञवल्क्यवसिष्ठहारीतव्यासशङ्खलिखितादीनामनेकमहर्षीणां गिरा स्मृतिरूपया सूक्त्या । तत्र—अस्मद्विदूरेऽपि वेदान्ते । तत्त्वार्थसिद्धेः—प्रामाणिकार्थनिश्चयसम्भवात् । अतो बहूक्तिविरोधादेकोक्तिरनादरणीयैवेति भावः ॥ १५९ ॥

इति स्मृत्यधिकरणम् ॥ ३६ ॥

## योगप्रत्युक्त्यधिकरणम् ॥ ३७ ॥

सूत्रम्—एतेन योगः प्रत्युक्तः ॥ ३७ ॥

वेदान्पूर्वं विधाताऽलभत भगवतस्सर्वविद्यानियुक्तो
वागीशश्चैष तस्मात्तदुदितविहतौ कम्पनं वेदमूर्ध्नः ।
मैवं तस्यापि वेदापहृतिमुखविपद्दर्शनात् क्षेत्रिभावात्
भ्रान्त्यादिस्संभवेदित्यगतिकविषये पूर्ववन्निर्वहामः ॥ १९० ॥

इति योगप्रत्युक्त्यधिकरणम् ॥ ३७ ॥

चिन्ता०—अत्राधिकाशङ्कोक्त्या भाष्य एव सङ्गतिस्सुव्यक्ता 'योगस्मृतावपीश्वराभ्युपगमान्मोक्षसाधनतया वेदान्तविहितयोगस्य चाभिभिधानाद्वक्तुर्हिरण्यगर्भस्य सर्ववेदान्तप्रवर्तनाधिकृतत्वाच्च तत्स्मृत्या वेदान्तोपबृंहणं न्याय्यमिति' इति । तदर्थविचारस्तु—ब्रह्मकारणत्ववादस्तथैवावतिष्ठते नेति । किं वेदान्तवाक्यानि ब्रह्मकारणत्वपराणि उतान्यपराणीति । किमीश्वराधिष्ठितं प्रधानं तत्कारणमुत ब्रह्मेति । किमनवकाशयोगस्मृत्या वेदोपबृंहणमुत पराशरादिस्मृत्येति । किं योगस्मृतिर्भ्रान्तिमूला नेति । किं तत्प्रणेतुर्हिरण्यगर्भस्यापि भ्रान्तिस्संभवति नेति । अत्र सर्वत्रापि फलफलिभावस्स्वयमेवोन्नेयः । तदर्थविचारपरम्पराप्राप्तानामुत्तरोत्तरेषामर्थानां विपर्यये पूर्वपूर्वविपर्ययप्रदर्शनरूपत्वाद् द्वयोरपि पक्षयोः फलफलिभावस्य । तेन पूर्वपक्षे सिद्धान्ते च फलफलिभावस्स्वयमेवोन्नेय इति न विशेषतः प्रदर्शयामः । विषयसंशयोत्थानकारणपूर्वपक्षसिद्धान्तन्यायनिर्णयतत्तत्फलानां वक्तुंप्राप्तानामपि भाष्यदीपयोरेव सुव्यक्तत्वाद्विशेषतो न वक्तव्यमस्तीति संगतितदर्थविचारावेव सर्वतो विस्तृणीमहि । अत्र पूर्वपक्षसिद्धान्तन्यायौ विभज्य दर्शयति—वेदानिति । पूर्वस्मिन्काले भगवतो वेदानलभत विधातेति श्रूयते 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै' इति । नायमेको हेतुः—सर्वेष्वपि विद्यास्थानेषु प्रवर्तकत्वेन नियुक्त इति द्वितीयः । एतस्य च सर्वेष्वपि लोकेषु वागीशत्वप्रसिद्धिः पुनस्तृतीयः । तस्मात्—हेतुत्रयात् । हिरण्यगर्भोक्तिव्याघाताद्वेदान्तस्य चलनमेव भवति । उक्तमिमं पूर्वपक्षं प्रतिक्षिपति—मैवमिति । तत्र हेतुद्वयमाह—तस्यापीति । हिरण्यगर्भस्यापि मधुकैटभनिमित्तवेदापहारप्रमुख-

विपद्दर्शनात् क्षेत्रिभावात् त्रिगुणात्मकप्रकृतिशरीरत्वाद् भ्रान्त्यादिस्संभविष्यतीत्यगतिकविषये तद्वचनस्य वेदविरोधो नास्तीति कथंचिदपि परिहर्तुमशक्यत्वात् कपिलवाक्यवदप्रमाणमेवेति निर्वहामः। वेदाविरोधस्य निर्वोढुमशक्यत्वे तद्वाक्यमप्रमाणमित्येव प्रतिपद्यामह इति भावः ॥ १६० ॥

इति योगप्रत्युक्त्यधिकरणम् ॥ ३७ ॥

पद०—वेदान्पूर्वमित्यादि। विधाता—हिरण्यगर्भः। पूर्वम्—प्रजासर्गात्पूर्वम्। भगवतः—श्रीमन्नारायणात्। वेदान्—ऋगादिरूपान् सर्वानिवापौरुषेयाक्षरराशीन्। अलभत—प्राप्तवान्। एषः—हिरण्यगर्भः। सर्वविद्यानियुक्तः—सर्वविद्याप्रवर्तने भगवता नियुक्तः। वागीशश्च—साक्षात् सरस्वतीवल्लभ इति प्रसिद्धश्च। तस्मात्—हिरण्यगर्भस्य तादृशमहिमशालित्वात्। तदुदितविहतेः—हिरण्यगर्भोक्तिव्याघातात्। वेदमूर्ध्नः—वेदान्तस्य। कम्पनम्—चलनमेव भवेदिति। मैवम्—एवं मा शङ्किष्ठाः। तस्यापि—हिरण्यगर्भस्यापि। वेदापहृतिमुखविपद्दर्शनात्—मधुकैटभनिमित्तवेदापहारप्रमुखापद्दर्शनात्। क्षेत्रिभावात्—त्रिगुणात्मकप्रकृतिद्रव्यमयशरीरवर्तित्वात्। भ्रान्त्यादिः—भ्रान्तिः धर्मविपर्ययः, आदिशब्देन धर्मिविपर्ययः। सम्भवेदिति—सम्भावित एवेति हेतोः। मैवमिति पूर्वेणान्वयः। अगतिकविषये—वेदाविरोधस्य निर्वोढुमशक्यत्वे तादृशविषये। पूर्ववत्—वेदविरुद्धकपिलवाक्यांशवदेव। निर्वहामः—अप्रमाणमित्येव निर्वहामः। वेदाविरुद्धांशस्तु गृह्यत एव 'आत्मप्रमाणान्येतानि न हन्तव्यानि हेतुभिः' इति वचनादिति भावः ॥ १६० ॥

इति योगप्रत्युक्त्यधिकरणम् ॥ ३७ ॥

## विलक्षणत्वाधिकरणम् ॥ ३८ ॥

सूत्रम्—न विलक्षणत्वादस्य तथात्वञ्च शब्दात् ॥ १४२ ॥

विश्वं त्रैगुण्यवत्त्वात् त्रिगुणत उदितं नासमादित्ययुक्तं
सर्वाकारेण साम्यं क्वचिदपि न भवेत् केनचित्साम्यमिष्टम् ।
भग्ना हेतुव्यवस्थोचितगुणसमता गोमयाद् वृश्चिकादौ
स्थूलत्वं याति चेशः प्रकृतितनुरतस्सर्वचोद्योपमर्दः ॥ १६१ ॥

चिन्ता०—अत्र संगतिर्भाष्यकारैरेवोक्ता 'पुनरपि स्मृतिविरोधवादी तर्कमवलम्बमानः प्रत्यवतिष्ठते' इति । इममेवार्थं श्रीविष्णुचित्तार्याः प्राहुः—'कपिलहिरण्यगर्भाद्युपदेशं परित्यज्य तदुक्तैस्तर्कैर्वेदार्थमन्यथाकर्तुं प्रत्यवतिष्ठते' इति । तदर्थविचारस्तु—उक्तं ब्रह्मणो जगत्कारणत्वं संभवति नेति । किं चेतनाद्ब्रह्मणोऽचेतनजगदुत्पत्तिस्संभवति नेति । किं सजातीयात्कारणात् सजातीयं कार्यमुत्पद्यते उत विजातीयम् । किं कार्यकारणयोस्सालक्षण्यानुमानमनैकान्तिकं न वेति । तत्र कार्यकारणयोस्सालक्षण्ये नियामकत्वेनोक्तं साङ्ख्यवचनविषयमर्थं उपक्षिपति-विश्वमिति । इत्थं किलाहुस्साङ्ख्याः—सुखदुःखमोहात्मकत्वात् त्रैगुण्यात्मकं विश्वं त्रिगुणादेवोदेतुं भवितुमर्हति । नासमात् त्रैगुण्यरहितत्वेन असमात् परमात्मन उदेतुं भवितुं नार्हतीति । पूर्वपक्षमुपन्यस्य प्रतिक्षिपति—इत्ययुक्तमिति । अत्र विकल्पयति—सर्वाकारेण साम्यं कार्यकारणयोर्भवतोच्यते किं वा केनाप्याकारेण । तत्रापि किं कार्यकारणभावनियामकाकारेण किं वा येनकेनाप्याकारेणेति विकल्पविभागः । तत्र प्रथमविकल्पं दूषयति—सर्वेति । कार्यकारणयोस्सर्वाकारेण साम्यं न भवति तयोः कार्यत्वेन कारणत्वेन च विभक्ताकारेण दृष्टत्वात् । येन केनाप्याकारेणेति तृतीयं पक्षं प्रागेव प्रतिक्षिपति—इष्टमिति । 'पर्वते परमाणौ च पदार्थत्वं व्यवस्थितम्' इति चाहुः । येनकेनाप्याकारेण साम्यं प्रसाधनीयमेव न भवति । तस्मात् कार्यकारणभावनियामकाकारेण साम्यमिति द्वितीयः पक्षोऽवशिष्यते । स च नेत्याह—भग्नेति । हेतुव्यवस्थोचितगुणसमता कार्यकारणभावव्यवस्थापकगोमयत्वादिगुणसाम्यं कार्यकारणभूतयोर्वृश्चिकगोमययोर्नास्त्येव । गोमये गोमयत्वसत्त्वाद्वृश्चिके तदभावाच्चेत्यर्थः । गुणसमता भग्नेत्यन्वयः । तेन सूक्ष्मचिद-

चिच्छरीरो भगवान् स्थूलचिदचिद्विशिष्टरूपेणावतिष्ठत इति सुगममेतत् । तस्मात् सर्वस्यापि चोद्यस्योपमर्द एव । सूक्ष्मस्य तस्यैव द्रव्यस्य स्थूलरूपेणावस्थानमात्रस्यैव कार्यकारणभावरूपत्वेनास्माभिरभिधानात् । नह्यस्माभिरीश्वर एव स्वरूपेण प्रकृतिपुरुषात्मना परिणमत इत्युच्यत इति ॥ १६१ ॥

पद०—विश्वमित्यादि । विश्वम्—जगत् । त्रैगुण्यवत्त्वात्—सुखदुःखमोहाद्यात्मकत्वेन सत्त्वरजस्तमोरूपगुणत्रयात्मकत्वात् । त्रिगुणतः—सत्त्वरजस्तमस्साम्यरूपप्रकृतिद्रव्यात् । उदितम्—उत्पन्नम् । असमात्—त्रैगुण्यशून्यत्वेन विलक्षणात् परमात्मनो नोदितम् । इत्ययुक्तम्—इति वचनमयुक्तम् । कुतः ? सर्वाकारेण साम्यं क्वचिदपि न भवेत्—कार्यत्वकारणत्वाभ्यां कार्यकारणयोर्विभक्ततया दर्शनात् सर्वाकारेण साम्यं क्वचिदपि कार्यकारणवस्तुजाते न सम्भवेत् । केनाचित् साम्यमिष्टम्—येनकेनाप्याकारेण साम्यं तु पर्वतपरमाण्वोः पदार्थत्वेनेव सर्वेष्टमस्मदिष्टञ्चेति न तत्साधनीयमित्यर्थः । हेतुव्यवस्थोचितगुणसमता गोमयात् वृश्चिकादौ भग्ना—कार्यकारणभावव्यवस्थापकगोमयत्वादिगुणसाम्यन्तु गोमयाज्जाते वृश्चिकादौ न दृष्टमित्यर्थः । ईशः—ईश्वरः । प्रकृतितनुः—सूक्ष्मचेतनाचेतनशरीरस्सन् । स्थूलत्वं याति च—स्थूलचिदचिद्वस्तुशरीरकत्वं याति च । अतः—एवमुपपादनात् । सर्वचोद्योपमर्दः—सर्वेषामपि चोद्यानामुपमर्द एव । सूक्ष्मस्य तस्यैव द्रव्यस्य स्थूलरूपेणावस्थानमात्रस्यैव कार्यकारणभावरूपत्वेनाभिधानादीश्वरस्स्वरूपेण प्रकृतिपुरुषात्मना परिणमत इत्यस्माभिरनभिधानाच्च न किमपि चोद्यमवशिष्यत इति भावः ॥ १६१ ॥

ईक्षा तादृग्बहु स्यामिति सति पठिता तेजसोऽपाञ्च दृष्टा
सालक्षण्यं ततस्स्याज्जगत इति मृदुप्रज्ञपार्श्वस्थचोद्ये ।
तत्तन्मूर्तेः परस्येक्षणमिदमिति तद्वाच्यभावापलापी
सामान्येनाभिमानिव्यवहरणमिह व्याहरत्पूर्वपक्षी ॥ १६२ ॥

इति विलक्षणत्वाधिकरणम् ॥ ३८ ॥

चिन्ता०—अत्र पार्श्वस्थः कश्चिन्मृदुप्रज्ञो मन्यते 'तत्तेज ऐक्षत' 'ता आप ऐक्षन्त' इति कार्ये वस्तुनि चैतन्योपलम्भाच्चैतन्यं कार्ये दृश्यते कारणे पुनर्वस्तुनि 'तदैक्षत बहु स्याम्' इति चैतन्योपलम्भः सिद्ध एव तेन कार्यकारणयोः सालक्षण्यमिति । तदिदमाह—ईक्षेति ।

अयमर्थः—सति कारणे बहुस्यामिति परिपठिता तादृगीक्षा तेजसोऽपाञ्च 'तत्तेज ऐक्षत' 'ता आप ऐक्षन्त' इति दृष्टा। तेन कार्यभूतस्य जगतः कारणभूतात्मना सह सालक्षण्यं चैतन्ययोगेन स्यादिति मृदुप्रज्ञपार्श्वस्थस्य चोद्ये सति तत्र सम्यगुत्तरमिदं युक्तं तेजःप्रभृतिमूर्तेः परस्य पुरुषस्येक्षणमिदमितीमं भावमपलप्य पूर्वपक्षी भावान्तरेण परिजहार। 'तत्तेज ऐक्षत' 'ता आप ऐक्षन्त' इत्यादिकमभिमानिव्यपदेश इति। अयं पुनर्व्यपदेशस्तेजःप्रभृतितत्तत्त्वाभिमानिदेवताविशेषव्यवहरणमिति सामान्येन प्राह। नपुनः परमात्मव्यपदेशो वा तत्तद्देवतामात्रपरो वेति विभज्य प्राह। तेन पूर्वपक्षिव्यवहारत्वान्नास्माकं दोष इति ॥ १६२ ॥

इति विलक्षणत्वाधिकरणम् ॥ ३८ ॥

पद०—ईक्षेत्यादि। येति स्त्रीलिङ्गयच्छब्दाध्याहारः कार्यः। या ईक्षा—स्रष्टव्यपर्यालोचनरूपा। सति—'सदेव सोम्येदमग्र आसीत्' इत्युक्ते सकलजगत्कारणभूते सच्छब्दिते परमात्मनि। बहुस्यामितिपठिता—'तदैक्षत बहुस्यां प्रजायेय' इति श्रुत्या प्रतिपादिता। तादृगीक्षा—तत्तुल्यैवेक्षा। तेजसोऽपाञ्च दृष्टा—'तत्तेजऐक्षत' 'ता आप ऐक्षन्त' इति श्रुतिवाक्याभ्यां तेजसो विषये अपां विषये च दृष्टा। ततः—तस्मात्कारणात्। जगतः—कार्यभूतस्य जगतः। सालक्षण्यं स्यात्—कारणभूतपरमात्मना सह चैतन्ययोगेन सालक्षण्यं स्यात्। इति—एवंरीत्या। मृदुप्रज्ञपार्श्वस्थचोद्ये—मन्दप्रज्ञस्य पार्श्वस्थस्य कस्यचित् चोद्ये सति। तत्तन्मूर्तेः—तेजोऽबन्नादिशरीरकस्य। परस्य—परमात्मनः। ईक्षणमिदमिति—स्रष्टव्यपर्यालोचनात्मकं ज्ञानमिदमिति। तद्वाक्यभावापलापी—'तत्तेज ऐक्षत' इत्यादिवाक्यतात्पर्यस्यापलापी अपह्नवमातन्वन्। पूर्वपक्षी—एतदधिकरणपूर्वपक्षी। इह—पूर्वपक्षावसरे। सामान्येन—अभिमानिदेवताव्यपदेशत्वेन सामान्याकारेण, नपुनः परमात्मव्यपदेशत्वतत्तद्देवतामात्रव्यपदेशत्वादिविशेषधर्मपुरस्कारेण। अभिमानिव्यवहरणं व्याहरत्—तत्तत्त्वाभिमानिव्यवहारोऽयमिति व्यवहृतवान्। तेनास्मदभिमतपरमात्मव्यपदेशरूपत्वानिषेधात् सामान्याकारेणास्य पूर्वपक्षिव्यवहाररूपत्वाच्च नास्माकं हानिरिति भावः ॥ १६२ ॥

इति विलक्षणत्वाधिकरणम् ॥ ३८ ॥

## शिष्टपरिग्रहाधिकरणम् ॥ ३९ ॥

सूत्रम्—एतेन शिष्टापरिग्रहा अपि व्याख्याताः ॥ १५१ ॥

संवादादाक्षपादक्षपणककणभुग्भिक्षुपक्षेष्वणूनां
विश्वं तद्धेतुकं स्यादिति मृदुमतिभिश्श्वावराहक्रमोक्तिः ।
अन्योन्यव्याहतार्थस्थपुटितकुहनायुक्तिदोषापनुत्त्यै
भाति त्रय्यन्तसूर्यः प्रतिमततिमिरस्तोमकुक्षिम्भरिर्नः ॥ १६३ ॥

चिन्ता०—एवमनुपपन्नकेवलतर्काभासमूलत्वात् अप्रतिष्ठितत्वाद् वेदान्तविरुद्धत्वाच्चापरिहार्यदोषं साङ्ख्यपक्षं प्रतिक्षिप्य तत्तुल्यन्यायेन कणभक्षाक्षपादादिपक्षाणामप्युक्तदोषेण त्याज्यत्वमतिदिशतीति सङ्गतिः । पूर्वमपि 'अत एव प्राणः' 'एतेन सर्वे व्याख्याता व्याख्याताः' 'एतेन योगः प्रत्युक्तः' इत्यातिदेशिकसङ्गतिरुक्ता अत्रापि सैवोच्यते । तदर्थविचारस्तु—उक्तं ब्रह्मणो जगत्कारणत्वं संभवति नेति । किं वेदान्तवाक्यानि ब्रह्मणो जगत्कारणत्वपराणि उतान्यपराणीति । किं कणभक्षाक्षपादादितर्कविरोधा वेदान्तवाक्यानां अन्यपरत्वमापादयन्ति नेति । किं बहुवादिसम्मतपरमाणुकारणवादनिरसनेऽपि तर्काप्रतिष्ठानहेतुः प्रभवति नेति । अत्र पूर्वपक्षोत्थानप्रकारमनूद्य तत्प्रतिक्षेपप्रक्रियामप्याचष्टे—संवादादिति । प्रकृतिकारणवादस्साङ्ख्ये योगे च केवलमभिधीयते । परमाणुकारणवादः पुनः कणभक्षाक्षपादक्षपणकभिक्षुकादिबहुपक्षपरिगृहीतत्वात् सर्वथाऽऽदरणीय इति पूर्वपक्षिणोऽभिप्रायः । विश्वं तद्धेतुकं स्यादिति द्व्यणुकादिक्रमेण परमाणुहेतुकमेव विश्वं स्यादिति मृदुमतिभिरल्पबुद्धिभिश्श्वावराहक्रमस्यानुवाद इति । श्वानो हि वराहेषु परस्परविरुद्धा अपि तदानीं परस्परविरोधं परित्यज्य निपतन्ति । एवं परवादिनोऽपि परस्परविरोधं परित्यज्य वेदान्तबाधनाय प्रवर्तन्त इति श्वावराहन्यायः । तत्प्रतिक्षेपप्रकारमाह—अन्योन्येति । अन्योन्यव्याहतार्थबहुकुहनायुक्तिदोषापनोदनाय प्रतिमततिमिरस्तोमकुक्षिम्भरिर्वेदान्तसूर्योऽस्माकं भातीत्यन्वय इति । लोके हि सार्वत्रिकोऽप्यन्धकारस्सूर्योदयमात्रेण सद्यस्समुन्मूल्यते, एवं वेदान्तसिद्धान्तप्रसङ्गमात्रतः परश्शतमपि परसिद्धान्तास्स्वयमेव प्रक्षीयन्त इति॥ १६३ ॥

पद०—संवादादित्यादि । आक्षपादक्षपणककणभुग्भिक्षुपक्षेपु—अक्षपादो गौतमस्तस्येमे आक्षपादा नैयायिकाः, क्षपणका जैनाः कणभुक् कणादः भिक्षू रुद्रः, एतेपां पक्षेपु दर्शनेपु । अणूनाम्—परमाणूनाम् । संवादात्—जगत्कारणत्वेन समानवादात् । एतेपां बहूनां पक्षेपु परमाणुकारणत्वस्याङ्गीकरणात् । विश्वम्—जगत् । तद्धेतुकं स्यात्—परमाणुकारणकं भवेत् । इति—एवम्प्रकारेण । मृदुमतिभिः—अल्पबुद्धिभिः । श्वावराहक्रमोक्तिः—श्वावराहक्रमस्यानुवादः । श्वानः परस्परं विद्वेपिणोऽपि आरण्यकवराहेपु परिपतनसमये सजातीयेपु परस्परवैरं परित्यज्य परिपतन्ति, तद्वत् परवादिनोऽप्येते वहुप्वर्थेपु स्पर्धमाना अपि परस्परविरोधं परित्यज्य वेदान्तबाधनाय प्रवर्तन्त इति श्वावराहक्रमस्यानुवाद एपइति । अन्योन्यव्याहतार्थस्थपुटितकुहनायुक्तिदोपापनुत्त्यै—परस्परविरुद्धार्थैस्स्थपुटिता निम्नोन्नता कुहनायुक्तिरेव दोपा रात्रिस्तन्निवर्तनाय । प्रतिमततिमिरस्तोमकुक्षिम्भरिः—प्रतिमतान्येव तिमिरस्तोमोऽन्धकारव्यूहस्तस्य कुक्षिम्भरिर्भक्षको विध्वंसक इति यावत् । त्रय्यन्तसूर्यः—वेदान्त एव सूर्यः । नः—अस्माकम् । भाति—प्रकाशते । इदं हृदयम्—यथा नक्तं सर्वलोकमावृत्य वर्तमानमप्यन्धतमसं सूर्योदयक्षण एव निरन्वयं विनश्यति, एवं वेदान्तसिद्धान्तप्रसङ्गमात्रेण परश्शतमपि सिद्धान्तास्स्वयमेव प्रक्षीयन्त इति ॥ १६३ ॥

इति शिष्टापरिग्रहाधिकरणम् ॥ ३९ ॥

## भोक्त्रापत्त्यधिकरणम् ॥ ४० ॥

सूत्रम्—भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत् ॥ १५२ ॥

एको यस्यास्ति देहस्स भवति विविधानन्तदुःखैकभोक्ता
विश्वं देहः प्रभोश्चेत् स कथमतिपतेद्विश्वदुःखानुभूतिम् ।
इत्थं जीवेशसीमामपलपितुमनाः क्रोशभाजां श्रुतीनां
सम्राड्भृत्यादिनीत्या शममिह लभतां साम्यवैषम्यदर्शी ॥ १६४ ॥

इति भोक्त्रापत्त्यधिकरणम् ॥ ४० ॥

चिन्ता०—पूर्वपक्षाणां परस्परविरोधादिबाहुल्यादनुपपत्तिः प्रदर्शिता । एवं तर्हि सूक्ष्मचिदचिच्छरीरकपरमात्मनः स्थूलचिदचिच्छरीरकपरमात्मरूपविश्वसृष्टिरिति भवत्पक्षेऽपि बहुविरोधेन वस्त्वनुपपत्तिरित्यादि पूर्वनिरस्तानामेव वादिनामाशङ्कया पूर्वपक्षोत्थानमिति सङ्गतिः । तदर्थविचारस्तु—जीवशरीरकस्य ब्रह्मणस्स्वशरीरभूताज्जीवान्निरतिशयानन्दस्वभावतया यो विभाग उक्तस्स किं संभवति नेति । शरीरित्वे ब्रह्मणस्स्वशरीरभूतजीवसुखदुःखभाक्त्वं प्रसज्यते न वेति । किं दुःखादिभाक्त्वं शरीरित्वप्रयुक्तमुतान्यप्रयुक्तमिति । किं 'न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति' इति श्रुतिर्दुःखोपभोगस्य शरीरप्रयुक्ततामवगमयति नेति । किमत्र शरीरशब्दश्शरीरमात्रवचन उत पुण्यापुण्यशरीरपर इति । अत्र पूर्वपक्षवादी मन्यते—यस्यैको देहोऽस्ति स तु विविधानन्तदुःखभाग्भवति, युष्माकं परमात्मनो विश्वं देहश्चेत् स परमपुरुषस्स्वशरीरभूतविश्वनिमित्तकं दुःखं कथमतिपतेदिति । तदिदमाह—एक इति । इत्थं जीवेशसीमां शरीरसम्बन्धमात्रेणापलपितुमनाः पूर्वपक्षवादी क्रोशभाजां ब्रह्मरुद्रादिप्रवाहपराणां श्रुतीनां सम्राड्भृत्यादिनीत्या राजभृत्यन्यायेन साम्यं वैषम्यं च दृष्ट्वा शमं लभतां प्रशमं भजतामित्यर्थः । राजानोऽपि स्वतन्त्रा एव भुञ्जते राजभृत्यास्तु तत्सेवया तादृग्विधं भोगमुपभुञ्जते । तद्वत्स्वाभाविकमेव सर्वशरीरित्वादिकं भगवतः, भगवत्प्रसादादेव लब्धाधिकाराश्चतुर्मुखादयस्स्वकर्मानुरूपं भोगमुपभुञ्जते । नैतावता भगवत्साम्यसिद्धिः, वैषम्यस्य स्पष्टमेव दृष्टत्वात् । अतः कर्मैव सांसारिकभोगनिमित्तं नपुनः शरीरित्वम् ॥ १६४ ॥

इति भोक्त्रापत्त्यधिकरणम् ॥ ४० ॥

पद०—एको यस्येत्यादि । यस्य—चेतनस्य । एको देहोऽस्ति । सः—चेतनः । विविधानन्तदुःखैकभोक्ता भवति—नानाविधानामनन्तानां कदाप्यनुभवेन निश्शेषीकरणानर्हाणां दुःखानामेकभोक्ता मुख्यानुभोक्ता भवति । कदाचित् सुखलवलाभेऽपि सोऽपि दुःखपरम्परासन्दर्शनेन दुःखान्नातिरिच्यत इति भावः । प्रभोः—परमात्मनः । विश्वम्—जगत्सर्वम् । देहश्चेत्—शरीरञ्चेत् । सः—परमात्मा । विश्वदुःखानुभूतिम्—सर्वविधदुःखानुभवम् । कथमतिपतेत्—कथमतिलङ्घितुं शक्नुयात् । नहि ज्वलन्तं कालानलं कश्चित् सर्वाङ्गेषु समापात्य निर्वेदनस्तिष्ठेदिति भावः । इत्थं जीवेशसीमामपलपितुमनाः—एवंप्रकारया शङ्कया जीवेश्वरयोस्सुखदुःखानुभवतदभावव्यवस्थामपह्नोतुकामः कथकः । क्रोशभाजां श्रुतीनां सम्राड्भृत्यादिनीत्या—जीवेश्वरस्वभावतत्त्वदिदर्शयिषया

'समाने वृक्षे पुरुषो निमग्नो नीशया शोचति मुह्यमानः ।
जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः ॥'

'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति ॥'

इति परस्सहस्रवारं जीवेश्वरवैलक्षण्यज्ञापकं महोद्घोषं कुर्वतीनां श्रुतीनां सम्बन्धिना राजभृत्यादिन्यायेन । यथा लोके राजशासनानुवर्तिनां तदतिवर्तिनाञ्च राजानुग्रहनिग्रहकृतसुखदुःखयोगेऽपि न सशरीरत्वमात्रेण शासके राज्यपि शासनानुवृत्त्यतिवृत्तिनिमित्तसुखदुःखयोर्भोक्तृत्वप्रसङ्गः, तथाऽसौ सर्वेश्वरस्तत्तत्कर्मानुरूप्येण स्वदत्तसुखदुःखानुभवैर्जीवैस्सह सर्वशरीरेषु तेषुचान्तर्यामितया सदा निवसन्नपि स्वतस्सिद्धापहतपाप्मत्वादिरूपैश्वरस्वभावविशेषेणास्पृष्टदोषगन्ध एवावतिष्ठत इति दृष्टान्तोपपादनेन । साम्यवैषम्यदर्शी—एकशरीरावस्थानरूपं साम्यं, वैषम्यं 'पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति' इत्युक्तं कर्मफलानुभवतदभावरूपं जीवात्मपरमात्मनोर्वैलक्षण्यञ्च दृष्टवान् सन् । इह—पूर्वोक्तभोक्त्रापत्त्याशङ्कने । शमम्—शान्तिं वृथोद्यमनिवृत्तिम् । लभताम्—प्राप्नुताम् । इतः परं पारिप्लवशङ्कनायासान्निवर्ततामिति भावः ॥ १६४ ॥

इति भोक्त्रापत्त्यधिकरणम् ॥ ४० ॥

# आरम्भणाधिकरणम् ॥ ४१ ॥

सूत्रम्—तदनन्यत्वमारम्भणशब्दादिभ्यः ॥ १५३ ॥

कार्यं धर्मैर्विरुद्धैर्घट इव शकटात् कारणद्रव्यतोऽन्यद्
व्यापारः कारकाणां विफल इतरथेत्यर्धवैनाशिकोक्तौ ।
द्रव्यैक्येऽप्यस्तु सर्वं तदभिमतदशाभेदतोऽसच्छ्रुतिश्चे-
त्यध्यक्षाल्लाघवाच्च श्रुतिकथितजगद्ब्रह्मतादात्म्यमुक्तम् ॥ १६५ ॥

चिन्ता०—अत्र भगवता भाष्यकारेणैव साक्षात्संगतिरुक्ता 'असदिति चेन्न प्रतिषेधमात्रत्वात्' इत्यादिषु कारणभूताद्ब्रह्मणः कार्यभूतस्य जगतोऽनन्यत्वमुपपादितम् । इदानीं तदेवानन्यत्वमाक्षिप्य समाधीयते' इति । अथवा पूर्वं नविलक्षणत्वाधिकरणे कार्यकारणयोस्सालक्षण्यं वदतस्साङ्ख्यस्य तयोर्वैलक्षण्योपपादनेन प्रतिक्षेपः कृतः । अधुना पुनस्तयोर्वैलक्षण्यवत् स्वरूपभेदोऽपि स्यादिति वदतो वैशेषिकादेः कार्यकारणयोरनन्यत्वोपपादनेन निराकरणं क्रियत इति सङ्गतिः । तेन द्रव्यावस्थयो-र्द्वयोरपि नित्यत्ववादिनस्साङ्ख्यस्य पूर्वं निरासः, अधुना पुनर्द्वयोरपि तयोरनित्यत्ववादिनो वैशेषिकस्य निरास इति विभागः । तदर्थविचारस्तु—उक्तं ब्रह्मणो जगत्कारणत्वं संभवति नेति । किं ब्रह्मकार्यं जगद् ब्रह्मानन्यदुतान्यदिति । किमवस्थान्तरापन्नं कारणमेव कार्यमुत कारणादन्यत्कार्यमिति । किं बुद्धिशब्दान्तरादयोऽवस्थान्तरनिबन्धना उत स्वरूपान्यत्वनिबन्धना इति । किं 'वाचारम्भणं विकारो नामधेयम्' इत्यादीनि वाक्यानि बुद्धिशब्दान्तरादीनामवस्थान्तरनिबन्धनतामवगमयन्ति नेति । अत्रा-सत्कार्यवादिपक्षं तावदुपन्यस्यति—कार्यमिति । कार्यं कारणतोऽन्यद् भवितुमर्हति विरुद्धधर्मा-ध्यस्तत्वात्, यद् यदपेक्षया विरुद्धधर्माध्यस्तं तत् ततोऽन्यदेव यथा घटश्शकटादित्यसत्कार्यवादि-नामुपादानोपादेययोर्भेदसाधकमनुमानम् । अत्रानुग्राहकतर्कमाह—व्यापार इति । इतरथा—उपादानो-पादेययोर्भेदाभावे । कारकाणां व्यापारो निरर्थकस्स्यात् । नहि स्वार्थमेव कारकव्यापार इति वक्तुं युज्यते व्याघातादिति । इमं पक्षमनूद्य प्रतिक्षेप्तुमुपक्रमते—इत्यर्धवैनाशिकोक्ताविति । वैनाशिका बौद्धा द्रव्यविनाशवादित्वात् । अर्धवैनाशिकास्तु वैशेषिकास्सावयवद्रव्येष्ववयविनो

विनाशं वदन्ति न परमाणुपरममहतोः। तेनार्धवैनाशिका इत्युच्यन्ते। तत्प्रतिक्षेपप्रकारं दर्शयति— द्रव्यैक्य इति। कारणकार्यरूपयोर्द्रव्ययोरैक्ये सत्यपि विरुद्धधर्माध्यासादिकं सकलमप्यवस्थाभेदेन तालीपलाशताटङ्कन्यायाद् युज्यते। ननु मया द्रव्यभेद उक्तः, त्वया पुनरवस्थाभेदः, अत्र को विशेष इत्याशङ्क्योत्तरमाह—तदभिमतदशाभेदत इति। अयमर्थः—कारणद्रव्यभेदवादिना कारणगतावस्थाभेदोऽप्यङ्गीक्रियते तथा द्रव्यभेदोऽपि, तथाचोभयविधाङ्गीकारे गौरवम्, ततो वरमवस्थाभेदमात्राङ्गीकारेण लाघवपक्षानुसरणम्, तेनैवावस्थाभेदेन कृत्स्नस्यापि विरुद्धधर्मादिदोषस्य भेदकत्वेन भवतोपन्यस्तस्योपपन्नत्वादिति। अवस्थाभेदानङ्गीकारे द्रव्यभेदोऽपि भवतो न सिध्येदिति हृदयम्। असच्छ्रुतिश्चेति—'असदेवेदमग्र आसीत्' इति कारणावस्थायां विश्वस्यासत्त्वमुक्तम्, कार्यावस्थायां सत्त्वं च सुप्रसिद्धम्, तत्कथमुपपद्यत इति चोद्यमवशिष्यते, तच्च परिहृतमेव कार्यावस्थायाः कारणावस्थायामसत्त्वात्। अथाप्यस्मत्पक्षं परित्यज्य त्वत्पक्षपरिग्रहे किं नियामकमित्याशङ्क्य नियामकं हेतुत्रयमाह—अध्यक्षादित्यादिना। प्रत्यक्षं तावदेकं नहि तन्तुव्यतिरेकेण पटो नाम किञ्चिदुपलभ्यते अपितु तन्तव एव पटत्वावस्थामापन्नाः पट इति नामान्तरेण व्यपदिश्यन्ते। हेत्वन्तरमाह—लाघवादिति। पटद्रव्यस्य तन्त्ववस्थाभेदस्य चाङ्गीकारे गौरवम्, अवस्थामात्राङ्गीकारे लाघवम्। गौरवपक्षं परित्यज्य लाघवपक्षानुसरणमेव न्याय्यम्। श्रुतिकथितेति—तृतीयो हेतुरुच्यते। कार्यकारणभूतयोर्जगद्ब्रह्मणोस्तादात्म्यं 'सदेव सोम्येदमग्र आसीत्' इत्युच्यते। नहि श्रुतहानमश्रुतकल्पनं वा न्यायविदोऽनुमन्यन्ते॥ १६५॥

पद०—कार्यं धर्मैरित्यादि। कार्यम्—सावयवत्वादिभिः कार्यत्वेन सिद्धमिदं जगत्। विरुद्धैर्धर्मैः—कारणासंसर्गिभिः कार्यैकनियतैस्तत्तद्वस्तुनिष्ठैरवस्थारूपैर्धर्मैः। घटश्शकटादिव— शकटावृत्तिघटत्वाश्रयः पदार्थो घटावृत्तिशकटत्वाश्रयात् वस्तुन इव। कारणद्रव्यतः—कारणभूतात् द्रव्यात्। अन्यत्—भिन्नमेव। इतरथा—कारणात् कार्यस्यान्यत्वानङ्गीकारे। कारकाणां व्यापारो विफलः—घटादिकार्यनिष्पत्त्यर्थतया दृष्टानां कुलालचक्रचीवरादिकारकाणां व्यापारस्य नैरर्थक्यं प्रसज्यते। नहि कारणात्मना पूर्वमेव सिद्धे कार्ये सति पुनस्तन्निष्पत्त्यर्थं कारकव्यापार इति वक्तुं युज्यते व्याघातादिति भावः। इत्यर्धवैनाशिकोक्तौ—उक्तप्रकारेण वैशेषिकाणामुक्तौ प्रवृत्तायाम्। द्रव्येष्ववयविमात्रविनाशवादित्वात् अर्धविनाशवादिनो वैशेषिका अर्धवैनाशिकाः। द्रव्यैक्येऽपि—कार्यकारणयोस्स्वरूपैक्येऽपि। तदभिमतदशाभेदतः—वैशेषिकैः कारणात् कार्यस्यान्यत्वं वदद्भिः कार्यावस्थायाः कार्यस्य च कारणादतिरिक्तस्याङ्गीकारात् तदङ्गीकृतैकदेशभूतावस्थाभेदेनैव। सर्वम्—बुद्धिशब्दान्तरादिकम्। अस्तु—उपपद्यताम्। असच्छ्रुतिश्च—'असदेवेदमग्र आसीत्' 'असद्वा इदमग्र आसीत्' इतिश्रुतिश्च। अस्तु—उपपद्यताम्।

अवस्थाभेदेन पत्रताटङ्कन्यायेन बुद्ध्यन्तरं शब्दान्तरञ्चोपपद्यताम्, कार्यावस्थायाः कारणदशायामभावात् असच्छ्रुतिश्चोपपद्यतामिति भावः। इति—एवमुपपत्त्या। अध्यक्षात्—तन्तव एव व्यतिषङ्गविशेष-भाजः पट इति प्रत्यक्षात्। लाघवाच्च—कारणादन्ययोः कार्यावस्थातद्वद्वयचिद्रव्यरूपयोर्द्वयोरङ्गीकारा-पेक्षया कार्यकारणयोर्द्रव्यैक्येऽपि अवस्थाभेदमात्राङ्गीकारेण लाघवाच्च। श्रुतिकथितजगद्ब्रह्मतादात्म्यमुक्तम्-प्रमाणभूतया श्रुत्या 'सदेव सोम्येदमग्र आसीत् तद्धेदं तर्ह्यव्याकृतमासीत् तन्नामरूपाभ्यां व्याक्रियत' इत्यादिरूपया प्रतिपादितं कार्यकारणभूतयोर्जगद्ब्रह्मणोस्तादात्म्यमुक्तम्। सूत्रकारैर्भाष्यकारैश्चेति शेषः। श्रुत्युक्तत्वादुपपन्नत्वात् प्रत्यक्षाल्लाघवाच्च सत्कार्यवाद एव सूत्रकारादिभिरङ्गीकृत इति भावः ॥ १६५ ॥

मायोपाधिस्वशक्तिव्यतिकरितपरब्रह्ममूलः प्रपञ्चो
येषां तेऽप्यद्वितीयश्रुतिमवितथयन्त्यत्र तत्तद्विशिष्टे।
अप्राधान्यात् तथा नः प्रकृतिपुरुषयोरन्तरात्मप्रधाने
वाक्येऽस्मिन् स्थूलसूक्ष्मान्वय इति जगतोऽनन्यभावोपपत्तिः ॥१६६॥

चिन्ता०—अत्र कश्चिच्चोदयति-सूक्ष्मचेतनाचेतनविशिष्टं ब्रह्मैव स्थूलचेतनाचेतनवैशिष्ट्येनावस्थान्तरं भजेदिति कार्यकारणयोरनन्यत्वं भवन्तो निर्वहन्ति एवञ्च सति कारणावस्थायामद्वितीयश्रुतिर्व्याहन्येत ब्रह्मविशेषणयोश्चेतनाचेतनयोः कारणावस्थायामपि विद्यमानत्वादिति। एतदनूद्य प्रतिबन्द्या निर्वोढुमुपक्रमते—मायेति। अयमत्र भावः—ये तावन्मायोपहितं ब्रह्म जगदुपादानमिति वदन्ति येच उपाधिव्यतिक-रितम्, ये च स्वशक्तिव्यतिकरितम्, तेषामपि पक्षे मायादीनां ब्रह्मविशेषणानां कारणावस्थायां विद्य-मानत्वादद्वितीयश्रुतिव्याकोपस्तुल्यएव। मायादीनामप्राधान्यादद्वितीयश्रुतिव्याघातं यदि परिहरन्ति तर्हि वयमपि चेतनाचेतनयोरप्राधान्याददद्वितीयश्रुतिव्याघातं परिहरामः। एवञ्च सति सूक्ष्मचिदचिद्विशिष्टं कारणं स्थूलचिदचिद्विशिष्टं कार्यमित्यस्मिन् पक्षे न कश्चिदपि दोषः। शब्दान्वयस्तु--येषां मायोपाधिस्वश-क्तिव्यतिकरितपरब्रह्ममूलः प्रपञ्चस्तेऽप्यत्राद्वितीयश्रुतिं तत्तद्विशिष्टे विशेषणाप्राधान्यादवितथयन्ति तथैवास्माकमप्यन्तरात्मप्रधाने वाक्ये प्रकृतिपुरुषयोस्स्थूलसूक्ष्माकारेण विशेषणतया ऽन्वय इति कारणभूतब्रह्मापेक्षया कार्यभूतस्य जगतोऽनन्यत्वोपपत्तिरिति ॥ १६६ ॥

पद०—मायोपाधीत्यादि। येषाम्—शङ्करयादवप्रकाशभास्कराणाम्। प्रपञ्चः—कार्यभूतोऽयं लोकः। मायोपाधिस्वशक्तिव्यतिकरितपरब्रह्ममूलः—मायाव्यतिकरितपरब्रह्ममूलः, उपाधिव्यतिकरित-

परब्रह्ममूलः, स्वशक्तिव्यतिकरितपरब्रह्ममूलः, तथाङ्गीकृत इत्यर्थः । तेऽपि—शङ्करादयोऽपि । अत्र—कारणवाक्यसमुदाये । अद्वितीयश्रुतिम्—'एकमेवाद्वितीयम्' इति द्वितीयराहित्यपरश्रुतिम् । तत्तद्विशिष्टे—मायोपाधिशक्तिविशिष्टेऽपि ब्रह्मणि । अप्राधान्यात्—विशेषणीभूतानां मायोपाधिशक्तीनामप्रधानत्वमवलम्ब्यैव । अवितथयन्ति—सार्थकयन्ति । मायादिद्वितीयसद्भावेऽपि प्रधानस्य ब्रह्मण एकत्वादेवाद्वितीयश्रुत्यर्थमुपपादयन्तीति भावः । तथा—भवदुपपादनप्रकारेणैव । नः—अस्माकमपि । अन्तरात्मप्रधाने ऽस्मिन्वाक्ये—प्रकृतिपुरुषान्तरात्मभूतपरब्रह्मप्रधाने 'एकमेवाद्वितीयम्' इत्यस्मिन्वाक्ये । प्रकृतिपुरुषयोः—प्रधानजीवयोः । स्थूलसूक्ष्मान्वय इति—स्थूलसूक्ष्माकारेण विशेषणतयाऽन्वय इति । जगतः—कार्यभूतस्य प्रपञ्चस्य । अनन्यभावोपपत्तिः—कारणभूतब्रह्मापेक्षयाऽनन्यत्वोपपत्तिः । विशेषणान्वयो न विशेष्यैक्यविरोधीति अद्वितीयत्वश्रुतिरुपपन्नैवेति भावः ॥ १६६ ॥

विश्वारम्भे विवर्तं शकलपरिणतिं शक्तिशेषस्य सूतिं
व्यक्त्युल्लासौ विसृष्टिं विकृतिमनियतां तत्त्वपङ्क्तौ च सृष्टिम् ।
तत्तद्वाक्यैकदेशस्वरस इति मुधा कल्पयन्तस्तु मुग्धाः
सर्वश्रुत्यैकरस्यप्रणयिभिरधरीचक्रिरे तत्त्वविद्भिः ॥ १६७ ॥

इत्यारम्भणाधिकरणम् ॥ ४१ ॥

चिन्ता०—एवं स्वसिद्धान्तेन सर्वश्रुत्यनुगुणं जगदुत्पत्तिप्रकारमुक्त्वा तत्तद्वादिपरिकल्पितान् पक्षाननूद्य तेषामाम्नायविरुद्धत्वादसत्पक्षत्वमाह—विश्वारम्भ इति । विवर्तं रज्ज्वादौ सर्पभूदलनाम्बुधारादिवत् मिथ्यापरिकल्पतम्, शकलपरिणतिं चिदचिदीश्वराकारेण त्र्यंशे ब्रह्मण्यचिदंशस्य शकलस्य परमार्थपरिणतिम्, शक्तिशेषस्य सूतिं चिदचिदीश्वरशक्तित्रयात्मके परस्मिन्ब्रह्मणि तत्तच्छक्तिभेदस्य सृष्टिम्, पूर्वं विद्यमानस्य कूर्मावयवस्याभिव्यक्तिवत् कारणे विद्यमानस्य कार्यस्याभिव्यक्तिम्, मुकुलावस्थायामनुल्लसितस्य पुष्पस्य कालेनोल्लासवद्विश्वस्योल्लासम्, भस्त्रिकान्तर्गतद्रव्यविसर्जनवद्विसृष्टिम्, विकृतिं सन्मात्रस्यैव ब्रह्मणः प्रपञ्चाकारेण परिणतिम्, अनियतां तत्त्वपङ्क्तौ च सृष्टिं कदाचिदग्नेरापः, कदाचिदद्भ्योऽग्निरिति नियममन्तरेण जगत्सृष्टिं श्रुतौ तेषुतेषु वाक्यैकदेशेषु स्वरसोऽयमर्थ इति मुधा कल्पयन्तो बालप्रायाः सर्वश्रुत्यैकरस्यप्रणयिभिरधरीचक्रिरे निरस्ता इत्यर्थः । सूक्ष्मचिदचिद्विशिष्टाद्ब्रह्मणः

स्थूलचिदचिद्विशिष्टं ब्रह्मैवोत्पद्यत इतीदमेव तत्त्वम् । एतद्विरुद्धास्सर्वे सिद्धान्ता निरसनीया इत्यर्थः ॥ १६७ ॥

इत्यारम्भणाधिकरणम् ॥ ४१ ॥

पद०—विश्वारम्भ इत्यादि । विश्वारम्भे—जगदुत्पत्तिविषये । विवर्तम्—कार्यात्मकपरिणामाश्रयवस्त्वधिष्ठानत्वम्, यद्वा कार्यसत्ताविसजातीयसत्ताश्रयत्वे सति कारणत्वम् । शकलपरिणतिम्—चिदचिदीश्वराकारेण त्र्यंशे ब्रह्मणि अचिदंशात्मकस्य शकलस्य परमार्थभूतां परिणतिं परिणामम् । शक्तिशेषस्य सूतिम्—शेषशब्दो विशेषपरः । चिदचिदीश्वरशक्तित्रयात्मके परस्मिन्ब्रह्मणि अचेतनाख्यशक्तिभेदस्य सृष्टिम् । व्यक्त्युल्लासौ—कारणे विद्यमानस्यैव कार्यस्याभिव्यक्तिम्, मुकुलावस्थायामनुल्लसितस्य पुष्पस्य कालेनोल्लासवत् विश्वस्योल्लासम् । विसृष्टिम्—भस्त्रिकान्तर्गतद्रव्यविसर्जनवत् विसृष्टिम् । विकृतिम्—सन्मात्रस्यैव ब्रह्मणः प्रपञ्चाकारेण परिणतिम् । तत्त्वपङ्क्तौ अनियतां सृष्टिञ्च—कदाचित् अग्नेरापः, कदाचिदद्भ्यश्चाग्निरिति नियममन्तरेण जगत्सृष्टिम् । तत्तद्वाक्यैकदेशस्वरस इति—तेषुतेषु वाक्यैकदेशेषु स्वरसोऽयमर्थ इति । मुधा—वृथा । कल्पयन्तः—सिद्धान्तयन्तः । मुग्धास्तु—बालप्रायास्तु । सर्वश्रुत्यैकरस्यप्रणयिभिः—चिदचिदीश्वरात्मकस्य तत्त्वत्रयस्य परस्परविलक्षणं स्वरूपं स्वभावभेदांश्च वदन्तीनाम्, चेतनानां नित्यानामनादिकर्मप्रवाहमूलकं बन्धं केनचिदुपायेनानुष्ठितेन तन्निवृत्तिं च वदन्तीनाम्, सर्वेषामपि वस्तूनां ब्रह्मप्रति शरीरतां तान्प्रति ब्रह्मणश्शरीरितां तथा शरीरितयान्तरवस्थानेनाभेदनिर्देश इति वदन्तीनाम्, सूक्ष्माकारेण विद्यमानानामेव वस्तूनामवस्थाभेदेन प्रलयमुत्पत्तिञ्च वदन्तीनां श्रुतीनामैकरस्ये अविरुद्धार्थप्रतिपादनकृतैकरसतायां प्रणयशालिभिस्तत्परैः । तत्त्वविद्भिः—यथावस्थितार्थज्ञानशालिभिस्सूत्रकारवृत्तिकारभाष्यकारादिभिः । अधरीचक्रिरे—अधरीकृताः, निरस्ता इत्यर्थः ॥ १६७ ॥

इत्यारम्भणाधिकरणम् ॥ ४१ ॥

## इतरव्यपदेशाधिकरणम् ॥ ४२ ॥

सूत्रम्—इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॥ १५८ ॥

उक्तेऽनन्यत्वपक्षे चिदपि परिणतिर्ब्रह्मणस्स्यात् ततस्त-
जीवैक्यं तत्त्वमस्याद्यवगतमहतं दुःखसिन्धुश्च जीवः ।
अभ्रान्तस्तु स्वदुःखं न सृजति नच तत्क्रीडयाप्यस्य मैवं
तात्स्थ्येनानन्यतोक्तेस्तदपि चिदचितोस्तच्छरीरत्वसिद्धेः ॥ १६८ ॥

इति इतरव्यपदेशाधिकरणम् ॥ ४२ ॥

चिन्ता०—अत्र सङ्गतिश्श्रीविष्णुचित्तार्यैर्व्यक्तमुक्ता 'असदिति चेदित्यत्र प्रस्तुतमप्यनन्यत्वं तस्याधिकरणान्तरत्वात्तत्र न साधितम्, आरम्भणाधिकरणस्य तत्प्रयोज्यत्वात् प्रतिपादनभेदाच्च । एवमनन्यत्वे समर्थितेऽनभिमतमापतितमित्याह—इतरेति' इति । तदर्थविचारस्तु—उक्त ब्रह्मणो जगत्कारणत्वं संभवति न वेति । किं ब्रह्मणो जगत्स्रष्टृत्वे हिताकरणादिदोषः प्रसज्यते न वेति । किं ब्रह्मणस्तत्त्वमसीति सामानाधिकरण्यावगततादात्म्यं स्वरूपैक्यलक्षणमुतात्मशरीरभावलक्षणमिति । किमात्मशरीरभावलक्षणतादात्म्य एव 'अस्मान्मायी' 'पृथगात्मानम्' इत्यादिभेदश्रुतिसामञ्जस्यमुतैक्यलक्षणेऽपीति । अत्र पूर्वपक्षमुक्त्वा तत्प्रतिक्षेपमाह—उक्त इति । पूर्वाधिकरणे कार्यकारणयोरनन्यत्वमुक्तम् । अस्मिन्पक्षे चेतनस्यापि कार्यत्वात् तस्यापीश्वरानन्यत्वं वाच्यम् । स तु चेतनस्संसारदुःखं सर्वतोऽप्यनुभवति । ईदृशदुःखभाक्त्वमीश्वरस्य चेतनानन्यत्वेन पूर्वं प्रतिपादितस्य कथं संभवतीति संगतिरप्यत्राभिव्यज्यते । शब्दान्वयस्तु—अनन्यत्वपक्षे भवद्भिरित्थमुक्ते सति चेतनोऽपि ब्रह्मपरिणतिः स्यात् ततस्तस्माद्धेतोस्तत्त्वमस्याद्यवगतं तज्जीवैक्यमहतं स्यादेव । तथा ऐक्यमस्तु नाम । तथापि विरोधो दृश्यते । जीवो दुःखसिन्धुरेव । अस्तु दुःखसिन्धुर्जीवस्ततः किं नश्छिन्नमित्याशङ्क्याह—अभ्रान्त इति । किमीश्वरो भ्रान्त उताभ्रान्तः ? भ्रान्तश्चेदीश्वर एव न स्यात् । अभ्रान्तश्चेत्स पुनर्जीवस्वात्मनोरैक्यं जानाति न वा ? न जानाति चेत्सर्वज्ञो न स्यात् । जानाति चेत् स्वात्मनो जीवैक्यं जानन् कथमिव जीवे दुःखं जनयेत् । क्रीडया दुःखं जनयतीति चेत् तच्च न । न खलु क्रीडया स्वशिरश्छेदमनुन्मत्तः कुरुत

इति पूर्वपक्षमाशङ्क्य प्रतिक्षिपति—नैवमिति । तदेव विवृणोति—तात्स्थ्येनेति । अयमर्थः—नहि वयं जीवब्रह्मणोस्स्वरूपैक्येनानन्यत्वं ब्रूमः, अपितु 'अवस्थितेरिति काशकृत्स्नः' इति जीवान्तर्यामित्वेन भगवतोऽवस्थानादेव । तच्चान्तर्यामित्वेनावस्थानमध्यात्मशास्त्रेषु शरीरात्मभावप्रतीत्युत्पादकश्रुतिसिद्धाच्छरीरात्मभावादेवेत्यर्थः ॥ १६८ ॥

इति इतरव्यपदेशाधिकरणम् ॥ ४२ ॥

पद०—उक्तेऽनन्यत्वपक्ष इत्यादि । उक्ते—आरम्भणाधिकरणप्रतिपादिते । अनन्यत्वपक्षे—जगतस्तत्कारणभूतस्य वस्तुनश्चानन्यत्वपक्षे । चिदपि—चेतनो जीवोऽपि । ब्रह्मणः परिणतिस्स्यात्—सर्वकारणत्वेनाङ्गीकृतस्य ब्रह्मणः कार्यत्वेन तत्परिणतिरूपएव भवेत् । ततः—एवं जीवस्यापि ब्रह्मकार्यत्वेन ब्रह्मानन्यत्वोपपादनात् । तत्त्वमस्याद्यवगतम्—'तत्त्वमसि, सर्वं खल्विदं ब्रह्म, ब्रह्मदाशा ब्रह्मदासाः' इत्यादिश्रुतिभिरुपपादितम् । जीवैक्यम्—जीवस्य ब्रह्मणा साकं स्वरूपैक्यम् । अहतं स्यात्—अव्याहतं भवेत् । अस्तु किं ततउपरीति चेदुच्यते जीवश्च—ब्रह्मैक्याश्रयत्वेनोक्तो जीवश्च । दुःखसिन्धुः—दुःखसमुद्रभूतः, अनन्तदुःखाश्रयो हि । अस्तु, किं नश्छिन्नमिति चेत्—अभ्रान्तस्तु स्वदुःखं न सृजति—सर्वज्ञत्वात् भ्रान्तिशून्य ईश्वरः स्वस्यैव जीवरूपेणावस्थितस्य दुःखजनकं जगत् स्वयं न सृजेत् । तत्—जगत्करणम् । अस्य क्रीडयापि च न—परमात्मनः क्रीडया निमित्तभूतयापि च न सम्भवति । न खल्वनुन्मत्तः कश्चित् क्रीडया स्वशिरश्छिनत्ति । अतो जगदकरणमेव हितमिति । मैवम्—एवं मा शङ्किष्ठाः । तात्स्थ्येनानन्यतोक्तेः—तत्स्थत्वेन जीवात्मन्यन्तरात्मतया अवस्थानेनानन्यत्वस्योक्तत्वात् । 'तत्स्थत्वादनुपश्यन्ति ह्येक एवेति साधवः' इति वचनेन 'अवस्थितेरिति काशकृत्स्नः' इति सूत्रेण च ब्रह्मणो जीवात्मन्यन्तरात्मतयावस्थानात् जीवब्रह्मणोरयःपिण्डाग्न्योरिवाभेदः नतु स्वरूपाभेदः, अतो नोक्तदोषः । तदपि—ब्रह्मणो जीवात्मन्यन्तरात्मतयावस्थानञ्च । चिदचितोस्तच्छरीरत्वसिद्धेः—'यः पृथिव्यां तिष्ठन्' इत्यारभ्य 'यस्य पृथिवी शरीरम्, यस्यापश्शरीरम्, यस्यात्मा शरीरम्, यस्य विज्ञानं शरीरम्' इत्यादिश्रुत्या चेतनाचेतनयोः परमात्मशरीरत्वस्य सिद्धत्वात् ॥ १६८ ॥

इति इतरव्यपदेशाधिकरणम् ॥ ४२ ॥

## उपसंहारदर्शनाधिकरणम् ॥ ४३ ॥

सूत्रम्—उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि ॥ १६२ ॥

शक्तौ कर्तृप्रकृत्योरुपकरणगणोपस्थितौ कार्यकृत्त्वं
तस्मादग्रे सदेकं किमुपकरणयेदित्यसत् शक्तिभेदात् ।
क्षीरायस्कान्तलूतात्रिदशमुनिमुखान्वीक्ष्य तोष्टव्यमस्मिन्
सङ्कल्पादेव जीवो नुदति निजवपुर्विश्वरूपस्तथेशः ॥ १६९ ॥

इति उपसंहारदर्शनाधिकरणम् ॥ ४३ ॥

चिन्ता०—'परस्य ब्रह्मणस्सर्वज्ञस्य सत्यसङ्कल्पस्य स्थूलसूक्ष्मावस्थसर्वचेतनाचेतनवस्तुशरीरतया सर्वप्रकारत्वेन सर्वात्मत्वं सकलेतरविलक्षणत्वञ्चाविरुद्धमिति स्थापितम् । इदानीं सत्यसङ्कल्पस्य परस्य ब्रह्मणः सङ्कल्पमात्रेण विचित्रजगत्सृष्टियोगो न विरुद्ध इति स्थाप्यते' इति भाष्यकारैरेव सङ्गतिरुक्ता । तदर्थविचारस्तु—किं ब्रह्मणो जगत्कारणत्वं संभवति नेति । किं कार्यजननसमर्थस्य कारणस्य जनकत्वं नियमेन सहकार्यन्तरापेक्षमुत निरपेक्षमेवेति । पूर्वत्र हिताकरणादिदोषप्रसक्तिः परिहृता, अत्र पुनः पूर्वपक्षिणाभिहितं तादृशं दोषान्तरमपि परिहरति—शक्ताविति । अयमर्थः—कर्ता स भवतूपादानं वा द्वयोरपि स्वरूपशक्तौ विद्यमानायामप्यपेक्षितोपकरण सन्निधान एव कार्यकरत्वं दृष्टं तस्मात् 'असदेवेदमग्र आसीत्' इत्युक्ते सर्वसंहारकाले निमित्तोपादानरूपकारणद्वयात्मा परमपुरुषः किमुपकरणयेत् किं वा सहकारीकुर्यादिति । उक्तं पूर्वपक्षं प्रतिक्षिपति—असदिति । अत्र हेतुमाह—शक्तिभेदादिति । कारणानि हि लोके नियतानि । तेषां शक्तयोऽपि नियताः । शक्तिश्च स्वरूपशक्तिः सहकारिशक्तिरिति द्विप्रकारा । तथा च घटोत्पत्तावन्यादृशशक्तयः पटोत्पत्तावन्यादृशक्तय इति दृष्टमेतन्नापलपनीयम् । तथाचेश्वरस्यापि स्वरूपप्रकृतिपुरुषकालात्मिकाः शक्तयः कारणावस्थायामपि सन्ति । अतो न दोष इत्यर्थः । अत्र तत्तदुचितसहकारिशक्त्युपादाने बहून्दृष्टान्तानाह—क्षीरेत्यादिना । क्षीरगातञ्चनेन दधि करोति । आतञ्चनं तु शीघ्रं दधिभावार्थं रसविशेषार्थं च । अयस्कान्तः सन्निधिमात्रेणायोद्रव्यमाकर्षति । लूता लालसहिता तन्तुं तनोति । देवा ऋषयश्च स्वाभाविकप्रभावसहिता विचित्राणि तत्तत्कार्याणि कुर्वन्ति । एवमन्यान्यप्युदाहरणानि

द्रष्टव्यानि। तान्दृष्टान्तान् वीक्ष्य भवता सन्तोष्टव्यम्। अयथार्थोक्तिं परित्यज्य सुखेनावस्था-तव्यमित्यर्थः। सर्वलोकप्रसिद्धं परवादिभिरप्यनतिलङ्घनीयं दृष्टान्तान्तरमाह—सङ्कल्पादिति। जीवो हि कुलालादिस्सङ्कल्पमात्रेण शरीरं नुदति स्वशरीराधिष्ठितदण्डादिना चक्रादिकम्, यत्र यदपेक्षितं तत्र तत्कार्यं कर्तुमित्यर्थः। एवमीश्वरोऽपीत्याह—विश्वरूप इति। विश्वशरीरत्वादीश्वरोऽपि सङ्कल्प-मात्रेण सर्वं प्रणयतीत्यर्थः॥ १६९॥

इति उपसंहारदर्शनाधिकरणम्॥ ४३॥

पद०—शक्तावित्यादि। कर्तृप्रकृत्योः—कुलालमृदादिरूपयोर्निमित्तोपादानयोर्द्वयोरपि। शक्तौ—कार्योपयोगिकारणवस्तुविशेषणरूपायां विद्यमानायामपि। उपकरणगणोपस्थितौ—उपकरणगणसन्नि-धान एव। कार्यकृत्त्वम्—कार्यकरत्वं दृष्टम्। तस्मात्—शक्तस्याप्युपकरणकलापसन्निधिमपेक्ष्यैव कार्यकरणदर्शनात्। अग्रे—सृष्टेः पूर्वकाले। एकं सत्—'एकमेवाद्वितीयम्' इति वस्त्वन्तरशून्य-तयावगतं परं ब्रह्म। किमुपकरणयेत्—स्वचिकीर्षिते विश्वसर्गे किं वस्तु सहकारीकुर्यात्। तदानीं कस्याप्यभावादिति भावः। इत्यसत्—इति शङ्कनमसाधु। शक्तिभेदात्—

'शक्तयस्सर्वभावानामचिन्त्यज्ञानगोचराः।
यतोऽतो ब्रह्मणस्तास्तु सर्गाद्या भावशक्तयः।
भवन्ति तपतां श्रेष्ठ पावकस्य यथोष्णता।'

इत्याद्युक्तरीत्या ब्रह्मणो विलक्षणदृष्टपरिकरशून्यस्यापि शक्तियोगेन प्रकृतिपुरुषकालात्मकविचित्र जगत्सृष्टेरुपपन्नत्वात्। क्षीरायस्कान्तलूतात्रिदशमुनिमुखान् वीक्ष्य, अस्मिंस्तोष्टव्यम्—दधिरूपेण स्वयमेव परिणममानं क्षीरं सन्निधिमात्रेणायस आकर्षकमयस्कान्तं तन्तुजालं तन्वतीं लूतां सङ्कल्पमात्रेण विचित्रवस्तुसृष्टिकारिणस्त्रिदशान् विश्वामित्रादीन् महर्षींश्च दृष्टान्तभूतान् समीक्ष्य उपपादिते ब्रह्म दृष्टपरिकरशून्यमपि शक्तिविशेषात् जगत्सृजतीत्येतस्मिन् विषये सन्तोष्टव्यम्। अयथार्थोक्तिं विसृज्य सुखेनावस्थेयमित्यर्थः। बाह्यदृष्टान्तास्सन्तु, जीवस्सङ्कल्पादेव निजवपुर्यथा नुदति तथा विश्वरूप ईशो निजवपुर्नुदति—चेतनः, चलत्वयं हस्त इत्यादिमानसस्वात्मैकवेद्यसङ्कल्पमात्रेणैव स्वकीयं हस्तपा-दादिकं शरीरं यथा प्रेरयति तथैव विश्वशरीरः परमात्मापि स्वकीयं सूक्ष्मं चेतनाचेतनात्मकं शरीरं स्थूलीभवनाय प्रेरयतीतीदमेकमेवालं निदर्शनमिति भावः॥ १६९॥

इति उपसंहारदर्शनाधिकरणम्॥ ४३॥

## कृत्स्नप्रसक्त्यधिकरणम् ॥ ४४ ॥

सूत्रम्—कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा ॥ १६४ ॥

कृत्स्नं कार्यात्मना चेत् परिणमति परं नावशिष्येत किञ्चित्
यद्यंशान्निष्कलत्वश्रुतिविहतिरिदं स्याद् विशिष्टेऽपि तस्मिन् ।
ब्रह्मोपादानतैवं न घटत इति चेन्न स्वपक्षेषु साम्यात्
तन्मानात्तद्गृहीतौ श्रुतिमितमपि तल्लोकवत् स्वीकुरुष्व ॥ १७० ॥

चिन्ता०—अस्तु वा कालरूपबाह्यसहकारिसहितं जगत्कारणं ब्रह्म तथापि स्वयमपि सर्वचिद्-चिच्छक्तियुक्तं निरवयवं परमात्मस्वरूपं कथमिव 'बहु स्याम्' इति सङ्कल्प्यानेककार्यतयावतिष्ठत-इत्याशङ्क्या सङ्गतिः । तदर्थविचारस्तु—प्रागुक्तमेव जगत्कारणत्वं सम्भवति नेति । किं ब्रह्मणो जग-त्कारणत्वे निरवयवत्वश्रुतिर्बाध्यते न वेति । पूर्वं सहकार्यभावेन कारणत्वसामान्यचोद्यं परिहृत्येदानी-मुपादानत्वरूपकारणत्वविशेषे चोद्यविशेषमाचक्षाणस्य परिहारः क्रियत इतीममर्थमाह—कृत्स्नमिति । अयमत्र विकल्पः—कारणभूतं ब्रह्म कृत्स्नमप्येककार्यात्मना परिणमत्युतैकदेशेन । यदि कृत्स्नं तर्हि ब्रह्मण एककार्यात्मना परिणतस्यावशेषाभावात् कार्यान्तरात्मना परिणाम एव न स्यात् । यद्येकदेशेन परिणामः निष्कलत्वश्रुतीनां निरवयवत्वश्रुतीनां नित्यमेव व्याकोपः स्यादिति । इदं तु दूषणं न केवलं ब्रह्मस्वरूपकारणत्वे, अपितु चेतनाचेतनविशिष्टकारणत्वेऽपि तुल्यमित्याह—इदमिति । तस्मिन्—ब्रह्म-णीत्यर्थः । एवं दूषणमुक्त्वा पूर्वपक्षे तत्फलमाह—ब्रह्मेति । एवं ब्रह्मण उपादानत्वं न घटत इत्यन्वयः । इत्थमाशङ्कां परिहरिष्यन् पूर्वपक्षं निराकरोति—नेति । मायाविशिष्टं ब्रह्म कारणमिति मायावादिनः, उपाधिविशिष्टमिति भास्करीयाः, शक्तिविशिष्टमिति यादवप्रकाशीयाः, तेन तेष्वपि पक्षेषु दूषणं समानमित्याह—स्वपक्षेष्विति । एवं प्रतिबन्दीमुक्त्वा तेषामभिमतः प्रतिबन्दीपरिहारोऽपि तुल्य इत्याह—तन्मानादिति । अयं किल तेषां प्रतिबन्दीपरिहारः—मायोपाधिशक्तिविशिष्टब्रह्मप्रतिपादक-प्रमाणबलाचादृशं ब्रह्मास्माभिः स्वीक्रियत इति । एवं प्रमाणाभासबलात् स्वपक्षस्वीकारे साक्षात्प्रमाणैः श्रुतिशतैः प्रतिपन्नमस्मत्पक्षपरिगृहीतं चेतनाचेतनविशिष्टं ब्रह्म सर्वलोकानुकूलं स्वीकुरुष्वेति पक्षान्तराणि

प्रत्यक्षप्रमाणविरुद्धत्वात् स्वीकर्तुमयोग्यानि, अस्मत्पक्षस्तु लोकवेदाविरुद्धत्वात् स्वीकर्तुं योग्य इति भावः ॥ १७० ॥

पद०—कृत्स्नमित्यादि । कृत्स्नम्—कारणभूतं ब्रह्मवस्तु कृत्स्नमपि । कार्यात्मना परिणमति चेत्—एकैककार्यात्मना परिणमतोत्यङ्गीक्रियते चेत् । परम्—कार्यान्तरात्मना परिणामविषये । किञ्चित्—कोऽपि ब्रह्मवस्तुभागः । नावशिष्येत—अवशिष्टो न भवेत् । ततश्च कार्यान्तरात्मना परिणाम एव न स्यादिति भावः । अंशाद्यदि—ब्रह्मवस्त्वेकदेशेन परिणामो यदि । निष्कलत्वश्रुतिविहतिः—निरवयवत्वश्रुतीनां व्याकोपः स्यात् । इदम्—दूषणम् । विशिष्टेऽपि तस्मिन् स्यात्—चेतनाचेतनविशिष्टतयाङ्गीकृतेऽपि ब्रह्मणि स्यात् । एकस्मिन्नचेतनविशिष्टे चेतने ब्रह्मवस्तु कात्स्न्येनान्तर्यामि ? उतैकदेशेन ? आद्ये वस्त्वन्तरात्मत्वं न स्यात्, भागभेदेन चेत् सावयवत्वं स्यादिति दूषणस्य तुल्यत्वादिति भावः । एवं ब्रह्मोपादानता न घटत इति चेत्—उक्तदूषणेन ब्रह्मोपादानत्वं जगतो न युज्यत इति चेत् । न—नैतद्युक्तम् । स्वपक्षेषु साम्यात्—मायाविशिष्टं ब्रह्म कारणमिति शाङ्कराः, उपाधिविशिष्टमिति भास्करीयाः, शक्तिविशिष्टमिति यादवप्रकाशीयाः, एतेषु पक्षेषूक्तदूषणस्य साम्यात् । तन्मानात् तद्गृहीतौ—मायोपाधिशक्तिविशिष्टब्रह्मप्रतिपादकप्रमाणाभासबलात् तादृशब्रह्मस्वीकारे । श्रुतिमितम्—अनेकश्रुतिप्रतिपन्नम् । लोकवत्—सर्वलोकानुकूलम् । तदपि—चेतनाचेतनविशिष्टं ब्रह्मापि । स्वीकुरुष्व—अङ्गीकुरु । पक्षान्तराणि प्रत्यक्षप्रमाणविरुद्धत्वात् स्वीकर्तुमयोग्यानि, अस्मत्पक्षस्तु लोकवेदाविरुद्धत्वात् स्वीकर्तुं योग्य इति भावः ॥ १७० ॥

संयोगाख्यं हि कार्यं विभुतदितरयोस्स्यादणूनां मिथो वा
कात्स्न्येनांशेन वा तद्विहतमिति वदन् शून्यवादे निमज्जेत् ।
साङ्ख्योऽपि प्राह विभ्वीं प्रकृतिमिति कथं न्यूनसृष्टिस्ततस्स्यात्
मायादिष्वेवमूह्यं निगमनिगदिता त्वक्षता पद्धतिर्नः ॥ १७१ ॥

इति कृत्स्नप्रसक्त्यधिकरणम् ॥ ४४ ॥

चिन्ता०—एवं न्यायवादिनोऽपि शरीरात्मभावप्रतिक्षेपकाः परिहर्तव्याः, आकाशावयविपरमाणुसम्बन्धादीनां तेषामपि पक्षे सम्बन्धविषये कृत्स्नैकदेशविकल्पानुपपत्तेरपि भावात् । स्वपक्षोक्तं दूषणमेकदेशेन परिहृत्य विस्तरेण परिहरिष्यन् माध्यमिकोक्तकृत्स्नैकदेशविकल्पप्रक्रियां तावदनुवदति—संयोगेति । परमाणुद्वयादिसंयोगाद् द्व्यणुकादिसृष्टिरिति वैशेषिकादीनां प्रक्रिया । तत्र च जगत्कर्तेश्वरः स्वयं विभुरेव

परमाणुभिस्संयुज्य तानधितिष्ठतीति च ते प्राहुः। तत्र माध्यमिकः प्रत्यवतिष्ठते—परमाणुद्वयं कार्त्स्न्येन वान्योन्यं संयुज्यते, उतैकदेशेन। कार्त्स्न्येनचेत्—परमाण्वोरन्योन्यं स्वरूपे निमज्जनादधिकपरिमाणद्व्यणुकादिकार्यं नारभ्येत। एकदेशेन चेत् सांशत्वप्रसङ्गः। एवमणुः परमाणुर्विभुश्चेश्वरः कार्त्स्न्येन संयुज्यते चेत् तर्हि तयोस्तुल्यपरिमाणत्वप्रसङ्गः। तथाचाणुः परमाणुरीश्वरवद्विभुः स्यात्। विभुरीश्वरः परमाणुवदणुरेव स्यात् एकदेशेन संयोगे द्वयोरपीश्वरपरमाण्वोस्सावयवत्वप्रसङ्गेन निरवयवद्रव्यसद्भाव एव लोलुप्येत। तथा च निरवयवाभावात् सावयवकथनमपि साहसमेव स्यात्। निरवयवरूपपरमाण्वभावे तदवयवाश्रितत्वेन सतां द्व्यणुकादीनामपि त्यक्तव्यत्वादिति। इत्थं माध्यमिकेन स्वपक्षदूषणायोक्तमर्थं कणभक्षादिपक्षनिष्ठो यदि वेदान्तिनं प्रति वदेत् तदा स्वयमपि माध्यमिकपक्षे निमज्जेत्। अयमत्र शब्दान्वयः—संयोगाख्यं कार्यं विभुतदितरयोः स्यात् ईश्वरपरमाण्वोर्वा स्यात्, अणूनां मिथो वा परमाणूनामन्योन्यं च स्यात् तत्रापि कार्त्स्न्येन वा स्यादंशेन वा स्यादिति विकल्पप्रकाराः। तद्विहतमेवेत्यस्मान्वेदान्तवादिनः प्रति वदन् परपक्षवादी स्वयं माध्यमिकवच्छून्यवादे निमज्जेत्। अस्तु परमाणुकारणवादिनो वैशेषिकादेरिदं दूषणम्, तेन साङ्ख्यस्य किं दूषणमित्याशङ्क्याह—साङ्ख्योऽपीति। इत्थं किल साङ्ख्यानां प्रक्रिया—प्रकृतिर्विश्वं सृजति। सा च विभ्वी। सा पुनस्सत्त्वरजस्तमसां सङ्घातात्मिकेति। तथा च कार्यं कुर्वती स्वात्मभूतैस्सत्त्वरजस्तमोभिः परस्परं संयुज्य करोति वा किमैकैकश्येन। यदि संयुज्य तदा कार्त्स्न्येन वा सत्त्वरजस्तमसां संयोग उतैकदेशेन। यदि कार्त्स्न्येन तर्ह्येकमेव कार्यं प्रति सर्वेषां सत्त्वरजस्तमसां विनियुक्तत्वात् कार्यान्तरारम्भं प्रत्यवशेषो न स्यात्। यद्येकदेशेन सम्बन्धः—तदा तेषां सत्त्वरजस्तमसां सांशत्वप्रसङ्गः। तथा च विभुत्वकल्पनाव्याघातः। यद्यैकैकश्येन कारणम्—तदा कार्यस्य त्रिगुणात्मकत्वं न स्यात किञ्चित्सत्त्वेन सृज्यत इतरद्रजसा तमसा चान्यदिति एवमादिदूषणकलापोपहता साङ्ख्योक्तप्रक्रियेति। कथं न्यूनसृष्टिस्ततः स्यादिति—अस्यायमर्थः। विभ्वीं प्रकृतिमङ्गीकुर्वतः साङ्ख्यस्य कथं न्यूनसृष्टिः स्यात्। उक्तप्रकारेण दुष्टत्वादिति। एवं साङ्ख्यादिपक्षप्रतिक्षेपप्रक्रियया मायोपाधिशक्त्युपहितब्रह्मपक्षेप्यपि दूषणमूह्यम्। अस्तु तुल्यत्वमस्मत्पक्षाणां त्वत्पक्षस्य च, अथापि त्वत्पक्षस्य परिग्रहे को विशेष इत्याशङ्क्याह—निगमनिगदितेति। अयमत्र विशेषः—'क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः' इत्यस्मत्पक्षस्य श्रुतिशतनिगदितत्वात्तद्दूषणप्रलापो धर्मिग्राहकप्रमाणबाधितः, अस्मत्पक्षस्तु श्रुत्यानुकूल्यादवतिष्ठत एवेति। तदिदमाह—अक्षता पद्धतिर्नइति ॥ १७१ ॥

इति कृत्स्नप्रसक्त्यधिकरणम् ॥ ४४ ॥

पद०—संयोगाख्यमित्यादि । विभुतदितरयोरणूनां मिथो वा संयोगाख्यं कार्यं स्याद्धि—ईश्वरपरमाण्वोः परमाणूनामन्योन्यं वा संयोगनामकं कार्यं भवेत् खलु, परमाणुद्वयसंयोगाद्द्व्यणुकादि-सृष्टिरिति जगत्कर्तेश्वरः स्वयं विभुरेव परमाणुभिस्संयुज्य तानधितिष्ठतीति च वैशेषिकाणां प्रक्रिया । तस्यामीश्वरपरमाण्वोः परमाण्वोर्मिथश्च संयोगाख्यं कार्यं प्रसिद्धं खलु । तत्—ईश्वरपरमाणुसंयोगाख्यं परमाणुद्वयसंयोगाख्यं वा कार्यम् । कात्स्न्र्येन वा—कृत्स्नस्वरूपेणेति वा । अंशेन वा—एकदेशेनेति वा अङ्गीकारेऽपि । विहतम्—विरुद्धम् । कात्स्न्र्येन परमाण्वीश्वरसंयोगे तयोस्तुल्यपरिमाणत्वप्रसङ्गः, तथाच परमाणुरीश्वरवत् विभुः स्यात् , विभुरीश्वरो वा परमाणुवदणुरेव स्यात् । एकदेशेन संयोगे द्वयो-रपीश्वरपरमाण्वोस्सावयवत्वप्रसङ्गः । एवं परमाणुद्वयस्यापि कात्स्न्र्येन संयोगे परमाण्वोरन्योन्यं स्वरूपे निमज्जनादधिकपरिमाणद्व्यणुकादिकार्यं नारभ्येत । एकदेशेन चेत् सांशत्वप्रसङ्ग इति भावः । इति वदन्—इति माध्यमिकेन कणादपक्षदूषणायोक्तं दूषणं काणादो वेदान्तिनं प्रति वदन् । शून्यवादे निमज्जेत्—माध्यमिकपक्षे निमज्जेत् । स्वपक्षे विद्यमानं दूषणं नान्यस्मै प्रयोज्यं तत्परिहारतत्सत्त्वतयोस्तुल्यत्वादिति भावः । साङ्ख्योऽपि—कापिलतन्त्रनिष्ठोऽपि । इति—एवमेव । प्रकृतिं विश्वस्रष्ट्रीं मूलप्रकृतिं विश्वस्रष्ट्रीं प्राह । न्यूनसृष्टिस्ततः कथं स्यात्—कृत्स्नैकदेशसंयोगविकल्पमूलकदूषणस्य प्रकृतिविपर्येऽपि तुल्यत्वात् अपरिमितात् प्रधानद्रव्यात् परिमितजगत्सृष्टिः कथमुपपद्येतेति भावः । मायादिषु—मायोपाधिशक्तिष्वपि शङ्कराद्यङ्गीकृतासु । एवम्—उक्तरीत्या दूषणम् । ऊह्यम्—स्वयमेव विचिन्त्यम् । नः पद्धतिस्तु—अस्माकं सिद्धान्तरीतिस्तु । निगमनिगदिता—'क्षरं प्रधान-ममृताक्षरं हरः क्षरात्मानावीशते देव एकः' इत्यादिपरस्सहस्रश्रुतिप्रतिपादितत्वात् । अक्षता—दूषणानर्हा । धर्मिग्राहकप्रमाणबाधितत्वात् दूषणं न तत्र लगतीति भावः ॥ १७१ ॥

इति कृत्स्नप्रसक्त्यधिकरणम् ॥ ४४ ॥

## प्रयोजनवत्त्वाधिकरणम् ॥ ४५ ॥

सूत्रम्—न प्रयोजनवत्त्वात् ॥ १७० ॥

आत्मार्थं विश्वसृष्टिः कथमपि सततावाप्तकामस्य न स्यात्
कारुण्याद् दुःखसृष्टिर्न भवति नच सा सर्वशक्तेश्चिकित्सा ।
सर्वज्ञस्स्वात्मतृप्तस्तदिह न जगतो हेतुरित्यन्धचोद्यं
लीलासौ लोकवत् स्यादभिमतसमये सिद्धितस्त्वाप्तकामः ॥ १७२ ॥

चिन्ता०—अत्र सङ्गतिविशेषप्रत्यायकं भाष्यं 'यद्यपीश्वरः प्राक्सृष्टेरेक एव सन् सकलेतरविलक्षणत्वेन सर्वार्थशक्तियुक्तः स्वयमेव विचित्रं जगत्स्रष्टुं शक्नोति तथापीश्वरकारणत्वं न संभवति प्रयोजनवत्त्वाद्विचित्रसृष्टेः, ईश्वरस्य च प्रयोजनाभावात्' इति । तदर्थविचारस्तु—किमुक्तं जगत्कारणत्वं ब्रह्मणः सम्भवति नेति । किमवाप्तसमस्तकामस्यापि लीलया जगत्कारणत्वं सम्भवति नेति । किमवाप्तसमस्तकामस्यापि लीला प्रयोजनं नेति । अत्र विकल्प्य दूषयति—आत्मार्थमित्यादिना । किमीश्वरस्य विश्वस्रष्टृता आत्मार्थमुत परार्थम् । आत्मार्थं तावन्न संभवति अवाप्तसमस्तकामत्वात् । तदिदमाह—सततावाप्तकामस्येति । परार्थत्वपक्षे कृपया विश्वसृष्टिरिति वक्तव्यम्, तदपि न वक्तुं शक्यत इत्याह—कारुण्यादिति । यदि कारुण्याद् विश्वं सृजति तर्हि सुखरूपमेव विश्वं सृजेन्न पुनर्दुःखरूपम् । ननु दुःखरूपमपि सृजति तदपि कारुण्यादेव यथा दुःखरूपां चिकित्सां कुर्वन् चिकित्सको रक्षक इत्यभिधीयते एवं दुःखरूपां विश्वसृष्टिं कुर्वन्नीश्वरोऽपि चिकित्सकवद्रक्षक एव स्यादित्याशङ्क्य परिहरति—न चेति । अयमत्र भावः—चिकित्सकस्त्वल्पशक्तिकत्वात् दुःखरूपां चिकित्सामकुर्वन् रक्षितुं न शक्नोति अतो रक्षकस्यापि चिकित्सकस्य दुःखसृष्टिर्युज्यते ईश्वरस्तु सर्वशक्तित्वाद् दुःखसृष्टिमन्तरेणापि रक्षितुं शक्नोति, किमर्थं चिकित्सकनयाद्दुःखसृष्टिरिति । तत् तस्मात्कारणात् स्वात्मतृप्तः सर्वज्ञ ईश्वरो जगत्सृष्टिहेतुर्न भवतीत्यन्धानामेव चोद्यम् । तदेवोपपादयति—लीलेति । 'लोकवत्तु लीलाकैवल्यम्' इति स्पष्टमेव सूत्रकारैरेव चोद्यपरिहार उक्तः । यथा सार्वभौमो राजा पूर्वमेव परिपूर्णोऽपि द्यूतक्रीडादिकं करोति एवमेव नित्यावाप्तसमस्तकामोऽपि भगवान् स्वयं विश्वसृष्टिसंहाररूपां द्यूतक्रीडां करोति । अत्र 'पश्यन्तीषु श्रुतिषु' इत्यादिकमाचार्यपद्यमेव पाठ्यम् । ननु पूर्वमविद्यमानस्य सन्तोषविशेषस्य प्राप्त्यर्थं द्यूतक्रीडा तेन कथमीश्वरस्यावाप्तसमस्त-

कामत्वमित्याशङ्क्याह—अभिमतेति । यत् यदेष्टं, तदा तस्य सिद्धिरवाप्तसमस्तकामता न पुनरागामिनां पुरुषार्थानां प्रागेव सिद्धत्वम्, तथा चेश्वरस्यापि बहुस्यामित्यादिसङ्कल्पाद् यस्मिन्काले यदिष्यते जगत्सृष्ट्यादिकं मोक्षप्रदानादिकं तस्मिन्काले तस्यसिद्धिरेवावाप्तसमस्तकामत्वम्, अतोऽवाप्तसमस्तकामत्वं लीलायोगश्च विरुद्धमिति भ्रान्तप्रलपितमेतत् ॥ १७२ ॥

पद०—आत्मार्थमित्यादि । विश्वसृष्टिः—जगत्सृष्टिः । सततावाप्तकामस्य—नित्यमेवावाप्तसमस्तकामस्येश्वरस्य । कथमपि—केनापि प्रकारेण । आत्मार्थं न स्यात्—स्वार्थं न भवेत् सिद्धसर्वार्थत्वात् । अन्यथावाप्तसमस्तकामत्वहानिरिति भावः । कारुण्यात्—कृपया, जगत्सृष्टिरिति चेत् । दुःखसृष्टिर्न भवति—कारुण्याद्धिश्वं सृजन् सुखरूपमेव हि सृजेत्, अतो नानाविधदुःखसृष्टिरनुपपन्नैव । सा—दुःखरूपजगत्सृष्टिः । सर्वशक्तेः—दुःखरूपचिकित्सामकृत्वापि रक्षितुं शक्तस्य परमात्मनः । चिकित्सा च न—भवरोगप्रतिक्रियापि न भवितुमर्हति । तत्—तस्मात्कारणात् । स्वात्मतृप्तः—परमानन्दरूपस्वात्मानुभवनित्यतृप्तः । सर्वज्ञः—परमात्मा । जगतो न हेतुः—जगतो न कारणं भवितुमर्हति । इति—एवम्प्रकारेण । इह—जगत्कारणविषये । अन्धचोद्यम्—अन्धानामेव चोद्यम् । असौ—विश्वसृष्टिः । लोकवत्—यथा परिपूर्णोऽपि सार्वभौमो द्यूतक्रीडादिकं करोति तद्वत् । लीला स्यात्—परमात्मनो लीलैव भवेत् । तर्हि कथमवाप्तसमस्तकामः स इत्यत्राह—अभिमतसमये—यद्यदाभिमतं तत्समय एव । सिद्धितः—अभिमतार्थसिद्ध्या । तुरेवार्थः । आप्तकामः—अवाप्तसमस्तकाम इत्युच्यत इत्यर्थः ॥ १७२ ॥

विश्वं दुःखैकतानं विषममपि सदा निर्मिमाणस्य लीला
सञ्जायेतासमञ्जक्रमत इति भवेन्निर्दयत्वादिदोषः ।
मैवं बीजाङ्कुरादिक्रमविषमभवानादिकर्मौघभाजां
जीवानां सौति तत्तत्फलमिति करुणासाम्ययोरप्रहाणात् ॥ १७३ ॥

चिन्ता०—अत्र कश्चिच्चोदयति—विश्वं दुःखैकतानं विषममपि सृजत ईश्वरस्यासमञ्जसवृत्तिः स्यादिति । तदिदमाह—विश्वमिति । अत्र विषमत्वमेकस्य सुखित्वमपरस्य दुःखित्वमित्यादिकम् । अयमत्र शब्दान्वयः—विश्वं दुःखैकतानं विषममपि सदा निर्मिमाणस्येश्वरस्य लीला असमञ्जक्रमतः सञ्जायेत असमञ्जो नाम कश्चिद्यथाकर्मकारी सुप्रसिद्धः पुराणेषु, तस्य वृत्तान्तक्रमात् संजायेत ।

तत ईश्वरस्य निर्दयत्वादिदोषो भवेत् । इममर्थं प्रतिक्षिपति—नैवमिति । तमेव प्रतिक्षेपप्रकारं विवृणोति—बीजाङ्कुरेति । अयमर्थः—अनादिरयं कर्माविद्यादिचक्रप्रवाहः प्रतिपुरुषं प्रवर्तते । स च विचित्रः । तस्य च प्रवाहस्य तेषुतेषु कालेषु विपाको भवति । विपाकश्च फलप्रदानाभिमुख्यम् । तच्च बहुप्रकारम् । इमञ्चार्थं सर्वेऽपि सैद्धान्तिका न प्रतिक्षिपन्ति हि । अन्यथा सर्वेषामपि वादिनां सिद्धान्तप्रक्रियया तत्तत्कर्मचारित्वनियमायोगप्रसङ्गात् । तेनेश्वरः प्राचीनकर्मानुरूपं सर्वं सृजतीति सामान्यमेतदीश्वरकर्तृत्वम् । अथापि तत्तत्कर्मानुरूपं वैषम्यमपि न हीयतइति । करुणासाम्ययोरप्रहाणादिति—अयमर्थः । ईश्वरेण विश्वकार्यकरणस्य च तत्र च प्राचीनकर्मानुरूपवैषम्यस्य चापरित्यागादिति । ईश्वरो ह्यनादिस्वसङ्कल्पसिद्धं पुण्यपापादिनियमं तत्तत्काले तद्विपाकं च नान्यथयति । अस्मिन्नर्थे किं प्रमाणमिति चेत् श्रुतिस्मृत्यादिरेव । अन्यथा पितृहन्तुः स्वर्गः स्यात् धर्मशीलस्तु नारकी स्यादिति । कथं तर्हि पापशीलानां चैद्यादीनामपवर्गप्राप्तिरिति दत्तोत्तरमेतत् प्राचीनकर्मक्रमादिति । अत्र लोकसिद्धन्यायानुसारेण

'क्रीडातः सृजतो विश्वं विहन्येत कृतार्थता ।
सुखैकतानं जनयेज्जगत् करुणया सृजन् ॥'

इत्यनुमानमवलम्ब्येश्वरो न सृजतीति कौमारिलचोद्यमपि दत्तोत्तरम् ॥ १७२ ॥

पद०—विश्वमित्यादि । विश्वम्—जगत् । दुःखैकतानम्—दुःखैकास्पदतया । विषममपि—अल्पाल्पतराल्पतममहन्महत्तरमहत्तमसुखदुःखवैषम्ययुक्ततयापि । सदा—नतु कदाचित्, अपितु सर्वदैव । निर्मिमाणस्य—सृजतः परमात्मनः । लीला—जगत्सृष्टिफलभूता लीला । असमञ्जसतः—प्रसिद्धायथावत्कार्यसमज्ञन्यायेन । सञ्जायेत—सम्पद्येत । अस्त्वेवम्, ततः किम्? इति—एवं चेत् । निर्दयत्वादिदोषो भवेत्—दुःखं वैषम्येण सदा कुर्वन् कथं दयालुर्भवेदिति भावः । नैवम्—एवं मा शङ्किष्ठाः । बीजाङ्कुरादिक्रमाविषमभवानादिकर्मौघभाजाम्—पूर्वपूर्वबीजैरुत्तरोत्तराङ्कुराद्युत्पत्तिक्रमेण विषमतया सम्भूताननादींश्च कर्मौघान्कर्मप्रवाहान् भजन्तीति तथा तादृशानां जीवानाम् । तत्तत्फलं सौति—तत्तज्जीवकृतकर्मफलमेवासङ्कीर्णतया ददाति । इति—एवंनिर्वाहवशात् । करुणासाम्ययोरप्रहाणात्—ईश्वरकारुण्यस्य सर्वसमत्वस्य च हान्यभावात् । अयं भावः—ईश्वरः सर्वेष्वपि चेतनेषु करुणयैव साम्येन भोगमोक्षप्रवृत्त्यर्थं जगत्सृजति तत्र चेतनानां तत्तत्कर्मानुरूपमेव फलं ददातीति साम्यं वैषम्यञ्चोपपन्नमिति ॥ १७२ ॥

दृष्टन्यायेन विश्वप्रजनकचिदचित्तत्त्वभेदप्रक्लृप्तौ
स्वेष्टप्रत्यर्थिधर्मोपनयननियतव्याप्तिवैयाकुली स्यात् ।
अत्यन्तादृष्टमर्थं भणितुमधिकृतात् शास्त्रतस्सर्वकर्तुः
सिद्धौ बाधाद्यनर्हप्रमितिपरवती सर्वधर्मोपपत्तिः ॥ १७४ ॥

इति प्रयोजनवत्त्वाधिकरणम् ॥ ४५ ॥

चिन्ता०—अदृष्टमर्थं कल्पयतां वैशेषिकाणां दृष्टानुसारेण कल्पनस्य न्याय्यत्वात् माध्यमिका-युक्तदृष्टानुसाराभावलक्षणदोषोद्घाटनरूपकृत्स्नैकदेशविकल्पाद्युपहतिः स्यात्, अस्माकं पुनरपूर्वार्थप्रति-पादकागमावलम्बेनार्थतत्त्वमुपपादयतां दृष्टानुसारनैयत्याभावात् सर्वमेवार्थतत्त्वं समञ्जसमेवोपपादयितुं शक्यत इति सर्वसामान्यन्यायमाह—दृष्टेति । अयमत्र शब्दार्थः—दृष्टन्यायेन दृष्टप्रकारेण विश्वप्रजनकः चित् ईश्वरः, स पुनरीश्वरोऽनुमानेन कल्प्यते । विश्वप्रजनकोऽचित्परमाणुः, स पुनर्द्व्यणुकपरमाण्वनु-मानेन कल्प्यते । तथाचोभयत्राप्यनुमानादेव परिक्लृप्तिः । तस्यां यत्कार्यं तदल्पज्ञकर्तृकमिति तथा तया वैयाकुली स्यात् । यद्यल्पज्ञकर्तृकत्वं कार्यत्वबलात्पक्षेऽपि वर्तते तदानीमीश्वरासिद्धिः, यदि तु सर्वज्ञकर्तृकत्वं तदा विशेषविरोध इति वैयाकुली भवेत् । एवं परमाणुपरिक्लृप्तावपि घटादिकं सावयवं सावयवारब्धमेव दृष्टम्, एवं द्व्यणुकमपि सावयवं कार्यम्, निरवयवारब्धमेव कल्प्यते चेद्विशेषविरोधः । द्व्यणुके सावयवारब्धत्वं भवतामिष्टं चेत् तदापसिद्धान्तः, एवं संयोगस्यापि सावयवनिष्ठत्वमिति नियमोऽस्तीति परमाणोरपि सावयवत्वप्रसङ्ग इति च प्रसङ्गो भाव्यः । एवमानुमानिकजगत्कारणवादिपक्षे दोषमुक्त्वा स्वपक्षे दोषाभावमाह—अत्यन्तेति । अत्यन्तादृष्टं चिदचिच्छरीरकेश्वरकारणत्वमर्थं भणितुं प्रवृत्तात् शास्त्रात् सर्वकर्तुरीश्वरस्य सिद्धौ बाधप्रतिरोधाद्ययोग्यतस्वज्ञानपरतन्त्रा सर्वधर्मोपपत्तिरस्त्येव सर्वेषामपि निमित्तत्वोपादानत्वसर्वज्ञत्वनिरवयवत्वादिधर्माणामुपपत्तिरस्त्येव । अत आगमिकेश्वरबाधनं नरशिरःपवित्रत्वाद्यनुमानवदनादरणीयमेवेति न बाध इति ॥ १७४ ॥

इति प्रयोजनवत्त्वाधिकरणम् ॥ ४५ ॥

पद०—दृष्टन्यायेनेत्यादि । दृष्टन्यायेन—अन्यत्र दृष्टानुसारेण । विश्वप्रजनकचिदचित्तत्त्व-भेदप्रक्लृप्तौ—विश्वप्रजनक ईश्वरः, चितो जीवाः, अचित् प्रधानम्, एतद्रूपा ये तत्त्वभेदाः प्रामाणिकार्थ-

विशेषाः, तेषां प्रक्लृप्तौ कल्पनायाम् । स्वेष्टप्रत्यर्थिधर्मोपनयननियतव्याप्तिवैयाकुली स्यात्—स्वाभिमतार्थस्य यो विरुद्धधर्मः, तदुपनयने तत्साधने नियतं यत् धर्मान्तरं तस्य या व्याप्तिस्सहचारनियमरूपा तद्वैयाकुली तन्मूलकस्वाभिमतार्थासिद्ध्यनभिमतार्थसिद्धिरूपा व्याकुलता भवेत् । यथा कार्यत्वहेतुना सकर्तृकत्वसाधने यत् कार्यं तदल्पज्ञकर्तृकमिति व्याप्त्या स्वाभिमतसर्वज्ञेश्वरासिद्धिः, अनभिमतासर्वज्ञकर्तृकत्वसिद्धिश्च, एवं परमाणुपरिक्लृप्तावपि घटादिकं सावयवं सावयवारब्धमेव दृष्टम्, एवं द्व्यणुकं सावयवं कार्यमपि निरवयवारब्धमिति कल्प्यते चेत् व्याप्तिविरोधः, द्व्यणुके सावयवारब्धत्वेऽङ्गीक्रियमाणेऽपसिद्धान्तः, एवं दृष्टानुसारेण कल्पनायां व्याप्तिविरोधस्सम्भावित इति भावः । अत्यन्तादृष्टम्—प्रमाणान्तरेण ताद्रूप्येण वा तद्विपर्ययेण वा ऽपरिच्छिन्नम् ।

‘ असन्निकृष्टवाचा तु द्वयमत्र जिहासितम् ।
ताद्रूप्येण परिच्छित्तिस्तद्विपर्ययतोऽपि वा ॥ ’

इति व्यासार्यवचनात् । अर्थम्—वस्तु । भणितुम्—प्रतिपादयितुम् । अधिकृतात्—प्रवृत्तात् । शास्त्रतः—वेदाख्यशास्त्रात् । सर्वकर्तुः—सर्वजगत्कारणभूतस्य परमात्मनः । सिद्धौ सत्याम् । बाधाद्यनर्हप्रमितिपरवती—धर्मिग्राहकमानविरोधेन बाधप्रतिरोधानर्हा या प्रमितिश्शास्त्रजन्या प्रमा तस्याः परवती परतन्त्रा तदधीनेति यावत् । सर्वधर्मोपपत्तिः—सर्वधर्माणां निमित्तत्वोपादानत्वसर्वज्ञत्वसर्वशक्तित्वनिरवयवत्वादिधर्माणामुपपत्तिरस्त्येव । येन प्रमाणेनेश्वरस्वरूपादिकमवगतं तेनैव प्रमाणेन जगत्कारणत्वोपलक्षितसर्वधर्मोपपत्तेर्नकिञ्चिदपि सङ्कटमिति भावः ॥ १७४ ॥

इति प्रयोजनवत्त्वाधिकरणम् ॥ ४१ ॥

द्वितीयाध्याय प्रथमपादस्थाधिकरणपूर्वपक्षोत्थानहेतुप्रदर्शनम्

साङ्ख्यस्मृत्या विरोधाद् विधिमतविहतेः कार्यवैरूप्यतोऽस्मिन्
एकार्थानेकतन्त्रोदितविहततया देहभोगावियुक्त्या ।
कार्योपादानभेदात् स्वहितविहतितः कारकस्तोमहानेः
कृत्स्नांशाद्यूहबाधात् कृतिविफलतयाप्युत्थितं प्रत्यविध्यत् ॥ १७५ ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु अधिकरणसारावल्यां
द्वितीयस्याध्यायस्य प्रथमः पादः

चिन्ता०— उक्तानां दशानामधिकरणानां पूर्वपक्षोत्थानप्रक्रियां विशेषतो विभज्य दर्शयन् सामान्यतस्तन्निराकरणमपि दर्शयति—सांख्यस्मृत्येति । साङ्ख्यस्मृतिविरोधात् स्मृत्यधिकरणे, चतुर्मुखस्मृतिविरोधाद्योगाधिकरणे, कार्यकारणयो र्वैरूप्यान्नविलक्षणत्वाधिकरणे, शिष्टापरिग्रहाधिकरणे पुनरस्मिन् कारणे ब्रह्मण्येकार्थानेकतन्त्रन्यायविहतत्वात्, भोक्त्रापत्त्यधिकरणे देहस्य भोगाविनाभावात्, आरम्भणाधिकरणे कार्योपादानयोर्भेदकथनात्, इतरव्यपदेशाधिकरणे स्वात्महितकरणविरोधात्, उपसंहारदर्शनाधिकरणे सहकार्यभावात्, कृत्स्नप्रसक्त्यधिकरणे कृत्स्नैकदेशविकल्पबाधात्, नप्रयोजनवत्त्वाधिकरणे पुनरीश्वरव्यापारनैरर्थक्यादप्युत्थितं विप्रतिपद्यमानं पूर्वपक्षवादिनं प्रत्यविध्यत् निराकरोदित्यर्थः ॥ १७५ ॥

इति निखिलतार्किकचूडामणिना सर्वतन्त्रस्वतन्त्रेण
श्रीमद्वरदार्यापरनाम्ना कुमारवेदान्ताचार्येण
विरचिते शारीरकाधिकरण चिन्तामणौ
द्वितीयस्याध्यायस्य प्रथमः पादः

पद०—सांख्यस्मृत्येत्यादि । साङ्ख्यस्मृत्या विरोधात्—स्मृत्यनवकाशाधिकरणपूर्वपक्षहेतुभूतात् साङ्ख्यस्मृत्या विरोधात् । विधिमतविहतेः—'एतेन योगः प्रत्युक्तः' इत्यधिकरणपूर्वपक्षहेतुभूतात् चतुर्मुखसिद्धान्तभूतयोगस्मृतिविरोधात् । कार्यवैरूप्यतः—नविलक्षणत्वाधिकरणपूर्वपक्षहेतुभूतात् कार्यभूत-

जगद्वैलक्षण्यात् । अस्मिन्—कारणे ब्रह्मणि । एकार्थानेकतन्त्रोदितविहततया—एतेनशिष्टापरिग्रहाधिकरणपूर्वपक्षहेतुभूतात् परमाणुकारणत्वरूपैकार्थनिष्ठानेकसिद्धान्तोक्तिविरुद्धत्वात् । देहभोगावियुक्त्या-भोक्त्रापत्त्यधिकरणपूर्वपक्षहेतुभूतात् सर्वशरीरित्वप्रयुक्तात् देहभोगाविनाभावात् । कार्योपादानभेदात्—आरम्भणाधिकरणपूर्वपक्षहेतुभूतात् कार्योपादानयोस्स्वरूपभेदात् । स्वहितविहतितः—इतरव्यपदेशाधिकरणपूर्वपक्षहेतुभूतात् स्वहितविरुद्धत्वात् । कारकस्तोमहानेः—उपसंहारदर्शनाधिकरणपूर्वपक्षहेतुभूतात् सहकारिकारणवर्गशून्यत्वात् । कृत्स्नांशाद्यूहबाधात्—कृत्स्नप्रसक्त्यधिकरणपूर्वपक्षहेतुभूतात् कृत्स्नैकदेशपरिणामोहमूलकबाधात् । कृतिविफलतयापि—नप्रयोजनत्वाधिकरणपूर्वपक्षहेतुभूतात् ईश्वरव्यापारनैरर्थक्यादपि । उत्थितम्—विप्रतिपद्यमानं पूर्वपक्षिणम् । प्रत्यविध्यत्—निराकरोदित्यर्थः ॥ १७५ ॥

इति श्रीमद्रङ्गनाथशठमथनयतिराजकटाक्षलब्धोभयवेदान्तहृदयस्य भारद्वाजस्य श्रीनिवासराघवदासस्य
(श्रीमदहोबिलमठमहास्थाननिर्वहणधुरन्धर श्रीमद्वेदमार्गप्रतिष्ठापनाचार्य परमहंसपरिव्राजकाचार्य
सर्वतन्त्रस्वतन्त्रोभयवेदान्ताचार्य श्रीभगवद्रामानुजसिद्धान्तनिर्धारणसार्वभौम श्रीलक्ष्मी-
नृसिंहदिव्यपादुकासेवकश्रीवण्शठकोपश्रीशठकोपरामानुजमहादेशिकस्य)
कृतौ अधिकरणसारावलीव्याख्यायां पदयोजनाख्यायां
द्वितीयस्याध्यायस्य प्रथमः पादः

## रचनानुपपत्त्यधिकरणम् ॥ ४६ ॥

सूत्रम्—रचनानुपपत्तेश्च नानुमानं प्रवृत्तेश्च ॥ १७१ ॥

वाधाभावादकम्पे स्थितवति निगमे ब्रह्महेतुत्ववादे
भूयः किं वीतरागो वदति परपरीवादमत्रेत्ययुक्तम् ।
प्रख्यातप्राच्यनैकप्रतिसमयभवन्मन्दसन्देहशान्त्यै
तुल्यत्वभ्रान्तिसिद्धा प्रकरणसमता तर्कपादेन वार्या ॥ १७६ ॥

चिन्ता०—एवं पूर्वपक्षवादिभिः पूर्वस्मिन्पादे वेदान्तवाक्यानां स्मृतिन्यायाभ्यां बाधे निरस्ते सति तेषामेव परपक्षाणां शारीरकन्यायेन बाधः प्रतिपाद्यत इति सङ्गतिः । अथवा पूर्वं शारीरकशास्त्रस्य परपक्षैर्बाधः परिहृतः, अधुना तैरेव परपक्षैस्तस्यैव शास्त्रस्य प्रतिरोधः परिह्रियत इति संगतिः । तत्रापि बाधविरोधपरिहारपरत्वात् कारणद्वारकविरोधपरिहारपरत्वाच्च पूर्वपादद्वयसङ्गतिः । उत्तरपादद्वये कार्यद्वारको विरोधः परिह्रियते सचान्तर इति वक्ष्यते । अत्र श्रीविष्णुचित्तार्यैरुक्तं 'एवं स्वपक्षे परोद्भाविता दोषाः परिहृताः । इत्थं परपक्षोऽप्युपपन्न इति पार्श्वस्थस्य संशयो निवर्त्यत इति परनिराकरणारम्भो विमृश्यते । स्वपक्षस्थापनपरपक्षनिराकरणाभ्यामर्थावधारणं निर्णय इति हि तद्विदः । प्रथमं निरीश्वरमते दूषणमाह' इति । इदमेव भगवता भाष्यकारेण 'उक्तम्' इत्यादिना 'परपक्षप्रतिक्षेपायानन्तरः पादः प्रवर्तते' इत्यन्तेनोक्तम् । परपक्षप्रतिक्षेपेषु च साङ्ख्यमतप्रतिक्षेपप्राथम्यं भाष्यकारैरेवोक्तम्—'कापिलमतम्' इत्यादिभाष्येण । अनेनैव भाष्यकारवचनेन पूर्वाधिकरणसङ्गतिरपि सूचिता भवति । अत्र पादान्तरारम्भनैरर्थक्यमाक्षिप्य समाधत्ते—बाधेति । निगमैर्ब्रह्महेतुत्ववादे बाधाभावादकम्पे स्थितवति सति वीतरागो भगवान् भूयः किं परपरीवादं वदतीति । एवंवदन्तं पूर्वपक्षिणं निराचष्टे—अयुक्तमिति । अयुक्तत्वमेव तावदुपपादयति—प्रख्यातेति । पूर्वं बाध एव परिहृतः, न पुनः प्रकरणसमता । अत्र पुनस्सा परिह्रियत इति सप्रयोजन एव पादान्तरारम्भः । अयमत्र शब्दान्वयः—प्रख्यातानां प्राच्यानामनादिसिद्धानां नैकानां बहुप्रकाराणां प्रतिसमयानां सद्भावेन भवतो जायमानस्य मन्दबुद्धीनां सन्देहस्यैव शान्त्यै तुल्यत्वभ्रान्तिसिद्धा प्रकरणसमता वेदान्तेन तुल्यानि पक्षान्तराणीति भ्रान्तिसिद्धा प्रकरणसमता तर्कपादेन वार्येति सफलोऽयं पादारम्भः ॥ १७६ ॥

पद०—बाधाभावादित्यादि । निगमे ब्रह्महेतुत्ववादे बाधाभावात् अकम्पे स्थितवति सति । वीतरागः—वादिविजयख्यातिलाभादिविरक्तस्सूत्रकारः । अत्र—रचनादिपादे । भूयः किं परपरीवादं वदति? इति—एवंशङ्कनम् , अयुक्तम् । प्रख्यातप्राच्यनैकप्रतिसमयभवन्मन्दसंदेहशान्त्यै—प्रख्यातैः प्रसिद्धैः प्राच्यैः अनादिसिद्धैः नैकैर्बहुप्रकारैः प्रतिसमयैर्वेदान्तविरोधिसिद्धान्तै र्हेतुभिर्भवतो जायमानस्य मन्दबुद्धीनां सन्देहस्य 'किं वेदान्तसिद्धान्तः प्रमाणमुत कापिलादितन्त्राणि प्रमाणम्' इत्येवंरूपस्य शान्त्यै । तुल्यत्वभ्रान्तिसिद्धा प्रकरणसमता—वेदान्तेन तुल्यानि पक्षान्तराणीति भ्रान्तिसिद्धा सत्प्रतिपक्षता । तर्कपादेन—अनेन द्वितीयाध्यायद्वितीयपादेन । वार्या—वारणीया । अतस्सफल एव तर्कपादारम्भ इतिभावः ॥ १७६ ॥

षड्विंशालम्बि साङ्ख्यं स्फुटतरपठितं भारते योगतुल्यं
तत्स्थत्वात् पञ्चविंशस्त्विति च निगमितस्सर्वतत्त्वान्तरात्मा ।
तस्मात् सेशानतन्त्रं श्रुतिसमधिगतं स्थापयित्वाथ सूत्रैः
पक्षं त्वीशानपेक्षं प्रतिवदति नयैरुत्कटप्रत्यवायम् ॥ १७७ ॥

चिन्ता०—अत्र परपक्षेषु साङ्ख्यपक्षस्य पूर्वभावित्वे कारणं भाष्यएव व्यक्तमुक्तम् 'एतस्य सत्पक्षनिक्षेपसम्भावनाभ्रमहेतुत्वातिरेकात्' इति । अधिकरणसङ्गतिस्तु पूर्वाधिकरणे प्रयोजनाभावान्निमित्तत्वानुपपत्तिः परिहृता ब्रह्मणः, अधुना परोक्तस्यानुपपत्तिरुच्यत इति । तदर्थविचारस्तु–किं प्रधानं जगत्कारणं नेति । किमचेतनस्य प्रधानस्य चेतनानधिष्ठितस्य पुरुषसन्निधानात् पङ्गुसन्निधानादन्धस्येव प्रवृत्तिहेतुत्वं संभवति नेति । किमन्धस्य पङ्गुसन्निधानात् मार्गावलोकनव्यापारवत् पुरुषसन्निधानात्तच्छायापत्त्या ज्ञातृत्वं संभवति नेति । अत्र हि साङ्ख्यं निराक्रियते तद्भारते योगतुल्यतया हेतुहन्तव्यं नेत्युक्तम् , तत्कथं निराकरणमित्याशङ्क्य द्विविधं हि साङ्ख्यं निरीश्वरं सेश्वरं च, यन्निरीश्वरं तदेव हेतुहन्तव्यं यत्सेश्वरं तन्न हन्तव्यम् , अतस्सेश्वरं तत्तुल्यं योगपक्षं च विहाय निरीश्वरसाङ्ख्यमेवात्र निराक्रियत इत्यभिप्रायेणाह—षड्विंशेति । षड्विंशः परमात्मा चेत् कथं पञ्चविंश आत्मेति श्रुतिषु परमात्मा निगद्यत इत्याशङ्क्याह—तत्स्थत्वादिति । अवस्थितेरिति पञ्चविंशस्यान्तर्यामितयावस्थानात् षड्विंश एव पञ्चविंश आत्मेति पञ्चविंशशब्देनाभिधीयते । न पुनर्निरीश्वरसांख्याभिमतो जीव एव पञ्चविंशशब्देनाभिधीयत इति । तस्मादत्र सेशानतन्त्रं सेश्वरसाङ्ख्यं तत्तुल्यं योगञ्च श्रुतिसमधिगतं स्थापयित्वा-

थास्मिन्पादे सूत्रकार ईश्वरानपेक्षमुत्कटप्रत्यवायं निरीश्वरसाङ्ख्यपक्षमेव प्रतिवदति प्रतिक्षिपति नयैरिति सुसङ्गतमेतत् ॥ १७७ ॥

पद०—षड्विंशालम्बीत्यादि। षड्विंशालम्बि—अचित्तत्त्वानि चतुर्विंशतिः पञ्चविंशो हि जीवः षड्विंशः परमात्मेति क्रमेण षड्विंशतितत्त्वावलम्बनम्। साङ्ख्यम्—साङ्ख्यदर्शनम्। योगतुल्यम्—योगशास्त्रसमतयेत्यर्थः। भारते स्फुटतरपठितम्—'सांख्यं योगः' इत्यादिना 'न हन्तव्यानि हेतुभिः' इत्यन्तेन हेतुहन्तव्यं नेत्यादरणीयतया स्फुटतरं यथातथा पठितं प्रतिपादितम्। सर्वतत्त्वान्तरात्मा—परमात्मा। तत्स्थत्वात्तु—पञ्चविंशजीवान्तर्यामितयावस्थानात्तु। पञ्चविंश इति च—'पञ्चविंश आत्मा भवति' इत्यादिश्रुतिषु पञ्चविंश इति च। निगमितः—उक्तः। तस्मात् सेशानतन्त्रम्—सेश्वरसाङ्ख्यम्, तत्तुल्यं योगश्च। श्रुतिसमधिगतं स्थापयित्वा। अथ—अस्मिन्पादे। नयैः—न्यायात्मकैस्सूत्रैः। उत्कटप्रत्यवायम्—ईश्वरनिरासेनाधिकप्रत्यवायहेतुभूतम्। ईशानपेक्षं पक्षं तु—निरीश्वरसाङ्ख्यपक्षमेव। प्रतिवदति—प्रतिक्षिपति ॥ १७७ ॥

अव्यक्तादीन्पदार्थाननुमितिमुखतः कल्पयन्तस्स्वबुद्ध्या
षट्त्रिंशत्तत्त्ववादप्रभृतिषु न कथं सङ्गमिच्छन्ति साङ्ख्याः।
तुल्याक्षेपोपपत्तीश्श्रुतिनियतिमुचां कल्पनास्संमृशन्तो
दृष्टं नापह्नुवीरन् लघुमनुमिनुयुश्शेषमिच्छन्ति शास्त्रात् ॥ १७८ ॥

चिन्ता०—अत्र प्रस्तुतस्य साङ्ख्यपक्षस्यानुमानिकपञ्चविंशतितत्त्वप्रतिष्ठापकस्य पाशुपतादितुल्यप्रवृत्तित्वात् तत्कल्पितषट्त्रिंशत्तत्त्वादिकल्पनमपि तेनैव न्यायेन प्रसज्येत, यदि तत्रान्यथासिद्ध्यादिना तत्प्रतिक्षिप्यते तर्हि तेनैव न्यायेनात्रापि प्रतिक्षिप्यत इत्याह—अव्यक्तेति। अयमत्र शब्दार्थः—अव्यक्तादीन्पदार्थाननुमानमुखेन स्वबुद्ध्या कल्पयन्तस्सांख्याः शैवादिपरिकल्पितेषु षट्त्रिंशत्तत्त्ववादप्रभृतिषु कथं सङ्गं नेच्छन्ति। तुल्याक्षेपेत्यादि—एवमाक्षेपे कृते साङ्ख्या यदि किञ्चिदुपपन्नं वदन्ति तदन्यवादिभिरपि वक्तुं शक्यते तथा च तुल्याक्षेपोपपत्तियुक्तास्साङ्ख्यवैशेषिकादीनां श्रुतिनियतिमुचां कल्पनाः परामृशन्तो वेदान्तवादिनामग्रगण्याः प्रमाणप्रमेयविभागमित्थं कल्पयन्ति। तद्यथा दृष्टं नापह्नुवीरन्निति प्रत्यक्षप्रमाणपरिक्लृप्तिप्रकारः, लघुमनुमिनुयुरित्यनुमानप्रक्रियाप्रकार उच्यते। अनुमानदृष्टान्ते हि गुरुर्न कल्प्यते लघुरेव पक्षस्स्वीक्रियत इति न्यायविदां प्रक्रिया।

शेपमिच्छन्ति शास्त्रादिति शास्त्रीयमर्यादोच्यते । प्रत्यक्षानुमानासिद्धमर्थमप्राप्तत्वाच्छास्त्रेणैवेच्छन्ति मनीपिण इत्यर्थ इति ॥ १७८ ॥

पद०—अव्यक्तादीनित्यादि । अव्यक्तादीन् पदार्थान् । अनुमितिमुखतः-अनुमानमुखेन । स्वबुद्धया कल्पयन्तः साङ्ख्याः । षट्त्रिंशत्तत्त्ववादप्रभृतिषु—शैवादिपरिकल्पितेषु षट्त्रिंशत्तत्त्ववादप्रभृतिषु । कथं सङ्गं नेच्छन्ति । तुल्याक्षेपोपपत्तीः—साङ्ख्यदर्शनोपर्याक्षेपे सति साङ्ख्या यदि किञ्चिदुपपन्नं वदन्ति तदन्यवादिभिरपि वक्तुं शक्यमिति तुल्याक्षेपोपपत्तियुक्ताः । श्रुतिनियतिमुचाम्—श्रुत्युक्ततत्त्वादिव्यवस्थामुल्लङ्घ्य वदतां साङ्ख्यवैशेपिकादीनाम् । कल्पनाः—तत्त्वोपायादिकल्पनाः । सम्मृशन्तः—परामृशन्तो वेदान्तवादिनामग्रगण्याः । इष्टम्—अबाधितप्रत्यक्षसिद्धम् । नापह्नुवीरन्—नापलपेयुः । लघुम्—लाघवयुक्तम् । अनुमिनुयुः—अनुमानवृत्तान्ते हि गुरुर्न कल्प्यते लघुरेव पक्षः स्वीक्रियत इति न्यायविदां प्रक्रिया । शेषम्—प्रत्यक्षानुमानासिद्धमर्थम् । शास्त्रादिच्छन्ति—अप्राप्तत्वात् शास्त्रेणैवाङ्गीकुर्वन्ति ॥ १७८

कार्यं किञ्चित्कुविन्दप्रभृतिविरचितं दृश्यतेऽन्यच्च सर्वं
कर्त्रायत्तं श्रुतं तत्क्वचिदपि न पराधीनताभङ्गदृष्टिः ।
पङ्ग्वन्धक्षीरपाथस्तृणजलदतटिद्ग्राव्ययस्कान्तपूर्वैः
दृष्टान्तैर्न त्वदिष्टं फलति तदखिलं चेतनाधिष्ठितं नः ॥ १७९ ॥

चिन्ता०—अत्र साङ्ख्यैरीश्वराधिष्ठानमन्तरेण सृष्टिरित्युक्तम्, तत्र विकल्प्योत्तरमाचार्याः प्राहुः । अयमत्र विकल्पक्रमः—किं प्रत्यक्षसिद्धलोकानुसारेण निरीश्वरत्वमुच्यते किं वा शास्त्रानुसारेण अथवा स्वकपोलकल्पितेन केवलं दृष्टान्तानुसारेणेति । तत्र क्रमेणोत्तरमुच्यते—कार्यमित्यादिना । लोकसिद्धमपि कार्यं कुविन्दप्रभृतिविरचितं दृश्यत इति न तत्र साधनीयं किञ्चित् । यत्तु महीमहीधरमहार्णवप्रभृति सकर्तृकत्वेनास्माभिर्न दृश्यते, तत्सर्वमपीश्वरायत्तमेवेति श्रुतमेव, तत्रापि प्रमाणसिद्धत्वान्न विप्रतिपत्तिः कार्येत्याह—अन्यच्चेति । तस्मात् क्वचिदपि नेश्वराधिष्ठानासिद्धिरित्याह—तदिति । केवलं दृष्टान्तमात्रेण साध्यसिद्धिरिति तृतीयं कल्पं परिहरति—पङ्ग्वित्यादिना । 'पङ्ग्वन्धवदुभयोरपि संयोगः' इति प्रकृतिपुरुषयोगाद्विचित्रजगत्सृष्टिरित्येवं दृष्टान्तमाहुस्साङ्ख्याः । यथा पङ्गुः क्रियाशक्तिविधुरः, अन्धो दृक्शक्तिविधुरः, उभावपि परस्परोपकाराद् गमनं कुरुतः, एवं प्रकृतिपुरुषावपि सांसारिकप्रवृत्तिं कुरुत-

इति नेश्वरापेक्षेति तेषां भावः। क्षीरस्य दधिरूपेण परिणामे न चेतनापेक्षा। नापि जलस्य हिमकरकादिरूपेण परिणामे तथा, उपभुक्तस्य तृणस्य देहपुष्ट्यादिहेतुत्वे चेतनाधिष्ठानापेक्षा नास्तीति दृष्टान्ताः। तैर्दृष्टान्तैरचेतनानां चेतनाधिष्ठानं नास्तीति न त्वदिष्टं फलति तेषां सर्वेषां पक्षत्वात्। तादृशमखिलमपि चेतनाधिष्ठितमेवेति हि न्यायविद्भिरनुमानेन साध्यते। अस्माभिस्तु श्रुतिभिरिति विशेषः। तेन पक्षमेव दृष्टान्तं कृत्वा पक्षे साध्याभावसाधनमनुमानवार्त्तानभिज्ञतां प्रकटयेदिति सर्वहास्यमिति॥ १७९॥

पद०—कार्यं किञ्चिदित्यादि। किञ्चित्कार्यम्—लोकसिद्धं पटादि कार्यम्। कुविन्दप्रभृतिविरचितं दृश्यते—कुविन्दाः पटनिर्मातारः, तत्प्रभृतिभिस्तत्प्रमुखैर्विरचितं निर्मितं दृश्यते। तन्तुमृदादिकमचेतनं तन्तुवायकुलालादिचेतनाधिष्ठितमेव पटघटादिरूपेण परिणममानं दृश्यत इत्यर्थः। अन्यच्च सर्वम्—सकर्तृकत्वेनास्माभिरदृष्टं महीमहाधरमहार्णवादिकं सर्वमपि वस्तुजातम्। कर्त्रायत्तम्—ईश्वररूपकर्त्रधिष्ठितमेव। श्रुतम्—श्रुत्यादिभिरवगतम्। तत्—तस्मात्। क्वचिदपि—कुत्रापि। पराधीनताभङ्गदृष्टिर्न—ईश्वराधिष्ठानाभावसिद्धिर्न भवति। पङ्ग्वन्धक्षीरपाथस्तृणजलदतटिद्वाय्वयस्कान्तपूर्वैर्दृष्टान्तैः—पङ्ग्वन्धौ गमनशक्त्या दृक्शक्त्या च विकलावपि परस्परोपकारात् गमनं कुर्वाणौ, क्षीरं चेतनानधिष्ठितमेव दधिरूपेण परिणममानं दुग्धम्, पाथः स्वयमेव हिमकरकादिरूपतया परिणतं जलम्, तृणं तथा पशुदेहपुष्ट्यादिहेतुभूतं तृणम्, जलदः चेतनाधिष्ठानं विनैव सामुद्रसलिलग्रहणवर्षणादिकं कुर्वाणो धूमज्योतिस्सलिलवायुसङ्घातात्मा मेघः, तटित् मेघोदरे स्फुरन्ती स्तनितादिहेतुर्विद्युत्, वायुः महानगकम्पनादिहेतुर्वातः, अयस्कान्तः चेतनाधिष्ठानं विनैवायःकर्षणादिकं कुर्वाणोऽयस्कान्तः, एतत्पूर्वैः एतत्प्रभृतिभिर्दृष्टान्तैः। त्वदिष्टम्—अचेतनानां चेतनाधिष्ठानं विनैव परिणाम इति त्वदभिमतम्। न फलति—न सिध्यति। नः—श्रुत्या ईश्वराधिष्ठानं साधयतामस्माकं वेदान्तिनाम्, अनुमानेनेश्वराधिष्ठानं साधयतां वैशेषिकादीनाञ्च। तदखिलम्—पूर्वोक्तं क्षीरपाथःप्रभृति वस्तुजातम्। चेतनाधिष्ठितम्—श्रुत्या अनुमानेन च चेतनाधिष्ठितमेव साध्यते। पक्षमेव दृष्टान्तं कृत्वा पक्षे साध्याभावसाधनमनुमानवार्त्तानभिज्ञानां प्रक्रियेति भावः॥ १७९॥

नन्वत्राचेतनानां स्वसमुचितविधौ कर्त्रधीनत्वमुक्तं
शास्त्रारम्भे विधातुर्व्यनुददनुमितिं किम्परस्सूत्रकारः।
पृच्छेयं नातितुच्छा शृणु तदवहितस्सर्वकृन्नानुमातुं
नापह्नोतुञ्च शक्यस्तदुभयनियमादर्शनादित्यमंस्त॥ १८०॥

चिन्ता०—अत्र कश्चिच्चोदयति शास्त्रयोन्यधिकरणे भवद्भिरनुमानस्य ईश्वरासाधकत्वमुक्तम्, अधुना पुनरचेतनानां चेतनाधिष्ठानावश्यम्भावोऽस्तीति भवद्भिरुच्यते, उभयमपि सूत्रकारसम्मतमेव, तत्कथं विरुद्धभाषणमिति। तदिदमाह—नन्विति। अयमत्र शब्दान्वयः—अत्र ह्यचेतनानां स्वोचितकार्यसृष्टौ चेतनाधिष्ठानमवश्यमपेक्षितमित्युक्तम्। **शास्त्रारम्भे तु विधातुरनुमितिं सूत्रकार एव व्यनुदत्** निराचकारेत्यर्थः। तेन **सूत्रकारः किम्परः** कमर्थमभिप्रैतीति पृच्छा। अत्रोत्तरमाह—पृच्छेयमिति। **नातितुच्छोऽयं प्रश्नः**। अतितुच्छोऽयं न भवतीति शिष्यं प्रति सन्तुष्यति। शृणु तदवहित इति सूत्रकारभावस्यातिगम्भीरत्वाच्छिष्यं नियुङ्क्ते। गम्भीरमेव सूत्रकारभावं प्रकाशयति—सर्वकृदिति। सर्वस्रष्टा परमपुरुषो नानुमानेन साधयितुं शक्यत इति शास्त्रयोन्यधिकरणभावः, स एव परमपुरुषो नानुमानेन बाधितुं शक्यत इत्येतदधिकरणार्थः, तेन द्वयोरप्यधिकरणयोर्न परस्परविरोधः। अयमत्र भावः—यद्येन प्रमाणेन साधयितुं योग्यं तदेव हि तेन प्रमाणेन बाधितुमपि शक्यते, यथा प्रत्यक्षसिद्धो घटादिस्तेनैव प्रत्यक्षेण बाध्यते, न पुनः प्रत्यक्षाविषयः परमाण्वदृष्टादिः प्रत्यक्षेण बाध्यते, एवमनुमानाविषयत्वादीश्वरस्साधयितुं बाधितुं च न शक्यत इति सूत्रकारस्याभिप्रायः। अयमत्रान्वयः—अनुमानस्येश्वरसदसद्भावरूपोभयार्थनियमादर्शनात् सदसद्भावप्रतिपादनमशक्यमिति ॥ १८० ॥

पद०—नन्वत्रेत्यादि। ननु—आमन्त्रणे। अत्र—एतत्प्रकरणे। **अचेतनानाम्**—प्रकृत्यादीनाम्। **स्वसमुचितविधौ**—स्वोचितकार्यनिष्पादने। **कर्त्रधीनत्वम्**—चेतनपरतन्त्रत्वं तदधिष्ठितत्वमिति यावत्। **उक्तम्**—प्रतिपादितम्। अस्मिन्नधिकरणेऽचेतनानामीश्वराधिष्ठानमनुमानेन साध्यत इत्यर्थः। **शास्त्रारम्भे**—शास्त्रारम्भसमर्थनपरे शास्त्रयोनित्वाधिकरणे तु। **विधातुः**—जगत्कर्तुः। **अनुमितिं सूत्रकार एव व्यनुदत्**—निराचकारेत्यर्थः। **तेन सूत्रकारः किम्परः**—किमभिप्रैतीत्यर्थः। **इयं पृच्छा**—अयं प्रश्नः। **नातितुच्छा**—अतितुच्छा न भवति। उचितप्रश्नकरणसन्तोषेणैवमुक्तिः। **तत्**—सूत्रकारहृदयम्। **अवहितः**—गम्भीरत्वात् सावधानस्सन्, शृणु। **सर्वकृत्**—सर्वस्रष्टा। **तदुभयानियमादर्शनात्**—ईश्वरसदसद्भावरूपोभयार्थनियमादर्शनात्, ईश्वरसद्भावव्याप्तियुक्तलिङ्गस्य तदसद्भावव्याप्तियुक्तलिङ्गस्य चादर्शनादित्यर्थः। **अनुमातुं च न शक्यः, अपह्नोतुं** बाधितुञ्च न शक्यः, इति **अमंस्त**—सूत्रकार एवममनुत, इदं तस्य हृदयमित्यर्थः। सर्वस्रष्टा परमपुरुषो नानुमानेन साधयितुं शक्यत इति शास्त्रयोन्यधिकरणभावः, स एव परमपुरुषो नानुमानेन बाधितुं शक्यत इत्येतदधिकरणभावः, यत् येन प्रमाणेन साधयितुं योग्यं तदेव हि तेन प्रमाणेन बाधितुमपि शक्यते यथा प्रत्यक्षसिद्धो घटादि-

स्तेनैव बाध्यते न पुनः प्रत्यक्षाविषयः परमाण्वादिस्तेन बाध्यते एवमनुमानाविषयत्वादीश्वरस्तेन साधयितुं बाधितुं च न शक्यत इति सूत्रकारहृदयमिति भावः ॥ १८० ॥

सत्त्वाद्यान्द्रव्यभेदांस्त्रिगुणमिति समाहारतः कल्पयन्त-
स्तेषां नित्यं विभुत्वे समविषमदशाद्यत्र कीदृग्वदेयुः ।
अन्योन्याध्यासक्लृप्तिः प्रकृतिपुरुषयोर्भोगमोक्षोपपत्त्यै
छायापत्त्यादिनीत्या कथमियमुभयाचेतनत्वे घटेत ॥ १८१ ॥

चिन्ता०—अत्र साङ्ख्योक्तप्रक्रियाद्वयं पूर्वोत्तरार्धाभ्यामनूद्य दूषयति—सत्त्वाद्यानिति । समाहृतानि समुदितानि सत्त्वादीनि त्रिगुणमित्यत्र दूषणमाह—कल्पयन्त इत्यादिना । सत्त्वादीनां साम्ये संहारो वैषम्ये सृष्टिरिति हि साङ्ख्यानां परिक्लृप्तिस्तेषां विभुत्वादेव वक्तुं न शक्यते, विभूनां वैषम्यस्य कथयितुमयोग्यत्वादिति । अपराचेयं कल्पना—जीवगतं भोक्तृत्वं प्रकृतावध्यस्यते प्रकृतिगतं कर्तृत्वं जीवेऽध्यस्यते तेन कर्तृत्वभोक्तृत्वयोरन्योन्यनिष्ठत्वेनाध्यासात् संसारमोक्षयोरुपपत्तिरिति । अयमत्र शब्दान्वयः—प्रकृतिपुरुषयोरन्योन्याध्यासक्लृप्तिः संसारमोक्षयोरुपपत्त्यै जपाकुसुमरागस्य स्फटिकच्छायापत्त्यादिनीत्या परिकल्प्यत इति । तदिदं दूषयति—कथमियमिति । विद्यमानमेव ह्यन्यत्र कल्प्यते न पुनरविद्यमानम्। इहतु चेतनत्वं जीवे न विद्यते जीवस्य ज्ञानमात्रत्वेन चेतनत्वस्य भवद्भिरनङ्गीकारात् । नापि प्रधाने चेतनत्वम् , अचेतनस्वभावत्वादेव । ज्ञानचिकीर्षाप्रयत्नवत्त्वमेव हि कर्तृत्वम् , त्रयाणामपि जीवनिष्ठत्वेन प्रकृतिसम्बन्धो नास्त्येव । न च भोक्तृत्वं जीवनिष्ठम् , भवत्पक्षे पुरुषस्य पुष्करपलाशवन्निर्लेपत्वेन ज्ञानादिसर्वधर्मविधुरत्वात् । तेनोभयत्रोभयमपि नास्तीत्यन्योन्याध्यासक्लृप्तिर्न घटत इति ॥ १८१ ॥

पद०—सत्त्वाद्यानित्यादि । सत्त्वाद्यान्—सत्त्वमाद्यं येषां सत्त्वरजस्तमसां ते तथा । तद्गुणसंविज्ञानो बहुव्रीहिः । तान् । द्रव्यभेदान्—द्रव्यविशेषान् । समाहारतः—साम्यावस्थापन्नसङ्घातात्मकत्वेन । त्रिगुणमिति—गुणत्रयसमाहारात्मकं प्रधानमिति । कल्पयन्तः—साङ्ख्याः । तेषाम्—सत्त्वादीनाम् । नित्यं विभुत्वे—नित्यं विभुत्वेन स्वीकारे । तथा तैरस्वीकृतत्वादेवेत्यर्थः । अत्र—जगत्सृष्ट्यादिविषये। स्वकल्पितमिति शेषः । समविषमदशादि—समदशा विषमदशा च आदिर्यस्य समुदायस्य, एकदेशे साम्यं एकदेशे वैषम्यञ्चान्यशब्दार्थः । अत्रापि तद्गुणसंविज्ञानः । कीदृक्—कीदृशम् ।

वदेयुः—सत्त्वादीनां साम्ये संहारः, तेषां वैषम्ये सृष्टिरिति संहारसृष्ट्याद्यपेक्षितसाम्यवैषम्यदशा तेषां नित्यविभुत्वस्वीकारविरुद्धेत्यर्थः । प्रकृतिपुरुषयोरन्योन्याध्यासक्लृप्तिः—जीवगतस्य भोक्तृत्वस्य प्रकृतौ प्रकृतिगतस्य कर्तृत्वस्य जीवे चाध्यासइत्येवमन्योन्यधर्माध्यासकल्पना । भोगमोक्षोपपत्त्यै—संसारमोक्षयोरुपपत्त्यै । छायापत्त्यादिनीत्या—जपाकुसुमरागस्य स्फटिके छायापत्त्यादिन्यायेन । भवद्भिः स्वीक्रियत इति शेषः । इयम्—पूर्वोक्ताध्यासकल्पना । उभयाचेतनत्वे—उभयोः प्रकृतेः पुरुषस्य च अचेतनत्वे चेतनत्वाभावे । कथं घटेत—कथमुपपद्येतेत्यर्थः । विद्यमानमेव ह्यन्यत्र कल्प्यते न पुनरविद्यमानम् , इह तु चेतनत्वं जीवे न विद्यते जीवस्य ज्ञानमात्रत्वेन चेतनत्वस्य चैतन्याश्रयत्वरूपस्य भवद्भिरनङ्गीकारात् , नापि प्रधाने चेतनत्वं अचेतनस्वभावत्वादेव, ज्ञानचिकीर्षाप्रयत्नवत्त्वमेव हि कर्तृत्वम् , त्रयाणामपि जीवनिष्ठत्वेन प्रकृतिसम्बन्धो नास्त्येव, न च भोक्तृत्वं जीवनिष्ठं भवत्पक्षे पुरुषस्य पुष्करपलाशवन्निर्लेपत्वेन ज्ञानादिसर्वधर्मविधुरत्वात् तेनोभयत्रोभयमपि नास्तीत्यन्योन्याध्यासक्लृप्तिर्न घटत इति भावः ॥ १८१ ॥

पुंसां भोगापवर्गप्रभृति फलमिदं तच्च सर्वं प्रधाने
द्रष्टृत्वादेश्च क्लृप्तः पुरुष इह पृथग्द्रष्टृतादिश्च बुद्धौ ।
मुक्त्यै बद्धस्य शास्त्रं मुनिरकृत ततो नित्यमुक्तोऽस्मि चेत्या-
द्यन्योन्यव्याहतोक्ति वृषलपरिणये जैनभक्ता जपन्तु ॥ १८२ ॥

इति रचनानुपपत्त्यधिकरणम् ॥ ४६ ॥

चिन्ता०—साङ्ख्योक्तानामर्थानां सर्वेषामपि परस्परविरुद्धस्वभावत्वाद् वृषलोद्वाहमन्त्रन्यायमतिदिशति—पुंसामिति । पुरुषाणां भोगापवर्गप्रवृत्त्यादिकं फलं भवति भोगापवर्गयोः पुरुषार्थशब्दवाच्यत्वादिति साङ्ख्याः स्वयमेव प्राहुः । अथापि 'संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः' इति प्रकृतेरेव भोगापवर्गौ भणन्ति । तदिदमाह—तच्च सर्वं प्रधान इति । अयमेको विरोधः । विरोधान्तरमपि 'सङ्घातपरार्थत्वात्' इत्यादिना प्रकृतिद्रष्टृत्वेन क्लृप्तः पुरुषः, द्रष्टृत्वं पुनरन्तःकरणस्येति तत्रतत्र भणन्ति साङ्ख्याः । अयमप्यन्योविरोधः । तदिदमाह—द्रष्टृत्वादेरिति । तृतीयमपि विरोधमाह—मुक्त्या इति । जीवस्य बद्धस्य मुक्त्यै सांख्यशास्त्रं कपिलमुनिरकृत ततो नित्यमुक्तोऽस्म्यहमित्यादिपरस्परव्याहतोक्ति वृषलपरिणये शूद्रविवाहे जैनभक्ताः परस्परविरुद्धव्यवहारप्रवर्तक-

जैनसिद्धान्तभक्तास्साङ्ख्याः प्रवदन्तु । जैनानां व्याहतभाषित्वं स्यादस्तीत्यादिसप्तभङ्गीप्रलापात् । वृषलपरिणय इति द्रमिडदेशीयोऽयं व्यवहारः । तस्मिन्देशे याजकाः 'अश्मानं पादेन प्रहर प्रहृत्य च न प्रहरामीति वद, असत्यवचनप्रायश्चित्तार्थमस्माकं द्रोणद्वयपरिमितं धान्यं प्रयच्छ' इति मन्त्रं पाठयन्ति । तेन साङ्ख्यसिद्धान्तस्सर्वोऽपि परिहासास्पदमित्यर्थ इति ॥ १८२ ॥

इति रचनानुपपत्त्यधिकरणम् ॥ ४६ ॥

पद०—पुंसामित्यादि । इदं भोगापवर्गप्रभृति—भोगापवर्गादिकं फलम् । पुंसाम्—पुरुषाणां चेतनानाम् । तच्च सर्वम्- पुरुषसम्बन्धितयोक्तं तत्सर्वं फलजातम् । प्रधाने—त्रिगुणद्रव्य—एव । 'बध्यते मुच्यते च नानाश्रया प्रकृतिः' इति भोगमोक्षादिकं प्रकृतेरेवेत्यर्थः । इह—साङ्ख्यदर्शने । द्रष्टृत्वादेः—प्रकृतिद्रष्टृत्वादिहेतुभ्यः । पुरुषः—जीवः । पृथक्—पृथक्तया । क्लृप्तः—निश्चितः 'सङ्घात-परार्थत्वात्' इत्यादितदीयवचनात् । द्रष्टृतादिश्च—जीवसम्बन्धितयोक्तो द्रष्टृतादिश्च । बुद्धौ—अन्तःकरणे । बद्धस्य—जीवस्य । मुक्त्यै—मुक्तिलाभाय । शास्त्रम्—साङ्ख्यशास्त्रम् । मुनिः—कपिलः । अकृत—निर्मितवान् । ततः—तेन शास्त्रेण नित्यमुक्तोऽस्मि च । इत्याद्यन्योन्यव्याहतोक्तिम्—एवमादिकां पूर्वोत्तरविरुद्धोक्तिम् । जैनभक्ताः—विरुद्धभाषणेन जैनतुल्यतया जैनभक्तास्साङ्ख्याः । वृषलपरिणये—शूद्रविवाहसमये जपन्तु । द्रमिडदेशे याज्ञिकैर्वृषलविवाहकाले पठ्यमानविरुद्धार्थकवाक्यतुल्यतया साङ्ख्यवाक्यानि शूद्रविवाहमन्त्रवत् परिहासयोग्यानीत्यर्थः ॥ १८२ ॥

इति रचनानुपपत्त्यधिकरणम् ॥ ४६ ॥

## महद्दीर्घाधिकरणम् ॥ ४७ ॥

सूत्रम्—महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ॥ १८४ ॥

कल्प्योपादानमेकं परममहदधिक्षिप्य नानाविधाणू-
पादानौघस्य दृष्टात् समधिकवपुषः कल्पनेऽनिष्टमाह ।
प्राज्ञाधिष्ठानशून्यप्रकृतिपरिणतिः प्राङ् निरस्ताथ सेशं
सूक्ष्माणुद्रव्यमूलद्व्यणुकमुखजगत्सृष्टिपक्षं पिनष्टि ॥ १८३ ॥

चिन्ता०—अत्राचार्या एव पूर्वोत्तराधिकरणयोस्सङ्गतिमुभयथा प्राहुः—कल्प्येति । अनुमान-परिकल्प्या मूलप्रकृतिरेव विश्वस्योपादानमिति साङ्ख्यपक्षः पूर्वं प्रतिक्षिप्तः, अधुना पुनरनुमानपरि-कल्प्या नानाभूताः परमाणवो विश्वोपादानमिति परिकल्पनानिषेधः क्रियत इत्येका सङ्गतिः । अपरा—ईश्वरानधिष्ठितप्रधानकारणवादी पूर्वं निरस्तः, अधुना पुनर्निमित्तमात्रेश्वराधिष्ठितपरमाणूपादानवादो निरस्यत इति सङ्गतिः । सेश्वरसाङ्ख्या न निराकरणीयाः, योगोऽपि तत्तुल्यत्वान्न निराकरणीयः, अतोऽत्र तत्प्रसङ्गाभाव इति पूर्वमेवोक्तम् । शैवमतस्य प्रधानकारणवादसाम्येऽपि पश्चान्निरासस्तु बाह्यत्वाधिक्येने-त्याहुः । इह च वैशेषिकबौद्धयोरपि परमाणुकारणवादित्वे तुल्येऽपि काणादमतस्य प्रथमोपादानं साङ्ख्यवद्वैदिकत्वाभिमानमात्रादिति चाहुः । तदर्थविचारस्तु—किं विपाकदशापन्नादृष्टसचिवाः परमाणव ईश्वराधिष्ठिता जगदारम्भका न वेति । किं परमाणूनां संयोगद्वारावयव्यारम्भकत्वे कारणानवस्थितिः कार्यप्रथिमा प्रसज्यते नवेति । अत्र प्रथमश्लोकस्य पूर्वोत्तराधिकरणसङ्गतिवादिनोऽयं शब्दान्वयः—कल्प्यो-पादानमेकम्—अनुमानकल्प्यमुपादानमेकं परममहत् प्रधानं प्रतिक्षिप्य दृष्टात् त्रसरेणोरधिकवपुषो नानाविधाणूपादानौघस्य पार्थिवाप्यतैजसवायवीयाणुरूपोपादानौघस्य कल्पनेऽनिष्टमाहेत्येका सङ्गतिः । अपरा च सङ्गतिरुच्यते—प्राज्ञेति । ईश्वराधिष्ठानशून्यमूलप्रकृतिपरिणतिः पूर्वाधिकरणे निरस्ता, अथास्मिन्नधिकरणे सेश्वरं सूक्ष्माणुद्रव्यमूलद्व्यणुकादिक्रमेण जगत्सृष्टिपक्षं पिनष्टि निरा-करोतीत्यर्थः ॥ १८३ ॥

पद०—कल्प्येत्यादि । कल्प्योपादानम्—अनुमानकल्प्यञ्च तदुपादानञ्च एवम्भूतम् । एकं परममहत्—प्रधानम् । अधिक्षिप्य—निरस्य । दृष्टात्—त्रसरेणोः । समाधिकवपुषः—अधिकस्वरूपस्य कल्प्यस्येत्यर्थः । नानाविधाणूपादानौघस्य—पार्थिवाप्यतैजसवायवीयाणुरूपोपादानौघस्य । कल्पनेऽनिष्टमाह । इयमेका पूर्वोत्तराधिकरणसङ्गतिः । प्राज्ञाधिष्ठानशून्यप्रकृतिपारिणतिः—ईश्वरानधिष्ठितमूलप्रकृतिपरिणतिपक्षः । प्राक्—पूर्वाधिकरणे, निरस्ता । अथ—अस्मिन्नधिकरणे । सेशम्-सेश्वरम् । सूक्ष्माणुद्रव्यमूलद्व्यणुकमुखजगत्सृष्टिपक्षम्—सूक्ष्माः अतीन्द्रियाः अणवः परमाणव एव द्रव्याणि मूलं आदिकारणं यस्यास्तादृश्याः, द्व्यणुकादिक्रमेण जगत्सृष्टेः पक्षं सिद्धान्तं, यद्वा सूक्ष्माणुद्रव्यमूलकं यत् द्व्यणुकं तदादिरूपस्य जगतस्सृष्टेः पक्षम् । पिनष्टि—निराकरोतीत्यर्थः ॥ १८३ ॥

प्रागेवारम्भणोक्तावपहृतविषया प्रागसद्द्रव्यक्लृप्तिः
काणादानामिदानीं क्षिपति बहुमुखं कारणप्रक्रियांशम् ।
त्रेधा हेतौ विभक्ते ह्यनुमितिशरणैस्तत्तदंशे यथार्हं
व्याघातादीन् विकल्पक्रमविविधगतीन् व्याहरत्यत्र सूत्रैः ॥ १८४ ॥

चिन्ता०—ननु प्रागेवारम्भणाधिकरणे वैशेषिको निरस्तः किमर्थमिदानीं पुनर्निरस्यत इत्याशङ्क्य प्राचीननिरासादाधुनिकनिरासे वैषम्यमाह—प्रागेवेति । अत्रायं शब्दार्थः—प्रागेवारम्भणाधिकरणे प्रागसद्द्रव्यक्लृप्तिरपहृतविषया काणादानामिति सत्यमेतत् , तथापीदानीं कारणप्रक्रियांशं क्षिपति समवायिकारणमसमवायिकारणं निमित्तकारणमित्यादिप्रक्रियाभेदान्प्रतिक्षिपतीत्यर्थः । उक्तमेव विवृणोति-त्रेधेति । अनुमितिशरणैः काणादादिभिः समवाय्यसमवायिनिमित्तभेदेन त्रेधा हेतौ विभक्ते सति तत्तदंशे व्याघातादीन् विकल्पक्रमेण विविधप्रकारान् बाधकानस्मिन्नधिकरणे सूत्रकारो व्याहरतीति न पौनरुक्त्यप्रसङ्ग इति ॥ १८४ ॥

पद०—प्रागेवेत्यादि । प्रागेव—पूर्वपाद एव । आरम्भणोक्तौ—आरम्भणाधिकरणे । प्रागसद्द्रव्यक्लृप्तिः—उत्पत्तेः प्रागविद्यमानस्यैव द्रव्यस्योत्पत्तिरिति कल्पना । अपहृतविषया—प्रागप्यवस्थान्तरेण विद्यमानस्यैव द्रव्यस्य पुनरन्यावस्थाप्राप्तिरिति स्थापनेनापहृतावकाशा । इदानीं तु काणादानां बहुमुखम्—समवाय्यसमवायिनिमित्तभेदेन बहुप्रकारम् । कारणप्रक्रियांशम्—कारण-

प्रक्रियाभेदान् । क्षिपति—निराकरोतीत्यर्थः । उक्तमेव विवृणोति पश्चार्धेन । अनुमितिशरणैः—काणादादिभिः । त्रेधा—समवाय्यसमवायिनिमित्तभेदेन त्रैविध्येन । हेतौ—कारणे, विभक्ते सति । तत्तदंशे, यथार्हम्—यथायोगम् । विकल्पक्रमविविधगतीन्—विकल्पक्रमेण विविधप्रकारान् । व्याघातादीन्—बाधकान् । अत्र—अस्मिन्नधिकरणे । सूत्रैः—'महद्दीर्घवत्' इत्यादिसूत्रैः । सूत्रकारो व्याहरतीत्यन्वयः । अतो न पौनरुक्त्यमिति हृदयम् ॥ १८४ ॥

दृष्टस्याणोः प्रसूतिं द्व्यणुकमणुमपि स्थापयन्तोऽनुमित्या
दृष्टाकारानुसारान्न निरवयवताद्यत्र वक्तुं क्षमेरन् ।
सर्वं सह्येत सूक्ष्मे प्रमितिपरवतां जालकालोकलक्ष्ये
तद्भागान्ख्यापयेद्वा स्मृतिरफलतया त्वान्यपर्येण नेया ॥ १८५ ॥

चिन्ता०—दृष्टं तावत्सर्वलोकसम्प्रतिपत्त्या जालसूर्यमरीचिस्थं द्रव्यं यत् तदेवाणुतारतम्यं क्वचिद्विश्रान्तं परिमाणतारतम्यत्वादित्याद्यनुमानस्य विषयभूमिरिति तान्त्रिकाः, वेदान्तिनश्च तथैवानुमेनिरे । काणादास्तु ततःपरमपि द्व्यणुकपरमाणुरूपद्रव्यद्वयमनुमानादन्यस्मात्कल्पयन्ति, विप्रतिपन्नं जालसूर्यमरीचिस्थं द्रव्यं सावयवं चाक्षुषद्रव्यत्वाद् घटवदिति । तदेतदनुवदति—दृष्टस्येति । एवमनुमानं वदतां वैशेषिकादीनां दृष्टानुसारेणोत्तरोत्तरं कल्प्यमनुमानशरणत्वात् । अनुमानेच दृष्टानुसारस्य न्याय्यत्वात् । तथा च निरवयवारब्धत्वं क्वचिदन्यत्र न दृष्टमित्यत्रापि निरवयवारब्धत्वं कल्पयितुमेव न शक्यते । तथाच न परमाणुसिद्धिः । तदिदमाह—दृष्टाकारानुसारादिति । नन्वणुतारतम्यं क्वचिद्विश्रान्तमिति परमाणुविश्रमोऽस्माभिः प्रमाणबलात्स्वीक्रियत इति चेत् स्वीक्रियतां नाम विश्रमः, अथापि न भवदभिमताप्रत्यक्षपरमाणौ विश्रमः, अपि त्वस्मदभिमतजालसूर्यमरीचिस्थद्रव्येऽणुपरिमाणतारतम्यविश्रम इति विश्रमानुमानं सार्थकमेव, अतो न भवदभिमतपरमाणुसिद्धिः । नन्वस्मदभिमतपरमाणौ युष्मदभिमतजालसूर्यमरीचिस्थपरमाणावपि कृत्स्नैकदेशविकल्पानुपपत्तिस्तुल्या तत्कथं तत्रापि विश्रमः स्वीक्रियत इत्यत्रोत्तरम्—सर्वं सह्येतेति । नहि दृष्टेऽनुपपन्नं नामेति न्यायः । दृष्टं च जालकालोकमध्यस्थम् । त्वदभिमतः परमाणुर्न दृष्टः । तेन दृष्टे तस्मिन् सर्वमपि दूषणाभासजातं सोढुं शक्यते प्रत्यक्षप्रमाणपरतन्त्राणामस्माकम् । केवलमनुमानशरणानां भवतां न सोढुं शक्यते । तेन न युष्मदभिमतपरमाणुसिद्धिः । किंच लाघवमस्माकमनुमाहकतर्कः ; दृष्टमात्रे विश्रमात् । भवतां तु गौरवं बाधकतर्कः ; दृष्टादधिकयोर्द्व्यणुकपरमाण्वोः

कल्पनादिति। ननु क्वचित्स्मृतौ त्रसरेणौ वैशेषिकोक्तप्रक्रियया भागाननुमत्य त्रसरेण्वादिपरिमितहिरण्यादिदाने फलनिर्देशो दृष्टः, तत्कथं त्रसरेणोर्निरवयवत्वं भवताऽभिधीयत इत्याशङ्क्याह-तद्भागानिति। तस्यास्स्मृतेस्तद्भागख्यापने तात्पर्यं नास्त्येवाफलत्वात्। ख्यापयेद्वेत्यत्र मा वेति शेषः। आन्यपर्येण नेया-तद्भागख्यापने प्रयोजनाभावात् त्रसरेण्वादिपरिमितद्रव्यदाने तात्पर्येणान्यपरत्वेन नेयेत्यर्थ इति ॥ १८५ ॥

पद०—दृष्टस्याणोरित्यादि। दृष्टस्य—जालसूर्यमरीचिस्थतयोपलभ्यमानस्य। अणोः—त्रसरेणोः। प्रसूतिम्—कारणम्। द्व्यणुकम्—द्व्यणुकारम्भमणुविशेषम्। अणुमपि—द्व्यणुककारणतया परमाणुशब्दवाच्यमणुमपि। अनुमित्या स्थापयन्तः काणादाः। दृष्टाकारानुसारात्—अन्यत्र दृष्टाकारस्यैव कल्प्येऽप्यनुसरणीयतया। अत्र—परमाणौ। निरवयवतादि—निरवयवत्वप्रभृति धर्मजातम्। वक्तुम्—प्रतिपादयितुम्। न क्षमेरन्-न शक्नुयुः। द्रव्यान्तरारम्भकस्य द्रव्यस्य निरवयवत्वमन्यत्र क्वाप्यदृष्टमित्यस्मिन्नपि द्व्यणुकारम्भके परमाणौ न निरवयवत्वं वक्तुं शक्नुयुरित्यर्थः। अणुपरिमाणतारतम्यविश्रमस्थानतया परमाणुकल्पनं व्यर्थमनर्थावहञ्चेति भावः। जालकालोकलक्ष्ये—जालसूर्यमरीचिषूपलभ्यमाने। सूक्ष्मे—त्रसरेणौ तु। सर्वम्—दूषणाभासजातं सर्वमपि। प्रमितिपरवताम्—प्रत्यक्षप्रमाणपरतन्त्राणामस्माकम्। सहेत—न हि दृष्टेऽनुपपन्नं नामेति न्यायेन सोढुं शक्यते। स्मृतिस्तु—हिरण्यदानफलप्रशंसापरा त्रसरेणुतदवयवद्व्यणुकादितुल्यपरिमितिकहिरण्यदातुः फलविशेषान्निर्दिशन्ती स्मृतिस्तु। तद्भागान्-त्रसरेण्ववयवान्। ख्यापयेद्वा—प्रख्यापयेद्वा। अत्र मा वा इति शेषः। अफलतया—परिमितहिरण्यदानप्रशंसापरायास्तस्यास्त्रसरेण्ववयवख्यापने वैफल्यात्। आन्यपर्येण—उक्ततात्पर्यान्तरेण। नेया—नेतुमर्हा ॥ १८५ ॥

विश्रान्तिर्न क्वचिच्चेदवयवनिवहानन्त्यतो मानसाम्यं
मापक्षोणीभृतोस्स्यादिति यदि तदसत् तारतम्यादनन्ते।
वैषम्यं पक्षमासप्रभृतिषु नियतं न ह्यनन्तेष्वनिष्टं
पारापर्यञ्च जात्योर्न किमनुकथितं व्यक्त्यनन्तत्वसाम्ये ॥ १८६ ॥

चिन्ता०—अत्र चानन्तावयवारब्धत्वे मशकमातङ्गयोरविशेषप्रसङ्ग इत्यादीनामुन्मत्तभाषणानां तत्त्वमुक्ताकलापादिषूक्तमप्युत्तरमस्मिन् निबन्धेऽपि दिङ्मात्रेण दर्शयितुमुपक्रमते—विश्रान्तिरिति। इत्थं किल परमाणुकारणवादिनः प्राहुः—परमाणोरनन्तावयवारब्धत्वे मशकमातङ्गयोरनन्तावयवारब्धत्वाविशेषात् परि-

माणतारतम्यं न स्यादिति । तदिदमभिधीयते—विश्रान्तिरिति । न क्वचित्परिमाणविश्रान्तिश्चेत् अवयवनिवहानन्त्यात् मापमहीभृतोर्मानसाम्यं स्यादिति यदि वदसीति । अनूदितमर्थं प्रतिक्षिपति—तदसदिति । असत्त्वे हेतुमाह—तारतम्यादिति । अनन्तेऽपि तारतम्यस्य विद्यमानत्वादित्यर्थः । एकपरमाण्ववयवानन्त्यात् पर्वतप्रविष्टानन्तपरमाण्ववयवानन्त्ये वैषम्यस्य वक्तुं शक्यत्वादित्यर्थः । उक्तमर्थं दृष्टान्ताभ्यां विविच्य प्रकाशयति—वैषम्यमिति । अनन्तेष्वपि पक्षमासप्रभृतिषु नियतं दृष्टं वैषम्यं नहि भवतामनिष्टम् । अयमर्थः—व्यतीता मासास्तावदनन्ताः, दिवसाः पक्षा इत्यादयस्सर्वेऽपि कालभेदा अनन्ता एव, तथापि पूर्वपूर्वेभ्य उत्तरोत्तरेषामाधिक्यमीश्वरेणापि नापलपितुं शक्यतइति । दृष्टान्तान्तरमपि दर्शयति—पारापर्यमिति । द्विधा हि जातिः परजातिरपरजातिश्च पृथिवीत्वादिः परजातिर्घटत्वादिरपरजातिरिति हि भवतां मतम् । तत्राश्रयाधिक्यात्पृथिवीत्वादीनां परजातित्वमाश्रयाल्पीयस्त्वाद् घटत्वादीनामपरजातित्वमिति भवन्त एव कल्पयन्ति । तथाचाश्रयानन्त्येऽपि तारतम्यं भवतामेवेष्टमिति भवत्प्रक्रियां भवन्त एव परामृशन्त्विति ॥ १८६ ॥

पद०—विश्रान्तिरित्यादि क्वचित्—परमाणौ । विश्रान्तिर्न चेत्—अवयवधाराविश्रमो नास्ति चेत् । अवयवनिवहानन्त्यतः—अवयवनिवहानन्त्यात् । मापक्षोणीभृतोः—मापपर्वतयोः । मानसाम्यम्—परिमाणसाम्यम् । स्यादिति—अल्पावयवत्वबह्ववयवत्वाभ्यां हि मापपर्वतयोः परिमाणतारतम्यम्, इदानीमवयवधाराविश्रमाभावे द्वयोरप्यनन्तावयवत्वसाम्यात् परिमाणतारतम्यं न स्यादिति । यदि—एवं वदसि यदि । तदसत्—तदसाधु । अनन्ते तारतम्यात्—अनन्तेऽपि तारतम्यस्य विद्यमानत्वादित्यर्थः । परमाण्ववयवानन्त्यात् पर्वतप्रविष्टानन्तपरमाण्ववयवानन्त्यवैषम्यस्य वक्तुं शक्यत्वादिति यावत् । उक्तस्यार्थस्य दृष्टान्ताभ्यां विवरणमुत्तरार्धेन—अनन्तेष्वपि पक्षमासप्रभृतिषु नियतं दृष्टं वैषम्यं नहि भवतामनिष्टम् । दिवसाः पक्षा मासा इत्यादयः कालभेदाः सर्वेऽपि पृथगनन्ता एव, तथापि पूर्वपूर्वेभ्य उत्तरोत्तरेषामाधिक्यमीश्वरेणापि नापलपितुं शक्यमित्यर्थः । व्यक्त्यनन्तत्वसाम्ये—आश्रयव्यक्त्यानन्त्यतौल्येऽपि । जात्योः—पृथिवीत्वघटत्वरूपयोर्द्वयोर्जात्योः । पारापर्यम्—पराचापराच परापरे तयोर्भावः पारापर्यम्, परजातित्वमपरजातित्वञ्चेत्यर्थः । अनुकथितं न किम्—भवद्भिरेवोक्तं न किम् । जातिर्द्विविधा परा चापराच, पृथिवीत्वादिः परजातिर्घटत्वादिरपरजातिः, तत्राश्रयाधिक्यात् पृथिवीत्वादिः परजातिः आश्रयाल्पीयस्त्वात् घटत्वादिरपरजातिरिति हि भवत्प्रक्रिया । तत्राश्रयानन्त्ये तुल्येऽपि परत्वापरत्वरूपं तारतम्यं भवद्भिर्यथोक्तं तथान्यत्रापि स्यादिति भावः ॥ १८६ ॥

नादृष्टं किञ्चिदन्यत् श्रुतिसरणिजुषां देवतानुग्रहादेः
अन्यत्वे तस्य तज्ज्ञैरधिकयतनवत्क्लप्तिरादौ न्युदस्ता ।
यत्ने यत्नानपेक्षां न किमनुमनुते स्याददृष्टेऽपि तद्वत्
भूतस्थादृष्टवादे द्व्यणुकृदणुगतादृष्टकल्पोऽत्र लूनः ॥ १८७ ॥

चिन्ता०—अत्र 'उभयथाऽपि न कर्म' इत्यस्मिन् सूत्रे सूत्रकारैरेव वैशेषिकाणां 'अग्नेरूर्ध्वज्वलनम्' इत्याद्युक्तादृष्टकारितकर्मक्लृप्तिर्निरस्ता, तमेवार्थमदृष्टस्वरूपनिरूपणपूर्वकं दर्शयति—नादृष्टमित्यादिना। श्रुतिसरणिजुषामस्माकं देवतानुग्रहादेरन्यददृष्टं नाम किंचिन्नास्ति। अस्यादृष्टस्य देवतानुग्रहादेरन्यत्वेन जीवनिष्ठत्वे परिकल्पिते तज्ज्ञैस्तादृग्विधादृष्टस्वरूपज्ञैरधिकयतनवत्क्लृप्तिरदृष्टादधिकस्य यतनवत ईश्वरस्य क्लृप्तिरादौ शास्त्रारम्भे शास्त्रयोन्यधिकरणे निरस्ता। अयमर्थः—जीवगतादृष्टादेव विश्वसृष्टिपरिग्रहे हेतुभूतयतनवत ईश्वरस्य कल्पनया किमितीश्वरकल्पना निरस्ता। नन्वदृष्टस्याचेतनत्वात्तत्प्रेरकत्वेनाचेतनं चेतनाधिष्ठितमिति न्यायेनेश्वरयत्नापेक्षास्तीत्याशङ्क्य तत्प्रयत्नमेव प्रतिबन्दीकरोति—यत्न इति। ईश्वरयत्नस्याचेतनत्वेऽपि यथा यत्नान्तरं तत्प्रेरकत्वेन नापेक्ष्यते यत्नान्तरापेक्षायामनवस्थाप्रसङ्गात्, तथैव जीवादृष्टस्याचेतनत्वेऽपि ईश्वरयत्नापेक्षा नास्त्येव। अयमत्र शब्दार्थः—परवादी खल्वीश्वरयत्ने यत्नान्तरानपेक्षां न किमनुमनुते—अनुमनुत एवेत्यर्थः। स्याददृष्टेऽपि तद्वत्—ईश्वरयत्ने यत्नान्तरापेक्षाभाववदचेतनत्वे सत्यपि जीवादृष्टेऽपीश्वरयत्नापेक्षा न स्यादेव, तथा च जीवगतादृष्टस्य विश्वकारणत्वे सति नेश्वरसिद्धिरित्यर्थः। एवं जीवगतादृष्टपक्षं निरस्य भूतगतादृष्टपक्षे द्व्यणुकृदणुगतादृष्टपक्षोऽत्र लूनः। द्व्यणुककारणभूतपरमाणुगतादृष्टपक्षो भाष्यकारैरत्र विस्तरेण लूनो निराकृत इत्यर्थः। अस्मिन्विषये विस्तरो भाष्य एव द्रष्टव्य इति ॥ १८७ ॥

पद०—नादृष्टमित्यादि। श्रुतिसरणिजुषाम्—अस्माकम्। देवतानुग्रहादेरन्यत् अदृष्टं नाम किञ्चित् नास्ति। तस्य—अदृष्टस्य। अन्यत्वे—देवतानुग्रहादेरन्यत्वे तेन जीवनिष्ठत्वे परिकल्पिते। तज्ज्ञैः—तादृग्विधादृष्टस्वरूपज्ञैः। अधिकयतनवत्क्लृप्तिः—अदृष्टादधिकस्य यतनवत ईश्वरस्य कल्पना। आदौ निरस्ता—शास्त्रारम्भे शास्त्रयोन्यधिकरणे निरस्ता, जीवगतादृष्टैरेव विश्वसृष्टावुपपन्नायामधिकेश्वरकल्पनमन्याय्यमिति। अदृष्टस्याचेतनत्वाच्चेतनाधिष्ठानमावश्यकमितीश्वरयत्नापेक्षास्तीत्याशङ्क्येश्वरयत्नस्य यत्नान्तरानपेक्षस्यैव कार्यकारित्ववत् जीवगतादृष्टस्यापि ईश्वरयत्ननिरपेक्षस्यैव कार्यकारितास्त्वित्युच्यते—

यत्न इति। यत्ने—ईश्वरयत्ने। यत्नानपेक्षाम्—यत्नान्तरापेक्षाभावम्। अनुमनुते न किम्—अङ्गीकरोति न किमित्यर्थः। अदृष्टेऽपि—जीवगतादृष्टेऽपि। तद्वत् स्यात्—ईश्वरयत्नानपेक्षा स्यात्। तथा च जीवगतादृष्टस्य विश्वकारणत्वे सति नेश्वरसिद्धिरित्यर्थः। भूतस्थादृष्टवादे—भूतगतादृष्टपक्षे। द्व्यणुकृदणुगतादृष्टकल्पः—द्व्यणुककारणभूतपरमाणुगतादृष्टपक्षः। अत्र—एतदधिकरणे। लूनः—निराकृत इत्यर्थः। भाष्यकारैरिति शेषः। तथा च भाष्यम्—'परमणुकारणवादे हि परमाणुगतकर्मजनिततत्संयोगपूर्वकद्व्यणुकादिक्रमेण जगदुत्पत्तिरिष्यते' इत्यारभ्य 'तदिदं परमाणुगतं कर्म स्वगतादृष्टकारितमात्मगतादृष्टकारितं वा उभयथापि न सम्भवति क्षेत्रज्ञपुण्यपापानुष्ठानजनितस्यादृष्टस्य परमाणुगतत्वासम्भवात्, सम्भवे च सदोत्पादकत्वप्रसङ्गः, आत्मगतस्य चादृष्टस्य परमाणुगतकर्मोत्पत्तिहेतुत्वं न सम्भवति' इत्यादि॥ १८७॥

नित्यं सम्बन्धमेके निजगदुरपृथक्सिद्धसर्वानुवृत्तं
नित्यं नित्येष्वनित्येष्वपि कतिचिदिमं तावदायुष्कमाहुः।
तत्तद्द्वन्द्वस्वभावप्रतिनियतिमुचां स्यान्न तेन व्यवस्था
गुर्वी त्वन्यस्य क्लृप्तिः कथमधिकजुषां नानवस्थादिदोषः॥ १८८॥

चिन्ता०—अत्र सूत्रकारस्समवायक्लृप्तिं स्वयमेव निराचकार, तदेवानूद्य निराकरोति—नित्यमिति। एके वैशेषिका नित्यं सम्बन्धं निजगदुः। कतिचित्प्राभाकरा नित्येषु नित्यमनित्येष्वनित्यं तमेव सम्बन्धं प्राहुः। अत्रानित्येष्वितिवचनं नित्यानित्ययोरप्युपलक्षणम्। इमं तावदायुष्कमाहुः—इमं समवायसम्बन्धं सम्बन्धिसमानायुष्कं सम्बन्धिद्वयसमानकालीनमित्यर्थः। अत्र समवायनैरपेक्ष्यमाह—तत्तदिति। अयमत्र विकल्पः—समवायो हि विशेषणविशेष्ययोरपृथक्सिद्धयोरन्योन्याश्लेषव्यवस्थापकत्वेन हि भवद्भिः परिकल्प्यते। स च समवायो विशेषणविशेष्ययोरन्योन्यप्रतिसम्बन्धिस्वभावमुपजीव्य व्यवस्थापयति, अथवा स्वयमेव। यदि स्वयमेव तदा विरुद्धधर्मयोरपि विशेषणविशेष्ययोः स्वयमेव सम्बन्धस्स्यात्। तथा च लोकविरोधः। नहि समवायः शैत्यदावानलयोरपि स्वयं सम्बन्धतां प्रतिपद्यते। एवञ्च तत्तत्सम्बन्धिद्वयस्वभावमुपजीव्य समवायो व्यवस्थापक इति पक्षः परिशिष्यते। तस्मिन्नपि पक्षे दोषमाह—गुर्वीति। सम्बन्धिद्वयस्वभावमुपजीव्य पुनः समवायस्यापि क्लृप्तिर्गुर्वी। समवायमन्तरेणापि शैत्यजले स्वभावादेव परस्पराश्लिष्टे एवमौष्ण्यकृष्णवर्त्मानावपीति लघीयं कल्पना

ज्यायसीत्यर्थः । एवमस्मत्पक्षानङ्गीकारे समवायस्यापि सम्बन्धिनावुद्दिश्य विशेषणत्वेन व्यवहारदर्शनात् तत्रापि समवायान्तरं कल्पनीयम् । तथा चानवस्था, तत्र स्वभावसम्बन्धाङ्गीकारेऽपृथक्सिद्धविशेषणविशेष्ययोरेव स्वभावसम्बन्धोऽङ्गीकार्यः स्वभावसम्बन्धाङ्गीकारेणातिरिक्तस्य समवायाख्यस्यसम्बन्धस्यानुपलब्धिपराहतत्वादित्यर्थः ॥ १८८ ॥

पद०—नित्यं सम्बन्धमित्यादि । एके—वैशेषिकाः । अपृथक्सिद्धसर्वानुवृत्तम्—अपृथक्सिद्धेषु गुणगुण्यादिषु सर्वेष्वनुस्यूतम् । नित्यं सम्बन्धम्—समवायाख्यं नित्यं सम्बन्धम् । निजगदुः—ऊचुः । कतिचित्—प्राभाकराः । इमम्—समवायम् । नित्येषु नित्यम्—नित्यगुणगुण्यादिषु नित्यम् । अनित्येष्वपि तेषु तावदायुष्कम्—सम्बन्धिद्वयसमानकालिकम्, आहुः । अनित्येष्विति वचनं नित्यानित्ययोरप्युपलक्षणम् । नित्यानित्यसम्बन्धिनोरपि अनित्यमित्यर्थः । तत्तद्द्वन्द्वस्वभावप्रतिनियतिमुचाम्—तत्तद्द्वन्द्वानि शैत्यजलौष्ण्यानलादिसम्बन्धिद्वन्द्वानि तेषां स्वभावप्रतिनियतिः स्वभावनियमस्तन्मुचां विशेषणविशेष्ययोरन्योन्यप्रतिसम्बन्धित्वस्वभावमनुपजीव्य समवाय एव तयोरन्योन्याश्लेषव्यवस्थापक इति वदतामित्यर्थः । तेन—समवायेन । व्यवस्था न स्यात्—शैत्यजलयोरेव समवायो न तु शैत्यदावानलयोरिति व्यवस्था न स्यादित्यर्थः । तत्तद्द्वन्द्वस्वभावमुपजीव्य समवायस्य गुणगुण्याश्लेषव्यवस्थापकत्वेऽपि दूषणमाह—अन्यस्येति । शैत्यजलौष्ण्यानलादिषु स्वभावादेव परस्पराश्लेषसिद्धौ अन्यस्य समवायस्य क्लृप्तिस्तु कल्पना गुर्वी । गुणादिविशिष्टप्रतीतिनिर्वाहकत्वेनातिरिक्तसमवायाभ्युपगमे दोषमाह—कथमित्यादिना । अधिकजुषां विशिष्टबुद्धिनिर्वाहायातिरिक्तं समवायमङ्गीकुर्वताम्, अनवस्थादिदोषः कथं न स्यादिति । अयं भावः—विशेषणविशेष्ययोर्विशिष्टबुद्धिनिर्वाहायातिरिक्तसमवायाभ्युपगमे समवायस्यापि सम्बन्धिनावुद्दिश्य विशेषणत्वेन रूपसमवायवान् घट इत्यादिव्यवहारदर्शनात् तत्रापि समवायान्तरं कल्पनीयम्, तथा चानवस्था, तत्र स्वभावसम्बन्धाङ्गीकारे अपृथक्सिद्धविशेषणविशेष्ययोरेव स्वभावसम्बन्धोऽङ्गीकार्यः, नत्वनुपलब्धः समवायोऽङ्गीकार्य इति ॥ १८८ ॥

निर्धूते सूत्रकारैरवयविपरमाण्वात्मके द्रव्यवर्गे
विश्वं व्याप्त्येकलक्ष्यं परममहदसत् स्यादथाद्रव्यमेव ।
मैवं दृष्टाणुतत्संहतितदुभयसम्बन्धसिद्धेरबाधात्
आगन्तुक्षोणिताद्यैश्श्रुतिरपि जगदारम्भणं बम्भणीति ॥ १८९ ॥

इति महद्दीर्घाधिकरणम् ॥ ४७ ॥

चिन्ता०—एवमवयविपरमाणुनिराकरणे सूत्रकारैः कृते सति परममहत्परिमाणमवशिष्यत इत्येकः पक्षः, अथवा तेनैव न्यायेन सर्वमप्यसत्स्यादित्यपरः, यद्वा द्रव्यरूपं वस्तु नास्ति अद्रव्यमेवाव-तिष्ठत इत्यपरः, तथाच सर्वलोकविरोध इति कश्चिन्मनुते। तदिदमनुवदति—निर्धूत इति। अयमत्र शब्दान्वयः—सूत्रकारैरवयविपरमाण्वात्मके द्रव्यवर्गे निर्धूते सति विश्वं व्याप्त्येकलक्ष्यं परममह-देव स्यात्। अथवा असत् स्यात् तेनैव न्यायेन महतोऽप्यभावात्। यद्वा-एवं द्रव्ये निरस्ते विश्वमद्रव्य-मेव स्यात्। सर्वमप्येतदसम्भवीति भावः। उक्तं चोद्यं प्रतिक्षिपति—मैवमिति। तत्र हेतुमाह—दृष्टेति। नह्यस्माभिर्दृष्टं त्रसरेणुद्रव्यं तत्संहतिरूपं कार्यद्रव्यं तदुभयसम्बन्धादिकं बाध्यते, अपितु त्रसरेणुद्रव्यव्यति-रिक्तद्व्यणुकपरमाणुक्लृप्तिमात्रमप्रामाणिकत्वाद्गौरवतर्कोपहतत्वाच्च निरस्यते तस्मान्नोक्तदोष इत्यर्थः। कथं तर्हि भवत्पक्षे प्रलयकाले क्षित्यादीनामभावात् पञ्चभूतकार्यतया जगत्सृष्टिरसम्भवतीत्याशङ्क्य परिहरति-आगन्त्विति। प्रकृतावेव महदाद्यवस्थाविशेषा जायन्ते तेन प्रकृतिरेव नित्या महदादितत्त्वान्त-राणितु पञ्चभूतपर्यन्तान्यनित्यान्येव तेनागन्तुकपृथिव्याद्यवस्थामापन्नैः प्राकृतैर्द्रव्यैर्विश्वसृष्टिरुपपद्यत इति श्रुतिरेव जगदारम्भणं बम्भणीतीति न कश्चिदप्यस्माकं दोषः। यत्तु वैशेषिकैरुच्यते जालसूर्य-मरीचिस्थस्य सावयवारब्धत्वाभावे मनःपरमाण्वादिवद् द्रव्यस्य चाक्षुषत्वं न स्यादिति, तत् सोपाधिकत्वा-न्निरस्तमेव; अचाक्षुषत्वे हि प्रयोजकमनुद्भूतरूपवत्त्वमेव न पुनस्सावयवारब्धत्वाभाव इत्यादिकं युक्तिजातं न्यायपरिशुद्धिन्यायसिद्धाञ्जनादौ द्रष्टव्यम् ॥ १८९ ॥

इति महद्दीर्घाधिकरणम् ॥ ४७ ॥

पद०—निर्धूत इत्यादि। सूत्रकारैः। अवयविपरमाण्वात्मके—अवयवातिरिक्तावयव्यात्मके दृष्टत्रसरेण्वधिकद्व्यणुकपरमाण्वात्मके च। द्रव्यवर्गे निर्धूते—निराकृते सति। विश्वं व्याप्त्येकलक्ष्यं परममहदेव स्यात्, अथ वा असत् स्यात्, तेनैव न्यायेन परममहतोऽप्यभावात्। यद्वा एवं द्रव्ये निरस्ते सति विश्वमद्रव्यमेव स्यात्। उक्तं चोद्यं प्रतिक्षिपति—मैवमिति। तत्र हेतुमाह—दृष्टेति। न ह्यस्माभिर्दृष्टं त्रसरेणुद्रव्यं तत्संहतिरूपं कार्यद्रव्यं तदुभयसम्बन्धादिकं च बाध्यते, अतो मैवमित्यन्वयः। कथं तर्हि भवत्पक्षे प्रलयकाले क्षित्यादीनामभावात् पञ्चभूतकार्यतया जगत्सृष्टिसम्भव इत्याशङ्क्य परिहरति—आगन्त्विति। प्रकृतावेव महदाद्यवस्थाविशेषा जायन्ते तेन प्रकृतिरेव नित्या महदादितत्त्वान्तराणि पञ्च-भूतपर्यन्तान्यनित्यान्येव तेनागन्तुशोणिताद्यैरागन्तुकपृथिव्याद्यवस्थामापन्नैः प्राकृतैर्द्रव्यैर्विश्वसृष्टिरुपपद्यत इति श्रुतिरेव जगदारम्भणं बम्भणीतीति न कश्चिदप्यस्माकं दोषः ॥ १८९ ॥

इति महद्दीर्घाधिकरणम् ॥ ४७ ॥

## समुदायाधिकरणम् ॥ ४८ ॥

सूत्रम्—समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॥ १९१ ॥

बाह्योक्ताचारभागश्श्रुतिविहतिवशाज्जैमिनीये निरस्तः
तत्त्वांशं तर्कितं तैः प्रतिवदति गुरुर्जैमिनेरत्र पादे ।
निर्धूते तत्र पूर्वं निरुपधिकनयैरर्धवैनाशिकोक्ते
पक्षान्वैनाशिकानां जिनगिरिशमतक्षेपतः प्राक् क्षिणोति ॥ १९० ॥

चिन्ता०—असत्कार्यवादसाम्यात् कार्यविशेषे शरीरादौ क्षणिकत्वाद्यभ्युपगमसाम्याद्वा बुद्धिस्थतया वैशेषिकनिरासानन्तरं बौद्धनिराकरणमिति केचिदाचक्षते। अपरे तु परमाणूनामेकान्तत्वचातुर्विध्याभ्युपगमसाम्याद्धीस्थतया बौद्धमतनिरास इति सङ्गतिरिति। आर्हतमते स्थिरत्वास्थिरत्वादिभिरनैकान्त्यमैकविध्यं च परमाणूनां स्वीकृतम्। अत्र वैभाषिकसौत्रान्तिकयोः परमाणुकारणवादाभ्युपगमेन प्रस्तावे सति बौद्धत्वमात्रसाजात्येन योगाचारमाध्यमिकयोरपि तदनभ्युपगमेन निरासः क्रियत इति चतुर्विधा बौद्धा इति वदतो भाष्यकारस्याभिप्रायः। तदर्थविचारस्तु—किं क्षणिकाः परमाणवो जगदारम्भका नेति। तदर्थं क्षणिकानां तेषां किं सङ्घातकारणत्वं सम्भवति नेति। अस्थिरादिषु स्थिरत्वादिबुद्धिरूपाविद्या परमाणूनां पृथिव्यादिसङ्घातहेतुत्वमुपपादयति नेति। अत्र वैशेषिकानन्तरं सङ्गतिविशेषवशात् बौद्धादीनां निरासे प्राप्ते तन्निरसनं द्विप्रकारमेव कर्तव्यम्। यथाचारनिरसनं तत्परिगृहीतवस्तुनिरसनं चेति। पूर्वं तु जैमिनीयेन कृतमिति, अधुना तत्त्वमात्रनिरसनं क्रियत इत्याह—बाह्योक्तेति। बाह्योक्ताचारांशो वेदविरोधात्पूर्वकाण्ड एव निरस्तः। इदानीं पुनस्तैस्तर्कितं विचारितं तत्त्वांशं जैमिनेर्गुरुर्बादरायणस्तर्कपादे प्रतिवदतीत्यन्वयः। इत्थं बाह्यानां निरसनीयत्वे सिद्धे जैनशैवयोः पूर्वमेव वैनाशिकनिराकरणे कारणमाह—निर्धूत इति। बौद्धास्तावद्वैनाशिका एव परमाणुविनाशवादित्वात्। वैशेषिकादयस्त्वर्धवैनाशिकाः परमाणोर्विनाशाभावेऽपि द्व्यणुकादिद्रव्यविनाशवादित्वात्। तेन वैनाशिकत्वसाम्याद् वैशेषिकनिरासानन्तरं बौद्धनिराकरणमिति। अयमत्र शब्दान्वयः—तत्र तेषु निराकरणीयेषु सत्सु पूर्वं निरुप-

धिकनयैर्निर्दोषन्यायैरर्धवैनाशिकोक्ते निर्धूते सति वैनाशिकानां पक्षान् जिनगिरिशमतक्षेपतः प्राक् जैनपशुपतिमतक्षेपात्पूर्वमेव निराकरोतीति ॥ १९० ॥

पद०—बाह्योक्तेत्यादि । बाह्योक्ताचारभागः—बौद्धप्रतिपादित आचारांशः । श्रुतिविहति-वशात्—श्रुतिविरोधात् । जैमिनीये—पूर्वकाण्ड एव निरस्तः । तैः—बौद्धैः । तर्कितम्—विचारितम् । तत्त्वांशम् । जैमिनेर्गुरुः—बादरायणः । अत्र पादे—तर्कपादे । प्रतिवदति—निराकरोति । वैशेपिक-निरासानन्तरं बौद्धनिरासे सङ्गतिरुच्यते उत्तरार्धेन । बौद्धास्तावत् वैनाशिकाः परमाणुविनाशवादित्वात्, वैशेपिकास्त्वर्धवैनाशिकाः परमाणोर्विनाशाभावेऽपि द्व्यणुकादिद्रव्यविनाशवादित्वात् । तत्र—अर्धवैनाशिक-वैनाशिकनिराकरणे । पूर्वम्—पूर्वाधिकरणे । निरुपधिकनयैः—निर्दोषन्यायैः । अर्धवैनाशिकोक्ते—वैशेपिकोक्तमार्गे । निर्धूते सति । वैनाशिकानाम्—वैभाषिकसौत्रान्तिकयोगाचारमाध्यमिकरूपाणां चतुर्विधानां बौद्धानाम् । पक्षान्—सिद्धान्तान् । जिनगिरिशमतक्षेपतः प्राक्—जैनपशुपतिमतक्षेपात् पूर्वम् । क्षिणोति—निराकरोति ॥ १९० ॥

बुद्धोऽसौ स्वावतारैस्सह परिगणितश्श्रीधरेण स्वशास्त्रे
सर्वज्ञो नैष मुह्येन्नच निखिलसुहृद् विप्रलिप्सेत कश्चित् ।
तस्माद् बुद्धोक्तभङ्गे भजति भिदुरतां सात्त्वतादीति चेन्न
स्वानिष्टप्रत्यनीकप्रमथनमनसा मोहनादिप्रवृत्तेः ॥ १९१ ॥

चिन्ता०—अत्र बौद्धनिराकरणे भगवदुक्तपञ्चरात्रस्यापि निराकरणं स्यादित्याशङ्क्य प्रवर्तनप्रकार-वैषम्येण परिहरति—बुद्ध इति । असौ बुद्धः श्रीधरेणैव स्वशास्त्रे पञ्चरात्रे स्वावतारैस्सह परिगणितः । अस्तु परिगणनं ततः किमित्याशङ्क्याह—सर्वज्ञ इति । अयमर्थः—बुद्धोक्तशास्त्राप्रामाण्ये बुद्धस्य भ्रान्तत्वं वा विप्रलम्भकत्वं वा स्वीकर्तव्यम्, उभयमपि न सम्भवतीति । सर्वज्ञत्वान्न भ्रान्तो निखिलसुहृत्त्वान्न विप्रलम्भक इति भावः । एवमनङ्गीकारे प्रतिबन्दीमाह—तस्मादिति । इत्थं बुद्धवाक्यस्यापि प्रामाण्यावश्य-म्भावाद् बुद्धोक्तभङ्गे सात्त्वताद्यपि भिदुरतां भजेदिति । आशङ्कितमर्थं प्रतिक्षिपति—नेति । तदेवोप-पादयति—स्वानिष्टेति । 'एष एवासाधु कर्म कारयति तं यमधो निनीपति' 'क्षिपाम्यजस्रमशुभाना-सुरीष्वेव योनिषु' इत्यादिश्रुतिस्मृतिभ्यामुक्तप्रकारेण स्वानिष्टानां प्रत्यनीकानां राजसानां तामसानां च

प्रमथने निवेशितमनसा भगवता तन्मोहनादिप्रवृत्तेः प्रमाणसिद्धत्वादित्यर्थः । पञ्चरात्रेष्वाश्रितसंरक्षणार्थं प्रवृत्तेस्तत्त्वावेदकत्वमेवेति वाक्यशेषः ॥ १९१ ॥

पद०—बुद्धोऽसावित्यादि । असौ बुद्धः । श्रीधरेण—भगवता । स्वशास्त्रे—पञ्चरात्रे । स्वावतारैस्सह—मत्स्यकूर्मादिभिस्साकम् । परिगणितः—सङ्ख्यातः । सर्वज्ञः—भगवदवतारत्वेन सर्वज्ञः । एषः—बुद्धः । न मुह्येत्—न भ्रान्तिमियात् । निखिलसुहृत्—एष बुद्धः । कश्चिदपि चेतनम् । न चविप्रलिप्सेत—न वञ्चयितुं प्रवर्तेत । तस्मात्—बुद्धस्याज्ञानविप्रलिप्साद्यभावात् । बुद्धोक्तभङ्गे—बुद्धप्रतिपादितशास्त्रस्य निरासे । सात्त्वतादि—पञ्चरात्रशास्त्रम् । भिदुरताम्—तदेककर्तृकतया तद्वदेव भङ्गम् । भजति—भजेत् । इति चेन्न । स्वानिष्टप्रत्यनीकप्रमथनमनसा—स्वानिष्टाः स्वद्वेषिणः, 'मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः । तानहं द्विषतः क्रूरान्' इत्याद्युक्ता ये तामसास्तेषां, प्रत्यनीकानां राजसानां च प्रमथने अधोगतिनयने मनो यस्य तेन भगवता । मोहनादिप्रवृत्तेः—मोहजनकशास्त्रनिर्माणतत्प्रवर्तनादिप्रवृत्तेः प्रमाणसिद्धत्वादित्यर्थः । 'एष एवासाधुकर्म कारयति तं यमधोनिनीषति' इति श्रुतिः । 'तानहं द्विषतः क्रूरान् संसारेषु नराधमान् । क्षिपाम्यजस्रमशुभान्' इति स्मृतिः । पञ्चरात्रेष्वाश्रितरक्षणार्थं प्रवृत्तेस्तेषां तत्त्वावेदकत्वमिति वाक्यशेषः ॥ १९१ ॥

दुर्वारा मोहनेच्छा निखिलजनयितुः केन मोहोऽन्यथा नः
तस्मात् कर्मानुरूपं दिशति फलमसौ तत्त्वबोधं भ्रमं वा ।
स्वोक्त्यादेस्सिद्धमेतन्निरुपधिविषमो नैष तस्मात् समोक्तिः
कारुण्याद् विप्रलिप्सा न यदि वृजिनजं नेशनिघ्नं फलं स्यात्॥१९२॥

चिन्ता०—पूर्वत्र भगवतो विप्रलम्भकत्वमुक्तं विप्रलम्भकत्वं नाम मोहनेच्छा, सा निखिलजनयितुरीश्वरस्य दुर्वारा । अयमत्र विकल्पः—किमीश्वरस्सर्वजनयिता, उत कतिपयजनयिता । निखिलजनयितृत्वे परमोहनस्यापि निखिलान्तर्गतत्वात् तत्रापीश्वरस्य जनयितृत्वमङ्गीकृतमेव । कतिपयजनयितृत्वे पुनरीश्वरत्वमेव भज्येत शिक्षणरक्षणात्मककर्मद्वयकर्तुरेवेश्वरत्वात् । तदिदमाह—दुर्वारेति । उक्तार्थानुग्राहकतया तर्कमाह—केनेति । ईश्वरस्यास्मन्मोहजनकत्वाभावात् केनास्मन्मोहस्स्यात् । एवमुपपादितमर्थं निगमयति—तस्मादिति । पूर्वपूर्वकर्मानुरूपं फलं तत्त्वज्ञानं भ्रमं वा

पुंसामीश्वरएव जनयतीत्यर्थः । किमुपपत्तिमात्रपरिकल्पितमेतत् ? नेत्याह---स्वोक्त्यादेरिति । प्रमाणसिद्ध-मपीत्यर्थः । प्रमाणं 'तेषां सततयुक्तानाम्' 'क्षिपाम्यजस्रमशुभान्' इत्यादिकं प्रसिद्धमेव । तर्हि विषम एवेश्वरस्स्यात् कस्यचित्सुखप्रदानात्, इतरस्य दुःखप्रदानात्, तेन समत्ववादो भज्ये-तेत्याशङ्क्योभयमपि परिहरति---निरुपधीति । अकारणवैषम्ये हि वैषम्यदोषस्स्यात् कर्मानुरूप-वैषम्यमीश्वरे प्रमाणसिद्धत्वाद् दृष्टमपि न दोष इत्यर्थः । अत एव सर्वसमोक्तिरपि सङ्घटते । ननु परम-कारुणिकत्वादीश्वरस्य विप्रलिप्सा नास्तीति कश्चिदाचष्टे तदनूद्य परिहरति---कारुण्यादिति । यदि कारुण्यादीश्वरस्य विप्रलिप्सा न स्यात् तर्हि पापजन्यं फलमीश्वराधीनं न स्यात् तथाचेश्वरस्य सर्वकर्तृत्वं भज्येतेति ॥ १९२ ॥

पद०---दुर्वारेत्यादि । निखिलजनयितुः---निखिलजनकस्येश्वरस्य । मोहनेच्छा---तामस-राजसजनमोहनेच्छा । दुर्वारा---कयापि युक्त्या दुष्परिहरा । निखिलजनकत्वात् मोहजनकत्वमपि दुर्वार-मित्यर्थः । अन्यथा---ईश्वरस्य मोहजनकत्वाभावे । नः---अस्माकम् । मोहः---विपरीतज्ञानम् । केन ? स्यादिति शेषः । तस्मात्---कारणात् । कर्मानुरूपम्---पूर्वकर्मानुरूपं फलम् । तत्त्वबोधम्---तत्त्व-ज्ञानम् । भ्रमं वा । असौ---असावेव । दिशति---पुरुषाणां ददाति । एतत्---उक्त-मिदमीश्वरस्य मोहजनकत्वम् । स्वोक्त्यादेः---स्ववचनप्रभृतिप्रमाणात् सिद्धम् । स्वोक्तिस्तु---'तानहं द्विषतः क्रूरान् संसारेषु नराधमान् । क्षिपाम्यजस्रमशुभान्' इत्यादिः । एषः---ईश्वरः । निरुप-धिविषमो न---अकारणवैषम्यवान्न भवति । कर्मानुरूपवैषम्यमीश्वरे प्रमाणसिद्धत्वात् दृष्टमपि न दोष इत्यर्थः । तस्मात्---अकारणवैषम्यराहित्यादेव । समोक्तिः---'समोऽहं सर्वभूतेषु' इति स्वस्य सर्व-समत्वेन वचनमीश्वरस्य दृश्यते । यदि कारुण्यात् ईश्वरस्य विप्रलिप्सा वञ्चनेच्छा न स्यात्, तर्हि वृजिनजं पापजन्यं फलमीशनिघ्नमीश्वराधीनं न स्यात् । तथाचेश्वरस्य सर्वकर्तृत्वं भज्येतेति भावः ॥ १९२ ॥

कल्प्यो बोद्धेति सर्वे सुगतमतविदो वोध्यमध्यक्षमेके
बुद्ध्याकारानुमेयं कतिचन कतिचिद् बोध्यमिथ्यात्वमाहुः ।
तत्तुल्यन्यायतोऽन्ये धियमपि जगदुस्संवृतेरेव सिद्धां
तान्सर्वांस्तर्कमानैर्द्यति दितिजगुरूनत्र वैभाषिकादीन् ॥ १९३ ॥

चिन्ता०—अत्र सौगतमतानुसारिणश्चत्वारो वैभाषिकाः सौत्रान्तिका योगाचारा माध्यमिकाश्च । तेषां साधारणार्थमसाधारणार्थमप्यस्मिन्श्लोके विभज्य प्रदर्श्य तान्सर्वान्सूत्रकारो निराकरोतीत्याह—कल्प्य इति । अत्रपरसाधारणोऽयमर्थः —यदुत बोद्धा कल्प्यत इति, सर्वेषां बौद्धानां नैरात्म्यवादित्वात् आत्मा नास्तीति तेषां साधारणोऽर्थः । तेन बोद्धृबुद्धिबोध्येषु बुद्धिर्बोध्यश्चावशिष्यते, तत्र वैभाषिकस्य वैषम्यमाह—बोध्यमिति । एके वैभाषिका बोध्यं प्रत्यक्षमित्याहुः । सौत्रान्तिकास्तु बोध्यं बुद्ध्याकारानुमेयं बुद्धौ स्वाकारसमर्पकं बुद्धिगतेन स्वाकारेणानुमेयमित्याचक्षते । तेन बोध्यं प्रत्यक्षं वैभाषिकस्य, अनुमेयं सौत्रान्तिकस्येति विभागः । कतिचिद् योगाचारा बोध्यस्य मिथ्यात्वमेवाहुः । तत्तुल्येति—साधने बाधनेच बोध्यतुल्यन्यायतया बुद्धेरपि मिथ्यात्वं माध्यमिकाः प्रतिपेदिरे । बोद्धृमिथ्यात्वं सर्वसाधारणमिति प्रागेवोक्तम् । धियमपि संवृतेरेव सिद्धां संवृतिशब्दवाच्यमायाविशेषतस्सिद्धां माध्यमिका जगदुरित्यन्वयः । तान्सर्वान् दितिजगुरून् असुरगुरून् वैभाषिकादीन् सूत्रकारस्तर्कमानैर्द्यति खण्डयतीत्यर्थः ॥ १९२ ॥

पद०—कल्प्य इत्यादि । सुगतमतविदः—सुगतस्य बुद्धस्य मतविदो दर्शनज्ञाः । सर्वे—वैभाषिकसौत्रान्तिकयोगाचारमाध्यमिकनामानश्चत्वारोऽपि बौद्धाः । बोद्धा—आत्मा । कल्प्यः—कल्पनाविषयः । भ्रान्तिकल्पित इत्यर्थः । इत्याहुः । सर्वेषामपि बौद्धानां नैरात्म्यवादित्वात् आत्मा नास्तीति तेषां साधारणोऽर्थ इत्यर्थः । एके—वैभाषिकाः । बोध्यम्—विषयम् । अध्यक्षमित्याहुः—प्रत्यक्षगम्यमित्याहुः । कतिचन—सौत्रान्तिकाः । बोध्यम्—बुद्धिस्थाकारसमर्पकम् । बुद्ध्याकारानुमेयमाहुः—बुद्धिगतेन स्वाकारेणानुमेयमाचक्षते । कतिचित्—योगाचाराः । बोध्यमिथ्यात्वमाहुः—बोध्यस्य मिथ्यात्वमाचक्षते । अन्ये—माध्यमिकाः । तत्तुल्यन्यायतः—बोध्यतुल्यन्यायतया । धियमपि बोद्धृमिथ्यात्वस्य बौद्धचतुष्टयसाधारणार्थत्वात् तं बोद्धारमिव बुद्धिमपीत्यर्थः । संवृतेरेव सिद्धां जगदुः—संवृतिशब्दवाच्यमायाविशेषत एव सिद्धां कल्पितां जगदुरित्यर्थः । बोध्यस्येव बुद्धेरपि मिथ्यात्वं माध्यमिकाः प्रतिपेदिर इत्यर्थः । तान् सर्वान् वैभाषिकादीन् दितिजगुरून्—असुरगुरून् । अत्र—एतदधिकरणादिष्वधिकरणेषु । तर्कमानैः—तर्कयुक्तैः प्रमाणैः । द्यति—सूत्रकारः खण्डयतीत्यर्थः । दो अवखण्डन इत्यस्मात् दैवादिकाल्लटि रूपम् ॥ १२३ ॥

**एकद्व्यादिस्वभावैर्यदणुभिरथवा तत्तदेकस्वभावैः**
**क्षौणीदेहादिपुञ्जप्रभृतिरिति समाभाषि वैभाषिकेण।**
**ज्ञानादानादि तत्र क्षणभिदुरतया बोध्यबुद्ध्योर्न सिध्येत्**
**निर्बाधा प्रत्यभिज्ञाप्यनुमितिमथनी शेषमन्यत्र सूक्तम् ॥ १९४ ॥**

चिन्ता०—अत्र खलु वैभाषिका द्वेधा वर्णयन्ति गन्धरसरूपस्पर्शेषु स्पर्शैकस्वभावो वायुपरमाणुः स्पर्शरूपद्विस्वभावस्तेजःपरमाणुस्स्पर्शरूपरसत्रिस्वभावोऽप्परमाणुस्स्पर्शरूपरसगन्धचतुस्स्वभावः पृथिवीपरमाणुरित्येकः पक्षः, अपरस्तु 'गन्धस्वभावः पार्थिवपरमाणुः, एवं रसस्वभावआप्यपरमाणूरूपस्वभावस्तैजसः स्पर्शस्वभावो वायवीयः' इति। तदिदमाह-एकद्व्यादीति। तत्रैवमन्वयः—एकद्व्यादिस्वभावैरणुभिर्यत्कार्यमारभ्यते, अथवा तत् कार्यं तदेकस्वभावैरारभ्यत इति क्षोणीदेहादिपुञ्जप्रभृतिर्वैभाषिकेण समाभाषि। इदं तु क्षणिकैरेव परमाणुभिरिति तैरुक्तम्। तत्र दोषमुद्घाटयति—ज्ञानादानादीति। अयमर्थः—बोद्धा तावन्नास्त्येव नैरात्म्यवादस्वीकारात्। तेन भवतां बुद्धिर्बोध्यञ्चावशिष्यते तदुभयमपि क्षणिकमेव। तथा च क्षणिकत्वे ज्ञानमपि नोपपद्यते। प्रवृत्तिरपि नोपपद्यते। इन्द्रियार्थसन्निकर्षक्षण एव वेद्यं नष्टम्। ज्ञानोत्पत्ति क्षणे वेद्यं नानुवर्तते। कथं तस्य प्रत्यक्षेण वेद्यत्वम्? ज्ञानमपि स्वोत्पत्तिक्षणएव नष्टम्। तत्कथमर्थमवबोधयति? अनवबोधकश्च कथं प्रवर्तयेत्? तथा च ज्ञानार्थयोः क्षणिकत्ववादिनस्तत्रार्थावबोधनमर्थप्रवर्तनञ्च न घटते। ननु यत्सत् तत्क्षणिकं यथा जलधरपटलमित्याद्यनुमानात् क्षणिकत्वं प्रतिपद्यामहे इति बौद्धाः प्राहुः, तत्रोत्तरमाह—निर्बाधेति। स एवायं प्रदीप इति भ्रान्तप्रत्यभिज्ञादिव्यावृत्तिसिद्ध्ये निर्बाधत्वमुच्यते। सएवायं स्फटिक इति प्रत्यभिज्ञायाः खलु स्वारसिको बाधो न क्वापि दृश्यते। तेन सा प्रत्यभिज्ञा भवदनुमानं मथ्नातीत्यर्थः। शेषमिति—यत्क्षणभङ्गवादे वक्तव्यमवशिष्टं तत्सर्वमस्माभिस्तत्त्वमुक्ताकलापे सूक्तमिति ॥ १९४ ॥

पद०—एकद्व्यादीति। "अत्र खलु वैभाषिका द्वेधा वर्णयन्ति, गन्धरसरूपस्पर्शेषु स्पर्शैकस्वभावो वायुपरमाणुः, स्पर्शरूपद्विस्वभावस्तेजःपरमाणुः, स्पर्शरूपरसत्रिस्वभावोऽप्परमाणुः स्पर्शरूपरसगन्धचतुस्स्वभावः पृथिवीपरमाणुः, इत्येकः पक्षः, अपरस्तु गन्धस्वभावः पार्थिवपरमाणुः, एवं रसस्वभाव आप्यपरमाणुः, रूपस्वभावस्तैजसः, स्पर्शस्वभावो वायवीय इति। तदिदमाह—एकद्व्यादीति। तत्रैवमन्वयः—एकद्व्यादिस्वभावैरणुभिर्यत् कार्यमारभ्यते अथवा तत् कार्यं तदेकस्वभावैरारभ्यत इति

क्षोणीदेहादिपुञ्जप्रभृतिर्वैभाषिकेण समभाषि । इदन्तु क्षणिकैरेव परमाणुभिरिति तैरुक्तम् । तत्र दोषमुद्धाटयति—ज्ञानादानादीति । अयमर्थः—बौद्धा तावन्नास्त्येव नैरात्म्यवादस्वीकारात् । तेन भवतां बुद्धिर्बोध्यञ्चावशिष्येते । तदुभयमपि क्षणिकमेव । तथा च क्षणिकत्वे ज्ञानमपि नोपपद्यते । प्रवृत्तिरपि नोपपद्यते । इन्द्रियार्थसंनिकर्षक्षण एव वेद्यं नष्टम् । ज्ञानोत्पत्तिक्षणे वेद्यं नानुवर्तते । कथं तस्य प्रत्यक्षेण वेद्यत्वम् ? ज्ञानमपि स्वोत्पत्तिक्षण एव नष्टम् । तत्कथमर्थमवबोधयति ? अनवबोधकञ्च कथं प्रवर्तयेत् ? तथा च ज्ञानार्थयोः क्षणिकत्ववादि नस्तवार्थावबोधनमर्थप्रवर्तनञ्च न घटते । ननु यत् सत् तत् क्षणिकं यथा जलधरपटलमित्याद्यनुमानात् क्षणिकत्वं प्रतिपद्यामह इति बौद्धाः प्राहुः, तत्रोत्तरमाह—निर्बाधेति । स एवायं प्रदीप इति भ्रान्तप्रत्यभिज्ञादिव्यावृत्तिसिद्धये निर्बाधत्वमुच्यते । स एवायं स्फटिक इति प्रत्यभिज्ञायाः खलु स्वारसिको बाधो न क्वापि दृश्यते । तेन सा प्रत्यभिज्ञा भवदनुमानं मथ्नातीत्यर्थः । शेषमिति—यत् क्षणभङ्गवादे वक्तव्यमवशिष्टं तत्सर्वमस्माभिस्तत्त्वमुक्ताकलापे सूक्तम्" इति चिन्तामणिपङ्क्तिः । क्षोणीदेहादिपुञ्जप्रभृतिरेकद्व्यादिस्वभावैरणुभिरारभ्यत इति शेषः । अथवा तत्तदेकस्वभावैर्गन्धाद्येकैकस्वभावैरणुभिरारभ्यत इति वैभाषिकेण यत्समभाषि वैभाषिककर्तृकं यत् समभाषणं तत्र बोध्यबुद्ध्योः क्षणभिदुरतया ज्ञानादानादि न सिध्येत् । निर्बाधा बाधकप्रत्ययरहिता प्रत्यभिज्ञाप्यनुमितिमथनी यत्सत्तत्क्षणिकं यथा जलधरपटलमित्याद्यनुमितिबाधिकेत्यर्थः । शेषमन्यत्र तत्त्वमुक्ताकलापादौ सूक्तं सुष्ठूक्तमित्यन्वयेऽपि न दोष इति भाति ॥ १९४ ॥

बोधेष्वाकारभेदं निजमुपरितनेष्वर्पयन् प्राक्तनोऽर्थः
तद्वैचित्र्यानुमेयः क्वचिदपि न तदध्यक्षतेति प्रजल्पन् ।
प्राक्पश्चाच्च प्रवृत्तैर्विहतिबहुलतां गौरवञ्च ब्रुवाणैः
शिक्षादक्षैस्स्वयूथ्यैर्दमित उपशमं यातु सौत्रान्तिकाख्यः ॥ १९५ ॥

चिन्ता०—पूर्वं वैभाषिकपक्षस्य दूषणमुक्त्वा सौत्रान्तिकपक्षेऽपि विशेषेण दूषणं वक्तुमुपक्रमते—बोधेष्विति । इत्थं किल सौत्रान्तिकः प्राह—'इन्द्रियार्थसन्निकर्षकाले वर्तमानः प्राक्तनस्तदैव नष्टोऽर्थस्तदुत्तरकालवर्तिनि ज्ञाने स्वाकारमर्पयति, सचार्थो ज्ञाने स्वसमर्पिताकारादनुमेय एव, तदातनकाले न क्वचिदपि प्रत्यक्षता' इति । एवं जल्पन् सौत्रान्तिकः प्राक्प्रवृत्तैर्वैभाषिकैः पश्चात्प्रवृत्तैर्योगाचारादिभिश्च व्याहतिबहुलतां कल्पनागौरवञ्च ब्रुवाणैः शिक्षादक्षैस्स्वयूथ्यैर्दूषणसमर्थैस्स्वबन्धु-

भिरेव दमितो दूषितः 'स्वयं नष्टोऽर्थः कथं स्वाकारं कालान्तरवर्तिनि ज्ञाने समर्पयति? कथञ्च प्रत्यक्षरूपतया प्रतीयमानोऽर्थो बुद्धिगताकारेणानुमीयते? कथञ्च वा नीलपीताद्येकाकारदर्शने ज्ञानगतः कश्चिन्नीलाकारो विषयरूपोऽन्यो नीलाकार इत्याकारद्वयं भवता परिकल्प्यते? इति दूषणकलापैर्दमित इत्यर्थः। उपशमं यातु ॥ १९५ ॥

इति समुदायाधिकरणम् ॥ ४८ ॥

पद०—बोधेष्वित्यादि। उपरितनेषु—स्वोत्पत्तिक्षणानन्तरक्षणभाविषु। बोधेषु—ज्ञानेषु। निजम्—स्वकीयम्। आकारभेदम्—नीलाद्याकारभेदम्। अर्पयन्—सङ्क्रामयन्। प्राक्तनः—पूर्वक्षणभवः। अर्थः—घटादिः। तद्वैचित्र्यानुमेयः—ज्ञानगताकारवैचित्र्यलिङ्गेनानुमेयः। क्वचिदपि—कुत्रापि विषये। तदध्यक्षता न—तस्यार्थस्य प्रत्यक्षविषयत्वं नास्ति। इति प्रजल्पन् सौत्रान्तिकाख्यः—सौत्रान्तिकनामा बौद्धविशेषः। प्राक् पश्चाच्च प्रवृत्तैः—स्वस्य गुरूपदेशलाभात् पूर्वं पश्चाच्च लब्धोपदेशैर्बौद्धमतनिर्धारणप्रवृत्तैः। विहतिबहुलतां गौरवञ्च ब्रुवाणैः—व्याहतिबाहुल्यं कल्पनागौरवञ्च वदद्भिः। शिक्षादक्षैः—स्वपक्षदूषणेन स्वस्यापथप्रवृत्तिवारणमेव शिक्षा तत्र समर्थैः। सयूथ्यैः—सतीर्थ्यैर्वैभाषिकादिभिरेव। दमितः—घातितः, भग्नदर्पः कृत इति यावत्। स्वयं नष्टोऽर्थः कथं स्वाकारं कालान्तरवर्तिनि ज्ञाने समर्पयति? कथञ्च प्रत्यक्षरूपतया प्रतीयमानोऽर्थो बुद्धिगताकारेणानुमीयते? कथञ्च वा नीलपीताद्येकाकारदर्शने ज्ञानगतः कश्चिन्नीलाकारो विषयरूपोऽन्यो नीलाकार इत्याकारद्वयं भवता परिकल्प्यते? इति दूषणकलापैर्दमित इत्यर्थः। उपशमं यातु ॥ १९५ ॥

इति समुदायाधिकरणम् ॥ ४८ ॥

## उपलब्ध्यधिकरणम् ॥ ४९ ॥

सूत्रम्—नाभाव उपलब्धेः ॥ २०१ ॥

न ग्राह्यग्राहकौ स्तः क्वचिदपि विविधानादिसन्तानचित्रो
बुद्ध्यात्मा त्र्यात्मकोऽद्य स्फुरति भवदशातिक्रमे स्वात्मनैव ।
योगाचारोक्तिरित्थं विषयविषयिणोर्बोधबाधौ समानौ
मन्वानैर्वारणीया स्वपरविभजनाद्यत्र न क्वापि सिध्येत् ॥ १९६ ॥

चिन्ता०—पूर्वं बाह्यार्थस्थिरत्ववादिनो वैभाषिकास्सौत्रान्तिकेन सह निरस्ताः, अधुना बाह्यार्थनास्तित्ववादिनो योगाचारा निरस्यन्त इति सङ्गतिः । तदर्थविचारस्तु—किमर्थशून्यवादस्समीचीनयुक्तिमूलो न वेति । किं घटमहं जानामीतीदृशाकारो ज्ञानाकार उतार्थाकार इति । किमर्थव्यवहारानुगुण्यं नाम घटाद्याकारातिरेकेण ज्ञानाकारेण भासते नेति । अत्र योगाचारपक्षमनुवदति—न ग्राह्येति । क्वचिदपि ग्राह्यग्राहकौ न स्तः । तर्हि 'इदमहं जानामि' इति त्र्यात्मकत्वेन बुद्धेः स्फुरणं कथं स्यादित्याशङ्क्य परिहरति—विविधेति । बहुप्रकारानादिवासनावशाद् विचित्ररूपा बुद्धिरेव त्र्यात्मकत्वेन स्फुरति । आहुश्च योगाचाराः—

'अविभागोऽपि बुद्ध्यात्मा विपर्यासितदर्शनैः ।
ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते ॥' इति ।

एवं संसारदशायां त्र्यात्मकत्वेन स्फुरणे सिद्धे मुक्तिदशायां स्वरूपेण स्फुरतीत्याह—भवेति । इत्थमेषा योगाचारोक्तिरर्थज्ञानयोर्बोधं बाधञ्च समानतया बुध्यमानैर्विद्वद्भिर्वारणीया । अयमर्थः—यदि प्रतीतत्वाद् बोधस्स्वीक्रियते अबाधितप्रतीतिसिद्धत्वादर्थोऽपि स्वीकार्यः, यदि कयाऽपि कुदृष्ट्या बाधितत्वादर्थो न स्वीक्रियते तर्हि तादृशीनां कुदृष्टीनां सुलभत्वाद् बोधो न स्वीकार्य इति ज्ञानज्ञेययोस्तुल्यत्वम् । तथा च ज्ञेयाभावे ज्ञानाभावो ज्ञानस्य सद्भावे ज्ञेयस्यापि सद्भाव इत्युक्तं भवति । एवमनङ्गीकारे दोषमाह—स्वपरविभजनादीति । बाह्यार्थानङ्गीकारे खलु 'अयं वादी अयं तु

परवादी, अयमस्मत्पक्षः अयं तु परपक्षः, परवादिनां पराजयः अस्माकंतु विजयः' इत्यादिकं सर्वमपि बाह्यार्थविभागरूपत्वादस्मिन्योगाचारपक्षे न सिध्येत् ॥ १९६ ॥

पद०—न ग्राह्येत्यादि। क्वचिदपि ग्राह्यग्राहकौ न स्तः—क्वापि ज्ञाने बोध्यबोद्धारौ न विद्येते। तर्हीदमहज्ज्ञानामीति त्र्यात्मकत्वेन बुद्धेः स्फुरणं कथमित्याशङ्क्य परिहरति—विविधेति। विविधानादिसन्तानाचित्रः—विविधः बहुप्रकारः अनादिश्च सन्तानो वासना तद्वशात् चित्ररूपः। बुद्ध्यात्मा—बुद्धिरूप आत्मा। अद्य—बन्धदशायाम्। त्र्यात्मकः स्फुरति—त्र्यात्मकत्वेन स्फुरति। ग्राह्यग्राहकग्रहरूपभेदवत्तया प्रकाशत इत्यर्थः। तथा च योगाचारकारिका—

'अविभागोऽपि बुद्ध्यात्मा विपर्यासितदर्शनैः।
ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते॥' इति।

भवदशातिक्रमे—बन्धदशानिवृत्तौ मुक्तिदशायाम्। स्वात्मनैव स्फुरति—स्वरूपेणाविभागेन प्रकाशत इत्यर्थः। इत्थम्—एवंरूपा योगाचारोक्तिः। विषयविषयिणोः—अर्थज्ञानयोः। बोधबाधौ—बोधं बाधश्च। समानौ मन्वानैः—समानतया बुध्यमानैर्विद्वद्भिरित्यर्थः। वारणीया—निवारणीया। यदि प्रतीतत्वात् बोधस्स्वीक्रियते अबाधितप्रतीतिसिद्धत्वात् अर्थोऽपि स्वीकार्यः, यदि क्यापि कुसृष्ट्या बाधितत्वादर्थो न स्वीक्रियते तर्हि तादृशीनां कुसृष्टीनां सुलभत्वात् बोधो न स्वीकार्य इति ज्ञानज्ञेययोस्तुल्यत्वात् ज्ञेयाभावे ज्ञानाभावः, ज्ञानस्य सद्भावे ज्ञेयस्यापि सद्भाव इत्युक्त्या योगाचारोक्तिर्निराकरणीयेत्यर्थः। एवमनङ्गीकारे दोषमाह—स्वपरेति। अत्र—बाह्यार्थानङ्गीकारपक्षे। क्वापि—विषये। स्वपरविभजनादि—'अयं वादी अयं परवादी, अयं स्वपक्षः अयं परपक्षः, परवादिनां पराजयः अस्माकं विजयः' इत्यादिविभागः। न सिध्येत्—सर्वस्यापि विभागस्य बाह्यार्थविभागमूलकतया बाह्यार्थाभावे सर्वोऽपि भेदो न सिध्येत् ॥ १९६ ॥

बुद्ध्यैक्यं बोध्यबोद्ध्रोर्न घटत इह ते सत्ययोरन्ययोर्वा
भिन्नत्वे ग्राह्यलक्ष्मक्षतिमभिमनुषे नात्र चित्रैक्यमर्थ्यम्।
चित्रं द्रव्यं गुणं वा किमपि न च विदुः केऽपि भिन्नैकरूपं
तेनात्मख्यातिवादस्स्थितिमिह भजतु स्वप्रकाशत्वमात्रे ॥ १९७ ॥

इत्युपलब्ध्यधिकरणम् ॥ ४९ ॥

चिन्ता०—इत्थं किलाहुर्योगाचाराः—' सहोपलम्भनियमादभेदो नीलतद्धियोः ।' इति बोध्यस्य नीलस्य तद्बोधेन इदमहं जानामीति सहोपलम्भनियमादैक्यमिति, एतत्तु बोध्यन्यायेन बोद्धुरपि योजयितुं शक्यते तच्चासम्बद्धमिति वक्तुं विकल्पयति तावत्—बुद्ध्यैक्यमिति । किं बोध्यबोद्ध्रोः सत्ययोर्बुद्ध्यैक्यमभिधीयते अन्ययोः असत्ययोर्वा सत्ययोश्चेत्त्वयैव बोध्यबोद्धृसत्यत्वमङ्गीकृतमिति नास्माभिस्साधनीयं किञ्चित् । असत्ययोश्चेत्तर्हि बुद्धेरिव तयोरपि सत्यत्वं प्रसज्येत । यद्वा—तयोरिव बुद्धेरप्यसत्यत्वमित्युभयतोऽपि दोष आवर्तते । अतो बोद्धृबुद्धिबोध्यानामभिन्नत्वं भवत्पक्षे न घटते । भिन्नत्वं तु न घटत इति भवान्ब्रूत इत्याह—भिन्नत्व इति । भिन्नत्वे ग्राह्यलक्षणायोगं भवन्तएव प्राहुः, यदि घटो घटज्ञानाद्भिन्नस्तर्हि पटवत्तस्य विषयो न स्यादिति । तर्हि भिन्नाभिन्नत्वं ब्रूमः यथा चित्रं वस्तु भिन्नमभिन्नञ्च तद्वद् बोद्धृबोध्यबोधात्मकमेकं भिन्नमभिन्नञ्चेति , तदप्यसङ्गतमित्याह—नात्रेति । चित्रैक्यं भिन्नत्वेऽप्यभिन्नत्वमसङ्गतमित्यर्थः । ननु कथं दृष्टमपलपितुं शक्यते दृष्टं चित्रपटादिकं द्रव्यं तन्निष्ठं चित्ररूपञ्च तद्वदत्रापि बुद्ध्यादीनां त्रयाणां भिन्नाभिन्नत्वमित्याशङ्क्य दूषयति—चित्रमिति । चित्रं द्रव्यमेकं न स्वीकुर्महे, नापि चित्रं रूपमेकम् , अपितु सर्वं सङ्घातात्मकमेव । केऽपि न च विदुरिति सर्वविद्वत्सम्मत्या निराकरोति । भिन्नैकरूपमिति स्फुटमेव विरोधं प्रकटयति । तेनेति—तेनात्मख्यातिवादो ज्ञानस्वरूपमात्रे स्थितिं भजतु न पुनर्ज्ञानातिरिक्तयोर्बोद्धृबोध्ययोरुपलम्भे, तयोस्सत्यत्वे भेदवादप्रसङ्गात् , असत्यत्वे तदेकात्मकस्य ज्ञानस्यापि असत्यत्वप्रसङ्गादिति माध्यमिकपक्षावतारस्स्यात् । बोध्यबोद्धृप्रकाशेऽप्यसति ' इदमहं जानामि ' इति सर्वलोकोपलम्भविरोध—इति ॥ १९७ ॥

इत्युपलब्ध्यधिकरणम् ॥ ४९ ॥

पद०—बुद्ध्यैक्यमित्यादि । इत्थं किलाहुर्योगाचाराः ' सहोपलम्भनियमादभेदो नीलतद्धियोः ' इति बोध्यस्य नीलस्य तद्बोधेन इदमहञ्जानामीति सहोपलम्भनियमादैक्यमिति एतत्तु बोध्यन्यायेन बोद्धुरपि योजयितुं शक्यते तच्चासम्बद्धमिति वक्तुं विकल्पयति—बुद्ध्यैक्यमिति । सत्ययोः, अन्ययोर्वा- असत्ययोर्वा । बोध्यबोद्ध्रोः । इह—मते । ते—तवाभिमतम् । बुद्ध्यैक्यम्—बुद्ध्या साकमैक्यम् । न घटते—न युज्यते । बोध्यबोद्ध्रोस्सत्ययोश्चेद्बुद्ध्यैक्यं तर्हि तयोस्सत्यत्वमङ्गीकृतमिति नास्माभिस्साध्यं किञ्चित् , असत्ययोश्चेत् बुद्धेरिव तयोरपि सत्यत्वं प्रसज्येत, यद्वा तयोरिव बुद्धेरप्यसत्यत्वं प्रसज्येत, अत उभयतोऽपि दोष इति भावः । बोध्यस्य बुद्धिभिन्नत्वं तु न घटत इति भवान् ब्रूत इत्याह—भिन्नत्व इति । भिन्नत्वे—बोध्यस्य बुद्धिभिन्नत्वे । ग्राह्यलक्ष्मक्षतिमभिमनुषे—ग्राह्यस्य बोध्यस्य लक्ष्म विषयभावात्मकं लक्षणं

तस्य क्षतिं विरोधं चिन्तयसि, यदि घटो घटज्ञानाद्भिन्नस्तर्हि पटवत् तस्य विषयो न स्यादिति चिन्तयसीत्यर्थः। तर्हि भिन्नाभिन्नत्वं ब्रूमः यथा चित्रं वस्तु भिन्नमभिन्नञ्च तद्वत् बोध्यबोद्धृबुद्ध्यात्मकमेकं भिन्नमभिन्नञ्चेति तदप्यसङ्गतमित्याह—नात्रेति। अत्र—विषये। चित्रैक्यम्—चित्रवस्तुसम्बन्धि यत् ऐक्यं भिन्नत्वे सत्यभिन्नत्वरूपं तत्। अर्थ्यं न—अर्थादनपेतं न। ननु कथं दृष्टमपलपितुं शक्यम्, दृष्टं हि चित्रपटादिकं द्रव्यं तन्निष्ठं चित्ररूपञ्च तद्वत् बुद्ध्यादित्रिकं भिन्नाभिन्नमस्त्वित्यत्राह—चित्रमिति। केऽपि—वयमेव न, किन्तु विद्वांसस्सर्वेऽपि। द्रव्यं वा गुणं वा किमपि वस्तु चित्रं भिन्नैकरूपं भिन्नञ्च तदेकरूपञ्च। न च विदुः—नाङ्गीचक्रुः। चित्रमित्येकं द्रव्यं न स्वीकुर्वन्ति नापि चित्रं रूपमेकम्, अपितु सर्वं सङ्घातात्मकमेव, भिन्नत्वाभिन्नत्वयोः स्फुटतरविरोधादिति भावः। तेन—बोध्यबोद्धृबुद्ध्यैक्यस्यायुक्तत्वेन। इह—योगाचारमते। आत्मख्यातिवादः—आत्मनो ज्ञानस्य ख्यातिवादः बोध्यबोद्ध्रात्मना ख्यातिरिति प्रवादः। स्वप्रकाशत्वमात्रे—बोध्यबोद्धोरिव ज्ञानस्य प्रकाशे परापेक्षा नास्ति किंतु स्वयमेव प्रकाशत इत्येतदर्थप्रतिपादने। स्थितिं भजतु—तात्पर्यं प्रतिपद्यताम्। ननु बोध्यबोद्धोरुपलब्ध्यादिविषये, तस्य स्वमनोरथानुसारेण दुस्साधत्वादिति भावः॥ १९७॥

इत्युपलब्ध्यधिकरणम्॥ ४९॥

## सर्वथानुपपत्त्यधिकरणम् ॥ ५० ॥

सूत्रम्—सर्वथानुपपत्तेश्च ॥ २०४ ॥

सत्त्वेऽसत्त्वे द्वये च द्वितयपरिहृतावप्यनिष्टप्रसङ्गैः
सर्वं शून्यं चतुष्कोटयतिगतमिति नामानतस्स्वेष्टवादात् ।
अक्षोभ्यं तत्प्रहाणे परमतमसती संवृतिर्नार्थसिद्ध्यै
तस्मादित्थं निषेधो निरुपधिक इह क्वाप्यदृष्टो न कल्प्यः ॥ १९८॥

चिन्ता०—अत्र भाष्यएव सङ्गतिस्स्पष्टा । माध्यमिकपक्षएव सुगतमतकाष्ठा पक्षान्तराणि तु शिष्यबुद्धियोग्यतानुगुण्येनार्थाभ्युपगमात्पूर्वमुपन्यस्तानि, अधुना प्रधान एव पक्ष उपन्यस्य निरसिष्यत इति संगतिः । तदर्थविचारस्तु—किं माध्यमिकोक्तसर्वशून्यवादस्संभवति नेति । किं सर्वं कार्यं भावरूपमुताभावरूपमिति । किं सर्वकार्येष्वपि भावएव कारणमुताभाव इति । किं भावान्तरमभावः, उत तुच्छतत्त्वं नाम किञ्चिदिति । इत्थं किल माध्यमिकमतप्रक्रियामाहुः—

'नसन्नासन्नसदस न्नचाप्यनुभयात्मकम् ।
चतुष्कोटिविनिर्मुक्तं तत्त्वं माध्यमिका विदुः ॥' इति ।

न सत्तावत् नित्यप्रमाणप्रमेयभावस्य वक्तुमेव नशक्यत्वात्, नाप्यसत् असत्त्वादेव, नापि सदसत्—विरोधात्, नापि सदसद्विलक्षणं ततएव, ततश्च चतुष्कोटिविनिर्मुक्तं शून्यमेव तत्त्वमिति । तदिदमाह—सत्त्व इति । उक्तं मतं प्रतिक्षिपति—नेति । तत्र हेतुमाह—अमानतः स्वेष्टवादादिति । अत्रायं विकल्पः—किं प्रमाणादबाध्यं तत्त्वमिति ब्रूपे, उताप्रमाणात् । यदि प्रमाणात् अस्मच्छिष्योऽसि । यद्यप्रमाणात् त्वदुक्तशून्यवादो न सिध्यतीत्यर्थः । तर्हि विश्वास्तित्ववादवत् विश्वशून्यत्ववादमपि परित्यजाम इत्याशङ्क्य दूषयति—अक्षोभ्यमिति । विश्वशून्यत्वप्रहाणे विश्वसत्यत्ववादिनां परेषां मतमक्षोभ्यमेव स्यात् । संवृत्या सर्वमपि सिध्यतीति चेत्तदपि नेत्याह—असतीति । सा संवृति रसती सती वा, यद्यसती तदा खद्वनर्थक्रियाकारित्वाद् विश्वासत्यत्वं न प्रसाधयेत्, यदि सती कदापि न प्रसाधयेत स्वस्यैव विद्यमानत्वादित्यर्थः । इत्थं निरुपधिकनिषेधवादिनो माध्यमिकस्य पक्षं

प्रतिक्षिप्य निगमयति—तस्मादिति। दृष्टो हि सर्वत्र निषेधस्सोपाधिक एव। तत्र 'इदमत्र नास्ति' इति देशभेदोपाधिना निषेधः। 'इदमिदानीं नास्ति' इति कालभेदेन। 'इदमिदं न भवति' इति वस्तुभेदेन। एवं सोपाधिकनिषेधे सर्वत्र प्रामाणिके सति केवलं निरुपाधिकमेव नास्तीति वदन् माध्यमिकवादी लोकविरोधाद् बहिष्करणीयएव। क्वाप्यदृष्टो न कल्प्य इति—निरुपधिकनिषेधस्सर्वत्राप्यदृष्टत्वान्न कल्प्य इत्यर्थः॥ १९८॥

पद०—सत्त्वेऽसत्त्व इत्यादि। सत्त्वे—जगतस्सत्त्वपक्षे। असत्त्वे—असत्त्वपक्षे। द्वये च—सदसत्त्वपक्षे च। द्वितयपरिहृतावपि—सत्त्वासत्त्वाभावपक्षे सदसद्विलक्षणत्वपक्ष इत्यर्थः। अनिष्टप्रसङ्गैः—अनिष्टापातैः। सत्त्वे नित्यप्रमाणप्रमेयभावस्य वक्तुमेवाशक्यत्वात्, असत्त्वे असतः प्रमाणप्रमेयभावविरोधात्, सदसत्त्वे नित्यप्रमाणप्रमेयभावतदभावयोर्विरोधात्, सदसद्विलक्षणत्वेऽपि सत्त्वासत्त्वयोरिव तद्वैलक्षण्ययोरपि सहावस्थानविरोधात् पक्षचतुष्टयेऽप्यनिष्टापातप्रसङ्गैरितियावत्। सर्वम्—वस्तुजातम्। चतुष्कोट्यतिगतम्—सत्त्वासत्त्वसदसत्त्वसदसद्विलक्षणत्वात्मककोटिचतुष्टयमतीतम्। शून्यम्—अभावात्मकमेव। इति न—इत्ययं पक्षो न युक्तः। अमानतः—मानं विना स्वपक्षसाधकप्रमाणं विना। स्वेष्टवादात्—स्वाभिमतकथनात्। साधकप्रमाणं विना स्वाभिमतार्थजल्पनमात्रात् न स्वाभिमतसिद्धिः। अत्रायं विकल्पः—किं प्रमाणात् अबाध्यं तत्त्वमिति ब्रूषे उताप्रमाणात् यदि प्रमाणात् अस्मच्छिष्योऽसि यद्यप्रमाणात् त्वदुक्तशून्यवादो न सिध्यतीति। तर्हि विश्वास्तित्ववादमिव विश्वशून्यत्ववादमपि परित्यजाम इत्याशङ्क्याह—अक्षोभ्यमित्यादि। तत्प्रहाणे—तस्य विश्वशून्यत्ववादस्य प्रहाणे त्यागे। त्वया कृते सतीति शेषः। परमतम्—परेषां विश्वसत्यत्ववादिनां मतम्। अक्षोभ्यमेव स्यात्। संवृत्या सर्वमपि सिध्यतीतिचेत् तदपि नेत्याह—असतीति। असती संवृतिः—त्वया असत्तया अङ्गीकृता संवृतिनाम्नी माया। अर्थसिद्ध्यै न भवति। सा संवृतिरसती सती वा यद्यसती तदा खल्वनर्थक्रियाकारित्वात् विश्वासत्यत्वं न साधयेत्, यदि सती तदापि न साधयेत् स्वस्यैव विद्यमानत्वादिति भावः। तस्मात्—उक्तदूषणात्। इत्थम्—माध्यमिकोक्तरीत्या। निरुपधिकः—देशविशेषकालविशेषरूपोपाधिरहितः। इह—लोके। क्वाप्यदृष्टः—कुत्रापि न दृष्टः, निषेधः। न कल्प्यः—न कल्पनार्हः। दृष्टो हि सर्वत्र निषेधस्सोपाधिक एव। तत्रेदमत्र नास्तीति देशभेदोपाधिना निषेधः, इदमिदानीं नास्तीति कालभेदेन, इदमिदं न भवतीति वस्तुभेदेन, एवं सोपाधिकनिषेधस्यैव सर्वत्र प्रामाणिकत्वात् केवलं निरुपाधिकमिदं नास्तीति वदन् माध्यमिको लोकविरोधात् बहिष्करणीय इति भावः॥ १९८॥

प्राक्पश्चात् सत्त्वहानेर्गगनकुसुमवत् स्यान्न मध्येऽपि कार्यं
मैवं तत्रैव दृष्टेर्न यदि कथमसौ मध्यकार्यादिशब्दः ।
कार्यारम्भे निदानं विकृतिमदुत नेत्यादिचिन्तापि वन्ध्या
सामग्र्या कार्यसिद्धेर्भजति च गुणतां कारणस्यानवस्था ॥ १९९ ॥

चिन्ता०——इत्थं किल माध्यमिकवादी मन्यते 'कार्यं घटादिकं प्रागभावकाले तावदसदिति सुप्रसिद्धमेव पश्चादपि प्रध्वंसकाले तथैव दृष्टम् , तथाच यथा पूर्वोत्तरदिवसयोरसतश्शशविषाणस्य मध्यदिवसेऽसत्त्वम् , एवं प्राक्प्रध्वंसाभावकालयोरसतः कार्यस्य स्वस्वकाले मध्यकालेऽप्यसत्त्वम्' इति । तदिदमाह—प्रागिति । तदिदं प्रतिक्षिपति—मैवमिति । तत्रैवेति—प्रमाणादेव प्रमेयसिद्धिः । पूर्वोत्तरकालयोरदृष्टत्वात्कार्यं न विद्यते । मध्यकालेतु दृष्टत्वात्कार्यं नास्तीति वक्तुं न शक्यत इति । एवं सुहृद्भावेनोत्तरमुक्त्वा तथापि नस्वीकुर्वतः पूर्वपक्षिणो बाधकमाह—न यदीति । एवमनङ्गीकारे कार्यं मध्यकालेऽपि न स्यादिति कार्यादिशब्दप्रयोग एव न सङ्घटत इत्यर्थः । कार्यशब्दोऽपि प्रागसतो मध्ये सत्त्वमेवाह । मध्यशब्दो हि प्रागभावस्य प्रध्वंसकालावधिं प्रध्वंसस्य प्रागभावकालावधिं चाह । किमुक्तं भवति ? वस्तुसद्भावमाहेत्यर्थः । तथाच वस्तुसद्भावानङ्गीकारे प्रतिकूलाप्रतिकूलव्यवहार एव न घटेतेति बाधकतर्कोपन्यासः । इत्थं माध्यमिकोक्तमेकमर्थं प्रतिक्षिप्य तदुक्तमर्थान्तरमप्यनूद्य परिहरति—कार्यारम्भ इति । एवं किलाह माध्यमिकः—कार्यारम्भे कारणमविकृतमेव जनयेदुत विकृतं यद्यविकृतं तदा सर्वदाऽपि जनयेत् यदि विकृतं तदा विकारस्यापि कार्यत्वाद्विकारान्तरमन्वेषणीयम् । तथाचानवस्थितिः' इति । इत्यादिचिन्ता वन्ध्येति—एवंविधा चिन्ता निरर्थिकेत्यर्थः । निरर्थकत्वमेवोपपादयति—सामग्र्येति । कारणस्य सहकारिसम्पत्तिस्सामग्री । तथाच परस्परोत्पत्तिप्रसङ्गो निरस्तः । सामग्रीसम्पत्तावपि सामग्र्यन्तरापेक्षाऽस्ति । तथाचानवस्थितिप्रसङ्गोऽवशिष्यते । स तु गुण एव । सिद्धानवस्थारूपत्वादित्याह—भजतीति । लोके कर्षणादिक्रमेण शालिसम्पत्तिपर्यन्तं सामग्रीपरम्पराक्रमोऽनुवर्तते, एवमनादौ संसारे पूर्वपूर्वकारणप्रक्रमेणोत्तरोत्तरकारणक्रमो जायत इति न कश्चिदपि विपश्चितां विप्रतिपत्तिगन्धावकाश इति ॥ १९९ ॥

पद०—प्राक्पश्चादित्यादि । प्राक्—कार्यस्योत्पत्तेः प्राक् । पश्चात्—कार्यनाशात् पश्चाच्च । सत्त्वहानेः-सत्त्वाभावेन । मध्येऽपि कार्यं गगनकुसुमवत् न स्यात्—सत् न भवेत् । इति चेदिति शेषः । मैवम्—एवं न वाच्यम् । तत्रैव दृष्टेः—मध्यकाल एव कार्यस्योपलब्धेः । प्रमाणादेव

प्रमेयसिद्धिः पूर्वोत्तरकालयोरदृष्टत्वात् कार्यं न विद्यते मध्यकाले तु दृष्टत्वात् कार्यं नास्तीति वक्तुं न शक्यमिति भावः । न यदि—एवमनङ्गीकारे । असौ मध्यकार्यादिशब्दः कथम्—कथं प्रयुज्यते । मध्यशब्दो हि प्रागभावस्य प्रध्वंसकालं प्रध्वंसस्य प्रागभावकालञ्च बोधयति तेन वस्तुसद्भावोऽवगम्यते । कार्यशब्दोऽपि प्राक्पश्चादसन्तं मध्यकालवर्तिनमाह तेन च मध्यकाले वस्तुसत्तावगम्यते । अतस्तयोः प्रयोगो न स्यादित्यर्थः। कार्यारम्भे—कार्योत्पादने । निदानम्—कारणम् । विकृतिमत्—किञ्चिद्विकारमापन्नं जनयति । उत न—आहोस्विदविकृतमेव जनयतीत्यर्थः । किं कारणमविकृतमेव कार्यं जनयेदुत विकृतम्, यद्यविकृतं तदा सर्वदा जनयेत्, यदि विकृतं तदा तद्विकारस्यापि कार्यत्वात् विकारान्तरमन्वेषणीयम्, तथाचानवस्थेति भावः । इत्यादिचिन्तापि—इत्यादिविचारश्च । बन्ध्या—विफला । सामग्र्या—सहकारिसम्पत्त्या । कार्यसिद्धेः—कार्योत्पत्तिरूपाभिमतलाभात् । कारणस्य, अनवस्था च—उपर्युपरि कारणान्तरपरम्परापेक्षा च । गुणताम्—सिद्धानवस्थारूपतया गुणत्वम् । भजति—न तु दोषताम् । कल्प्ये ह्यनवस्थादोषः, क्लृप्तेऽनवस्था गुण एव न दोष इति भावः ॥ १९९ ॥

साध्यं हेतुस्तदङ्गप्रभृति च यदि वस्संवृतेरेव सिध्येत्
अस्मद्वाक्यानुरोधादिह न कथमसिद्ध्यादिदोषा भवेयुः ।
तत्र प्रामाण्यबुद्धिर्न यदि पठत तन्मानमित्यस्मदुक्तिं
वस्तुस्थित्या न मानं तदिति यदि समं त्वन्मतस्थापकेऽपि ॥ २०० ॥

चिन्ता०—'अधिकारोऽनुपायत्वान्न वादे शून्यवादिनः' इत्युक्तक्रमेण शून्यवादिनस्स्वपक्षसाधकप्रमाणाभावाच्छून्यं तत्त्वमिति वक्तुमेव न शक्यमित्यस्माभिरुक्ते सति शून्यवादी प्रत्यवतिष्ठते—'अनुमानादेव सर्वं मे सिध्यतीति, तत्रचानुमानाङ्गं सकलमपि मे सत्यमेव सिध्येत् संवृतिमहिम्ना, या तत्त्वमर्थं संवृणोति तिरस्करोति सा संवृतिशब्दवाच्येति तेन सांवृतिकप्रमाणसिद्धं शून्यं तत्त्वम्' इति । तदिदमनुवदति—साध्यमिति । साध्यमनुमानसाध्यं हेतुस्तत्साधनं तदङ्गं व्याप्त्यादिकम्, प्रभृतिशब्देन तदपेक्षितं तर्कादिकमुच्यते । सर्वं संवृतेरेव सिध्येत् विपरीतज्ञानादेव सिध्येदित्यर्थः । अत्र दूषणमाह—अस्मदिति । यदि तवानुमानसाधनाङ्गं सकलमपि संवृतिप्रमाणात् सिध्येत् त्वद्वाक्यादेव सिध्येत् तर्हि तादृशप्रमाणादस्मद्वाक्यानुरोधादेव तवानुमानदूषणाङ्गं सकलमपि कथं न सिध्येदित्यर्थः । अत्र पूर्वपक्षिणोऽभिप्रायमनुवदति—तत्रेति । युष्मद्वाक्यानुरोधे मम प्रमाणबुद्धिर्नास्तीति तर्हि मम

वाक्यं स्वसाधकदूषकत्वेन प्रयुज्यमानं प्रमाणमिति मदुक्तिं पठित्वा सन्तुष्यत। वस्तुस्थित्या तव वाक्यं प्रमाणं न भवतीति यदि वदसि तर्हि त्वन्मतस्थापकेऽप्यनुमाने वस्तुस्थित्या प्रामाण्यं नास्त्येव तत्प्रामाण्यस्य सांवृतिकत्वेनैव भवतैवाभिधानात्। तथा च समस्समाधिः। अयमर्थः—स्वसिद्धान्तस्साधुरिति त्वद्वाक्यप्रामाण्ये त्वत्सिद्धान्तोऽसाधुरिति मद्वाक्यस्यापि प्रामाण्यं स्यात्, मद्वाक्यस्याप्रामाण्ये त्वद्वाक्यस्याप्यप्रामाण्यं स्यात् द्वयोस्सांवृतिकत्वाविशेषादिति ॥ २०० ॥

पद०—साध्यमित्यादि। साध्यम्—हेतुसाध्यम्। हेतुः—तत्साधकम्। तदङ्गप्रभृति च—तदङ्गं व्याप्त्यादिकम्। प्रभृतिशब्देन तदपेक्षितं तर्कादिकमुच्यते। सर्वं, वस्संवृतेरेव सिध्येद्यदि—विपरीतज्ञानादेव सिध्येद्यदीत्यर्थः, त्वद्वाक्यादेव सिध्येद्यदीति पर्यवसन्नम्। तर्हि अस्मद्वाक्यानुरोधात्—तादृशप्रमाणादस्मद्वाक्यानुरोधात्। इह—अनुमानविषये। असिद्ध्यादिदोषाः कथं न भवेयुः—त्वदनुमानदूषणाङ्गं सकलमपि कथं न सिध्येदित्यर्थः। तत्र—युष्मद्वाक्यानुरोधे। प्रामाण्यबुद्धिर्न यदि-मम प्रमाणत्वबुद्धिर्नास्तीति यदि। तत्—स्वसाधकदूषकत्वेन प्रयुज्यमानं मद्वाक्यम्। मानम्—प्रमाणम्। इति—एवमाकाराम्, अस्मदुक्तिम्। पठत—पठित्वा सन्तुष्यत। वस्तुस्थित्या, तत्—त्वद्वाक्यम्। न मानमिति यदि—यदि वदसि। तर्हि वस्तुस्थित्या प्रामाण्यं नास्तीत्येतत्। त्वन्मतस्थापकेऽपि—त्वन्मतस्थापकानुमानेऽपि। समम्—तुल्यम्। तत्प्रामाण्यस्यापि सांवृतिकत्वेन भवतैवाभिधानात् समस्समाधिरित्यर्थः। अयमर्थः—स्वसिद्धान्तस्साधुरिति त्वद्वाक्यप्रामाण्ये त्वत्सिद्धान्तोऽसाधुरिति मद्वाक्यस्यापि प्रामाण्यं स्यात् मद्वाक्यस्याप्रामाण्ये त्वद्वाक्यस्याप्यप्रामाण्यं स्यात द्वयोस्सांवृतिकत्वाविशेषादिति ॥ २०० ॥

अख्यातिस्त्वन्यथाधीर्विषयरहितधीश्चानधिष्ठानबुद्धिः
बाह्यार्थाकारयोगस्सदसदितरधीश्शून्यधीरात्मधीश्च।
भ्रान्तौ सर्वत्र तत्तत्परमतकथकैरादृताः पक्षभेदाः
प्रायो बुद्धिर्यथार्था श्रुतिविदभिमता क्वापि भेदाग्रहादि ॥ २०१ ॥

इति सर्वथानुपपत्त्यधिकरणम् ॥ ५० ॥

चिन्ता०—अत्र भ्रान्तिज्ञानप्रसङ्गात्तत्तद्वादिपरिगृहीतान् भ्रान्तिप्रकाराननूद्यान्ते स्वपक्षमपि निगमयति—अख्यातिरिति। प्राभाकरास्शुक्तिरजतत्वयोरसंसर्गाग्रहाच्छुक्तिरजतयोर्भेदाग्रहं भ्रान्तिस्थले

प्रतिपेदिरे सैवाख्यातिः, असंसर्गस्याग्रहणाद् भेदस्याग्रहणाच्च। नैयायिकाः पुनरन्यथाज्ञानं भ्रान्तिरिति प्राहुरिति कथयति—**अन्यथाधीरिति**। शुक्ती रजतात्मना भातीत्यर्थः। **विषयरहितधीरिति** बौद्धैक-देशिनः। विपरीतज्ञानस्य विषय एव नास्तीति तेषां भावः। निर्विषयख्यातिवादित्वात्। **अनधिष्ठान-बुद्धिः**—अयमपि बौद्धभेदः। तत्र गन्धर्वनगरादिकं स्वप्नमप्युदाहरन्ति। सौत्रान्तिकाः पुनस्सन्निहिता-नीलादयस्स्वविषयबुद्धौ स्वाकारमर्पयन्ति तथा बुद्ध्यारोपितनीलादिविज्ञानं भ्रान्तिरिति निश्चिन्वन्ति। **सदसदितरधीः**—मायावादिनस्सदसद्विलक्षणस्यानिर्वचनीयस्य ख्यातिमाचक्षते। माध्यमिकाः पुनश्शून्य स्यार्थस्य प्रतीतिरिति प्रलपन्ति। योगाचारास्तु स्वात्मैव बाह्यत्वेन बुध्यत इति भ्रान्तिप्रकारमालपन्ति। एवं विविच्योक्त्वा सङ्कल्य्य कथयति—**भ्रान्ताविति**। तत्तद्वादिभिरादृता एते **पक्षभेदाः**। एवं पक्षभेदा-ननूद्य **यथार्थख्यातिलक्षणं** श्रौतत्वात्स्वकीयमित्याह—**प्राय** इति। प्राचुर्यार्थः। अत्र प्रायश्शब्दं प्रयुञ्जानस्यायमभिप्रायः—प्राचुर्येण सर्वत्र यथार्थख्यातिरेव सुलभा। पञ्चीकरणादिप्रक्रियया शुक्तौ रजत-मस्ति रजतेच शुक्तिरप्यस्ति। सदृशे सदृशान्तरस्य विद्यमानत्वं तान्त्रिकैरप्यनुमन्यते। अतएव सोमा-भावे पूतीकानभिषुणुयात् इत्युच्यते पूतीकेऽपि सोमावयवस्य विद्यमानत्वात्। उक्तमिदं यामुना-चार्यैः—

> 'सोमाभावेच पूतीकग्रहणं श्रुतिचोदितम्।
> सोमावयवसद्भावादिति न्यायविदो विदुः॥' इति।

तेन शुक्तौ विद्यमानमेव रजतं शुक्तिरजतज्ञाने गृह्यते। तेन विद्यमानरजतग्रहणाद् यथार्थख्यातिः। अत्रायं विशेषः—शुक्तौ शुक्तिभूयस्त्वमस्ति रजताल्पीयस्त्वञ्च। तथाच शुक्तिभूयस्त्वरजताल्पीयस्त्वाग्र-हणसहकृतं विद्यमानरजतग्रहणं भ्रान्तिज्ञानमित्युच्यते। तथा चाख्यातिसंवलितयथार्थख्यातिस्त्रयन्तविदा-मस्माकमभिमतेत्यर्थः। अत्र **श्रुतिविदभिमतेति** स्वपक्षस्य पारमार्थ्यसाधकं सन्ध्याधिकरणविषयवाक्यं स्मार्यते। श्रूयते हि 'न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान्रथयोगान्पथः सृजते स हि कर्ता' इति। **क्वापि भेदाग्रहादीति**—यत्र द्रव्ये द्रव्यान्तरसद्भावो न लभ्यते तत्र प्राभाकराभिमतो भेदाग्रहोऽसंसर्गाग्रहो वा स्वीकार्य इति भावः॥ २०१॥

इति सर्वथानुपपत्त्यधिकरणम्॥ ५०॥

पद०—अख्यातिरित्यादि। प्राभाकराः शुक्तिरजतत्वयोरसंसर्गाग्रहात् शुक्तिरजतयोर्भेदाग्रहाच्च यां बुद्धिं प्रतिपेदिरे सैव अख्यातिः। असंसर्गस्याग्रहणात् भेदस्याग्रहणाच्च। तु—अनेनान्यथा-

धीरित्युक्तस्यान्यथाख्यातिपक्षस्य वैलक्षण्यं प्रतिपाद्यते। तच्च भाष्ये 'ख्यात्यन्तरवादिनां सुदूरमपि गत्वान्यस्यान्यथाभानमवर्जनीयम्' इत्यादौ स्पष्टम्। नैयायिकाः पुनरन्यथाज्ञानं भ्रान्तिरितिमाहुः—अन्यथाधीरिति। शुक्ती रजतात्मना भातीत्यर्थः। विषयराहितधीरिति बौद्धैकदेशिनः। विपरीतज्ञानस्य विषयएव नास्तीति तेषां भावः। तेषां निर्विषयख्यातिवादित्वात्। चस्समुच्चये पादपूरणे वा। अनधिष्ठानबुद्धिः—अयमपि बौद्धभेदाभिमतः पक्षभेदः, तत्र गन्धर्वनगरादिकं स्वप्नमप्युदाहरन्ति। बाह्यार्थाकारयोग इति—सौत्रान्तिकाः पुनस्सन्निहितनीलादयः स्वविषयबुद्धौ स्वाकारमर्पयन्तीति तथा बुद्ध्यारोपितनीलादिविज्ञानं भ्रान्तिरिति निश्चिन्वन्ति। सदसदितरधीरिति—मायावादिनस्सदसद्विलक्षणस्यानिर्वचनीयस्य ख्यातिमाचक्षते। शून्यधीरिति—माध्यमिकाः पुनश्शून्यस्यार्थस्य प्रतीतिर्भ्रान्तिरिति प्रलपन्ति। आत्मधीश्चेति—आत्मशब्देन ज्ञानस्वरूपमुच्यते। योगाचारास्तु विज्ञानस्यात्मैव बाह्यत्वेन बुध्यत इति भ्रान्तिप्रकारमालपन्ति। एवं सर्वत्र भ्रान्तौ तत्तत्परमतकथकैः—तच्चद्वादिभिः। आहृता एते पक्षभेदाः। एवं पक्षभेदाननूद्य स्वमतमाह—प्राय इत्यादिना। प्रायः—प्राचुर्येण। बुद्धिः। यथार्था—विद्यमानविषयग्राहिणीति। श्रुतिविदभिमता—श्रुतिविदां मीमांसकानां नाथयामुनप्रभृतीनाञ्च सम्मता। क्वापि—यत्र द्रव्ये द्रव्यान्तरसद्भावो न लभ्यते तत्र। भेदाग्रहादि—प्राभाकराभिमतो भेदाग्रहोऽसंसर्गाग्रहो वा स्वीकार्य इति भावः। अत्र प्रायश्शब्दं प्रयुञ्जानस्यायमभिप्रायः। प्राचुर्येण सर्वत्र यथार्थख्यातिरेव सुलभा पञ्चीकरणप्रक्रियया शुक्तौ रजतमस्ति रजतेच शुक्तिरप्यस्ति। सदृशे सदृशान्तरस्य विद्यमानत्वं तान्त्रिकाणामप्यनुमतम्। अतएव सोमाभावे पूतीकानभिषुणुयादित्युच्यते पूतीकेऽपि सोमावयवस्य विद्यमानत्वात्। उक्तमिदं यामुनाचार्यैः—

'सोमाभावेच पूतीकग्रहणं श्रुतिचोदितम्।
सोमावयवसद्भावादिति न्यायविदो विदुः॥'

इति। तेन शुक्तौ विद्यमानमेव रजतं शुक्तिरजतज्ञाने गृह्यते। तेन विद्यमानरजतग्रहणात् यथार्थख्यातिः। अत्रायं विशेषः—शुक्तौ शुक्तिभूयस्त्वमस्ति रजताल्पीयस्त्वञ्च तथाच शुक्तिभूयस्त्वरजताल्पीयस्त्वाग्रहणसहकृतं विद्यमानरजतग्रहणं भ्रान्तिज्ञानमित्युच्यते। तथा चाख्यातिसंवलिता यथार्थख्यातिः श्रुतिविदामस्माकमभिमतेति। अत्र श्रुतिविदभिमतेति स्वपक्षस्य पारमार्थ्यसाधकं सन्ध्याधिकरणविषयवाक्यं स्मार्यते। श्रूयते हि 'न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान्रथयोगान्पथस्सृजते स हि कर्ता' इति॥ २०१॥

इति सर्वथानुपपत्त्यधिकरणम्॥ ५०॥

## एकस्मिन्नसंभवाधिकरणम् ॥ ५१ ॥

### सूत्रम्—नैकस्मिन्नसंभवात् ॥ २०५ ॥

संवादात् क्वापि भागे जिनमुनिवचसश्शेषमप्यस्तु मानं
तस्मात्तेनोपरोध्योपनिषदिति कचोल्लुञ्छनानां दुराशा ।
वैघट्यस्यापि दृष्टेर्न यदि सुगतवागेवमेवास्तु सत्या
तेनान्योन्यं विरोधात् पुरुषवचनयोरप्रकम्प्या श्रुतिर्नः ॥ २०२ ॥

चिन्ता०—'निरस्ताः' इत्यादिना भाष्यएव सङ्गतिरुक्ता । वैशेषिकबौद्धयोः परमाणुकारणवादिनोः परमाणुचातुर्विध्यसाम्याच्चन्निरासौ सङ्गतौ । अतो बौद्धानन्तरमार्हतनिरासः प्राप्त इति सङ्गतिः । एवंवा सङ्गतिः परस्परविरुद्धकोटिषु वैलक्षण्यवादी माध्यमिकः पूर्वं निरस्तः । 'न सन्नास न्न सदसत्' इत्यादिना सदसदादिकोटीनां निराकरणमेव हि तत्सिद्धान्तः । तदेवन्यायवादिभिर्निरस्यते 'परस्परविरोधेतु न प्रकारान्तरस्थितिः' इति । अधुना पुनः परस्परविरुद्धकोटीनामेकत्रैव समुच्चयवादी निरस्यते । स हि 'स्यादस्ति स्यान्नास्ति' इत्यादिना सप्तभङ्गीमेव सिद्धान्तयति । तच्च न्यायवादिभिर्निरस्यते—'नैकतापि विरुद्धानामुक्तिमात्रविरोधतः ।' इति । तदर्थविचारस्तु—किं जैनमतं समीचीनयुक्तिमूलं नेति । किमेकस्य वस्तुनस्सत्त्वासत्त्वनित्यत्वानित्यत्वभिन्नत्वाभिन्नत्वाद्यनेककल्पभाक्त्वं सम्भवति नेति । किं पर्यायस्वभावाभ्यां एकस्य वस्तुनो नैकस्वभावत्वमुपपादयितुं शक्यते नेति । अत्र जैनवाक्यस्य क्वचित्संवादात् प्रामाण्यमाशङ्क्य बौद्धवाक्यप्रतिबन्द्या दूषयित्वा तयोरुभयोः परस्परविरोधादप्रामाण्ये निष्प्रतिद्वन्द्वमेव वेदवाक्यप्रामाण्यं प्रतिपादयति—संवादादिति । अयमत्र शब्दार्थः—क्वचित् 'अहिंसा परमो धर्मः' इत्यादिवाक्यभागे श्रुतिसंवादाज्जिनमुनिवचसः शेषमपि वाक्यजातं तत्तुल्यन्यायतया प्रमाणमस्तु । तस्माज्जिनमुनिवचसोपनिषदुपरोध्या भवत्विति कचोल्लुञ्छनानां दुराशा । अत्र दुराशेत्युक्त्या प्रसक्तस्य दुष्टत्वं द्योत्यते । दुष्टत्वस्य प्रतिबन्द्योपपादनं वक्तुं दोषं तावदाह—वैघट्यस्यापि दृष्टेरिति । पिञ्छधारणादीनां बहूनां वेदविरुद्धानां दृष्टेरित्यर्थः । न यदि—एवं बहुविरुद्धार्थदृष्टावपि जैनमतस्य दुष्टत्वं न यदि । तर्हि सुगतवागेवमेवास्तु सत्या तस्या अपि क्वाचित्कसंवादात् । ननु जैनवागपि सत्यास्तु तथास्तु सौगतवागपि सत्या तथा च वेदो भ्रष्टइत्याशङ्क्य परिहरति—

तेनेति । तेन पुरुषप्रणीतयोर्बुद्धजैनवाक्ययोः परस्परविरोधान्निरोधे सति नित्यंश्रूयमाणत्वेन श्रुतिरनादिनिधनाविच्छिन्नसम्प्रदायत्वादप्रकम्प्यतां भजत इति निष्कण्टकोऽयं नैगमिकमार्गः ॥ २०२ ॥

पद०—संवादादित्यादि । जिनमुनिवचसः—जिनाख्यऋषिवचनरूपस्य जैनशास्त्रस्य । क्वापि भागे—क्वचित् अहिंसा परमो धर्म इत्यादिवाक्यभागे । संवादात्—वेदेनैकमत्यात् । शेषमपि, वाक्यजातं मानमस्तु—तुल्यन्यायतया प्रमाणमस्तु । तस्मात्—वेदसंवादित्वसिद्धप्रमाणभावत्वात् । तेन—जिनमुनिवचसा । उपनिषदुपरोध्या भवत्विति । कचोल्लुञ्छनानाम्—जैनानाम् । दुराशा—दुष्टाशा । दुराशेत्युक्त्या प्रसक्तस्य दुष्टत्वस्य प्रतिबन्द्या उपपादनं वक्तुं दोषमाह—वैघट्यस्यापि दृष्टेरिति । पिञ्छधारणादीनां बहूनां वेदविरुद्धानां दृष्टेरित्यर्थः । न यदि—एवं बहुविरुद्धार्थदृष्टावपि जैनमतस्य दुष्टत्वं न यदि । सुगतवागेवमेव सत्यास्तु—तस्या अपि क्वचित् संवादात् । ननु जिनसुगतवचसोर्द्वयोरपि सत्यत्वे श्रुतिर्भ्रष्टा स्यादित्यत्राह—तेनेत्यादि । पुरुषवचनयोः—बुद्धजिनवाक्ययोः । अन्योन्यं विरोधात् जातेन तेन निरोधेन प्रामाण्यबुद्धिप्रतिबन्धनेन । नः—अस्माकं प्रमाणत्वेनाभिमता । श्रुतिः—नित्यं श्रूयमाणत्वेन श्रुतिः । अप्रकम्प्या । अनादिनिधनाविच्छिन्नसम्प्रदायत्वात् निष्कण्टको नैगमिकमार्ग इति भावः ॥ २०२ ॥

सच्चासच्च द्वयञ्च द्वितयसमधिकं तच्च पूर्वैस्सहेति
स्यादस्तीत्यादिवाचा परिहितगगनैर्गीयते सप्तभङ्गी ।
व्याघातस्ते यदीष्टस्स्वसमयविहतिर्यद्यनिष्टः परोक्तेः
त्वद्वाक्यैर्न क्षतिस्स्यान्नच निरुपधिकः क्वाप्यसत्त्वादियोगः ॥ २०३ ॥

चिन्ता०—तत्र सप्तभङ्गीस्वरूपमनूद्य तत्र व्याहतिलक्षणेन दूषणेन दुष्टत्वमुपपादयति—सच्चेत्यादिना । इयं किल सप्तभङ्गी—स्यादस्ति स्यान्नास्ति स्यादस्तिचनास्तिच स्यादस्तिनास्तिविलक्षण मस्तिस्यादस्तिनास्तिविलक्षणं नास्तिस्यादस्तिनास्तिविलक्षण मस्तिनास्तिचस्यादस्तिनास्तिविलक्षणमित्येवंरूपा । तदेतद्दूषयति—व्याघात इति । तैः परिहितगगनैर्व्याघात इति किमपि दूषणं यदीष्टं लोके शास्त्रेच, तदा स्वसिद्धान्तव्याघातः, अत्यन्तव्याघातदुष्टायास्सप्तभङ्ग्याः स्वसिद्धान्तत्वेनेष्टत्वात् । यदि व्याघातो नाम दूषणं नेष्टं तदापि दूषणमाह—यद्यनिष्ट इत्यादिना । दोषमेव प्रकटयति—परोक्तेरिति । परेषामुक्तेर्जैनवाक्योक्तदूषणै र्न क्षतिस्स्यात् न दोषस्स्यात् । अयमर्थः—व्याघातो हि सर्वत्र दोषोद्घाटनपर्यवसानभूमिः ।

तदभावे जैनः कथं परपक्षदूषणं वदेदिति । किञ्च स्यादस्तीत्यादिना वस्तूनामसत्त्ववादी निरुपाधिकम-सत्त्वं वदत्युत सोपाधिकम् ? यदि सोपाधिकं तदा वयमपि स्वीकुर्महे । घटो हि स्वदेशेऽस्ति परदेशे-नास्ति, स्वकालेऽस्ति कालान्तरे नास्ति, स्वात्मनास्ति परात्मना नास्तीति प्रामाणिका अपि वदन्ति । यदि निरुपाधिकं तदा व्याघातात्सर्वलोकविरोधएव । निरुपाधिकनिषेधो नाम घटो घटाद्यात्मना नास्तीति निषेधः । तथाच घटोऽस्ति केनाप्यात्मना नास्तीत्यसङ्गतमेवैतत् , केनापीति स्वात्मनोऽपि निषेध्यकोटिनिवेशा-दिति ॥ २०३ ॥

पद०—**सच्चासच्चेत्यादि । परिहितगगनैः**—परिहितं अम्बरतया परिगृहीतं गगनं यैस्ते परिहितग-गनास्तैर्दिगम्बरैरित्यर्थः । जैनैरितियावत् । चस्समुच्चये । जैनैरभ्युपगतं वस्तु सर्वम् । **सच्च**—ईषत्सत्त्ववि-शिष्टञ्च । **असच्च**—ईषदसत्त्वविशिष्टञ्च । **द्वयञ्च**—ईषत्सदसच्च । **द्वितयसमधिकम्**—सत्त्वासत्त्वात्म-कावयवयद्वयघटितभङ्गीत्रयविलक्षणमवक्तव्यशब्दवाच्यमनिर्वचनीयञ्च । **पूर्वैस्सहच**—पूर्वोक्तसत्त्वासत्त्वसद-सत्त्वपक्षैस्सहितञ्च । **तत्**—अनिर्वचनीयम् । अस्त्यवक्तव्यनास्त्यवक्तव्यास्तिनास्त्यवक्तव्यशब्दवाच्यञ्च । **इति**—एवमाकारया । **स्यादस्तीत्यादिवाचा**—‘ स्यादस्ति स्यान्नास्ति स्यादस्तिचनास्तिच स्यादवक्तव्यं स्यादस्त्यवक्तव्यं स्यान्नास्त्यवक्तव्यं स्यादस्तिचनास्तिचावक्तव्यम् । ’ इति वाचा । **सप्तभङ्गी**—सप्तभङ्गी-विशिष्टो न्यायः । **गीयते**—उपन्यस्यते । हे **दिगम्बर ते**—तव । **व्याघातः**—व्याघातशब्दवाच्यं किमपि दूषणम् । **यदीष्टः**—लोके शास्त्रे च यदि सम्मतः । तदा **स्वसमयविहतिः**—स्वसिद्धान्तव्याघातः । अत्यन्तव्याघातदुष्टायास्सप्तभङ्ग्यास्स्वसिद्धान्तत्वेनेष्टत्वात् । **यद्यनिष्टः**—यदि व्याघातो नाम दूषणं नेष्टं तदा । **परोक्तेः**—परेषामुक्तेर्जैनेतरसिद्धान्तस्य । **त्वद्वाक्यैः**—जैनवाक्योक्तदूषणैः । **क्षतिः**—निकर्षः । **न स्यात्**—न भवेत् । **निरुपधिकः**—देशकालावस्थाद्युपाधिरहितः । **असत्त्वादियोगः**—आदिशब्देन सत्त्वादिकमुच्यते । असत्त्वसत्त्वादिधर्मसम्बन्धः । **क्वापि**—कुत्रापि । **न च**—न भवति । अयं भावः—सप्तभङ्गीघटकमसत्त्वं किं सोपाधिकम् ? उत निरुपाधिकम् ? पूर्वत्र वयमपि मन्महे घटो हि स्वदेशेऽस्ति परदेशे नास्ति स्वकालेऽस्ति कालान्तरे नास्ति स्वात्मनास्ति परात्मना नास्तीति । उत्तरत्र व्याघातः । घटोऽस्ति केनाप्यात्मना घटो नास्तीति सर्वथाऽसङ्गतमेव तदिति ॥ २०३ ॥

वृद्धिह्रासौ यथार्हं प्रतितनु भविनां देहभङ्गे विमानं
मुक्तौ नित्योर्ध्वयानप्रभृति गुरुतया नित्यपातं क्षमादेः ।
धर्मादेर्व्यापकत्वं गगनवदथवाऽताद्दशं पुद्गलत्वं
दुस्तर्कैः कल्पयन्तश्श्रुतिनयकुशलैर्दूरमुत्सारणीयाः ॥ २०४ ॥

इत्येकस्मिन्नसम्भवाधिकरणम् ॥ ५१ ॥

चिन्ता०—एवं स्फुटव्याघातदुष्टां जैनोक्तां सप्तभङ्गीं निरस्य तदुक्तान्यपराण्यप्यर्थान्तराण्युक्तेनैव न्यायेन श्रुतिनयकुशलैर्वेदान्तवादिभिर्निराकरणीयानीत्याह—वृद्धिह्रासाविति । भविनां संसारिणां प्रतिशरीरं वृद्धिह्रासौ यथार्हमित्येकोऽर्थः । आत्मा शरीरपरिमाणत्वाच्छरीरे वृद्धे वृद्धो भवति ह्रासवति ह्रासवान्भवतीति हि जैनानां प्रक्रिया । मुक्तौ देहाभावे सति विगतमानमेवात्मानं प्रवदन्ति जैनाः । तत्र केचिन्मुक्त आत्मा नित्यमेवोर्ध्वं यातीत्याहुः । क्षमादेः पृथिव्यादेर्नित्यपातमप्याहुरेके । धर्माधर्मयोर्गगनवद्विभुत्वमपि त एवाहुः । तत्र पक्षान्तरमप्याह—अथवेति । पुद्गलत्वम्—परिमितवस्तुत्वमित्यर्थः । एतेषां दुस्तर्कैरेवं कल्पयतां श्रुतिनयनिपुणैर्वेदान्तवादिभिर्दूरोत्सारणीयत्वमेवावशिष्यते । दुराचारत्वात् दूरोत्सारणीयत्वं तावत्सुप्रसिद्धम्, अधुना स्वकपोलकल्पितदुर्वचनवादित्वादपि दूरोत्सारणीयत्वमुच्यत इति ॥ २०४ ॥

इत्येकस्मिन्नसम्भवाधिकरणम् ॥ ५१ ॥

पद०—वृद्धिह्रासावित्यादि । भविनाम्—संसारिणाम् । प्रतितनु—प्रतिशरीरम् । यथार्हं वृद्धिह्रासौ—आत्मनां देहपरिमाणत्वात् शरीरे वृद्धे वृद्धो भवति ह्रासवति ह्रासवान्भवतीत्ययमेकोऽर्थः । देहभङ्गे—मुक्तौ देहनाशे सति । विमानम्—विगतमानमेवात्मानं वदन्ति । तेष्वेव केचित् मुक्तौ आत्मनो नित्योर्ध्वयानप्रभृति च सततोर्ध्वगमनप्रभृतिच वदन्ति । गुरुतया—गुरुत्ववत्तया । क्षमादेः—पृथिव्यादेः । नित्यपातम्—सततमधःपतनम् । धर्मादेः—धर्माधर्मयोः । गगनवत्—आकाशवत् । व्यापकत्वम्—विभुत्वम् । अथवा—पक्षान्तरे । अताद्दशम्—व्यापकत्वविलक्षणम् । पुद्गलत्वम्—परिमितवस्तुत्वम् । इमानर्थान् । दुस्तर्कैः—व्याप्तिशून्यैस्तर्कैः । कल्पयन्तो जैनाः । श्रुतिनयकुशलैः—वेदान्तवादिभिः । दूरमुत्सारणीयाः—निरसनीयाः ॥ २०४ ॥

इत्येकस्मिन्नसम्भवाधिकरणम् ॥ ५१ ॥

# पशुपत्यधिकरणम् ॥ ५२ ॥

सूत्रम्—पत्युरसामञ्जस्यात् ॥ २०९ ॥

सर्वं जानाति रुद्रश्श्रुतिषु च महितस्सत्यवादी च दृष्टः
प्रख्यातं तद्व्रतञ्च क्वचिदुपनिषदीत्यस्तु मानं तदुक्तिः ।
मैवं देवेन दैत्यप्रमथनरुचिना मोहशास्त्राणि कुर्वि-
त्यादिष्टो ह्येष तन्त्रं निजमकृत ततस्तन्न शिष्टोपजीव्यम् ॥ २०५ ॥

चिन्ता०—अत्र पूर्वपेटिकासङ्गतिर्भाष्यकारैरेवोक्ता 'कपिलकणाद' इत्यादिना । पूर्वोक्तानां मतानामसामञ्जस्याद्वेदविरोधाच्च निराकरणे कृते तत्पशुपतिमतस्यापि समानमित्युच्यत इति । एवं पाशुपतस्य प्रकृतिकारणवादसम्मत्या साङ्ख्यानन्तरं निराकरणे प्राप्तेऽपि 'काणादशाक्यपाषण्डैः' इत्यादिना काणादबौद्धादीनां वेदबाह्यत्वप्रसिद्धिप्राचुर्याद् बौद्धजैनाभ्यां पुनस्साक्षादेव वेदप्रामाण्यानङ्गीकाराच्च स्फुटविरोधेन तान्निरस्य 'साङ्ख्यं योगः पञ्चरात्रं वेदाः पाशुपतम्' इति वेदसहपठितपशुपतिमतेऽप्यसामञ्जस्यं वेदविरोधश्चाधुना प्रकाश्यत इति सङ्गत्यविरोध इति केचित् । श्रीविष्णुचित्तार्यास्त्वेवमाहुः—पूर्वमारम्भणाधिकरणे वैशेषिकस्य निरस्तत्वात् पूर्वोक्तार्थशेषप्रतिपादनेन वैशेषिकाधिकरणं प्रवृत्तम् । तत्र तावद्वेदानित्यत्ववादी निरस्तः । ततःपरं सौगतजैनाधिकरणेऽपि वेदाप्रामाण्यवादिनौ निरस्तौ । अधुना पुनः पाशुपताधिकरणे सकलवेदान्तवेद्यपरमपुरुषपारम्यप्रतिभटवादिनो निरस्यन्त इत्युत्तरोत्तरनिराकरणीयेषु वेदबाह्यतातिशयेन सङ्गतिः' इति । इयमेव सङ्गतिः पूर्वाचार्यैस्तेषुतेषु ग्रन्थेषु लिखितेतीमामेव प्राज्ञाः परिगृह्णन्ति । तदर्थविचारस्तु—पशुपतिमतं निश्श्रेयसार्थिभिरुपादेयमुत नेति । किमस्य श्रुतिविरोधोऽस्त्युत नेति । तत्र कपिलकणादसुगतादिमतानां निराकरणीयत्वेऽप्यनिराकरणीयमेव पाशुपतं मतमित्याशङ्कते—सर्वमिति । रुद्रः खलु सर्वज्ञतया श्रुत्यादिषु सुप्रसिद्धः । 'नमस्ते रुद्र मन्यवे' इत्यादिभिर्महितश्च । सच 'क इति ब्रह्मणो नाम' इत्यादिना परतत्त्वविषये सत्यवादी च दृष्टः । 'दासभूतास्स्वतस्सर्वे' इतिच रुद्रवाक्यम् । 'व्रतमेतत्पाशुपतम्' इतिच रौद्रं व्रतमुपनिषद्यपि क्वचित्प्रदेशे प्रख्यातम् । अतस्तदुक्तिः प्रमाणमित्याशङ्क्य निराकरोति—मैवमिति । यद्यपि रुद्रस्सर्वज्ञत्वादिगुणगणोपेतः, तथापि भगवता पुरुषोत्तमेन 'त्वं हि रुद्र महाबाहो मोहशास्त्राणि कारय ।' इत्यसुरमोहनार्थ-

मादिष्ट एष रुद्रो निजं तन्त्रमकृत । ततस्तत्तन्त्रं शिष्टोपजीव्यं न भवति । यथा भागवतस्यापि पितामहस्य भगवन्नियमनेनासुरमोहनवचनमध्यात्मविदामनुपजीव्यं तद्वदिदमपि । दृश्यते हि सर्वज्ञोऽपि पितामहो विरोचनस्य विपरीतोपदेशमाहेति । अतो भगवन्नियोगेनासुरमोहनार्थं प्रवृत्तत्वात्तन्मूलमपि तन्त्रं सत्त्वोत्तराणामनादरणीयमेव तमोगुणप्रवर्तकत्वाद्रुद्रस्य । श्रूयते हि लिङ्गपुराणएव--

' तमसा कालरुद्रस्स्याद्रजसा कनकाण्डजः ।
सत्त्वेन सर्वगो विष्णुस्सर्वलोकनमस्कृतः ॥ ' इति ।

मत्स्यपुराणेऽपि ' अग्नेश्शिवस्य माहात्म्यं तामसेषु प्रकीर्त्यते ' इति । इदं पुनर्भगवद्गीतावचनं सर्वलोकप्रसिद्धम्—' प्रमादमोहौ तमसो भवतोऽज्ञानमेवच ' इति ।
प्रमाणान्तरमपि महर्षिवचनम्—

' या वेदबाह्यास्स्मृतयो याश्च काश्च कुदृष्टयः ।
सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि तास्स्मृताः ॥ ' इति ।

एवं ' पश्यत्येनं जायमानम् ' इत्यादिवचनसहस्रप्रतिपन्नतामसत्वेन रुद्रवाक्यमज्ञानहेतुत्वेन आगमपरिपन्थित्वेन चानादर्तव्यमेव । क्वाचित्कसंवादोऽपि श्रुतिविरोधभूयस्त्वादनुपयुक्त एवेति ॥ २०५ ॥

पद०—सर्वं जानातीत्यादि । रुद्रस्सर्वं जानाति श्रुत्यादिषु तथा प्रसिद्धेः । श्रुतिषु—' नमस्ते रुद्र मन्यवे ' इत्यादिश्रुतिषु । महितश्च—पूजितश्च । सत्यवादी दृष्टश्च—

' क इति ब्रह्मणो नाम ईशोऽहं सर्वदेहिनाम् ।
आवां तवाङ्गे सम्भूतौ तस्मात् केशवनामवान् ॥ '

इत्यादिषु परतत्त्वविषयं सत्यवादी दृष्टश्च । तद्व्रतम्—रौद्रव्रतं भस्मधारणादिव्रतम् । उपनिषदि क्वचित् प्रदेशे । प्रख्यातश्च—प्रसिद्धश्च । ' व्रतमेतत्पाशुपतम् ' इत्युपनिषद्यभिधानात् । इति—हेतोः । तदुक्तिः--तदुक्तिरूपं पाशुपततन्त्रम् । मानम्--प्रमाणम् , अस्तु । मैवम्—एवं न वक्तव्यमित्यर्थः । दैत्यप्रमथनरुचिना—दैत्यप्रमथने असुरमोहने रुचिरभिलाषो यस्य तेन । देवेन—भगवता । मोहशास्त्राणि कुर्वित्यादिष्टो हि—' त्वं हि रुद्र महाबाहो मोहशास्त्राणि कारय ' इत्यादिरूपेण वचनेन मोहनानि शास्त्राणि पाशुपतादीनि त्वं कुरु इत्याज्ञप्तो हि । एषः—रुद्रः । निजम्—स्वीयम् । तन्त्रम्—पाशुपताख्यं शास्त्रम् । अकृत—कृतवान् । ततः—तस्मात् कारणात् । पाशुपततन्त्रस्य

मोहनार्थं कृतत्वात् । तत्—पाशुपतं तन्त्रम् । शिष्टोपजीव्यं न—शिष्टानां सात्त्विकानामादरणीयं न भवति ॥ २०५ ॥

प्राजापत्ये हि वाक्ये प्रकटमुपनिषत्प्राह देहात्मवादं
चक्रे लोकायतं तत् सुरगुरुरभजन्मोहनत्वं मुकुन्दः ।
कण्वस्थाने च लोकायतिकपरिवृढा भारतेऽपि प्रगीताः
कार्यार्थो विप्रलम्भस्तादिह पशुपतेस्तद्वदेवोपपन्नः ॥ २०६ ॥

चिन्ता०—'वैष्णवानां यथा शम्भुः' इति प्रतिपन्नस्य रुद्रस्य कथं मोहकल्पनमित्याशङ्क्य बहुभिर्दृष्टान्तैस्तदेवोपपादयति—प्राजापत्य इति । दहरविद्याशेषभूतप्रजापतिवाक्ये देहात्मवादं प्रकटमेवोपनिषदाह । तच्च लोकायतशास्त्रं सुरगुरुर्बृहस्पतिरेव सकलविद्याधिकारी चकार । भगवानेव बुद्धाद्यवतारमाश्रित्यासुरजनमोहनत्वमभजदिति सुप्रसिद्धम् । अपि च महाभारते महर्षेः कण्वस्याश्रमे वर्तमाना लोकायतिकपरिवृढाः श्रेष्ठाः प्रसिद्धा एव । एवञ्च पशुपतेरपि कार्यार्थो भगवदाज्ञानुपालनार्थो दृष्टान्तत्वेनोक्तोपनिषदादिवदुपपन्न एव विप्रलम्भ इति ॥ २०६ ॥

पद०—प्राजापत्य इत्यादि । प्राजापत्ये वाक्ये—छान्दोग्येऽष्टमाध्याये 'अथ यदिदमस्मिन् ब्रह्मपुरे दहरम्' इत्यादिदहरविद्याशेषभूते इन्द्रविरोचनयोरुपदेशप्रकरणे प्रजापतिनोच्यमाने वाक्ये 'तौ ह प्रजापतिरुवाच' इत्यादौ । हि प्रसिद्धौ । उपनिषत्—उपनिषत् स्वयमेव । देहात्मवादम्—देह एवात्मेत्युच्यतेऽनेनेति देहात्मवादस्तं देहात्मभावपर्यवसन्नं सन्दर्भविशेषम् । प्रकटम्—प्रसिद्धतया । प्राह—प्रतिपादितवती । तत्—प्रसिद्धम् । लोकायतम्—लोकायतशास्त्रम् । सुरगुरुश्चक्रे—सर्वविद्याधिकृतो बृहस्पतिरेव चकार । मुकुन्दः—सर्वेषां ज्ञानोपदेशादिभिर्मोक्षभूमिप्रापणपर्यन्तैर्व्यापारैर्मोक्षदत्वेन प्रसिद्धो भगवांश्च । मोहनत्वम्—बुद्धावतारमाश्रित्यासुरमोहनत्वम् । अभजत् । इदञ्च प्रसिद्धम् । अपि च भारतेऽपि—पञ्चमवेदतया प्रमाणतमे भारतेऽपि । कण्वस्थाने—कण्वाख्यमहर्ष्याश्रमे । लोकायतिकपरिवृढाः—लोकायतिकश्रेष्ठाः । प्रगीताः—वर्तमानतया प्रतिपादिताः । तत्—तस्मात्कारणात् । पशुपतेः—रुद्रस्यापि । कार्यार्थः—भगवदाज्ञानुपालनार्थः । इह—पाशुपततन्त्रे । विप्रलम्भः—तत्त्वोपायादीनामन्यथावचनेन वञ्चनव्यापारः । तद्वत्—उपनिषदादिवत् । उपपन्न एव—युक्त एव ॥ २०६ ॥

शैवाद्याख्याविशेषैः पशुपतिसमयस्स्याच्चतुर्धान्यथा वा
श्रुत्यान्योन्यञ्च बाधस्स्फुट इह तदसौ शापदुष्टार्ह उक्तः ।
अग्राह्यान्वैदिकानामनुसृतनिगमास्ससमरुस्तत्प्रविष्टान्
तत्त्वेऽप्यत्रान्यथात्वं सुगतजिनमतानन्तरोक्तिः क्रमाप्ता ॥ २०७ ॥

चिन्ता०—अत्र खलु पशुपतिसमयश्शैवाद्याख्याविशेषैश्चतुर्धा पठ्यते लोके, सतु तथा चतुर्धा वा भवत्वेकधा वा न तत्रादरः, वेदविरोधादन्योन्यञ्च, विरोधादप्रामाण्यं सुवचमेवेत्याह—शैवादीत्यादिना बाधस्स्फुट इहेत्यन्तेन । तदेवोपपादयति—तदसाविति । तस्मादेव खलु श्रुतिविरोधादेवासौ पशुपतिसमयो गौतमशापदुष्टानामेवार्ह इति मनीषिभिरुक्तः । किञ्च, अनुसृतनिगमा वैदिकाः परमर्षयस्तत्प्रविष्टान् शैवपाशुपतादिमतप्रविष्टानग्राह्यान्ससमरुः । श्रूयते हि 'शैवान्पाशुपतान्' इत्यादिमहर्षिवचनम् । कथमग्राह्यत्वमित्यत्राह—तत्त्वेऽपीति । अत्रास्मिन्पक्षे तत्त्वेऽप्यन्यथात्वम् । न केवलमाचारे, तत्त्वेऽप्यन्यथात्वमित्यपिशब्दार्थः । तेन तत्त्वाचारयोर्द्वयोरपि विरुद्धत्वादत्यन्तवेदविरुद्धत्वमेव । अतो वेदविरुद्धसुगतजिनमतानन्तरोक्तिः पशुपतिमतस्य क्रमप्राप्तेति निगमयति—सुगतेति ॥ २०७ ॥

पद०—शैवाद्याख्याविशेषैरित्यादि । पशुपतिसमयः—पशुपतिसिद्धान्तः । शैवाद्याख्याविशेषैः—शैवपाशुपतकापालकालामुखसंज्ञाविशेषैः । चतुर्धा स्यात्—चतुर्विधोऽस्तु । अन्यथा वा—एकधा वा भवतु । इह—तन्त्रे । श्रुत्या—वेदेन । अन्योन्यञ्च—शैवादितन्त्राणां परस्परमपि च । बाधः—अभिधेयापहारः । स्फुटः—व्यक्तः । तत्—तस्मादेव कारणात् । असौ—पशुपतिसमयः । शापदुष्टार्ह उक्तः—गौतमशापदुष्टानामेवार्ह इति मनीषिभिरुक्तः । किञ्च, अनुसृतनिगमाः—वैदिका महर्षयः । तत्प्रविष्टान्—शैवपाशुपतादिसमयप्रविष्टान् । वैदिकानामग्राह्यान् ससमरुः—वैदिककर्मसु असंग्राह्यान् प्राहुः । अत्र—अस्मिन्पशुपतिसमये । तत्त्वे—जीवेश्वरादिप्रामाणिकार्थविषये । अन्यथात्वमपि—व्यत्यासोऽपि । अनीश्वरस्य पशुपतेरीश्वरत्वादिकल्पनात् तत्त्वव्यत्यासः । न केवलमाचारे किंतु तत्त्वविषयेऽपीति अपिशब्दार्थः । अत एव पशुपतिमतस्य सुगतजिनमतानन्तरोक्तिः—वेदविरुद्धबौद्धार्हतादिमतानन्तरमुपन्यासः । क्रमाप्ता—वेदविरुद्धाचारतत्त्वव्यत्यासपर्वक्रमेण प्राप्ता ॥ २०७ ॥

निष्ठा सर्वेषु नारायण इति वचनाद्धेत्वहन्तव्यतोक्ते-
मानत्वोक्त्या च तन्त्रान्तरमपि महितं वेदवद् भारतादौ ।
नातो बौद्धादिवत् तन्निरसनमिति चेत् सत्यमंशे तु बाधः
स्यान्नासौ पञ्चरात्रे क्वचिदपि तदिह स्वीकृतिर्वेदतुल्या ॥ २०८ ॥

चिन्ता०—अथ पशुपतिमतपरिग्रहे कारणविशेषाननूद्य निराकरोति—निष्ठेति । महाभारते साङ्ख्यादिषु सर्वेष्वेतेषु तन्त्रेषु 'निष्ठा नारायणः परः' इति वचनात् 'न हन्तव्यानि हेतुभिः' इत्युक्तेः, 'आत्मप्रमाणान्येतानि' इति मानत्वोक्त्या च पाशुपततन्त्रमपि वेदवन्महितं भावनीयमेव । अतो हेतोर्बौद्धादिवन्न तन्निरसनं प्राप्तमित्याशङ्क्य सत्यमित्यर्धाङ्गीकारेण निराचकार । कथमर्धाङ्गीकार इत्यत्राह—अंशेतु बाधस्स्यादिति । अंशे वेदविरुद्धे बाधः स्यात् । अविरुद्धांशे स्वीकारोऽपि स्यादित्यर्थः । तर्हि पञ्चरात्रेऽपि क्वचिद्बाधः क्वचिदबाधश्च स्यादित्याशङ्क्य वैषम्यं दर्शयति—नासाविति । पञ्चरात्रे हि तन्त्रे क्वचिदपि वेदविरुद्धांशो नोपलभ्यते । अतः क्वाचित्कवेदविरोधयुक्तात्पाशुपतात्पञ्चरात्रस्य विशेष इत्यर्थः । उक्तार्थस्य प्रयोजनमाह—तदिति । सर्वत्र वेदविरोधाभावादिह पञ्चरात्रे स्वीकारो वेदतुल्य इति ॥ २०८ ॥

पद०—निष्ठेत्यादि । सर्वेषु निष्ठा नारायण इति वचनात्—साङ्ख्यादिषु सर्वेष्वेतेषु तन्त्रेषु 'निष्ठा नारायणः परः' इति महाभारते वचनात् । हेत्वहन्तव्यतोक्तेः—'न हन्तव्यानि हेतुभिः' इति तत्रैव वचनात् । मानत्वोक्त्या च—'आत्मप्रमाणान्येतानि' इति प्रमाणत्वोपन्यासेन च । तन्त्रान्तरमपि—पाशुपततन्त्रमपि । भारतादौ । वेदवत्—वेदेन तुल्यम् । महितम्—पूजितम् । अतः—हेतोः । बौद्धादिवत्—बौद्धादितन्त्रतुल्यतया । तन्निरसनम्—सर्वांशेऽपि तन्निरसनम् । न—न युक्तम् । इति चेत् । सत्यम्—इदमर्धाङ्गीकारे । अङ्गीकारस्यैव विवरणम्—अंशेत्विति । अंशे तु बाधस्स्यात्—विरुद्धांशे बाधस्स्यात् । अविरुद्धांशस्वीकारोऽपि स्यादित्यर्थः । तर्हि पञ्चरात्रेऽपि क्वचिद्बाधः क्वचिदबाधश्च स्यादित्याशङ्क्य निरस्यति—नासाविति । असौ—वेदविरुद्धांशः । पञ्चरात्रे क्वचिदपि न—न दृश्यते । तत्—सर्वांशेऽपि वेदाविरुद्धत्वात् । इह—पञ्चरात्रे । स्वीकृतिः—स्वीकारः । वेदतुल्या—वेदसमः । वेदविरुद्धांशास्तित्वारोपेण पञ्चरात्रस्यास्वीकारे पञ्चरात्रविरुद्धांशास्तित्वारोपेण वेदस्याप्यस्वीकारस्स्यादिति वेदतुल्येत्यनेन व्यज्यते ॥ २०८ ॥

दृश्यन्ते संगृहीता जगति हि समयास्ते च राज्ञानुपाल्याः
तस्मान्नः पक्षपातः क्वचिदनुचित इत्यर्भकप्रायचोद्यम् ।
मुग्धैरन्ये गृहीता भवतु समयसंरक्षणोक्तिश्च धर्म्ये
निष्ठैक्योक्तिस्तदन्यग्रहविहतिपरा तद्विरुद्धोक्तिदृष्टेः ॥ २०९ ॥

इति पशुपत्यधिकरणम् ॥ ५२ ॥

चिन्ता०—अत्र सर्वेषामपि समयानां साधारण्येन सङ्ग्राह्यत्वमाशङ्क्य निराकरोति—दृश्यन्त इत्यादिना श्लोकेन। जगति सर्वे समयास्संगृहीता एव दृश्यन्ते तत्तत्समयनिष्ठैः। ते च सर्वे समयाः प्रजापरिपालनं राज्ञः परमो धर्म इति वचनानुरोधेन राज्ञा विशेषेण परिपालनीयाः। तस्मादस्माकं पक्षपातः क्वचित्समये समुचितो न भवतीत्याशङ्क्य तदिदं बालचोद्यमित्याह—अर्भकेति। तत्र हेतुमाह—मुग्धैरिति। अन्ये वेदविरुद्धास्समया मुग्धैरज्ञैः परिगृहीताः। कुतः? वेदविरुद्धत्वादेव। तर्हि राज्ञां सर्वसमयसंरक्षणोक्तिः कथमितिचेत् तत्राह—भवत्विति। राज्ञां सर्वसमयसंरक्षणोक्तेरेवमर्थइत्युच्यते नपुनर्वेदविरुद्धसर्वसमयसंरक्षणम्। तर्हि 'सर्वेषामपि तन्त्राणां निष्ठा नारायणः परः' इत्युच्यते, कथं क्वचित्त्याज्यत्वमित्याशङ्क्याह—निष्ठैक्योक्तिरिति। अयमर्थः—'निष्ठा नारायणः परः' इति परमर्षिणैवोच्यते। सतु स्वसिद्धान्तमेवाह। साङ्ख्यादीनां सर्वेषामपि तन्त्राणां प्रधानप्रतिप्रतिपाद्यो नारायणएव पर्यवसानभूमिरिति वेदविदां व्यासादीनां सिद्धान्तः। तेन तदन्यग्रहणमल्पज्ञानां स्वकपोलकल्पितमिति तदेव तदन्यग्रहणं 'निष्ठा नारायणः परः' इति निवार्यते। ननु प्रसक्तस्यैव हि निवारणं कार्यम्, इतरप्रसङ्गाभावे कथं निवार्यत इत्याशङ्क्योत्तरमाह—तद्विरुद्धेति। नारायणपारम्यविरुद्धोक्तेर्लोके दृष्टत्वात्। अयमर्थः—सर्वेषामपि तन्त्राणां नारायणएव पर्यवसानभूमिरिति वेदवित्सिद्धान्तः, इममर्थमजानानास्तद्विरुद्धमेव प्रलपन्ति तन्निवारणार्थं 'निष्ठा नारायणः' इत्युच्यत इति ॥ २०९ ॥

इति पशुपत्यधिकरणम् ॥ ५२ ॥

पद०—दृश्यन्त इत्यादि। हि प्रसिद्धौ। जगति—लोके। समयाः—सर्वेऽपि सिद्धान्ताः। सङ्गृहीताः—तत्तत्समयनिष्ठैः परिगृहीता एव दृश्यन्ते। अयमर्थः प्रसिद्ध एव हि। ते च—सर्वे समयाः। राज्ञा अनुपाल्याः—प्रजापालनं राज्ञः परमो धर्म इति वचनानुरोधेन परिपालनीयाः। तस्मात् कारणात्। नः—अस्माकम्। क्वचित्—क्वचित्तन्त्रे। पक्षपातः—प्रेमानुबन्धः 'पक्षः प्रेम च

पार्श्वश्च गरुच ' इति नैघण्टुकाः । अनुचितः—उचितो न भवति । इति—एवमाशङ्कनम् । अर्भक-प्रायचोद्यम्—बालचोद्यम् । अन्ये—वेदविरुद्धास्समयाः । मुग्धैः—अज्ञैः । गृहीताः—परिगृहीताः । कुतः ? वेदविरुद्धत्वादेव । राज्ञां सर्वसमयसंरक्षणोक्तिः कथमिति चेत् तत्राह—भवत्वित्यादि । समयसंर-क्षणोक्तिश्च—सर्वे सिद्धान्ता राज्ञा रक्षणीया इति वचनं च । धर्म्ये—धर्मादनपेते । वेदाविरुद्धधर्म-प्रतिपादकसमयविषये भवतु । राज्ञां सर्वसमयसंरक्षणोक्तेरेवमर्थ इत्युच्यते । नपुनर्वेदविरुद्धसमयसंरक्षणम् । तर्हि 'सर्वेषामपि तन्त्राणां निष्ठा नारायणः परः' इत्युच्यते, कथं क्वचित् त्याज्यत्वमित्यत्राह—निष्ठैक्यो-क्तिरिति । निष्ठा नारायणः प्रभुरिति सर्वेषामपि तन्त्राणां निष्ठैक्योक्तिः प्रधानप्रतिपाद्यैक्योक्तिः । तदन्यग्रहविहतिपरा—नारायणेतरस्य परत्वेन ग्रहणं यत् तस्य विहतौ तत्परा । अयमर्थः—' निष्ठा नारा-यणः परः ' इति परमर्षिणैवोच्यते । सतु स्वसिद्धान्तमेवाह । साङ्ख्यादीनां सर्वेषामपि तन्त्राणां प्रधानप्रतिपाद्यो नारायणएव पर्यवसानभूमिरिति वेदविदां व्यासादीनां सिद्धान्तः । तेन तदन्यग्रहणमल्पज्ञानां स्वकपोल-कल्पितमिति तदेव तदन्यग्रहणं ' निष्ठा नारायणः परः ' इति निवार्यते । ननु प्रसक्तं हि निवार्यं प्रसक्त्यभावे कथं वारणमित्यस्योत्तरमाह—तद्विरुद्धोक्तिदृष्टेरिति । नारायणपारम्यविरुद्धोक्तेर्लोके दृष्टत्वात् । अयमर्थः—सर्वेषामपि तन्त्राणां नारायणएव पर्यवसानभूमिरिति वेदवित्सिद्धान्तः, इममर्थमविजानानास्तद्विरुद्धं प्रलपन्ति, तन्निवारणार्थं निष्ठा नारायण इत्युच्यत इति ॥ २०९ ॥

इति पशुपत्यधिकरणम् ॥ ५२ ॥

## उत्पत्त्यसंभवाधिकरणम् ॥ ५३ ॥

सूत्रम्—उत्पत्त्यसंभवात् ॥ २१३ ॥

प्रामाण्यं कर्मकाण्डे स्मृतिनयवशतस्सात्त्वतस्यापि सिद्धं
पादेऽस्मिन् संगतिश्च प्रतिमतदमने नास्त्यमुष्येति चेन्न ।
प्रत्यर्थित्वं विरोधभ्रममपनयता पञ्चरात्रस्य वार्यं
दुस्तर्कायुत्थितोक्त्या तदितरसमयेष्वित्यनुस्यूतिसिद्धिः ॥ २१० ॥

चिन्ता०—अत्र सङ्गतिर्भाष्यएव सुव्यक्तमुक्ता 'कपिलादितन्त्रसामान्यात् भगवदभिहितपरमनिश्श्रेयससाधनावबोधिनि पञ्चरात्रतन्त्रेऽप्यप्रामाण्यमाशङ्क्य निराक्रियते' इति । तदर्थविचारस्तु—पञ्चरात्रं किं साङ्ख्यादिवत्क्वचित्प्रमाणमुत कार्त्स्न्येन प्रमाणमिति । किमस्य क्वचित श्रुतिविरोधोऽस्ति, उत क्वचिदपि नास्तीति । किमत्र जीवोत्पत्त्यादिकं विवक्षितमुत नेति । सङ्कर्षणादिशब्दाः किं जीवादिशब्दविशेषणतया निर्दिष्टा उत जीवादिशब्दाः सङ्कर्षणादिशब्दविशेषणतया निर्दिष्टा इति । तत्र श्रीपञ्चरात्रप्रामाण्यस्थापने साध्यतया स्वीक्रियमाणे पादार्थानुवर्तनं न सिध्येत् । प्रतिमतदमनं हि पादार्थः । तेन श्रीपञ्चरात्रस्याप्यस्मिन्नधिकरणे दमनं वर्णनीयमिति पूर्वपक्षोत्थानम् । तदिदमनुवदति—प्रामाण्यमित्यादिना । अयमर्थः—वेदप्रामाण्याद्वेदोपबृंहणभूतश्रीपञ्चरात्रप्रामाण्यमपि पूर्वकाण्डस्मृत्यधिकरण एव सिद्धम् । तेन तदत्र न वर्णनीयम् । अस्यच श्रीपञ्चरात्रप्रामाण्यसाधनस्य प्रतिमतदमनरूपेऽस्मिंस्तर्कपादे सङ्गतिरपि नास्ति, अर्थान्तरत्वादिति । इमामाशङ्कां निराकरोति -नेति । प्रतिमतदमनरूपस्यास्य पादस्यार्थैक्यं प्रकारान्तरेणोपपादयति—प्रत्यर्थित्वमिति । अयमर्थः—श्रीपञ्चरात्रस्य वेदप्रत्यर्थित्वमत्र निवार्यते । पूर्वत्रापि साङ्ख्याधिकरणादौ तेषां तन्त्राणां वेदप्रत्यर्थित्वमेव निवार्यते । श्रीपञ्चरात्रस्य वेदानुकूलत्वात् वेदप्रत्यर्थित्वं नास्ति, साङ्ख्यादीनां कुत्सितयुक्तिमूलत्वेन दुर्बलत्वाद्वेदप्रत्यर्थित्वं नास्ति, तथाचोभयत्रापि तन्त्राणां वेदप्रत्यर्थित्वनिराकरणस्याविशिष्टत्वादुभयत्राप्यर्थानुवृत्तिरिति न कश्चिद्दोषः । अयमत्र शब्दान्वयः—पञ्चरात्रस्य वेदविरोधभ्रममपनयता सूत्रकारेण वेदप्रत्यर्थित्वं निवार्यमेतस्मिन्नधिकरणे । पूर्वेष्वधिकरणेषु साङ्ख्यादीनां दुस्तर्काद्युत्थितोक्त्या दुर्बलत्वेन वेदप्रत्यर्थित्वं निवार्यमिति सप्तस्वधिकरणेषु तर्कपादे वेदप्रत्यर्थित्वनिराकरणरूपानुस्यूतार्थसिद्धिरिति समञ्जसमेतत् । अयमत्र विशेषः—पूर्वत्र साङ्ख्यादिरूप-

वेदप्रत्यर्थितन्त्रवादी निरस्तः, अत्रपुनः श्रीपञ्चरात्रस्य वेदप्रत्यर्थित्वमस्तीतिवदन् दुर्वादी निरस्यत इति ॥ २१० ॥

पद०—प्रामाण्यमित्यादि । कर्मकाण्डे—कर्मप्रतिपादकपूर्वमीमांसायाम् । स्मृतिनयवशतः—विध्यर्थवादस्मृत्याचारप्रामाण्यप्रतिपादकप्रथमाध्यायस्मृत्यधिकरण एव । सात्वतस्यापि—वेदोपबृंहणभूतस्य पञ्चरात्रस्यापि। प्रामाण्यं सिद्धम्—निश्चितमेव । अतः पञ्चरात्रस्य प्रामाण्यसमर्थनार्थमिदमधिकरणमिति न वाच्यमिति भावः । अमुष्य—श्रीपञ्चरात्रस्य । प्रतिमतदमने—प्रतिमतानि निरीश्वरसाङ्ख्यादिशैवमतान्तानि वेदविरुद्धमतानि दम्यन्ते निरस्यन्तेऽस्मिन्निति प्रतिमतदमने वेदविरोधिमतनिरसनपरे। अस्मिन् पादे । सङ्गतिश्च नास्ति—अनुस्यूतिश्च नास्ति । इति चेन्न । पञ्चरात्रस्य विरोधभ्रमम्—वेदविरोध्यर्थप्रतिपादनभ्रान्तिम् । अपनयता—निराकुर्वता व्यासेन । प्रत्यर्थित्वम्—पञ्चरात्रस्य वेदप्रतिभटत्वम् । वार्यम्—निवारणीयम् । तदितरसमयेषु—साङ्ख्यादिशैवपर्यन्तेष्वितरमतेषु तु । दुस्तर्कोद्युत्थितोक्त्या—कुत्सितयुक्तिमूलत्वप्रतिपादनेन । प्रत्यर्थित्वम्—वेदप्रतिभटत्वमेव निवारणीयम् । इति—एवं विधया । अनुस्यूतिसिद्धिः—उभयत्राप्यर्थानुवृत्तिसिद्धिः । अयमर्थः—पञ्चरात्रस्य वेदप्रत्यर्थित्वमत्र वार्यते पूर्वत्रापि साङ्ख्याधिकरणादौ तेषां तन्त्राणां वेदप्रत्यर्थित्वमेव निवार्यते पञ्चरात्रस्य वेदानुकूलत्वात् वेदप्रत्यर्थित्वं नास्ति साङ्ख्यादीनांतु कुत्सितयुक्तिमूलत्वेन दुर्बलत्वात् वेदप्रत्यर्थित्वं नास्ति तथाचोभयत्रापि तन्त्राणां वेदप्रत्यर्थित्वनिराकरणस्याविशिष्टत्वात् उभयत्राप्यर्थानुवृत्तिरिति न कश्चिद्दोष इति । अयमत्र विशेषः—पूर्वत्र साङ्ख्यादिरूपवेदप्रत्यर्थितन्त्रवादी निरस्तः, अत्रपुनः श्रीपञ्चरात्रस्य वेदप्रत्यर्थित्वमस्तीति वदन् दुर्वादी निरस्यत इति ॥ २१० ॥

दृष्टास्मिन् वेदनिन्देत्यनभिमतमृषेस्सात्वते वैदिकत्वं
मैवं वैशद्यमूलस्तुतिपरवचने वेदवैरस्यहानेः ।
संगृह्याम्नायसारं प्रणयति भगवांस्तद्धि भक्तानुकम्पी
श्रौतस्मार्तादिवच्च व्यभजदिह विभुर्वैदिकं तान्त्रिकञ्च ॥ २११ ॥

चिन्ता०—अस्मिन्श्रीपञ्चरात्राधिकरणे वेदविरोधः पञ्चरात्रे नास्तीति प्रतिपाद्यत इत्युक्तं भवता तन्नोपपद्यते वेदविरोधस्य प्रत्यक्षदृष्टत्वात् अतो महर्षेर्व्यासस्य पञ्चरात्रस्य वैदिकत्वमनभिमतमित्याशङ्कते—दृष्टेति । दूषयति—मैवमिति । तदेव विवृणोति—वैशद्येति । अयमर्थः—वेदवाक्यं प्रकृति-

प्रत्ययादिव्यत्यासबाहुल्यादविशदार्थमेव पञ्चरात्रंतु पुराणादिन्यायेन तादृशव्यत्यासाभावाद्विशदार्थम्। तेन साङ्गेषु वेदेषु निष्ठामलभमानश्शाण्डिल्यः पञ्चरात्रशास्त्रमधीतवानित्युच्यते। नैतावता वेदनिन्दाप्रसङ्गः। पदार्थस्तु-पञ्चरात्रेषु वैशद्यहेतुकप्रशंसावचने वेदवैरस्यप्रसङ्गाभावादिति। तदेव पुनः प्रकटयति—संगृह्येति। तस्मात् तस्मिन्नेव हि पञ्चरात्रतन्त्रे वेदसारं सङ्गृह्य भक्तानुकम्पी भगवान् विशदमेव प्रकाशयतीति तत्रतत्र श्रूयते, अतो न विरोधप्रसङ्ग इति। तत्—पञ्चरात्रतन्त्रमित्यर्थः। तर्हि पञ्चरात्रस्य वैदिकत्वे सिद्धे वैदिकं तान्त्रिकमिति वैदिकतान्त्रिकयोर्विभागकथनं कथं युज्यत इत्याशङ्क्य प्रतिबन्द्या परिहरति—श्रौतेति। यथा स्मार्तस्य श्रौतत्वे सत्यपि श्रौतस्मार्तविभागो लोके परिपठ्यते, एवं तान्त्रिकस्यापि वैदिकत्वे सत्यपि वैदिकतान्त्रिकव्यवहारो युज्यत इत्यर्थः। कथं तर्हि विभागः?—इत्थम्। प्रत्यक्षश्रुतिमूलत्वे श्रौतत्वमनुमितश्रुतिमूलत्वे स्मार्तत्वमिति यथा विभागः, तथा प्रत्यक्षवेदमूलत्वे वैदिकत्वं पञ्चरात्रानुमितश्रुतिमूलत्वे तान्त्रिकत्वमिति न कोऽपि विरोधः। उक्तं च श्रीविष्णुचित्तार्यैः—

'वैदिकं तान्त्रिकं चेति विभागोऽयमुदीर्यते।
वैदिकत्वे समानेऽपि श्रौतस्मार्तविभागवत्॥' इति॥ २११॥

पद०—दृष्ट्वेत्यादि। अस्मिन्—पञ्चरात्रे। वेदनिन्दा—साङ्गेषु वेदेषु निष्ठामलभमानश्शाण्डिल्यः पञ्चरात्रशास्त्रमधीतवानित्यादौ वेदनिन्दा। दृष्टा, इति—हेतोः। सात्वते—पञ्चरात्रे। वैदिकत्वम्—वेदानुकूलत्वम्। ऋषेः—व्यासस्य। अनभिमतम्। मैवम्—एवं मा शङ्कनीयम्। वैशद्यमूलस्तुतिपरवचने—वेदवत् प्रकृतिप्रत्ययव्यत्यासाद्यभावेन पञ्चरात्रे यद्वैशद्यं प्रतिपत्तृसौकर्यं तन्मूला या स्तुतिस्तत्परे पूर्वोक्तवचने। पूर्वोक्तवचनस्य वैशद्यमूलस्तुतिपरत्वादित्यर्थः। वेदवैरस्य हानेः—वेदनिन्दाप्रसक्त्यभावात्। भक्तानुकम्पी भगवान्। आम्नायसारम्—वेदार्थसारांशम्। सङ्गृह्य—विशदतया प्रतिपाद्यमिति स्वीकृत्य। तत्—पञ्चरात्रम्। प्रणयति—विरचयति। इति पञ्चरात्रएव श्रूयते। हि हेतौ। अतो वेदसारार्थसङ्ग्रहरूपस्य वेदनिन्दापरत्वकल्पनं जाड्यकृतमेवेत्यर्थः। विभुः—भगवान्। इह—पञ्चरात्रे। श्रौतस्मार्तादिवच—स्मार्तस्यापि कर्मणश्श्रौतत्वेऽपि श्रौतस्मार्तविभागो यथा दृश्यते तथेत्यर्थः। वैदिकं तान्त्रिकञ्च व्यभजन्—'वैदिकं तान्त्रिकञ्चैव' इत्यादौ वैदिकतान्त्रिकतया विभागमकृत। द्वयोरपि वैदिकत्वे कथं विभाग इति चेत् द्वयोरपि श्रौतत्वे कथं श्रौतस्मार्तविभागः। प्रत्यक्षश्रुतिमूलत्वानुमेयश्रुतिमूलत्वाभ्यामितिचेत् अत्रापि तथैव। यथाहुश्श्रीविष्णुचित्तार्याः—

'वैदिकं तान्त्रिकञ्चेति विभागोऽयमुदीर्यते।
वैदिकत्वे समानेऽपि श्रौतस्मार्तविभागवत्॥' इति॥ २११॥

वेदानां मानतोक्तेस्तदनुसरणतस्स्वस्य तन्मूलतोक्त्या
व्यावृत्तिर्भाति बाह्यागमत इति न तत्तुल्यभावोक्तिरार्षी ।
का हानिः क्षुद्रविद्याशवलमिति यथा तादृशे वेदभागे
मोक्षस्य प्रत्ययार्थं त्वगणिपत परं सात्वते सिद्धिभेदाः ॥ २१२ ॥

चिन्ता०—ननु 'पञ्चरात्रं पाशुपतम्' इति सहपाठो दृश्यते तत्कथं पञ्चरात्रस्य वैषम्यमुच्यत-इत्याशङ्क्याह—वेदानामिति । अयमर्थः—स्फुटदृष्टस्य वैषम्यस्यापलपितुमशक्यत्वादिति । वैषम्यमेव विभज्य दर्शयति— **वेदानां मानतोक्तेः** तस्मिन्नेव पञ्चरात्रे वेदप्रामाण्यप्रतिपादनात् । **तदनुसरणतः**—वेदानुसारात् । **स्वस्य तन्मूलतोक्त्या**—पञ्चरात्रस्य वेदा एव मूलमिति पञ्चरात्र एव कथनात् । **बाह्यागमतः** पाशुपतादेः पञ्चरात्रस्य व्यावृत्तिर्विशेषो भातीति तत्तुल्यत्वकथनं बाह्यागमतुल्यत्वकथनमार्षमेव न भवति महर्षेर्व्यासस्याभिमतमेव न भवतीत्यर्थः । तेन पञ्चेतराणि शास्त्राणि रात्रीयन्त इति पञ्चरात्र-शब्दनिर्वचनं योयुज्यत इत्युक्तं भवति । तर्हि वश्याकर्षणस्तम्भनमोहनादिक्षुद्रविद्याशवलत्वात् पञ्चरात्रं परित्याज्यमितिचेत् तत्र वेदप्रतिबन्दीं वदिष्यन्नाह—**का हानिरिति** । क्षुद्रविद्याशवलमिति का हानि-रित्यन्वयः । प्रतिबन्दीमेव दर्शयति—**यथेति** । अभिचारादिकर्मप्रतिपादकवेदभागे यथाऽधिकारं यथा परिग्रहस्तद्वदत्रापीत्यर्थः । तर्हि मोक्षविरोधात्सिद्धिभेदाः किमर्थं सात्वते कथ्यन्त इत्याशङ्क्य परिहरति—**मोक्षस्येति** । वेदेषु दृष्टफलेषु कारीर्यादिषु विश्वासादेव ह्यदृष्टफलेषु ज्योतिष्टोमादिषु विश्वासो जायते । एवमत्रापि मोक्षशास्त्रे फलसिद्धिविश्वासार्थं दृष्टफलक्षुद्रविद्योपदेश इति न कोऽपि विरोध इति । **सिद्धिभेदा अगणिपतेति** कर्मणि लुङ्प्रयोगः । सत् सत्त्वं गुणप्रधानत्वात् तद्वान् परमपुरुषस्सत्वान् तेन प्रोक्तं शास्त्रं सात्वतमिति ॥ २१२ ॥

पद०—वेदानामित्यादि । **वेदानां मानतोक्तेः**—पञ्चरात्रशास्त्रएव वेदानां प्रमाणत्वेनोपन्यासात् । **तदनुसरणतः**—वेदानुसरणात् । वेदोक्तार्थानां प्रतिपादनादिति यावत् । अनुसरणशब्दस्वारस्येन वेदो-क्तानां तत्त्वानां तदुक्तक्रमेणैव कथनं गम्यते । **स्वस्य**—पञ्चरात्रस्य । **तन्मूलतोक्त्या**—वेदाएव मूलमिति पञ्चरात्रएव दर्शनात् । **बाह्यागमतः**—पाशुपतादितन्त्रात् । **व्यावृत्तिः**—पञ्चरात्रस्य विशेषो भाति । इति—हेतोः । **तत्तुल्यभावोक्तिः**—बाह्यागमतुल्यत्वेन कथनम् । **आर्षी न**—ऋषेर्व्यासस्याभिमता न भवति । **क्षुद्रविद्याशवलमिति**—पञ्चरात्रं वश्याकर्षणमोहनस्तम्भनादिक्षुद्रविद्याभिर्मिश्रमिति हेतोः । **का हानिः**—का त्यागकथा । **तादृशे वेदभागे**—अभिचारादिकर्मप्रतिपादके वेदभागे । **यथा**—यथाधिकारं

यथा परिग्रहः, तथात्रापीति शेषः । परम्—अत्यन्तम् । मोक्षस्य प्रत्ययार्थन्तु—मोक्षशास्त्रे फलसिद्धिविश्वासजननार्थमेव । यद्वा मोक्षप्रतिकोटिक्षुद्रफलप्रदर्शनादल्पास्थिरत्वादितदीयदोषदर्शनेन तेष्वरुचिवर्धनार्थं तद्विलक्षणे मोक्षे रुचिवर्धनार्थम् । सिद्धिभेदाः—ऐहिकफलसिद्धिप्रकाराः । सात्वते—सत् सत्त्वं गुणप्रधानत्वात् तद्वान् परमपुरुषस्सत्वान् तेन प्रोक्तं शास्त्रं सात्वतं तस्मिन्पञ्चरात्र इत्यर्थः । अगणिषत—प्रत्यपाद्यन्त । गणयतेः कर्मणि लुङि प्रयोगः । वेदेऽपि दृष्टफलेषु कारीर्यादिषु विश्वासादेव ह्यदृष्टफलेषु ज्योतिष्टोमादिषु विश्वासो जायते एवमत्रापि मोक्षशास्त्रेऽपि फलसिद्धिविश्वासार्थं दृष्टफलक्षुद्रविद्योपदेश-इति भावः ॥ २१२ ॥

जीवस्योत्पत्तिमाह प्रथयति च मनो जीवतत्त्वप्रसूतं
तच्चाहङ्कारहेतुं व्यपदिशति ततः पञ्चरात्रं न मानम् ।
मैवं जीवादिवाचो ह्यभिदधति विभोर्व्यूहभेदानिह त्रीन्
तत्तत्त्वाभिमानान्नियतिमधिगता तेषु तत्तत्समाख्या ॥ २१३ ॥

चिन्ता०—अस्मिन्नधिकरणे चत्वारि सूत्राणि, तत्र द्वयं पूर्वपक्षप्रतिपादकमितरद्द्वयं सिद्धान्तप्रतिपादकमिति विभागः । तत्सूत्रानुरोधेन पूर्वपक्षमाह—जीवस्येति । 'वासुदेवात्सङ्कर्षणो नाम जीवो जायते' इति पञ्चरात्रतन्त्रं जीवस्योत्पत्तिमाह । तद्वेदविरुद्धं जीवनित्यत्वस्यैव 'नित्यो नित्यानाम्' इतिवेदप्रतिपाद्यत्वात् । 'सङ्कर्षणात्प्रद्युम्नसंज्ञं मनो जायते' इति तदेव पञ्चरात्रं मनसस्सङ्कर्षणादुत्पत्तिमाह । तच्च वेदविरुद्धमिन्द्रियाणामाहङ्कारिकत्वात् । तच्चाहङ्कारहेतुं व्यपदिशति—तच्च मनः 'तस्मादनिरुद्धाख्योऽहङ्कारो जायते' इत्यहङ्कारहेतुं व्यपदिशति पञ्चरात्रम् । तदपि वेदविरुद्धमहङ्कारस्य महत्त्वकार्यत्वात् । ततः पञ्चरात्रं न मानमिति पूर्वः पक्षः । तमिमं निराकरोति—मैवमिति । तत्प्रकारं विशदयति-जीवादीति । अत्रहि जीवमनोऽहङ्कारशब्दा जीवमनोऽहङ्काराभिमानिरूपान् संकर्षणप्रद्युम्नानिरुद्धनामकांस्त्रीन् भगवद्व्यूहभेदानेव कथयन्ति तेषांतु जननं प्रादुर्भावएवेति न क्वचिद्विरोधः । तर्हि जीवादिशब्दैस्संकर्षणादीनामपि व्यत्ययेनाभिधानमपि किं न स्यादित्याशङ्क्य परिहरति—तत्तदिति । अयमर्थः—संकर्षणो जीवमेवाभिमनुते प्रद्युम्नो मनस्तत्त्वमनिरुद्धोऽहङ्कारमेव तेनाभिमाननियमाज्जीवादिव्यवहारनियम इति सुसङ्गतमेतत् । नियतिमिति—संकर्षणएव जीवशब्दस्य नियतिः प्रद्युम्नएव मनश्शब्दस्य, अनिरुद्धएवाहङ्कारशब्दस्येति प्रतिनियम इति ॥ २१३ ॥

पद०—जीवस्येत्यादि । जीवस्योत्पत्तिमाह—वासुदेवात् सङ्कर्षणो नाम जीवो जायत इति पञ्चरात्रतन्त्रं जीवस्योत्पत्तिमाह। मनो जीवतत्त्वप्रसूतञ्च प्रथयति—संकर्षणात् प्रद्युम्नसंज्ञं मनो जायत-इति तदेव पञ्चरात्रं मनस्सङ्कर्षणसंज्ञकजीवतत्त्वादुत्पन्नं प्रतिपादयति । तच्च—मनश्च । अहङ्कारहेतुं व्यपदिशति—तस्मादनिरुद्धाख्योऽहङ्कारो जायत इति तदेव पञ्चरात्रं मनः अनिरुद्धाख्याहङ्कारकारणत्वेन व्यपदिशति । इदं त्रयमपि वेदविरुद्धम्—जीवस्य 'नित्यो नित्यानाम्' इति वेदे नित्यत्वप्रतिपादनात् मनस आहङ्कारिकत्वेन अहङ्कारस्य महत्तत्त्वकार्यत्वेन च प्रतिपादनाच्च । ततः—वेदविरुद्धार्थप्रतिपाद-नात् । पञ्चरात्रं न मानम्—न प्रमाणमिति । मैवम् । हि—यस्मात् कारणात् । इह-पञ्चरात्रे । जीवादिवाचः—जीवमनोऽहङ्कारशब्दाः । विभोः—भगवतः । त्रीन् व्यूहभेदानभिदधति—सङ्कर्ष-णप्रद्युम्नानिरुद्धनामकान् त्रीन् भगवद्व्यूहानेव कथयन्ति। तेषाञ्च जननं प्रादुर्भाव एवेति न कश्चिद्विरोधः। कथमन्यत्र प्रसिद्धानां जीवादिशब्दानां सङ्कर्षणादिवाचकत्वमित्यत्राह-तत्तदिति । तत्तत्तत्त्वाभिमानात्-सङ्कर्षणप्रद्युम्नानिरुद्धानां जीवमनोहङ्कारतत्त्वाभिमाननियमात्। तेषु—सङ्कर्षणप्रद्युम्नानिरुद्धेषु । तत्तत्स-माख्या—जीवमनोऽहङ्कारसंज्ञा । नियतिम्—तेष्वेव प्रयोगनैयत्यम् । अधिगता—लब्धवती। अभिमेयवाचकानामभिमानिवाचकत्वं नियतमन्यत्र प्रसिद्धं हीति भावः ॥ २१३ ॥

जीवोऽत्रानाद्यनन्तः कथित इति तदुत्पत्तिपक्षो नहीष्टः
शब्दस्सङ्कर्षणादिर्न कथमपि समन्वेति जीवादिमात्रे ।
श्रौतस्सृष्टिक्रमश्च स्वयमनुपठितस्तद्विरुद्धं न कल्प्यं
तस्माच्छ्रुत्या मिथो वा न विहतिरिह तत्तन्त्रतात्पर्यदृष्टेः ॥ २१४ ॥

चिन्ता०—पूर्वत्र जीवोत्पत्तिवादमवष्टभ्य पूर्वपक्षिणा वेदविरोध उक्तः, तन्नोपपद्यते जीवनित्य-त्वस्य पञ्चरात्रे प्रतिपादितत्वादित्याह—जीव इति । अयमर्थः—'अचेतना परार्थाच' इत्यारभ्य श्रीपञ्च-रात्रतन्त्रएव 'व्याप्तिरूपेण सम्बन्धस्तस्याश्च पुरुषस्यच' इति सर्वतः प्रकृतिपुरुषयोस्सम्बन्धमुक्त्वा 'स ह्यनादिरनन्तश्च' इति जीवस्यानादित्वमनन्तत्वञ्च साक्षादेव कथितम् । तेन तदुत्पत्तिपक्षो नहीष्टः जीवोत्पत्तिपक्षः पञ्चरात्रे नैवेष्टः । यदि जीवोत्पत्तिरुच्यते तदा सङ्कर्षणो नाम जीवो जायत इत्यन्वयो वक्तव्यः, सच नोपपद्यते जीवस्य सङ्कर्षणत्वाभावात् । एवं मनःप्रभृतिशब्दान्वयोऽपि न घटत इति वक्तुम-त्रादिशब्दः प्रयुज्यते । अस्मत्पक्षे जीवादिशब्दस्सङ्कर्षणादीनां जीवाद्यभिमानित्वाद्वक्तुं शक्यते । तथाऽपि

युष्मत्पक्षएव स्वीकार्य इत्यस्मिन्नर्थे किं नियामकमित्यत्राह—श्रौत इति । श्रुतिसिद्धः प्रकृतिमहदहङ्कारादितत्त्वक्रमएव सर्वत्र पञ्चरात्रतन्त्रेऽप्यनुवर्तते तेन श्रुतिसिद्धस्य पञ्चरात्रतन्त्रानुपठितस्य तत्त्वक्रमस्य विरुद्धमर्थतत्त्वमत्र वाक्ये 'वासुदेवात्सङ्कर्षणो नाम जीवो जायते' इत्यादौ नैव कल्प्यमित्यर्थः । एवं श्रुतिविरोधाभावमुपपादितं निगमयति—तस्मादिति । यत्र क्वापि तन्त्रे जीवोत्पत्त्यादिप्रसङ्गो नास्ति । तस्मात्पञ्चरात्रतन्त्रे श्रुतिविरोधस्समानजातीयतन्त्रान्तरविरोधोऽपीह क्वापि नास्तीति सार्वत्रिकमेव प्रामाण्यमिति निगमनाभिप्रायः । तत्र हेतुमाह—तत्तन्त्रेति । उपक्रमोपसंहारादिषड्विधतात्पर्यलिङ्गनिरूपणेन तत्तन्त्रेषु श्रीपञ्चरात्रतन्त्रेषु तात्पर्यस्य सम्यग्दर्शनादित्यर्थः ॥ २१४ ॥

पद०—जीवोऽत्रेत्यादि । अत्र—पञ्चरात्रे । जीवः, अनाद्यनन्तः—न विद्यते आदिर्यस्येत्यनादिः उत्पत्तिशून्यः, न विद्यतेऽन्तो यस्येत्यनन्तो नाशशून्यः, अनादिश्चासावनन्तश्चानाद्यनन्तः । कथितः—प्रतिपादितः । इति—हेतोः । तदुत्पत्तिपक्षः—जीवोत्पत्तिपक्षः । नेष्टो हि—नाभिमत इति स्फुटमेव हि । जीवादिशब्दानां जीवाद्यभिमानिपरत्वमनाश्रित्य जीवपरत्वकल्पनपक्षे, सङ्कर्षणादिशब्दः—सङ्कर्षणप्रद्युम्नानिरुद्धशब्दा इत्यर्थः । कथमपि—केनचित्प्रकारेणापि । जीवादिमात्रे—केवलजीवमनोऽहङ्कारेषु । न समन्वेति—नान्वेतुमर्हति । सङ्कर्षणादिशब्दानां जीवमनोऽहङ्कारेषु कथञ्चिदपि समन्वयानर्हत्वात् तथाविशेषणे प्रयोजनाभावात्, अभिमानादिगत्यन्तरकल्पनासम्भवात् जीवानादित्ववादेन प्राकरणिकेन विरोधाच्चेति भावः । श्रौतः—श्रुतिप्रसिद्धः । सृष्टिक्रमश्च—प्रकृतिमहदहङ्कारादिसृष्टिक्रमश्च । स्वयमनुपठितः—पञ्चरात्रानुपठितः । तद्विरुद्धम्—तस्य तत्त्वक्रमस्य विरुद्धमर्थतत्त्वम् । न कल्प्यम्—वासुदेवात्सङ्कर्षणो नाम जीवो जायत इत्यस्मिन्वाक्ये न कल्प्यमित्यर्थः । तस्मात्—उक्तक्रमेणाविरुद्धार्थपरत्वस्थापनात् । इह—पञ्चरात्रे । श्रुत्या, मिथो वा—समानजातीयतन्त्रान्तरैर्वा । न विहतिः—न विरोधः । तत्र हेतुमाह—तत्तन्त्रतात्पर्यदृष्टेरिति । उपक्रमोपसंहारादिषड्विधतात्पर्यलिङ्गनिरूपणेन तत्तन्त्रेषु पञ्चरात्रतन्त्रेषु तात्पर्यस्य सम्यग्दर्शनादित्यर्थः ॥ २१४ ॥

साङ्ख्या वैशेषिकाश्च श्रुतिपरिपठितं धर्ममैच्छन्न तत्त्वं
तत्त्वाचारौ तु बुद्धक्षपणकपशुपत्युक्तिषु श्रुत्यपेतौ ।
वेदोपस्कारिविष्णुस्मृतिवदवितथं पञ्चरात्राख्यतन्त्रे
तत्त्वं त्र्यन्तसिद्धं चरणमपि समं गृह्यभेदादिनीत्या ॥ २१५ ॥

चिन्ता०—उक्तेष्वष्टस्वधिकरणेषु परस्परवैषम्यमाह—साङ्ख्या इत्यादिना। साङ्ख्या वैशेषिकाश्च श्रुतिपरिपठितं धर्ममङ्गीचक्रु र्न पुनश्श्रुतिपरिपठितं तत्त्वमित्येकः प्रकारः। प्रकारान्तरमप्युच्यते—तत्त्वाचाराविति। बौद्धाः क्षपणकाः पाशुपताश्च श्रुतिपरिपठितं तत्त्वाचारञ्चान्यथाचक्रुः। अतस्तत्पक्षेषु तत्त्वाचारावुभावपि श्रुतिविरुद्धौ। श्रीमत्पञ्चरात्रतन्त्रे वेदोपस्कारके तदुभयमपि नास्तीत्याह—वेदोपस्कारीति। यथा वेदोपस्कारिरूपे श्रीविष्णुस्मृतौ तद्वद्वेदोपस्कारके श्रीपञ्चरात्रतन्त्रेऽप्यवितथं तावत् त्रय्यन्तसिद्धं तत्त्वमेवेति सर्वसम्मतम्। आचारोऽपि तथैव त्रय्यन्तसिद्ध एव। तदिदमाह—चरणमपि सममिति। ननु पञ्चरात्रतन्त्रे क्वचिच्चरणभेदो दृश्यते तत् कथमित्याशङ्क्य परिहरति—गृह्यभेदादिनीत्येति। यथाश्वलायनापस्तम्बादिगृह्यभेदात् श्रुतिमूलत्वे समानेऽपि क्वचिदाचारभेदः परिगृह्यते, एवमेकायनश्रुतिमूलपञ्चरात्रतन्त्रनिष्ठानुष्ठानभेदोऽपि श्रुतिमूलत्वादेव प्रामाणिकत्वेन स्वीकार्यइति न यथापि पञ्चरात्रतन्त्रे श्रुतिविरोधो वा श्रुतिमूलत्वाभावो वेति पञ्चरात्रश्रुत्योरैकरस्यमेवेत्यर्थः ॥ २१५ ॥

पद०—सांख्या इत्यादि। सांख्याः—कापिलतन्त्रनिष्ठाः। वैशेषिकाश्च—विशेषाख्यातिरिक्तपदार्थवादिनो नैयायिकाश्च। श्रुतिपरिपठितं धर्ममैच्छन्—श्रुत्युक्तमाचारमङ्गीचक्रुः। श्रुतिपरिपठितं तत्त्वं तु नैच्छन्—नाङ्गीचक्रुः। बुद्धक्षपणकपशुपत्युक्तिषु तु—बुद्धजिनपशुपतितन्त्रेषु तु। तत्त्वाचारौ—तत्त्वाचारौ द्वावपि। श्रुत्यपेतौ—श्रुत्युक्तौ न। श्रुतिविरुद्धावित्यर्थः। वेदोपस्कारिविष्णुस्मृतिवत्—वेदोपस्कारिविष्णुस्मृतितुल्यतया वेदोपस्कारिणि। पञ्चरात्राख्यतन्त्रे—पञ्चरात्रतन्त्रे प्रतिपन्नम्। अवितथम्—परमार्थभूतम्। तत्त्वम्—चिदचिदीश्वररूपतत्त्वत्रयम्। चरणमपि—धर्माचरणमपि। गृह्यभेदादिनीत्या—श्रुतिमूलत्वे समानेऽपि बोधायनापस्तम्बादिगृह्यभेदोक्तकिञ्चित्परस्पराधिकन्यूनभावभिन्नगर्भाधानादिकर्मपरिग्रहन्यायेन, एकायनश्रुतिमूलपञ्चरात्रसिद्धत्वेनाचारभेदोऽपि स्वीकार्य इति हेतोः। समम्—तत्त्वमाचरणं द्वयमपि तुल्यतया। त्रय्यन्तसिद्धम्—वेदवेदान्तसम्मतमेवेत्यर्थः ॥ २१५ ॥

स्मर्यन्ते पञ्चयज्ञा मुनिभिरपि नमस्कारमन्त्रेण शूद्रे
तत्राधीतं हविष्कृत्प्रभृतिपदमिहाप्यंशतोऽस्याधिकारः।
योज्या दक्षोक्तकालक्रमगतिरभिगत्यादिभेदे तदुक्ते
ग्राह्यं पश्विष्टिसोमप्रभृतिवदखिलं युक्तितस्संकलय्य ॥ २१६ ॥

चिन्ता०— ननु 'ब्राह्मणैः क्षत्रियैर्वैश्यैश्शूद्रैश्च कृतलक्षणैः ।
अर्चनीयश्च सेव्यश्च नित्ययुक्तैस्स्वकर्मसु ॥
सात्वतं विधिमास्थाय गीतस्सङ्कर्षणेन यः ॥'

इति महाभारते पाञ्चरात्रिकधर्मानुष्ठाने शूद्राधिकार उच्यते, अपशूद्राधिकरणेतु वैदिकधर्मे शूद्रस्यानधिकार उक्तः, तत्कथं पञ्चरात्रस्य वेदविरोधाभाव इत्याशङ्क्य प्रतिबन्द्या परिहरति—स्मर्यन्त इति । 'नमस्कारेण मन्त्रेण पञ्चयज्ञान्समापयेत् ।' इति स्मृतावपि शूद्रस्य पञ्चमहायज्ञाधिकार उक्तः । तथा 'हविष्कृदाधावेति शूद्रस्य' इति शूद्रस्यापि श्रुतिसिद्धधर्मानुष्ठानप्रकारः प्रख्याप्यते । तदिदमाह—तत्राधीतं हविष्कृत्प्रभृतिपदमिति । तत्कथं भवानङ्गीकुरुत इति प्रतिबन्दी । तत्र परिहारमाशङ्क्य तुल्यमित्याह—इहापीति । अयमर्थः—शूद्रस्याग्निविद्यासापेक्षेष्वेव कर्मसु नाधिकारः, वैदिकेष्वपि सत्यवचनादिवत् स्वजात्यनुरूपेषु कर्मस्वधिकारोऽस्तीति यदि वदसि तर्हि श्रुतिमूलेषु पञ्चरात्रतन्त्रोक्तेषु धर्मेषु स्वाधिकारानुरूपेषु शूद्रस्याप्यधिकारोऽस्ति न सर्वत्राधिकारोऽस्माभिरुच्यत इति न क्वापि विरोधः । अंशत इति–स्वाधिकारानुरूपानुष्ठानस्थलनिर्देशः । ननु प्रातरारभ्याहोरात्रमपि वैदिककर्मानुष्ठानं कर्तव्यमिति धर्मशास्त्रेष्वभिधीयते तथाच सति पञ्चरात्रोक्तपञ्चकालकर्मानुष्ठानस्य कः काल इत्याशङ्क्य परिहरति—योज्येति । नहि सर्वोऽपि कालः स्मृतिभिर्नित्यनैमित्तिककर्मविधायिनीभिरुपरुध्यते । अपितु यावाननुष्ठानकालस्तावानेव परिगृह्यते । तथा चाभिगमनादीनामपि स्मृतिविहितधर्मानुष्ठानकालाविरोधेनानुष्ठानसम्भवादनुष्ठानं योयुज्यत एव । अयमत्र शब्दार्थः—दक्षादिभिः परमर्षिभिरुक्ता पञ्चकालक्रमगतिरपि नित्यानुष्ठानकालेन सह योज्या निपुणं निरूपयतामविरोधेन योजयितुं शक्यत इत्यर्थः । तदेतच्छ्रौतदृष्टान्तक्रमेण दर्शयति–ग्राह्यमिति । यथा श्रुतमेव पश्विष्टिसोमप्रभृतिकं धर्मजातं यथाकालमेकेनैवाधिकारिणानुष्ठीयते तद्वच्छ्रौतनित्यनैमित्तिकादिकं पञ्चरात्रतन्त्रप्रोक्तं पाञ्चकालिकमपि धर्मजातमखिलं योग्यप्रकारेण सङ्कलय्य सङ्ग्राह्यमित्यर्थः ॥ २१६ ॥

पद०—ननु 'शूद्रैश्च कृतलक्षणैः । अर्चनीयश्च' इति पाञ्चरात्रिककर्मानुष्ठाने शूद्रस्याधिकार उच्यते, वैदिकेतु न शूद्रस्याधिकारः, अतः कथं वेदाविरोधः पञ्चरात्रस्येत्यत्राह—स्मर्यन्तइत्यादि । मुनिभिरपि—याज्ञवल्क्यादिमहर्षिभिरपि । शूद्रे नमस्कारमन्त्रेण—देवेभ्यो नमः पितृभ्यो नम इत्यादिरीत्या नमोऽन्ततत्तन्मन्त्रेण । पञ्चयज्ञाः—महायज्ञाः । कार्या इति शेषः । स्मर्यन्ते—'नमस्कारेण मन्त्रेण पञ्चयज्ञान् समापयेत्' इति वचनेन प्रतिपाद्यन्ते । तत्र—शूद्रविषये । हविष्कृत्प्रभृतिपदम्—हविष्कृत्पदं बहुयाजिपदञ्चेत्यर्थः । अधीतम्—पठितम् । 'हविष्कृदाधावेति शूद्रस्य' इति हविष्कृत्मेषपरे श्रौतसूत्रे

शूद्रविषयं हविष्कृत्पदं प्रयुक्तम्। तथा सामगानां गृह्यसूत्रे श्रोत्रियागारादग्निग्रहणप्रकरणे 'बहुयाजिनोऽगाराच्छूद्रवर्जम्' इति सूत्रवाक्ये शूद्रस्य बहुयाजित्वाभावे शूद्रवर्जमित्यप्रसक्तप्रतिषेधापत्त्या शूद्रेऽपि बहुयाजित्वमकामेनापि स्वीकार्यमिति बहुयाजिपदं शूद्रविषयं पठितम्। केषुचित् वैदिकेषु कर्मसु शूद्रस्याधिकारोऽस्तीति स्वीक्रियत इति चेत् इहापि—पञ्चरात्रोक्तकर्मजातविषयेऽपि। अस्य—शूद्रस्य। अंशतः—स्ववर्णानुरूपकर्मानुष्ठानांश एव। अधिकारः—योग्यतास्ति। ननु ब्राह्मणादियोग्यकर्मस्वपि शूद्रस्याधिकारोऽस्तीत्युक्तवचनेनोच्यत इति भावः। दक्षोक्तकालक्रमगतिः–दक्षेण।

'दिवसस्याद्यभागेतु कृत्यं तस्योपदिश्यते।
द्वितीयेच तृतीयेच चतुर्थे पञ्चमे तथा॥
षष्ठेच सप्तमेचैवमष्टमेच पृथक्पृथक्।
भागेष्वेतेषु यत्कृत्यं तत्प्रवक्ष्याम्यशेषतः॥'

इत्यादिवचनेन उक्ता कालानामष्टधाविभक्तानामेकैकदिवसभागभूतानां कालावयवानां क्रमगतिः पूर्वकालिककर्मानुष्ठानानन्तरमुत्तरकालिककर्मानुष्ठानमित्येवंक्रमेणानुस्यूतिरपि। तदुक्ते—पञ्चरात्रोक्ते। अभिगत्यादिभेदे — अभिगमनोपादानेज्यास्वाध्याययोगाख्यप्रतिनियतकृत्यभेदयुक्तदिवसभागविशेषे। योज्या—दक्षोक्ताष्टविधकालकृत्यानामेव पञ्चकालकृत्यत्वात् कालविभागभेदमात्रस्याकिञ्चित्करत्वात् ऐकरस्येनैव योजनीया। पञ्चरात्रोक्तानां स्मृत्युक्तानाञ्च कर्मणां परस्परं भेदेतु द्विविधानामपि तुल्यप्रमाणकत्वेनानुष्ठेयत्वात्, अखिलम्—स्मृत्युक्तं पञ्चरात्रोक्तञ्चाखिलं कर्म। पश्विष्टिसोमप्रभृतिवत्—'अग्नीषोमीयं पशुमालभेत' 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' 'सोमेन यजेत' इत्यादिवचनविहितपशुद्रव्यकपुरोडाशद्रव्यकसोमरसद्रव्यकयागवत्। प्रभृतिशब्देन दर्वीहोम उच्यते। युक्तितः—युक्त्या, तत्तदुचितकालक्रमयोगादिचिन्तनेन। सङ्कलय्य—एकीकृत्य। ग्राह्यम्—कर्तव्यत्वेनाङ्गीकरणीयम्। नत्वन्यतरत् हेयमित्यर्थः। तथाच श्रीपाञ्चरात्ररक्षायां 'यत्त्वपरमुक्तं व्यासदक्षाद्युपदिष्टवर्त्मनापि स्ववर्णाश्रमोचितभगवदाज्ञानुपालनरूपदिनचर्यासिद्धिः, अतश्चोभयसम्भेदे कर्मणां परस्परोपरोधप्रसङ्गश्चेति। तत्र तावदविदितश्रौतस्मार्तवृत्तान्तानामयं परस्परोपरोधचोद्यावतारः, एवं ह्यत्र परिहृतं श्रीकृष्णमुनिभिः

'पश्विष्टिदर्विहोमानां ससोमानां समुच्चयः।
यथा बहूनामेकस्मिन् तथैवास्यापि कर्मणः॥'

इति' इत्याद्याचार्यश्रीसूक्तिः॥ २१६॥

जातावाचार्यशब्दः क्वचिदिति न तथाचार्यदेवो भवेत्या-
द्याम्नाते तत्प्रतीतिस्स्मृतिषु नियमिताल्लक्षणात् तत्प्रवृत्तेः ।
तद्वत्स्यात् सात्वतादावगतिकविषये रूढिभङ्गो नदोषो
विप्रादेरत्र शास्त्रे स्थितिरपि वहुधा भारतादौ प्रसिद्धा ॥ २१७ ॥

इति उत्पत्त्यसंभवाधिकरणम् ॥ ५२ ॥

चिन्ता०—अत्र कश्चिदाह–'पञ्चरात्रतन्त्रेष्वधिकारवचनं न जातितो विप्राणाम्, अपितु गुणविशेषादौपचारिकविप्राणां 'न शूद्रा भगवद्भक्ता विप्रा भागवतास्स्मृताः' इत्यौपचारिकनिर्देशस्तत्रतत्र दृश्यते' इति । एतदेव दृष्टान्तेन दर्शयति—जाताविति । लोके खलु शिल्पिष्वाचार्यशब्दो जातावेव प्रयुज्यते, अथापि '' आचार्यदेवो भव' इत्यादौ उपनीयाध्यापनादिरूपाचार्यलक्षणोपेतत्वादेव प्रयुज्यते । तत्प्रतीतिः—जातिप्रतीतिरित्यर्थः । तदिदमाह—स्मृतिष्विति । स्मर्यते हि 'उपनीयतु यश्शिष्यम्' इत्यादि । एवं दृष्टान्तमुक्त्वा तद्वत्सात्वतादौ कर्माधिकारिणां विप्रब्राह्मणादिशब्द औपचारिकस्स्यात् तथाच न पञ्चरात्रस्य विप्राधिकारोऽस्तीतीमामाशङ्कां परिहरति—अगतिकविषय इति । अयमत्र निर्णयः—यत्रखलु रूढिभङ्गमन्तरेण गतिर्नास्ति तत्र रूढिभङ्गो नदोषः । वयमप्यनुमन्यामहे । इह पुनः पञ्चरात्रे विप्राणामधिकारवचने रूढिभङ्गो न कार्यः । पञ्चरात्रे मुख्यविप्राणामेव बहुषु प्रदेशेष्वधिकारवचनादित्याह—विप्रादेरिति । उक्तं हि महाभारते—

'पञ्चरात्रविदो विप्रास्तस्य गेहे महात्मनः ।
प्रापणं भगवद्भुक्तं भुञ्जते चाग्रघभोजनम् ॥' इति ।

इदं मुख्यविप्रविषयम् । नहि मुख्ये सम्भवत्यमुख्यकल्पना न्याय्येति मुख्यानुसरणमेव युज्यते । यथा 'विप्राद् द्विषड्गुणयुतात्' 'विप्राणां ज्ञानतो ज्यैष्ठ्यम्' इत्यादिषु । आदिशब्दाद्गौतममन्वादिपुराणप्रसिद्धिरपि संगृह्यत इति ॥ २१७ ॥

इति उत्पत्त्यसंभवाधिकरणम् ॥ ५२ ॥

पद०—जातावित्यादि । उत्तरार्धे सात्वतादावित्यन्तं पूर्वपक्षोपन्यासः, तदुपरि अगतिकविषय इत्यादिसिद्धान्तग्रन्थः । आचार्यशब्दः । क्वचित् जातौ—शिल्पिरूपजातिविशेषविषये । प्रयुक्त इति शेषः । इति —हेतोः । आचार्यदेवो भवेत्याद्याम्नाते–आचार्यदेवो भव' इति वाक्याधीते आचार्य–

शब्दे । तथा--आचार्येण सद्म निर्मापयेत्' इत्यादाविव । तत्प्रतीतिः-शिल्पिजातिप्रतीतिः । न--न भवति हि । स्मृतिषु--

'उपनीय तु यश्शिष्यं वेदमध्यापयेद् द्विजः ।
सकल्पं सरहस्यञ्च तमाचार्यं प्रचक्षते ॥'

इत्यादिषु । नियमितात्--निबद्धात् । लक्षणात्--उपनीयाध्यापनादिरूपाचार्यलक्षणात् । तत्प्रवृत्तेः--तद्युक्ताचार्यविशेषबोधदर्शनादित्यर्थः । सात्वतादौ--पञ्चरात्रादितन्त्रेऽधिकारिप्रतिपादनप्रकरणे तदुक्तकर्माधिकारिविषयतया प्रयुक्तो ब्राह्मणादिशब्दः । तद्वत् स्यात्--औपचारिकस्स्यात् भग्नरूढिस्स्यात् । अत्रोत्तरम्--अगतिकविषय इत्यादि । अगतिकविषये-यत्र खलु रूढिभङ्गमन्तरेणान्या गतिर्नास्ति तद्विषये । रूढिभङ्गः-रूढिशक्तित्यागेन केवलयौगिकार्थस्वीकारः । न दोषः-नायुक्तः । अत्रतु पञ्चरात्रे विप्राणामधिकारवचने रूढिभङ्गो न कार्यः । अत्र शास्त्रे-पञ्चरात्रे । विप्रादेः--मुख्यब्राह्मणादेः । स्थितिरपि--तदुक्तकर्मानुष्ठातृतयावस्थानमपि । भारतादौ--

'पञ्चरात्रविदो विप्रास्तस्य गेहे महात्मनः ।
प्रापणं भगवद्भुक्तं भुञ्जते चाग्र्यभोजनम् ॥'

इत्यादौ महाभारते । बहुधा प्रसिद्धा ॥ २१७ ॥

इति उत्पत्त्यसंभवाधिकरणम् ॥ ५२ ॥

अत्र पादे योगादिनिरासप्रकारनिरूपणम् ।

**योगास्साङ्ख्यव्युदासात् कणचरदमनादक्षपादानुयाता-**
**बौद्धोन्माथेन लोकायतमुषितधियो जैनभङ्गात् तदुत्थाः ।**
**पत्युस्तन्त्रे पशूनां प्रकटितविहतौ तादृशापष्ठुनिष्ठाः**
**ध्वस्तास्तत्तुल्यतर्कागमशरणतया साकमस्मिन्कुदृग्भिः ॥ २१८ ॥**

चिन्ता--नन्वत्र साङ्ख्यादयो निरस्ता नपुनर्योगादयः, कथमस्य पादस्य कार्त्स्न्येन परपक्षप्रतिक्षेपरूपत्वमित्याशङ्क्य तत्तदेकैकवादिनिरसनात्सदृशानामन्येषामर्थान्निरासस्स्यादित्याह--योगा इति । साङ्ख्यव्युदासाद्योगा ध्वस्ता इत्यन्वयः । कणचरदमनादक्षपादानुयाताः । जैनभङ्गात्तदुत्थाः--भेदाभेदवादित्वसाम्येन तदुत्था जैनोत्था भाट्टाः । पशूनां पत्युस्तन्त्रे प्रकटितविहतौ सति तादृशापष्ठुनिष्ठास्सौगतादयो वादिनोऽस्मिन्पादे कुदृग्भिश्शङ्करभास्करयादवप्रकाशादितन्त्रनिष्ठैस्साकं ध्वस्ता इत्य-

न्वयः । एतेषां ध्वंसहेतुमाह—तत्तुल्येति । अत्र प्रतिक्षिप्तपक्षतुल्यतर्कागमशरणत्वात्स्वयमपि प्रतिक्षिप्ता इत्यर्थः ॥ २१८ ॥

पद०—नन्वत्र साङ्ख्यादयएव निरस्ताः, नपुनर्योगादयः, अतः कथमस्य पादस्य कात्स्न्र्येन परपक्षप्रतिक्षेपरूपत्वमित्याशङ्क्य तत्तदेकैकवादिनिरसनात् सदृशानामन्येषामपि अर्थान्निरासः प्रत्याय्य इत्याह—योगा इत्यादिना । साङ्ख्यव्युदासात् योगाः—योगतन्त्रनिष्ठाः । ध्वस्ता इत्यन्वयः । कणचरदमनात्—कणादनिरसनात् । अक्षपादानुयाताः— अक्षपादो गौतमः, तमनुयातास्तन्मतानुसारिणः । ध्वस्ता इत्यनुषङ्गः । बौद्धोन्माथेन—बौद्धनिरासेन । लोकायतमुषितधियः—चार्वाकमतेन लुण्टितबुद्धयः, चार्वाका इत्यर्थः । ध्वस्ता इति पूर्ववत् । जैनभङ्गात् तदुत्थाः—भेदाभेदवादित्वसाम्येन जैनोत्था भाट्टादयः । ध्वस्ता इति पूर्ववत् । पशूनां पत्युस्तन्त्रे प्रकटितविहतौ—पशुपतितन्त्रे प्रकटितदोषे सति । तादृशापष्ठुनिष्ठाः—पशुपतितन्त्रतुल्यशाक्याद्यपष्ठुसमयनिष्ठाः । तत्तुल्यतर्कागमशरणतया—पाशुपततुल्यव्याप्तिशून्यश्रुतिविरुद्धतर्कपौरुषतन्त्रावलम्बितया । कुदृग्भिस्साकम्—शङ्करभास्करयादवप्रकाशादितन्त्रनिष्ठैस्सह । अस्मिन्—निखिलपरपक्षप्रतिक्षेपपरेऽस्मिन् पादे । ध्वस्ताः—निर्मूलिताः । तत्तन्मतनिरासएव तेषां विध्वंसनतुल्य इति भावः ॥ २१८ ॥

द्वितीयाध्यायद्वितीयपादाधिकरणार्थानां विभज्य प्रदर्शनम् ॥

पादेऽस्मिन्कापिलस्थैः कणभुगनुगतैर्वृद्धवैभाषिकाद्यैः
योगाचाराभिधानैस्सुगतमतरहश्शून्यवादप्रसक्तैः ।
अर्हत्सिद्धान्तभक्तैः पशुपतिसमयस्थायिभिश्चोपरोधं
क्षिप्त्वाथो पञ्चरात्रं श्रुतिपथमवदत् पञ्चमाम्नायदर्शी ॥ २१९ ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु अधिकरणसारावल्यां
द्वितीयस्याध्यायस्य द्वितीयः पादः

चिन्ता०—अस्मिन्पादे प्रत्येकमधिकरणार्थान् विभज्य दर्शयति—पादेऽस्मिन्निति । कापिलस्थैरिति साङ्ख्याधिकरणे । कणभुगनुगतैरिति वैशेषिकाधिकरणे । वृद्धवैभाषिकाद्यैरिति वैभाषिकाधिकरणे । अत्र वृद्धशब्दप्रयोगो वैभाषिकद्वित्वप्रदर्शनार्थः । केचिदेकद्व्यादिस्वभावैः परमाणुभिर्द्व्यणुकादिसृष्टिमाहुः, अपरे पुनस्तत्तदेकैकस्वभावैरिति पूर्वमेव विभागः प्रदर्शितः । योगाचाराभिधानैरिति योगा-

चाराधिकरणे । सुगतमतरहस्यरूपशून्यवादप्रसक्तैर्माध्यमिकाधिकरणे इत्यर्थः । जैनाधिकरणे पुनरर्हत्सिद्धान्तभक्तैः । पाशुपताधिकरणे पशुपतिसमयस्थायिभिश्च वेदोपरोधं क्षिप्त्वाथो पञ्चरात्राधिकरणे पञ्चमाम्नायदर्शी भारतप्रवक्ता व्यासश्श्रुतिपथमवददिति योजना ॥ २१९ ॥

इति निखिलतार्किकचूडामणिना सर्वतन्त्रस्वतन्त्रेण
श्रीमद्वरदार्यपरनाम्ना कुमारवेदान्ताचार्येण
विरचिते शारीरकाधिकरणचिन्तामणौ
द्वितीयस्याध्यायस्य द्वितीयः पादः

पद०—**पादेऽस्मिन्नित्यादि** । **पञ्चमाम्नायदर्शी**—'भारतः पञ्चमो वेदः' इत्युक्तरीत्या पञ्चमाम्नायतया प्रसिद्धं श्रीमन्महाभारतं प्रणीतवान् व्यासः । **अस्मिन्पादे**—परपक्षप्रतिक्षेपपरेऽस्मिन्पादे । अधिकरणक्रमेणेति शेषः । **कापिलस्थैः**—कपिलमतनिष्ठैस्साङ्ख्यैः । **कणभुगनुगतैः**—कणादानुसारिभिर्वैशेषिकैः । **वृद्धवैभाषिकाद्यैः**—वैभाषिकद्वित्वप्रदर्शनार्थो वृद्धशब्दः । ते हि एकद्व्यादिस्वभावपरमाणुमूलकजगत्सृष्टिवादिनस्तत्तदेकैकस्वभावपरमाणुमूलकजगत्सृष्टिवादिनश्चेति द्विविधाः । अयञ्च भेदः 'एकद्व्यादिस्वभावैर्यदणुभिरथवा तत्तदेकस्वभावैः' इति तदधिकरणश्लोकेच स्पष्टमुक्तः । वृद्धवैभाषिका आद्या येषां नवीनवैभाषिकाणामित्युक्ते बहुव्रीहेरन्यपदार्थप्रधानतया वृद्धवैभाषिकग्रहणं न स्यात् । अतो वृद्धवैभाषिकाश्च आद्याश्च वृद्धवैभाषिकाद्या इति द्वन्द्वसमास आश्रयणीयः । आद्यशब्दस्य वैभाषिकेषु प्रथमपरिगणनीयत्वपरतया कथञ्चिन्नवीनवैभाषिकपरत्वं वक्तव्यमिति केचित् । **योगाचाराभिधानैः**—योगाचारसंज्ञैर्बौद्धविशेषैः । **सुगतमतरहश्शून्यवादप्रसक्तैः**—बौद्धमतरहस्यभूते शून्यवादे सर्वशून्यत्ववादे माध्यमिकसिद्धान्ते प्रसक्तैरत्यन्तानुरक्तैर्माध्यमिकैरित्यर्थः । **अर्हत्सिद्धान्तभक्तैः**—अर्हतो जिनस्य सिद्धान्तस्सम्प्रदायस्तत्र भक्तैरासक्तैर्जैनैः । **पशुपतिसमयस्थायिभिश्च**- पशुपतिसिद्धान्तनिष्ठैः पाशुपतैश्च । **उपरोधम्**—श्रुतिमार्गनिरोधम् । **क्षिप्त्वा**—निरस्य । **अथो**—पश्चात् , अन्तिमे पञ्चरात्राधिकरण इत्यर्थः । **पञ्चरात्रम्**—श्रीपञ्चरात्रशास्त्रम् । **श्रुतिपथम्**—श्रुतेः पन्था यस्य पन्थास्तादृशम् । वेदमार्गानुसारीतियावत् । **अवदत्**—असारान्निरस्य सारं प्रादर्शयदिति भावः ॥ २१९ ॥

इति श्रीमद्रङ्गनाथशठमथनयतिराजकटाक्षलब्धोभयवेदान्तहृदयस्य भारद्वाजस्य श्रीनिवासराघवदासस्य
(श्रीमदहोबिलमठमहास्थाननिर्वहणधुरन्धर श्रीमद्वेदमार्गप्रतिष्ठापनाचार्य परमहंसपरिव्राजकाचार्य
सर्वतन्त्रस्वतन्त्रोभयवेदान्ताचार्य श्रीभगवद्रामानुजसिद्धान्तनिर्धारणसार्वभौम श्रीलक्ष्मीनृसिंहदिव्यपादुकासेवकश्रीवण्शठकोपश्रीशठकोपरामानुजमहादेशिकस्य)
कृतौ अधिकरणसारावलीव्याख्यायां पदयोजनाख्यायां
द्वितीयस्याध्यायस्य द्वितीयः पादः

## द्वितीयस्याध्यायस्य तृतीयः पादः

## वियदधिकरणम् ॥ ५४ ॥

सूत्रम्—न वियदश्रुतेः ॥ २१७ ॥

सर्वं साङ्ख्यास्तु नित्यं क्षणिकमखिलमप्यत्र वैभाषिकाद्याः
नित्यानित्यं समस्तं जिनपरिपठितां सप्तभङ्गीं पठन्तः ।
नित्यानित्ये विभज्याप्यभिदधति विपर्यस्य वैशेषिकाद्याः
श्रुत्युत्थांस्तान्निरुन्धन् श्रुतिभिरथ वियत्प्राणपादौ युनक्ति ॥ २२० ॥

चिन्ता०—अत्र पूर्वोत्तरपादसङ्गतिर्भाष्य एव सुव्यक्तमुच्यते—'साङ्ख्यादिवेदबाह्यतन्त्राणां न्यायाभासमूलतया विप्रतिषेधाद्यासामञ्जस्यमुक्तम् । इदानीं स्वपक्षस्य विप्रतिषेधादिदोषगन्धाभावख्यापनाय ब्रह्मकार्यतयाभिमतचिदचिदात्मकप्रपञ्चस्य कार्यताप्रकारो विशोध्यते' इति । अत्र पूर्वपादद्वयस्योत्तरपादद्वयेन सङ्गतिरस्माभिः पूर्वमेवोक्ता—कारणद्वारकबाह्यविरोधपरिहारपरौ द्वौ पादौ, अपरौ पुनः कार्यद्वारकान्तर-विरोधपरिहारपराविति । अतः परं कार्यविषयविरोधपरिहारपरयोः पादयोः परवाद्युक्तप्रक्रियां विभागे-नानूद्य तत्प्रतिक्षेपरूपस्वपक्षमन्ते निगमयति—सर्वमिति । अत्र चत्वारः पक्षाः प्रतिक्षेप्याः । द्रव्यञ्चाद्रव्यंच सर्वं नित्यमिति साङ्ख्याः प्रतिवदन्ति । सर्वं क्षणिकमिति वैभाषिकाः । सर्वं नित्यानित्यमिति जिनपरिपठितां सप्तभङ्गीं पठन्तः प्राहुः । द्रव्यात्मना नित्यं पर्यायात्मनाऽनित्यमिति वदन्तोऽपि विपर्यस्य प्रवदन्ति । नित्यमेवानित्यमिति क्वचित् क्वचित्पुनरनित्यमपि नित्यमिति प्राहुः । वैशेषिकाः खलु नित्यमेव चैतन्यमनित्यमिति वदन्ति तथा नित्यमेवेश्वरविग्रहादिकं प्रमाणसिद्धं न सहन्ते एवमनित्यमपि नित्ययन्ति । यथाऽनित्ययोर्घटतद्धर्मयोस्सम्बन्धं समवायात्मकमनित्यमपि नित्यमेव ब्रुवते । एवं परपक्षाननूद्य श्रुत्यवलम्बनेनोत्थितांस्तान् श्रुतिभिरेव निरुन्धन् वियत्प्राणपादौ युनक्तीत्यन्वयः ॥ २२० ॥

पद०—अत्र चत्वारः पक्षाः प्रतिक्षेप्याः—सर्वनित्यत्ववादः सर्वानित्यत्ववादः सर्वनित्यानित्यत्ववादो नित्यानित्यविपर्यस्तवादश्चेति ।ताननूद्य वियत्प्राणपादाववतारयति- सर्वं साङ्ख्या इत्यादिना । अत्र—वृत्ते

द्वितीयपादे। अस्य निरुन्धन्नित्यनेनान्वयः। साङ्ख्यास्तु सर्वं वस्तु नित्यमभिदधति। वैभाषिकाद्या अखिलमपि वस्तु क्षणिकं क्षणमात्रवर्ति क्षणान्तरविनाशीत्यर्थः। अत्राभिदधतीत्यस्यानुषङ्गः। जिनपरिपठितां सप्तभङ्गीं स्यादस्तीत्यादिरूपां सप्तभङ्गीनीतिं पठन्तो जैनास्समस्तं वस्तु नित्यानित्यं नित्यञ्च तदनित्यञ्चेति। अभिदधतिपदं पूर्ववदनुषज्यम्। वैशेषिकाद्याः काणादप्रभृतयस्तु नित्यानित्ये वस्तुनी विभज्यापि विपर्यस्य व्यत्यस्य नित्यमनित्यत्वेन, अनित्यं नित्यत्वेनचेत्यर्थः। अभिदधति। वैशेषिकाः खलु नित्यं चैतन्यमनित्यमितिवदन्ति, तथा नित्यमीश्वरविग्रहादिकं प्रमाणसिद्धं न सहन्ते। तथा अनित्यमपि नित्यं वदन्ति यथा घटघटत्वयोस्सम्बन्धं समवायात्मकमनित्यमपि नित्यमेव ब्रुवते। श्रुत्युत्थान्—श्रुत्यवलम्बनेन तत्प्रतिक्षेपायोत्थितान्। तान्—साङ्ख्यादीन् चतुरः प्रतिपक्षान्। श्रुतिभिः—श्रुत्यभिमतैस्सत्तर्कैरित्यर्थः। निरुन्धन्—निरोधाद्धेतोः, तेषां निरोधायेति यावत्। अथ—अनन्तरमेव। वियत्प्राणपादौ—'न वियदश्रुतेः' इतिपादं 'तथा प्राणाः' इतिपादञ्चेत्यर्थः। युनक्ति—विरचयतीत्यन्वयः। कार्यताप्रकारविशोधनेन स्वपक्षे तादृशदोषाभावप्रतिपादनार्थं वियत्प्राणपादद्वयमनन्तरं विरचितवानित्यर्थः॥ २२०॥

पूर्वत्राधिक्रियायां पुरुषजनिवचो नित्यतोक्त्या निरुद्धं
व्योमोत्पत्तौ तथैव स्थितिरिति वचसोर्व्याहतौ वक्ति कश्चित्।
सिद्धान्ती व्योमसृष्टिर्निगमशतमिता नान्यथासिद्धिरस्यां
वायुव्योमामृतोक्तिर्जनिविधिविहतेत्युक्तिवैषम्यमाह॥ २२१॥

चिन्ता०—अधिकरणसङ्गतिस्तु—श्रीपञ्चरात्राधिकरणे जीवोत्पत्तिवादो जीवाभिमानिसङ्कर्षणादिपरत्वादौपचारिक इत्युक्तम्, तर्हि तेनैव न्यायेन वियदुत्पत्तिवादोऽप्यौपचारिक एव स्यादिति शङ्कयोत्थानमिति। तदर्थविचारस्तु—किं वियदुत्पद्यते नेति। किं 'आत्मन आकाशस्संभूतः' इत्याकाशस्योत्पत्तिं प्रतिपादयति नेति। किमत्र सम्भूतिशब्दो मुख्योत्पत्तिपर उत गौण इति। किमन्यत्र निरवयवस्यानुत्पत्तिदर्शनं निरवयवस्यास्य शब्दैकसमधिगम्यस्योत्पत्तियोग्यतामवगमयति नेति। अत्र पूर्वोत्तराधिकरणयोस्सङ्गतिप्रदर्शनपूर्वकं पूर्वपक्षवाद्यभिमतमनूद्य प्रतिक्षिपति—पूर्वत्रेति। अयमत्र शब्दार्थः—पूर्वस्मिन्नधिकरणे जीवोत्पत्तिवाक्यं पुरुषनित्यत्वप्रतिपादकवाक्येन बाधितमिति प्रसाधितम्। एवमाकाशोत्पत्तिविषयेऽपि वाक्ये नित्यत्वानित्यत्वप्रतिपादकवचसोर्विरोधे तथैव स्थितिरिति नित्यत्ववाक्येनानित्यत्वबाध इति कश्चिद्वदति। एवं पूर्वपक्षयुक्तौ सिद्धान्त्यभिमतमाह—सिद्धान्तीति। अयमर्थः—आकाशोत्पत्ति-

रनेकश्रुतिप्रतिपन्ना । न चास्यामन्यथासिद्धिरस्ति । अनन्यथासिद्धबहुश्रुतिप्रतिपन्नेऽर्थे जाग्रति एकोऽमुख्यो युक्त्याभासः परवादिकल्पितो जीवितुमेव नार्हतीति भवदुक्तं परित्यजामः । 'वायुश्चान्तरिक्षञ्चैतदमृतम्' इति श्रुत्यैवाकाशस्यामृतत्वमुक्तम्, तत्परित्यागे जीवामृतत्वोक्तेरपि परित्यागप्रसङ्ग इत्याशङ्क्य भाष्यकारोक्तवैषम्यं दर्शयति–वाग्वित्यादिना । इदं किलात्र वैषम्यम्–अनेकाः श्रुतयो ह्याकाशस्य जनिमुत्पत्तिं विदधति । एका श्रुतिरमृतत्वमनुवदति । अतो हेतोर्हि भग्ना । सा च वायुसहपाठादत्यन्तमवसीदति । वायोर्ह्यनित्यत्वं सर्वलोकसम्प्रतिपन्नम् । इह पुनर्जीवनित्यत्वमेव सर्ववेदसम्प्रतिपन्नम् । उत्पत्तिवादस्तु क्वाचित्क एव । स चान्यथासिद्धः । तेनानन्यथासिद्धबहुश्रुत्यानुगुण्येनात्मनित्यत्वं युक्तम् । वैपरीत्यादयुक्तमाकाशनित्यत्वमिति वैषम्यसिद्धिरिति ॥ २२१ ॥

पद०—पूर्वत्रेत्यादि । पूर्वत्र अधिक्रियायाम्—पूर्वाधिकरणे । पञ्चरात्राधिकरण इत्यर्थः । पुरुषजनिवचः—पुरुषस्य जीवस्य जनिवचः उत्पत्तिवचनम्, जीवो जायत इति वचनम् । नित्यतोक्त्या—'स ह्यनादिरनन्तश्च' इति तन्नित्यत्ववचनेन । निरूढम्—प्रतीयमानादर्थान्तरपरतया अन्यथा नीतं हि । एवं व्योमोत्पत्तौ—वियदुत्पत्तिविषयेऽपि । वचसोः—तदुत्पत्तितन्नित्यत्वसमर्पकयोः 'आत्मन आकाशस्सम्भूतः' 'एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च । खं वायुः' 'वायुश्चान्तरिक्षञ्च एतदमृतम्' इत्याकारयोर्द्वयोर्वचनयोः । व्याहतौ—अन्योन्यविरोधे सति । तथैव स्थितिरिति—पूर्वाधिकरणे यथा जीवनित्यत्ववचनानुगुण्येन तदुत्पत्तिवचनमान्यपर्यं नीतम्, तथैवाकाशनित्यत्ववचनानुगुण्येनैव तदुत्पत्तिवचनमन्यथा नेयमित्येवमेव वस्तुस्थितिर्युक्तेति । कश्चित् वक्ति—पूर्वाधिकरणवचनयोरेतदधिकरणवचनयोश्च वैषम्यानभिज्ञो वदतीत्यर्थः । सिद्धान्ती तु, व्योमसृष्टिः—आकाशोत्पत्तिः । निगमशतमिता-अनन्यथानेयानेकश्रुतिवचनसिद्धा । अस्याम्—व्योमसृष्टिश्रुतौ । अन्यथासिद्धिः—व्योमोत्पत्तिं विनाऽर्थान्तरेण सार्थकता । न—न भवति । वायुव्योमामृतोक्तिः—'वायुश्चान्तरिक्षञ्च' इत्याकाशनित्यत्ववचनं तु । जनिविधिविहता—आकाशोत्पत्तिवचनैरनन्यथासिद्धैर्बाधिता । एकस्या एवामृतत्वोक्ते र्वायुविषये औपचारिकत्वस्यावश्यकत्वात् आकाशविषयेऽपि तस्यास्तथैवौपचारिकत्वं युक्तमित्यर्थः । इति—एवमाकारम् । उक्तिवैषम्यम्—आकाशोत्पत्त्यनुत्पत्तिवचनयो र्जीवोत्पत्त्यनुत्पत्तिवचनापेक्षया स्फुटं वैलक्षण्यम् । आह—प्रतिपादितवानित्यर्थः ॥ २२१ ॥

तेजःप्राथम्यदृष्टेरमृतवचनतोऽनंशकद्रव्यभावाद्
व्योमन्युत्पत्तिवाक्स्यादुपहितविषयैवात्मनीवेतिचेन्न ।
प्राथम्यस्याश्रुतत्वात्प्रथमपठनतः कल्पनेऽन्येन बाधात्
किञ्चामर्त्योक्तितुल्यं त्वमृतपदमिहानेकवाक्यैककण्ठ्यात् ॥ २२२ ॥

चिन्ता०—अत्राकाशनित्यत्वप्रतिपादने पूर्वपक्षिपरिकल्पितानुक्तान्पुनर्बहून् हेतूननूद्य शिष्यप्रतिबोधनार्थं व्यक्तमेव निराकरोति—तेजःप्राथम्येत्यादिना । अयमत्र पूर्वपक्ष्यभिप्रेतो हेतुसमुदायः—सद्विद्यायां हि 'तत्तेजोऽसृजत' इति प्रथममाकाशसृष्टिमनुक्त्वा तेजस्सृष्टिरेवोच्यते । तेनाकाशस्य सृष्ट्यवचनमाकाशनित्यत्वपरमित्येको हेतुः । 'वायुश्चान्तरिक्षञ्चैतदमृतम्' इत्यव्यवधानेनामृतत्ववचनादित्यपरः । अनंशकद्रव्यभावादिति तृतीयः । अतो व्योमन्युत्पत्तिवागुपहितविषयैव स्याद् घटाकाशादिविषयैव स्यादित्यर्थः । तत्र प्रतिबन्दीमाह—आत्मनीवेति । यथा भवद्भिः कुम्भकारो जायते रथकारो जायत इत्यादिरात्मोत्पत्तिवादो देहपरिग्रहविषय इत्यन्यथाक्रियते तद्वदिहापीति प्रतिबन्दी । अनूदितमेतत्प्रतिक्षिपति—नेति । यत्तु प्रथमं तेजस्सृष्ट्यभिधानदृष्टेरित्युक्तं तन्न; प्राथम्यस्याश्रुतत्वात् । नह्यत्र प्रथमं तेजस्सृज्यत इति प्रथमशब्दश्श्रूयते । मा भूत्प्राथम्यश्रवणम्, अथापि प्रथमपठनमात्रेण तत् कल्प्यत इत्याशङ्क्य प्रतिक्षिपति—प्रथमपठनत इति । अन्येन बाधात्—बहुस्मृतीतिहासपुराणन्यायोपबृंहितेन 'आत्मन आकाशस्सम्भूतः' इत्यादिना वाक्येन बाधादित्यर्थः । कल्पनं हि लैङ्गिकम् । 'तस्माद्वा एतस्मादात्मनः' इति पञ्चमीनिर्देशात् साक्षादेवाकाशस्य कार्यत्वं श्रुत्यैव प्रतीयत इत्यर्थः । संभूतशब्दोऽपि जननवाची । अमृतपदमवशिष्यते—तच्च चिरकालवर्तित्वमात्रप्रतिपादकामर्त्यादिपदवन्न नित्यत्वमुपपादयति । अत्र विनिगमने कारणमाह—अनेकवाक्यैककण्ठ्यादिति । 'द्वैधे बहूनां वचनम्' इति हि न्यायविदो निर्णयन्ति ॥ २२२ ॥

पद०—तेजःप्राथम्येत्यादि । तेजःप्राथम्यदृष्टेः—छान्दोग्ये 'तत्तेजोऽसृजत' इति भूतसृष्टौ तेजसः प्रथमनिविष्टत्वदर्शनात् । आकाशसृष्ट्यवचनादिति तत्पर्यवसानम् । अमृतवचनतः—'वायुश्चान्तरिक्षञ्चैतदमृतम्' इत्यमृतत्ववचनात् । अनंशकद्रव्यभावात्—निरवयवद्रव्यत्वादित्यर्थः । व्योमनि—आकाशविषयं । उत्पत्तिवाक्—उत्पत्तिश्रुतिः । आत्मनीव—जीवात्मविषय इव । यथा भवद्भिः कुम्भकारो जायत इत्यादिरात्मोत्पत्तिवादो देहपरिग्रहविषय इत्यन्यथाक्रियते तद्वत् । उपहितविषयैव स्यात्—घटाद्युपाधिविशिष्टाकाशविषयैव भवेत् । अन्ततः उपाधिविषयैव । इति चेन्न उक्तं न युज्यते । प्राथम्यस्याश्रुतत्वात्—प्रथमं

तेजोऽसृजतेति तेजसस्सृष्टिप्राथम्यस्य श्रुतावश्रवणात् । प्रथमपठनतः कल्पने—भूतसृष्टौ प्रथमपाठेन तेजःप्राथम्यकल्पने । अन्येन बाधात्—बहुस्मृतीतिहासन्यायोपबृंहितेन 'आत्मन आकाशस्सम्भूतः' इत्यादिना वाक्येन बाधादित्यर्थः । किञ्च—नित्यत्ववचनञ्चान्यथानयनार्हमित्यर्थः । अनेकवाक्यैककण्ठ्यात्—आकाशोत्पत्तिप्रतिपादकानेकवाक्यैककण्ठ्यस्य एकवाक्येन सम्पादनीयत्वात् । इह—आकाशविषये । अमृतपदन्तु अमर्त्योक्तितुल्यम्—चिरकालवर्तित्वमात्रप्रतिपादकामर्त्यादिपदसदृशम् । तथा चिरकालवर्तित्वमादाय सार्थक्यं भजताम्, न तेनैकेनान्यथासिद्धेनानन्यथासिद्धानेकवाक्यसिद्धा वियदुत्पत्तिरपोह्येति भावः ॥ २२२ ॥

युक्तस्सत्कार्यवादश्श्रुतिभिरनुमतो नावयव्यस्ति सृज्यः
तत्तद्द्रव्येषु नामान्तरभजनसहावस्थया सृष्टिवादः ।
इष्टाश्शब्दाद्यवस्थास्तव निरवयवद्रव्यवर्गेऽपि तस्मात्
व्योमन्युत्पत्तिरुक्ता श्रुतिषु तदितरोत्पत्तितुल्या न बाध्या ॥ २२३ ॥

इति वियदधिकरणम् ॥ ५४ ॥

चिन्ता०—वैशेषिकाः खलु 'आकाशो नोत्पद्यते निरवयवद्रव्यत्वात्' इत्यनुमानं प्रयुञ्जते तदसत् व्यर्थविशेषणत्वात् सर्वस्यापि हि द्रव्यस्य नित्यत्वेनैव प्रामाणिकत्वात् द्रव्यत्वमात्रं तु त्वत्पक्षेणानैकान्तिकम् । ननु घटाद्युत्पत्तिस्तर्हि कथमुच्यते ? सत्कार्यवादादेवेति ब्रूमः । न पुनर्घटादिद्रव्यस्योत्पत्तिः सदेव हि मृत्पिण्डादिकं पृथुबुध्नोदराकारादिरूपं प्राप्य घटादिकमित्युच्यते । तच्च युक्तियुक्तमेव । असमवायिकारणावस्थापन्नद्रव्यविशेषमन्तरेण कार्यावस्थायामपि द्रव्यान्तरस्यानुपलम्भात् । अयं च पक्षः श्रुतिभिरप्यनुमतः । तेन निरवयवद्रव्यत्वादिति व्यर्थविशेषणमेव । तेन तेषुतेषु द्रव्येषु नामान्तरभजनार्हावस्थया सृष्टिवाद इति सुशोभनमेतत् । तदिदमाह- युक्त इत्यादिना । युक्तः—युक्तियुक्त इत्यर्थः । श्रुतिभिरनुमत इति—'सदेव सोम्येदमग्र आसीत्' इति ह्युच्यते । 'यथा सोम्यैकेन' इति दृष्टान्तश्चास्मिन्नेव पक्षे सङ्घटते । एवं द्रव्योत्पत्तिवादमनङ्गीकृत्यावस्थान्तरोत्पत्त्या कार्यत्वमुपपादयिष्यन् सा पुनरवस्थान्तरोत्पत्तिर्निरवयवद्रव्यवर्गेऽपि परवादिनापि न परित्याज्येत्याह—इष्टा इति । निश्शब्दे ह्याकाशे शब्दावस्थोत्पद्यते, एवं ज्ञानादिगुणविधुरेऽपि जीवे तद्गुणयोगः, तथा तत्कार्ययोगादिविधुरेऽपीश्वरादौ संयोगादिः, नित्यानामेव परमाणूनां परस्परसंयोगः, पार्थिवपरमाणुषु पाकजगुणोत्पत्तिः, इत्यादि स्वयमेव भाव्यम् ।

अयमत्र विशेषः—उपादानस्वरूपे नामान्तरभजनार्हावस्थान्तरापत्तौ कार्यत्वं वदन्ति। अन्यथा ऽवस्थान्तरप्राप्तिरूपमिति। एवमुपपादितमर्थं वैशद्याय निगमयति—तस्मादिति। श्रुतिष्वाकाशाद्युत्पत्तिरुक्तता वायुवह्निजलपृथिव्युत्पत्तितुल्यत्वान्नबाध्येत्यर्थः। अयमर्थः—निरवयवत्वादुत्पत्तिनिराकरणे सिद्धसाधनम्, नामान्तरभजनार्हावस्थोत्पत्तिनिराकरणे लोकवेदयुक्त्युपलम्भविरोध इति ॥ २२३ ॥

इति वियदधिकरणम् ॥ ५४ ॥

पद०—युक्त इत्यादि। सत्कार्यवादः—सतएव मृत्पिण्डादेः पृथुबुध्नोदराकारादिरूपावस्थाप्राप्त्या कार्यत्वप्रवादः। युक्तः—युक्तियुक्तः। श्रुतिभिः—'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' 'सदेव सोम्येदमग्र आसीत्' इत्यादिभिश्श्रुतिभिः। अनुमतः—अङ्गीकृतः। सृज्यः—उत्पाद्यतया भवदभिमतः। अवयवी—अवयवातिरिक्तोऽवयवी च। नास्ति—न दृश्यते, अवयवादधिकावयविसद्भावे भाराधिक्यं दृश्येत नच तथा दृश्यते। तत्तद्द्रव्येषु—विषये। सृष्टिवादः—उत्पत्तिप्रवादस्तु। नामान्तरभजनसहावस्थया—नामान्तरप्राप्तिक्षमा या पृथुबुध्नोदराकारादिरूपावस्था तया। उपपन्न इति शेषः। निरवयवद्रव्यवर्गे—निरवयवतयाभिमते आकाशात्मेश्वरपरमाणुरूपे द्रव्यवर्गे। शब्दाद्यवस्थाः—निश्शब्देऽप्याकाशे शब्दावस्था, ज्ञानादिगुणविधुरेऽपि जीवात्मनि तद्गुणयोगः, तथा तत्कार्ययोगादिविधुरेऽपीश्वरे संयोगादिः, नित्यानामेव परमाणूनां परस्परसंयोगः, पार्थिवपरमाणुषु पाकजगुणोत्पत्तिरित्याद्यवस्थाः। तत्रापि—निरवयवद्रव्यस्योत्पत्तिमनङ्गीकुर्वतस्तत्रापीत्यर्थः। इष्टाः—अभिमता एव। तस्मात्—अवस्थाया एवोत्पत्तिरूपत्वात् निरवयवद्रव्येष्वप्यवस्थाङ्गीकाराच्चेत्यर्थः। तदितरोत्पत्तितुल्या—प्राणमनस्सर्वेन्द्रियवायुज्योतिरप्पृथिव्याद्युत्पत्तितुल्या। तुल्यप्रमाणकेष्वर्धजरतीन्यायो न युज्यत इत्यर्थः। व्योमनि—विषये। श्रुतिषु—बह्वीषु श्रुतिषु। उक्ता—प्रतिपन्ना। उत्पत्तिर्बाध्या न भवतीति योजना ॥ २२३ ॥

इति वियदधिकरणम् ॥ ५४ ॥

## तेजोऽधिकरणम् ॥ ५५ ॥

सूत्रम्—तेजोऽतस्तथाह्याह ॥ २२६ ॥

कूटस्थाद् ब्रह्मणस्स्याज्जगदखिलमिदं पुत्रपौत्रादिनीतेः
एतस्मात्प्राण इत्याद्यपि सुगममिहेत्यादिरूहोऽत्र मोहः ।
प्राणस्वान्तादिपाठक्रमत इतरसंक्षोभणेऽतिप्रसङ्गात्
ईक्षानुस्यूतिदृष्टेः प्रथममिव परं सौति तत्तच्छरीरी ॥ २२४ ॥

इति तेजोऽधिकरणम् ॥ ५५ ॥

चिन्ता०—अत्र सङ्गतिर्भाष्य एव सुव्यक्तमुक्ता—'ब्रह्मव्यतिरिक्तस्य कृत्स्नस्य ब्रह्मकार्यत्वमुक्तम् । इदानीं व्यवहितकार्याणां किं केवलात्तत्तदनन्तरकारणभूताद्वस्तुन उत्पत्तिराहोस्वित्तत्तद्रूपाद्ब्रह्मण इति चिन्त्यते' इति । तदर्थविचारस्तु—महदहङ्कारादीनां सर्वेषां तत्त्वानां किं केवलात्पूर्वपूर्वतत्त्वमात्रादुत्पत्तिः उत तत्तद्रूपाद्ब्रह्मण इति । किं 'आकाशाद्वायुः' इत्यादिश्रुतिष्वाकाशादिशब्दा आकाशादिमात्रपरा उत तत्तदवस्थब्रह्मपरा इति । किं 'तेज ऐक्षत' इत्यादिष्वभिध्यानलिङ्गं तेजःप्रभृतिशब्दानां तत्तदवस्थब्रह्मपरतामवगमयति नेति । किं तेजःप्रभृतिशब्दानां तत्तदवस्थब्रह्मपरत्वे लक्षणा स्यान्नेति । किं तेजःप्रभृतिशब्दानामपर्यवसानवृत्त्या ब्रह्माभिधाने व्युत्पत्तिविरोधादिदोषो भवति नेति । अत्र पूर्वपक्षमनूद्य निराकरोति—कूटस्थादिति । 'एतस्माज्जायते प्राणः' इत्यादिश्रुतेर्द्वयी हि गतिस्संभाव्यते । एतस्माद्ब्रह्मणः प्रकृत्यादिक्रमेण पृथिवीपर्यन्तं विश्वसृष्टिरित्येका, अपरा तु प्रकृत्यादिपूर्वपूर्वतत्त्वशरीराद् ब्रह्मणएव पृथिवीपर्यन्तं कृत्स्नस्य विश्वस्य सृष्टिरिति । अत्र पूर्वपक्षवादी मन्यते—पुत्रपौत्रादिनीत्या कूटस्थाद्ब्रह्मण एव परम्परया विश्वसृष्टिः 'एतस्मात्प्राणः' इत्यस्मिन्वाक्ये कल्पयितव्या । अस्मिन्वाक्ये 'खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी' इति पाठक्रमात्क्रम एव प्रतिपाद्यत इति प्रतीयते । 'आकाशाद्वायुः' इति श्रौतक्रमस्यात्रापि दृष्टत्वेन श्रुत्यन्तरसंवादात् तत्सहपाठसामर्थ्यात् 'एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च' इत्यत्रापि प्रतीयमानः पाठक्रमो विवक्ष्यते तेन न ब्रह्मणस्साक्षाद्विश्वसृष्टिरिति । ननु 'एतस्माज्जायते प्राणः' 'तस्मादेतद्ब्रह्म नामरूपमन्नञ्च जायते' 'तत्तेजोऽसृजत' इत्यादिकं स्वपक्षे न घटत इत्याशङ्क्य पूर्वपक्षी परिहरति—एतस्मादिति । अयमर्थः—

'एतस्मात्' इत्यादिभिश्शब्दैर्हेतुत्वमात्रमुच्यते। तत्तु हेतुत्वं व्यवहिताव्यवहितपक्षयोस्साधारणमित्यस्मत्पक्षेऽपि सुगममेवेति। निराकरोति—इहेत्यादिरूहोऽत्र मोह इति। अयमर्थः—व्यवहिताव्यवहितयोरव्यवहिते सम्प्रत्यय इति हि न्यायविदां निर्णयः। तेन ब्रह्मण एवाव्यवहितकारणत्वे सम्भवति व्यवहितकल्पना नलघीयसी। किञ्च 'एतस्माज्जायते' इत्यत्रैतस्मादिति पदस्यानुषङ्गेण वाक्यार्थयोजनायां संभावितायां 'एतस्माज्जायते प्राणः प्राणान्मनो मनस इन्द्रियाणीन्द्रियेभ्यः खम्' इत्यादिक्रियावचनव्यत्त्या पूर्वपूर्वानुषङ्गविपरिणामाभ्यामर्थोपवर्णनमन्याय्यमेव। अपिच एतस्माद्ब्रह्मण इत्यत्र ब्रह्मण एव कारणभूतात्प्राणस्य साक्षादुत्पत्तिरुच्यते मनःप्रभृतीनां परम्परयोत्पत्तिरिति वैरूप्यम्। अवैरूप्ये सम्भवति वैरूप्येण निर्वाहोऽपि जघन्य एव। किञ्च 'पृथिव्यप्सु प्रलीयते' इत्यादिना सुबालोपनिषदादौ बहुस्मृतीतिहासपुराणाद्युपबृंहितं क्रमान्तरं प्रतीयते तेन 'एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणिच' इत्यादिक्रमकल्पसिर्बाध्यत एव। नहि क्वचिदपि स्मृतीतिहासपुराणादिषु प्राणान्मनस्सृष्टिर्मनस इन्द्रियसृष्टिरिन्द्रियेभ्य आकाशसृष्टिरित्यस्ति। अत्राप्यन्यथासिद्धिमाशङ्क्य परिहरति—प्राणेत्यादिना ऽतिप्रसङ्गादित्यन्तेन। अयमर्थः—अयं खलु भवतोऽभिप्रायः 'खं वायुः' इत्यत्र श्रुत्यन्तरसिद्धक्रम एव प्रतीयते; तत्सहपाठलिङ्गात् 'मनस्सर्वेन्द्रियाणि' इत्यत्रापि पाठक्रम एवानुसर्तव्यः, तेन सुबालोपनिषदादिप्रसिद्धं क्रमान्तरमेव बाध्यत इति, तदिदमसारम्—सम्प्रतिपन्नबहुवाक्यानुसारेणासम्प्रतिपन्नैकवाक्यार्थोपवर्णनं हि न्याय्यम्। न पुनर्वैपरीत्येन परिकल्पनम्। न्यायविरुद्धार्थपरिकल्पने सर्वशास्त्रव्याकोपात्। तेनात्र क्रमो न विवक्ष्यते। अपितु पूर्वपूर्वतत्त्वविशिष्टाद्ब्रह्मण एव विश्वोत्पत्तिरिति। इममर्थं श्रुतिरेवोपबृंहयतीति हेत्वन्तरमप्याह—ईक्षेति। 'तदैक्षत' 'तत्तेज ऐक्षत' 'ता आप ऐक्षन्त' इत्यादिषु कारणभूते ब्रह्मणीक्षणमेवानुस्यूतं दृश्यते। तच्च तत्तत्तत्त्वविशिष्टाद्ब्रह्मण एव विश्वोत्पत्तौ युज्यत इतीक्षत्यधिकरणादौ सर्वत्रापि शास्त्रे समर्थितम्। उक्तमर्थं निगमयति—प्रथममिति। यथा प्रकृतिशरीरं ब्रह्म महत्तत्त्वं सृजति, तथा महच्छरीरं ब्रह्माहङ्कारं सृजति, इत्यादिक्रमेण पृथिवीपर्यन्तं योजनीयमिति ॥ २२४ ॥

इति तेजोऽधिकरणम् ॥ ५१ ॥

पद०—ब्रह्मव्यतिरिक्तस्य कृत्स्नस्य ब्रह्मकार्यत्वमुक्तम्। इदानीं व्यवहितकार्याणां तत्तदनन्तरकारणभूताद्वस्तुन उत्पत्तिमाशङ्क्य तत्तद्वस्तुशरीरकात् ब्रह्मणएव सर्वतत्त्वोत्पत्तिरिति स्थाप्यते—कूटस्थादित्यादि। इदमखिलं जगत्। कूटस्थात् ब्रह्मणः—मूलकारणभूतात्परमात्मनः। पुत्रपौत्रादिनीतेः—प्रथमं कूटस्थात्पुत्रोत्पत्तिः पश्चात् पुत्रात्पौत्रोत्पत्तिर्यथा तथा। स्यात्—व्यवधानेनोत्पद्यताम्। नतु सर्वं तस्मादव्यवधानेन। नहि पौत्रनप्त्रादयस्सर्वे कूटस्थादव्यवधानेन जायन्ते। एतस्मात्प्राण इत्याद्यपि—

'एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणिच ।
खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी ॥'

इत्यादिवाक्यजातमपि । **इह**—परम्परया ब्रह्मकारणत्वपक्षेऽपि । **सुगमम्**—सुसङ्गतमेव । एतस्मात् ब्रह्मणः प्राणादिक्रमेण सर्वोत्पत्तिरित्युक्तेऽपि वाक्यस्य सार्थक्यात् । **इत्यादिरूहः**—एवमाद्याकारा वाक्यार्थकल्पना । **अत्र**—'एतस्माज्जायते प्राणः' इति वाक्यविषये । **मोहः**—विपरीतज्ञानमूल एव । ब्रह्मणस्साक्षात्प्राणोत्पत्तेः प्राणान्मनस उत्पत्तेस्तस्मात्सर्वेन्द्रियोत्पत्तेश्च कल्पनस्य सर्वश्रुतिविरुद्धतया विपरीतज्ञानमूलकत्वमिति भावः । **प्राणस्वान्तादिपाठक्रमतः**—'एतस्माज्जायते' इति वाक्यात् आपाततःप्रतिपन्नेन प्राणमनस्सर्वेन्द्रियादिरूपपाठक्रमेण । **इतरसंक्षोभणे**—इतरश्रुतिप्रतिपन्नप्रकृतिमहदहङ्कारादिक्रमान्तरबाधकल्पने । **अतिप्रसङ्गात्**—सम्प्रतिपन्नसर्ववाक्यार्थानामप्यापातविरोध्येकवाक्यार्थकल्पनया बाधकल्पनप्रसङ्गात् । **ईक्षानुस्यूतिदृष्टेः**—ईक्षत्यधिकरणे चेतनासाधारणतयोपन्यस्ताया अचेतनानर्हाया ईक्षाया ईक्षणक्रियाया अनुस्यूतेरुत्तरोत्तरवाक्येष्वनुवर्तनस्य दृष्टेर्दर्शनात् । दृश्यते हि 'तदैक्षत बहुस्यां प्रजायेय' इतिवत् उत्तरवाक्येष्वपि 'तत्तेज ऐक्षत' 'ता आप ऐक्षन्त' इतीक्षणक्रियानुवृत्तिः । अतः **परमात्मा प्रथममिव**—स्वस्मात्साक्षादुत्पन्नप्रकृतितत्त्वमिव । **परम्**—तदनन्तरोत्पन्नं महदादितत्त्वजातमपि । **तत्तच्छरीरी**—पूर्वपूर्वतत्त्वान्तरात्मा सन् । **सौति**—उत्पादयति । एवं सर्वतत्त्वानां तत्तत्कारणतत्त्वशरीरकपरमात्मकार्यत्वपरमिदं 'एतस्माज्जायते प्राणः' इति वाक्यं न तु क्रमान्तरपरमिति भावः ॥ २२४ ॥

इति तेजोऽधिकरणम् ॥ ५५ ॥

## आत्माधिकरणम् ॥ ५६ ॥

सूत्रम्—नात्मा श्रुतेर्नित्यत्वाच्च ताभ्यः ॥ २२७ ॥

द्रव्यं सर्वं हि नित्यं कथितमवयविद्रव्यभङ्गेन पूर्वं
नित्यत्वं सूत्रकारः पुनरपि पुरुषे किं विशिष्याभिधत्ते ।
सत्यं नामान्तरार्हामिह नुदति दशां चेतनस्यानुपाधेः
प्रत्यक्त्वज्ञत्वधर्मौ तदिह नियमितौ शाश्वतौ क्षेत्रिणोऽपि ॥ २२५ ॥

चिन्ता०—अत्र सङ्गतिर्भाष्ये 'वियदादेः' इत्यादिनोक्ता। अयमाशयः—वियदधिकरणे तावत्पर-वादिभिर्नित्यत्वेन परिगृहीतानां वियदादीनामुत्पत्तिः स्थापिता। समनन्तराधिकरणे पुनः कृत्स्नस्यापि कार्यजातस्य पूर्वतत्त्वशरीरकाद्ब्रह्मणस्साक्षादुत्पत्तिरिति नियमितम्। इदानीं पुनःपरवादिभिर्नित्यत्वेनाभि-मताकाशादेरिवात्मनोऽपि कार्यत्वं स्यादित्याशङ्क्य परिह्रियत इति विशेषसङ्गतिरिति। अथवा पूर्वमचि-दुत्पत्तिप्रकारश्चिन्तितः, अधुना जीवोत्पत्तिवादानां प्रकारान्तरप्रदर्शनादन्यथासिद्धिः क्रियत इति। तदर्थ-विचारस्तु—किं जीव उत्पद्यते नेति। किं 'तोयेन जीवान्' इत्यादिश्रुतिर्जीवोत्पत्तिं प्रतिपादयति नेति। किमत्रोत्पत्तिवचनमुत्पत्तिपरमुत भोक्तृत्वार्थज्ञानसङ्कोचविकासपरमिति। किं 'न जायते म्रियते वा विपश्चित्' इत्यादिनित्यत्ववचनं जीवसृष्टिवचनस्य ज्ञानसङ्कोचविकासपरतामवगमयति नेति। किमत्र नित्यत्ववचनमाकाशामृतत्ववचनवद्गौणमुत मुख्यमिति। किं मुख्यत्वानङ्गीकारे ऽकृताभ्यागमकृतविप्रणाशादि प्रसज्यते नेति। अत्र पूर्वप्रतिपादितार्थेन गतार्थत्वादधिकरणोत्थानस्य नैरर्थक्यमाशङ्क्यैकदेशगतार्थत्वेऽपि तद्विशिष्टार्थाभिधानसामर्थ्यादधिकरणोत्थानस्य सार्थकत्वं समर्थयते—द्रव्यमिति। इयं तत्र चोदकस्या-शङ्का—पूर्वमवयविद्रव्यभङ्गात्सर्वमपि द्रव्य नित्यमेवेति कथितं तेनाधुना पुनस्सूत्रकारो जीवस्य नित्यत्वं विशिष्य किमभिधत्त इति। उक्तं चोद्यमर्धाङ्गीकारेण परिहरति—सत्यमिति। अयमर्थः नित्यत्वं तावद् द्रव्यस्य साधारण्येन सिद्धमेव। तथापि तत्तद्धर्मविशिष्टवेषेण विशेषोऽस्ति त्रिगुणात्मके प्रकृति-द्रव्ये विकारविशेषात्स्वरूपे नामान्तरभजनार्हावस्थाविशेषोऽस्ति। तदेवोच्यते—'मही घटत्वं घटतः कपा-लिका' इत्यादिना। न तथा जीवस्वरूपे नामान्तरभजनार्हावस्थाविशेषोऽस्ति। तदिदमाह—नामान्त-रेति। अनुपाधेरिति—अनेन देहविशिष्टवेषेण ब्राह्मणक्षत्रियादिनामान्तरभजनार्हावस्थाविशेषसद्भाववत्त्वात्

तादृशमवस्थान्तरं न स्वरूपानुबन्धीति दर्शयति। किं तर्हि स्वरूपानुबन्धीत्याशङ्क्य तादृशं रूपद्वयं दर्शयति—प्रत्यक्त्वेति। तत्—तस्मात्, उक्तप्रकारेण वैषम्यस्य प्रदर्शितत्वात्। प्रत्यक्त्वज्ञत्वधर्मौ क्षेत्रिणो जीवस्य शाश्वतौ नियमितौ। अयमर्थः—यदा हि जीवः कर्मवशाद्देहसम्बन्धमनियमेन परिगृह्णाति तदा सर्वदापि प्रत्यक्त्वज्ञत्वधर्मौ स्वरूपं न मुञ्चतः। तेन स्वरूपे नामान्तरभजनार्हावस्थावत्त्वाभावाज्जीवस्य नित्यत्वम्, प्राकृतस्य द्रव्यस्य स्वरूपएव नामान्तरभजनार्हावस्थाभाक्त्वादनित्यत्वमिति विभागः। प्रत्येतुः प्रत्येतव्याद्व्यतिरेकः प्रत्यक्त्वम्। तच्च स्वस्मै भासमानत्वम्। परतः स्वधर्मेण ज्ञानेन स्वस्मैभासमानत्वमिति न्यायवादिनः। वयंतु ब्रूमः—परतः स्वतश्च स्वस्मै भासमानत्वमिति परतः स्वधर्मभूतज्ञानेन स्वतः स्वात्मनेति। अहमहमितिस्वात्मप्रकाशः स्वरूपेण, अत्र सुप्तोऽहमीदृशोऽहमिति विशेषाकारविशिष्टप्रकाशो धर्मभूतज्ञानेनेति विभागो द्रष्टव्यः। 'न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते' इति ज्ञानस्य नित्यत्वेन श्रुतिप्रतिपन्नत्वात् 'यथा न क्रियते ज्योत्स्ना' इति स्मृत्याचोपबृंहितत्वाच्चनित्यत्वमपि सिद्धमेव। अतः प्रत्यग्ज्ञातेति नाम्नोरन्यथाकरणाभावाज्जीवनित्यत्वमिति द्रष्टव्यम् ॥ २२५ ॥

पद०—अधिकरणानुत्थानाशङ्कां निरस्यति—द्रव्यमित्यादिना प्रथमश्लोकेन। पूर्वम्—आरम्भणाधिकरणादौ। अवयविद्रव्यभङ्गेन—काणादाभिमतस्य कपालादिसमवायिकारणातिरिक्तस्य घटाद्यवयविद्रव्यस्य भङ्गेन निरासेन। सर्वं द्रव्यम्—सत्त्वरजस्तमश्शब्दस्पर्शरूपरसगन्धसंयोगशक्तिभिन्नं सर्वमपि तत्त्वजातम्। नित्यं कथितं हि—नित्यतयोक्तमेव। नित्यस्यैव द्रव्यस्यागन्तुकावस्थारूपोत्पत्तिविनाशप्रतिपादनेन द्रव्यस्वरूपं नित्यमित्युक्तमेवेति भावः। सूत्रकारः—निरर्थकाक्षरशून्यं सूत्रजातं कर्तुंप्रवृत्तः पाराशर्यः। पुरुषे—जीवे। विशिष्य—असाधारण्येन। पुनरपि—एतत्प्रकरणेऽपि। नित्यत्वं किमभिधत्ते—कुतोऽभिधत्ते। उक्तस्यैव पुनर्वचने फलाभावादिति भावः। सत्यम्—पूर्वनित्यत्वोक्तिपुनस्तदुक्तिवैफल्ययोरर्धमङ्गीक्रियत इत्यर्थः। जीवस्वरूपे तादृशावस्थाभावोपन्यसनेन तन्नित्यत्वोक्तेस्साफल्यादर्धं नाङ्गीक्रियत इति भावः। तदेव दर्शयति–इह–एतदधिकरणे। अनुपाधेः–देहाद्युपाधिशून्यस्य स्वरूपमात्रतोऽवस्थितस्येत्यर्थः। चेतनस्य—जीवस्य। नामान्तरार्हाम्—पूर्वनामतोऽन्यनामभजनयोग्याम्। दशाम्—आगन्तुकापृथक्सिद्धधर्मरूपामवस्थाम्। नुदति—निरस्यति। अनुपाधेरित्यनेन देहविशिष्टवेषेणात्मनो ब्राह्मणक्षत्रियादिनामान्तरभजनार्हावस्थायोगेऽपि तादृशमवस्थान्तरं न स्वरूपानुबन्धीति दर्शयति। किं तर्हि जीवात्मनस्स्वरूपानुबन्धीत्यत्राह–प्रत्यक्त्वेत्यादि। तत्–तस्मात् उक्तप्रकारेण वैषम्यस्य प्रदर्शितत्वात्। इह–एतदधिकरणे। प्रत्यक्त्वज्ञत्वधर्मौ–स्वस्मैभासमानत्वज्ञानाश्रयत्वरूपौ द्वौ धर्मौ। क्षेत्रिणः—जीवस्य। शाश्वतौ—नित्यौ। नियमितौ—नित्यसम्बद्धतया प्रतिपादितौ।

अपिस्समुच्चये । भवद्भिर्निर्धर्मतयाऽङ्गीकृतोऽपि सधर्म एवेति भावः । अत्र चिन्तामणिकारा आचार्यकुमारपादाः "प्रत्येतुः प्रत्येतव्यादव्यतिरेकः प्रत्यक्त्वं तच्च स्वस्मै भासमानत्वम् । परतस्स्वधर्मेण ज्ञानेन स्वस्मै भासमानत्वमिति न्यायवादिनः । वयं तु ब्रूमः—परतस्स्वतश्च स्वस्मै भासमानत्वमिति परतस्स्वधर्मभूतज्ञानेन स्वतस्स्वात्मनेति । अहमहमितिस्वात्मप्रकाशस्स्वरूपेण, अत्र सुप्तोऽहमीदृशोऽहमिति विशेषाकारविशिष्टप्रकाशो धर्मभूतज्ञानेनेति विभागो द्रष्टव्यः । 'न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते' इति ज्ञानस्य नित्यत्वेन श्रुतिप्रतिपन्नत्वात् 'यथा न क्रियते ज्योत्स्ना' इति स्मृत्याचोपबृंहितत्वात् तन्नित्यत्वमपि सिद्धमेव । अतः प्रत्यक् ज्ञातेति नाम्नोरन्यथाकरणाभावात् जीवनित्यत्वमिति द्रष्टव्यम्" इति प्राहुः ॥ २२५ ॥

सच्छब्दार्थातिरिक्तं जनिमदखिलमित्यैतदात्म्यादिसिद्धं
प्रोक्ता सृष्टिश्च जीवे निरवयवनयस्त्वम्बरादौ निरस्तः ।
जीवोत्पत्तिस्ततस्स्यादिति न सदकृताभ्यागमादिप्रसङ्गात्
नित्यत्वाजत्वकण्ठोक्तिभिरपि जननं त्वस्य देहादियोगः ॥ २२६ ॥

चिन्ता०—अत्र पूर्वपक्षसिद्धान्तावारचयति—सच्छब्देति । 'सन्मूलाः' इत्युपक्रम्य 'ऐतदात्म्यमिदं सर्वम्' इत्यभिधानात् सर्वासामपि प्रजानां सन्मूलत्वं सिद्धम् । तेन वियदादिवदात्मनोऽपि कार्यत्वमनुमन्तव्यम् । 'तोयेन जीवान्व्यससर्ज' इत्यादौ जीवसृष्टिश्च साक्षात्प्रोक्ता । यत्तु निरवयवत्वान्नित्यत्वमिति तदाकाशे व्यभिचारान्निरस्तमित्याह—निरवयवनय इति । तेन जीवोत्पत्तिस्स्यादिति पूर्वपक्षिते तन्निराकरोति—न सदिति । हेतुमाह—अकृतेति । अकृताभ्यागमकृतविप्रणाशौ हि जीवनित्यत्वे हेतुतया न्यायवादिभिरुपादीयेते । यदि जीवस्सादिरनित्यः कृतकश्च तदा पूर्वमेवाकृतं सुकृतं दुष्कृतञ्चाधुनानुभूयात् तथाचाकृताभ्यागमदोषः । तथैवचेदानीं कृतयोस्सुकृतदुष्कृतयोरुत्तरस्मिञ्जन्मनि विनाशस्स्यात् । अत्र सुकृतदुष्कृतयोर्विनाश इति फलानुभवाभावः प्रसज्यते । एवं युक्त्या जीवनित्यत्वमुपपाद्य श्रुत्यादिभिरप्युपपादयति—नित्यत्वेति । 'नित्यो नित्यानाम्' इत्यादिका नित्यत्वश्रुतिः, 'ज्ञाज्ञौ द्वावजौ' इत्यजत्वश्रुतिः । तर्हि चेतनाचेतनयोर्द्वयोरपि भगवत उत्पत्तिश्श्रुतिस्मृतीतिहासपुराणादिषु श्रूयते तत्कथमित्याशङ्क्याह—जननमिति । पूर्वदेहप्रहाणं मरणम्, उत्तरदेहपरिग्रहो जननमिति न्यायवादिनामपि सम्मतमेतत् । अन्यथा प्रेत्यभावोपपादनायोगात् ॥ २२६ ॥

पद०—सच्छब्दार्थेत्यादि। सच्छब्दार्थातिरिक्तम्—'सदेव सोम्येदमग्र आसीत्' 'सन्मूलास्सोम्येमास्सर्वाः प्रजाः' इत्याद्युक्तजगत्कारणभूतसच्छब्दार्थब्रह्मातिरिक्तम्। अखिलम्—सर्वमपि चेतनाचेतनात्मकं वस्तु। जनिमत्—उत्पत्तिमत्। इति ऐतदात्म्यादिसिद्धम्—'ऐतदात्म्यमिदं सर्वम्' इत्यादिवाक्यानां कृत्स्नस्य कारणब्रह्मात्मकत्वपरत्वेन तद्वाक्यसिद्धमित्यर्थः। जीवे—जीवात्मनि। सृष्टिश्च—उत्पादनञ्च। प्रोक्ता—'तोयेन जीवान् व्यससर्ज' इत्यादिश्रुतिभिः प्रतिपादिता। निरवयत्वनयस्तु—निरवयवत्वात् नित्यत्वमित्यनुमानं तु। अम्बरादौ—आकाशादौ। निरस्तः—निरवयवत्वेऽप्युत्पत्तिमत्त्वेन व्यभिचारात् निरस्तः। वियदधिकरणेनेति शेषः। ततः—कारणात्। जीवोत्पत्तिस्स्यात्—अस्तु। इति न सत्—इदं न युक्तम्। अकृताभ्यागमादिप्रसङ्गात्—आदिशब्देन कृतविप्रणाश उच्यते। अकृताभ्यागमप्रसङ्गात् कृतविप्रणाशप्रसङ्गाच्चेत्यर्थः। अकृतानां पूर्वजन्मन्यननुष्ठितानां पुण्यपापानामभ्यागम इदानीमस्मिञ्जन्मनि फलानुभवस्तत्प्रसङ्गात्, कृतानां अस्मिञ्जन्मन्यनुष्ठितानां पुण्यपापानां विप्रणाशः फलानुभवं विनैव नाशः, तत्प्रसङ्गाच्चेत्यर्थः। जीवस्य कालविशेषे उत्पत्तिस्वीकारे तत्पूर्वं तस्याभावेन तत्कृतकर्मणामभावात् इदानीञ्च सुखदुःखानामनुभूयमानत्वात् तन्मूलभूतानि सुकृतदुष्कृतानि तेनाकृतान्येवाभ्यागच्छन्तीत्यङ्गीकार्यम्, तथा बहूनि पुण्यपापानि कृत्वा नष्टस्य जीवस्य तानि कर्माणि विफलानि नश्यन्तीत्यङ्गीकार्यम्, एवमङ्गीकारे विषमसृष्ट्या ईश्वरस्य वैषम्यनैर्घृण्ये प्रसज्येयातामिति भावः। नित्यत्वाजत्वकण्ठोक्तिभिरपि—'नित्यो नित्यानाम्' 'ज्ञाज्ञौ द्वावजौ' इत्यादिरूपाभिर्नित्यत्वजन्माभावप्रतिपादिकाभिश्श्रुतिभिस्स्फुटोक्तिभिरपि। जीवोत्पत्तिस्स्यादिति न सदित्यन्वयः। अस्य—एवं नित्यत्वेन प्रतिपन्नस्य जीवस्य। जननं तु—जन्म तु, किंरूपमितिचेत्। देहादियोगः—आदिशब्देन कर्मज्ञानेन्द्रियपरिग्रहः। तथाच देहेन्द्रियादिसम्बन्धएव जन्मेत्यवेहीत्यर्थः। नाशश्च देहेन्द्रियविश्लेषएवेति सिद्धमिति भावः ॥ २२६ ॥

देहात्मत्वे जनिस्स्यात्तदिह न घटते जातमात्रस्य रागात्
ज्ञाने किण्वादिमेघोपलशबलपटप्रक्रियात्यन्तदुस्स्था।
देहे गेहादितुल्या ममकृतिरनघा दोषतस्त्वैक्यमोहः
क्षिप्तं चैक्यानुमानं बलवदनुमितेश्शास्त्रतस्तर्कतश्च ॥ २२७ ॥

चिन्ता०—उक्तार्थप्रतिषेधरूपं लोकायतपक्षं पुरस्कृत्य युक्तिभिस्तिरस्करोति—देहात्मत्व इति। अयमत्र शब्दार्थः—यदि देह एवात्मा स्यात् तदा देहस्य क्षणपरिणामित्वादात्मनोऽपि जनिस्स्यात्। तच्च

न घटते । वीतरागजन्मादर्शनादिति न्यायवादिभिर्निरस्तत्वादित्याह—जातेति । सद्य एवोत्पन्नो बालः स्तन्याभिलापं करोति । स चाभिलापः पूर्वजन्मानुभवमन्तरेण न सम्भवति । तेन पूर्वोत्तरजन्मनोर्जीवानुवृत्तिं प्रतिपद्यामहे । तत्र यदि देह एव चैतन्यं स्यात् तदा देहावयवेष्वपि चैतन्यमवश्यम्भावि भवेत् । कारणगुणप्रक्रमेण कार्यगुणारम्भस्य न्याय्यत्वात् रूपादयो हि स्पर्शवद्विशेषगुणास्तेनैव क्रमेणारभन्त इति दृष्टमेतत् । तेन देहे देहावयवेषु च चैतन्याङ्गीकारे ऽनेकचेतनोपलम्भप्रसङ्गः । चेतनानां च नानामनस्कत्वात् शरीरोन्माथप्रसङ्ग इत्यादिकं दूषणजातमनुसन्धेयम् । अत्र चार्वाकोक्तमनूद्य परिहरति—ज्ञान इत्यादिना । इयं किल चार्वाकसूत्रपरिपाटी—'पृथिव्यप्तेजोवायुरिति तत्त्वानि । तेभ्यश्चैतन्यं किण्वादिभ्यो मदशक्तिवत्' इति । अयमत्र सूत्रार्थः—पृथिव्यादीनामसंहतानां चैतन्ययोगो नास्त्येव । संहतावस्थायामेव चैतन्यम् । एवं करचरणादीनां देहावस्थामापन्नानामेव चैतन्यम् । तथाच देहस्यैव चैतन्यगुणयोगाद् देहएव चेतनः । यथा क्रमुकताम्बूलचूर्णानां संहतानामेव रागाश्रयत्वं । न पुनः प्रत्येकम् । किण्वादिभ्यो मदशक्तिवदिति । मदहेतुभूतद्रव्यजनकानां बहूनां किण्वादीनां न प्रत्येकं मदहेतुत्वशक्तिः । अपितु संहतानामेव । एवं संहतानामेव करचरणादीनां ज्ञानाश्रयत्वान्नानेकचेतनोपलम्भप्रसङ्गदोष इति । मेघोपलेति—जलस्य प्रत्येकं काठिन्याभावेऽपि करकात्मना परिणतस्यैव काठिन्ययोगः । शबलपटेति—सितरक्तकृष्णानां तन्तूनां चित्ररूपाभावेऽपि पटे खलु तदारब्धे चित्ररूपं दृश्यते । एवमन्यदप्युदाहर्तव्यम् । अत्र दुस्स्थेति दृष्टान्तादार्ष्टान्तिकवैषम्यं दर्शयति । तथाहि क्रमुकताम्बूलचूर्णेषु अवयव्यवस्थायां यो राग उपलभ्यते स पुनरवयवेष्वप्यस्ति । कारणक्रमेण कार्यगुणारम्भस्य वैशेषिकैरुपपादनात् । तथा च तदानीमनेकरागयुक्तद्रव्यसद्भाववत् देहेऽप्यनेकचैतन्यवद्द्रव्यसद्भावप्रसङ्गादिकं तदवस्थमेव । तेन मेघोपलदृष्टान्तोऽपि निरस्तः । यस्तु शबलपटदृष्टान्तः सोऽपि निरस्तप्राय एव । शबलपटे हि चित्ररूपस्य तन्तुष्वभावेऽपि तज्जातीयस्य रूपसामान्यस्य शुक्लादिजातीयस्य कस्यचिदवयवेषु सद्भावोऽस्त्येव । तथाचात्रापि देहे विद्यमानस्य ज्ञानविशेषस्यावयवेष्वभावेऽपि तज्जातीयं ज्ञानान्तरमस्तीत्यनेकचेतनोपलम्भप्रसङ्गस्तदवस्थ एव । विस्तरस्तु परमतभङ्गे द्रष्टव्यः । अत्र चार्वाकोक्तं युक्तिविरोधं परिहृत्य तदुक्तस्य देहात्मवादस्य प्रत्यक्षविरोधं स्वयमप्याह—देह इति । यथा मम गृहं मम क्षेत्रं मम पुत्रो मम कलत्रमित्यादिषु व्यतिरेकप्रत्ययाद् भेदसिद्धिः, एवं मम देह इति व्यतिरेकस्य स्पष्टदृष्टत्वाद् बाधकाभावेन निर्दोषत्वाच्च देहात्मनोर्भेदोऽङ्गीकर्तव्य एव । तदिदमाह—अनघेति । निर्दोषत्वादित्यर्थः । ममात्मेत्यत्र तु ममेत्यस्मच्छब्दस्यात्मेति स्वरूपविषयस्यात्मशब्दस्य चैकार्थ्यावश्यम्भावाद्व्यतिरेकप्रत्यय औपचारिक इत्यर्थः । तर्हि स्थूलोऽहं कृशोऽहमिति सामानाधिकरण्येनैक्यं प्रतीयते तत्कथमित्याशङ्क्याह—दोषत इति अनेकश्रुतिस्मृतिविरुद्धत्वाद् देहात्मबुद्धिर्भ्रान्तिरित्यर्थः । तदनुमानादेव देहात्मैक्यं प्रसाधयामीति चार्वाकमतं

निराकरोति—क्षिप्तमिति । देह एवात्मा अहम्बुद्धिगोचरत्वात् सम्प्रतिपन्नाहम्बुद्धिगोचरात्मवदित्यादिभिर्दे-हात्मत्वमनुमीयते तत्त्वनैकान्तिकमेव । न ह्येकरूपबुद्धिगोचरतामात्रेण तत्तदैक्यसम्भवः । नहि रजत-बुद्धिगोचरतामात्रेण शुक्तिकायां रजतत्वं सम्भवति । तेन बाधितबुद्धिगोचरो मिथ्या, अबाधितबुद्धिगोचर-स्तथ्यमिति निर्णेतव्यम् । तेनाबाधितप्रत्ययगोचरत्वाभावाद्देह आत्मा न भवत्येव । देहात्मैक्यानुमानक्षेपे हेतुत्रयमाह—बलवदनुमितेरित्यादिना । 'दर्शनस्पर्शनाभ्यामेकार्थग्रहणात्' इत्यादिसूत्रोक्ताधिकबलानु-मानात्, 'नित्यो नित्यानाम्' इत्यादिशास्त्रात्, 'वीतरागजन्मादर्शनात्' इति सूत्राभिप्रेततर्कबला-च्चेति ॥ २२७ ॥

पद०—देहात्मत्व इत्यादि । देहात्मत्वे—देहस्यैवात्मत्वे । यदि देह एवात्मा स्यात् तदा । जनिस्स्यात्—देहस्य क्षणपरिणामित्वादात्मनोऽपि जनिस्स्यात् । तत्—देहस्वरूपत्वम् । इह—जीवात्मनि न घटते—न युज्यते । कुतः? जातमात्रस्य रागात्—उत्पन्नमात्रस्य शिशोस्स्तन्याभिलाषात् । स चाभिलाषः पूर्वजन्मानुभवमन्तरेण न सम्भवति तेन पूर्वोत्तरजन्मनोर्जीवानुवृत्तिं प्रतिपद्यामहे । किञ्च यदि देहस्यैव चैतन्यं स्यात् तदा देहावयवेष्वपि तत् स्यात् । कार्यगुणानां कारणगुणपूर्वकत्वन्यायात्, तथाङ्गीकारेऽनेकचैतन्यप्रसङ्गेन शरीरोन्माथप्रसङ्गः । अत्र चार्वाकदत्तमुत्तरमनूद्य परिहरति—ज्ञान इत्या-दिना । ज्ञाने—चैतन्यविषये । चैतन्यस्य देहावयवेष्वविद्यमानस्यैव देहरूपपृथिव्यप्तेजोवाय्वात्मकसङ्घात एव विद्यमानत्वविषये । किण्वादिमेघोपलशबलपटप्रक्रिया—किण्वं सुरासन्धानमूलद्रव्येष्वेकम् । तदादिषु वस्तुषु प्रत्येकमवस्थानदशायामनुपलब्धाया एव मादकत्वशक्तेस्सुरात्वेन सङ्घातदशायां यथोपलब्धिः । मेघोपलः करकः । यथा वा करके विशरणावसङ्घातदशायामनुपलब्धं काठिन्यं करकत्वेन सङ्घातदशायामुप-लभ्यते । शबलपटश्चित्रपटः । यथा तन्तुष्वनुपलब्धं चित्ररूपं पटत्वेन सङ्घातदशायामुपलभ्यते । तद्वत् देहावयवेषु प्रत्येकमनुपलब्धमपि ज्ञानं देहात्मना सङ्घातदशायामुपपन्नमेवेति निदर्शनेनाभिमतसाधन-प्रक्रिया । अत्यन्तदुस्स्था—दृष्टान्तदार्ष्टान्तिकयोर्वैषम्येनार्थसाधनाय न प्रभवतीत्यर्थः । किण्वादिद्रव्येषु प्रत्येकमवस्थायामपि मदशक्तेर्विद्यमानत्वात् कारणक्रमेण कार्यगुणारम्भस्य वैशेषिकैरुपपादनात् तथैव मेघोपलेऽप्युपपत्तेः । शबलपटे चित्ररूपस्य तन्तुष्वभावेऽपि तज्जातीयस्य शुक्लादिरूपस्य तन्तुषूपलब्धेः । तथाच देहे विद्यमानस्य ज्ञानविशेषस्यावयवेष्वभावेऽपि तज्जातीयज्ञानान्तरसद्भावस्यावश्यकत्वेन अनेक-चेतनोपलम्भप्रसङ्गस्तदवस्थ एवेति भावः । देहे—विषये । गेहादितुल्या—ममेदं गेहमिति यथा व्यति-रेकप्रतीतिस्तथा । आदिशब्देन क्षेत्रपुत्रकलत्रसङ्ग्रहः । यथा मम क्षेत्रं मम पुत्रो मम कलत्रमिति प्रतीति-स्तथेत्यर्थः । अनघा—बाधकाभावेन निर्दोषा । ममकृतिः—भेदसाधकममकारोल्लेखयुक्ता प्रतीतिः ।

अस्तीति शेषः। अतश्च देहात्मनोर्भेदोऽङ्गीकार्य इति भावः। ऐक्यमोहस्तु—स्थूलोऽहं कृशोऽहमित्यादिसामानाधिकरण्येन देहात्मनोरैक्यमोहस्तु। दोषतः—संसर्गविशेषरूपदोषप्रयुक्त इत्यर्थः। यथायःपिण्डवह्न्योर्भिन्नयोरपि संसर्गविशेषेणायो दहतीति भ्रमस्तद्वदित्यर्थः। ऐक्यानुमानञ्च—देह एवात्मा अहम्बुद्धिगोचरत्वात् सम्प्रतिपन्नाहम्बुद्धिगोचरात्मवदिति देहात्मनोरैक्यानुमानञ्च। बलवदनुमितेः—'दर्शनस्पर्शनाभ्यामेकार्थग्रहणात्' इत्यादिसूत्रोक्तातिबलिष्ठानुमानात्। शास्त्रतः—'नित्यो नित्यानाम्' इत्यादिशास्त्रात्। तर्कतश्च—'वीतरागजन्मादर्शनात्' इति सूत्राभिप्रेतात्तर्काच्च। क्षिप्तम्—निरस्तम्। योऽहं घटमद्राक्षं सोऽहमिदानीं स्पृशामीति प्रत्यभिज्ञया यः पूर्वमद्राक्षीत् यश्चेदानीं स्पृशति स एक एव अबाधितैक्यप्रतीतिविषयत्वात् यो देवरथश्चैत्रे मया निरमीयत स एवायं भाद्रपदे दृश्यत इत्याद्यैक्यप्रतीतिविषयरथादिवद् इत्यादिरूपमनुमानशरीरम्। यदि जीवात्मानेकेषु पूर्वोत्तरेषु शरीरेष्वनुवृत्तो न स्यात् तर्हि जातमात्रस्य तस्य स्तन्याभिलापो न स्यात्, नहि पूर्वमननुभूतेऽभिलापो दृश्यत इति 'वीतरागजन्मादर्शनात्' इति सूत्राभिप्रेतस्तर्कः ॥ २२७ ॥

देहं देहातिरेके तदवधिनियतप्राणबुद्ध्यक्षरूपं
धीसन्तानञ्च नित्यं प्रलयविलयिनं स्थास्नुमप्यापवर्गात्।
डिण्डीराभं सदव्धाववितथविकृतौ जीवमिच्छन्त इत्थं
निर्धूता दूरमत्र श्रुतिभिरितरवद् बाधदोषोज्झिताभिः ॥ २२८ ॥

इत्यात्माधिकरणम् ॥ ५६ ॥

चिन्ता०—एवं युक्त्युपबृंहितश्रुत्यादिभिश्चार्वाकस्य प्रधानप्रतिपाद्यं देहात्मवादं निराकृत्य तत्सजातीयानि पक्षान्तराण्यप्युक्तैरनुक्तैश्च हेतुभिर्निराकर्तुमुपक्रमते—देहमिति। केचिदाहुर्देह एवात्मेति। अपरे त्वात्मनो देहातिरेकेऽपि देहावधिनियतप्राणबुद्ध्यक्षरूप आत्मेति। यावद्देहभावीत्यर्थः। एवं चार्वाकपक्षमुक्त्वा सौगतपक्षमप्याह—धीसन्तानमिति। नित्यं धीसन्तानं केचिदाहुः। यथा सौगताः—'अत्थि भिक्खवो अकिदअं असंखअं एदस्स जन्तुणो सन्तण्णमाणस्स णाणावट्ठाणं सम्पज्जइ' इति। (छाया-अस्ति भिक्षवोऽकृतकमसंक्षयमेतस्य जन्तोस्सन्तन्यमानस्य ज्ञानावस्थानं सम्पद्यते) तेन नित्यधीसन्तान आत्मेति प्राहुस्सौगतैकदेशिनः। अपरे तु शून्यवादिनमनुसरन्तो द्विधा प्राहुः। आत्मनामाप्रलयमवस्थानमित्येके। अत्रापि विभागो द्रष्टव्यः। क्षणिकज्ञानसन्तानस्यामोक्षमवस्थानमिति सौगताः। मृषा-

वादिनस्त्वामोक्षाज्जीवभाव इति वदन्तस्स्थायित्वमप्यङ्गीकृत्यामोक्षावस्थानमभ्युपगच्छन्ति। निपुणं निरूपयतां तदुक्तं स्थायित्वमप्यनादरणीयमेव ; बीजाङ्कुरन्यायेनाविद्याजीवभावयोरस्थायित्वस्य स्वयमेवाभिधानात्। विवरणपक्षे तु जीवभावस्यामोक्षस्थायित्वादपुरुषार्थत्वमेव। विस्तरस्तु शतदूषण्याम्। भेदाभेदपक्षमाह—डिण्डीरेति। यादवप्रकाशीयाः खलु सन्मात्रब्रह्मरूपे सागरे पुनरवितथविकृतौ तत्तत्कार्योपयुक्तविकारवति डिण्डीराभं फेनप्रायं जीवमिच्छन्ति। स्वाभाविकभेदाभेदवादिनो हि सन्मात्रब्रह्मणि सागरप्राये फेनतरङ्गबुद्बुदन्यायेन चिदचिदीश्वरतत्त्वत्रयसृष्टिमाचक्षते। एवं परपक्षाननूद्य सर्वेऽपि वादिनः सत्तर्कसहितस्मृतीतिहासपुराणोपबृंहिताभिर्नित्यत्वश्रुतिभिर्निरस्ता इत्याह—निर्धूता इति। बाधदोषोज्झिताभिरिति—आकाशादिनित्यत्वश्रुतयः प्रबलतरश्रुत्यन्तरबाधिताः, आत्मनित्यत्वश्रुतयस्तु प्रबलतरयुक्त्यन्तरानुगृहीतश्रुत्यन्तरसंवादेन निर्बाधा इत्यर्थः॥ २२८॥

इत्यात्माधिकरणम्॥ ५६॥

पद०—देहात्मवादं निरस्य तत्सजातीयसर्वपक्षान्तराण्यपि उक्तैरनुक्तैश्च हेतुभिर्निराकरोति—देहमित्यादिना। जीवम्—जीवात्मानम्। देहम्—देहस्वरूपम्। इच्छन्तः—अङ्गीकुर्वन्तश्चार्वाका इत्यर्थः। देहातिरेके—जीवस्य देहातिरिक्तत्वेऽपि। तदवधिनियतप्राणबुद्ध्यक्षरूपम्—देहावधिनियतप्राणरूपं देहावधिनियतबुद्धिरूपं देहावधिनियतेन्द्रियरूपम्। अक्षमिन्द्रियम्। इच्छन्त इत्यनुषङ्गः। चार्वाकविशेषा इत्यर्थः। नित्यं धीसन्तानञ्च—नित्यधीसन्तानात्मकम्। इच्छन्त इति पूर्ववत्। बौद्धैकदेशिन इत्यर्थः। धीसन्तानं प्रलयविलायिनम्—प्रलयकालनाशिनम्। इच्छन्तो बौद्धविशेषाः। आपवर्गात्—आमोक्षम्। स्थास्नुमपि—स्थिरञ्च, नित्यमित्यर्थः। इच्छन्तो मृषावादिनः। अवितथविकृतौ-अवितथा तत्तत्कार्योपयुक्ता विकृतिर्विकारः परिणाम इत्यर्थः, यस्य तस्मिन्नवितथविकृतौ। सदब्धौ—सन्मात्रब्रह्मरूपसागरे। डिण्डीराभम्—फेनतुल्यम्। इच्छन्तो यादवप्रकाशीयाश्च। इतरवत्—एवं जीवमन्यथान्यथाङ्गीकुर्वद्भिर्वाद्यन्तरैस्तुल्यम्। बाधदोषोज्झिताभिः-बाधः प्रबलप्रमाणेनोपरोधः, दोषः अयोवह्न्योरिव संसर्गविशेषादिरूपो भ्रमकारणं ताभ्यामुज्झिताभिस्त्यक्ताभिस्तद्रहिताभिरित्यर्थः। प्रत्यक्षे दोषस्सम्भाव्यते, अनुमाने च बाधः, श्रुतौ तदुभयगन्धोऽपि नास्तीति भावः। श्रुतिभिः—"नित्यो नित्यानाम्" इत्यादिश्रुतिभिस्सत्तर्कसहितस्मृतीतिहासपुराणोपबृंहिताभिः। इत्थम्—पूर्वोक्तक्रमेण। अत्र—एतदधिकरणे। दूरं निर्धूताः—दूरतो निरस्ता इत्यर्थः॥ २२८॥

इत्यात्माधिकरणम्॥ ५६॥

## ज्ञाधिकरणम् ॥ ५७ ॥

सूत्रम्—ज्ञोऽत एव ॥ २३५ ॥

कैश्चिज्ज्ञानत्वमात्रं कथितमुपधिजा ज्ञातृतैवात्मनोऽन्यैः
तत्र श्रुत्यादिबाधं प्रथयति विविधं ज्ञोऽतइत्यादिसूत्रैः ।
पूर्वन्यायादमुष्मिन् जनिलयरहिते नित्यबोधेऽत्र चोक्ते
सङ्कोचाद्यर्हबुद्धेर्विकृतिवचनमप्यस्य सद्वारकं स्यात् ॥ २२९ ॥

चिन्ता०—अत्र सङ्गतिर्भाष्ये-'वियदादिवज्जीवो नोत्पद्यत इत्युक्तम् । तत्प्रसङ्गेन जीवस्वरूपं निरूप्यते' इति । अयमर्थः—अस्मिन्पादे प्रथमद्वितीयाधिकरणयोस्साक्षात्सङ्गतिः; कार्यस्वरूपनिरूपणपरत्वात् । तृतीयस्य त्वापवादिकी नात्मोत्पद्यत इति पूर्वोत्पत्तिप्रतिषेधात् । उत्तरेषां चतुर्णामप्यधिकरणानां प्रासङ्गिकी सङ्गतिः; कार्यजीवस्वरूपनिरूपणप्रसक्तानां चतुर्णामप्यर्थानां परिशोधनात् । तृतीयचतुर्थयोस्तु विशेषतस्सङ्गतिः कथ्यते । पूर्वाधिकरणद्वये हि वियदादीनां स्वरूपान्यथाकरणेन कार्यत्वमुक्तम् । तृतीयाधिकरणे जीवस्य स्वभावान्यथाकरणेन कार्यत्वमिति विशेषितम् । तत्र पूर्वपक्षवादी प्रत्यवतिष्ठते—यदि जीवस्य ज्ञानं स्वभावः, तदा खलु भवदुक्तिरियं सङ्गच्छते । अपि तु ज्ञानं स्वरूपमेव तेन कथं विभागेन व्यवहार इत्याशङ्क्याधिकरणान्तरमारभ्यते । तदर्थविचारस्तु—किं जीवश्चैतन्यमात्रवपुः उत जडस्वरूप एवागन्तुकचैतन्योऽथवा ज्ञातृस्वरूप इति । किं ज्ञप्तिमात्रवपुष्ट्वे ज्ञानस्वरूपत्वतद्धर्मकत्वपरसर्वश्रुतिसामञ्जस्यम्, उतागन्तुकचैतन्यजडस्वरूपत्वे, उत ज्ञातृत्वैकस्वरूपत्व इति । किं ज्ञातृत्वस्य स्वरूपत्वे सर्वत्रोपलब्धिः प्रसज्यते नेति । तदर्थं किं जीवस्सर्वगत उताणुरिति । अणुत्वे विप्रकृष्टार्थग्रहणाग्रहणे सम्भवतो नेति । एकजातीयद्रव्ययोर्नियतधर्मधर्मिभाव उपपद्यते नेति । एतस्मिन्खल्वधिकरणे जीवस्य ज्ञानस्वरूपमात्रत्वं जडस्यैव तस्यागन्तुकचैतन्ययोगश्च प्रतिक्षिप्य ज्ञानस्वरूपत्वसंवलितं ज्ञातृत्वमेव स्वभाव इति स्थाप्यते । तत्र पूर्वपक्षसिद्धान्तयोरपेक्षितान्यौपनिषदवाक्यानि ये च तदर्थविशेषास्तानि सर्वाण्यपि भाष्य एव सुव्यक्तमुक्तानीति न विशेषतोवक्तव्यमिह किञ्चिदवशिष्यते । तथाप्येतदधिकरणविषयवेद्यानामनवद्यानामपि तत्रतत्रास्पृष्टावद्यत्वद्योतनाय यत्किञ्चिदिह कथ्यते । अत्र मृषावादिनः प्राहुः—ज्ञानमात्रमेवात्मतत्त्वमिति । कणचरणाक्षपादपक्षनिक्षिप्तचेतसस्तु जडस्वरूपमप्यात्मतत्त्वमागन्तुकचैतन्यगुणकमिति प्रतिपेदिरे । तदिदं पक्षद्वयमप्यनूद्य प्रतिक्षिपति—कैश्चिदित्यादिना । उपधिजा ज्ञातृता—देहाद्युपाधिप्रयुक्तेत्यर्थः । कथितेति

लिङ्गव्यत्ययः कार्यः । तत्र द्वयोरपि पक्षयोश्श्रुत्यादिबाधं ज्ञोऽतइत्यादिसूत्रैस्सूत्रकारो विविधं प्रथयतीत्यन्वयः । ज्ञ इति ज्ञातृवाचिपदम् । तेन ज्ञानस्वरूपस्यैवात्मनो ज्ञातृत्वमेव स्वभावो इत्युक्तं भवति । एकजातीययोरेव द्रव्ययोराश्रयाश्रयिभावस्सम्भवतीति प्रथमसूत्र एवोक्तमिति भाष्यकारैरेव स्पष्टमभिहितम् । ननु जीवस्वरूपनित्यत्वे तस्य च धर्मभूतज्ञाने स्वाभाविकतया नित्यत्वेन भवद्भिरङ्गीकृते सति स्वरूपस्वभावाभ्यां जीवस्य कार्यत्वाभावात् कथं वेदान्तेषु जीवोत्पत्तिवादा निर्वाह्या इत्याशङ्क्याह— पूर्वेति । पूर्वाधिकरणोक्तप्रक्रियया जीवनित्यत्वे सति, एतदधिकरणप्रक्रियया तज्ज्ञाननित्यत्वे च सति ज्ञानसंकोचविकासाभ्यामुत्पत्तिविनाशव्यवहारो घटत इत्यर्थः । अयमत्र शब्दान्वयः—पूर्वाधिकरणोक्त-न्यायादमुष्मिन् जीवात्मनि जनिलयरहिते पुनरत्र नित्यबोधे चोक्ते सति संकोचाद्यर्हबुद्धियोगाद् विकृतिवचनमप्यस्य सद्वारकं ज्ञानद्वारकं स्यादिति । अत्र ज्ञानस्य सङ्कोचविकासार्हत्वं 'प्रदीपव-दावेशः' इत्यादिषु सूत्रकारैरेव साधयिष्यते ॥ २२९ ॥

पद०—कैश्चिदित्यादि । कैश्चित्—मृषावादिभिः । आत्मनः—जीवात्मनः । ज्ञानत्व-मात्रम्—ज्ञानमात्रस्वरूपत्वम् । कथितम् । अन्यैः—काणादैः । आत्मनः, उपधिजा—देहाद्युपाधि-प्रयुक्ता ज्ञातृतैव । कथिता—उक्ता । लिङ्गव्यत्ययः कार्यः । तत्र—द्वयोरपि पक्षयोः । श्रुत्यादि-बाधम्—'जानात्येवायं पुरुषः' 'न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते' 'विज्ञानं यज्ञं तनुते' इत्यादि-श्रुतिबाधम्, आदिशब्देन जीवात्मनो ज्ञानस्वरूपत्वज्ञातृत्वपरास्स्मृतय उच्यन्ते तासाञ्च बाधम् । ज्ञोऽत-इत्यादिसूत्रैस्सूत्रकारो विविधं प्रथयति—प्रख्यापयति । पूर्वन्यायात्—पूर्वाधिकरणोक्तन्यायात् । अमुष्मिन्—जीवात्मनि । जनिलयरहिते—स्वरूपेणोत्पत्तिनाशरहिते प्रतिपन्ने सति । अत्र—'ज्ञोऽतः' इत्यधिकरणे । नित्यबोधे चोक्ते—ज्ञातृत्वालोपश्रुत्या नित्यज्ञाने च प्रतिपादिते सति । सङ्कोचाद्यर्हबुद्धेः—आदिशब्दो विकासपरः । 'प्रदीपवदावेशः' इत्यादिस्थलेषु सूत्रकारैरेव ज्ञानस्य सङ्कोचविकासार्हत्वं साधयिष्यते, अतस्संकोचविकासार्हबुद्धियोगात् । विकृतिवचनमपि— उत्पत्तिनाश-वचनमपि । अस्य—जीवात्मनः । सद्वारकं स्यात्—ज्ञानद्वारकमेव भवेत् ॥ २२९ ॥

ज्ञातृत्वं ज्ञानता च श्रुतिभिरभिदधे नात्र पक्षे पतामः
सर्वत्रात्मा न भायात्किमिति न निगमैर्देहिनोऽणुत्वसिद्धेः ।
स्वाभासैकस्वमूर्तेरविशदमहमस्सर्वदा भानमिष्टं
धीसङ्कोचात् सुषुप्तिप्रभृतिषु विशदोल्लेखमात्रोपरोधः ॥ २३० ॥

चिन्ता०—पूर्वं खलु ज्ञानमात्रमागन्तुकमिति न्यायवादिभिरुक्तं न पुनर्ज्ञातृत्वम् , मृषावादिभिस्तु ज्ञानत्वं नित्यसिद्धं ज्ञातृत्वं तु तत्त्वतो नास्त्येवाथाप्यविद्यापरिकल्पितमित्युक्तम् , अस्माभिस्तूभयस्मिन्नपि पक्षे पक्षपातं परित्यज्य ज्ञानत्ववत् ज्ञातृत्वमपि स्वाभाविकमित्युच्यत इत्याह—ज्ञातृत्वमित्यादिना । श्रुतिभिः किल 'जानात्येवायं पुरुषः' इत्यादिना ज्ञातृत्वमभिधीयते । 'यो विज्ञाने तिष्ठन्' 'विज्ञानं यज्ञं तनुते' इत्यादिना ज्ञानत्वमप्यभिधीयते । तेन वयमपक्षपातात् ज्ञानत्वं ज्ञातृत्वमुभयमप्यात्मनः परिगृह्णीम इत्यर्थः । अत्र चोदयति—सर्वत्रेति । जीवस्तावन्महदादिशब्दश्रवणाद्विभुरेव तथा च तस्य ज्ञानस्वरूपत्वे स्वाभाविकज्ञानगुणकत्वे च सर्वतः प्रकाशेतेति । परिहरति-नेति । 'एषोऽणुरात्मा चेतसा वेदितव्यः' इत्यादिभिर्निगमशतैर्जीवस्याणुत्वसिद्धेः । उक्तमतिप्रसङ्गं विकल्प्य दूषयति—स्वाभासेति । ज्ञानस्वरूपआत्मा सुषुप्त्यादावपि नित्यं प्रकाशते । तत्र किं विशदज्ञानं प्रसज्यते ? उताविशदज्ञानम् ? अविशदं चेदिष्टमेव ; नित्यमेवात्मस्वरूपमात्रप्रकाशस्याङ्गीकारात् । विशदं चेतन्न स्यादेव ; अत्र सुप्तोऽहमीदृशोऽहमित्यादिविशदप्रकाशस्य निद्रादिदोषदूषितधर्मभूतज्ञानसंकोचेनाप्रसञ्जनीयत्वात् । तदिदं सर्वमभिप्रेत्याह—धीसङ्कोचादिति । धर्मभूतज्ञानसङ्कोचात् सुषुप्तिप्रभृतिष्वात्मविषयं विशदज्ञानमुपरुध्यते , अविशदं तु स्वरूपज्ञानं सुषुप्तावप्यनुवृत्तमेवेति न कश्चिद्दोषः ॥ २३० ॥

पद०—ज्ञातृत्वमित्यादि । श्रुतिभिः—पूर्वोदाहृताभिः । ज्ञातृत्वमभिदधे—ज्ञातृत्वमभिहितम् । ज्ञानता चाभिदधे—ज्ञानस्वरूपता चाभिहिता । अत्र—एवं तुल्यप्रमाणप्रतिपन्ने स्वभावद्वये । पक्षे—अन्यतरमात्राङ्गीकाररूपे । न पतामः—न प्रविशामः । उभयोस्तुल्यत्वादिति भावः । आत्मा—व्यापकोऽयं जीवात्मा । सर्वत्र—देहे देहादन्यत्र च । किमिति न भायात्—कुतो न भासेत । विभुर्ज्ञानस्वरूपस्स्वाभाविकज्ञानगुणकश्चायमात्मा सर्वतः कुतो न प्रकाशेतेति शङ्का । इति न—इयं शङ्का न युक्ता । कुत इति चेत् विभुत्वाभावादित्युत्तरमुच्यते, निगमैः—श्रुतिभिः । देहिनः—जीवात्मनः । अणुत्वसिद्धेः—अणुत्वेन प्रतिपन्नत्वात् । देहे सर्वदा भासेतेत्यत्र प्रत्युच्यते, स्वाभासैकस्वमूर्तेः—स्वप्रकाशैकस्वरूपस्य । अहमः—अहमित्युल्लिख्यमानस्य जीवात्मस्वरूपस्य । अविशदम्—जाग्रद्दशाप्रसिद्धवर्णाश्रमाद्यनेकविशेषानवभासनेन वैशद्यरहितम् । भानम्—भासनम् । सर्वदा—सर्वास्वस्थास्वपि, सुषुप्त्यादावपीत्यर्थः । इष्टम्—अङ्गीकृतम् । देहे सर्वदा जीवो भासत एवेति भावः । सुषुप्तिप्रभृतिषु—सुषुप्तिमूर्च्छादिदशासु । धीसङ्कोचात्—धर्मभूतज्ञानस्य तदा सङ्कुचितत्वेन । विशदोल्लेखमात्रोपरोधः—विशदोल्लेखमात्रस्य अत्र सुप्तोऽहमीदृशोऽहमित्यादिजाग्रद्दशाप्रसिद्धविशेषोल्लेखमात्रस्य उपरोधो निवृत्तिः । अविशदावभासस्तु तदानीमपि विद्यत एवेति भावः ॥ २३० ॥

धर्मस्थे त्वेवकारे त्रिविधमपि भवेत् तद्व्यवच्छेदकत्वं
धर्मिण्यस्यान्वये स्यात्तदितरविषये तस्य धर्मस्य हानिः ।
जानात्येवेत्यवोद्धा न भवति जडता ज्ञानमात्रोक्तिवार्या
ज्ञानालोपादिवाक्यानुगुणविषयतां यात्यसावेवकारः ॥ २३१ ॥

चिन्ता०—उक्तमेव ज्ञातृत्वं ज्ञानस्वरूपत्वञ्च विशदमेव श्रुतिभिरुपपादयिष्यन् 'जानात्येवायं पुरुषः' इति श्रुत्यर्थं तावदाह—धर्मस्थ इति । अत्र जानात्येवेत्येवकारः प्रयुज्यते । एवकारस्य त्रिविधो ह्यर्थविभाग उच्यते ।

'विशेषणविशेष्याभ्यां क्रियया च समन्वितः ।
अयोगं योगमपरैरत्यन्तायोगमेव च ॥
व्यवच्छिनत्ति धर्मस्य निपातो व्यतिरेकतः ॥' इति ।

यद्यप्येवं धर्मस्थेनैवकारेण विवक्षावशात् त्रिविधमप्यवधारणं कर्तुं शक्यते, अथाप्ययोगव्यवच्छेद एव प्रधानतया विवक्ष्यते । धर्मिस्थे त्वेवकारे धर्मस्यान्ययोगव्यवच्छेद इति सुप्रसिद्धमेव । अत्र पुनर्जानात्येवेति धर्मस्थो ह्येवकारो ज्ञातृत्वायोगव्यवच्छेदमेव प्रतिष्ठापयतीत्याह—जानातीति । अबोद्धा न भवति कदाचिदपि ज्ञानशून्यो न भवत्यात्मेत्यर्थः । तेन ज्ञातृत्वं स्थापितम् । ज्ञानस्वरूपत्वमपि श्रुत्यैव स्थापयति—जडतेति । 'विज्ञानं यज्ञं तनुते' इति श्रुतिरत्र विवक्ष्यते । एवं श्रुत्यर्थज्ञानत्वमुपपाद्य सिंहावलोकनन्यायेन एवकारार्थं पुनरपि परामृश्योपपादयति—ज्ञानेति । 'न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते' इति श्रुत्यर्थं जीवस्य ज्ञानलोपाभावमेवकारो निर्धारयन् तदानुगुण्यमेव भजत इति ॥ २३१ ॥

पद०—'जानात्येवायं पुरुषः' इति श्रुत्यर्थनिर्णयः क्रियते—धर्मस्थेत्वित्यादि । धर्मस्थे तु—धर्मवाचिपदान्विते । एवकारे त्रिविधमपि तद्व्यवच्छेदकत्वं भवेत्—विवक्षावशादयोगव्यवच्छेदकत्वमन्ययोगव्यवच्छेदकत्वमत्यन्तायोगव्यवच्छेदकत्वञ्चेति त्रिविधमपि धर्मव्यवच्छेदकत्वं भवेत् । अस्य—एवकारस्य । धर्मिणि अन्वये सति—धर्मिवाचकपदेन अन्वये सति । तस्य धर्मस्य, तदितरविषये—धर्मीतरविषये । हानिः—निवृत्तिः । स्यात्—प्रतीता स्यात् । अत्र त्वयोगव्यवच्छेद एव प्रधानतया विवक्ष्यत इत्याह—जानात्येवेति । जानात्येवेति—धर्मवाचिपदान्वितेनानेन एवकारेण । अबोद्धा न भवति—आत्मा कदाप्यज्ञाता न भवतीति सिध्यति । ज्ञातृत्वमात्मनो नित्यमितिफलितमिति भावः । जडता—आत्मनो जडरूपता तु । ज्ञानमात्रोक्तिवार्या—'विज्ञानं यज्ञं तनुते' इति ज्ञानस्वरूपता-

प्रतिपादकश्रुत्या निवारणीया । तया ज्ञानस्वरूपत्वं सिद्धमित्यर्थः । सिंहावलोकनन्यायेन पुनरप्ये-वकारार्थं परामृश्योपपादयति—ज्ञानालोपेत्यादि । असावेवकारः—जानात्येवेत्यसावेवकारः । ज्ञानालोपादिवाक्यानुगुणाधिपयतां याति—'न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते' इत्यादिश्रुतिवाक्यार्थभूतं जीवस्य ज्ञानलोपाभावं निर्धारयन् तदनुगुणार्थपरत्वं भजते । श्रुत्यन्तरानुगुण्याच्चायोगव्यवच्छेद एवास्यार्थो युक्त इत्यर्थः ॥ २३१ ॥

उत्क्रान्तिस्पन्दनाणूपमितिवचनतोऽणीयसश्शक्तिलाभे
धीभूम्ना यौगपद्यं त्ववयवनयतोऽनेकमूर्तिग्रहेऽपि ।
यत्राम्नातं विभुत्वं परविषयमिदं भाति तात्पर्यलिङ्गैः
जीवे व्यापित्ववादो मतिमहिमपरस्स्वच्छताद्याशयो वा ॥ २३२ ॥

इति ज्ञाधिकरणम् ॥ ५७ ॥

चिन्ता०—अस्मिन्खल्वधिकरणे ज्ञानस्वरूपस्यात्मनो विभुत्वे सर्वत्रोपलम्भप्रसङ्ग इत्याद्यनिष्टप्रसङ्ग-परिहारार्थं सूत्रकारैरेवाणुत्वं श्रुतिभिरुपपादितम् । महत्त्ववचनस्यान्यथासिद्धिरपि भाष्यकारैरुपपादिता । तदिदं सुखग्रहणाय संगृह्णाति—उत्क्रान्तीति । 'उत्क्रान्तिगत्यागतीनाम्' इत्यादिसूत्रोक्तं देहादुत्क्रमणं देशान्तरगमनं पुनरागमनम्, 'वालाग्रशतभागस्य' 'आराग्रमात्रो ह्यवरोऽपि दृष्टः' इत्याद्यणुद्रव्योपमानम्, 'एषोऽणुरात्मा चेतसा वेदितव्यः' इति साक्षादणुत्ववचनम्, एवमादितोऽणुत्वेन सिद्धस्यापि जीवस्य शक्तिलाभे योगादिसामर्थ्यलाभे कथमनेकशरीरपरिग्रह इति चोद्यमेव हि परेषामभिमतम्, तत्परिहृतमेव, धर्मभूतज्ञानविकासेन सूत्रकारैरेव 'प्रदीपवदावेशः' इत्यादिना प्रसाधितत्वात् । इदमेवैकस्मिन्नपि शरीरे पादे मे वेदना शिरसि मे सुखमिति जीवस्याणोरपि नानावयवप्रयुक्तसुखदुःखानुसन्धानेन समानमित्याह—अवयवनयत इति । अयमत्रान्वयः—अनेकदेहग्रहणेऽप्यणुतया प्रमाणसिद्धस्य जीवस्य यौगपद्यमनेकावयवेषु सुखदुःखप्रतिसन्धानवदुपपद्यत इति । यथा प्रदीपस्यैकत्रावस्थितस्यापि प्रभया धर्मभूतया तत्तत्प्रकाशकारणत्वम्, एवमणोरपि जीवस्य प्रभास्थानीयेन धर्मभूतज्ञानेन तत्तत्प्रकाशकत्वमपि युज्यत इति सन्तोष्टव्यमायुष्मता । विस्तरस्तूत्तरत्र भविष्यति । तर्हि तर्कं परित्यजामः, जीवस्य महत्त्वप्रतिपादकश्रुतिमवलम्ब्याणुत्वं निराकुर्म इत्याशङ्क्य यत्र विभुत्वमुच्यते तत्परमात्मविषयतया नेतव्यमित्याह—यत्रेति । परमात्मविषयकत्वनियामकलिङ्गमाह—तात्पर्यलिङ्गैरिति । तात्पर्यलिङ्गपरामर्शाभावे 'पौर्वापर्यापरामृष्टश्शब्दोऽन्यां कुरुते मतिम्' इति न्यायस्स्यादित्यर्थः । ननु 'नित्यो

व्यापी' इति जीवस्य व्यापित्वं सर्वाचार्यसम्मतयामुनाचार्यैरेवोच्यते तत्कथमित्याशङ्क्याह—जीव-इति। जीवविभुत्ववादः 'स चानन्त्याय कल्पते' इति धर्मभूतज्ञानव्याप्त्या वा सौक्ष्म्यात् सर्वाचेतनान्तःप्रवेशसामर्थ्याद्वा भवतीति न कश्चिद्विरोधः ॥ २३२ ॥

इति ज्ञाधिकरणम् ॥ ५७ ॥

पद०—उत्क्रान्तीत्यादि। उत्क्रान्तिस्पन्दनाणूपमितिवचनतः—उत्क्रान्तिर्देहान्निष्क्रमणं स्पन्दनं गमनागमनरूपम्, अणूपमितिस्सूक्ष्मद्रव्येणोपमानम्, एतेषां वचनतः—'तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुषो वा मूर्ध्नो वान्येभ्यो वा शरीरदेशेभ्यः' इत्युत्क्रान्तिवचनम्। 'ये वैकेचास्माल्लोकात् प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मणे' इति गत्यागतिरूपस्पन्दनवचनम्। 'वालाग्रशतभागस्य शतधाकल्पितस्य च। भागो जीवस्स विज्ञेयः' इत्यणूपमितिवचनम्। एतेभ्यो वचनेभ्यः। अणीयसः—अणुत्वेन सिद्धस्यात्मनः। शक्तिलाभे—योगादिसामर्थ्यलाभे सति। धीभूम्ना—धर्मभूतज्ञानविकासेन। अनेकमूर्तिग्रहेऽपि—अनेकदेहपरिग्रहेऽपि। अवयवनयतः—एकस्मिन्नपि शरीरे पादे मे वेदना शिरसि मे सुखमिति जीवस्याणोरपि नानावयवप्रयुक्तसुखदुःखानुसन्धानन्यायेन। यौगपद्यन्तु—तत्तच्छरीरप्रयुक्तसुखदुःखप्रतिसन्धानयौगपद्यम्। उपपन्नमिति शेषः। यत्र—यस्मिन्प्रकरणे 'स वा एष महानज आत्मा' इत्यादौ। विभुत्वमाम्नातम्—उक्तम्। इदम्—प्रकरणम्। तात्पर्यलिङ्गैः—'यस्यानुवित्तः प्रतिबुद्ध आत्मा' इत्यादिवाक्यावगतैः जीवोपास्यत्वादिपरमात्मासाधारणलिङ्गैः। परविषयं भाति—परविषयकमिति प्रतीयते। जीवे—जीवविषये। व्यापित्ववादः—'नित्यो व्यापी प्रतिक्षेत्रमात्मा भिन्नस्स्वतस्सुखी' इत्यादियामुनाचार्यादीनां व्यापित्वप्रवादः। मतिमहिमपरः—'स चानन्त्याय कल्पते' इति श्रुतिसिद्धधर्मभूतज्ञानमहत्त्वपरः। स्वच्छताद्याशयो वा—सौक्ष्म्यं सर्वाचेतनान्तःप्रवेशसामर्थ्यं वाभिप्रैतीति भावः ॥ २३२ ॥

इति ज्ञाधिकरणम् ॥ ५७ ॥

## कर्त्रधिकरणम् ॥ ५८ ॥

### सूत्रम्—कर्ता शास्त्रार्थवत्त्वात् ॥ २४९ ॥

ज्ञातृत्वं पुंस इत्थं भवतु तदपि नामुष्य कर्तृत्वसिद्धिः
श्रुत्याद्यैस्तन्निषेधाद्विकृतिविरहतश्चेत्यसद् दृष्टबाधात् ।
कर्तृत्वापह्नवोक्तेरविकृतिवचसोऽप्यान्यपर्यं हि गीतं
कर्ता शास्त्रार्थवत्त्वात्तदयमिह न च स्यादवोढुर्नियोगः ॥ २३३ ॥

चिन्ता०—अत्र सङ्गतिर्भाष्ये 'अयमात्मा ज्ञाता स चाणुपरिमाण इत्युक्तम् । इदानीं किं स एव कर्ता, उत स्वयमकर्तैव सन्नचेतनानां गुणानां कर्तृत्वमात्मन्यध्यस्यतीति चिन्त्यते' इति । अयमर्थः—ज्ञानचिकीर्षाप्रयत्नवतः कर्तृत्वात् कर्तृत्वोपयुक्तज्ञातृत्वनिरूपणानन्तरं तदेव कर्तृत्वं निरूप्यत इति । भोक्तृत्वमपि कर्तृत्वफलत्वात् कर्तृत्वेन सह निरूपितं भवति । तदर्थविचारस्तु—किमात्मैव कर्ता उत प्रधानमिति । किमात्मनः कर्तृत्व एव ज्योतिष्टोमादिशास्त्राणामर्थवत्त्वमुत प्रधानस्य कर्तृत्व इति । कर्तृत्वनिषेधः किमात्मनः कर्तृत्वे सम्भवति नेति । पूर्वोत्तराधिकरणयोस्सङ्गत्यभिधानपूर्वकं पूर्वपक्षं वदति—ज्ञातृत्वमिति । ज्ञातृत्वमुक्तप्रकारेण भवतु नाम । तथापि नामुष्य जीवस्य कर्तृत्वं सिध्यति श्रुतिस्मृत्यादिभिस्तत्रतत्र जीवात्मनः कर्तृत्वनिषेधात् । 'हन्ता चेन्मन्यते हन्तुं हतश्चेन्मन्यते हतम्' इति श्रुतिः । स्मृतिरपि 'प्रकृतेः क्रियमाणानि' इति । विकृतिविरहतः 'अच्छेद्योऽयमदाह्योऽयम्' इत्यादिना विकृतिप्रतिषेधात् कर्तृत्वस्यापि विकृतिरूपत्वादित्यर्थः । उक्तमर्थं प्रतिक्षिपति—असदिति । तत्रहेतुमाह—दृष्टबाधादिति । दृष्टं हि शयनासनभोजनादिषु कर्तृत्वं जीवस्य, तन्निषिध्यमानं प्रत्यक्षादिसकलप्रमाणबाधितमित्यर्थः । न केवलं प्रमाणविरोधः, स्ववचनविरोधस्यापि विद्यमानत्वादितीममर्थं प्रदर्शयति—कर्तृत्वापह्नवोक्तेरिति । यदि कर्तृत्वमपह्नोति नाहं कर्तास्मीति तदा स्ववचनविरोधस्तत्रैव कर्तृत्वात् । यदि नापह्नोति अस्मदीयत्वाद्वयमपि सन्तुष्यामः । तर्ह्यात्मनो विकाराभाववचनं कर्तृत्वाङ्गीकारे कथमुपपद्यत इत्याशङ्क्य तदपि भगवतैवान्यपरत्वेन निर्व्यूढमित्याह—अविकृतीति । अयमत्र 'कार्यकारणकर्तृत्वे हेतुः' इत्यादेर्गीतावचनस्य भावः—जीवस्य कर्तृत्वं न नित्यसिद्धम्, अपितु प्रकृतिसम्बन्धप्रयुक्तमिति । न च तन्मिथ्या औपाधिकस्य कर्तृत्वस्य सर्वदोपलभ्यमानत्वादिति । उपपादितमर्थं सौत्रक्रमेण

निगमयति—कर्त्तेति । तत् तस्मात्, इत्थमुपपादनादित्यर्थः । शास्त्रार्थवत्त्वात्—शास्त्रस्य प्रयोजनवत्त्वादित्यर्थः । कर्तुर्जीवस्य सद्भावे हि शास्त्रस्य प्रयोजनवत्त्वं सिध्यति, अन्यथाननुष्ठानलक्षणाप्रामाण्यप्रसङ्गादित्यर्थः । तर्ह्यचेतनस्य देहस्यैव शास्त्रनियोज्यत्वमित्याशङ्क्य प्रतिक्षिपति—नचेति । यस्तु नियोगं जानीते स एव हि नियोज्यः । अबोद्धुर्देहस्य कथमिव नियोज्यत्वमभिधातुं शक्यत इति ॥२३३॥

पद०—ज्ञातृत्वमित्यादि । पुंसो ज्ञातृत्वमित्थं भवतु—जीवात्मनो ज्ञानाश्रयत्वमुक्तप्रकारेण भवतु नाम । तदपि—तथापि । अमुष्य—जीवस्य । कर्तृत्वसिद्धिर्न—कर्तृत्वं न सिध्यति । कुत इति चेत् श्रुत्याद्यैस्तन्निषेधात्—

'हन्ता चेन्मन्यते हन्तुं हतश्चेन्मन्यते हतम् ।
उभौ तौ न विजानीतो नायं हन्ति न हन्यते ॥'
'प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः ।
अहङ्कारविमूढात्मा कर्ताहमिति मन्यते ॥'

इति श्रुतिस्मृतिभ्यां जीवस्य कर्तृत्वनिषेधात् । विकृतिविरहतश्च—'अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च' इत्यादिना विकृतिप्रतिषेधाच्च । इत्यसत्—इत्याशङ्कनमयुक्तम् । दृष्टबाधात्—दृष्टविरोधात् । दृष्टं हि शयनासनादिषु कर्तृत्वं जीवस्य, तन्निषिध्यमानं प्रत्यक्षादिसकलप्रमाणबाधितमित्यर्थः । स्ववचनविरोधं प्रदर्शयति—कर्तृत्वापह्नवोक्तेरिति । यदि कर्तृत्वमपह्नोति नाहं कर्तास्मीति तदा स्ववचनविरोधः; तदैव कर्तृत्वात्, यदि नापह्नोति तदा अस्मदीयत्वात् वयमपि तुष्याम इति भावः । अविकृतिवचसोऽपि—जीवनिर्विकारत्ववचनस्यापि । आन्यपर्यम्—जीवस्य कर्तृत्वं न नित्यसिद्धम्, अपितु प्रकृतिसम्बन्धप्रयुक्तम्, नच तन्मिथ्या; औपाधिकस्य कर्तृत्वस्य सर्वदोपलभ्यमानत्वात् इत्येतदभिप्रायकत्वम् । गीतं हि—

'तत्रैवं सति कर्तारमात्मानं केवलं तु यः ।
पश्यत्यकृतबुद्धित्वात् न स पश्यति दुर्मतिः ॥'

इत्यादिना गीतावचनेनैव प्रतिपादितं हि । तत्—तस्मात् इत्थमुपपादनात् । अयम्—जीवः । शास्त्रार्थवत्त्वात्—शास्त्रस्य प्रयोजनवत्त्वात् । यथानियोगं कर्तुर्जीवस्य सद्भावे हि शास्त्रस्य प्रयोजनं सिध्येत् । अन्यथाननुष्ठानलक्षणाप्रामाण्यप्रसङ्गादित्यर्थः । कर्ता—कर्तृत्वयुक्तः । इह—सिद्ध इति शेषः । तर्ह्यचेतनस्य देहस्यैव कर्तृत्वमस्त्वित्यत्राह—नचेति । अबोद्धुः—नियोगमविजानतः । नियोगश्च न

स्यात्—यस्तु नियोगं जानाति स एव हि नियोज्यः, अबोद्धुर्देहस्य कथमिव नियोज्यत्वमभिधातुं शक्यत इति भावः ॥ २३३ ॥

किञ्च स्वोक्त्यादिभग्नो निगदितुरहमः कर्तृताया निषेधो
यद्यन्यस्याहमर्थात्तदिदमुपनिषद्वेदिनस्सिद्धसाध्यम् ।
भोक्तृत्वस्याप्यभावे प्रसजति वितथं बन्धमोक्षादिशास्त्रं
प्राणादानाद्विहारात्प्रकृतिसमधिकोऽस्मीतियोगाच्च कर्ता ॥ २३४ ॥

चिन्ता०—अथ कर्तृत्वनिषेधवादिनं विषयभेदेन विकल्प्य दूषयित्वा तत्रतत्र कर्तृत्वसहपठितं भोक्तृत्वमपि विशदमेव स्थापयति—किञ्चेति । अयमत्र विकल्पः—अहमः कर्तृत्वं नास्तीति वदन् वक्तुः स्वस्य वा अहमर्थवचनादौ कर्तृत्वं निषेधति ? किं वा अचिद्वस्तुविशेषस्याहङ्कारस्य ? यदि पूर्वः पक्षःपरिगृह्यते तदा स्ववचनविरोध इति प्रागेवोक्तम् । यद्युत्तरः पक्षः—तदा अहङ्कारस्य प्रकृतिकार्यत्वेनाकारणत्वादकर्तृत्व-वचनं सिद्धसाधनमेव । अहमर्थादन्यस्य यदीति—आत्मनोऽन्यस्याहङ्कारस्य यद्यकर्तृत्वमुच्यत इत्यर्थः । उपनिषद्वेदिनः—देहातिरिक्तात्मयाथात्म्यवादिनो वेदान्तिन इत्यर्थः । न ह्यहङ्कारस्य कर्तृत्वं वयमनुमन्यामहे । इत्थं कर्तृत्वमुपपाद्य तत्तुल्यन्यायेन भोक्तृत्वमप्युपपादयति—भोक्तृत्वस्येति । कर्तृत्वभोक्तृत्वे हि वीवधघटन्यायेन सहैवावतिष्ठेते इति सर्वलोकसिद्धमेतत्, यः पुण्यमेव वा पापमेव वा करोति स एव तत्फल-मुपभुङ्क्ते नापर इति सार्वलौकिकी प्रसिद्धिः । भोक्तृत्वाभावे सकलमपि बन्धमोक्षादिशास्त्रं वितथमेव प्रसजेत् । किञ्च कर्तृत्वं सर्वथा न परित्याज्यं पामरपरीक्षकाविशेषेणोच्छ्वासनिश्श्वासादिसर्वव्यापारेषु कर्तृत्वस्यैव सुप्रसिद्धत्वात् । प्राणादानादिति प्राणव्यापारे हेतुत्वमुच्यते । विहारादिति चरणादिव्यापार-कर्तृत्वम् । प्रकृतिसमधिकोऽस्मीतियोगादिति प्रकृतिविलक्षणात्मध्यानादित्यर्थः । चार्वाकव्यतिरिक्ता हि सर्ववादिनो देहातिरिक्तमात्मानं ध्यायन्ति तत्रैव तेषां कर्तृत्वमपरित्याज्यमित्यर्थः ॥ २३४ ॥

पद०—किञ्चेत्यादि । किञ्च—युक्त्यन्तरञ्चास्ति । कर्तृताया निषेधः—आत्मनः कर्तृत्वं नास्तीति कर्तृत्वनिषेधः । निगदितुरहमो यदि—वक्तुरहमर्थस्य चेत् । स्वोक्त्यादिभग्नः—स्ववचनादिभिर्वि-रोध इति प्रागेवोक्तम् । अहमर्थादन्यस्य यदि—अहमर्थादात्मनोऽन्यस्याहङ्काराद्यचिद्वस्तुनो यदि स निषेधः । तदिदम्—अहङ्काराद्यकर्तृत्ववचनम् । उपनिषद्वेदिनः—देहातिरिक्तात्मयाथात्म्यवेदिनो वेदा-न्तिनः । सिद्धसाध्यम्—सिद्धं साध्यं यस्यानुमानस्य तत् सिद्धसाध्यं सिद्धसाधनमित्यर्थः । भोक्तृ-

त्वस्याप्यभावे—एवं भोक्तृत्वानङ्गीकारेऽपि । बन्धमोक्षादिशास्त्रं वितथं प्रसजति—पुण्यापुण्यकर्ममूलकसुखदुःखभोक्तृत्वमेव हि बन्धः, कर्मनिवृत्त्या तन्निवृत्तिर्हि मोक्षः, यदि भोक्तृत्वमेव न स्यात् तदा बन्धस्यैवाभावात् तन्मोक्षणशास्त्रमनर्थकमेवेति भावः । प्राणादानात्—'स यथा महाराजः' इति प्रकृत्य 'एवमेवैष एतान् प्राणान् गृहीत्वा स्वे शरीरे यथाकामं परिवर्तते' इति प्रतिपन्नात् प्राणानां स्वभोगोपकरणतया ग्रहणात् । विहारात्—तैस्साकं क्रीडनात्, चरणादिव्यापारादिति वाऽर्थः । प्रकृतिसमाधिकोऽस्मीति योगाच्च—अचेतनेऽसम्भावितात् प्रकृतेरन्योऽस्मीत्येवंरूपात् समाधेश्च । कर्ता—आत्मा कर्तैव ॥ २३४ ॥

व्यापारज्ञानवाञ्छाप्रशकनयतनायोगयुक्तिस्तु मन्दा
कार्ये सामग्र्यपेक्षे विधितदितरयोर्लोकसिद्धा प्रवृत्तिः ।
सार्थं शास्त्रं हितोक्त्या नियतिनियमिता शास्त्रयोग्या दशा सा
ज्ञाता कर्ता च भोक्ता तदयमिह पुमान्भाति सर्वैः प्रमाणैः ॥ २३५ ॥

इति कर्त्रधिकरणम् ॥ ५८ ॥

चिन्ता०—इत्थंज्ञातृत्वकर्तृत्वभोक्तृत्वादीनि जीवनिष्ठानीत्युपपाद्य तदुपयुक्तं गुणजातमपि तन्निष्ठमेवेति विशदं प्रकाशयन् शास्त्रस्यार्थवत्त्वं जीवस्य कर्तृत्वादिषु सिद्धेष्वेव सिध्यतीत्युपपाद्य पूर्वोत्तराधिकरणार्थमुपसंहरति—व्यापारेति । लोके हि विधौ निषेधे वा कर्तुरधिकारिणो व्यापारादिकं विशेषणजातं सामग्र्यनुप्रविष्टमेव । सामग्र्या हि सर्वकार्योत्पत्तिरिति न्यायवादिनो वदन्ति । तेन कुर्यान्नकुर्यादिति विधिनिषेधशास्त्राधिकारिणो नरस्योपयुक्तानि विशेषणान्यपरित्याज्यानीत्यर्थः । व्यापारः—देहव्यापारः कर्तृत्वानुबन्धी । ज्ञानं ज्ञातृत्वमेव । वाञ्छा भोक्तुमभिलाषः । प्रशकनं शक्तिः । सा पुनस्सार्वत्रिकी । यतनं प्रयत्नः । एते जीवे न सन्तीत्ययोगोपपादनं मन्दप्रलाप एव । मान्द्यमेवोपपादयति—कार्य इति । प्रवृत्तिरूपे निवृत्तिरूपे वा तत्तत्कार्ये स्वोचितसामग्रीसापेक्षे सति विधिशास्त्रे निषेधशास्त्रे च तत्तदनुगुणप्रवृत्तिस्सर्वलोकामसिद्धा । तेन ज्ञातृत्वकर्तृत्वभोक्तृत्ववत् तदनुगुणं गुणजातमपि जीवस्यावर्जनीयमित्यर्थः । अत्र 'कर्ता शास्त्रार्थवत्त्वात्' इति सूत्रार्थं प्रकटयन् प्राचीनकर्मपरिपाकविशेषाच्छास्त्रानुष्ठानयोग्यावस्था जीवस्य सिध्यतीत्याह—सार्थमिति । हितोक्त्या सार्थं शास्त्रं हितञ्च कर्तुरधिकारिणः । तेन कर्तृत्वाभावे शास्त्रमेव भज्येत । सा च शास्त्रयोग्या दशा नियतिनियमिता प्राचीनकर्मपरिपाकविशेषात्

सिध्यतीत्यर्थः । तेनान्यस्यापि भवेदित्यादिकं चोद्यजातमपाकृतम् । तस्मात् सर्वैः प्रमाणैर्ज्ञाता कर्ता भोक्ता च पुमान् भातीति निगमयति—ज्ञातेति ॥ २३५ ॥

इति कर्त्रधिकरणम् ॥ ५८ ॥

पद०—व्यापारेत्यादि । व्यापारज्ञानवाञ्छाप्रशकनयतनायोगयुक्तिस्तु—व्यापारो देहव्यापारः, ज्ञानं कर्तृत्वानुबन्धिज्ञातृत्वम्, वाञ्छा भोक्तुमभिलाषः, प्रशकनं शक्तिः, यतनं प्रयत्नः, तेषां अयोगयुक्तिः—व्यापारादयो जीवे न विद्यन्त इत्युपपादनम् । मन्दा—अर्थसाधनासमर्था । यतः कार्ये सामग्र्यपेक्षे विधितदितरयोः प्रवृत्तिर्लोकसिद्धा—प्रवृत्तिरूपे निवृत्तिरूपे वा कार्ये स्वोचितकारणकलापसापेक्षे सत्येव विधिनिषेधशास्त्रार्थयोस्तदनुगुणप्रवृत्तिस्सर्वलोकसिद्धा । सर्वलोकप्रसिद्धविधिनिषेधशास्त्रार्थप्रवृत्त्युपयुक्तकारणकलापघटकत्वेनावश्यकानां व्यापारज्ञानवाञ्छाप्रशकनयतनानामयोगोपपादनं मन्दमिति भावः । हितोक्त्या—उत्तरकालिकसुखहेतुव्यापारबोधनेन । शास्त्रं सार्थम्—विधिनिषेधरूपं शास्त्रं सप्रयोजनम् । हितञ्च कर्तुरधिकारिणः, तेन कर्त्रभावे शास्त्रमेव भज्येतेति भावः । सा—प्रसिद्धा । शास्त्रयोग्या दशा—विधिनिषेधशास्त्रार्थानुष्ठानोपयोगिनी मनुष्यशरीरादिसम्बन्धावस्था च । नियतिनियमिता—प्राचीनकर्मपरिपाकविशेषरूपनियतिसम्पादिता सिध्यति । तत्—तस्मात् । अयं पुमान्—अयं जीवात्मा । इह—शास्त्रे अधिकरणे वा । सर्वैः प्रमाणैः—प्रत्यक्षादिसकलप्रमाणैरपि । ज्ञाता कर्ता भोक्ता च भाति—प्रथमतः किञ्चिद्वस्तु ज्ञातुं ततस्तत्साधनमनुष्ठातुं पश्चात्तल्लाभजं सुखमनुभोक्तुञ्च प्रभवतीति प्रतीयत इत्यर्थः ॥ २३५ ॥

इति कर्त्रधिकरणम् ॥ ५८ ॥

## परायत्ताधिकरणम् ॥ ५९ ॥

सूत्रम्—परात्तु तच्छ्रुतेः ॥ २५६ ॥

कर्ता न ह्यन्यतन्त्रस्स्मरति खलु तथा पाणिनिश्चान्यथा चेत्
आज्ञा कुर्यान्न कुर्यादिति तु निगलिते धावनादेशवत्स्यात् ।
मैवं कर्माक्षकालप्रभृतिपरवशे कर्तृतां तत्फलञ्च
स्वीकृत्यात्मेशमात्रे श्रुतिशतविदिते द्वेष इत्थं दुरन्तः ॥ २३६ ॥

चिन्ता०—'इदं जीवस्य कर्तृत्वं किं स्वातन्त्र्येण, उत परमात्मायत्तमिति' इति भाष्य एव सङ्गतिरुक्ता । तदर्थविचारस्तु—किं जीवस्य कर्तृत्वं परमात्मायत्तमुत स्वायत्तमिति । किं परमात्मायत्तत्वे विधिनिषेधशास्त्रानर्थक्यं स्यान्नेति । अत्र जीवस्स्वतन्त्रः परतन्त्रो वा, स्वतन्त्रश्चेत् 'परात्तु तच्छ्रुतेः' इति पारतन्त्र्यकथनं कथं स्यात् । परतन्त्रश्चेत् कुर्यान्नकुर्यादिति विधिनिषेधशास्त्रे कर्तृत्वं कथं स्यात् । नहि निगलितस्य पुरुषस्य धावनं विधीयत, इति । तदिदमाह—कर्तेति । नहि परतन्त्रः कर्ता भवितुमर्हति । 'स्वतन्त्रः कर्ता' इति स्वातन्त्र्यमेव कर्तृत्वं स्मरति पाणिनिः । परतन्त्रं प्रति कुर्यान्न कुर्यादिति प्रवृत्तिनिवृत्तिविधाने दोषमाह—अन्यथा चेदिति । नहि निगलितस्य पुरुषस्य धावनमादिश्यमानं शक्यते कर्तुमिति । एवं जीवस्येश्वरपरतन्त्रस्य करणाकरणविधानं न योयुज्यते । स्वातन्त्र्यपक्षस्तु भवतैव परित्यक्त इत्युभयथाऽपि न घटत इति । उक्तं पक्षं प्रतिबन्द्या निराकरिष्यन् स्वरूपमेव तावत्प्रतिक्षिपति—मैवमिति । तदेव विवृणोति—कर्मेति । कर्माधीनं विश्वमिन्द्रियाधीनं कालाधीनं प्रकृत्यधीनं नियत्यधीनमिति च जीवस्य तत्तत्पारतन्त्र्ये सत्यपि जीवस्य कर्तृत्वं न भ्रश्यतीति वदामः । अयमर्थः—द्विविधं हि कर्तृत्वम्—प्रयोजककर्तृत्वं प्रयोज्यकर्तृत्वञ्चेति । तत्र 'अन्तः प्रविष्टश्शास्ता जनानां सर्वात्मा' 'य आत्मानमन्तरो यमयति' इत्यादिप्रमाणबलाद् यद्यपीश्वरस्यैव सर्वप्रयोजककर्तृत्वम्, तथापि तेनैवेश्वरेण दत्तशक्तिकस्य जीवस्यापि प्रयोज्यकर्तृत्वमस्त्येवेति 'कर्ता शास्त्रार्थवत्त्वात्' इति जीवकर्तृत्वमुच्यत इति न कश्चिद्विरोधः । अयमत्र शब्दान्वयः—कर्मादीनां सामान्यकारणत्वमभ्युपगम्य तत्परतन्त्रजीवेऽपि कर्तृत्वमभ्युपगच्छद्भिर्भवद्भिरीश्वरप्रतिक्षेपप्रयासः श्रुतिप्रामाण्यप्रद्वेषनिबन्धनः । श्रुतयो हि जीव ईश्वरप्रेरित एव

चिन्तितनिर्मिपितादिकं निखिलमपि कर्म करोतीति निर्मत्सरमेव प्रतिपादयन्ति। स्मृतयोऽपि तामेव श्रुतिमनुधावन्तीति निपुणविदां निर्णयः ॥ २३६ ॥

पद०—कर्तेत्यादि। अन्यतन्त्रः–पराधीनः। कर्ता नहि–कर्ता न भवितुमर्हति। तथा च–स्वतन्त्रस्यैव कर्तृत्वमिति। पाणिनिस्स्मरति—व्याकरणसूत्रकारः 'स्वतन्त्रः कर्ता' इति सूत्रेण प्रतिपादयति। खल्विति प्रसिद्ध्यर्थः। अन्यथा चेत्–जीवस्य स्वातन्त्र्यं न विद्यते चेत्, परतन्त्रश्चेत्। कुर्यान्न कुर्यादित्याज्ञा तु—सत्कर्म कुर्यात् दुष्कर्म न कुर्यादिति विधिनिषेधरूपं वचनं तु। निगलिते धावनादेशवत् स्यात्—निगलबद्धस्य पुरुषस्य धावनविधानतुल्यमित्यर्थः। मैवम्—एवं शङ्कां मा कार्षीः। कर्माक्षकालप्रभृतिपरवशे—कर्मणां प्राचीनपुण्यपापरूपाणामक्षाणामिन्द्रियाणां कालस्य प्रभृतिशब्दार्थभूतप्रकृतिनियन्त्योश्च पराधीने जीवे। कर्तृतां तत्फलञ्च स्वीकृत्य—कर्तृत्वं तत्प्रयुक्तसुखदुःखात्मकफलञ्चाद्वेषेणाङ्गीकुर्वतां भवताम्। श्रुतिशतविदिते—'य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति' इत्यादिश्रुतिशतैस्सर्वप्रयोजककर्तृत्वेन सिद्धे। आत्मेशमात्रे—सर्वात्मनियन्तृभूतेश्वरमात्रे। इत्थं द्वेषः—जीवस्य तत्पारतन्त्र्यानङ्गीकारेणान्तत ईश्वरनिरासाय सद्वेषः प्रयासः। दुरन्तः–दुस्साधफलः। प्रयासमात्रमेव, फलन्तु न सिध्यतीत्यर्थः। कर्मादिपारवश्येऽपि जीवस्य यथा कर्तृत्वं न हीयते, तथेश्वरपारतन्त्र्येऽपि। कर्तृत्वं हि द्विविधं प्रयोजककर्तृत्वं प्रयोज्यकर्तृत्वञ्चेति। तत्र 'अन्तः प्रविष्टः शास्ता जनानाम्' इत्यादिशास्त्रैरीश्वरस्यैव सर्वप्रयोजककर्तृत्वम्। तथापि तेनेश्वरेण दत्तशक्तिकस्य जीवस्यापि प्रयोज्यकर्तृत्वमस्त्येवेति 'कर्ता शास्त्रार्थवत्त्वात्' इति जीवस्य कर्तृत्वमुच्यत इति न कश्चिद्विरोध इति भावः ॥ २३६ ॥

साधारण्येन हेतुस्सलिलमिव विभुस्सर्वकार्याङ्कुराणां
वैषम्यन्त्वाविरिञ्चात् प्रतिनियतफलैः प्राणिनां कर्मबीजैः।
साम्यं स्वस्य स्वगीतं श्रुतमपि तदिहाधोनिनीषादिभेदः
तादृक्कर्मानुरूपं फलमिति नियतोऽनादिरेष प्रवाहः ॥ २३७ ॥

चिन्ता०—नन्वीश्वरस्यैव सर्वकारणत्वे केषाञ्चित्सुखप्रदानं परेषां दुःखप्रदानमिति वैषम्यदोषः स्यादित्याशङ्क्य कारणविभागप्रदर्शनेन परिहरति—साधारण्येनेति। अयमर्थः–लोके हि सर्वाङ्कुराणां साधारणकारणं सलिलम्, विशेषकारणं बीजमित्युक्तमेव दृष्टमेतत्। एवमीश्वरोऽप्यतीतानागतवर्तमान-

रूपाणामशेषाणामपि कार्याणामेक एव कारणम्। तत्तत्पुरुषाश्रितानि पुण्यपापरूपाणि कर्माणि विशेषकारणानीति न वैषम्यगन्धः। ईश्वरस्य साम्यं 'समोऽहं सर्वभूतेषु' इति स्वगीतम्। 'अन्तःप्रविष्टश्शास्ता जनानां सर्वात्मा' इति श्रुतिप्रतिपन्नञ्च। तेनानपलपनीयमेव साम्यम्। तर्हि कस्मिंश्चिद्विषये भगवानेव क्रुद्धस्सन्नधोनिनीषां करोति अपरत्र प्रसन्नस्सन्नुन्निनीषामिति किमुच्यत इत्याशङ्क्य श्रुतिद्वयार्थं विविच्य दर्शयति—तदिहेति। यं पूर्वमेवात्यन्तपापप्रवणं भगवानधोनिनीषति तमिदानीमसाधुकर्म कारयति, यं पुनरत्यन्तपुण्यप्रवणमुन्निनीषति तमधुना साधुकर्म कारयतीति। अयमर्थः—पूर्वकर्मानुरूप्येण उत्तरेषु पुण्येषु पापेषु वा भगवानेव प्रवर्तयतीति। पूर्वकर्मानुरूप्यवचनाद्वैषम्यदोषः परिहृत एव। 'न कर्माविभागादिति चेन्नानादित्वात्' इति कर्म प्रवाहस्यानादित्वात्प्राचीनकर्मानुगुणतया भगवत एव सर्वदा सर्वत्र सर्वात्मप्रवर्तकत्वमिति न जीवस्य स्वातन्त्र्यम्। न क्वचिदपि परमपुरुषस्य कदाचिदप्यप्रवर्तकत्वम्। नापि च वैषम्यनैर्घृण्यादिकम्। इत्थं परदोषोऽश्रुत एव प्रयातीति सुशोभनमेतत्॥ २३७॥

पद०—नन्वीश्वरस्यैव सर्वकारणत्वे केषाञ्चित् सुखप्रदानं केषाञ्चित् दुःखप्रदानमिति वैषम्यदोषस्स्यादित्याशङ्क्य कारणविभागप्रदर्शनेन परिहरति—साधारण्येनेत्यादि। विभुः—ईश्वरः। सर्वकार्याङ्कुराणामिति पदस्यावृत्तिः कार्या। प्रथमावृत्तौ सर्वेषां कार्याणां जनिमतामङ्कुराणां सलिलमिव। द्वितीयावृत्तौ सर्वेषामङ्कुरोपमितानां कार्याणाम्। साधारण्येन—सामान्याकारेण। हेतुः—कारणम्। प्राणिनाम्—देहिनाम्। वैषम्यन्तु—दृश्यमानं सुखित्वदुःखित्वादिरूपं तारतम्यन्तु। आविरिञ्चात्—विरिञ्चमभिव्याप्य। प्रतिनियतफलैः—व्यवस्थितप्रयोजनैः। कर्मबीजैः—कर्मरूपैरसाधारणकारणैः। भवतीति शेषः। अयमर्थः—लोके हि सर्वाङ्कुराणां साधारणकारणं सलिलं विशेषकारणं तत्तद्बीजमिति दृष्टमेतत्, एवमीश्वरोऽपि अतीतानागतवर्तमानरूपाणामशेषाणामपि कार्याणामेक एव साधारणकारणं, तत्तत्पुरुषाश्रितानि पुण्यपापरूपाणि कर्माणि विशेषकारणानीति न वैषम्यगन्ध ईश्वरस्येति। स्वस्य—ईश्वरस्य। साम्यम्—सर्वभूतेष्वपि तुल्यरूपतयावस्थानम्। स्वगीतम्—कृष्णत्वेनावतीर्णेन स्वेनैव गीतायां 'समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः' इत्यादिवचनेन प्रतिपादितम्। श्रुतमपि—'अन्तः प्रविष्टश्शास्ता जनानाम्' 'सर्वस्य शरणं सुहृत्' इत्यादिभिश्श्रुतिभिरपि प्रतिपादितम्। तत्—तस्मात्। इह—ईश्वरे। अधोनिनीषादिभेदः—'एष एवासाधु कर्म कारयति तं यमधो निनीषति, एष एव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषति' इत्यादिश्रुतिसिद्धो जीवविशेषविषयकाधोनयनोर्ध्वनयनेच्छाभेदः। तादृक्कर्मानुरूपं फलम्—तथाविधेश्वरेच्छाहेतुभूततत्तज्जीवकृतमहापराधप्रभूतपुण्यात्मक-

कर्मानुगुण फलम् । इति—एवम् । एष प्रवाहः—सर्वलोकसाक्षिकः पूर्वपूर्वकर्ममूलकोत्तरोत्तरकर्मपरम्परानुस्यूतिः । अनादिर्नियतः—अनादितयावस्थितः, असङ्कीर्णश्च । अतो मूलकारणप्रश्नस्य नावकाश इति भावः ॥ २३७ ॥

काले दुःखोपशान्तिं जनयति भगवान् व्याजमात्रावलम्बी
या दुःखापाचिकीर्षा परहितमनसस्सैव तस्यानुकम्पा ।
दत्ते देहादियोगं दिशति च निगमं वक्ति वेदान्तसारं
निस्सीमानन्दयोगं निरुपधिसमये सौति पुंसां तयैव ॥ २३८ ॥

चिन्ता०—ननु प्राचीनकर्मानुरूपमीश्वरः फलं ददातीत्युक्तम्, तर्हि कर्मैव सुखदुःखप्रदानयोः तन्त्रम्, तेनेश्वरस्य का करुणा? किञ्च तस्या अपेक्षणम्? कथञ्च तस्यास्संरक्षणोपकारप्रकारस्सेत्स्यति' इत्याशङ्क्य सर्वमप्येतत्समाधत्ते—काल इति । अयमर्थः—परानुग्रहः करुणा, सा च स्वार्थनिरपेक्षपरदुःखनिराचिकीर्षा, तस्याश्च प्रयोजनं सत्त्वोत्तरदेहप्रदानादिमुखेन परमपुरुषकैङ्कर्यसाम्राज्यलाभप्रदानपर्यन्तस्सर्वोऽप्युपकारविशेषः । अयमत्र शब्दान्वयः—काले—अज्ञातयादृच्छिकादिसुकृतसम्पत्तिकाले । भगवान् दुःखोपशान्तिं जनयति । स च व्याजमात्रमवलम्ब्य करोति । अल्पीयसा सुकृतेनानन्तफलप्रदानात् सुकृतस्य व्याजत्वसिद्धिः । तेन तत्र करुणावकाशः । करुणाया लक्षणं वैशद्याय दर्शयति—या दुःखेति । परहितमनसः पुरुषस्य सैव परदुःखापाचिकीर्षा करुणेत्युच्यते । कृपाफलमुपकारविशेषं दर्शयति—दत्त इति । 'जायमानं हि पुरुषं यं पश्येन्मधुसूदनः । सात्त्विकस्स तु विज्ञेयः' इत्युक्तप्रकारेण देहादियोगं तावत्सात्त्विकं दत्ते । दिशति च निगमम्—'साक्षान्नारायणो देवः' इत्युक्तरीत्या देशिकरूपेण स्थित्वा निगमं दिशति । 'सकल्पं सरहस्यञ्च तमाचार्यं प्रचक्षते' इति साक्षात्प्रधानाचार्यरूपेण वेदान्तशास्त्रमपि व्याचष्टे । ऐहिकमेतत्फलमनुकम्पायास्सहजायाः । आपवर्गिकमपि व्याचष्टे—निस्सीमेति । निरुपधिसमये देहावसानानन्तरं तयैव परमकृपया निस्सीमानन्दयोगं पुंसां सौति परस्मिन्पदे 'निरञ्जनः परमं साम्यम्' 'भोगमात्रसाम्यलिङ्गाच्च' इत्युक्तं जनयतीत्यर्थः । एतत्सर्वं कृपाफलत्वा[illegible] ...त्यर्थः ॥ २३८ ॥

[illegible] कर्मानुरूपमीश्वरः फलं ददातीत्युक्तं तर्हि कर्मैव सुखदुःखप्रदानयोस्तन्त्रम्, [illegible] किञ्च तस्या अपेक्षणम्? कथञ्च तस्यास्संरक्षणोपकारप्रकारस्सेत्स्यति? इत्याशङ्क्य

सर्वमप्येतत् समाधत्ते—कालइत्यादि । काले—अज्ञातयादृच्छिकानुषङ्गिकप्रासङ्गिकसामान्यबुद्धिमूल- सुकृतसम्पत्तिकाले । भगवान्—ज्ञानशक्त्यादिपरिपूर्ण ईश्वरः । व्याजमात्रावलम्बी—अञ्जल्याद्यल्प- व्याजमवलम्ब्य । दुःखोपशान्तिं जनयति । परहितमनसः—परेषां शुभोदर्कव्यापार एव निविष्टमनसः । तस्य—ईश्वरस्य । या दुःखापाचिकीर्षा—या दुःखनिराकरणेच्छा । तस्यानुकम्पा सैव—ईश्वरकृपा- स्वरूपमिदमित्यर्थः । तस्याः फलमुपकारविशेषं दर्शयति—दत्त इत्यादिना । देहादियोगं दत्ते—'जाय- मानं हि पुरुषं यं पश्येन्मधुसूदनः । सात्त्विकस्स तु विज्ञेयः' इत्युक्तप्रकारेण देहादियोगं तावत् सात्त्विकं दत्ते । निगमं दिशति च—'साक्षान्नारायणो देवः' इत्युक्तरीत्या देशिकरूपेण स्थित्वा वेदमुपदिशति । वेदान्तसारं वक्ति—'सकल्पं सरहस्यञ्च तमाचार्यं प्रचक्षते' इति साक्षात् प्रधानाचार्यरूपेण वेदान्त- शास्त्रसारमपि व्याचष्टे । निरुपधिसमये—देहाद्युपाधिनिवृत्त्यनन्तरसमये । तयैव—कृपयैव प्रधानभूतया । पुंसाम्—जीवात्मनाम् । निस्सीमानन्दयोगं सौति—'निरञ्जनः परमं साम्यमुपैति' 'भोगमा- त्रसाम्यलिङ्गाच' इत्याद्युक्तां निरन्तरस्वानुभवरूपमहानन्दप्राप्तिं सम्पादयतीत्यर्थः । एवमीश्वरकृपास्व- रूपोपकारप्रकारफलविशेषा इति भावः ॥ २३८ ॥

दोषस्स्यान्निग्रहांशो यमयितुरिति चेन्नोपमर्दासहत्वात्
नानिष्टं हीश्वरस्य प्रसजति न परानिष्टमस्य प्रतीपम् ।
कारुण्यं सावकाशं क्वचिदिति कथितं साक्षिताद्यञ्च सुस्थं
दृष्टे चैतत्स्वभावे फलद इति धिया युज्यते तत्प्रपत्तिः ॥ २३९ ॥

चिन्ता०—एवं निग्रहानुग्रहयोर्द्वयोरपि भगवन्निष्ठत्वादनुग्रहांशस्य गुणत्वं निग्रहांशस्य दोषत्वं स्यादित्याशङ्क्य परिहरति—दोष इति । सर्वनियन्तुरीश्वरस्य क्वचिन्निग्रहो दोषस्स्यात् । सर्वसमत्वभङ्गा- दित्याशङ्का । उक्तामाशङ्कां प्रतिक्षिपति—नेति । तत्र हेतुमाह—उपमर्दासहत्वादिति । विकल्पासह- त्वादित्यर्थः । विकल्पासहत्वमेव प्रकटयति—नानिष्टमिति । अयमर्थः—दोषो ह्यनिष्ट एव न पुनरिष्टः, तेन किमीश्वरस्य दोषस्स्यादित्यनिष्टं प्रसज्यते? किं वा जीवस्यानिष्टम्? न तावदीश्वरानिष्टप्रसञ्जनं कर्तुमेव शक्यते : सर्वशासितुरीश्वरस्येश्वरान्तराभावेनानिष्टकर्तुरेवाभावात् । नदितम् । तन्न स्वयमेवानिष्टं करोति ; भ्रान्तत्वप्रसङ्गात् । परानिष्टप्रसञ्जनं पुनरिष्टप्रसङ्ग एव । ईश्वरनिग्रहमधो निनीषति, एष धर्मि- ग्राहकप्रमाणसिद्धत्वात् । न परानिष्टमस्य प्रतीपमिति—परानिष्टकरणमीश्वरस्य विपयकाधोनयनोद्देशेन- त्वादनिष्टमेव न भवतीत्यर्थः । अन्यथा कर्मानुरूपफलप्रदानाभावे सतीश्वरत्वमेव भज्याधमभूतपुण्यात्मक-

प्रसज्येत । एवं तर्हि निग्रहं कुर्वाणे कारुण्यस्य कोऽवकाश इत्याशङ्क्याह—**कारुण्यमिति** । अयमर्थः—ईश्वरस्य कारुण्यमस्तीत्यस्माभिरुच्यते नपुनर्निग्रहो नास्तीति ; द्वयोरपि प्रमाणसिद्धत्वात् । 'अतिदूरमभक्तानां भक्तानां पुरतस्स्थितः' इति ह्युच्यते तेन कारुण्यावकाशो वाच्यः । करुणा हि द्विविधा नित्याऽनित्या च । नित्या पुनः करुणा सर्वात्मसत्तादिसंरक्षणरूपिणी । अनित्या पुनस्तत्तदज्ञातसुकृतादिकर्मानुरूपविशेषफलप्रदानरूपा । तदुक्तमाचार्यपादैरेवान्यत्र स्तुत्यारम्भे—

'मुकुन्दकरुणां वन्दे मुग्धेष्वधिकवत्सलाम् ।
स्वरूपसंस्तवौ यस्या निर्हेतुकसहेतुकौ ॥' इति ।

तेन सर्वात्मविषयं सकलफलप्रदानसङ्कल्परूपं सामान्यकारुण्यं नित्यमेव निर्हेतुकञ्चैतत् । तत्तत्काले विशेषफलप्रदानसङ्कल्परूपमनित्यं सहेतुकञ्चेति विभागः । अन्यथा कृत्स्नशास्त्राप्रामाण्यप्रसङ्गात् । कथितमिति—क्वचिदधिकारिणि कारुण्यं सावकाशमिति पूर्वश्लोक एवोक्तमित्यर्थः । तर्हीश्वरस्यैव सर्वकर्तृत्वे तत्र तत्र प्रमाणेपूच्यमानं साक्षित्वानुमन्तृत्वादिकं कथमुच्यत इत्याशङ्क्याह—साक्षीति । तुलायां प्रमाणप्रमेयव्यवहारन्यायेनैकस्यैवेश्वरस्य कर्तृत्वकारयितृत्वसाक्षित्वानुमन्तृत्वादिसर्वलक्षणसमवायात् सर्वोऽपि व्यवहारो युक्त इत्यर्थः । स्वतन्त्रः कर्ता, प्रयोज्यकर्तुर्जीवस्य कारयितृत्वात् प्रेरकः । प्रवृत्तस्योत्तरोत्तरं प्रवर्तकत्वादनुमन्ता, अङ्कुरादिषु सलिलवत्सर्वेष्वपि कार्येषु सामान्यहेतुत्वादुदासीनः, सर्वावस्थायां सर्वद्रष्टृत्वात् साक्षी, विशेषकार्येषु तत्तत्कर्मानुरूपं प्रवर्तकः कर्मभिस्सह करोतीति सहकारी, सर्वस्वामित्वेन समाश्रितसंरक्षणरूपफलस्यापि स्वफलत्वात्फली, 'फलमत उपपत्तेः' इति फलप्रदत्वात् फलद इति न कोऽपि विरोधः । तर्हीश्वरस्य निग्रहानुग्रहसाधारणस्य कथं प्रपदनीयत्वमित्याशङ्क्य परिहरति—दृष्ट इति । ईश्वरस्यैतत्स्वभावे **दृष्टे** सति—सनाथानां संरक्षको भवत्यनाथानां शिक्षको भवतीत्येतत्स्वभावे दृष्टे सति । इदमेव दर्शनं प्रपदनप्रवृत्तिकारणमित्यर्थः । न पुनरिदं प्रपदनप्रवृत्तेर्विरुद्धम्—निग्रहानुग्रहसमर्थमेव राजानं प्रपद्यन्ते प्राणिनः फलञ्च लभन्ते । नपुनरन्यतरासमर्थं कन्यापुरुषादिकम् । फलद इति धिया—निग्रहानुग्रहफलद इति धियेत्यर्थः ॥ २३९ ॥

पद०—एवं निग्रहानुग्रहयोर्द्वयोरपि भगवन्निष्ठत्वे निग्रहांशस्य दोषत्वं स्यादित्याशङ्क्य परिहरति—दोषस्स्यादित्या[illegible]तुः—नियन्तुरीश्वरस्य । निग्रहांशो दोषस्स्यात्—परहिंसनव्यापारत्वादित्यर्थः । इति चेन्[illegible] ईश्वरस्य—सर्वशासितुः परमात्मनः । अनिष्टं नहि प्रसजति—परनिग्रह[illegible]त श्रुतौ समस्त[illegible]यन्त्रन्तराभावात् । अस्य परानिष्टं न प्रतीपम्—ईश्वरस्य परानिष्टकरणं जोऽस्[illegible]या नानिष्टम् । तत्तत्कर्मानुगुणनिग्रहाभावे ईश्वरत्वमेव भज्येत । तर्हि कारुण्यस्य

कोऽवकाश इति चेत् कारुण्यं क्वचित् सावकाशमिति कथितम्—भक्तविषये दयाया अवकाश इति प्रतिपादितम् । तथा हि करुणा द्विविधा नित्या चानित्या च, नित्या करुणा सर्वात्मसत्तादिसंरक्षणरूपापणी, अनित्या पुनस्तत्तदज्ञातसुकृतादिकर्मानुरूपविशेषफलप्रदानरूपा । तदुक्तमाचार्यैरेव

' मुकुन्दकरुणां वन्दे मुग्धेष्वधिकवत्सलाम् ।
स्वरूपसंस्तवौ यस्या निर्हेतुकसहेतुकौ ॥ ' इति ।

तेन सर्वात्मविषयं सकलफलप्रदानसङ्कल्परूपं सामान्यकारुण्यं नित्यमेव निर्हेतुकञ्चैतत् । कालविशेषफलप्रदानसङ्कल्परूपं कारुण्यन्त्वनित्यं सहेतुकञ्चेति विभागः । अन्यथा कृत्स्नशास्त्राप्रामाण्यप्रसङ्गात् । अतः क्वचिदधिकारिणि कारुण्यं सावकाशमिति पूर्वश्लोक एवोक्तमित्यर्थः । तर्हीश्वरस्यैव सर्वकर्तृत्वे तत्रतत्र प्रमाणेपूच्यमानं साक्षित्वानुमन्तृत्वादिकं कथमित्यत्राह—साक्षिताद्यं च सुस्थमिति । आद्यशब्देन कर्तृत्वप्रेरकत्वानुमन्तृत्वोदासीनत्वसहकारित्वसर्वस्वामित्वफलित्वादिसङ्ग्रहः । इदं सर्वमपि धर्मजातं तुलायां प्रमाणप्रमेयव्यवहारन्यायेन सर्वलक्षणसमवायादेकस्यैवेश्वरस्य युक्तमित्यर्थः । सर्वावस्थायां सर्वद्रष्टृत्वात् साक्षी, स्वतन्त्रत्वात् कर्ता, प्रयोज्यकर्तुर्जीवस्य कारयितृत्वात् प्रेरकः, प्रवृत्तस्योत्तरोत्तरं प्रवर्तकत्वादनुमन्ता, अङ्कुरादिषु सलिलवत् सर्वेष्वपि कार्येषु सामान्यहेतुत्वादुदासीनः, तत्तत्कर्मानुगुणं सर्वं करोतीति सहकारी, सर्वकृतातिशयभाक्त्वात् सर्वस्वामी, आश्रितसंरक्षणरूपफलस्यापि स्वफलत्वात् फली, 'फलमत उपपत्तेः' इति फलप्रदत्वात् फलदः, इत्येवं साक्षित्वादिकं तस्मिन् सुस्थमित्यर्थः । एतत्स्वभावे—अनपराधानां रक्षको भवति सापराधानां शिक्षको भवतीत्येतत्स्वभावे । दृष्टे च—सम्यक्प्रमाणेनावगते सति च । फलद इति धिया—निग्रहानुग्रहरूपफलप्रद इति बुद्ध्या । तत्प्रपत्तिर्युज्यते—प्राणिनां तत्प्रपदनप्रवृत्तिर्युक्तेत्यर्थः । निग्रहानुग्रहकरणस्वभावदर्शनं न प्राणिनां तत्प्रपदनप्रवृत्तिविरुद्धम् , निग्रहानुग्रहसमर्थमेव हि राजानं प्राणिनः प्रपद्यन्ते फलञ्च लभन्ते न पुनरन्यतरासमर्थमिति भावः ॥ २३२ ॥

प्रत्यङ्ङात्माहमर्थः प्रमितिपरवतां कर्तृतादिश्च तस्मिन्
स्वेच्छापूर्वप्रवृत्तेरयमचिदधिकस्तावतेशानतुल्यः ।
ईशस्तु स्वेच्छयैव प्रयतत इति तन्निघ्नमन्यत्समस्तं
सारथ्यादिक्रमेण प्रतिनियतगतिस्स्यात् त्रयाण[illegible] २४० ॥

चिन्ता—नन्वीश्वर एव कर्ता चेत्तर्हि मृत्पिण्डप्रायस्य जीवस्य किं को[illegible]पविषयकाधोनयनोर्ध्वन- [illegible]पि तस्य न स्यात् , अकर्तुरभोक्तृत्वादित्याशङ्क्येश्वरोऽपि कर्ता जीवोऽपि तत्प्रयोज्यस्[illegible]धप्रभूतपुण्यात्मक-

विभज्य दर्शयति—प्रत्यङ्ङिति । जीवस्य तावत्कर्तृत्वं सुप्रसिद्धमेव । अहं जानाम्यहं करोमीतिप्रत्ययार्थ एव सर्वकार्येषु कर्ता स एवात्मा, न पुनश्चिन्मात्रं नाप्यहङ्कारस्तयोर्द्वयोरप्यचेतनत्वात् । अत एवोच्यते—प्रमितिपरवतामिति । प्रमाणमार्गमनुसरतां सर्वेष्वपि कार्येषु परमात्मपरतन्त्रो जीवः प्रयोज्यकर्तेत्यर्थः । तदिदमाह—कर्तृतादिश्च तस्मिन्निति । ननु रथो गच्छतीत्यादावचितोऽपि कर्तृत्वं प्रतीयते तत्कथमचेतनाधिको जीव इत्याशङ्क्य चिदचितोर्वैषम्यमाह—स्वेच्छेति । स्वबुद्धिपूर्वप्रवृत्तिलक्षण-कर्तृत्वयोगाद् व्यापाराश्रयत्वमात्रलक्षणकर्तृत्ववतोऽचेतनादन्यो जीवस्तावतेशानतुल्य इति । बुद्धिपूर्वक-प्रवृत्तिलक्षणकर्तृत्वमीश्वरस्यापि तुल्यमित्यर्थः । चेतनाचेतनकर्तृत्वाद्विलक्षणमीश्वरासाधारणकर्तृत्वमुक्त्वा विश्वस्य तत्पारतन्त्र्यं स्वभाव इति निगमयति—ईशस्त्विति । उक्तमर्थं 'यथा प्रयोग्य आचरणे युक्तः' इत्यादिश्रुतिप्रसिद्धयुग्यस्यन्दनसारथिक्रमेण स्थापयति—सारथ्यादिक्रमेणेति । सर्वप्रवर्तकत्वात् सारथिर्भगवान् । युग्यो जीवो रथबद्धाश्वस्थानीय इत्यर्थः । स्यन्दनं देहः ईश्वरप्रेरितचेतनप्रेर्यत्वात् । रथे हि सारथिना बद्धा युग्या यथेष्टं रथमाकर्षन्तीत्यर्थः । अयमत्र शब्दार्थः—त्रयाणां चिदचिदीश्वराणां प्रवृत्ति-र्युग्यस्यन्दनसारथिक्रमेण प्रतिनियतप्रकारेति ॥ ४० ॥

पद०—प्रत्यङ्ङात्मेत्यादि । प्रत्यङ्—स्वस्मै भासमानः । आत्मा—आत्मैव । अहमर्थः—अहञ्जा-नाम्यहङ्करोमीति प्रतीयमानोऽहमर्थः । नपुनश्चिन्मात्रं नाप्यहङ्कारस्तयोर्द्वयोरप्यचेतनत्वात् । प्रमितिपरवताम्—प्रमाणमार्गमनुसरताम् । कर्तृतादिश्च—कर्तृत्वभोक्तृत्वादिकश्च । तस्मिन्—तस्मिन्नेव । सम्मत इति शेषः । स्वेच्छापूर्वप्रवृत्तेः—स्वबुद्धिपूर्वप्रवृत्तिलक्षणकर्तृत्वयोगात् । अयम्—जीवः । अचिदधिकः—व्यापाराश्रयत्वमात्रलक्षणकर्तृत्ववतोऽचेतनादन्यः । तावता—बुद्धिपूर्वकप्रवृत्तिलक्षणकर्तृत्वमात्रेण । ईशान-तुल्यः—ईश्वरतुल्यः । ईशस्तु—ईश्वर एकः । स्वेच्छयैव प्रयतते—स्वेच्छामात्रप्रयोज्यमीश्वरस्य कर्तृत्व-मित्यर्थः । इति—हेतोः । अन्यत् समस्तम्—तद्व्यतिरिक्तं चेतनाचेतनात्मकं सर्वमपि वस्तुजातम् । तन्निघ्नम्—तत्परतन्त्रं तदधीनस्वरूपस्थितिप्रवृत्तिकमित्यर्थः । अत एव जीवस्य कर्तृत्वं पराधीनमित्यर्थः । त्रयाणाम्—ईश्वरजीवात्माचेतनानाम् । प्रवृत्तिः—व्यापारः । सारथ्यादिक्रमेण प्रतिनियतगतिस्स्यात्—सारथिरथाश्वरथक्रमेण व्यवस्थितप्रकारा भवेत् । सर्वप्रवर्तकत्वात् सारथिर्भगवान्, रथाश्वो जीवः, यथाश्व-स्सारथिना [illegible] परतन्त्रस्सन् रथमाकर्षति तद्वज्जीव ईश्वरेण शरीरे नियद्धस्तदधीनश्शरीरधारणादौ प्रवर्तते [illegible] यथा रथस्सारथिप्रेरितेनाश्वेनाकृष्यते तद्वदीश्वरप्रेरितेन जीवेन शरीरादिरूप-[illegible]कत्वं व[illegible] [illegible]जककर्तृत्वमीश्वरे व्यवस्थितम्, प्रयोज्यकर्तृत्वं जीवे नियतम्, ईश्वरप्रेरितजीवप्रेर-[illegible]त श्रुतौ समत्व[illegible] [illegible]यत्वमचेतने, इति व्यवस्थितं तत्त्वत्रयस्यापि स्वभावत्रयमिति नान्योन्यव्यतिकरोऽन्यत-जीवस्ते [illegible]

मापह्नवो वा युक्तः । तथाच श्रुतिश्छान्दोग्येऽष्टमेऽध्याये 'यथा प्रयोग्य आचरणे युक्त एवमेवायमस्मिन् शरीरे प्राणो युक्तः' इत्यादिः ॥ २४० ॥

कर्तृत्वं स्यात्कदाचित्करणवति परप्रेरणानिर्व्यपेक्षं
नोचेत्तन्निग्रहाद्यं कथमिति यदि न स्वेष्टपक्षेऽपि साम्यात् ।
स्वेनापथ्यप्रवृत्तं नहि पुनरपि तत्कारयेयुर्दयार्द्राः
तच्चेदस्य स्वभावादितरदपि न किं निष्फलोऽधीतभङ्गः ॥ २४१ ॥

चिन्ता०—अत्र केचिदाहुः 'जीवस्य प्रथमप्रवृत्तावीश्वरः कारयिता न भवति, स्वयमेव जीवः प्रवर्तते, ईश्वरस्तदानीमुपेक्षते, यदीश्वर एव तत्र प्रयत्नतः प्रवर्तकः स्यात् ; तदा आदावपि प्रवर्तकत्वान्निर्घृणो विषमश्च स्यादीश्वरः, जीवो न निग्राह्यस्स्यात् ; स्वयमकर्तृत्वात्' इति । तदिदमनुवदति—कर्तृत्वमित्यादिना यदीत्यन्तेन । तदिदं प्रतिक्षिपति—नेति । तत्र हेतुमाह—स्वेष्टपक्षेऽपि साम्यादिति । साम्यमेव प्रकटयति—स्वेनेति । अयमर्थः—यस्तावदपथ्ये प्रवर्तयति स हि निर्दय एव स्यात्, तथा च प्रथममपथ्ये प्रवर्तयन्नीश्वरो निर्दयस्स्यादिति हि भवतोच्यते । एवं यस्स्वयमपथ्ये प्रवर्तते तस्यानुमन्तापि निर्दय एव हि । लोके दृष्टमेतत्, कूपे हि पतन्तं बालकं निवारयितुं समर्थोऽप्यनुमन्यमानो निर्दय एवेति । इदमपि प्रसिद्धमेव । तस्मादीश्वरस्य पापप्रवृत्तावनुमन्तृत्वेऽपि निर्दयत्वमापतेदेव भवद्रीत्या । ननु प्रथमप्रवृत्तौ तामनुसृत्यैवेश्वरोऽनुमन्ता तस्मान्निर्दयो न भवतीति यदिवदसि तर्हि प्रथमप्रवृत्तावपि जन्मान्तरीयचरमप्रवृत्तिमनुसृत्यैव प्रवर्तयतीति निर्दयत्वं नापतेदिति समस्समाधिः । नन्वीश्वरस्य सर्वकार्यहेतुत्वस्वाभाव्यात् प्रवृत्तप्रवर्तकत्वलक्षणमनुमन्तृत्वमङ्गीकार्यमिति यदि, तर्हि तेनैव न्यायेन प्रथमप्रवर्तकत्वमपि न किमङ्गीकार्यम्? तदनङ्गीकारे 'तेन विना तृणाग्रमपि न चलति' इत्यादिप्रमाणशतप्रसिद्धं सर्वदा सर्वस्येश्वरपारतन्त्र्यं भज्येतेतीश्वरत्वमेव न स्यात् । किञ्च निष्फलोऽयमधीतभङ्गः—सर्वकार्यकर्तृत्वं सर्वेश्वरत्वमधीतं निरर्थकमेव भवान्निराकरोतीत्यर्थः ॥ २४१ ॥

पद०—कर्तृत्वमित्यादि । करणवति—जीवे । कदाचित्—प्रथमप्रवृत्तिकाले । कर्तृत्वम्—सुकृतदुष्कृतप्रवृत्तिरूपं कर्तृत्वम् । परप्रेरणानिर्व्यपेक्षं स्यात्—ईश्वरप्रेरणनिरपेक्षम् । तद् नो चेत्—एवमनङ्गीकारे, प्रथमप्रवृत्तेरपीश्वरप्रेरणसापेक्षत्वे । तन्निग्रहाद्यम्—तस्य ई[illegible] निनीषति, ए[illegible]प्रवृत्तस्य जीवस्य निग्रहाद्यं निग्रहोऽनुग्रहश्च । कथम्—कथमीश्वरेण क्रियते । इति [illegible]विषयकाधोनयनोर्ध्वन[illegible] न—नैतद्युक्तम् । स्वेष्टपक्षेऽपि साम्यात्—द्वितीयादिप्रवृत्तावेवेश्वरप्रेरणेत्युक्तस्वाभिमत[illegible]भूतपुण्यात्मक-

तदेवोपर्युच्यते—स्वेनेत्यादिना । दयार्द्राः—दयाशीतलहृदयाः पुरुषाः । स्वेन—स्वयमेव, पूर्वं परप्रेरणं विना । अपथ्यप्रवृत्तम्—अपथ्ये अहितव्यापारे प्रवृत्तं जनम् । पुनरपि तत् नहि कारयेयुः—अनन्तरमप्यपथ्य करणानुमतिदानेनापथ्यं नहि कारयेयुः । यः प्रथममपथ्ये प्रवर्तयति स निर्दयश्चेत् यः प्रथमं स्वयमपथ्ये प्रवृत्तं पुनरप्यनुमतिदानेन तत्कारयति सोऽपि निर्दय एव, कूपे हि पतन्तं बालकं निवारयितुं समर्थोऽप्यनुमन्यमानो निर्दय एवेति लोकदृष्टमेव । ननु प्रथमं प्रवृत्तौ सत्यां तामनुसृत्येश्वरोऽनुमन्ता तस्मान्न निर्दय इति चेत् प्रथमप्रवृत्तावपि जन्मान्तरीयचरमप्रवृत्तिमनुसृत्यैव प्रवर्तयतीति समस्समाधिरित्यर्थः । तत्—प्रवृत्तप्रवर्तकत्वलक्षणमनुमन्तृत्वम् । अस्य—ईश्वरस्य । स्वभावाच्चेत्—सर्वकार्यहेतुत्वस्वाभाव्यादिति चेत् । इतरदपि—प्रथमप्रवर्तकत्वमपि । किं न—तस्मादेव स्वभावात् कुतो न भवति । तथानङ्गीकारे ‘ तेन विना तृणाग्रमपि न चलति ’ इत्यादिप्रमाणशतप्रसिद्धं सर्वदा सर्वस्येश्वरपारतन्त्र्यं भज्येत, ततश्चानीश्वरत्वमेव स्यात् । किञ्च, अधीतभङ्गः—अधीतस्य सर्वव्यापारहेतुत्वेन श्रुतिसिद्धस्येश्वरतत्त्वस्य भङ्गो निराकरणव्यापारः । निष्फलः—स्वपक्षे निर्दोषत्वासाधकतया निष्प्रयोजन इत्यर्थः । प्रथमप्रवृत्तावीश्वरप्रेरणानधीनत्वकल्पनमनीश्वरत्वमेव फलति नत्वीश्वरस्य दोषापनयनमितिभावः ॥ २४१ ॥

क्षेत्रज्ञानां समानां विषमयतनता तादृशादृष्टभेदात्
नादृष्टं त्वन्यदिष्टं नियमनभिदया हीशितुस्तत्र भाव्यम् ।
साक्षित्वाद्यश्च नेतुस्समनिगममितं प्रेरकत्वं न रुन्धे
भाष्यादिग्रन्थलेशोऽप्यवहितमनसामैदमर्थ्यं भजेत ॥ २४२ ॥

चिन्ता—कल्पादौ प्रथमप्रवृत्तिरीश्वरनिरपेक्षेति वदन् प्रवृत्तिमेवोपपादयितुं न शक्नोतीत्याह—क्षेत्रज्ञानां समानामिति । युष्मदभिमतप्रथमप्रवृत्तिवेलायां जीवानां विषमप्रवृत्तिस्तावन्न जीवस्वरूपनिबन्धना ; जीवस्वरूपस्य तुल्यत्वेन वैषम्यनिबन्धनत्वायोगात् , तेन प्राचीनकल्पकृतकर्मनिबन्धनेति वक्तव्यम् , कर्म च वेदान्तसिद्धान्ते नेश्वरसङ्कल्पादन्यदिति कर्मनिबन्धनं प्रवृत्तिवैषम्यं वदन्नीश्वराधीनत्वमेव स्थापयतीत्यर्थः । निर्मूलमेव प्रवृत्तिवैषम्यमिति तु चार्वाकपक्षे निक्षिप्येत । अयमत्र शब्दान्वयः—कल्पादौ [illegible]नानां विषमयतनता तदनुगुणादृष्टभेदादेव भवति । ततः किमित्यत्राह—नादृ[illegible]कत्वं व[illegible]दन्यददृष्टमिति किञ्चिन्नेष्टमित्यर्थः । फलितमाह—नियमनेति । तत्र तस्मिन्[illegible]त श्रुतौ समस्त[illegible]नेश्वरस्य नियमनेन भवितव्यमित्यर्थः । तेनादृष्टहेतुकप्रवृत्तिवैषम्यं वदता भवता जीवस्ये[illegible]तुत्वमेव स्थापितं भवतीत्यर्थः । तर्हीश्वरस्य साक्षित्वोदासीनत्वानुमन्तृत्वादिकं तस्यैव

प्रवर्तकत्वे कथं घटत इति चोद्यमवशिष्यते, तच्च न; सर्वेषामपि प्रामाणिकत्वेन पूर्वमेव लक्षणसमन्वयस्य कथनादित्याह—साक्षित्वाद्यमिति । इदं साक्षित्वाद्यं तुल्यप्रमाणप्रमितमीश्वरस्य सर्वदा प्रेरकत्वं न रुन्धे न बाधत इत्यर्थः । ननु भाष्यादिषु ग्रन्थेषु 'तत्रोपेक्ष्य ततोऽनुमत्य' इत्यादिषु प्रथमक्षणे तावदुपेक्षा द्वितीयादिक्षणेष्वनुमतिरिति विशेषनिर्देशो दृश्यते तत्कथमीश्वरस्य कर्तृत्वं कारयितृत्वञ्चेत्याशङ्क्याह—भाष्यादीति । सर्वदा स्वातन्त्र्येण कर्तुरेवेश्वरस्य कारयितृत्वादिधर्मान्तरलक्षणसमावेशात् सर्वमप्युपपद्यते । नहि प्रथमप्रवृत्तिरिति काचिद्दशास्ति प्रवृत्तिप्रवाहस्यानादित्वात्, अथापि प्राथम्यवचनं तत्तत्कालविशेषावच्छिन्नकर्तृत्वादिपरमिति न कश्चिद्विरोधः ॥ २४२ ॥

पद०—किञ्च कल्पादौ प्रथमप्रवृत्तिरीश्वरनिरपेक्षेति वदन् प्रवृत्तिमेवोपपादयितुं न शक्नोतीत्याह—क्षेत्रज्ञानामित्यादिना । कल्पादौ समानां क्षेत्रज्ञानां विषमयतनता—अन्योन्यविलक्षणपुण्यपापप्रवृत्तिमत्त्वम् । तादृशादृष्टभेदात्—तत्तत्प्रवृत्त्यनुगुणादृष्टभेदादेव भवतीति वक्तव्यम् । अदृष्टं तु अन्यत्—ईश्वरसङ्कल्पादन्यत् । नेष्टम्—तवाप्यनभिमतम् । तत्र—तस्मिन्काले । ईशितुः—ईश्वरस्य । नियमनभिदया हि भाव्यम्—अदृष्टशब्दाभिधेयेन नियमनभेदेनैव भवितव्यम् । अदृष्टहेतुकप्रवृत्तिवैषम्यं वदता भवता प्रथमप्रवृत्तावपीश्वरहेतुत्वमेव स्थापितं भवतीति भावः । नेतुः—ईश्वरस्य । साक्षित्वाद्यञ्च—साक्षित्वोदासीनत्वानुमन्तृत्वादिकं कर्तृ । समनिगममितं प्रेरकत्वं न रुन्धे—तुल्यप्रमाणप्रमितमीश्वरस्य सर्वदाप्रेरकत्वं न बाधत इत्यर्थः । अवहितमनसाम्—सूक्ष्मावधाननिविष्टबुद्धीनाम् । भाष्यादिग्रन्थलेशोऽपि—एतदधिकरणभाष्यतत्त्वसारश्लोकादिग्रन्थांशोऽपि । ऐदमर्थ्यम्—अयमेव एतावता योऽस्माभिरुपपादितः अर्थो यस्य स इदमर्थः, तस्य भावः ऐदमर्थ्यं तत् भजेत । प्राथम्यस्य दुरुपपादत्वात् कर्मप्रवाहमूलकसर्वप्रवृत्तिहेतुत्वस्यैवेश्वरे प्रमाणिकत्वात् तत्परत्वमेव भाष्यतत्त्वसारादिग्रन्थवाक्यानां युक्तमिति सूक्ष्मबुद्धिभिर्भाव्यमिति भावः ॥ २४२ ॥

कर्ता देवः फलानां न तु करणभृतः प्रेरकश्चेत्ययुक्तं
सर्वश्रुत्यादिकोपात्त्र भवति न फलं कर्मणः पापचर्या ।
कर्माधीनं तु चिन्ताद्यपि हि भवभृतो भाषितं भाष्यकारैः
जन्तूनां देवतानामपि करणगणाधिष्ठितं वक्ष्यती

इति परायत्ताधिकरणम् ॥ ५९ ॥

तम् । तद्
ा निनीषति, एव
धिपयकाधोनयनोर्ध्वन- पि

चिन्ता०—अत्र प्रकारान्तरेण विकल्प्य दूषयित्वा प्रकृतमेवार्थं प्रतिष्ठापयति—रूपभूतपुण्यात्मक-

सार्वकालिकं कर्तृत्वं प्रतिक्षिपन् फलप्रदत्वमपि किं प्रतिक्षिपसि ? यदि न ? फलप्रदत्वस्यापि प्रतिक्षेपे सर्वशास्त्रव्याकोपात् फलप्रदत्वमङ्गीकृत्य प्रथमक्षणे कर्तृत्वप्रतिक्षे[illegible] वक्तव्यः तच्च हास्यम्—जीवस्य प्रथमं पुण्यपापप्रवृत्त्योः पूर्वजन्मानुष्ठितकर्मफलत्वात् । [illegible] मध्ये [illegible]यजीवकर्तृत्वे ईश्वरस्य कारयितृत्वेन कर्तृत्वाभावे पूर्वकर्मफलप्रदायित्वमीश्वरस्य कथं भवेत् । तेन फलप्रदत्वाङ्गीकारे सर्वदाकर्तृत्वं कारयितृत्वं चाङ्गीकृतमेव । तदनङ्गीकारे फलप्रदत्वस्य का वार्ता ? उत्तरोत्तर[illegible]णां पूर्वपूर्वप्रवृत्तिफलत्वात् । अयमत्र शब्दान्वयः—देवः फलानां कर्ता करणभृतो जीवस्यानुष्ठानकाले प्रेरको न भवतीत्ययुक्तम् । तत्र हेतुमाह—सर्वेति । तदेव विवृणोति—न भवतीति [illegible] पूर्वकृतस्य कर्मणः फलं न न भवति । फलमेव भवतीत्यर्थः । द्वौ नञौ प्रकृतमर्थं स[illegible] । पापचर्येति पुण्यस्याप्युपलक्षणम् । न केवलं पुण्यपापरूपं कर्म पूर्वकर्मफलम्, [illegible]मिपितादिकं तु सर्वमपि पूर्वकर्मफलमिति भाष्यकारैरेव सुव्यक्तमभिहितमित्याह—कर्माधीनं त्विति । नकेवलमेतावदेव, सर्वेषामपि जन्तूनां देवतानाञ्च तत्तच्चक्षुरादिकरणाधिष्ठानं परमात्मप्रेरणायत्तमिति भाष्यकार एवोत्तरत्र विशदं प्रकाशयतीत्याह—जन्तूनामिति । करणगणाधिष्ठितमिति भावे निष्ठा । अधिष्ठानमित्यर्थः ॥ २४३ ॥

इति परायत्ताधिकरणम् ॥ ५९ ॥

पद०—कर्तेत्यादि । देवः–ईश्वरः । फलानां कर्ता—फलप्रद एव । करणभृतस्तु–जीवस्य । प्रेरकश्च न–अनुष्ठानकाले प्रेरयिता न भवति । इत्ययुक्तम् । सर्वश्रुत्यादिकोपात्–'य आत्मनि तिष्ठन्' 'अन्तःप्रविष्टश्शास्ता जनानाम्' इत्यादिसर्वश्रुतिस्मृतिविरोधात् । पापचर्या–पापाचरणञ्च । कर्मणः फलं न भवति–पूर्वानुष्ठितपापकर्मणः फलमेव भवति । नञ्द्वयेन प्रकृतार्थलाभः । पापचर्येति पुण्यस्याप्युपलक्षणम् ।

'पापं प्रज्ञां नाशयति क्रियमाणं पुनःपुनः । नष्टप्रज्ञः पापमेव कर्तुमारभते पुनः ॥
पुण्यं प्रज्ञां वर्धयति क्रियमाणं पुनःपुनः । वृद्धप्रज्ञः पुण्यमेव कर्तुमारभते पुनः ॥'

इत्यादिशास्त्रेण पुण्यपापानां स्वस्वपूर्वपूर्वपुण्यपापफलत्वादीश्वरस्य फलप्रदत्वमात्राङ्गीकारेऽपि सर्वप्रवृत्तिहेतुत्वं सिद्धमिति भावः । भवभृतः–जीवस्य । चिन्तायपि—चिन्तितनिमिषितादिसर्वप्रवृत्तिजातमपि । कर्माधीनं तु—पूर्वकर्माधीनमिति । भाष्यकारैर्भाषितं हि—श्रीभाष्यवेदार्थसङ्ग्रहादिष्विति शेषः । जन्तूनाम्–प्राणिनाम् । देवतानामपि–अग्निवायुसूर्यादीनां देवतानामपि । करणगणाधिष्ठितम्–भावे निष्ठा [illegible]ष्ठानम् । इति—परमात्मप्रेरणायत्तमिति । वक्ष्यति—'ज्योतिराद्यधिष्ठानं तु [illegible]दात्' इति सूत्रव्याख्यानप्रकरण इति शेषः । अतस्सर्वप्राणिनामपि सर्वप्रवृ[illegible]द्धमिति नार्धजरतीन्यायकल्पनं युक्तमिति भावः ॥ २४३ ॥

इति परायत्ताधिकरणम् ॥ ५९ ॥

## ...रणम् ॥ ६० ॥
भाष्यादिषु प्र

सूत्रम्—अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके ॥ २८५ ॥

जीवादत्यन्तभिन्नः पर इति बहुधा व्याहरत्सूत्रकारो
भेदाभेदश्रुतीनां घटकनिगमतश्शात्रवञ्च व्यपोढम् ।
उक्ताक्षेपे समाधा... प्रथमप्रवृत्तिरीश्वर...को हेतुरत्रास्ति सत्यं
पादांशाद्युक्तिमुख्यहुतुं...मताक्षिप्तये त्वंशचिन्ता ॥ २४४ ॥

चिन्ता०—अत्र सङ्गतिप्रदर्शनपूर्वकं संशयप्रकारबाहुल्यं तत्कारणञ्च भाष्य एव सुव्यक्तमुक्तम् । 'जीवस्य कर्तृत्वं परमपुरुषायत्तमित्युक्तम् । इदानीं किमयं जीवः परस्मादत्यन्तभिन्नः, उत परमेव ब्रह्म भ्रान्तम्, उत ब्रह्मैवोपाध्यवच्छिन्नम्, अथ ब्रह्मांश इति संशय्यते । श्रुतिविप्रतिपत्तेस्संशयः' इति । अत्र किं ब्रह्मांश इति किं विशेष्यैकदेशरूपोऽशः, किं वा विशिष्टैकदेशरूपो विशेषणांश इति विकल्पो भाष्याभिप्रायस्थः । स च वक्ष्यते । इत्थं चेह सङ्गतिरुच्यते—यदि जीवस्य कर्तृत्वं परमात्माधीनं तदा राजभृत्यादिन्यायेन तस्य परमात्मांशत्वकथनमप्यौपचारिकमेव स्यादिति शङ्कया पूर्वपक्षोत्थानमिति । तदर्थ-विचारस्तु—जीवः किं परमात्मनोऽत्यन्तभिन्नः, उताज्ञः परमात्मैव, उतोपाधिभेदभिन्नः, उत स्वतोभिन्ना-भिन्नः, उत परमात्मनो विशेषणतयांश इति । तदर्थं कस्मिन्पक्षे भिन्नत्वाभिन्नत्वादिविषयसर्वश्रुतिमुख्य-त्वमुपपद्यते, कस्मिन्नेति । अधिकरणोत्थानं पूर्वपक्षसिद्धान्तयोर्विशेषहेत्वभावादाक्षिप्यार्धाङ्गीकारेण समाद-धाति—जीवादिति । जीवादत्यन्तभिन्नः परमात्मेति बहुधा भेदव्यपदेशप्रतिपादकैस्सूत्रैरुपापीपद-त्सूत्रकारः । अभेदप्रतिपादकानां च वाक्यानां भेदप्रतिपादकैर्वाक्यैर्विरोधोऽपि घटकश्रुत्या परिहृत एव । नचात्र पूर्वपक्षे सिद्धान्ते वा कश्चिद्विशेषहेतुरुपादीयते । तेन नेदमधिकरणमारम्भ्यमिति कश्चिदचूचुदत् । अत्र भेदाभेदश्रुतीनां घटकश्रुत्या शात्रवं व्यपोढमिति शरीरात्मभावश्रुतयो विवक्ष्यन्ते । उक्ताक्षेपे पूर्वपक्षे समाधौ सिद्धान्ते च न समधिको हेतुरत्रास्ति विशेषहेतुरत्र नास्तीतम् । तद... पूर्वपक्षमर्धा-ङ्गीकारेण निराकरोति—सत्यमिति । तदेव प्रकटयति–पादेति । क्वचित् ...धो निनीपति, ए... ...तानि' इति विश्वं पादशब्देनोच्यते । क्वचित् 'ममैवांशो जीवलोके जीवभूतस्सना...विषयकाधोनयनोर्ध्वन- ... उच्यते । क्वचित् 'विष्णुशक्तिः परा प्रोक्ता' इत्यादिना शक्तिशब्देन भगवद्विश...प्रभूतपुण्यात्मक-

एवं तनुरूपशरीरादिशब्दैरपि तत्रतत्र मुह्यतां [illegible]नामभिमतार्थक्षेपणाय पौनःपुन्येन चिन्तनमपि साफल्यमेवाधिकृतेरिति न विरोधः ॥ २४४ ॥ स्थावर[illegible]

[illegible]वृत्ते मध्ये [illegible]

पद०—जीवादित्यादि । सूत्रकारः । प[illegible] । अतो[illegible]जीवादत्यन्तभिन्न इति बहुधा व्याहरत्—भेदव्यपदेशादिप्रतिपादकैस्सूत्रैरनेकप्रकार[illegible]दिस्थावराचिद्विशेषे [illegible]द्श्रुतीनाम्—परमात्मजीवात्मनोर्भेदप्रतिपादिकानां 'पृथगात्मानं प्रेरितार[illegible] ॥ २८३ ॥ [illegible]ुजा सखाया' इत्यादीनां तयोरभेदप्रतिपादिकानां 'तत्त्वमसि' 'अयमात्[illegible] —[illegible]्यमित्यादि[illegible] । शास्त्रयश्च—विरोधश्च । घटकनिगमतः—घटकश्रुत्यनुसारेण, 'य आत्मनि[illegible] 'अन्तःप्रविष्टश्शास्ता जनानाम्' 'सर्वं समाप्नोषि ततोऽसि सर्वः' [illegible]कर्ता भुङ्क्त[illegible]शरीरशरीरिभावप्रतिपादकसोपबृंहणघटकश्रुत्यनुसारेणेत्यर्थः । व्यपोढम्—परिह[illegible]—जीवपरमात्मनोः परस्परविरुद्धभेदाभेदान्यतराङ्गीकारविरोध्याक्षेपे । समाधावपि—अनन्यथासिद्धघटकश्रुत्यनुसारबलिष्ठानन्यथासिद्धभेदश्रुत्यनुसारेणान्यथासिद्धानामभेदश्रुतीनामान्यपर्यप्रदर्शनेन परस्परविरोधशमने च । समधिको हेतुरत्र नास्ति—पूर्वमप्रतिपादितो हेतुरपि अस्मिन्नधिकरणे न दृश्यते । इति चेदिति शेषः । सत्यम्—उक्तं तथैव । अंशचिन्ता तु—अस्मिन्नधिकरणे क्रियमाणो जीवस्य परमात्मांशत्वविचारस्तु । पादांशाद्युक्तिमुह्यद्बहुकुमतिमतक्षिप्त्यै—पादत्वेनांशत्वेन शक्त्यादिरूपतया चोक्तिभिः श्रुतिस्मृतिसिद्धैर्व्यवहारैर्मुह्यन्तो मोहं प्राप्ता जीवपरमात्मनोरेकवस्तुत्वभ्रमं प्राप्ता बहवश्च ये कुमतयः शङ्करयादवप्रकाशभास्करादयः तन्मतक्षेपाय । इत्ययेहीति शेषः । तथाहि 'पादोऽस्य विश्वा भूतानि' 'ममैवांशो जीवलोके जीवभूतस्सनातनः' 'विष्णुशक्तिः परा प्रोक्ता क्षेत्रज्ञाख्या तथापरा' इत्यादिषु जीवानां ब्रह्मपादांशशक्त्यादिरूपतया व्यवहारो हि दृश्यते, ते तथा बभ्रमुः तन्निवर्तनाय पुनः पुनर्जीवतत्त्वचिन्तेति भावः ॥ २४४ ॥

अंशत्वं रामकृष्णप्रभृतिषु घटतां विग्रहांशावतारात्
जीवे ब्रह्मांशतोक्तिर्नतु निरवयवं ब्रह्म वस्तुर्घटेत ।
ब्रह्मातश्चित्समष्टिः प्रतिपुरुषमिह त्वंशता चेत्ययुक्तं
[illegible]यामिति बहुभवनध्यातुरेकत्वसिद्धेः ॥ २४५ ॥

[illegible]त्वं व[illegible]

[illegible]त श्रुतौ समस्त[illegible]पक्षी मन्यते—रामकृष्णादिषु वासुदेवांशत्वं वक्तुं शक्यत एव, अत्रो तरङ्गाजोवस्त्रे [illegible]दिदेवावतारविशेषाणां प्रादुर्भावात् । जीवे तु ब्रह्मांशभावोक्तिर्निरवयत्वमेव ब्रह्म

वक्तुर्भवतो न घटेत । अतश्चित्समष्टिर्ब्रह्म ... षमपि ब्रह्मांशत्वं वक्तव्यमिति । तदिदमाह— अंशत्वमित्यादिना अंशता चेत्यन्तेन ... ते—अयुक्तमिति । अयुक्तत्वमेव विवृणोति— विश्वस्रष्टुरिति । अत्र विश्वस्रष्टा ... माप्यादिषु ... म्' इति स्वस्य बहुभवनं सङ्कल्पयति । स चैक एव । नहि जीवसमष्टावेको ... यपदेशादन्यथा चाप्यते । समष्टिर्नाम सङ्घातविशेष एव । सतु बहुभवन-सङ्कल्पाश्रयो न भवति । ... पुरुषा बहव एव । न तेष्वेकत्वमस्ति । तेनैकस्य पुरुषस्य 'बहुस्याम्' इति ... ॥ २४५ ॥

पद०—अंशत्वमित्य ... परमांशत्वम् । रामकृष्णप्रभृतिषु—रामकृष्णनृसिंहादि-भगवन्मूर्तिषु । विग्रहांशावतारे ... योंऽश एकदेशस्तस्यावतारात् अब्धौ तरङ्गाणामिव प्रादुर्भावात् । घटताम्— ... पि, एवं ब्रह्म वक्तुः—ब्रह्म वस्तु निरंश-मिति वदतो भवतः । जीवे ब्रह्मांशतोक्तिस्तु—जीवात्मनि ब्रह्माख्यवस्त्वेकदेशत्वात्मकांशत्वकथनं तु । न घटेत—न युज्येत । विग्रहैकदेशत्वस्यानङ्गीकारात् ब्रह्मस्वरूपैकदेशत्वस्य च निरवयवब्रह्माङ्गीकारविरु-द्धत्वादंशत्वमेवं न वक्तव्यमित्यर्थः । तर्हि कथमिति चेद्वदति अतः—पक्षान्तरे उक्तानुपपत्तेः । चित्समष्टिर्ब्रह्म—वृक्षसमष्टेर्वनत्ववत् चित्समष्टेर्ब्रह्मत्वमित्यर्थः । इह—चित्समष्टिरूपे ब्रह्मणि । प्रतिपुरुषन्तु अंशता च—प्रतिवृक्षं वनांशत्ववत् प्रतिजीवं ब्रह्मांशत्वञ्च । इति—एवं शङ्कनम् । अयुक्तम् । बहुस्या-मिति—अहमेको बहुभवानीत्येवमाकारेण । बहुभवनध्यातुः—कर्तव्यतया बहुभवनमालोचयतः । विश्वस्रष्टुः—जगत्कारणभूतस्य परमात्मनः । एकत्वसिद्धेः—एकत्वप्रतीतेः । स्यामित्येकत्वं हि प्रतीयते, नहि जीवसमष्टावेको बहुभवनसङ्कल्पयिता विद्यते । समष्टिर्नाम सङ्घातविशेष एव । सतु बहुभवन-सङ्कल्पाश्रयो न भवति । सङ्घातरूपसमष्ट्याश्रयाश्च जीवा बहव एव । न तेष्वेकत्वमस्ति येनैकस्य पुरुषस्य बहुस्यामिति बहुभवनसङ्कल्पनं युज्येतेति भावः ॥ २४५ ॥

व्योमैकं स्याद् घटाद्यैः पृथगुपधिगणैर्ब्रह्म बह्वंशमेकं
तत्रोपाधिव्यपाये भवभृदयमियाद् ब्रह्मतामित्ययुक्तम् ।
स्वानर्थारम्भदौस्स्थ्यात्प्रतिनियतगुणप्रत्यभिज्ञाद्यदृष्टेः
छिन्नाच्छिन्नांशचिन्तोदितबहुविहतेस्साम्यशब्दा... ॥

चिन्ता०—पूर्वं जीवसमष्टिर्ब्रह्मेतिपक्षं प्रतिक्षिप्याधुना पुनः प्राक्सम्प्रोक्तोपाधिविषयकाद्योनयनोर्ध्वन- ... पति—व्योमेति । यथैकमेवाकाशं घटादिभिरुपाधिभेदैः पृथक् स्यात् , एवं ब्रह्म ... प्रभूतपुण्यात्मक-

द्व्यंशं स्यात् । तथा सति उपाधिव्यपाये दे[illegible] जीवोऽयं ब्रह्मतामियात्प्राप्नुयात् । यथा घटादिविगमे घटाकाशादिकं महाकाशतां प्राप्नुते स्थावर[illegible] क्षिपति—अयुक्तमिति । तत्र हेतुमाह—स्वानर्थेति । अयमर्थः—युष्मत्पक्षे ब्रह्मै[illegible] प्रवृत्ते मध्ये [illegible] जानाति ? न वा ? जानाति चेत् स्वस्वरूपस्यानर्थरूपसंसारं न कुर्यादेवेति न जगदारम्भात् । अत[illegible] माह । तर्हि न जानातीति ब्रूम इत्याशङ्क्याह—प्रतिनियतेति । योगिनां सर्वज्ञादिस्थावरान्तविशेषे [illegible] वादिप्रत्यभिज्ञानं दृष्टमेव । एवमीश्वरस्यापि पुण्यपापारब्धनानाशरीरप्रयुक्तस्यार्थः ॥ २८२ ॥ [illegible] दीश्वरस्य न सा घटेतेति पूर्वोक्तं तदवस्थमेव । एतस्य पक्षस्य[illegible]पि न्याय्यमित्यादि[illegible]न्नेत्यादिना । अयमर्थः—उपाधिसंसृष्टं ब्रह्म जीवइति भवद्भिरुच्यते[illegible] जीवभावेन सुखदुःखादिकमनुभवति ? किं वा उपाधिना छिन्नं ब्रह्म[illegible] पुनरच्छिन्नमेव ब्रह्म यत्र यत्रोपाधिसंसर्गस्तत्रतत्र संसारदुःखमनुभवति ? अथवा [illegible] ? किंवान्य एव कश्चिदुपाधिसंसृष्टो जीवतामश्नुत इति । सर्वे पक्षा न सङ्घटन्ते । प्रथमपक्षे तावत्सर्वदा सर्वेष्वपि प्रदेशेषु ब्रह्मण उपहितत्वं स्यादित्यत्यन्तदौस्थ्यमेव । द्वितीयपक्षे पुनरच्छेद्यस्य ब्रह्मणश्छेद्यत्ववादो जिह्वाच्छेदनमेव तनोति । तृतीयेऽपि पक्षे सर्वस्य ब्रह्मप्रदेशस्य कालभेदेनोपाधिसम्बन्धादुपहितत्वमुपाधिवियोगाद्वियुक्तत्वमिति प्रतिक्षणं बन्धमोक्षप्रसङ्गः । उपाधेरेव संसारित्वे चार्वाकपक्षः परिगृहीतस्स्यात् । उपाधिसंसृष्टोऽन्य इति पञ्चमपक्षोऽपि पञ्चत्वमेव गच्छति ब्रह्मव्यतिरिक्तस्य पुरुषस्य कस्यचिदस्वीकारादिति । साम्यशब्दाच्च मुक्ताविति—मुक्तौ 'निरञ्जनः परमं साम्यमुपैति' इति साम्यवचनात् स्वरूपैक्यवादो न युज्यत इत्यर्थः ॥ २४६ ॥

पद०—औपाधिकब्रह्मवादं निरस्यति—व्योमेत्यादि । एकं व्योम घटाद्यैरुपधिगणैः पृथक् स्यात्—यथा वस्तुत एकमेवाकाशं घटाद्यैरुपाधिभिर्युक्तं सत् भिन्नभिन्नं भवति घटाकाशो मठाकाश इति, एवं ब्रह्माप्युपधिगणैर्देहाद्युपाधिगणैर्युक्तं बह्वंशं बहुबद्धजीवात्मकांशयुक्तं स्यात् । उपाधिव्यपाये तत्रायं भवभृत् ब्रह्मतामियात्—उपाधिनिवर्तकज्ञानादिना देहाद्युपाधिनिवृत्तौ सत्यां तदानीमयं जीवो ब्रह्मभावं गच्छति । यथा घटाद्युपाधिनाशे उपहितं वियत् शुद्धाभिन्नं भवति तद्वदित्यर्थः । इत्ययुक्तम्—इति कल्पनमा[illegible]नर्थारम्भदौस्स्थ्यात्—अयमर्थः । युष्मत्पक्षे ब्रह्म स्वस्य जीवतादात्म्यं जानाति [illegible] चेत् स्वानर्थरूपं संसारं नारभेत अतो जगदारम्भासिद्धिरिति । न जानाति [illegible] कत्वं व [illegible] गुणप्रत्यभिज्ञाद्यदृष्टेः—योगिनां सर्वज्ञानां नानाशरीरप्रयुक्तसुखदुःखप्रति- [illegible]त श्रुतौ सप्त[illegible] जीवस्य [illegible] पुण्यपापारब्धनानाशरीरप्रयुक्तस्वात्मनिष्ठसुखदुःखप्रतिसन्धानं स्यात् नचैवं दृश्यते

प्रत्युत सुखदुःखादिगुणाः प्रत्यभिज्ञादयः [illegible] प एकैकजीवस्यैकैकशरीरप्रयुक्तत्वेन स्वात्मनिष्ठत-यैव दृश्यन्ते । अत एकस्य ब्रह्मणो [illegible] ते-देवं प्रतिनियतगुणप्रत्यभिज्ञादिदृष्टिर्न घटेतेति भावः । छिन्नाच्छिन्नांशचिन्तो [illegible] भाष्यादिषु ब्र[illegible] कल्पना छिन्नांशो वा जीव उताच्छिन्नांश इति च्छिन्नाच्छिन्नांशयोर्या चिन्ता [illegible] व्यपदेशादन्यथा चापि[illegible]दापादिता या बह्वी विहतिर्दूषणप्राप्तिस्तस्याश्चे-त्यर्थः । तथा हि—उपा[illegible] । स [illegible] दुरुच्यते, किं तदुपाधिसंसृष्टं ब्रह्म सर्वत्रापि जीव-भावेन सुखदुःखादिकमनुत[illegible] ॥ छिन्नांशेन संसरति, अथवा पुनरच्छिन्नमेव ब्रह्म यत्रयत्रोपाधिसंसर्गस्तः [illegible] धिरेव जीवः, किंवान्यः कश्चिदुपाधिसं-सृष्टो जीवतामश्नुत इति । [illegible] प्रथमप्रवृत्तिरीश्वर[illegible] दा सर्वेष्वपि प्रदेशेषु ब्रह्मण उपहितत्वं स्यादित्यत्यन्तदौःस्थ्यमेव । द्वित[illegible] ऽपि जिह्वाच्छेदनमातनोति । तृतीये-ऽपि पक्षे सर्वस्य ब्रह्मप्रदेशस्य काल[illegible] हितत्वमुपाधिवियोगाद्विमुक्तत्वमिति प्रतिक्षणं बन्धमोक्षप्रसङ्गः । उपाधेरेव संसारत्वे चार्वाकपक्षः परिगृहीतः स्यात् । उपाधिसंसृष्टोऽन्य इति पञ्चम-पक्षोऽपि पञ्चत्वमेवागच्छति ब्रह्मव्यतिरिक्तस्य कस्यचिदनङ्गीकारादिति भावः । **मुक्तौ साम्यशब्दाच**—मुक्तिदशायां 'निरञ्जनः परमं साम्यमुपैति, इति साम्यवचनाच्च । अयुक्तमित्यन्वयः । साम्यस्य प्रमाण-सिद्धत्वात् तच्च भेदघटितमिति स्वरूपैक्यवादोऽप्युच्छिन्न इति भावः ॥ २४६ ॥

**मायोदन्वत्यपारे प्रतिफलति मृषावीचिषु ब्रह्मचन्द्रः**
**छायांशास्तस्य जीवा इति कतिचिदुशन्त्येतदालोचनीयम् ।**
**न ब्रह्म द्रष्टृ तेषामचिदपि हि तथा स्वेन कल्प्यो न जीवः**
**श्लिष्टैः प्राक्स्वात्महानेस्त्रितयसमधिकः कल्पकस्त्वत्र मृग्यः ॥ २४७ ॥**

चिन्ता०—एवं भास्करपक्षं निराकृत्य मृषावादिपक्षं प्रतिक्षिपति—**मायेति** । अविद्याख्यसागरे मिथ्याभूतासु वीचिस्थानीयासु बुद्धिषु चन्द्रस्थानीयं ब्रह्म प्रतिफलति तस्य च्छायांशा जीवाः प्रतिबिम्बस्थानीया जीवा इत्यर्थः । एवं केचिदिह मृषावादिपक्षनिष्ठा वदन्ति । एतत्प्रतिक्षिपति—**एतदालोचनीयमिति** । तदेव तदज्ञोक्तं विकल्पासहत्वेन प्रकटयति—[illegible]दंतम् । त[illegible]नोत्तरार्धेन । चन्द्रप्रतिबिम्बानां द्रष्टृभिरेव दर्शनं दृश्यते । कः पुनरिह द्रष्टा ? किं ब्रह्मैव[illegible]धो निनीपति, एवं [illegible]रिक्त-मचिद्रूप्यमेव किञ्चित्, अथवा जीव एव, यद्वा त्रितयव्यतिरिक्तः कश्चिद्[illegible]पविपयकाधोनयनोर्ध्वन-नाथः ; ब्रह्मणो द्रष्टृत्वाभावादित्याह—**न ब्रह्म द्रष्टृ तेषामिति** । तेषां पक्षे ब्रह्मणो द्रष्टृ[illegible]प्रभूतपुण्यात्मक-

द्वितीयोऽपि पक्षो न कक्षीकार्य इत्याह—[illegible]ति। तस्यापि द्रष्टृत्वं नास्तीत्यर्थः। तर्हि जीव एव जीवादिकं कल्पयतीति तृतीयपक्षे स्थावर[illegible]। सोऽपि नेत्याह—स्वेनेति। तत्र हेतुमाह—क्लृप्तेः प्रागिति। जीवकल्पनप्राधान्येन प्रवृत्ते मध्ये [illegible] कथं जीवं कल्पयेदित्यर्थः। तर्हि चतुर्थः पक्षः परिगृह्यतामित्याशङ्क्य तस्य ग्रायुक्तत्वात्। अतो[illegible]शङ्कनीयत्वमेव नास्तीत्याह—त्रितयेति। नह्यविद्याजीवब्रह्मभ्योऽन्यं क[illegible]—ब्रीह्यादिस्थावराचिद्विशेषे [illegible]वादिन इति ॥ २४७ ॥

पद०—एवं भास्करपक्षं प्रतिक्षिप[illegible]योदन्वतीत्यादि। अपरे मायोदन्वति—अविद्याख्यसागरे। मृष[illegible]षु बुद्धिषु। ब्रह्मचन्द्रः—चन्द्रतुल्यं ब्रह्म। प्रतिफलति—[illegible] प्रतिबिम्बांशाः। जीवाः—जीवा इत्युच्यन्ते। इति—एवम्। [illegible]रेणानु[illegible]ति, अङ्गीकुर्वन्तीत्यर्थः। एतदालोचनीयम्—सूक्ष्मदृष्ट्या विचारणीयम्। ल[illegible]बिम्बानां द्रष्टृभिरेव दर्शनं दृश्यते। कः पुनरिह द्रष्टा? किं ब्रह्मैव? किंवा ब्रह्मव्यतिरिक्तमचिद्द्रव्यमेव किञ्चित्? अथवा जीवएव? यद्वा त्रितयव्यतिरिक्तः कश्चिदन्यः? इति विकल्पेन दूषणमुच्यते—न ब्रह्मेत्यादिना। तेषां ब्रह्म न द्रष्टृ—तेषां पक्षे ब्रह्मणो द्रष्टृत्वं नास्तीत्यर्थः। यद्वा तेषां ब्रह्मप्रतिबिम्बानां जीवानाम्। अचिदपि तथा हि—अचितोऽपि द्रष्टृत्वं नास्ति हीत्यर्थः। द्रष्टृशब्दस्य जीवविशेषणत्वपक्षे द्रष्टेतिलिङ्गविपरिणामः कार्यः। स्वेन कल्प्यो जीवो न द्रष्टा—द्रष्टा खलु दृश्यक्लृप्तिः, जीवस्य द्रष्टृत्वे द्रष्टा स्वेन कल्प्यो जीवो न स्वस्य द्रष्टा भवितुमर्हति। कुत इति चेत् क्लृप्तेः प्राक् स्वात्महानेः—कल्पनात् पूर्वं कल्पकेन भवितव्यम्। अत्र कल्प्यस्यैव कल्पकत्वे कल्पनात्पूर्वं कल्पकस्वरूपालाभात् तस्य कल्पकत्वात्मकं द्रष्टृत्वं न सम्भवतीत्यर्थः। त्रितयसमधिकः कल्पकस्तु अत्र मृग्यः—अविद्याजीवब्रह्मभ्योऽन्यो जीवत्वकल्पको मृषावादिपक्षे शून्य इत्यर्थः ॥ २४७ ॥

सन्मात्रं ब्रह्म सर्वानुगतमिह पुनर्नित्यसिद्धास्त्रयोंऽशाः
जीवेशाचित्प्रभेदादिति च कतिचनेदञ्च नोदञ्चनीयम्।
सत्तामा[illegible]त्तेस्तदधिकवपुषश्शासितुर्ब्रह्मतोक्तेः
[illegible]क्यं निरवयवतया निश्चितेऽन्याशयं स्यात् ॥ २४८ ॥

[illegible]न्द्रथा[illegible]
[illegible]कत्वं व[illegible]

[illegible]त श्रुतौ सप्तल[illegible] यादवप्रकाशपक्षमनूद्य प्रतिक्षिपति—सन्मात्रमिति। सन्मात्रं ब्रह्म चिदचिदीजीव[illegible]स्यनुगतमेव वर्तते। इह सन्मात्रब्रह्मणि जीवेश्वराचिद्भेदात् त्रयोंऽशा नित्यसिद्धा

इति कतिचन यादवप्रकाशमतानुसारिणः [illegible] एवं प्रतिक्षिपति—इदञ्च नोदञ्चनीयमिति । इदं न ग्राह्यमित्यर्थः । अग्राह्य[illegible] । [illegible]ते-देदं । व्यक्तिषु जातिरिव चिदचिदीश्वर-तत्त्वत्रये सत्तासामान्यमनुवर्तते [illegible] भाष्यादिषु [illegible] नुवर्तत इत्यर्थः । वेदान्तेषु सत्तातिरिक्तस्य विश्वशासितुः पुरुषस्य ब्रह्मत्व[illegible]व्यपदेशादन्यथा चाप्र[illegible]दापादि इति । तेन चेतनाचेतनयोर्द्वयोरन्तर्यामितया विश्वनियामकं ब्रह्मतत्त्वम[illegible] । स [illegible]पुरुष्यन्तेर्थः । तर्हि 'भोक्ता भोग्यं प्रेरितारम्' इति ब्रह्मत्रैविध्यकथनं कथमि[illegible] ॥ [illegible] । नात्र तुल्यतया तत्त्वत्रयं ब्रह्मत्रैविध्य-मित्युच्यते अपितु चे[illegible]भेदेन त्रैविध्यमुच्यत इति न कोऽपि विरोधः । अन्याशयत्वे [illegible] इति । नहि निरवयवे सर्वव्याप्ते ब्रह्मणि स्वरूपभेदकथनं प्रमाणपदवीमुप[illegible]

पद०—यादवप्रकाशपक्षः प्रति[illegible]त्यादि । सन्मात्रं ब्रह्म सर्वानुगतम्—चिद-चिदीश्वरात्मकतत्त्वत्रयेऽपि सत् सदित्यनुगतमेव वर्तते । इह पुनः—पक्षे सन्मात्रब्रह्मणि तु । जीवेशाचित्स्वभेदात् त्रयोऽंशा नित्यसिद्धाः । इति च कतिचन—यादवप्रकाशपक्षस्थाः । उशन्तीत्यध्याहारः । इदञ्च नोदञ्चनीयम्—इदञ्च न ग्राह्यमित्यर्थः । सत्तामात्रानुवृत्तेः- व्यक्तिषु जातेरिव चिदचिदीश्वर-तत्त्वत्रयेऽपि सत्तासामान्यमात्रस्यानुवृत्तेः । न पुनस्सतस्त्रिष्वनुवृत्तिर्दृश्यत इत्यर्थः । तर्हि सत्त्वैव ब्रह्मास्त्वित्य-त्राह-तदधिकेति । तदधिकवपुषश्शासितुर्ब्रह्मतोक्तेः—सत्तातिरिक्तस्य विश्वशासितुः पुरुषस्य वेदान्तेषु ब्रह्मत्ववचनात् । ब्रह्मत्रैविध्यवाक्यम्—'त्रिविधं ब्रह्ममेतत्' इति ब्रह्मत्रैविध्यवाक्यन्तु । निरवयवतया निश्चिते—प्रबलप्रमाणैर्निरवयवत्वेन निश्चिते ब्रह्मणि विषये । अन्याशयं स्यात्—चेतनाचेतनविशिष्टं ब्रह्म विशेषणविशेष्यभेदेन त्रिविधमित्येतदर्थकं भवेत् । नहि निरवयवे ब्रह्मणि स्वरूपभेदकथनं सम्भाव्यत इति भावः ॥ २४८ ॥

**मेरोरंशः किरीटप्रभृतिरिति नयान्नित्यभिन्नेंऽशतोक्तिः**
**साजात्याल्पत्वमूला गमयितुमुचितेत्यागमासन्नपक्षे ।**
**अंशोक्तिस्स्यादमुख्या स हि निपुणधियामेकवस्त्वेकदेशः**
**तस्माज्जीवो विशिष्टे भगवति गुणवत्तत्प्रकारांश [illegible] ॥**

चिन्ता०—कश्चिद्वेदान्तासन्नवादी प्राह—मेरोरंशः किरीटप्रभृति[illegible]शेषविषयकाधोनयनोर्ध्वन-ज्ञानानन्दत्वेन ब्रह्मसाम्यात्स्वयमल्पत्वाच्चाभिधीयत इति । एतत्पक्षमनूद्य प्रतिक्षिपति [illegible]धप्रभूतपुण्यात्मक-

अस्मिन्नागमासन्नपक्षे दोषोऽस्तीत्याह—अं[illegible] मेरोरंशः किरीट इत्यत्र किरीटस्य मेरु-स्वरूपांशत्वमस्ति। तेनांशोक्तिमुख्या स्[illegible] [illegible]प्रवृत्ते स्थावर[illegible] [illegible]दर्शनार्थमंशशब्दार्थमेव व्युत्पाद-यति—सहीति। अंशो हि निपुणधिया[illegible]धान्येन प्रवृत्ते मध्ये [illegible] मेरोर्न स्वरूपैकदेशः तत्सजाती-यद्रव्यान्तरत्वात्। तद्वज्जीवोऽपि न ब्रह्म[illegible]स्यायुक्तत्वात्। अतो[illegible] [illegible]ो ब्रह्मांश इति परिचोदना-परिहारेणांशत्वमेव निर्धारयति—तस्मा[illegible]पि—ब्रीह्यादिस्थावराचिद्विशेषे[illegible] [illegible]चेतनाचेतनविशिष्टे ब्रह्मणि जीवस्तदपृथक्सिद्धविशेषणत्वेन ब्रह्मांश इत्[illegible]ीत्यर्थः॥ २८३॥

पद०—मेरोरित्यादि। किरीट[illegible]पि न्याय्यमिष्टादि[illegible] [illegible]यायेन। नित्यभिन्ने—परमात्मतो नित्यविलक्षणे जीवे। अंश[illegible] [illegible]मकृती भुङ्क्त[illegible] [illegible]चे[illegible]त्याल्पत्वमूला गमयितु-मुचिता—ज्ञानानन्दत्वेन साजात्यात् [illegible] [illegible]थ सुवर्णमयत्वेन मेरुसजातीयस्य स्वतोऽल्पस्य किरीटस्य मेर्वंशत्ववत् इत्येतदभिप्रा[illegible]। इत्यागमासन्नपक्षे—एवंरूपे आगम-संवादिनः पक्षेऽपि। अंशोक्तिरमुख्या स्यात्—औपचारिकी गौणी स्यात्। नहि किरीटादेर्मेरुत्व-रूपांशत्वं सम्भवति तस्य तदंशत्वोक्तिरमुख्यैव तद्वदिति भावः। अंशशब्दस्य को मुख्यार्थ इत्यत्राह—स हीत्यादिना। स हि—अंशो हि। निपुणधियाम्—सूक्ष्मबुद्धीनाम्। एकवस्त्वेकदेशः—एकवस्त्वेकदेशतया सम्मत इत्यर्थः। तस्मात्—एवमुपपादनात्। जीवः, विशिष्टे भगवति—चेतनाचेतन-विशिष्टे परमात्मनि। गुणवत्—गुणैस्तुल्यतया तदपृथक्सिद्धविशेषणत्वेन। तत्प्रकारांश उक्तः—विशिष्टे वस्तुनि विशेष्यस्येव विशेषणस्यापि तदेकदेशत्वेनांशत्वस्य मुख्यत्वात् तथा प्रकारांशो विशेष्यांश इति परीक्षकव्यवहाराच्च विशिष्टवस्त्वेकदेशप्रकाररूपत्वेन जीवस्य ब्रह्मांशत्वमुक्तमित्यर्थः॥ २४९॥

उक्तं नित्योपलब्धिप्रभृति परमते पूर्वमेव ह्यनिष्टं
भूयस्तादृक्प्रसङ्गः प्रकथित इह किं भोगसङ्कीर्णतादिः।
मैवं पूर्वं हि बाह्यप्रसृतिमशमयत् साम्प्रतं ब्रह्मवाद-
व्याजोत्सिक्तान्कुदृष्टीन्परिहृतिरिति च स्याद्भविष्यन्नयेषु॥ २५०॥

चिन्त[illegible]था[illegible] [illegible]ौनरुक्त्यमाशङ्क्य प्रतिक्षेप्यवादिभेदात्तन्नेति परिहरति—उक्तमित्यादिना। पूर्वमे[illegible] [illegible]त्वं च [illegible]ये नित्योपलब्ध्यनुपलब्धिप्रसङ्गादिकं तर्कजातमुक्तम्। अधुना जीवस्य [illegible]त श्रुतौ सस[illegible] [illegible]ङ्गादिकमुपक्षिप्य प्रतिक्षिप्यते। तत्पौनरुक्त्यं किं न स्यादित्याशङ्कां परिहरति—जीवस्ये[illegible] [illegible] प्रकारभेदेन परिहारं प्रकटयति—पूर्वमिति। पूर्वं हि बाह्यनिराकरणप्रसङ्गेन

सर्वमुक्तम् । अधुना पुनर्ब्रह्मवादव्याजे[illegible] प्रशमयतीति विभागः । अयं परिहारो यत्रयत्र पौनरुक्त्यप्रसङ्गस्तत्र तत्र स[illegible] । [illegible]ते-देदं परिहृतिरिति ॥ २५० ॥

[illegible]करण[illegible]
भाष्यादिषु प्र[illegible] [illegible]थना ।
[illegible]व्यपदेशादन्यथा चापि[illegible]दापादि[illegible]
[illegible] स[illegible] [illegible]च्यनेऽर्थः
[illegible]: पर इति बहुधा[illegible] ॥
[illegible]नां घटकनिगमतश्शा[illegible]
[illegible]प्रथमप्रवृत्तिरीश्वर[illegible]
[illegible]मताक्षिप्तये [illegible]

पद०—उक्तमित्यादि[illegible] । नित्योपलब्धिप्रभृति अनिष्टम्— नित्योपलब्धिप्रसङ्गादिदू[illegible] [illegible]क्षेपसमय एवोक्तम् । भूयः—पुनः । इह—एतदधिकरणे । [illegible] [illegible]गसाङ्कर्यादिरूपस्तादृशानिष्टप्रसङ्गः । किं प्रकथितः—कुतोऽभि[illegible] । मैवम्—एवं माशङ्कनं कार्षीः । पूर्वं बाह्यप्रसृतिम्—बाह्याना[illegible] [illegible]मतम्—एतदधिकरणे । ब्रह्मवादव्याजोत्सिक्तान्—ब्रह्मवादव्या[illegible] अशमयदित्यस्य शमयतीतिविपरिणामः कार्यः । यद्वा—अशमयदित्येव [illegible] [illegible]तिः । इति—एवम् । परिहृतिः— युक्तीनामैक्येऽपि दूष्यवादिभेदात् पुनर्वचनमित्यवप[illegible]रहारः । भविष्यन्नयेषु च स्यात्—भाव्यधिकरणेषु चानुसन्धेय इत्यर्थः ॥ २५० ॥

मिथ्याज्ञानादिचक्रे मरुति भगणवद् घूर्णमानस्य जन्तोः
प्रत्यक्तत्त्वावबोधाद् भवपरिहरणे सर्वतन्त्राविगीते ।
शुद्धात्मज्ञानगर्भां परभजनभिदामङ्गभेदांश्च वक्ष्यन्
मीमांसारम्भसिध्यद्वपुषमपि पुनश्शोधयामास जीवम् ॥ २५१ ॥

चिन्ता०—अत्र सर्वाद्यपाद एव मीमांसारम्भे जीवस्वरूपस्य प्रसाधितत्वात् किमर्थमधुना जीवस्वरूपशोधनं क्रियत इत्याशङ्क्य पूर्वोत्तरसङ्गतिविशेषाभिधानेन परिहरति—मिथ्येति । अयमत्र शब्दान्वयः— अविद्याकर्मवासनारुचिप्रकृतिसम्बन्धात्मके चक्रे मरुति नक्षत्रगणवत् घूर्णमानस्य जीवस्य प्रत्यक्तत्त्वावबोधात् आत्मतत्त्वावबोधात् संसारपरिहरणे सर्वसिद्धान्तसम्मते सत्यपि पुनरत्र सूत्रकारस्तृतीयाध्याये शुद्धात्मज्ञानगर्भां परभजनभिदां परमात्मशरीरभूतस्वात्मोपासनरूपतया वा स्वात्मशरीरकपरमात्मोपासनरूपतया वा देहातिरिक्तविशुद्धात्मज्ञानगर्भां परमात्मभक्तिभिदां तदङ्गभेदांश्चैतम् । त[illegible] वक्ष्यन् । मीमांसारम्भसिध्यद्वपुषमपि जीवं पुनश्शोधयामासेति न पौनरुक्त्यदोषप्रसक्तो निनीषति, ए[illegible]न्तरकालान्तरादिभाविफलानुभवयोग्यं स्थायिजीवस्वरूपमात्रं प्रसाधितम् । इहोपविषयकाधोनयनोर्ध्वनयनपरमात्माधीनत्वादियुक्तो जीवो विशोध्यत इति विशेषः ॥ २५१ ॥ [illegible]धप्रभूतपुण्यात्मक-

पद०—मिथ्याज्ञानादीत्यादिकार्ये ...—अविद्याकर्मवासनारुचिप्रकृतिसम्बन्धानां पुनःपुनःपरिवर्तनेन त एव चक्रं तेन प्रवृत्ते स्थावरे ... । भगणवत्—नक्षत्रगणवत् । यथा नक्षत्रगणो महावातभ्राम्यच्छिंशुमारे प्राधान्येन प्रवृत्ते मध्ये ...र्थः । घूर्णमानस्य—बम्भ्रम्यमाणस्य । जन्तोः—जीवात्मनः ...कथनस्यायुक्तत्वात् । अते... ...धात् । भवपरिहरणे—संसारपरिहरणे । सर्वतन्त्राविगीते—...पि—व्रीह्यादिस्थावराचिद्विशेषे ... ...र्भां परभजनभिदाम्—परमात्मशरीरभूतस्वात्मोपासनरूपतया वा ...तीत्यर्थः ॥ २८३ ॥ ...आ देहातिरिक्तविशुद्धात्मज्ञानगर्भां परमात्मभक्तिभिदाम् । अङ्गे... ...पि न्याय्यमिष्टादि... ...शमदमादीन् । वक्ष्यन्—तृतीयाध्यायतृतीयचतुर्थपादयोः प्रतिपा... ...प्रकृती भुङ्क्त... ...मीमांसारम्भसिध्यद्वपुपमपि जीवं पुनश्शोधयामास—पूर्वमीमांसार... ...त्रेण ... ...कालान्तरभाविफलानुभवयोग्यस्थायिस्वरूपतया सिद्धस्वरूपमपि जीवात्मा... ...कृत्वपरमात्माधीनत्वादियुक्ततया पुनश्शोधयामास ॥ २५१ ॥

द्वितीयाध्यायतृतीयपादाधिकरणार्थानां विभज्य दर्शनम् ॥

क्लृप्तिर्व्योमादिकेऽपि क्रमभुवि च विभोः प्राच्यतत्त्वैर्विशिष्टात्
जीवस्यौपाधिकौ तु प्रजननविलयौ चिद्घनज्ञातृतास्य ।
कर्तृत्वं पारतन्त्र्यं गुणतनुनयतो विश्वरूपांशता चे-
त्याम्नायान्योऽन्यबाधव्यपनयनवियत्पादसाध्यानि सप्त ॥ २५२ ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु अधिकरणसारावल्यां
द्वितीयस्याध्यायस्य द्वितीयः पादः

चिन्ता०—उक्ताधिकरणसप्तकार्थान् विभज्य दर्शयति—क्लृप्तिरित्यादिना । परवादिभिर्नित्यत्वेनोक्ते व्योमादिकेऽपि क्लृप्तिः सृष्टिः प्रथमाधिकरणे प्रतिपाद्यते । द्वितीयाधिकरणे तु पूर्वपूर्वतत्त्वविशिष्टा... ...ह्मणः... ...देवोत्पत्तिरुच्यते—क्रमभुवीति । 'आकाशाद्वायुः' इत्यादिना क्रमेणोक्तेऽपीत्यर्थः । ...त्वं च ... इत्यनुषज्यते । तृतीये पुनरधिकरणे जीवस्य प्रजननविलयौ देहोपाधि... ...त श्रुतौ सप्तम्... ...करणे पुनरस्य जीवस्य ज्ञानघनत्वसहितं ज्ञातृत्वमुक्तम् । पञ्चमादिष्वधि... जीवस्य ... ...मुच्यते । गुणतनुनयत इति—यथा गुणगुणिनावपृथक्सिद्धौ, यथा च देह-

देहिनौ, तथा जीवाः परमपुरुषस्यापृथक्सि... प्रशमयतीआम्नायेति—वेदवाक्यानामन्यो-न्यविरोधपरिहरणपरे वियत्पादे सप्त... । ...ते—देहे रिहतिर्धिन्त इत्यर्थः ॥ २५२ ॥

पद०—क्लृप्ति... परवादिभिर्नित्यत्वेनोक्ते व्योमादिकेऽपि क्लृप्तिस्सृष्टिः । 'न वि... प्रथमप्रवृत्तिरीश्वर... क्रमश्रुतिं च—'आकाशाद्वायुः । वायोरग्निः । अग्नेरापः ।' इत्यु... वस्तुनि । प्राच्यतत्त्वैर्विशिष्टात् विभोः क्लृप्तिः—पूर्वपूर्वतत्त्वैश्शरीरभूतैर्विशिष्टात् ... सृष्टिः । क्लृप्तिपदस्यानुषङ्गः । 'तेजोऽतस्तथाह्याह' इत्यादिद्वितीयाधिकरणार्थोऽयम् । जीवस्य प्रजननविलयौ तु औपाधिकौ—जीवात्मन उत्पत्तिनाशौ देहोपाधिप्रयुक्तौ । 'नात्मा श्रुतेः' इत्यादितृतीयाधिकरणार्थः । अस्य चिद्धनज्ञातृता—जीवात्मनो ज्ञानस्वरूपत्वयुक्ता ज्ञातृता । 'ज्ञोऽत एव' इत्यादिचतुर्थाधिकरणार्थः । कर्तृत्वम्—अस्येत्यनुषङ्गः । जीवात्मनः कर्तृत्वम् । अयं 'कर्ता शास्त्रार्थवत्त्वात्' इत्यादिपञ्चमाधिकरणार्थः । पारतन्त्र्यम्— पराधीनस्वरूपप्रवृत्तिकत्वम् । अयं 'परात्तु तच्छ्रुतेः' इत्यादिषष्ठाधिकरणार्थः । गुणतन्नुनयतः—गुणानां शरीरस्य च यो नयः अपृथक्सिद्धविशेषणत्वेन तत्प्रकारत्वं तस्मादित्यर्थः । विश्वरूपांशता च—विश्वशरीरकपरमात्मात्मकविशिष्टवस्त्वेकदेशत्वरूपांशत्वञ्च । अयं 'अंशो नानाव्यपदेशात्' इत्यादिसप्तमाधिकरणार्थः । इति—एवम्भूतानि । सप्त—सप्ततत्त्वानि । आम्नायान्योन्यबाधव्यपनयनवियत्पादसाध्यानि—वेदान्तवाक्यानामन्योन्यविरोधपरिहारपरेण 'न वियत्' इत्यादिपादेनावगन्तव्यानीत्यर्थः ॥ २५२ ॥

इति श्रीमद्रङ्गनाथशठमथनयतिराजकटाक्षलब्धोभयवेदान्तहृदयस्य भारद्वाजस्य श्रीनिवासराघवदासस्य (श्रीमदहोबिलमठमहास्थाननिर्वहणधुरन्धर श्रीमद्वेदमार्गप्रतिष्ठापनाचार्य परमहंसपरिव्राजकाचार्य सर्वतन्त्रस्वतन्त्रोभयवेदान्ताचार्य श्रीभगवद्रामानुजसिद्धान्तनिर्धारणसार्वभौम श्रीलक्ष्मीनृसिंहदिव्यपादुकासेवकश्रीवण्शठकोपश्रीशठकोपरामानुजमहादेशिकदितम् । तत्... कृतौ अधिकरणसारावलीव्याख्यायां पदयोजनाख्यायां

द्वितीयस्याध्यायस्य तृतीयः पादः

चोद्यस्य ... अनिरुद्धादिकार्ये ...
कर्मपर इति ... येषामतिम पुण्यपापैर्जीव प्रवृत्ते स्थावर ...
... पादुत्यनपेक्षमेव जन्म ने प्राधान्येन प्रवृत्ते मध्ये ...
... कातिस्थावरत्वकथनस्यायुक्तत्वात् । अते ...
... न ण एवं ऽपि—व्रीह्यादिस्थावराचिद्विशेषे ...
...—यात्प्नोतीत्यर्थः ॥ २८३ ॥

अक्षाद्युत्पत्त्यनूक्तौ ... पि न्याय्यमित्यादि ...
तत्संख्यादेः परीक्षा ... प्रकृती भुङ्क्त ... चेन्न ।
एतेष्वब्रह्मकार्यं किमपि ... ात्
तत्साक्षात्सङ्गतिस्स्यात् प्रथमचरमयोर्मध्यमानां प्रसङ्गात् ॥ २५२ ॥

चिन्ता०—अत्र प्रयोजनाधिक्याभावेन पादान्तरारम्भमाक्षिप्य समाधत्ते—अक्षादीति । अयमिह शब्दार्थः—आत्मन उत्पत्त्यभावसमर्थनं ज्ञातृत्वसमर्थनमित्यादिकं फलविशेषवत्त्वात् कर्तव्यमेव । अचिद्विशेषरूपस्येन्द्रियादेरुत्पत्तिकथनमत्यन्ताभासप्रयोजनमेव । यत्किञ्चिदधिकाशङ्कापरिहारार्थमधिकरणमारभ्यते चेत् तदपि स्पष्टमिह न दृश्यते । तदिदमाह—मन्दमिति । नन्वस्याधिकफलमिन्द्रियसंख्यादिपरिज्ञानमित्याशङ्क्याह—तत्संख्यादेरिति । नहि काकदन्तसंख्यापरिज्ञाने किञ्चित्प्रयोजनमस्ति । तद्वदिन्द्रियाण्यप्येकादश वा षडित्यादिविशेषपरिज्ञाने न किमपि फलमुपलभामहे । आशङ्कितमर्थं प्रतिक्षिपति—नेति । प्रतिक्षेपार्थं प्रकटयति—एतेष्विति । प्रकृतेऽपि प्रपञ्चस्य ब्रह्मकार्यत्वं हि प्रतिज्ञातम् । तत् केषांचिद्ब्रह्मकार्यत्वसमर्थनाभावे श्रुतिविप्रतिपत्त्या कस्यचित् मन्दस्य विप्रतिपत्तिरप्रतिपत्तिर्वा स्यात् । शिष्यानुग्रहार्थैव हि सूत्रकारस्य प्रवृत्तिः । तस्मात् प्राणादिकार्यपरिशोधनार्थः पादारम्भस्सार्थक एव । तत्र स्यात् प्राणकार्यत्वप्रतिपादकस्य प्रथमाधिकरणस्य ‘ संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात्’ इति चरमाधिकरणस्य च साक्षादिह सङ्गतिः मध्यमानां प्रासङ्गिकी सङ्गतिरिति विभागः ॥ २७२ ॥

... न्द्र४ ॥

... त्वं व ... ादि । अक्षाद्युत्पत्त्यनूक्तौ—अचिद्विशेषाणामिन्द्रियादीनामुत्पत्तिकथने । ... त श्रुतौ समस्त ... नास्ति । अत्र—इन्द्रियाद्युत्पत्तिविषये । अधिकाशङ्कनं तु मन्दम्—यत्कि... जीवस्रे ... रिहारार्थमधिकरणमारभ्यत इति चेत् तदिदं स्पष्टतया न दृश्यते तत इदं मन्दम् ।

तत्संख्यादेः परीक्षापि—इन्द्रियादिसंख्या ... प्रशमयतीआम्नायेति—वेदवाक्यानामन्यो-
तुल्यतया स्वीकृता बलिभुग्दन्ती ... करणा ... ते देहं रिहतिधिन्त इत्यर्थः ॥ २५२ ॥

इति चेन्न—इत्याशङ्कनं न युक्तं भाष्यादिषु प्र... रचना ... त्रस्वतन्त्रेण
ब्रह्मकार्यं न भवतीति । कुशपदेशादन्यथा चाक्षिदापादि इति ... यण
इन्द्रियाद्युत्पत्तिविचारपरस्य स... रः पर इति वहुधा ... दुरुच्यन्तेऽर्थः ... मणौ ... —तस्मात् । प्रथम-
चरमयोः—'तथा प्रा... ॥ ... पादः ... स्य 'संज्ञामूर्तिक्लृप्तिस्तु
त्रिवृत्कुर्वत उपदेशात् नां घटकनिगमतश्शा ...दपरमात्... परमांशत्वम् ... —परवादिभिर्निचतुर्मुखशरीरकपरमात्मकर्तृकेति
प्रतिपादयतश्चरमाधिकरणस्य प्रथमप्रवृत्तिरीश्वरात् को ... भानाम्—उक्ताधिकरणद्वयमध्यवर्तिनां
त्वधिकरणानाम् । प्रसङ्गात् से... मताक्षिसये ... स्त

अष्टावत्राधिकाराः प्रथम इह ।वियन्नीतिरुक्तेन्द्रियाणां
तेजोऽबन्नोक्तनीतिं द्रढयति चरमे व्यष्टिभेदस्य सृष्टौ ।
संख्यामानादिचिन्तास्वपि तदुपहितोपासनाद्यैः फलं स्यात्
प्राणादिभ्यः प्रमाता पृथगिति विशदीकर्तुमप्येष पादः ॥ २५४ ॥

चिन्ता०—अत्र पादे पुनरधिकरणसङ्ख्यामधिकरणार्थभेदं तत्तदधिकरणप्रयोजनञ्च विभज्य दर्शयति—अष्टाविति । अष्टावधिकरणान्यत्र पादे प्रोक्तानि । तत्र प्रथमाधिकरणे वियन्नीतिरिन्द्रियाणामुक्ता । यथा वियत्पादे प्रथमं वियत उत्पत्तिरुक्ता, एवं प्राणपाद इन्द्रियाणामुत्पत्तिरुच्यते । यद्यपि चक्षुरादीनामुत्पत्तिः काणादैराक्षपादैरप्युच्यते अथापि मनस उत्पत्तिर्नोच्यते तेन प्रतिक्षेप्यविशेषलाभादधिकरणारम्भस्सप्रयोजन एव । चरमाधिकरणप्रयोजनमाह—तेजोऽबन्नेति । यथा तेजोऽबन्नादिशरीरकः परमात्मा समष्टिसृष्टावुत्तरोत्तरकार्यं करोतीति समर्थितम् एवं व्यष्टिसृष्टावपि चतुर्मुखादिशरीरकः परमात्मा तत्तत्कार्यं करोतीति समर्थनात् सप्रयोजनमेव चरमाधिकरणमितिभावः । तर्हि मध्ये संख्यापरिमाणादिकं किमर्थं चिन्त्यते कार्यकारणभावप्रतिपादनानुपयोगादित्याशङ्क्याह—संख्येति । इन्द्रियसंख्यापरिमाणादिचिन्तनेऽपि तत्तद्विद्याविशेषेषु तत्तत्सङ्ख्यापरिमाणादियुक्तेन्द्रियादिविशिष्टपरमात्मोपासने नागृहीतविशेषणे ... प्रयोजनत्वात् सर्वमपि पादे चिन्तनं सफलमेव । प्रकारान्तरेणापि साफल्यमाह—प्राणादि ... धो निनीषति, ... मनः-प्राणधीभ्योऽन्योऽनन्यसाधनः' इत्यादिना यामुनाचार्यादिभिर्देहादिभ्यः परत्वेन ... ज्ञेयविषयकाधोनयनोध्वन ... तत्र प्रयोजनवानेव परिमाणसङ्ख्यादिविशेषविचार इति सफल एष सर्वोऽपि पादः ॥ २... ... द्गाध्रप्रभूतपुण्यात्मक-

चोद्यस्य फल [illegible] अनिरुद्धादिकार्य[illegible] [illegible]रा:—अधिकरणान्यष्टौ । इह प्रथमे—तत्र

कर्मपर इति। येषामतिम[illegible]पुण्यपापैर्ज्ञानं प्रवृत्ते स्थावर[illegible] [illegible]चक्षुर्मनःप्रभृतीनामिन्द्रियाणामाकाशस्येव

[illegible] घमाहुरत्यनपेक्षमेव जन्म ने प्राधान्येन प्रवृत्ते मध्ये [illegible] [illegible]नेऽपि मनसस्तैर्नित्यत्वकथनात्

[illegible]कति[illegible]स्थावरत्वकथनस्यायुक्तत्वात् । अतेऽ[illegible] [illegible]धिकरणे । व्यष्टिभेदस्य सृष्टौ

तेजोऽबन्नोक्तन[illegible] [illegible] एव[illegible]पि—व्रीह्यादिस्थावराचिद्विशेषे [illegible] [illegible]शरीरकपरमात्मकार्यतारूप।

नीतिस्तां चतुर्मुखकर्तृक[illegible]—यात्त्मोतीत्यर्थः ॥ २८३ ॥ [illegible] द्रढयति । यद्यन्यकर्तृ-

कतया प्रतीयमानापि व्यष्टि[illegible]पि न्याय्यमिष्टादि[illegible] [illegible]रा समष्टिसृष्टिः परमात्म-

कर्तृकेत्यत्र का कथेति कैमुतिकन्या[illegible] [illegible]कृती भुङ्क्त [illegible] [illegible]मानादिचिन्तास्वपि—

इन्द्रियादीनां या सङ्ख्या सप्तत्वषट्त्वे[illegible] [illegible]स्वरूपं आदिशब्देन प्राणत्वेन्द्रि-

यत्वादिसामान्यविशेषधर्मतत्तद्देवताधिष्ठाना[illegible] [illegible] । तदुपहितोपासनाद्यैः फलं स्यात्—

तत्तत्संख्यापरिमाणादियुक्तेन्द्रियादिविशिष्टपरमात्मोपासनादिभिर्गृहीतविशेषणेति न्यायेन प्रयोजनं स्यात् ।

एष पादः—'तथा प्राणाः' इत्यादिरयं पादः । प्रमाता प्राणादिभ्यः पृथगिति विशदीकर्तुमपि—

जीवः प्राणेन्द्रियादिभ्यः पृथग्भूत इति स्पष्टतया प्रतिपादयितुमपि प्रवृत्तः ।

'देहेन्द्रियमनःप्राणधीभ्योऽन्योऽनन्यसाधनः ।
नित्यो व्यापी प्रतिक्षेत्रमात्मा भिन्नस्स्वतस्सुखी ॥'

इति यामुनाचार्योक्तप्रक्रियया जीवात्मनः प्राणेन्द्रियादिवैलक्षण्यप्रतिपादनमस्य पादस्य प्रयोजन-मित्यर्थः ॥ २५४ ॥

अग्रे सत्तामृषीणां श्रुतिरभिदधती प्राणतां वक्ति तेषां
नात्र ब्रह्मैव वाच्यं बहुवचनहतेस्तेन नित्याक्षसिद्धिः ।
मैवं तत्सृष्टिदार्ढ्याद् बहुवचनमिदं पाशनीत्यैव नेयं
प्राणर्षित्वे परात्मन्यपि हि सुघटिते तन्निरुक्त्यादिसाम्यात् ॥ २५४ ॥

[illegible]न्द्रथा[illegible] इति प्राणोत्पत्त्यधिकरणम् ॥ ६१ ॥

[illegible]कृत्वं व

[illegible]त श्रुतौ सप्तत्व[illegible]अत्र पादसङ्गतिर्भाष्ये 'ब्रह्मव्यतिरिक्तस्य वियदादेः कृत्स्नस्य कार्यत्वेनोत्पत्तावुक्तायां जीवस्वे[illegible]ऽपि स्वरूपान्यथाभावरूपोत्पत्तिरपोदिता । तत्प्रसङ्गेन जीवस्वरूपं शोधितम्। सम्प्रति

जीवोपकरणानामिन्द्रियाणां प्राणस्य चोत्पत्त्[illegible] याणि जीववन्नोत्पद्यन्ते, उत वियदादि[illegible] इति वाक्यं तेषामुत्पत्तिं प्रतिपाद[illegible] वमवगमयति नेति। किं प्राण[illegible] प्राणशब्दस्य परमात्मपरत[illegible]ादेना। 'असद्वा इदमग्र आसीत्। तदाहु[illegible] के ते ऋषय इति प्राणा वाव ऋषयः' इति जगदु[illegible]परवादिभिर्विधीयते। नचात्र ऋषिशब्देन ज्ञानवृद्धत्वात् ब्रह्मैव वाच्य[illegible] इति च बहुवचनविरोधात् तेन नित्येन्द्रियसिद्धिरिति पूर्वपक्षानुवा[illegible]स्मृतीतिहासपुराणेषु शतशः प्रदेशेष्वि—न्द्रियाणां सृष्टिवचनदार्ढ्यात् प्रतिसंहार[illegible] घटत एव। तर्हि बहुवचनविरोध इत्युक्तमवशिष्यते, तदपि न 'अदितिः पाशान्' इतिवद्बहुत्वस्यौपचारिकत्वात्। पाशाधिकरणे हि पाशबहुत्वं पाशैकत्वस्य प्रमाणसिद्धत्वात् पाशावयवबहुत्वपरमिति निरणैषुर्न्यायवृद्धाः। तेन चेतनाचेतनविशिष्टब्रह्मांशभूतविशेषणबहुत्वात् बहुवचनमपि युज्यत एव। तदिदमाह—बहुवचनमिति। ननु प्राणत्वमिन्द्रियेषु प्रसिद्धम्, ऋषित्वमपि ज्ञापकत्वात् कथञ्चिदुपपद्यते न परमात्मनीत्याशङ्क्याह—प्राणर्षित्वे इति। सर्वप्राणिप्राणनहेतुत्वात् प्राणत्वं तावदुपपद्यत एव। परमात्मनि तावदृषित्वमपि ज्ञानवृद्धत्वात्सुतरामुपपद्यते। तदिदमाह—तदिति। निरुक्तिश्चेत्तुल्या, रुढिश्चेत्सापि च तथा। अस्माभिरपि ब्रह्मण्येव रूढिरिति वक्तुं शक्यत्वादिति। यद्वा प्रयोगप्राचुर्यमादिशब्देन विवक्ष्यत इति ॥ २५५ ॥

इति प्राणोत्पत्त्यधिकरणम् ॥ ६१ ॥

पद०—अग्रे सत्तामित्यादि। अग्रे—सृष्टेः प्राक्। ऋषीणाम्—केषाञ्चिदृषिशब्दवाच्यानाम्। सत्ताम्—विद्यमानताम्। अभिदधती—प्रतिपादयन्ती। श्रुतिः—'असद्वा इदमग्र आसीत् तदाहुः किं तदासीदिति ऋषयो वाव ते अग्रेऽसदासीत् तदाहुः के ते ऋषय इति प्राणा वाव ऋषयः' इति श्रुतिः। तेषाम्—ऋषित्वेनोक्तानाम्। प्राणतां वक्ति—'प्राणा वाव ऋषयः' इति प्राणशब्दवाच्यत्वं प्रतिपादयति। अत्र—अस्मिन्प्रकरणे। वाच्यम्—ऋषिप्राणशब्दवाच्यम्। ब्रह्म नैव—ब्रह्म न भवितुमर्हति। कुतः? बहुवचनहतेः—'ऋषयः' 'प्राणाः' इति बहुवचनविरोधात्। बहुधोनय[illegible]परमात्मन्यभावादिति भावः। तेन—प्राणर्षिशब्दवाच्यानामिन्द्रियाणां सृष्टेः प्रागपि [illegible]भूतपुण्यात्मक[illegible]। नित्याक्षसिद्धिः—अक्षाणामिन्द्रियाणां नित्यत्वसिद्धिरित्यर्थः। मैवम्—एवं न मन्तव्यम्। तत्सृष्टि-

चोद्यस्य फल अनिणादिकार्य ' इत्यादिश्रुतिस्मृतिभिस्तेषामिन्द्रियाणां सृष्टेः

कर्मपर इति। येषामतिम पुण्यपापैर्जनन प्रवृत्ते स्थावर ऋषयः ' इतिबहुवचनं तु । पाशनी-

मात्राहुत्यनपेक्षमेव जन्म ने प्राधान्येन प्रवृत्ते मध्ये पदगतबहुवचनमिवौपचारिकतया

कतिस्थावरत्वकथनस्यायुक्तत्वात् । अत त् पाशावयवगतबहुत्वपरतया

तान्त्रिकैर्निर्णीतं एवंऽपि—व्रीह्यादिस्थावराचिद्विशेषे ादिसाम्यात्—सर्वप्राणि-

प्राणनहेतुत्वज्ञानवृद्धत्वरू —याप्नोतीत्यर्थः ॥ २८३ ॥ प्रयोगप्राचुर्यं वा विव-

क्षितम् । तदुभयस्यापि पर पि न्याय्यमिष्टादि पयेऽपि । सुघटिते हि-

सुसङ्गते इत्यर्थः ॥ २५५ ॥ प्रकती भुङ्क्त

इति

## सप्तगत्यधिकरणम् ॥ ६२ ॥

सूत्रम्—सप्त गतेर्विशेषितत्वाच्च ॥ २७२ ॥

सप्तप्राणाश्चरन्तीत्युदितमभिहितास्ते विशिष्यापि योगे
तस्मात् सप्तेन्द्रियाणीत्यसदधिकवचोदृष्टितोऽत्रान्यपर्यात् ।
लक्ष्मैषां सात्त्विकाहङ्करणपरिणतिद्रव्यता चाविशिष्टा
भेदेनोक्तिः प्रधाने मनसि फलवती कर्मबोधेन्द्रियेभ्यः ॥ २५६ ॥

चिन्ता०—एवमिन्द्रियाणां कार्यत्वमुक्तम् । तेषां संख्यापि चिन्त्यत इति सङ्गतिः । तदर्थविचारस्तु—किमिन्द्रियाणि सप्त उतैकादशेति । किं ' सप्त इमे लोका येषु चरन्ति ' इति सप्तानां गतिश्रवणमिन्द्रियाणां सप्तसङ्ख्याकत्वमवगमयति नेति । किं जीवेन सह गत्यभावेऽपि पुरुषोपकारकत्वात् प्राणाधीनदेहवृत्तित्वाच्च हस्तादीन्यपीन्द्रियाणि नेति । किं ' दशेमे पुरुषे प्राणा आत्मैकादशः ' इति प्राणशब्देन निर्दिष्टानामेकादशसंख्याकत्वं वागादीनामिन्द्रियत्वमवगमयति नेति । अत्र पूर्वपक्षी प्राह—सप्तप्राणा इति । सप्त प्राणाश्चरन्तीति श्रुतौ सप्तत्वमुदितं प्राणानाम् । ते च विशिष्याभिहिता योगे योगप्रतिपादके ' यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह । बुद्धिश्च न विचेष्टेत तामाहुः परमां गतिम् ॥ ' इतिवाक्य इत्यर्थः । परमां

शब्दस्य फल[illegible] किं 'रमणीयचरणाः' इति चरणशब्द आचारपर उत कर्मपर इ[illegible] [illegible]ातं कर्म यद्यदिह करोति तत्कृत्स्नमपि स्वर्गादौ [illegible] [illegible]वायाति । अनुशयो नाम—फलोद-यपर्यन्तमात्मन्यनु[illegible] [illegible]यमेवायातीति पूर्वपक्षिणोऽभिप्रायः । तत्प्रतिक्षिपति—इत्यसदि[illegible] [illegible]पि कर्मणां परत्रैवोपभोगादन-न्तरमागमने कर्मानुरूपं केचि[illegible] [illegible]ष्टं वैषम्यं बाध्येत । किञ्च 'प्राप्यान्तं कर्मणस्तस्य' इत्यत्र का[illegible] श्रूयते । तेनोपभुज्यमानस्य कर्मणोऽन्तं प्राप्य कर्मान्तरेण सहागच्छ[illegible] [illegible]मेतत् । युक्त्यन्तरमप्याह—सुकृतेति । रमणीयचरणा रमणीयां योनिमाप[illegible] [illegible]चरणाः कपूयां योनिमापद्येरन्निति सुकृत-दुष्कृतफलत्वेन जातिभेदाद्यध्ययनात् । उक्तमर्थं निगमयति—तस्मादिति । प्रारब्धशेषैः स्तदितरसहितै रिति—अयमर्थः । कर्मविपाकशास्त्रेष्वेकस्यैव कर्मणस्स्वर्गादिफलं तदन्ते पुनरैहिकफलमपि भोक्तव्यत्वेनाभि-धीयते । तेन प्रारब्धफलमपि कर्म भुक्त्वा तदवशेषेणाभुक्तफलेन कर्मान्तरेण च युक्तः पुनरावर्तत इति सर्वप्रमाणाविरोधेन नेतव्यमिति । स्वर्गपान्थ इति 'गतागतं कामकामा लभन्ते' इति प्रमाणमुप-दर्शयति ॥ २७५ ॥

पद०—इष्टापूर्तेत्यादि । तनुभृत्—जीवः । इह—कर्मभूमौ । इष्टापूर्तादिरूपम्—इष्टं यागादि पूर्तं तटाकादि आदिशब्देन स्वर्गहेतुभूतगोभूम्यादिदानादिकमुच्यते, एवमादिरूपम् । यत्किञ्च शुभं कर्म कुर्यात् । तत् कृत्स्नं भुक्त्वा—स्वर्गादावनुभूय । तदन्ते—तदवसाने । पुनः अवनिम्—इमं भूलोकम् । इयात्—आगच्छेत् । इत्यसत्—इति पक्षो न साधुः । दृष्टबाधात्—आगच्छतां जीवानां मध्ये केषांचित् चण्डालयोनिप्राप्तिः केषांचित् ब्राह्मणाद्युत्तमयोनिप्राप्तिरित्येवं तत्तत्कर्मानुगुणतया दृष्टस्य फलवैषम्यस्य तन्मूलभूतकर्मशेषानङ्गीकारे विरोधात् । किञ्च कार्त्स्न्येनेत्यश्रुतत्वात्—'प्राप्यान्तं कर्मणस्तस्य' इत्यादिश्रुतौ कार्त्स्न्येन कर्मणोऽन्तं प्राप्येत्यश्रुतत्वात् । सुकृतफलतया जातिभोगाद्य-धीतेः—'रमणीयचरणा अभ्याशोह यत्ते रमणीयां योनिमापद्येरन्' इत्यादिश्रुत्या सुकृतफलत्वेन विशिष्ट-जातिभोगाद्याम्नानात् । तस्मात्—उक्तोपपादनात् । स्वर्गपान्थः—'गतागतं कामकामा लभन्ते' इति स्वर्गमार्गपथिकः । तदितरसहितैः—कर्मान्तरयुक्तैः । प्रारब्धशेषैः—कर्मविपाकादिशास्त्रेषु सुकृ-तस्य स्वर्गादिहेतुत्ववत् तदनुभवान्ते विशिष्टजातिवित्तसुखादिहेतुत्वस्यावगमात् अभुक्तफलकर्मशेषैस्सह । आपतेत्—आगच्छेत् ॥ २७५ ॥

धूमं रात्रिञ्च पक्षं तिमिरकलुषितं ...
पश्चाल्लोकं पितॄणां ग...
प्रत्यावृत्तौ तु चन्द्राद्ग...
व्रीह्यादीन्याति ... ता ॥ २७६ ॥

चिन्ता०—अत्र ' यं ... वैषम्यस्याभिधानात् तदेव वैषम्यं दर्शयति—धूममिति । धूमं रा... क्षिणावृत्तिमासान् पश्चात्पितृलोकं गगनं चन्द्रमपि मृतः कर्मी प्राप्नोति । ... गगनं गगनाद्वायुं ततो धूमं तस्मादभ्रं अभ्रान्मेघम्, अत्राभ्रमेघशब्दौ चार्थभेदादपुनरुक्तौ, अपो बिभर्तीत्यभ्रशब्देन कथ्यते मेघ एव । 'मिह सेचने' इति सेचनावस्थाविशिष्टवेपेण स एव मेघ इत्युच्यते । व्रीह्यादीन्—पितृभक्षणीयव्रीह्यादीनित्यर्थः । रेतस्सिगिति जनक उच्यते । अथ जननीं यातीत्यन्वयः । यातनाचक्रवर्तीति—यातनाचक्रे वर्तते इत्यर्थः । अथवा संसारवर्त्मनि सर्वत्र वर्तत इति चक्रवर्ती ॥ २७६ ॥

पद०—धूममित्यादि । प्रथमं धूमम् । ततो रात्रिञ्च । पश्चात् तिमिरकलुषितं पक्षम्—कृष्णपक्षम् । ततो दक्षिणावृत्तिमासान्—दक्षिणायनघटितान् कटकसिंहकन्यातुलावृश्चिकधनूरूपान् षण्मासान् । पश्चात् पितॄणां लोकम् । तदनु गगनम् । ततश्चन्द्रमपि मृतः कर्मी अभ्येति—प्राप्नोति । यातनाचक्रवर्ती—यातनाचक्रे परिवर्तनपरः । प्रत्यावृत्तौ तु—पुनरागमने तु । चन्द्रात्, गगनसततगौ—गगनवायू । गगनं गगनानन्तरं वायुमित्यर्थः । ततो धूमम् । पश्चादभ्रम्-अपोबिभर्तीत्यभ्रम् । ततो मेघञ्च—'मिह सेचने' वर्षणप्रवृत्तं तमित्यर्थः । ततो व्रीह्यादीन्—पितृभक्षणीयव्रीह्यादीन् । अथ रेतस्सिचम्—जनकं पुरुषम् । पश्चात् जननीं रेतोविशिष्टस्सन् याति । अयमेतादृशस्सुकृतिनां गतागतक्रम इति भाव्यमिति भावः ॥२७६॥

आचारांशस्य साध्यं चरणवचनतो जातिभोगादिकं स्यात्
कर्माचारौ विभक्तौ श्रुतित इति न सत् गत्यभावात्तथोक्तेः ।
मुख्यं वृत्त्या हि कर्मण्यपि चरणवचो नैकदेशे निरोध्यं
जात्यादिः कर्मभेदप्रभव इति मिते चिन्त्यमाचारसाध्यम् ॥ २७८ ॥

चिन्ता०—अत्र पूर्वपक्षवादी मन्यते—पूर्वकृतकर्मशेषेणावरुह्य जात्यादिकं प्राप्नोतीति भवतोक्तं तन्नोपपद्यते कपूयचरणाः कपूयां योनिमित्यादिना वाक्येन चरणस्यैवोपादानात् तस्य च केवला-

चारमात्रत्वादि॰ अनिष्टादिकार्यिणामागतस्य जातिभोगादिकं केवलाचारमात्रसाध्यं स्यात् चरणवचना... येषामतिम... पुण्यपापैर्ज्ञानं प्रवृत्ते स्थावरे... विभागमाह—कर्मेति । श्रूयते हि—'यान्यनवद्या... समाहुरयनपेक्षमेव जन्म ने प्राधान्येन प्रवृत्ते मध्ये '...नि' इति । तदिदं प्रतिक्षिपति—न सदिति । तत्र हेतुमनुकातिथ्थावरत्वकथनस्यायुक्तत्वात् । अतदेकत्वेऽपि कर्माचारयोर्द्वयोरपि तस्मिन्वाक्ये दृष्टत्वाद् गत्यभावेन ...ण एव...ऽपि—व्रीह्यादिस्थावराचिद्विशेषे ...दयति—मुख्यमिति । वृत्त्या प्रवृत्त्या कर्मण्यपि मुख्यं चरणः—यात्... प्नोतीत्यर्थः ॥ २८३ ॥ पुण्यं कर्माचरति, पापं कर्माचरति, इति हि प्रयोगप्रसिद्धिरुपलभ्येत... अपि न्याय्यमिष्टादि... व इति कर्मविपाकशास्त्रैस्तत्रतत्र 'चण्डालः प्रेत्य जायते' 'शुचीनां श्रीमतां गे... सुकृती भुङ्क्ते' इति प्रमिते सति आचारसाध्यमचिन्त्यमेव न चिन्त्यमित्यर्थः । दृढतरप्रमाणप्रमितत्वेन... दृश्यते ह्याचारसाध्यतया 'सन्ध्याहीनोऽशुचिर्नित्यमनर्हस्सर्वकर्मसु' इत्यादावुत्तरकर्माधिकारादिकम् ॥ २७७ ॥

पद॰—आचारांशस्येत्यादि । चरणवचनतः—रमणीयचरणाः, कपूयचरणाः, इति आचारवाचकचरणवचनात् । जातिभोगादिकम्—विशिष्टजातिसुखादिकम् । आचारांशस्य साध्यं स्यात्—सन्ध्यावन्दनादिरूपाचारांशस्य फलभूतं भवतु । नतु स्वर्गार्थिकर्मविशेषफलमित्यर्थः । श्रुतितः—श्रुत्यैव । कर्माचारौ विभक्तौ—'यान्यनवद्यानि कर्माणि तानि सेवितव्यानि, यान्यस्माकं सुचरितानि तानि त्वयोपास्यानि' इत्यादौ कर्माणि सुचरितानीति पृथगाम्नानेन तौ परस्परभिन्नाविति दर्शितौ । इति न सत्—इति शङ्कनं न साधु । गत्यभावात् तथोक्तेः—गत्यभावेन शब्दसाफल्यार्थं तथाकथनात् । चरणवचः—चरणपदम् । वृत्त्या—प्रवृत्त्या । कर्मण्यपि मुख्यं हि—कर्मविषयेऽपि चर्यतेऽनुष्ठीयत इति शक्त्यैव बोधनात् मुख्यं हि । तत्पदं एकदेशे—वाच्यैकदेशे । न निरोध्यम्—उक्तरीत्या कर्माचारयोर्द्वयोरपि चरणशब्दवाच्यत्वेन तदेकदेशे आचारे तस्य निरोधो न युक्त इति भावः । जात्यादिः—स्वर्गात् पुनरागतानां जीवानां विशिष्टजात्यादिलाभः । कर्मभेदप्रभवः—स्वर्गार्थिकर्मविशेषादेव भवति । इति मिते—एवं शास्त्रेण प्रमिते सति । आचारसाध्यमचिन्त्यमेव, न चिन्त्यमित्यर्थः । 'सन्ध्याहीनोऽशुचिर्नित्यमनर्हस्सर्वकर्मसु' इत्यादिदृढतरप्रमाणसिद्धस्योत्तरकर्माधिकारादेः फलस्य विद्यमानत्वेन न चिन्तासाध्यं तत्फलमित्यर्थः । इयं चिन्तामणियोजना । चिन्त्यमित्येव पदच्छेदः । आचारसाध्यम्—आचारेण साधनीयं फलं तु । चिन्त्यम्—'सन्ध्याहीनोऽशुचिर्नित्यम्' 'नित्यकर्मानुष्ठानेऽपरिमितं सुखम्' इत्यादिप्रमाणानुसारेणोत्तरकर्माधिकारापादनादिकं योजनीयमित्यर्थः ॥ २७७ ॥

प्राप्ताचारातिवृत्तौ प्रतिपदमृषयस्स[illegible]
प्राचीनांहःप्रणाशं तद[illegible]करणम्
नातस्सत्कर्ममात्रात् [illegible]
नह्याचारप्रहीणे [illegible] ॥ २७८ ॥

चिन्ता०—अत्र प्रसङ्गा[illegible] । इत्थं किल कश्चिन्मनुते कर्मानुष्ठानादेव स्वर्गादिसिद्धिः, किमने[illegible]त्यादि । प्राप्तानां सन्ध्यावन्दनादीनामतिवृत्तौ ऋषयः प्रतिपदं प्रत्यवायानाहुः । उत्त[illegible]दोषानित्यर्थः । तदनुसरणतः—आचारानुसारात् । प्राचीनपापप्रणाशञ्चाहुः । 'यदह्वा पापमकार्षम्' इत्यादिभिश्श्रूयते । 'शुचिना कर्म कर्तव्यम्' इत्यादिना पुनराचारानुसारात् पुण्यकर्मार्हताञ्चाहुः । एवमेतैर्हेतुभिः सत्कर्ममात्रात् त्रिदिव इति धियैवाचारस्य परित्यागो नार्ह इत्याह—नात इति । अत्र प्रमाणं दर्शयति 'अचारहीनं न पुनन्ति' इत्यादिकम्—नहीति । आचारप्रहीणे पुरुषे श्वदृतिजलसमो वेदवर्गश्शोधको न भविष्यतीत्यर्थः ॥२७८॥

इति कृतात्ययाधिकरणम् ॥ ७० ॥

पद०—प्राप्ताचारेत्यादि । प्राप्ताचारातिवृत्तौ—प्राप्तानां स्वस्ववर्णाश्रमानुगुण्येन विधिबलप्राप्तानां आचाराणां सन्ध्यावन्दनाद्याचाराणां अतिवृत्तौ अतिक्रमे अकरण इत्यर्थः । ऋषयः—मनुयाज्ञवल्क्यप्रभृतयस्स्मर्तारः । प्रतिपदं प्रत्यवायान् सस्मरुः—विशेषतः कण्ठोक्त्या उत्तरकर्मानधिकारादिकान् दोषान्प्रत्यपादयन् । तदनुसरणतः—आचाराणां यथाकालमविकलानुष्ठानतः । प्राचीनांहःप्रणाशं पुण्यकर्मार्हताञ्च सस्मरुः—'यदह्वा पापमकार्षम्, अहस्तदवलुम्पतु ।' 'शुचिना कर्म कर्तव्यम्' इत्यादिप्रमाणानुसारेणोपात्तदुरितनिवृत्तिं पुण्यकर्मानुष्ठानयोग्यताञ्च प्रत्यपादयन् । अतः—उक्तप्रकारेण आचारस्यात्याज्यत्वात् । सत्कर्ममात्रात् त्रिदिव इति धिया—स्वर्ग्यकर्मानुष्ठानेन स्वर्गलाभो भविष्यति किमेभिस्सन्ध्यावन्दनादिभिरिति बुद्ध्या । तत्परित्यागशङ्का न—सन्ध्यावन्दनाद्याचारपरित्यागशङ्का न युक्ता । 'अपहतपाप्मा स्वाध्यायादेव पवित्रं वा एतत्' इत्यादिप्रमाणेन वेदाध्ययनमेव शुद्धिं जनयतीत्याशङ्क्याह—नहीत्यादि । आचारप्रहीणे—आचारशून्ये पुरुषे । श्वदृतिजलसमः—'श्वदृतौ च यथा पयः' इति श्वचर्मस्थतीर्थतुल्यः । वेदवर्गः—साङ्गाधीतऋगादियावद्वेदवर्गोऽपि । शोधको नहि—'आचारहीनं न पुनन्ति वेदा यद्यप्यधीतास्सह षड्भिरङ्गैः' इत्यादिप्रमाणात् शुद्धिहेतुर्न भवतीत्यर्थः ॥२७८॥

इति कृतात्ययाधिकरणम् ॥ ७० ॥

## अनि[illegible]दिका[illegible]धिकरणम् ॥ ७९ ॥

सर्वेषां देहपाते [illegible] [illegible]क्ता
तस्मात् पापोत्तर[illegible] [illegible]ति चेन्न ।
लोकस्सम्पूर्यते तैर्न प[illegible] [illegible]दः
[illegible]पि न्याय्यमिष्टादि[illegible]
तेऽतस्तद्यातनान्ते तत इ[illegible]मकती भुङ्क्त[illegible] यान्ति योनिम् ॥२७९॥

चिन्ता०—अत्र सङ्गतिर्भाष्ये 'केवलेष्टापूर्तदत्तकारिणश्चन्द्रमसं गत्वा सानुशया एव निवर्तन्त इत्युक्तम् । इदानीमनिष्टादिकारिणोऽपि चन्द्रमसं गच्छन्ति नेति संशय्यते' इति । तदर्थविचारस्तु—किमनिष्टादिकारिणोऽपि यमयातनामनुभूय चन्द्रमसं गत्वा निवर्तन्त उत नेति । किं 'ये वै केच' इति वाक्यमनिष्टादिकारिणामपि चन्द्रमसः प्राप्तिमवगमयति नेति । किमत्र सर्वशब्दः प्रेतमात्रविषयः उतेष्टादिकारिप्रेतविषय इति । किं पितृयाणगमनमनिष्टादिकारिणामपि, उतेष्टादिकारिणामेवेति । किं 'य इमे ग्राम इष्टापूर्ते' इत्युपक्रमः पितृयाणस्येष्टादिकारिमात्रविषयत्वमवगमयति नेति । किमनिष्टादिकारिणां पञ्चमाहुतिमन्तरेण पुरुषत्वसम्पत्तिरस्ति नेति । 'वेत्थ यथा केनासौ लोको न सम्पूर्यते' इत्यस्य प्रतिवचने 'अथैतयोः पथोः' इत्युपक्रम्य 'जायस्व म्रियस्वेत्येतत् तृतीयं स्थानं तेनासौ लोको न सम्पूर्यते' इत्येतस्य स्वर्लोकारोहाभावः, तृतीयस्थानस्य पञ्चमाहुतिमन्तरेण पुरुषत्वनिष्पत्तिमवगमयति नेति । अत्र पूर्वपक्षमारचयति—सर्वेषामिति । सर्वेषां देहपाते सति नियमवती चन्द्रमसः प्राप्तिरुक्ता, तस्मात्पापोत्तराणामधिकपापोपहतानामपि निरयगतिपुरस्कारिणी चन्द्रप्राप्तिरिति । उक्तं प्रतिक्षिपति—नेति । प्रतिक्षेपमेव विवृणोति—लोक इति । अयमर्थः—'चन्द्रमसमेव ते सर्वे गच्छन्ति' इति सर्वशब्दासङ्कोचार्थमेवानिष्टादिकारिणामपि चन्द्रमसः प्राप्तिर्भवतोच्यते । 'तेनासौ लोको न सम्पूर्यते' इति वचनबलात्सङ्कोचो न दोष इति । उक्तमर्थं निगमयति—त इति । अनिष्टादिकारिणस्ते यमशासनेन तद्यातनान्ते चन्द्रमसमप्राप्यैव कुत्सितां योनिं प्रतिपद्यन्त इति ॥ २७९ ॥

पद०—सर्वेषामित्यादि । देहपाते सति—देहवियोगे जाते सति । सर्वेषाम्—प्राणिनां सर्वेषाम् । नियमवती चन्द्रमःप्राप्तिरुक्ता—अपरिहार्या चन्द्रप्राप्तिः 'ये वै केचास्माल्लोकात् प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति' इति श्रुत्या प्रतिपादिता । तस्मात्—प्रमाणबलात् । पापोत्तराणाम्—

पापोपहतानामपि । निरयगतिपुरस्कारिणी—निरयगतिर्नरकप्राप्तिस्तां पुरस्कर्तुं शीलमस्या इति निरयगतिपुरस्कारिणी निरयगत्यनन्तरभाविनीत्यर्थः [illegible] शङ्क्यते चेन्नेदं युक्तम् । परो लोकस्तैर्न सम्पूर्यत [illegible] त्या अनिष्टादिकारिणां स्वर्गलोकप्राप्त्यभावं बोधयन्त्य [illegible] रयन्त्या । सर्वशब्दः—'ये वै केच' इत्यादौ श्रुतिवा [illegible] सङ्कुचेत्—इष्टादिकारिप्रेतमात्रपरो भवेत् । अतः—एवं प्र [illegible] अनिष्टादिकारिणः । तद्यातनान्ते—नरकयातनानिवृत्त्यनन्तर [illegible] । सहसा—चन्द्रप्राप्त्यादिविलम्बं विना । इह कुत्सितां योनिं यान्ति—श्वसूकरादि [illegible] पद्यन्ते ॥ २७९ ॥

जन्मप्राप्तिर्जरायुप्रभृतिषु भविनां कर्मपाकैर्विचित्रा
भूयिष्ठैः पुण्यपापैरपवदनवती पञ्चमाहुत्यपेक्षा ।
तद्वद्धूमादिमार्गः कति कति च शुभैरुत्कटैर्देहपाते
दिव्यं रूपं विमानादिकमपि सपदि प्राप्य याताः प्रसिद्धाः ॥ २८० ॥

इत्यनिष्टादिकार्यधिकरणम् ॥ ७१ ॥

चिन्ता०—ननु पञ्चमाहुत्यपेक्षया जन्मवतां जन्म कथ्यते कथं तर्हि पापोत्तराणां पञ्चमाहुतिमन्तरेण जन्म भवतीत्याशङ्क्याह—जन्मेति । जरायुजप्रभृतीनां जन्म तावत् प्रमाणप्रतिपन्नमेव । अथापि पञ्चमाहुत्यपेक्षा वक्तुं न शक्यत एव पितृशरीरान्मातृशरीरप्रवेशादर्शनात् । कथं तर्हि पञ्चमाहुत्यपेक्षावचनमित्याशङ्क्याह—भूयिष्ठैरिति । अयमर्थः—पञ्चमाहुत्यपेक्षावचनं सामान्यम् । तत्तु यत्रापवादो नास्ति तत्रैवावकाशं लभते नान्यत्र । भूयिष्ठादृष्टजन्मानो द्रौपदीधृष्टद्युम्नादयः पञ्चमाहुतिं नापेक्षन्ते । एवं जरायुजादयोऽपि भूयिष्ठपापजन्यत्वात् । तद्वदेव पञ्चमाहुत्यपेक्षावत् धूमादिमार्गोऽप्यपवदनवानित्यर्थः । अस्मिन्नर्थे सुकृतविशेषादतिशयिताद्ब्रह्मलोकप्राप्तिपर्यन्तं स्वतस्सिद्धदिव्यदेहादिपरिग्रहेण प्रयाताः कतिकति श्रूयन्ते । त एव पञ्चमाहुत्यनपेक्षदेहपरिग्रहे दृष्टान्ततयोपादेया इत्यर्थः ॥ २८० ॥

इत्यनिष्टादिकार्यधिकरणम् ॥ ७१ ॥

पद०—जन्मप्राप्तिरित्यादि । भविनाम्—संसारिणां जीवानाम् । जरायुप्रभृतिषु—जरायुर्गर्भावारकश्चर्मविशेषः । प्रभृतिशब्देनाण्डमुच्यते । जराय्वण्डादिषु । मनुष्यतिर्यगादियोनिष्वित्यर्थः । जन्मप्राप्तिः कर्मपाकैर्विचित्रा—अनेकप्रकारतया आश्चर्यावहा । अतः पञ्चमाहुत्यपेक्षा—पञ्चाग्निविद्योक्त-

क्रमेण गर्भोत्पत्तेः पञ्चमाहुत्यावश्यकता । भूयिष्ठैः—महद्भिर्बहुभिश्च । पुण्यपापैः अपवदनवती—अपवादयुक्ता । येषामतिमात्रपुण्यपापैर्ज्ञानेन प्रवृत्ते स्थावरत्वे ... त्यपेक्षा नास्तीत्यर्थः । दृश्यते हि द्रौपदीधृष्टद्युम्नप्रभृतीनां पञ्चमाहुत्यनपेक्षमेव जन्म ...ने प्राधान्येन प्रवृत्ते मध्ये ...र्गेण गमनमपि । तद्वत्—पञ्चमाहुतिवदेव न सार्वत्रिकी । कार्तिक...स्थावरत्वकथनस्यायुक्तत्वात् । अन्ते देहपाते, उत्कटैश्शुभैः—उत्कृष्टसुकृतविशेषैः । सपदि—देहपातोत्तरक्षण एव ...ऽपि—व्रीह्यादिस्थावराचिद्विशेषे ...पुम्—शरीरम् । विमानादिकमपि प्राप्य । याताः प्रसिद्धाः—यान्ति ...ोतीत्यर्थः ॥ २८३ ॥ ...इतिभावः । अतः पञ्चमाहुत्यपेक्षा धूमादिमार्गगमनञ्च न सर्वेषामिति सिद्ध्यपि न्याय्यमिष्टादि

इत्यनिष्टादि ...प्रकृती भुङ्क्ते ... ॥

## तत्स्वाभाव्यापत्त्यधिकरणम् ॥ ७२ ॥

सूत्रम्—तत्स्वाभाव्यापत्तिरुपपत्तेः ॥ ३०९ ॥

आहुत्योर्देहवत्त्वं प्रथमचरमयोर्निर्विवादं तथा स्यात्  
जन्मैवाकाशवायुप्रभृतिषु भवतेरन्वयादित्यसारम् ।  
रेतस्सिग्भावनीत्या पृथगभिलपनानर्हतामात्रमेव  
द्युभ्वोः पुण्यप्रसाध्यं फलमिह पठितं नास्ति भोगश्च मध्ये ॥ २८१ ॥

इति तत्स्वाभाव्यापत्त्यधिकरणम् ॥ ८२ ॥

चिन्ता०—अत्र सङ्गतिर्भाष्ये 'इष्टादिकारिणो भूतसूक्ष्मपरिष्वक्तास्सानुशयाश्चन्द्रमसोऽवरोहन्तीत्युक्तम् । अवरोहप्रकारश्च—'अथैतमेवाध्वानं पुनर्निवर्तन्ते यथेतमाकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वाभ्रं भवत्यभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति' इतिवचनात् । यथेतमनेवञ्चेत्युक्तम् । तत्रास्याकाशादिप्रतिपत्तौ देवमनुष्यादिभाववदाकाशादिभाव उत तत्सादृश्यापत्तिमात्रम्' इति । तदर्थविचारस्तु 'यथैतमाकाशम्' इत्याकाशादिभावो देवमनुष्यादिभाववदाकाशादिदेहापत्तिरुत तत्सादृश्यापत्तिमात्रमिति । अत्र कश्चिन्मन्यते—पञ्चस्वाहुतिषु प्रथमचरमयोराहुत्योर्देहवत्त्वं निर्विवादमेव 'तस्या आहुतेस्सोमो राजा सम्भवति' 'पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' इति देहवत्त्वस्य प्रकटमेव कथनात् । तथा आकाशवायुप्रभृतिष्वपि जन्मैव स्यात् पुरुषस्य, सोमो राजा भवतीति प्रथमश्रुतस्य भवतेर्धातोरन्वयादिति । तदेतदाह—आहुत्योरिति । तन्निराकरोति—असारमिति । तदेव प्रकटय-

ति—रेतास्सिगिति । यथा पितृशरीरप्रवेशे केवलं संसर्गमात्रम् , एवमाकाशादिभावेऽपि संसर्गविशेषात् पृथगभिधानानर्हतामात्रमेवाकाशादिवादिना [illegible] इहा[illegible] । उक्तार्थे हेतुमाह—द्युम्वोरिति । मध्ये शरीरपरिग्रहे शरीरस्य पुण्यफल[illegible]दिषु [illegible] श्रूयेत नच तत् श्रूयते । नच कश्चिदुपभोगो दृश्यते इत्यर्थः ॥ २८१ ॥

इ[illegible] ॥ ७२ ॥

पद०—आहुत्योरित्य[illegible] ॥ [illegible] त्वं निर्विवादम्—पञ्चस्वाहुतिषु प्रथमचरमयोराहुत्योर्देहवत्त्वं निर्विवादम्[illegible] ' इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति ' इति देहवत्त्वस्य प्रकटमेव व[illegible] [illegible]युप्रभृतिषु—' यथेतमाकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति ' इत्याम्नातेषु आको[illegible]दिषु वस्तुष्वपि । भवतेरन्वयात्—भवतीति भूधातोर्जन्मबोधकस्य तेष्वप्यन्वयात् । तथा जन्मैव स्यात्—प्रथमचरमाहुत्योरिवाकाशादिभावेन जन्मैवास्तु । इत्यसारम्—इदमग्राह्यमित्यर्थः । रेतस्सिग्भावनीत्या—' यो यो ह्यन्नमत्ति यो रेतस्सिञ्चति तद्भूय एव भवति ' इत्युक्तरेतस्सेक्तृभावन्यायेन । पृथगभिलपनानर्हतामात्रमेव—आकाशादिभावेऽपि संसर्गविशेषात् पृथगभिलपनानर्हतामात्रमेव प्रत्याय्यमित्यर्थः । द्युभ्वोः—प्रथमाहुतिस्थाने स्वर्गलोके चरमाहुतिस्थाने भूलोके च । पुण्यप्रसाध्यं फलम्—सुखानुभवरूपं फलम् । इह—पञ्चाग्निविद्यायाम् । पठितम् । मध्ये—प्रथमचरमाहुतिमध्ये आकाशादिभावस्थले । भोगश्च नास्ति—कर्मफलानुभवश्च नास्ति । शरीरस्य सुखाद्यनुभवरूपकर्मफलार्थत्वादाकाशादिभावस्थले तदभावाच्च न तद्भावश्शरीरप्राप्तिरूपः, अपि तु संसर्गविशेषरूप एवेति भावः ॥ २४१ ॥

इति तत्स्वाभाव्यापत्त्यधिकरणम् ॥ ७२ ॥

---

## नातिचिराधिकरणम् ॥ ७३ ॥

सूत्रम्—नातिचिरेण विशेषात् ॥ ३१० ॥

व्योमादिस्थित्यवस्था चिरमचिरमिति व्यक्तनिर्देशहानेः
शुक्लावस्थानयात् स्यादनियतिरिति न स्वारसिक्याः प्रवृत्तेः ।
व्रीह्यादिभ्यो हि दुर्निष्प्रपतरमिति तु श्रूयते तेन पूर्वं
शीघ्रं तत्तद्दशायास्त्यजनमिति परिज्ञायते वाक्यशक्त्या ॥ २८२ ॥

इति नातिचिराधिकरणम् ॥ ७३ ॥

चिन्ता०—अत्र सङ्गतिर्भाष्ये ' आकाशप्राप्तिप्रभृति यावद्व्रीह्यादिप्राप्ति किं तत्रतत्र नातिचिरं तिष्ठति उतानियम इति विशये ' इति । तदर्थं णने प्रवृत्ते स्थावर प्राप्तिप्रभृति व्रीह्यादिप्राप्तेः प्रागाकाशादिषु चिरं तिष्ठत्युताचिरेण निष्क्रामतीति । व्रीह्यादि ने प्राधान्येन प्रवृत्ते मध्ये र्निष्प्रपतरम् ' इति दुर्निष्प्रपतरत्वाभिधानमन्यत्राचिरनिष्क्रमणमवगम्यावरत्वकथनस्यायुक्तत्वात् । व्योमादीति । अत्र जीवस्य व्योमादिस्थित्यवस्था चिरमचिरमिति व्यक्तमे ऽपि—व्रीह्यादिस्थावराचिद्विशेषे शुक्लावस्थान्यायेनानियतिरेव स्यात् । शुक्लावस्था हि परिपूर्णगर्भपर्यन्तमोतीत्यर्थः ॥ २८३ ॥ चरमिति दृष्टमेव । निराकरोति—नेति । तत्र हेतुमाह—स्वारसिक्या पि न्याय्यमिष्टा निष्प्रपतरम् ' इति स्वारसिक्याः वाक्यप्रवृत्तेर्विद्यमानत्वादित्यर्थः । तदेव स प्रकृती भुङ्क्त ादिभ्य इति । व्रीह्यादिभ्यो हि दुर्निष्प्रपतरमिति विशेषवचनमितरेभ्यः सुप्रपतरत्वमाचष्टे । तेन पूर्वं वाक्यशक्त्यैव शीघ्रं तत्तद्दशायास्त्यजनमिति परिज्ञायते । विषयविशेषे दुर्निष्प्रपतरत्वाभिधानमितरत्र दुर्निष्प्रपतरत्वं निषेधतीत्यर्थः ॥ २८२ ॥

इति नातिचिराधिकरणम् ॥ ७२ ॥

पद०—व्योमादीत्यादि । व्योमादिस्थित्यवस्था—जीवस्याकाशादौ या स्थितिः संसर्गविशेषरूपा सैवावस्था । चिरमचिरमिति व्यक्तनिर्देशहानेः—चिरं तिष्ठतीति वा अचिरं तिष्ठतीति वा स्फुटनिर्देशाभावात् । शुक्लावस्थानयात्—शुक्लावस्था हि परिपूर्णगर्भपर्यन्तमवस्थाने चिरम्, मध्ये पाते सत्यचिरमित्यनियता, तन्न्यायात् । अनियतिस्स्यात्—न विद्यते नियतिर्नियमो यस्यास्सा अनियतिः इयन्तं कालमत्र तिष्ठतीति नियमशून्या स्यात् । इति न—इति चिन्तनं न युक्तम् । स्वारसिक्याः प्रवृत्तेः—विशेषनिर्णायकवाक्यविशेषस्वारसिकप्रवृत्तेर्विद्यमानत्वात् । तदेव विव्रियते—व्रीह्यादिभ्य इत्यादिना । व्रीह्यादिभ्यो हि दुर्निष्प्रपतरमिति तु श्रूयते—' त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्ते अतो वै खलु दुर्निष्प्रपतरम् ' इति व्रीह्यादिभ्यो दुर्निष्प्रपतरत्वं श्रूयते । ' दुर्निष्प्रपतरं दुःखनिष्क्रमणतरमित्यर्थः ' इति भाष्यम् । खलन्तात् दुर्निष्प्रपतशब्दादातिशायनिके तरप्प्रत्यये छान्दसे तशब्दलोपे दुर्निष्प्रपतरमिति रूपम् । व्रीह्यादिभ्यः कृच्छ्रनिष्क्रमणश्रवणादित्यर्थः । ततः किमिति चेत् व्रीह्यादिभ्यो दुर्निष्प्रपतरमिति विशेषवचनमितरेभ्यस्सुप्रपतरत्वमाचष्टे । तेन पूर्वं शीघ्रं तत्तद्दशायास्त्यजनमिति वाक्यशक्त्या परिज्ञायते—विषयविशेषे दुर्निष्प्रपतरत्वाभिधानमितरत्र दुर्निष्प्रपतरत्वं निषेधति ततश्च तेभ्यश्शीघ्रनिष्क्रमणमवगम्यत इत्यर्थः ॥ २८२ ॥

इति नातिचिराधिकरणम् ॥ ७२ ॥

---

## अन्याधिष्ठिताधिकरणम् ॥ ७४ ॥

सूत्रम्—अन्या[illegible]स ॥ ३११ ॥

जन्म व्रीह्यादिनाम्ना श्रु[illegible]वत्स्यात्
नैरात्म्यं स्थावरा[illegible]आपयन्तीति चेन्न ।
पुण्यस्यैव प्रवृत्ते फ[illegible]त्ययोगात्
रेतस्सिग्वर्ष्मणीव[illegible]स्थावरेऽप्यन्यदेहे ॥ २८३ ॥

चिन्ता०—भाष्य एव सञ्जातव्[illegible]रोहन्तो जीवा व्रीह्यादिभावेन जायन्त इति श्रूयते मेघो भूत्वा प्रवर्षति 'त इह व्रीहियवा ओपधिवनस्पतयस्तिलमापा जायन्ते' इति । ते किमन्यैर्भोक्तृभिर्व्रीह्यादिशरीरैरधिष्ठितान् व्रीह्यादीनाश्लिष्यन्ति, उत ते भोक्तारो व्रीह्यादिशरीरा जायन्त इति विशये जायन्त इति वचनाद्देवो जायते मनुष्यो जायत इतिवद्व्रीह्यादिशरीरा एवेति प्राप्ते उच्यते" इति । तदर्थविचारस्तु—अवरोहतो जीवान्प्रति 'त इह व्रीहियवा ओपधिवनस्पतयस्तिलमापा जायन्ते' इति श्रुतिः किमन्यभोक्तृशरीरभूतव्रीह्यादिशरीरा जायन्त इति गमयति नेति । जायन्त इति वचनं किं देवो-जायते मनुष्यो जायत इतिवदुत्पत्तिपरमुत सम्बन्धमात्रपरमिति । जायन्त इति श्रवणस्य 'कपूयचरणाः' इत्यादिवत् कर्मसम्बन्धाभावस्संश्लेपमात्रपरतामवगमयति नेति । अत्र पूर्वपक्षी मन्यते—जन्मेति । व्रीह्यादिभावेन जायन्त इति ह्यत्र जन्मैव श्रूयते । अत इदं जन्म देवत्वमर्त्यत्ववत्स्यात् । ननु स्थावराणां नैरात्म्यमेव । तेन कथं स्थावरभावेन जीवस्य जन्मेति कश्चिदाह । तदिदं वेदान्तबहिष्ठस्य वचनमित्याह—नैरात्म्यमिति । इमं पूर्वपक्षं निराकरोति—नेति । तदेव विवृणोति—पुण्यस्येति । पञ्चाग्निविद्यायां हीष्टापूर्तादिकर्मकारिणां पुण्यफलमभिधीयते । एवं प्राधान्येन पुण्यफलाभिधानप्रसङ्गे 'शरीरजैः कर्मदोषैर्याति स्थावरतां नरः' इति स्थावरजन्मप्राप्तिरूपं पापफलमभिधीयत इति न युक्तमेतत् । तर्हि 'जायन्ते' इति साक्षाज्जननं कथमभिधीयत इत्याशङ्क्यान्याधिष्ठिते पितृशरीरे यथा जनिवचनं तथान्याधिष्ठिते व्रीह्यादिशरीरेऽपि जनिवचनमवरोहतो जीवस्य औपचारिकमिति न कश्चिद्विरोधः ॥ २८३ ॥

पद०—जन्मेत्यादि । इह—प्रकरणे । व्रीह्यादिनाम्ना जन्म श्रुतम्—'त इह व्रीहियवा ओपधिवनस्पतयस्तिलमापा इति जायन्ते' इति व्रीह्यादिभावेन जन्म श्रुतम् । तदिदम्—व्रीह्यादिभावेन जननम् । देवमर्त्यत्ववत् स्यात्—देवत्वेन मनुष्यत्वेन जननवत् व्रीह्यादिरूपेण जन्मास्तु । निगमविदः—वेदान्तिनः । स्थावराणां नैरात्म्यम्—आत्मनो निर्गता निरात्मानः आत्मशून्या इत्यर्थः । तेषां भावो

नैरात्म्यम् । केवलचिन्मात्रत्वमित्यर्थः । नच स्थापयन्ति—नाङ्गीकुर्वन्ति । इति चेन्न—इति शङ्क्यते चेत्तन्न युक्तम् । पुण्यस्यैव फलपरिगणने प्रवृत्ते स्थावरत्वोक्त्ययोगात्—अस्यां पञ्चाग्निविद्यायामिष्टापूर्तादिकर्मकारिणां पुण्यस्यैव फलपरिगणने प्राधान्येन प्रवृत्ते मध्ये 'शरीरजैः कर्मदोषैर्याति स्थावरतां नरः' इति शारीरपापकर्मफलभूतस्थावरत्वकथनस्यायुक्तत्वात् । अतो रेतसिसग्वर्म्मणीव—पितृशरीर इव । अन्यदेहे—आत्मान्तरदेहभूते । स्थावरेऽपि—व्रीह्यादिस्थावराचिद्विशेषे । जनिमुपचरति हि—जन्माभिनयति । नतु तथा तथा वास्तवं जन्म प्राप्नोतीत्यर्थः ॥ २८३ ॥

हिंसायोगादशुद्धं श्रुतिविहितमपि न्याय्यमिष्टादिकं तत्-
पापांशं व्रीहिभावप्रभृतिषु सुकृती भुङ्क्त इत्यप्ययुक्तम् ।
उक्ता मन्त्रार्थवादैः पशुहितमिति सा तच्चिकित्सावदेषां
ब्रूते यज्ञे वधोऽसाववध इति मनुस्स्तौति निन्दा त्विहान्यत् ॥ २८४ ॥

चिन्ता०—अत्र कश्चिच्चोदयति—'दृष्टवदानुश्रविकस्स ह्यविशुद्धिक्षयातिशययुक्तः' इति साङ्ख्या हिंसायोगादंशेनाविशुद्धत्वं यज्ञादीनां वदन्ति । तेन पुण्यांशफलं स्वर्गादि पापांशफलं तु व्रीह्यादिभावः, अतः पुण्यफलप्रसङ्गेऽपि पापफलाभिधानं युक्तमेवेति । तदेतदनुवदति—हिंसेति । पश्वालम्भादिरूपहिंसायोगादशुद्धं श्रुतिविहितमपीष्टादिकं तदिति न्याय्यम् । अतः सुकृती व्रीह्यादिभावप्रभृतिषु पापांशं भुङ्क्त इति । अनूदितमर्थं प्रतिक्षिपति—अयुक्तमिति । तत्र हेतुमाह—उक्तेति । मन्त्रैरर्थवादैश्च पशुहितमित्येव खल्वेषा हिंसोक्ता । 'न वा उ एतन्म्रियसे' इत्यादिर्मन्त्रः । अर्थवादोऽपि 'हिरण्यशरीर ऊर्ध्वं स्वर्गं लोकमेति' इति । ननु श्रुतिरपि योग्यमेवार्थं ब्रूयात् । दुःखजननरूपस्य संज्ञपनस्य कथं पशुहितत्वमित्याशङ्क्य दृष्टान्तेनोपपादयति—तच्चिकित्सावदिति । लोके हि अधिकसुखप्राप्तिहेतुभूतमल्पदुःखात्मकं शस्त्रलवनक्षाराग्निकर्मादिकं हितमित्येवाभिधीयते तद्वदित्यर्थः । ननु तर्हि बन्धुवधोऽपि हितस्स्यादित्याशङ्क्य हिताहितविभागश्शास्त्रैकसमधिगम्य इत्यभिप्रायेणाह—ब्रूत इति । 'यद्वै किञ्च मनुरवदत्तद्भेषजम्' इत्युक्तवचनप्रामाण्यशाली भगवान्मनुर्यज्ञे वधस्य वधत्वमेव नास्तीत्याह । हिंसात्वं नास्तीत्यर्थः । अशास्त्रीयमार्गेण प्राणवियोजने हिंसात्वं प्रसज्यते । यथा राज्ञां युद्धे शत्रुवधो न हिंसा । यथा वा चोरवधः । तस्यैव सर्वत्र विषयभेदेन हि पुण्यापुण्यव्यवस्था । आत्महननमपि यत्रचित्पुण्यकोटिमाटीकते 'ब्राह्मणार्थे गवार्थे वा सम्यक्प्राणान्परित्यजेत्' इति । तेन न यज्ञादिषु हिंसा न च तत्फलानुभवः, नापि विधिस्पृष्टो दोषः, नापि हिंसकत्वं वैदिकानामिति रमणीयमेतत् । ननु ज्ञानप्रसङ्गेष्वितिहासपुराणेषु क्वचित् क्वचित् कर्मनिन्दा दृश्यते तत्कथमित्याशङ्क्याह—स्तौतीति । नहि निन्दा

निन्द्यं निन्दितुं प्रवर्तते अपितु निन्दितादितरत् प्रशंसितुमिति न्यायेन तत्रतत्र विवक्षितज्ञानादिप्रशंसार्थैव कर्मनिन्दा । नचात्यन्तमवश्यकर्तव्यकर्मनिन्दा अध्यात्मशास्त्रेषु फलसङ्गकर्तृत्वादिनिन्दायामेव तत्र तात्पर्यात् । तात्पर्ये हि शब्दः प्रमाणमिति हि तान्त्रिकाः । अन्यथा 'कर्मण्यकर्म यः पश्येत्' इत्यादिकं सकलमपि गीताशास्त्रं लोलुप्येतेति ॥ २८४ ॥

पद०—हिंसायोगादित्यादि । इष्टादिकं श्रुतिविहितमपि । हिंसायोगात्—पश्वालम्भनरूपहिंसासम्पातात् । अशुद्धम्—पापमिश्रमिति । न्याय्यम्—हिंसायाः पापत्वं सर्वन्यायवित्सम्मतमित्यर्थः । अतः सुकृती—यागादिकर्ता पुरुषः । व्रीहिभावप्रभृतिषु—व्रीहिभावयवतिलादिभावरूपजन्मसु । तत्पापांशम्—यागादिसुकृतसम्बन्धि पापांशम् । भुङ्क्ते—अनुभवति । इत्यपि—एवं कल्पनमपि । अयुक्तम् । एषाम्—पशूनाम् । सा—हिंसा । तच्चिकित्सावत्—तस्यैव पशोर्व्रणादिसम्भवे तत्प्रतिक्रियारूपशस्त्रच्छेदनक्षाराग्निकर्मादिवत् । पशुहितमिति—पशोरुत्तरकालिकमहासुखहेतुस्तदानीं किञ्चिद्दुःखप्रदमप्यालम्भनमिति । मन्त्रार्थवादैरुक्ता—'न वा उ एतन्म्रियसे न रिष्यसि' इत्यादिमन्त्रैः 'हिरण्यशरीर ऊर्ध्वं स्वर्गं लोकमेति' इत्यादिभिरर्थवादैश्च प्रतिपादिता । मनुः—'यद्वै किञ्च मनुरवदत्तद्भेषजम्' इत्युक्तवचनप्रामाण्यशाली मनुः । यज्ञेऽसौ वधः—पशुवधः । अवध इति ब्रूते—वध एव न भवतीति वदति । हिंसात्वमेव नास्तीत्यर्थः । इह—यागादिविषये । निन्दा तु अन्यत् स्तौति—ज्ञानस्तुत्यर्था यागादिकर्मनिन्दा । नहि निन्दा निन्द्यं निन्दितुं प्रवर्तते अपि तु निन्दितादितरत् प्रशंसितुमिति न्यायविद इति भावः ॥ २८४ ॥

कर्तुर्दोषं दिशेत् संज्ञपनमिह पशोस्तत्क्रतोश्चोपकुर्यात्
तस्मादस्मिन्निषेधं क्षिपति न विधिरित्यब्रुवन् सांख्यभक्ताः ।
निर्धूते पश्वनर्थे न खलु तदुचितं पिष्टपश्वादिकल्पः
तत्तत्कालाधिकारिप्रतिनियत इति क्वापि न स्याद्विरोधः ॥ २८५ ॥

चिन्ता०—अत्र कश्चिदाह—किमनेन कथञ्चित्समाधानेन । साङ्ख्याः खलु तत्त्वविदग्रगण्याः संज्ञपनं दोषमाहुः । अन्यथा कथं पुराणादिभिः पिष्टपशूपादानादिप्रसङ्ग उच्यत इति । इत्थं खलु साङ्ख्यानामभिप्रायः—'न हिंस्यात्' इति निषेधो रागप्राप्तहिंसाविषयः । 'आलभेत' इति वैधहिंसा विधिप्राप्ता । विधिनिषेधयोर्विरोधे विहितव्यतिरिक्तविषयो निषेध इति विषयभेदेन विधिनिषेधव्यवस्था कर्तव्येति मीमांसका वदन्ति । तन्न युज्यते विरोधे सत्येव हि विषयभेदेन व्यवस्था कार्या । स एवात्र न

विद्यते । संज्ञपनविधिर्हि पश्वालम्भनेन क्रतुसाद्गुण्यमाह । 'न हिंस्यात्' इति निषेधो हिंसायाः पापहेतुत्वम् । एकमेव कर्म विधिनिषेधाभ्यामुभयमपि सुखदुःखात्मकं कार्यं करोतीति को विरोधः । तेन सविपान्नभक्षणन्यायेन हिताहितरूपं यज्ञादिकमिति । तदनुवदति—कर्तुरिति । सांख्यभक्ता इति परिहासवचनम् । उक्तेऽपि युक्ते मार्गे पुनःपुनः परिचोदकः केवलं भक्त्यैव साङ्ख्यसिद्धान्तप्रक्रियां प्रलपतीत्यर्थः । अयमत्र निर्णयः—अहितत्वप्रसङ्गमेव निवारयितुं सयुक्तिके मन्त्रे चार्थवादे च जाग्रति महाजनपरिग्रहादालम्भनविधिवचनप्रामाण्ये च तिष्ठति कथं सांख्यः पापसङ्करं प्रवदेदिति । तदिदमाह—निर्धूत इति । कथं तर्हि पुराणेतिहासादिषु पिष्टपश्वादिकल्पनं कथ्यत इत्याशङ्क्य तदपि कालविशेषनियतधर्मविशेषत्वान्न विरुध्यत इत्याह—पिष्टेति । यथा घटिकाव्यवस्थादिविशेषाद्धर्मव्यवस्था धार्मिकैरेव परिगृह्यते, एवमिहापीति न कश्चिद्विरोधः ॥ २८५ ॥

पद०—कर्तुरित्यादि । इह पशोस्संज्ञपनम्—पशोरालम्भनम् । कर्तुर्दोषम्—कालान्तरानुभाव्यदुःखहेतुपापम् । दिशेत्—आपादयेत् । तत्—पशुसंज्ञपनमेव । क्रतोश्चोपकुर्यात्—यागस्याप्युपकारकं भवेत् । तस्मात्—पश्वालम्भनस्य पापहेतुत्वक्रतूपकारकत्वयोर्द्वयोरपि प्रामाणिकत्वात् । विधिः—'अग्नीषोमीयं पशुमालभेत' इति विधिः । अस्मिन्—पश्वालम्भने । निषेधं न क्षिपति—न वारयति । इति सांख्यभक्ताः अब्रुवन् । पश्वनर्थे निर्धूते—पशोः पापिष्ठक्षुद्रशरीरसम्बन्धात्मकानिष्टहेतौ तदालम्भनेन निवारिते सति । तत्—आलम्भनस्य पापांशवत्त्ववचनम् । उचितं न खलु—अनर्थवारकश्चिकित्सादिः पापमिति न युक्तमित्यर्थः । पिष्टपश्वादिकल्पः—पिष्टमयपशुना यागकरणादिरूपो भारतादौ प्रसिद्धः पक्षः । तत्तत्कालाधिकारिप्रतिनियतः—कृतादिकालविशेषे शुद्धयाजिप्रभृतिष्वधिकारिषु व्यवस्थितः । इति क्वापि विरोधो न स्यात्—अन्यथा विरोधस्स्यादिति भावः ॥ २८५ ॥

किञ्चोत्सर्गापवादक्रममिह जहतः कीदृशी नित्यहिंसा
शुद्धं न क्वापि सिध्येत् तव हि विधिपदं स्पृष्टतत्तन्निषेधम् ।
यत्रासत्यादि वैधं तदनु च विहिता निष्कृतिस्तन्निमित्ता
तत्रागत्या तथा स्यादितरवदथवा केवलं तन्निमित्तम् ॥ २८६ ॥

इत्यन्याधिष्ठिताधिकरणम् ॥ ७४ ॥

चिन्ता०—पुनरपि सांख्यपक्षे दोषान्तरं समुच्चिनोति—किञ्चेति । तदुपपादयति—उत्सर्गेति । अयमर्थः—यद्यपि 'स्वर्गकामो यजेत' इत्यादिषु काम्यविधिषु स्वर्गरागात्तत्साधनक्रतूपकारकहिंसायां पुरुषः प्रवर्तत इति तत्र हिंसांशस्य पापरूपत्वात् तत्फलं व्रीह्यादिस्थावरभावेनानुभूयत इत्युच्यते । तथा-

प्यत्र उत्सर्गापवादन्यायं जहतस्तव 'शरदि पशुमालभेत' इत्यादिनित्यहिंसा कथं सिध्येत्।. तत्र हिंसा नित्यप्राप्ता न रागजन्या । ननु तत्रापि रागोऽस्ति सर्ववर्णिनामपि स्वधर्मानुष्ठानेऽपरिमितसुख-प्राप्तिवचनादिति चेत् न नित्यकाम्यलोपप्रसङ्गात्। तदिदमाह—कीदृशी नित्यहिंसेति। नित्यहिंसैव न सिध्येदित्यर्थः। ननु पिष्टादिनापि नित्यत्वसिद्धेर्विरोधो नास्तीतिचेत् तत्राह—तव हीति। सर्वत्रो-त्सर्गापवादन्यायं जहतस्तवेत्यर्थः। श्रुतिपुराणादिषु पञ्चमहायज्ञप्रस्तावे 'पञ्चसूना गृहस्थस्य वर्तन्तेऽहर-हस्तथा। खण्डनी पेषणी' इत्यादिना पेषणादेरपि हिंसात्वकथनात् तव विहितेषु निषेधाविषयः किंचिद-पि नास्त्येव। एवमस्त्विति चेन्न मन्त्रार्थवादविरोधस्य पूर्वमेवोक्तत्वात्। ननु 'विवाहकाले ऋतुसम्प्र-योगे' इत्यादिना 'अनाक्रोश्यमाक्रोश्यानृतं वोक्त्वा त्रिरात्रमक्षारलवणभोजनम्' इति चानृतकथनं विधाय तत्प्रायश्चित्तं विधीयते तत्र कथमिति चेत् सत्यं तत्रागत्या तदाश्रयणमित्याह—यत्रासत्यादि वैधमिति। इतरवदिति—अनृतकथनविधानवत् प्रायश्चित्तविधानमपि स्यादित्यर्थः। अथवा तत्र विहिते दोषसद्भावेन प्रायश्चित्तं न विधीयते। किंतु जातेष्टिवन्नैमित्तिकमेव किञ्चित्तद्विधीयत इति न विधिनेषेधयोरेक-विषयत्वमित्याह-अथवा केवलं तन्निमित्तमिति। तत्-अनृतकथनं पुत्रजननवन्निमित्तमात्रमित्यर्थः* ॥ २८६॥

इत्यन्याधिष्ठिताधिकरणम् ॥ ७४ ॥

पद०—किञ्चेत्यादि। किञ्च—दोषान्तरमप्यस्तीत्यर्थः। इह—पश्वालम्भनविषये। उत्सर्गा-पवादक्रमं जहतस्तव—'न हिंस्यात्' इति सामान्येन हिंसानिषेधः, 'अग्नीषोमीयं पशुमालभेत' इति हिंसाविशेषस्य कर्तव्यताबोधनम्, तत्र करणाकरणविरोधे सति औत्सर्गिकस्य निषेधस्य हिंसाविशेषविषये सङ्कोच इत्युत्सर्गापवादन्यायक्रमस्तं परित्यजतस्तवेत्यर्थः। नित्यहिंसा कीदृशी—पापांशराहित्येन

---

* अयमर्थः—विधिर्निषेधं न क्षिपतीति वदता त्वयोत्सर्गापवादन्यायस्त्यक्तः। उत्सर्गापवादाभ्युपगमे क्रतुहिंसायाः पुण्यफलत्वेन कर्मसु प्रवृत्तिर्युज्यते। तदनभ्युपगमे 'आलभेत' इतिविधिना क्रतुसाद्गुण्यमात्र-ज्ञाने सत्यपि निरयजननसमर्थहिंसान्वितक्रतुषु न कस्यापि प्रवृत्तिर्युज्यते। तथा सति 'शरदि पशुमालभेत' इति नित्यहिंसा अननुष्ठानलक्षणाप्रामाण्यपराहता भवति। ननु तत्रापि स्वधर्मानुष्ठाने सुखप्राप्तिवचनाद् रागात् प्रवृत्तिरिति चेत् नित्यकाम्यविभागलोपः प्रसजेत्। ननु पिष्टादिना नित्यकर्मसिद्धिं ब्रूमइति चेत् तत्रापि पेषणादे-हिंसात्वकथनाद् रागतः प्राप्तिर्वक्तव्या, तथासति पूर्वोक्तनित्यकाम्यविभागलोप एव स्यात। ननूत्सर्गापवादन्या-यमभ्युपगच्छतस्तव विवाहादावनृतकथनस्य प्रायश्चित्तीयस्य विहितत्वं प्रायश्चित्तविधानादेव निषिद्धत्वञ्च सिद्धम्, अत एव तत्र विधिनिषेधयोरेकविषयत्वं स्यादिति चेन्न; तत्र निर्वाहो द्विविधः--अगत्या तदाश्रयणमित्येकः। जा-तेष्ट्यादिवन्निमित्तमात्रमनृतवदनम्, अतो विधिविषयस्यानृतवदनस्य न निषेधविषयत्वमित्यपर इति॥

इति एतदनन्तरं क्वचिदधिकं दृश्यते

शुद्धतया विहिता हिंसा का भविष्यतीत्यर्थः । सर्वस्या अपि हिंसायाः पापांशसम्भवादिति भावः । हि— यस्मात् । विधिपदम्—विधिविषयभूतं सर्वमपि कर्म । स्पृष्टतत्तन्निषेधम्–स्पृष्टस्तत्तन्निषेधो येन तादृशम् । पञ्चमहायज्ञानुष्ठानस्याग्निहोत्रादेश्च व्रीहियवतिलपयःप्रभृतिसापेक्षत्वात् व्रीह्यादिहिंसागर्भत्वेन तेष्वपि निषेधस्पर्शसम्भव इति भावः । अतस्तत्र शुद्धं क्वापि न सिध्येत्—केवलपुण्यात्मकं कर्म क्वापि वेदभागे न सिध्येत् । तर्हि भवदुक्तप्रक्रिययोत्सर्गापवादक्रमविषयाङ्गीकारेऽपि क्वचिद्विवाहादिविषये प्रथममसत्यवचनविधिः पश्चात् तत्प्रायश्चित्तविधिश्च दृश्यते तत्र हि कर्मणः पुण्यपापात्मकत्वमपरिहार्यम्, तद्वदेव सर्वत्र स्यादित्याशङ्क्य प्रतिक्षिपति—यत्रेत्यादिना । यत्र—विवाहादिविषये । असत्यादि— अनृतवचनादि । वैधम्—विधिबलप्राप्तम् । तदनु–पश्चात् । तन्निमित्ता निष्कृतिश्च विहिता—तादृशानृतवचननिमित्तं प्रायश्चित्तञ्च विहितं दृश्यते । तत्र—तादृशस्थले । अगत्या—प्रायश्चित्तविधायकवचनस्य गत्यन्तराभावात् । तथा स्यात्–अनृतवचनादिकमुभयात्मकं स्यात् । इतरवत्–अगतिकस्थलान्तरवत् । अथवा–पक्षान्तरे । तत्–विवाहादिविषयेऽसत्यवचनम् । इतरवत्–उपरागादिवत् । केवलं निमित्तम्–कालसूचकत्वमात्रेण प्रवर्तकम् । नतु पातकादिवत् प्रयोजकनिमित्तमिति भावः ॥ २८६ ॥

इत्यन्याधिष्ठिताधिकरणम् ॥ ७४ ॥

तृतीयाध्यायप्रथमपादस्य सांख्यमायावादिपक्षनिराकरणे विशेषोपकारप्रदर्शनम् ।

अश्लिष्टं विग्रहाद्यैर्नभ इव मुसलैः क्षेत्रिणं केचिदाहुः
कर्माकर्तारमेवं फलमपि विविधोपाधिभेदैकनिष्ठम् ।
अव्यक्तस्यापवर्गं भवभुजमपि चानादिमुक्तस्वभावं
तेषामित्थं मनीषां बहिरकृत नयैरेष वैराग्यपादः ॥ २८७ ॥

चिन्ता—एतस्य पादस्य सांख्यमायावादिनोः पक्षनिराकरणे विशेषेणोपकारकत्वं दर्शयति— अश्लिष्टमिति । एवं किल सांख्याः प्राहुः केचिन्मायावादिनश्च । बाधकैर्देहादिभिरश्लिष्टं नभो मुसलैरिव क्षेत्रिणं प्राहुः । नह्याकाशो मुसलप्रहारैर्बाध्यते एवं बाधकैर्देहादिभिस्सांख्यमृषावाद्युक्तमात्मतत्त्वमपि न बाध्यतेऽसङ्गत्वादिति । इत्थं फलभोक्तृत्वं नास्तीत्युक्त्वा कर्तृत्वमपि नास्तीत्याह— कर्माकर्तारमिति । अत्राप्याहुरित्यनुषज्यते । तर्हि जीवस्य कर्तृत्वाभावे कुत्र फलमित्याशङ्क्याह— फलमित्यादि । जीवोपाधिभूताहङ्कारनिष्ठमित्यर्थः । तर्हि सांसारिकफलमस्त्वहङ्कारादेः, मोक्षः कस्येत्याशङ्क्य मोक्षोऽपि प्रकृतेरित्याह—अव्यक्तस्येति । 'संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः' इति हि साङ्ख्यप्रक्रिया । 'तस्मान्न बध्यते नापि मुच्यते नापिसंसरति कश्चित्' इति जीवस्यानादिमुक्तस्व-

मेवाहुः । 'पुरुषस्तु सदा पुष्करपलाशवन्निर्लेपः' इति साङ्ख्यानामाख्यानम् । अत्र सर्वत्राहुरित्यन्वयः । इदं साङ्ख्यमृषावादिनोरभिमतं जीवस्यैव संसारसम्बन्धप्रतिपादनात् सूत्रकारो निराचकारेत्याह—तेषामिति । अयं वैराग्यपादः साङ्ख्यमृषावादिनोर्मतं बहिरकृत निराचकारेत्यर्थः । अत्रायं विशेषः—साङ्ख्यानां प्रकृतिस्सत्या प्रकृतिसम्बन्धप्रयुक्ताः सुखदुःखादयो दोषा मिथ्येतिपक्षः । मृषावादिनां पुनर्मायापि मिथ्या तत्सम्बन्धप्रयुक्तसंसारोऽपि मिथ्येति पक्षः । पक्षद्वयमपि संसारसम्बन्धपारमार्थ्यप्रतिपादनेन निराकृतमित्यर्थः ॥२८७॥

पद०—अश्लिष्टमित्यादि । केचित्—साङ्ख्या मृषावादिनश्च । मुसलैः—बाधकैर्मुसलादिभिः । नभ इव—आकाशमिव । क्षेत्रिणम्—जीवम् । विग्रहाद्यैः—बाधकैर्देहेन्द्रियादिभिः । अश्लिष्टमाहुः—न ह्याकाशो मुसलप्रहारैर्बाध्यते एवं बाधकैर्देहादिभिस्साङ्ख्यमृषावाद्यभिमतमात्मतत्त्वमपि न बाध्यत इति भावः । एवम्—भोक्तृत्वं यथा नास्ति तथा । कर्माकर्तारम्—कर्मणामकर्तारम् । क्षेत्रिणमाहुरित्यनुषङ्गः । जीवस्य भोक्तृत्वं यथा नास्ति तथा कर्तृत्वमपि नास्तीत्यर्थः । फलमपि—सांसारिकफलमपि । विविधोपाधिभेदैकनिष्ठम्—जीवोपाधिभूताहङ्कारादिनिष्ठमित्यर्थः । अत्राप्याहुरित्यनुषङ्गः । अव्यक्तस्यापवर्गम्—प्रकृतेरेव मोक्षम् । आहुरिति पूर्ववत् । 'संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः' इति हि सांख्यकारिका । भवभुजमपि च—वस्तुतो नानाविधसांसारिकदुःखभागिनमपि जीवम् । अनादिमुक्तस्वभावम्—अनादिस्स्वरूपानुबन्धी मुक्तस्वभावो यस्य तम् । अत्राप्याहुरिति सिद्धमनुषञ्जनम् । 'तस्मान्न बध्यते नापि मुच्यते नापि संसरति कश्चित्' इति हि सांख्यकारिका । तेषाम्—सांख्यानां मृषावादिनाञ्च । इत्थं मनीषाम्—बुद्धिं सिद्धान्तमित्यर्थः । एष वैराग्यपादः—'तदन्तरप्रतिपत्तौ' इत्यादिस्तृतीयाध्यायप्रथमपादः । नयैः—स्वघटकाधिकरणसिद्धन्यायैः । बहिरकृत—निराचकारेत्यर्थः ॥ २८७ ॥

तृतीयाध्यायप्रथमपादाधिकरणार्थानां विभज्य निरूपणम्

पादे त्वर्थाष्षडस्मिन् वपुरिह विजहद्भूतसूक्ष्मैस्सहेयात्
भुक्तस्वर्गोऽवरोहेदनुशयसहितो मात्रया भिन्नमार्गः ।
चन्द्रावाप्त्यादि न स्यान्निरयपथजुषामम्बरादौ सदृक्त्वं
तस्माच्छीघ्रोऽवरोहः परवपुषि चिरं व्रीहिपूर्वे तु योगः ॥ २८८ ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु अधिकरणसारावल्यां
तृतीयस्याध्यायस्य प्रथमः पादः

चिन्ता०—अत्रोक्तानां षण्णामधिकरणानामर्थभेदान् विभज्य दर्शयति—पाद इति। अस्मिन्पादे षडर्थाः प्रतिपाद्याः। तानेवार्थाननुक्रमेणाह—वपुरिति। वपुर्देहं विजहज्जीवो भूतसूक्ष्मैरसहेयादित्येकोऽर्थः। अपरस्तु--भुक्तस्वर्गस्सानुशय एव यथेतमनेवञ्चावरोहेदिति। तृतीयःपुनर्निरयपथजुषां नरकमार्गेण गच्छतां चन्द्रावाप्तिर्न स्यादिति। चतुर्थोऽप्याकाशादिसादृश्यमेव न पुनस्तद्रूपेण जन्मेति। आकाशादेरवरोहश्शीघ्रएवेति पञ्चमः। षष्ठोऽपि परशरीरे व्रीह्यादौ चिरं योगमात्रमिति। योगस्तु—संसर्गमात्रमित्यर्थः॥२८८॥

इति निखिलतार्किकचूडामणिना सर्वतन्त्रस्वतन्त्रेण
श्रीमद्वरदार्यापरनाम्ना कुमारवेदान्ताचार्येण
विरचिते शारीरकाधिकरणचिन्तामणौ
तृतीयस्याध्यायस्य प्रथमः पादः

पद०—पादेत्वित्यादि। इह–लोके। वपुर्विजहत्–देहं परित्यजन् जीवः। भूतसूक्ष्मैस्सहेयात्–लोकान्तरं गच्छेत्। अयं 'तदन्तरप्रतिपत्तौ' इत्यादिप्रथमाधिकरणार्थः। भुक्तस्वर्गः–अनुभूतस्वर्गसुखो जीवः। मात्रया–किञ्चित्। भिन्नमार्गः—'यथेतमनेवञ्च' इत्युक्तेः किञ्चिद्विलक्षणमार्गस्सन्। अनुशयसहितः–भुक्तशिष्टं कर्म अनुशयस्तत्सहितस्सन्। अवरोहेत्–स्वर्गलोकादिमं लोकमागच्छेदित्यर्थः। अयं 'कृतात्ययेऽनुशयवान्' इत्यादिद्वितीयाधिकरणार्थः। निरयपथजुषाम्—नरकमार्गगामिनां जीवानाम्। चन्द्रावाप्त्यादि–चन्द्रप्राप्तिपञ्चमाहुत्यपेक्षादिकम्। न स्यात्–न भवेत्। अयं 'अनिष्टादिकारिणाम्' इत्यादितृतीयाधिकरणार्थः। अम्बरादौ—आकाशादिप्राप्तौ। सदृक्त्वम्—आकाशादिसादृश्यमेव न पुनस्तद्रूपेण जन्मेति। अयं 'तत्स्वाभाव्यापत्तिः' इत्यादिचतुर्थाधिकरणार्थः। तस्मात्–आकाशादेः। अवरोहः–निर्गमनम्। शीघ्रः—न चिरकालिको नाप्यनियतः। अयं 'नातिचिरेण' इत्यादिपञ्चमाधिकरणार्थः। परवपुषि–जीवान्तरशरीरभूते। व्रीहिपूर्वेऽपि–व्रीह्यादौ। चिरं योगस्तु–संसर्गमात्रमित्यर्थः। अयं 'अन्याधिष्ठिते पूर्ववत्' इत्यादिषष्ठाधिकरणार्थः। एवमनुक्रान्ताः षडर्थास्तु—षट्संख्या अधिकरणानां प्रधानार्थाः। अस्मिन्पादे—वैराग्यपादे। सन्तीति शेषः॥ २८८॥

इति श्रीमद्रङ्गनाथशठमथनयतिराजकटाक्षलब्धोभयवेदान्तहृदयस्य भारद्वाजस्य श्रीनिवासराघवदासस्य
(श्रीमदहोबिलमठमहास्थाननिर्वहणधुरन्धर श्रीमद्वेदमार्गप्रतिष्ठापनाचार्य परमहंसपरिव्राजकाचार्य
सर्वतन्त्रस्वतन्त्रोभयवेदान्ताचार्य श्रीभगवद्रामानुजसिद्धान्तनिर्धारणसार्वभौम श्रीलक्ष्मी-
नृसिंहदिव्यपादुकासेवकश्रीवण्शठकोपश्रीशठकोपरामानुजमहादेशिकस्य)
कृतौ अधिकरणसारावलीव्याख्यायां पदयोजनाख्यायां
तृतीयस्याध्यायस्य प्रथमः पादः

## तृतीयस्याध्यायस्य द्वितीयः पादः

## सन्ध्याधिकरणम् ॥ ७५ ॥

सूत्रम्—सन्ध्ये सृष्टिराह हि ॥ ३१५ ॥

ब्रह्मैव स्वैस्स्वभावैर्बहुमुखमवदत् प्राक्तनाध्याययुग्मे
तस्येहाकृष्य चिन्ता किमिति पुनरसौ साधनाध्यायमध्ये ।
मैवं विद्याः प्रभेत्तुं विशदयति परं तद्धि तद्रूपभेदात्
सिद्धोपायादिभावं प्रथयति च विभोः प्राप्यतृष्णाप्रथिम्ने ॥ २८९ ॥

चिन्ता०—अत्र वैराग्यपादानन्तरमुभयलिङ्गपादारम्भमाक्षिप्य समाधत्ते—ब्रह्मैवेति । पूर्वमुभाभ्यामध्यायाभ्यां सर्वैरपि स्वैः स्वभावैरन्वितं ब्रह्म प्रत्यपादि । अयञ्च साधनाध्यायः । अस्मिन्नध्याये समन्वयाविरोधाध्यायप्रतिपाद्यस्य ब्रह्मणः पुनराकृष्य चिन्ता किमर्थेति चोदकाभिप्रायः । चोद्यं निराकरोति—मैवमिति । अयमत्राभिप्रायः—सत्यमयं साधनाध्यायः । अथापि ब्रह्मचिन्ता विशेषतः कर्तव्यैव । साधनं हि द्विविधम्—साध्योपायस्सिद्धोपायश्च । सिद्धोपाय ईश्वरः । साध्योपायस्सद्विद्यादिभेदवती तद्भक्तिरेव । विद्याभेदश्च रूपभेदात् । रूपञ्च विद्यायाः प्राधान्येन वेद्यं ब्रह्मैव । तस्य च भेदस्तद्गुणभेदात् । एवञ्च साधनाध्यायप्रतिपाद्यसाधनरूपभक्तिविषयत्वेन स्वयञ्च सिद्धोपायतया साधनत्वेन साधनाध्याये ब्रह्मचिन्ता विशेषेण सङ्गच्छत इति । तत्र ब्रह्मचिन्तनस्य विद्योपकारकत्वं तावदाह—विद्या इति । तद्धि तद्रूपभेदादिति—तद् ब्रह्मविशदीकरणं तद्रूपभेदात् तद्गुणभेदात् तेनोभयलिङ्गत्वादिविशेषणोपेतं ब्रह्मात्र चिन्तनीयमित्यर्थः । अस्य सिद्धोपायत्वप्रतिपादनार्थं ब्रह्मचिन्तनं सफलमित्याह—सिद्धेति । द्वयं खलु विशेषतः प्रतिपाद्यम्—ब्रह्मण स्सिद्धोपायत्वं सिद्धप्राप्यत्वञ्च । एतदुभयप्रतिपादनं प्राप्ये ब्रह्मणि तृष्णाविशेषसिद्ध्यर्थम् । तृष्णाविशेषाभावे खल्पायाधिकार एव पुरुषस्य न स्यात् । स्वर्गकामो हि यागादिष्वधिकुरुते एवं परब्रह्मप्राप्तिकामो हि ब्रह्मोपासनेष्वधिकुर्यात् । तथा चोभयलिङ्गपाद उपासनानुष्ठाने विशेषेणोपकरोतीति शारीरकशास्त्रसारोऽयं पाद इति न नैरर्थक्यप्रसङ्गः । तृष्णाप्रथिम्न इति—तृष्णाभिवृद्ध्यर्थमित्युच्यते । अभिवर्धते ह्यत्र तृष्णा 'स स्वेनैव फलप्रदः' इत्युक्तप्रकारेण स्वप्रापकत्वेन स्वयमेव ब्रह्मणि परिज्ञाते इति भावः ॥ २८९ ॥

पद०—ब्रह्मैवेत्यादि । प्राक्तनाध्याययुग्मे–प्राक्तनं यत् अध्याययुग्मं प्रथमद्वितीयात्मकं तस्मिन् । स्वैः–स्वकीयैः । स्वभावैः–असाधारणधर्मैः । सहेति शेषः । ब्रह्मैव । बहुमुखम्—बहुप्रकारं, क्रियाविशेषणम् । अवदत्–व्यक्ततया प्रत्यपादयत् । इह साधनाध्यायमध्ये–साधनप्रतिपादनपरस्यास्य तृतीयाध्यायस्य मध्ये । तस्य–तथाप्रतिपादितस्य ब्रह्मणः । असौ पुनराकृष्य चिन्ता—पुनराकाङ्क्षामुत्थाप्य विचारः । किमिति–किं फलं भविष्यतीति । कस्मै फलायेति वा अर्थः । मैवम्–एवं मास्तु । विद्याः—मोक्षसाधनभूता विद्याः । प्रभेत्तुम्—विभज्य दर्शयितुम् । परम्–विद्याविषयभूतं परं ब्रह्म । विशदयति—स्पष्टतया प्रतिपादयति । तद्धि–परब्रह्मविशदीकरणम् । तद्रूपभेदात्—तद्गुणभेदात् । तेनोभयलिङ्गत्वादिविशेषणोपेतं ब्रह्मात्र चिन्तनीयमित्यर्थः । प्राप्यतृष्णाप्रथिम्ने—प्राप्ये परब्रह्मणि तृष्णातिशयजननाय । विभोः—परमात्मनः । सिद्धोपायादिभावञ्च—सिद्धोपायभावं सिद्धोपेयभावञ्चेत्यर्थः । प्रथयति–प्रतिपादयति । द्वयं खलु विशेषतः प्रतिपाद्यं ब्रह्मणस्सिद्धोपायत्वं सिद्धोपेयत्वञ्च । एतदुभयप्रतिपादनं प्राप्ये ब्रह्मणि तृष्णाविशेषसिद्ध्यर्थम् । तृष्णाविशेषाभावे खलूपायाधिकार एव पुरुषस्य न स्यात् । स्वर्गकामो हि यागादिष्वधिकुरुते । एवं परब्रह्मप्राप्तिकामो हि ब्रह्मोपासनेष्वधिकुर्यात् । तथा चोभयलिङ्गमुपासनानुष्ठाने विशेषेणोपकरोतीति न नैरर्थक्यप्रसङ्ग इति भावः ॥ २८९ ॥

नैर्गुण्यं ब्रह्मणश्चेद्वितथ इह गुणैर्ब्रह्मविद्याविभागः
सोऽस्त्वेतैः कल्पितैश्चेच्छ्रुतिमतविहतिर्नात्र दृष्टिक्रमोऽपि ।
निर्दोषत्वञ्च नित्यं यदि वदसि मुधा दोषशान्त्यर्थयत्नः
कल्प्यं चेद् दुष्टता स्यात् प्रकृतिरिति परक्षिप्तये चैष पादः ॥ २९० ॥

चिन्ता०—किञ्च अखिलहेयप्रत्यनीककल्याणैकतानताप्रतिपादनपरोऽयमुभयलिङ्गपादो मृषावादिप्रभृतीनां परेषां प्रतिक्षेपे विशेषेणोपकरोतीति सफलएवेत्याह—नैर्गुण्यमिति । ब्रह्मणो नैर्गुण्यं चेत् गुणोपसंहारपादाधिकरणेषूभयलिङ्गपादप्रतिपादितकल्याणगुणभेदैर्ब्रह्मविद्याविभागो वितथस्स्यात् । ननु कल्पितैरेव गुणैर्ब्रह्मविद्याविभागस्स्यादिति परपक्षमनुवदति—सोऽस्त्विति । तत् प्रतिक्षिपति–श्रुतिमतविहतिरिति । अनादिनिधनाविच्छिन्नसम्प्रदायतया प्रतिपन्नस्य श्रुत्यर्थस्य कल्पितत्वे किमकल्पितं स्यात्? तथा च गुणानां कल्पितत्वं वदन् वेदान्तबहिर्भूत इत्यर्थः । ननु वेदान्तेऽपि 'मनो ब्रह्मेत्युपासीत' इत्येवमादिषु 'गरुडमात्मानं जानीयात्' इत्यादिवद् दृष्टिविधिर्दृश्यते तद्वदत्रापि स्यादित्याशङ्क्य निराकरोति—नात्रेति । एकत्रागत्या दृष्टिविधिपरिग्रहे सर्वत्रापि तथैव स्यादिति न वक्तुं शक्यत इत्यर्थः । अन्यत्रा-

न्यगुणारोपेणानुसन्धाने हि दृष्टिविधिः। ब्रह्मणस्तु सत्यत्वज्ञानत्वादिकं स्वरूपगुणत्वादबाध्यमित्यर्थः। एवं कल्याणगुणैकतानत्वप्रतिपादकप्रमाणविरोधात् मृषावादिनो दोषमुक्त्वा निर्दोषत्वप्रतिपादकप्रमाणविरोधादपि मृषावादिपक्षस्य दुष्टत्वमाह—निर्दोषत्वमिति। ब्रह्मनिर्दोषत्वञ्च नित्यमेवेति प्रमाणानुसारेण यदि वदसि तदा ब्रह्मव्यतिरिक्तस्य संसरतो जीवस्याभावाद् ब्रह्मणो नित्यनिर्दोषत्वाच्च मुधा निरर्थक एव संसाररूपदोषशान्त्यर्थो वेदान्तश्रवणादिप्रयास इति नैरर्थक्यमेव शास्त्रारम्भस्य। तर्हि निर्दोषत्वं ब्रह्मणः कल्प्यमिति वदाम इति परस्याभिप्रायमाशङ्क्य प्रतिक्षिपति—कल्प्यमिति। निर्दोषत्वं कल्प्यं चेत् दुष्टैव ब्रह्मणः प्रकृतिस्स्यादिति पुनश्शास्त्रारम्भवैयर्थ्यमिति परेषां प्रतिक्षेपायोभयलिङ्गपादस्सफल एव ॥ २९० ॥

पद०—नैर्गुण्यमित्यादि। ब्रह्मणो नैर्गुण्यश्चेत्—गुणशून्यत्वमङ्गीक्रियते चेत्। इह—साधनाध्याये तृतीयपादे। गुणैः—प्रतिविद्यं व्यवस्थितैस्संयद्वामत्वादिगुणैः। ब्रह्मविद्याविभागः—ब्रह्मविद्यानामन्योन्यभेदज्ञापनव्यापारः। वितथः—व्यर्थो भवेत्। सः—विद्याभेदः। कल्पितैरेतैरस्त्विति चेत्—आरोपितैर्गुणैरस्त्विति चेत्। विद्याभेदनियामकानां ब्रह्मसम्बन्धितया श्रुतानां गुणानां न वास्तवत्वं अपितु शुक्तिरजतादिवदारोपितत्वमेवेति चेदिति भावः। श्रुतिमतविहतिः—श्रुत्यभिमतार्थविरोधापत्तिः। अनादिनिधनाविच्छिन्नसम्प्रदायतया प्रतिपन्नस्य श्रुत्यर्थस्य कल्पितत्वे किमकल्पितं स्यात्। तथाच गुणानां कल्पितत्वं वदन् वेदान्तबहिर्भूत इत्यर्थः। ननु वेदान्तेऽपि 'मनो ब्रह्मेत्युपासीत' इत्यादिषु दृष्टिविधिर्दृश्यते तद्वदत्रापि स्यादित्याशङ्क्य निराकरोति—नात्रेति। अत्र—साक्षाद्ब्रह्मोपासनस्थले। दृष्टिक्रमोऽपि न—'मनो ब्रह्म' इत्यादिष्विव दृष्टिविधिक्रमोऽपि न सम्भवति। एकत्र अगत्या इतिशिरस्कत्वादिदृष्टिविधिलिङ्गैश्च दृष्टिविधित्वकल्पनेऽपि सर्वत्र तथैव स्यादिति न वक्तुं युज्यते। अन्यत्रान्यगुणारोपेणानुसन्धाने हि दृष्टिविधिः। ब्रह्मणस्तु सत्यत्वज्ञानत्वादिकं स्वरूपनिरूपकगुणत्वादबाध्यमिति भावः। निर्दोषत्वञ्च नित्यं वदसि यदि—ब्रह्मनिर्दोषत्वञ्च नित्यमेवेति प्रमाणानुसारेण यदि वदसि। दोषशान्त्यर्थयत्नो मुधा—तदा ब्रह्मव्यतिरिक्तस्य संसरतो जीवस्याभावात् ब्रह्मणो नित्यनिर्दोषत्वाच्च निरर्थक एव संसारदोषशान्त्यर्थो वेदान्तश्रवणादिप्रयासो भवेत्। कल्प्यश्चेत्—निर्दोषत्वं कल्प्यश्चेत्। दुष्टता प्रकृतिरस्यात्—दुष्टैव ब्रह्मणस्स्वभावस्स्यात्। इति—एवम्। परक्षिप्तये च एष पादः—परेषां मृषावादिनां प्रतिक्षेपाय चायमुभयलिङ्गपादः। अतो नास्य नैरर्थक्यमिति भावः ॥ २९० ॥

किञ्चादौ चिन्त्यभावः प्रमितिविषयता स्वप्रभत्वं सुखत्वं
विश्वाधिष्ठानता च स्वबहुभवनधीर्निर्विशेषे कथं स्यात्।
सर्वश्रुत्यर्थहानं स्ववचनविहतिस्सर्वमानैश्च बाधो
मायावैयात्यभाजामिति सगुणदशोपास्तिपादश्च दुस्स्थः ॥ २९१ ॥

चिन्ता०—इत्थं निर्विशेषत्वस्य मिथ्यात्वे दोषं दृष्ट्वा पुनस्सत्यत्वं वदतो बम्भ्रम्यमाणस्य मृषावादिनो बहूनपि दोषानाह—किञ्चेति। ब्रह्मणो निर्विशेषत्वपारमार्थ्ये ब्रह्मजिज्ञासा कर्तव्येति आदौ चिन्त्यत्ववादो न स्यात्, तथाप्रमाणगोचरत्वमपि तथैव स्वसिद्धान्तसारभूतं स्वयम्प्रकाशत्वमानन्दरूपत्वं विश्वाध्यासाधिष्ठानत्वं 'बहुस्याम्' इति स्वस्य बहुभवनसङ्कल्पः। एतादृशं सर्वमपि गुणजातं निर्विशेषे ब्रह्मणि कथं स्यात्? न कथंचित् स्यादित्यर्थः। एते गुणा यदि परमार्थास्तदा सगुणवादप्रसङ्गः। अपरमार्थश्चेत् स्वयम्प्रकाशत्वानन्दत्वयोरप्यपरमार्थत्वे स्वसिद्धान्तस्य मूलोच्छेदः। बौद्धादिभ्यो वैषम्यञ्च किं स्यात्? अयमर्थविरोध उक्तः। श्रुतिविरोधमप्याह—सर्वेति। श्रुतिप्रमाणविरोधमुक्त्वा स्ववचनविरोधमप्याह—स्ववचनेति। प्रत्यक्षादिकृत्स्नप्रमाणविरुद्धवादित्वादिकं मृषावादिनस्सुप्रसिद्धमेव 'दुर्घटत्वमविद्याया भूषणं नतु दूषणम्' इति। तद् भूषणं चेद् ब्रह्मैवाविद्या, निरधिष्ठान एव भ्रमः, निष्प्रकाशमेव ब्रह्मेत्यादिकमप्यत्यन्तदुर्घटं श्रेष्ठमेव भूषणं स्यादिति माध्यमिकविजयतूर्यमेव जोघुष्येत। मायावैयात्येत्यादि—मायाधार्ष्ट्यात् कष्टां दशामापन्नानामष्टपादकल्पानां मृषावादिनामिह गुणोपसंहारपादप्रतिपाद्यं सकलमपि सगुणोपासनं समूलोन्मूलनमर्हतीति सर्वशास्त्रव्याकोपः ॥ २९१ ॥

पद०—किञ्चेत्यादि। किञ्च—दोषान्तराणि च बहूनि सन्तीत्यर्थः। आदौ—शास्त्रारम्भे प्रथमाधिकरणे। चिन्त्यभावः—जिज्ञास्यत्वम्। प्रमितिविषयता—विचारफलभूतप्रमित्यात्मकज्ञानविषयत्वम्। स्वप्रभत्वम्—स्वयम्प्रकाशत्वम्। सुखत्वम्—आनन्दरूपत्वम्। विश्वाधिष्ठानता च—विश्वस्यारोपिततया तदधिष्ठानत्वम्। स्वबहुभवनधीः—'बहुस्याम्' इति स्वस्य बहुभवनसङ्कल्पः। निर्विशेषे—ब्रह्मणो निर्विशेषत्वस्य पारमार्थ्ये तथा निर्विशेषे ब्रह्मणि। कथं स्यात्—एतेषां धर्माणामङ्गीकारे सविशेषत्वापत्तेरिति भावः। किञ्चादौ चिन्त्यवाद इति पाठभेदमालम्ब्य चिन्तामणिपङ्क्तिर्दृश्यते 'किञ्चेति। ब्रह्मणो निर्विशेषत्वपारमार्थ्ये ब्रह्मजिज्ञासा कर्तव्येति आदौ चिन्त्यत्ववादो न स्यात्' इत्यादिः। सर्वश्रुत्यर्थहानम्—सर्वेषामपि श्रुत्यर्थानां कारणत्वोपास्यत्वप्राप्यत्वादीनां हानं त्याग एव स्यात्। स्ववचनविहतिः—'युष्मदस्मत्प्रत्ययगोचरयोर्विषयविषयिणोस्तमःप्रकाशवद्विरुद्धस्वभावयोः'

इत्यादिभिः प्रत्यगर्थस्यास्मत्प्रत्ययविषयत्वविषयित्वजडविलक्षणस्वभावत्वादिबोधिभिस्स्ववाक्यैर्विरोधः । सर्वमानैर्बाधश्च—अबाधितानेकधर्मविशिष्टधर्मिप्रतिपादकप्रत्यक्षानुमानशब्दादिसर्वप्रमाणैर्बाधश्च । मायावैयात्यभाजाम्—मायाधार्ष्ट्यात् कष्टां दशामापन्नानां मृषावादिनाम् । भवतीति शेषः । इति, सगुणदशोपास्तिपादश्च—गुणोपसंहारपादस्थं सकलमपि सगुणोपासनवचनम् । दुस्थः—विरुद्धमित्यर्थः ॥ २९१ ॥

त्यक्तं दोषैर्गुणाढ्यं यदि पुनरिह तद् ब्रह्म चिन्त्येत पादे
जीवस्वप्नाद्यवस्थामननमथ कथं संघटेतेति चेन्न ।
स्वाप्नार्थस्रष्टृभावप्रभृतिबहुविधब्रह्ममाहात्म्यसिद्ध्यै
जन्तोरस्य स्वमुक्तावतिपरवशताज्ञप्तये चैतदत्र ॥ २९२ ॥

चिन्ता०—अस्मिन्नुभयलिङ्गपादे यदि ब्रह्म चिन्त्यमुच्यते तर्हि जीवस्य स्वप्नाद्यवस्थाकथनं कथं सङ्घटेतेत्याशङ्क्य स्वप्नादिदृष्टिरपि भगवत्सङ्कल्पादेव सिध्यतीति तत्प्रदर्शनस्यापि भगवन्माहात्म्यप्रदर्शनपरत्वादस्मिन्पादे सङ्गतिर्युज्यत इति परिहरति—त्यक्तमिति । अयमत्र शब्दार्थः—दोषैस्त्यक्तं गुणाढ्यं ब्रह्म यदि पुनरिह चिन्त्येत तर्हि जीवस्य स्वप्नाद्यवस्थामननमथ वैराग्यपादानन्तरमस्मिन्पादे कथं संघटेतेति शङ्का । तामिमामां निराकरोति—नेति । तदेव विवृणोति—स्वाप्नेति । स्वाप्नार्थस्यापि भगवानेव स्रष्टेति तत्स्रष्टृभावप्रभृतिबहुविधब्रह्ममाहात्म्यसिद्ध्यै तथा अस्य जन्तोस्स्वमुक्तावत्यन्त परवशताज्ञप्तये चैतज्जीवस्य स्वप्नाद्यवस्थामननमत्र क्रियते । अयमर्थः—न जीवस्यप्राधान्येनात्रोच्यते, अपि तु परमात्मनो जाग्रत्स्वप्नसुषुप्त्यादिसर्वावस्थाकर्तृत्वप्रतिपादनार्थमिति परमात्मैवास्मिन्पादे सर्वत्र प्राधान्येनोच्यत इति ॥ २९२ ॥

पद०—त्यक्तमित्यादि । दोषैस्त्यक्तम्—क्लेशकर्मादिदोषैरस्पृष्टम् । गुणाढ्यम्—ज्ञानशक्त्यादिकल्याणगुणपरिपूर्णम् । तत् ब्रह्म । इह पादे—उभयलिङ्गपादे । पुनश्चिन्त्येत यदि—उपासनौपयिकाधिकारसिद्धये प्रथमह्निकविचारितमपि पुनश्चिन्तनीयं चेत् । जीवस्वप्नाद्यवस्थामननम्—जीवस्य याः स्वप्नसुषुप्तिमूर्च्छारूपावस्थास्तद्विचिन्तनम् । अथ कथं संघटेत—विचिन्तनीयमुभयलिङ्गं ब्रह्म विसृज्याधःपादे चिन्तितस्य जीवस्य पुनरत्रावस्थाविशेषद्वारा चिन्तनं कथं युज्येतेत्यर्थः । इति चेन्न—इति शङ्क्यते यदि तन्न युक्तम् । स्वाप्नार्थस्रष्टृभावप्रभृतिबहुविधब्रह्ममाहात्म्यसिद्ध्यै—स्वाप्नास्स्वप्नकालिका ये अर्था रथादयस्तेषां स्रष्टृभावस्तत्तत्पुरुषमात्रगोचरतया तत्कालमात्रावसानतया चाश्चर्यभूता सृष्टिः प्रभृतिः प्रधानं यस्य तथाविधस्यात एव बहुविधस्य ब्रह्ममाहात्म्यस्य विचित्रशक्त्यादिरूपस्य सिद्ध्यै ज्ञानाय ।

उभयलिङ्गविचारवदेवेदमपि ब्रह्ममाहात्म्यज्ञानायैव सुसम्पन्नमिति भावः । फलान्तरञ्चास्तीत्याह—जन्तोरित्यादिना । स्वमुक्ता–स्वस्य जीवस्य मुक्तौ मोक्षदशायाम् । अस्य जन्तोः–जीवस्य । अतिपरवशताज्ञप्तये च—स्वप्नाद्यवस्थावत् सकलावस्थास्वपि जीवस्य परतन्त्रतया मोक्षदशायामपि

'पशवः पाशिताः पूर्वं परमेण स्वलीलया ।
तेनैव मोचनीयास्ते नान्यैर्मोचयितुं क्षमाः ॥'

'दासभूतास्स्वतस्सर्वे ह्यात्मानः परमात्मनः'। इत्यादिप्रमाणानुसारेणात्यन्तपारतन्त्र्यमेव न तु स्वातन्त्र्यं नच परमशेषिणैक्यमित्येतदर्थज्ञापनाय च । एतत्—जीवमननम् । अत्र—अस्मिन्पादे । क्रियत इति शेषः ॥ २९२ ॥

**पादस्यास्याद्यमर्धं कतिचिदधिजगुः पूर्वपादस्य शेषं**
**पश्चार्धञ्चात्र साक्षादनुघटितमुपास्त्यर्थतत्तद्गुणोक्तेः ।**
**एतन्नातीव हृद्यं शबलितकथने चातुरीवैपरीत्यात्**
**ब्रह्मोक्तौ जीवदोषग्रह इह तु मुखं तत्प्रतिद्वन्द्विबुद्धेः ॥ २९३ ॥**

चिन्ता०—अत्र केचिदाहुः—'अस्मिन्नुभयलिङ्गपादे पूर्वार्धं जीवपरं वैराग्यपादशेषभूतम्, उत्तरार्धं परमात्मपरमिति । एतदनुवदति—पादस्येति । पश्चार्धमत्रास्मिन्पादे साक्षादनुघटितमुपास्त्यर्थं तत्तद्भगवद्गुणोक्तेरिति । इदमेकदेशिमतं नातीव हृद्यमिति निराकरोति—एतदिति । तत्र हेतुमाह—शबलितेति । सङ्कीर्णकथने चातुरीवैपरीत्यादिति । तर्हि पादपूर्वार्धे जीवदोषग्रहणं किमर्थमित्याशङ्क्य ब्रह्मगुणाभिव्यक्त्यर्थमिति परिहरति—ब्रह्मेति । संसरतो जीवस्य कथने हि संसारमोचकस्य परमात्मनो माहात्म्यं सिध्यतीत्यर्थः । शब्दार्थस्तु–जीवदोषग्रह इह तु मुखमुपाय इत्यर्थ इति ॥ २९३ ॥

पद०—पादस्येत्यादि । कतिचित्–केचिदेकदेशिनः । अस्य पादस्य–उभयलिङ्गपादस्य । आद्यमर्धम्–पूर्वार्धम् । पूर्वपादस्य शेषमधिजगुः–जीवावस्थाप्रतिपादकप्रथमपादशेषमित्यूचुः । एतत्पादपूर्वार्धस्यापि स्वप्नसुषुप्तिमुग्धिरूपजीवावस्थाप्रतिपादकत्वादिति भावः । पश्चार्धञ्च–उत्तरार्धं तु । उपास्त्यर्थतत्तद्गुणोक्तेः–उपासनोपयुक्ततत्तद्भगवद्गुणोपपादनात् । अत्र साक्षादनुघटितमधिजगुः—अस्मिन्पादे मुख्यतया घटितमित्यूचुः । एतत्–एवमर्धभेदेन वैजात्यकल्पनम् । अतीव हृद्यं न । कुत इति चेत्, शबलितकथने चातुरीवैपरीत्यात्—पूर्वार्धं पूर्वपादानुगतम्, उत्तरार्धमुत्तरपादानुगतम्, तथाविधमर्धद्वयमेकपादीकृत्य कथने पादार्थानुगत्यभावेन चातुर्यहानिप्रसङ्गादित्यर्थः । इह–उभयलिङ्गपादे ।

जीवदोषग्रहस्तु—जीवस्य स्वपतस्सुषुप्तस्य मूर्च्छितस्य च ये दोषास्तेषां ग्रह उपपादनं तु। तत्प्रतिद्वन्द्विबुद्धेः—तस्य अनन्तदोषास्पदस्य जीवस्य प्रतिद्वन्द्वि निर्दोषानन्तकल्याणगुणं ब्रह्म तस्य बुद्धेस्तिमिरज्ञानस्य तेजोबोधजनन इव बोधोत्पादनात्। ब्रह्मोक्तौ—अखिलहेयप्रत्यनीकत्वकल्याणगुणाकरत्वरूपोभयलिङ्गब्रह्मप्रतिपादने। मुखम्—उपाय इत्यर्थः। अत उभयलिङ्गब्रह्मात्मक एक एवास्य पादस्यार्थ इति न पादार्थानुगतिरित्यर्थः। यद्वा ब्रह्मोक्तौ—ब्रह्मोक्तिप्रकरणे। जीवदोषग्रहः—जीवदोषोपपादनम्। तत्प्रतिद्वन्द्विबुद्धेः—निर्दोषब्रह्मप्रतिद्वन्द्वघनन्तदोषबुद्ध्युत्पादनद्वारा। इह—ब्रह्मोक्तौ। मुखमुपाय इति वार्थः ॥ २९३ ॥

स्वप्नेऽर्थास्सन्तु सृष्टास्तदपि बहुविधा दुस्त्यजा भ्रान्तिरत्र
प्रध्वस्तानामिदानीन्तनवदनुभवात् स्थायितादिभ्रमाच्च।
सत्यं श्रुत्यादिसिद्धे श्रुतपरिहरणायोगतस्सृष्टिमात्रं
स्वीकृत्यांशे तु बाधाद् भ्रममपि हि यथाजागरं न क्षिपामः ॥२९४॥

चिन्ता०—अत्र चोदयति 'स्वप्नसृष्टिः परमार्थभूतेति भवद्भिरुच्यते तत्कथं सङ्घटते? अतीतानागतयोरपि स्वप्ने दर्शनात्। असम्भावितार्थदर्शनं हि जागरे मिथ्या किं पुनस्स्वप्ने। अतस्स्वप्नसृष्टिर्न परमार्थभूता' इति। तदिदमाह—स्वप्न इति। अयमत्र शब्दान्वयः—स्वप्नेऽर्थास्सृष्टास्सन्तु। अथापि बहुविधा भ्रान्तिरत्र स्वप्ने दुस्त्यजा प्रध्वस्तानां पित्रादीनामिदानीन्तनवदनुभवात् स्वप्नलब्धानां सुवर्णादीनामस्थिराणामपि स्थायितादिभ्रमाच्च, अतः स्वप्नस्य अपारमार्थ्यं तव वक्तव्यमिति। तदिदमर्धाङ्गीकारेण निराकरोति—सत्यमिति। तत्राङ्गीकृतमनङ्गीकृतञ्च विभज्य दर्शयति—श्रुत्यादीति। श्रुत्यादिसिद्धेऽर्थे श्रुतहानायोगात् सर्वकर्तुर्भगवतस्तत्कालमात्रे तत्तत्पुरुषमात्रानुभाव्यवस्तुसृष्टिमङ्गीकृत्यारयन्तव्याहतेष्वर्थेषु बाधादेव जागरवद् भ्रान्तिमङ्गीकृत्य सर्वं निर्वहन्तश्श्रुतिसिद्धमर्थं न क्षिपाम इति ॥ २९४ ॥

पद०—स्वप्न इत्यादि। स्वप्ने—स्वप्नसमये। अर्थाः—रथाद्यर्थाः। सृष्टास्सन्तु—ईश्वरेण सृष्टाः कामं सन्तु। तदपि—तथाङ्गीकारेऽपि। अत्र—स्वप्ने। प्रध्वस्तानामिदानीन्तनवदनुभवात्—पूर्वनष्टानामपि पित्रादीनामिदानीन्तनवदनुभवात्। स्थायितादिभ्रमाच्च—स्वप्नलब्धानां सुवर्णादीनामस्थिराणामपि स्थायित्वकार्यकारित्वादिभ्रमाच्च। बहुविधा भ्रान्तिर्दुस्त्यजा—भवतामप्यपरिहार्येति चेत्। सत्यम्—अर्धाङ्गीकारे। अङ्गीकृतमनङ्गीकृतञ्च विभज्य दर्शयति—श्रुत्यादीति। श्रुत्यादिसिद्धे—श्रुति-

स्मृत्यादिसिद्धेऽर्थे । श्रुतपरिहरणायोगतः—श्रुतहानायोगात् । सृष्टिमात्रं स्वीकृत्य—सर्वकर्तुर्भगवतस्तत्कालमात्रे तत्तत्पुरुषमात्रानुभाव्यवस्तुसृष्टिमङ्गीकृत्य । अंशे तु बाधात्—अत्यन्तव्याहतार्थांशे बाधादेव । यथाजागरम्—जागरतुल्यम् । भ्रममपि हि स्वीकृत्य—भ्रान्तिमप्यङ्गीकृत्य । न क्षिपामः—सर्वनिर्वाहतच्छ्रुतिसिद्धमर्थं न त्यजामः ॥ २९४ ॥

कश्चिद्योगप्रभावान्निजपरभवनस्वैरसञ्चारनीत्या
निष्क्रान्तः पूर्वदेहाद्विशति परवपुः पूर्वमाप्नोति भूयः ।
इत्थं स्वप्नेऽप्युदन्तस्थितिरिति कतिचिच्छ्वासवृत्त्या तथान्ये
चित्तोद्यद्धीप्रसृत्येतरतनुभजने सौभरिन्यायसिद्धेः ॥ २९५ ॥

चिन्ता०—तर्हि स्वयमेकत्र वर्तमानस्य स्वप्ने देशान्तरगमनं पारमार्थिकं कथं स्यादित्याशङ्क्य नानाशरीरपरिग्रहवतो योगिन इव विश्वकर्तुर्भगवतस्सङ्कल्पप्रभावात् सर्वं सङ्घटत इत्याह—कश्चिदिति । अयमत्र शब्दान्वयः—कश्चिद्योगी योगप्रभावात् स्वपरगृहयोस्स्वैरसञ्चारन्यायेन पूर्वदेहान्निष्क्रान्तो विशति परवपुर्देहान्तरं प्राप्नोति । तेनैव तत्र सञ्चारादिकमपि करोति । पूर्वं शरीरमपि भूयस्समागत्य प्राप्नोतीति । तथा स्वप्ने पूर्वशरीरं परित्यज्य भगवता सृष्टं शरीरान्तरं स्वप्नद्रष्टा प्राप्नोति स्वप्नान्ते पूर्वशरीरं पुनः प्राप्नोतीति केचित्प्रतिपेदिरे । तदिदमाह—इत्थमिति । पक्षान्तरमप्याह—श्वासवृत्त्येति । अयं खल्वन्येषामभिप्रायः—यदि स्वप्ने शयितः पुरुषः पूर्वशरीरं परित्यज्य शरीरान्तरं परिगृह्णाति, तदा पूर्वस्मिन् शरीरे श्वासवृत्तिर्न स्यात् । अतस्तस्मिन्नेव शरीरे जीवोऽवतिष्ठते । भगवता सृष्टेषु तु स्वाप्नेषु शरीरान्तरेषु ‘प्रदीपवदावेशः’ इति वक्ष्यमाणन्यायेन धर्मभूतज्ञानव्याप्त्या सौभरिन्यायस्य सिद्धत्वात् धर्मभूतज्ञानव्याप्त्यैव शरीरान्तरपरिग्रह इति निरणैषुरिति ॥ २९५ ॥

पद०—कश्चिदित्यादि । कश्चित्—योगी । योगप्रभावात्—साङ्गयोगाभ्याससिद्धशक्तिविशेषात् । निजपरभवनस्वैरसञ्चारनीत्या—स्वीयपरकीयगृहस्वच्छन्दसञ्चारन्यायेन । पूर्वदेहात् निष्क्रान्तः परवपुर्विशति । भूयः—पुनः । पूर्वम्—विसृष्टशरीरम् आप्नोति । इत्थं स्वप्नेऽपि, उदन्तस्थितिः—उदन्तस्य वृत्तान्तस्य स्थितिरवस्थानम् । यद्वा—उत्, अन्तः स्थितिः इतिच्छेदः । उत्स्थितिः अन्तस्स्थितिरित्यन्वयः । स्वप्नेऽपीत्थं योगिनस्स्वपरगृहसञ्चारन्यायेन उत् स्थितिः—स्वदेहादुत्क्रम्य देहान्तरे स्थितिः । अन्तस्स्थितिः पुनरागत्य देहे स्थितिश्च । इति कतिचित्—ऊचुरिति शेषः । अन्ये—केचित् । चित्तोद्यद्धीप्रसृत्या—चित्तेन मनसा उद्यन्त्याः विकसन्त्याः धियः धर्मभूतज्ञानस्य प्रसृत्या प्रसरणेन ।

इतरतनुभजने—शरीरान्तरप्रवेशेऽभ्युपगते। सौभरिन्यायसिद्धेः—सौभरिः किल ऋषिरेकशरीरे स्वयं तिष्ठन् बहूनि शरीरान्तराणि योगमाहात्म्यसचिवधर्मभूतज्ञानेनाविश्य बह्वीभिस्स्त्रीभिरपत्यैश्च सुखमनुबभूव। स एष सौभरिन्यायः, तस्य सिद्धेः। श्वासवृत्त्या—शयानदेहं परित्यज्य जीवश्शरीरान्तरं यदि प्रविशेत् तदा शयानदेहे यथापूर्वं श्वासप्रवृत्तिर्न दृश्येत, अतो जीवश्शयानदेह एव तिष्ठतीतिवक्तव्यम्, अतश्श्वासवृत्त्या शयानदेहे जीवावस्थितिज्ञापिकया। तथा—धर्मभूतज्ञानद्वारैव जीवस्य शरीरान्तरप्रवेश इति। ऊचुरित्यध्याहारः ॥ २९५ ॥

**उक्तं पत्या प्रजानां भविनि दहरवत्सत्यसंकल्पताद्य**
**पुत्रादेश्चैष कर्ता प्रकृत इह सृजेत्स्वाप्नमर्थञ्च मैवम्।**
**मुक्तौ तादृग्गुणोक्तेरनभिमतसमुत्पादनादेरयोगात्**
**स्वाप्नानां सूचकत्वादपि निखिलजगत्कर्तुरेषापि सृष्टिः ॥ २९६ ॥**

चिन्ता०—अत्र सङ्गतिर्भाष्ये 'एवं कर्मानुरूपगमनागमनजन्मादियोगेन जाग्रतो जीवस्य दुःखित्वं ख्यापितम्। इदानीमस्य स्वप्नवस्था परीक्ष्यते' इति। तदर्थंविचारस्तु—'न तत्र रथा न रथयोगा न पन्थानो भवन्ति' इत्यारभ्य स्वाप्नसृष्टिराम्नायते, सा किं पारमार्थिकी, उत मायामात्रमिति। किं 'सृजते स हि कर्ता' इति निर्देशः पारमार्थिकतामवगमयति नेति। किमयं निर्देशस्सृष्टिकर्तुः कर्तृत्वपरः, उत स्वप्नज्ञानवत्कर्तृत्वपर इति। किं प्रजापतिवाक्यावगतसत्यसङ्कल्पत्वस्य जीवस्य स्वप्ने सङ्कल्पमात्रात् सृष्टिस्सम्भवति नेति। 'य एषु सुप्तेषु जागर्ति कामंकामं पुरुषो निर्मिमाणः' इति जीवस्य स्वप्ने सङ्कल्पमात्रात् स्रष्टृत्वमवगमयति नेति। किमिदं वाक्यं जीवपरमुत परमात्मपरमिति। अस्मिन् खल्वधिकरणे स्वप्नसृष्टिर्जीवकार्यमुत परमात्मकार्यमिति चिन्त्यते। अत्र पूर्वपक्षवादी मन्यते—उक्तमिति। उक्तं हि दहरवाक्यशेषभूते प्रजापतिवाक्ये प्रजानां पत्या सत्यसङ्कल्पताद्यं दहरवद् दहराकाशवज्जीवस्यापि। भाविनीति सप्तमी। जीवे इत्यर्थः। तेन स्वसङ्कल्पात् सृष्टिस्स्वप्ने जीवस्यैव समुचिता। किञ्चात्रपुत्रादीनां सृज्यत्वमुच्यते। पुत्रादिसम्बन्धो जीवस्यैव सङ्घटते रथादीनां जीवानुकूलवस्तूपलक्षणत्वात्। तेन पुत्रादिकर्तृत्वेन प्रकृतो जीवस्स्वाभीष्टं स्वाप्नमर्थं सृजेदित्यर्थः। इममर्थं प्रतिक्षिपति—मैवमिति। तत्र हेतुमाह—मुक्ताविति। तादृग्गुणोक्तेः—जीवस्यापहतपाप्मत्वादिगुणाष्टकाविर्भावस्योक्तेः स्वप्नावस्थायामन्धप्रायो जीवः कथमपहतपाप्मत्वादिगुणाष्टकं प्राप्नुयादित्यर्थः। हेत्वन्तरमप्याह—अनभिमतेति। यदि जीवस्स्वयमेव स्वार्थं स्वप्ने सृजति तदानीं नियतमेवानुकूलं सृजेत्।

सुप्तः खलु कदाचित्प्रतिकूलानपि स्वप्ने पश्यति। तन्न युज्यते सत्यसङ्कल्पत्वे जीवस्य स्वप्रतिकूलं स्वयमेव कथं सृजेदिति। तृतीयमपि हेत्वन्तरमाह—स्वाप्नानां सूचकत्वादिति। शुक्लानि सर्वाणि शुभावहानीत्येवं स्वप्नेऽपीश्वरसङ्कल्पेन स्वयमागतानि शुक्लादीनि शुभाशुभसूचकानीति प्रतिपत्तव्यमित्यर्थः। तस्मादीश्वरस्रष्टृत्वमेव स्वप्नप्रपञ्चस्य। तदिदमाह—निखिलजगदिति ॥ २९६ ॥

पद०—उक्तमित्यादि। प्रजानां पत्या—प्रजापतिना। भविनि—संसारिणि जीवेऽपि। दहरवत्—दहराकाशशब्दितस्य परमात्मन इव। सत्यसङ्कल्पताद्यम्—सत्यसङ्कल्पत्वप्रभृतिगुणाष्टकम्। उक्तम्—'य आत्मापहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासस्सत्यकामस्सत्यसङ्कल्पस्सोऽन्वेष्टव्यस्स विजिज्ञासितव्यस्स सर्वांश्च लोकानाप्नोति सर्वांश्च कामान् यस्तमात्मानमनुविद्य विजानातीति ह प्रजापतिरुवाच' इति वाक्ये प्रतिपादितम्। एषः—स्वाप्नार्थस्रष्टा। पुत्रादेः कर्ता चेह प्रकृतः—'कामंकामं पुरुषो निर्मिमाणः' इति वाक्येन 'शतायुषः पुत्रपौत्रान् वृणीष्व' इति पूर्वप्रकृतपुत्रपौत्रादिरूपकामनिर्मातृत्वेनचेह प्रस्तुतः। अतो जीव एव स्वाप्नमर्थश्च सृजेत्—'अथ रथान् रथयोगान् पथः सृजते' इत्यादौ रथादीनां जीवानुकूलवस्तूपलक्षणत्वात् पुत्रादिकर्तृत्वेन प्रकृतो जीव एव स्वाभीष्टं स्वाप्नमर्थं सृजेदित्यर्थः। मैवम्—एवं न शङ्कनीयम्। मुक्तौ तादृग्गुणोक्तेः—मुक्तिदशायामेव जीवस्यापहतपाप्मत्वादिगुणाष्टकाविर्भावस्योक्तेः। स्वप्नावस्थायामन्धप्रायो जीवः कथमपहतपाप्मत्वादिगुणाष्टकं प्राप्नुयात्? कथन्तरां तादृशस्य जीवस्य सङ्कल्पमात्रात् स्रष्टृत्वमित्यर्थः। किञ्च, अनभिमतसमुत्पादनादेरयोगात्—जीवस्यैव स्वाप्नार्थस्रष्टृत्वे स्वानभिमतानां स्वप्रतिकूलानां कृष्णदन्तभयङ्करपुरुषादीनामुत्पादनस्यायोगात्। नहि स्वानर्थभयदं वस्तु स्वयं सृजेदित्यर्थः। किञ्च स्वाप्नानां सूचकत्वादपि—स्वाप्नार्थानां भाविशुभाशुभसूचकत्वादपि हेतोः। यदि जीव एव स्रष्टा तदा अनर्थसूचकं न सृजेत् अतः एषापि सृष्टिर्निखिलजगत्कर्तुः—एषा स्वाप्नार्थसृष्टिरपि निखिलजगत्स्रष्टुः परमात्मन एव। न तु जीवस्येति भावः। स्वाप्नार्थानां शुभाशुभसूचकत्वञ्च

'यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति।
समृद्धिं तत्र जानीयात् तस्मिन्स्वप्ननिदर्शने ॥'

'अथ स्वप्ने पुरुषं कृष्णं कृष्णदन्तं पश्यति स एनं हन्ति' इत्यादिश्रुतौ स्वप्नाध्याये चावगन्तव्यम् ॥ २९६ ॥

कामङ्कामं विधातेत्यपि णमुलुचितोऽनूद्यते चेश इत्थं
सोऽयं सुप्तेषु जागर्त्यपि विशदमिदं सम्परिष्वङ्गवाक्यात् ।
तत्तत्कालावसानाः कति कति नियता जागरेऽप्यर्थभेदाः
तत्तत्कर्मानुरूपं फलवितरणमित्येतदप्युक्तमाप्तैः ॥ २९७ ॥

चिन्ता०—अत्र 'कामङ्कामं पुरुषो निर्मिमाणः' इति विषयवाक्ये किं णमुल्प्रत्ययेनाभिधानम्? किं वा कामंकाममिति कर्मभूतविषयविशेषाभिधानम्? इत्याशङ्क्य भगवतस्सत्यसङ्कल्पस्य स्रष्टृत्वाभिधानार्थं णमुलेव समुचित इत्याह—कामंकाममिति। जीवस्यासत्यसङ्कल्पस्य कर्तृत्वायोगात्। तथा च सतीश्वर एवानूद्यते। अयंच परमात्मा सुप्तेषु पुरुषेषु जागर्ति। तेन तस्याश्चर्यरूपकार्यकरणे कर्तृत्वं युज्यत इत्यर्थः। तस्य जागरणञ्च श्रुतिसिद्धमित्याह—विशदमिति। 'प्राज्ञेनात्मना सम्परिष्वक्तः' इति हि श्रूयते। ननु जागरवत् स्वप्नस्यापि परमार्थसृष्टिरूपत्वे कथं तत्तत्कालावसायित्वम्? कथंवा तत्तदेकैकपुरुषमात्रानुभाव्यत्वम्? इत्याशङ्क्य निरङ्कुशस्वतन्त्रेश्वरसङ्कल्पविशेषादित्यभिप्रायेण परिहरति—तत्तदिति। न केवलं स्वप्न एव तत्तत्कालावसानकार्यसृष्टिः, अपितु जागरेऽपि मेघोदयादीनां तादृक्त्वेनोपलम्भो दृश्यते। ननु तथाप्येकपुरुषानुभाव्यत्वं न दृश्यत इति चेत् तदपीश्वरसङ्कल्पादिति मन्तव्यम्। दृश्यन्ते हि मन्त्रौषधसिद्धाञ्जनादिप्रभावात् तत्तत्पुरुषमात्रानुभाव्या विषयविशेषाः। अपर्यनुयोज्यः खल्वीश्वरप्रभावविशेषः। (विश्वामित्रादयोऽपि!) सङ्कल्पमात्रात् विश्वं सृजति अनुग्रहमात्रादेव द्रष्टव्यमपि दर्शयति। अत एवोच्यते 'दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम्' इति। स्वप्नदर्शनस्येश्वरसृज्यत्वे हेत्वन्तरमप्याह—तत्तत्कर्मानुरूपं फलवितरणमिति। स्वप्नदर्शनं हि सुखदुःखात्मकत्वात्कर्मफलं कर्म चेश्वरसङ्कल्पविशेष इतीश्वरायत्तत्वमेव स्वाप्नस्यार्थजातस्य। पापी हि पापानुरूपं स्वप्नं पश्यति धर्मोत्तरस्तु तदनुरूपमिति महानयं मार्गस्सर्वैरप्यनतिलङ्घनीयएव। एतदप्युक्तमाप्तैरिति—अयमभिप्रायः। कस्यचित्क्वापि काले शुभप्राप्तिरितरस्य पुनरशुभप्राप्तिरिति निमित्तसामुद्रिकतत्तद्ग्रहसञ्चारादिना विद्वद्भिरभिधीयते, प्रतिबन्धादिना यदि तन्न स्यात् तत्स्वप्नेऽपि न प्राप्यत इति तैरेवाभिधीयते, अतोऽपि कर्मफलत्वं सिद्धं स्वाप्नस्य सुखदुःखादेरिति ॥ २९७ ॥

पद०—कामं काममित्यादि। कामं कामं विधातेत्यपि—'कामंकामं पुरुषो निर्मिमाणः' इति वाक्ये कामंकाममित्यत्र। णमुल् उचितः—णमुल्प्रत्यय एव युक्तः; न त्विच्छाविषयवाचकद्वितीयान्तपदत्वम्। जीवस्यासत्यसङ्कल्पस्य कर्तृत्वायोगात् भगवतस्सङ्कल्पमात्रेण स्रष्टृत्वाभिधानार्थं णमुल्प्रत्ययान्तत्वमेव कामशब्दयोरुचितमित्यर्थः। 'कामं कामं' सङ्कल्प्य सङ्कल्प्येत्यर्थः। इत्थञ्च ईशोऽनूद्यते—तथा

च सतोश्वरएवानूद्यते । सोऽयं सुप्तेषु जागर्ति—सोऽयं परमात्मा सुप्तेषु जीवेषु जागर्ति । तेन तस्यैवाश्चर्यरूपकार्यकरणे कर्तृत्वं युज्यत इत्यर्थः । 'एषु सुप्तेषु जागर्ति कामंकामं पुरुषो निर्मिमाणः' इति श्रुतेरिति भावः । इदम्—ईश्वरस्य जागरणम् । सम्परिष्वङ्गवाक्यादपि विशदम्—'प्राज्ञेनात्मना संपरिष्वक्तः' इति वाक्यादपि स्फुटम् । 'प्राज्ञेन' इति श्रवणादिति भावः । जागरेऽपि—न केवलं स्वप्न एव अपि तर्हि जागरेऽपीत्यर्थः । तत्तत्कालावसानाः—तत्तत्काले उत्पत्तिकाले एव अवसानं नाशो येषां ते तत्तत्कालावसानाः । अर्थभेदाः—पदार्थविशेषाः, निमेषोन्मेषविद्युदादयः । कतिकति—अनेके । नियताः—नित्योपलब्धाः । तत्तत्कर्मानुरूपं फलवितरणमिति—स्वप्नदर्शनं हि सुखदुःखात्मकत्वात् कर्मफलम्, कर्मचेश्वरसङ्कल्पविशेष इति ईश्वरायत्तत्वमेव स्वाप्नार्थजातस्य, पापी हि पापानुरूपं स्वप्नं पश्यति, धर्मोत्तरस्तु तदनुरूपमिति । एतदप्युक्तमाप्तैरिति—अयमभिप्रायः—कस्यचित् क्वापि काले शुभप्राप्तिरितरस्य पुनरशुभप्राप्तिरिति निमित्तसामुद्रिकतत्तद्ग्रहसञ्चारादिना विद्वद्भिरभिधीयते, प्रतिबन्धादिना यदि तन्न स्यात् तत् स्वप्नेऽपि न प्राप्यत इति तैरेवाभिधीयते अतोऽपि कर्मफलत्वं सिद्धं स्वाप्नस्य सुखदुःखादेः ॥ २९७ ॥

मायामात्रोक्तिलाभाच्छ्रुतिमुखसुगता विश्वमिथ्यात्वमाहुः
शास्त्रारम्भे तदेभिः कथितमिह ततोऽसङ्गतत्वादिदुस्स्थम् ।
मायाशब्दो न मिथ्यावचन उपचरत्वन्ततः किं ततस्स्यात्
सत्येऽस्त्रादौ प्रयोगादुचितनियमने सोऽयमाश्चर्यतार्थः ॥ २९८ ॥

इति सन्ध्याधिकरणम् ॥ ७५ ॥

चिन्ता०—अत्र 'मायामात्रन्तु कार्त्स्न्येन' इति सूत्रे मायाशब्दप्रयोगमात्रमवलम्ब्य श्रुतिमुखसुगता वेदवादच्छन्नबौद्धा मृषावादिनो विश्वमिथ्यात्वमाहुः । तन्मतं दूषयति—मायेति । तत् प्रपञ्चमिथ्यात्वं तैश्शास्त्रारम्भे कथितमिति पुनरत्राभिधाने पौनरुक्त्यमसङ्गतत्वञ्च । तेनेश्वरविचित्रसृष्टिस्स्वप्नप्रपञ्च इत्येतदेवात्रोच्यते नपुनर्विश्वमिथ्यात्वम् । मायाशब्दमात्रावलम्बनेनैव हि मृषावादिनामिदमभिधानम्, तदपि तेषामनालम्बनमित्याह—मायाशब्द इति । न हि लोके मायाशब्दो मिथ्यावचन इत्याभिधानिकाः पठन्ति । 'माया तु वयुनं ज्ञानम्' इति हि नैघण्टुका ज्ञानविशेष एव मायाशब्दं प्रयुञ्जते । 'इन्द्रो मायाभिः पुरुरूप ईयते' इत्यादावीश्वरस्सङ्कल्पविशेषैर्नानारूपोऽनुभूयत इति ह्युच्यते । आह च पराशरः—

'अनेकशक्तिरूपाणि तत्करोति जनेश्वर ।
देवतिर्यङ्मनुष्याख्याचेष्टावन्ति स्वलीलया ॥
जगतामुपकाराय न सा कर्मनिमित्तजा ॥' इति ।

लीलेति स्वसङ्कल्प एवोच्यते। स च सङ्कल्पो ज्ञानञ्च माया, अतो न मायाशब्दो मिथ्यावाची, अपित्वाश्चर्यसृष्टिवाची, यद्वा तत्सृष्टिहेतुभूतशक्तिविशेषवाची, अथवा तत्तत्सृष्टिनिदाननिमित्तभूतसङ्कल्पविशेषवाची। दृश्यन्ते हि प्रयोगाः 'देवमायेव निर्मिता' इति। मिथ्यात्वे हि कल्पितेति व्यपदिश्येत। अन्यदपि।

'तेन मायासहस्रं तत् शम्बरस्याशुगामिना।
बालस्य रक्षता देहमैकैकश्येन सूदितम्॥' इति।

अत्र हि सूदितमिति नाश्यत्वमेवोच्यते। नाशो हि परमार्थसतः प्रध्वंसः। अन्यथा बाध्यत्वमेवोच्येत। बाधो हि प्रतिपन्नोपाधौ निषेध्यत्वमिति मृषावादिनो वदन्ति। 'मायां तु प्रकृतिं विद्यात्' इति मायाशब्दस्य मिथ्यार्थत्वव्यावृत्त्यर्थं हि प्रकृतिं विद्यादित्युच्यते। अत एव 'मायामृगो हतः' इत्यत्र मारीचस्य प्रध्वंस एव वर्ण्यते। मेघनादमायादिष्वपि मन्त्रविशेषसाध्यपरमार्थसर्पाणामेव मायेति व्यवहारः। कथमन्यथा गरुडप्रभावविशेषैर्निराकरणीयत्वं युज्यते? किञ्च सर्वलोकप्रसिद्धोऽयं व्यवहारः। साममेददानदण्डमायेन्द्रजालोपेक्षा इति सप्तोपाया नीतिशास्त्रेषु निर्दिश्यन्ते। तत्र मायेन्द्रजालयोर्वैषम्यमुच्यते। मन्त्रादिशक्तिविशेषात् परमार्थसर्पादिसृष्टिर्माया। तस्मादेव मन्त्रादिशक्तिविशेषादपरमार्थगजतुरगरथपादातादिप्रदर्शनेन परकटकभञ्जनमिन्द्रजालफलमिति। एवमन्यत्राप्युदाहरणानि द्रष्टव्यानि। अथापि पुराणेषु पामरप्रयोगेषु च मिथ्याविषयेऽपि मायाशब्दः प्रयुज्यत इत्याशङ्क्योत्तरमाह—उपचरत्विति। न ह्यौपचारिकः प्रयोगश्शब्दस्य शक्तिविशेषं नियमयतीत्यर्थः। तदिदमाह—किं तत्र इति। प्रयोगप्राचुर्यमितिहासपुराणादिष्वपि प्राचुर्येण सत्यभूतएवासुरराक्षसास्त्रादावेव दृश्यत इत्याह—सत्य इति। 'मेघोदयस्सागरसंनिवृत्तिः' इत्युपक्रम्य 'विष्णोर्विचित्राः प्रभवन्ति मायाः' इति पुराणेष्वपि पठ्यते। तर्हि कृत्स्नस्यापि कार्यस्य मायाशब्दवाच्यत्वे किं नियामकमित्याशङ्क्याह—उचितनियमन इति। अयमर्थः—आश्चर्यरूपकार्यविशेषो मायेत्युच्यते इन्द्रजाले मायाशब्दाभिधानमाश्चर्यरूपत्वाविशेषादौपचारिकमिति मायेन्द्रजालयोर्विभागः। 'दैवी ह्येषा गुणमयी मम माया दुरत्यया' इति वचनं त्रिगुणस्यैव विचित्रप्रपञ्चसृष्टिहेतोर्मायाशब्दवाच्यत्वं व्यक्तमेव स्थापयति॥ २९८॥

इति सन्ध्याधिकरणम्॥ ७५॥

पद०—मायामात्रोक्तिलाभादित्यादि। श्रुतिमुखसुगताः—श्रुतिश्श्रुतिवर्णमात्रं मुखेषु येषां ते श्रुतिमुखास्तेच ते सुगताः पदार्थाङ्गीकारक्रमेण तु बौद्धा मायावादिनः। मायामात्रोक्तिलाभात्—मायामात्रपदस्य 'मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्' इति सूत्रे लाभात्। सूत्रे माया-

मात्रपदप्रयोगमात्रमवलम्ब्येत्यर्थः । विश्वमिथ्यात्वमाहुः—जगतो मिथ्यात्वमूचुः । तत्—प्रपञ्चमिथ्यात्वम् । एभिः—मायिभिः । शास्त्रारम्भे—शास्त्रारम्भभूतजिज्ञासाधिकरणादौ । कथितम्—सूत्रविवक्षितत्वेनाध्यासभाष्यादौ सूत्रव्याख्यानावसरे च प्रतिपादितम् । ततः—तस्मात् । प्रथममेवोक्तत्वादित्यर्थः । इह—अस्मिन्प्रकरणे पुनरुक्तौ । असङ्गतत्वादिदुस्स्थम्—जीवावस्थाविशेषप्रतिपादनप्रकरणे जगन्मिथ्यात्वकथनस्यासङ्गतत्वात् स एको दोषः, आदिशब्देन पुनरुक्तिः, एवमादिभिः दुस्स्थम्—अप्रतिष्ठितम् । अयुक्तमिति यावत् । मायाशब्दो मिथ्यावचनो न—मिथ्यार्थाभिधायको न भवति । लोके मायाशब्दो मिथ्यावचन इत्याभिधानिकपाठाभावादिति भावः । अन्ततः—प्रयोगप्राचुर्यान्यथासिद्धयनन्यथासिद्ध्यादियुक्तिविचारे भवतामवलम्बाभावात् यथाकथञ्चित् क्वाचित्कप्रयोगनिमित्तकथनमात्रसमये । उपचरतु—मिथ्यार्थे उपचारेण प्रवर्तताम् । नह्यौपचारिकः प्रयोगश्शब्दस्य शक्तिविशेषं नियमयतीति भावः । इदमेवोच्यते किं ततस्स्यात्—औपचारिकक्वाचित्कप्रयोगमात्रेण किं साध्यते । सत्येऽस्त्रादौ प्रयोगात्—

'तेन मायासहस्रं तच्छम्बरस्याशुगामिना ।
बालस्य रक्षता देहमैकैकश्येन सूदितम् ॥'

इत्यादौ सत्यभूतएवास्त्रादौ प्रयोगात् । मिथ्यात्वस्य प्रयोगनिमित्तत्वे तदनिर्वाहादिति भावः । सोऽयम्—मायाशब्दः । उचितानियमने—उचितं नियमनं सर्वप्रयोगविषयानुगतप्रवृत्तिनिमित्तनिष्कर्षणं तस्मिन् क्रियमाणे । आश्चर्यतार्थः—आश्चर्यता आश्चर्यकरत्वं अर्थः प्रवृत्तिनिमित्तं यस्य स आश्चर्यतार्थः । अतस्सूत्रस्थमायामात्रशब्द आश्चर्यभूतसृष्टिविशेषवाचक इति भावः ॥ २९८ ॥

इति सन्ध्याधिकरणम् ॥ ७५ ॥

---

## तदभावाधिकरणम् ॥ ७६ ॥

सूत्रम्—तदभावो नाडीषु तच्छ्रुतेरात्मनि च ॥ ३२१ ॥

स्थानं जन्तोस्सुषुप्तौ श्रुतिरनियमतो वक्ति नाड्यः पुरीतद्
हार्दं ब्रह्मेति तस्मादिह भवतु मिथो नैरपेक्ष्याद्विकल्पः ।
तन्न प्रासादखट्वाशयनवदुपकृत्यन्तरैर्योजितानां
पक्षेपक्षे विकल्पः क्रमघटितचतुर्दोषयुक्तो न युक्तः ॥ २९९ ॥

इति तदभावाधिकरणम् ॥ ७६ ॥

चिन्ता०—अत्र सङ्गतिर्भाष्ये 'इदानीं सुषुप्तिस्थानं परीक्ष्यते' इति। पूर्वं स्वप्नो निरूपितः, इदानीं सुषुप्तिस्थानमित्यर्थः। तदर्थविचारस्तु—किं नाडीपुरीतद्ब्रह्माणि जीवस्य विकल्पेन सुषुप्तिस्थानानि? उत समुच्चयेनेति। किमेषां प्रासादखट्वापर्यङ्कवत् कार्यभेदोऽस्ति नेति। 'सत आगच्छामहे' इति ब्रह्मणः प्रबोधश्रवणं ब्रह्मणः पर्यङ्कस्थानीयतामवगमयत् किं कार्यभेदमवगमयति नेति। अत्र पूर्वपक्षी मन्यते—स्थानं जन्तोरित्यादि। जन्तोस्सुषुप्तौ श्रुतिरनियमतो नाड्यः पुरीतत् ब्रह्मेति च स्थानं वक्ति वदति। तस्मात् त्रयाणामपि स्थानानां मिथो नैरपेक्ष्यात् नाड्यो वा पुरीतद्वा ब्रह्मवेति विकल्प इति पूर्वः पक्षः। उक्तमर्थं प्रतिक्षिपति—तन्नेति। प्रतिक्षेपमेव युक्त्या विवृणोति—प्रासादेति। अयमर्थः—समुच्चये कार्यभेदाभावे हि विकल्पो न्याय्यः। अत्र पुनः कार्यभेदेन समुच्चयेन योजितानां प्रासादखट्वापर्यङ्कन्यायेन नाडीपुरीतद्ब्रह्मणां विकल्पो न न्याय्य एव। स च विकल्पोऽष्टदोपदुष्ट एव। तदेवाह—पक्षेपक्ष इति। 'व्रीहिभिर्यजेत' 'यवैर्यजेत' इति विकल्पेनानुष्ठीयमानयोर्व्रीहियवयोः प्रथमं व्रीह्यनुष्ठाने यवशास्त्रविषयौ द्वौ दोषौ स्तो यवशास्त्रे प्रामाण्यत्यागोऽप्रामाण्यस्वीकारश्चेति। समनन्तरं कदाचिद् यवशास्त्रानुष्ठाने व्रीहिशास्त्रे प्रामाण्यत्यागोऽप्रामाण्यस्वीकारश्चेति द्वौ दोषौ स्तः। तस्मिन्नेव यवानुष्ठानसमये यवशास्त्रे त्यक्तप्रामाण्यस्वीकारस्स्वीकृताप्रामाण्यपरित्यागश्चेति द्वौ दोषौ भवतः। पुनः परिवृत्य व्रीहिशास्त्रानुष्ठानरूपे तृतीये प्रयोगे व्रीहिशास्त्रे त्यक्तप्रामाण्यस्वीकारः स्वीकृताप्रामाण्यपरित्यागश्चेति द्वौ दोषौ स्त इति प्रयोगत्रयादष्टदोपदुष्टत्वं द्वयोरपि शास्त्रयोश्चत्वारश्चत्वारो दोषा इति प्रथमानुष्ठानवेलायां द्वौ दोषौ, द्वितीयानुष्ठानवेलायां चत्वारस्तृतीयानुष्ठानवेलायां पुनर्द्वौ दोषाविति बुद्ध्या विभज्य धीमद्भिर्भावनीयम्। प्रकारान्तरेणाप्यष्टदोपदुष्टत्वमाहुर्विकल्पविषयमाचार्याः—व्रीह्यनुष्ठाने यवशास्त्रे प्रतिपत्त्यनुष्ठानापूर्वफलबाध इति चत्वारो दोषाः। एवं यवानुष्ठाने व्रीहिशास्त्रे प्रतिपत्त्यनुष्ठानापूर्वफलबाध इति चत्वारो दोषा इत्यष्टदोपदुष्टत्वम्। तेनायमर्थः—गत्यभावे विकल्पस्स्वीकार्यः सम्भवन्त्यां गतौ समुच्चय इति। अत्र तु प्रासादखट्वापर्यङ्कन्यायेन समुच्चयस्य सम्भवाद् विकल्पो न स्वीकार्यः। क्रमघटितचतुर्दोषयुक्त इति—प्रयोगत्रयसिद्धमष्टदोपदुष्टत्वमनुवदति। तेन प्रयोगद्वयादिनि बालकानां प्रतिभासो दुष्प्रतिभास इत्यर्थः॥ २९९॥

इति तदभावाधिकरणम्॥ ७६॥

पद०—स्थानमित्यादि। श्रुतिः। जन्तोः—प्राणिनः। सुषुप्तौ स्थानम्—आधारभूतस्थानम्। नाड्यः—हितानामनाड्यो बह्व्यः। पुरीतत्—नाडीमूलस्थानविशेषः। 'पुरीतदिति हृदयपरिवेष्टनमुच्यते' इति शङ्करभाष्ये दृश्यते। हार्दं ब्रह्म—हृदये विग्रहविशेषेण संनिहितं ब्रह्म। इति—एवम्प्रकारेण। अनियमतो वक्ति—इदमेकमेवेति स्थाननियतिं विना क्वचिन्नाडीः, क्वचित्पुरीतत्, क्वचित् ब्रह्म च सुषुप्तिस्थानत्वेन

प्रतिपादयति । तस्मात्—अनियमेन वचनात् । मिथो नैरपेक्ष्यात्—नाडीपुरीतद्ब्रह्मणां परस्परनैरपेक्ष्यात् । इह—सुषुप्तौ । विकल्पो भवतु—त्रयाणां मध्ये नाड्यो वा पुरीतद्वा ब्रह्मवेति विकल्पस्स्यात् । तन्न—तन्न युक्तम् । प्रासादखट्वाशयनवत्—यथा प्रासादः प्रथमं तदुपरि खट्वा खट्वोपरि शयनं तथेत्यर्थः । उपकृत्यन्तरैः—विलक्षणोपकारैः । योजितानाम्—समुच्चयेन सङ्गमितानां नाडीपुरीतद्ब्रह्मणाम् । पक्षेपक्षे—विकल्प्यमानपक्षयोः प्रत्येकं प्रत्येकमित्यर्थः । क्रमघटितचतुर्दोषयुक्तः—क्रमेण वारत्रयानुष्ठानपर्यायात्मकेन घटितास्सम्भाविता ये चत्वारो दोषा स्तैर्युक्तः । विकल्पः—विहितयोर्द्वयोस्तुल्यबलयोरन्यतरहानेनान्यतरस्यानुष्ठेयतया परिग्रहरूपः । न युक्तः—तथाहि 'व्रीहिभिर्यजेत' 'यवैर्यजेत' इति विकल्पेनानुष्ठीयमानयोर्व्रीहियवयोः प्रथमं व्रीह्यनुष्ठाने यवशास्त्रविषयौ द्वौ दोषौ स्तो यवशास्त्रे प्रामाण्यत्यागः, अप्रामाण्यस्वीकारश्चेति । समनन्तरं कदाचिद्यवानुष्ठाने व्रीहिशास्त्रे प्रामाण्यत्यागः अप्रामाण्यस्वीकारश्चेति द्वौ दोषौ स्तः । तस्मिन्नेव यवानुष्ठानसमये यवशास्त्रे त्यक्तप्रामाण्यस्वीकारस्स्वीकृताप्रामाण्यपरित्यागश्चेति द्वौ दोषौ भवतः । पुनः परिवृत्य व्रीह्यनुष्ठानरूपे तृतीयप्रयोगे व्रीहिशास्त्रे त्यक्तप्रामाण्यस्वीकारस्स्वीकृताप्रामाण्यपरित्यागश्चेति द्वौ दोषौ स्त इति प्रयोगत्रयादष्टदोषदुष्टत्वात् द्वयोरपि शास्त्रयोश्चत्वारश्चत्वारो दोषा इति प्रथमानुष्ठानवेलायां द्वौ दोषौ द्वितीयानुष्ठानवेलायाञ्चत्वारस्तृतीयानुष्ठाने पुनर्द्वौ दोषाविति बुद्ध्या विभज्य धीमद्भिर्भावनीयम् । प्रकारान्तरेणाप्यष्टदोषदुष्टत्वमाहुर्विकल्पविषयमाचार्याः । व्रीह्यनुष्ठाने यवशास्त्रे प्रतिपत्त्यनुष्ठानापूर्वफलबाध इति चत्वारो दोषा एवं यवानुष्ठाने व्रीहिशास्त्रे प्रतिपत्त्यनुष्ठानापूर्वफलबाध इति चत्वारो दोषा इत्यष्टदोषदुष्टत्वमिति । तेनायमर्थः—गत्यभावे विकल्पस्स्वीकार्यः सम्भवन्त्यां गतौ समुच्चय इति तान्त्रिकसम्मतम् । अत्रतु प्रासादखट्वापर्यङ्कन्यायेन समुच्चयस्य सम्भवात् विकल्पो न स्वीकार्य इति । उक्तरीत्या प्रयोगत्रयसिद्धं विकल्पस्याष्टदोषदुष्टत्वं क्रमघटितचतुर्दोषयुक्त इत्यनेनोच्यते ॥ २९९ ॥

इति तदभावाधिकरणम् ॥ ७६ ॥

---

## कर्मानुस्मृतिशब्दविध्यधिकरणम् ॥ ७७ ॥

सूत्रम्—स एव तु कर्मानुस्मृतिशब्दविधिभ्यः ॥ ३२३ ॥

मुक्तिर्ब्रह्मण्यपीतिर्जहदसुखगणा तादृशीयं सुषुप्तिः
श्रुत्यैव ख्याप्यतेऽतस्तदनु तनुभृदुद्बुध्यमानस्ततोऽन्यः ।
मैवं कर्मानुवृत्तेस्स्मरणनियमतः पूर्वएवेतिशब्दात्
मोक्षोपायादिशिष्टेस्स्वपदनुवदनात् प्राच्य एव प्रबुद्धः ॥ ३०० ॥

चिन्ता०—सङ्गतिर्भाष्ये 'किं सुपुप्त एव प्रबोधसमय उत्तिष्ठत्युतान्य इति संशये' इति। तदर्थं-विचारस्तु—किं सुपुप्तादन्यः प्रबोधसमये उत्तिष्ठति, उत स एवेति। किं सुपुप्तौ सकलोपाधिविनिर्मोको-ऽस्त्युत नेति। किं कर्मानुस्मृतिशब्दविधयस्सकलोपाधिविनिर्मोकाभावं गमयन्ति नेति। ननु सुपुप्ति-र्नाम मुक्तिप्रायैव मुक्तिः किल जहदसुखगणा दुःखसङ्घातविरहिता ब्रह्मण्यपीतिरेव प्रलय एव श्रुत्यैव ख्याप्यते तेन तदनु सुपुप्त्यनन्तरमुद्बुध्यमानस्तनुभृदन्य एवेति पूर्वपक्षानुवादः क्रियते—मुक्ति-रिति। इमं पक्षं प्रतिक्षिपति—मैवमिति। मुक्तेस्स्वापस्य विशेषं दर्शयति—कर्मानुवृत्तेरित्यादिना। पूर्वकर्मानुवृत्तेः कर्मफलस्य सुखदुःखादेर्दर्शनात् कर्मानुवृत्तिर्दृश्यत एव सुप्तोत्थितस्य। तेन स एवोत्थित इति मन्तव्यम्। अनुस्मृतिरपि—पूर्ववासरानुभूतमर्थं सुप्तोत्थितस्स्मरन्नेव दृश्यते। अन्यत्वे कथमिव स्मरणं सम्भवति? शब्दोऽपि 'त इह व्याघ्रो वा' इत्यादिभाष्योपात्तः। विधिरपि—सुपुप्तस्यैव मुक्तत्वे मोक्षार्थविधयः कथं सङ्घटेरन्? अयत्नलभ्यस्य किं यत्नेनेति। स्वपदनुवदनादिति—'नाहं खल्वयमेवम्' इत्यादिना 'नाहमत्र भोग्यं पश्यामि' 'विनाशमेवापीतो भवति' इति सुपुप्तस्यानुवदनाच्च। प्राचीन एव विनष्ट-प्रायः पुरुषः प्रबुद्धो भवतीति मन्तव्यम् ॥ ३०० ॥

पद०—मुक्तिरित्यादि। मुक्तिः—मुक्तिः किल। जहदसुखगणा—दुःखसङ्घातविरहिता। ब्रह्मणि, अपीतिः—प्रलय एव। इयं सुपुप्तिस्तादृशी—तादृशीति। श्रुत्यैव—'सता सोम्य तदा सम्पन्नो भवति स्वमपीतो भवति' इति 'परं ज्योतिरुपसम्पद्य' इति मुक्तिश्रुतिसमानार्थया श्रुत्यैव। ख्याप्यते—प्रति-पाद्यते। अतः—ब्रह्मसम्पत्तिरूपार्थसाम्यस्य श्रुत्यैव प्रतिपादनात् तथा ब्रह्मणि प्रलीनस्य पुनरावृत्त्यसम्भवात्। तदनु—सुपुप्त्यनन्तरम्। उद्बुध्यमानः, तनुभृत्—जीवः। ततोऽन्यः—पूर्वजीवाद्भिन्न एव। मैवम्—एवं न शङ्क्यम्। कर्मानुवृत्तेः—कर्मफलभूतसुखदुःखानुभवदर्शनानुमितात् पूर्वकर्मानुवृत्तिरूपहेतोः। स्मरणनियमतः—य एवाहं सुप्तस्स एव प्रबुद्धोऽस्मीति स्मरणनियमात्। नह्यन्यस्यैवं स्मरणसम्भवः। पूर्व एवेति शब्दात्—पूर्वं सुपुप्त एवायमुत्तिष्ठतीत्यर्थकात् 'त इह व्याघ्रो वा सिंहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दंशो वा मशको वा यद्यद्भवन्ति तथा भवन्ति' इति श्रौतशब्दात्। मोक्षोपायादिशिष्टेः—मोक्षार्थविधानां तदङ्गभूतनित्यनैमित्तिकादिकर्मणां तथाभूतानां शमादीनाञ्च शिष्टेर्विधेः। सुपुप्तस्यैव मुक्तत्वे मुक्तेरयत्नसाध्यत्वेन तदुपायादिविधीनां नैरर्थक्यापत्तेरिति भावः। स्वपदनुवदनात्—स्वपतस्सुपुप्तस्यैव अनुवदनात् अनुवादात्। विनाशरूपत्वेन स्वानुभूतसुपुप्तिदशाया अभोग्यत्वानुवादात्। 'नाहं खल्वयमेवं सम्प्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि विनाशमेवापीतो भवति नाहमत्र भोग्यं पश्यामि' इत्यादिश्रुतौ हि तथानूद्यते। प्रबुद्धः—सुप्तोत्थितः पुरुषः। प्राच्य एव—उक्तैर्हेतुभिस्सुपुप्त एवायं नान्य इति भावः ॥ ३०० ॥

जीवानादित्वमूचे दृषदनुकरणं क्षेप्स्यते चापवर्गे
स्वर्गाद्यर्थप्रवृत्तिश्श्रुतिनयविदिता सौगताद्याश्च भग्नाः ।
कल्पान्तेऽप्येकतोक्तिर्नियमितविषया नामरूपप्रहाणात्
भूयश्चिन्ता सुषुप्तेः प्रलयसमदशासञ्जिहासादिसिद्ध्यै ॥ २०१ ॥

इति कर्मानुस्मृति शब्दविध्यधिकरणम् ॥ ७७ ॥

चिन्ता०—अत्र सुषुप्तस्यैव प्रबोधसमये पुनरुत्थानमिति किमर्थं स्थाप्यते विशेषप्रयोजनाभावादित्याशङ्कयात्यन्तोपयुक्तं प्रयोजनविशेषमाह—जीवानादित्वमित्यादिना पद्येन । जीवानामनादित्वसिद्ध्यर्थमिदं सूत्रं चेत् तत्रोक्तमेव 'न कर्माविभागादिति चेन्नानादित्वात् ।' इत्यादिना । मोक्षे दृषदनुकरणक्षेपणं मूढत्वक्षेपणमनेन सूत्रेण क्रियते चेत् तदप्युत्तरत्र करिष्यते । स्थायित्वोपपादनेन जीवानां स्वर्गाद्यर्थप्रवृत्तिः क्रियते चेत् सापि श्रुतिनयविदिता कृत्स्नस्यापि मीमांसाशास्त्रस्य स्थायित्वमन्तरेणानुपपत्तेस्स्वर्गाद्यर्थप्रवृत्तिरपि श्रुत्या तदनुग्राहकन्यायेन च पूर्वमेव विदिता । आत्मस्थैर्योपपादनेन क्षणभङ्गभङ्गश्चेत् सोऽपि सौगताधिकरणादिषु सिद्धः । जीवस्य सुषुप्तावीश्वरैकत्वनिराकरणार्थमिदमधिकरणं चेत् तस्य कल्पान्तेऽप्येकत्वमपि नामरूपादिप्रहाणमात्रान्न पुनस्स्वरूपैक्यादिति तत्रतत्रोक्तम् । तेन साप्युक्तिर्नियमितविषया । अतो भूयश्चिन्ता सुषुप्तेः न कर्तव्येति कस्यचिद् बालप्रायस्य चोद्यमनूदितं परिहरति—प्रलयसमदशासञ्जिहासादिसिद्ध्या इति । नैयायिकदुर्दुरूढाः केचित् पाषाणप्रायमेव मोक्षं वदन्ति । तर्हि 'नाहमत्र भोग्यं पश्यामि' 'विनाशमेवापीतो भवति' इति निन्दिता सुषुप्तिरपि मुक्तिस्स्यात्, नेयं मुक्तिरिति मनीषिभिः प्रार्थ्यते । एवं पाषाणवन्मुक्तिरिति वैराग्यपादे तन्मुक्तिनिन्दया तज्जिहासाविशेषोऽपि सिध्यति तदर्थमयं प्रसङ्ग इति न नैरर्थक्यमित्यर्थः ॥ २०१ ॥

इति कर्मानुस्मृति शब्दविध्यधिकरणम् ॥ ७७ ॥

पद०—जीवानादित्वमित्यादि । जीवानादित्वम्—जीवस्य नित्यत्वम् । ऊचे—'नात्मा श्रुतेर्नित्यत्वाच्च ताभ्यः, न कर्माविभागादिति चेन्नानादित्वात्' इति सूत्रेणोक्तमेव । अपवर्गे—मोक्षदशायाम् । दृषदनुकरणञ्च—पाषाणतुल्यत्वञ्च । आत्मा विध्वस्ताखिलविशेषगुणः पाषाणवन्मुक्तो तिष्ठतीति काणादकल्पनमित्यर्थः । क्षेप्स्यते—चतुर्थाध्यायचतुर्थपादे 'ब्राह्मेण जैमिनिः' इत्यादिसूत्रैर्निरसिष्यत इत्यर्थः । स्वर्गाद्यर्थप्रवृत्तिः—जीवानां स्थायित्वोपपादनेन कालान्तरभाविस्वर्गादिसाधनभूतज्योतिष्टोमादिकर्मप्रवृत्तिस्तु । श्रुतिनयविदिता—कालान्तरानुभाव्यस्वर्गादिफलार्थं ज्योतिष्टोमादिकर्म विदधानया श्रुत्या पूर्वमीमांसासिद्धैरात्मनित्यत्वमन्तरेणानुपपद्यमानैः कृत्स्नैरपि न्यायैर्व्यक्तमवगमिता ।

सौगताद्याश्च—यत् सत् तत्क्षणिकमिति सर्वक्षणिकत्ववादेनात्मनोऽपि क्षणभङ्गित्ववादिनो बौद्धाद्याश्च। भग्नाः—'अनुस्मृतेश्च' इत्यादिबौद्धनिराकरणसूत्रैर्जीवस्य स्थायित्वोपपादकैः पूर्वमेव प्रतिक्षिप्ताः। कल्पान्तेऽपि—प्रलयदशायामपि। एकतोक्तिः—'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' इत्यादि-श्रुत्या प्रतीता ईश्वरेणैकीभावोक्तिः। नामरूपमहाणात्—नामरूपप्रहाणमात्रात् नपुनस्स्वरूपैक्यात्। नियमितविषया—पृथग्व्यवहारानर्हसंश्लेषमात्रपरतया निदर्शितविषया। तत्रतत्रोक्तिभिरिति शेषः। सुषुप्तेः, भूयः—अत्र प्रकरणे। चिन्ता–विचारः। प्रलयसमदशासज्जिहासादिसिद्ध्यै—काणाद-कल्पिता मुक्तौ जीवस्य या प्रलयसमदशा तस्यां सज्जिहासादिर्हेयतया निन्द्यतादिबुद्धिस्तत्सिद्ध्यै। कृतेति शेषः। इदं चिन्तामणिकृतं तात्पर्यवर्णनम्। वस्तुतस्तु अनुदिनं जीवस्य या धर्मभूतज्ञानातिसङ्कोचेन प्रलयतुल्या सुषुप्तिरूपा दुर्दशा तस्यां दृढतरहेयतानिश्चयसिद्ध्यर्थमिति सुगमम्। पूर्वोत्तरयोस्स्वप्नमुग्ध्यो रिवास्यामपि दशायां दोषप्रदर्शनार्थमेवैतच्चिन्तनं न त्वर्थान्तरार्थमिति श्लोकहृदयम्। 'स एव तु' इति जीवस्थायित्वसाधनप्रवृत्त्या तत्फलमार्गणम्। तस्य सूत्रस्य प्रलयसाम्येन सुषुप्तेर्हेयत्वोपपादनमेव फलं न त्वर्थान्तरमिति समाधानमिति भाति ॥ ३०१ ॥

इति कर्मानुस्मृति शब्दविध्यधिकरणम् ॥ ७७ ॥

---

## मुग्धाधिकरणम् ॥ ७८ ॥

सूत्रम्—मुग्धेऽर्धसम्पत्तिः परिशेषात् ॥ ३२४ ॥

जाग्रत्स्वप्नौ न बाह्यावगमविरहितौ श्वासपूर्णा सुषुप्तिः
तस्मान्मुग्धिर्मृतिस्स्यात् प्रशमितकरणप्राणवर्गेति चेन्न।
मृत्यादेर्हेतुभेदात्स्थितिस्मृतिविशयादुत्थितेरानियत्यात्
मर्तुं प्रक्रम्य मध्ये विरमति विधिनेत्यत्र तुर्यार्धभावः ॥ ३०२ ॥

इति मुग्धाधिकरणम् ॥ ७८ ॥

चिन्ता०—जाग्रत्स्वप्नसुषुप्तिरूपावस्थाविशेषान् परिशोध्यानन्तरं मूर्च्छारूपा सुषुप्तितुल्यावस्था विचार्यत इतिसङ्गतिः। जाग्रत्स्वप्नयोः प्रज्ञायुक्तत्वात् सुषुप्तिमूर्च्छयोः प्रज्ञाविलोपरूपत्वात् तयोर्मिथस्सङ्गतिः। तदर्थविचारस्तु—किं मूर्च्छा जाग्रत्स्वप्नसुषुप्त्यादीनामन्यतमावस्था, उतावस्थान्तरमिति। किं लक्षणतो भेदो व्यवस्थापयितुं शक्यते नेति। किं सूक्ष्मप्राणसम्बन्धो मूर्च्छेति लक्षणं भवति नेति। अत्र पूर्वप्रक्षी प्राह जाग्र-

स्वप्नसुषुप्तिमरणभेदेन चत्वारो ह्यवस्थाविशेषा लोके प्रसिद्धाः। तत्र जाग्रत्स्वप्नौ बाह्यज्ञानविरहितौ न भवतः सुषुप्तिश्च श्वासपूर्णत्वान्न मूर्च्छा अतो मूर्च्छा मरणमेव प्रशमितकरणप्राणवर्गत्वादिति। तदिदमनुवदति—जाग्रदिति। तत्प्रतिक्षिपति—नेति। मूर्च्छामरणयोर्भेदे कारणभेदमेव तावत् प्रमाणयति—मृत्यादेरिति। अभिघातादिमात्रान्मूर्च्छा शिरश्छेदादेर्मरणमिति मूर्च्छामरणकारणयोर्भेदादित्येको हेतुः। हेत्वन्तरमप्याह—स्थितीति। मूर्च्छिते पर्यन्तस्थिताः स्थितो वा मृतो वेति विशेरते। स च संशयो मूर्च्छामरणयोर्वैषम्यमावेदयति। तृतीयमपि हेतुमाह—उत्थितेरिति। मूर्च्छितेष्वेव कश्चिन्मन्त्रौषधादिविभवात् पुनरुत्तिष्ठते। मृतस्तु गच्छत्येव एवमुत्थानस्यानियतत्वादित्यर्थः। तर्हि मूर्च्छेति कोऽयमवस्थाविशेष इत्याशङ्क्याह—मर्तुमिति। मर्तुं प्रक्रम्य विधिना मध्ये विरमतीति मरणस्यार्धसम्पत्तिरूपावस्थाविशेषो मूर्च्छेतिपरिकल्पनीयमिति। अर्धमरणं मूर्च्छेत्यर्थः॥ ३०२॥

इति मुग्धाधिकरणम्॥ ७८॥

पद०—जाग्रत्स्वप्नावित्यादि। जाग्रत्स्वप्नौ बाह्यावगमविरहितौ न—बाह्यज्ञानविरहितौ न भवतः। मुग्धिस्तु बाह्यज्ञानरहिता अतस्तौ न मुग्धिरितिभावः। सुषुप्तिश्श्वासपूर्णा—इयं तु सूक्ष्मतमश्वासा अतो न सुषुप्तिर्मुग्धिरित्यर्थः। ततः किं तर्हि तस्मात्—जाग्रत्स्वप्नसुषुप्तीनां मुग्धित्वासम्भवात्। मुग्धिः:—मूर्च्छा। प्रशमितकरणप्राणवर्गा—प्रशमितः स्वस्वकार्यासामर्थ्यापादनेन सूक्ष्मदशामापादितः करणवर्गश्चक्षुरादीन्द्रियगणः प्राणवर्गः प्राणापानादिदशमुख्यप्राणगणश्च यया सा। हेतुगर्भविशेषणम्। प्रशमितकरणप्राणवर्गत्वादित्यर्थः। मृतिस्स्यात्—मरणमेवास्तु। प्रशमितकरणप्राणवर्गत्वस्य मृतावेव सम्भवादिति भावः। इतिचेन्न—इति शङ्क्यते चेत्तन्न युक्तम्। मृत्यादेर्हेतुभेदात्—मरणमूर्च्छयोर्विसजातीयहेतुजन्यत्वात्। अभिघातादिमात्रात् मूर्छा, शिरश्छेदादेर्मरणम्। स्थितिमृतिविशयात्—मूर्च्छितं पार्श्वतस्स्थिताः स्थितो वा मृतो वेति विशेरते। स च संशयो मूर्च्छामरणयोर्वैलक्षण्यमावेदयति। उत्थितेरानियत्यात्—मूर्च्छितेष्वेव कश्चित् मन्त्रौषधादिना पुनरुत्तिष्ठति, मृतस्तु गच्छत्येव, एवमुत्थानस्यानियतत्वादित्यर्थः। तर्हि मूर्च्छेति कोऽयमवस्थाविशेष इत्याशङ्क्याह—मर्तुमिति। मर्तुं प्रक्रम्य—मरणायोपक्रम्य। विधिना—अदृष्टविशेषेण। मध्ये—मरणहेतुव्यापारमध्ये। विरमति—मरणहेतुभूतव्यापारान्निवर्तते। इति—एवं तत्त्वस्थित्या। अत्र—मूर्च्छायाम्। तुर्यार्धभावः—तुर्यं मरणं जाग्रत्स्वप्नसुषुप्तिमरणानीत्यवस्थासु चतसृषु मरणस्य चतुर्थत्वात्। तस्य अर्धभावोऽर्धत्वं अर्धमरणत्वमित्यर्थः। कल्पनीय इति शेषः॥ ३०२॥

इति मुग्धाधिकरणम्॥ ७८॥

अस्मिन्पादे अर्थभेदेन पूर्वोत्तरपेटिकाविभागप्रदर्शनम् ।

जन्तूनां जागरादिस्थितिषु भवति यद्वैशसं दर्शितं तत्
तत्तत्स्थानेषु योगेऽप्यनघशुभगुणं ब्रह्म संशोध्यतेऽत्र ।
संसर्गैक्यादिमूलान् परिहरति ततो दोषवर्गानुभाभ्यां
हीनत्वौदार्यहानी परमपनयते नीतियुग्मेन नेतुः ॥ ३०३ ॥

चिन्ता०—अत्राष्टानामप्यधिकरणानामन्योन्यार्थभेदोपपादनात् पेटिकाभेदमुत्तरपेटिकायामवान्तरपेटिकाभेदञ्चाह—जन्तूनामिति । एवं चतुर्भिरधिकरणैर्जन्तूनां जाग्रत्स्वप्नसुषुप्त्याद्यवस्थासु यद्वैशसं तद्दर्शितम् । अतः परं तु सर्वस्थानयोगेऽपि स्वयमनघशुभगुणं ब्रह्म संशोध्यत इति पेटिकाविभागः । उत्तरपेटिकायामपि पूर्वभागस्योत्तरभागस्य चार्थभेदेन वैषम्यमाह—संसर्गेत्यादिना । उभाभ्यामधिकरणाभ्यां दोषवत्संसर्गमूलांस्तत्तादात्म्याभिधानमूलांश्च दोषान् परिहरति । अथोत्तराधिकरणद्वयार्थमाह—हीनत्वेति । सर्वस्मात्परत्वाभावे निरतिशयौदार्याभावे चोपास्यत्वासम्भवात् सर्वस्मात्परत्वहानिं निरतिशयौदार्यरहितत्वं चोत्तराभ्यामधिकरणाभ्यां निराकरोतीति मिथो विभागः ॥ ३०३ ॥

पद०—जन्तूनामित्यादि । जन्तूनाम्—प्राणिनाम् । जागरादिस्थितिषु—जाग्रत्स्वप्नसुषुप्तिमूर्च्छारूपास्ववस्थासु । यत् वैशसं भवति—यद्दुःखं सम्भवति । तद्दर्शितम्—एवं चतुर्भिरधिकरणैस्तत्प्रतिपादितम् । अत्र—अतःपरमधिकरणचतुष्टयात्मिकायां पेटिकायाम् । तत्तत्स्थानेषु योगेऽपि—हेयतमेषु सर्वेष्वपि स्थानेषु अन्तर्यामितया सम्बन्धेऽपि । अनघशुभगुणम्—निर्दोषं कल्याणगुणयुक्तम् । ब्रह्म संशोध्यते—शङ्कितदोषपरिहारेण गुणप्रतिपादनेन च स्पष्टमुपपाद्यते । अस्यैवार्थस्य विवरणमुत्तरार्धम् । ततः—अस्मिन्पादे प्रथममधिकरणचतुष्टयेन जीवदोषकथनानन्तरम् । उभाभ्याम्—उपरितनाभ्यां 'न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि । उभयव्यपदेशात्त्वहिकुण्डलवत्' इत्यादिरूपाभ्यामुभाभ्यामधिकरणाभ्याम् । संसर्गैक्यादिमूलान्—दोषवत्संसर्गश्रौतैक्याभिधानमूलकान् । दोषवर्गान् परिहरति—श्रुतिप्रतिपन्नब्रह्मस्वभावप्रतिपादनेन निराकरोति । परम्—ततः परम् । नीतियुग्मेन—अधिकरणद्वयेन । नेतुः—परमात्मनः । हीनत्वौदार्यहानी—सर्वस्मात्परत्वाभावं निरतिशयौदार्याभावञ्चेत्यर्थः । अपनयते—निराकरोति । तथाचास्मिन्पादे प्रथममधिकरणचतुष्टयात्मिका एका पेटिका, ततः परमधिकरणचतुष्टयात्मिका अपरा पेटिकेति विभागः । तत्र प्रथमपेटिकया जीवदोषख्यापनम्, द्वितीयया परमात्मनो निर्दोषत्वकल्याणगुणाकरत्वरूपोभयलिङ्गसमर्थनमिति वेदितव्यम् ॥ ३०३ ॥

## उभयलिङ्गाधिकरणम् ॥ ७९ ॥

सूत्रम्—न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ॥ ३२५ ॥

नैर्गुण्यं निर्गुणोक्तेर्गुणवचनमिहाविद्यधर्मार्थवादो
नैर्दोष्यं वस्तुवृत्त्या तदितरदखिलं स्वाप्नभोगादितुल्यम् ।
इत्थं जीवेशभूमापहरणकुहनावादमोमुह्यमानान्
क्षेप्तुं नस्थानतोऽपीत्यधिकरणमथारभ्यतेऽनेकभृङ्गम् ॥ ३०४ ॥

चिन्ता०—पूर्वाधिकरणे संसरन्तं मरणावस्थाधीनं जीवं वैराग्यातिशयसिद्ध्यर्थमुक्त्वा प्राप्यतृष्णाविशेषसिद्ध्यर्थं भगवत उभयलिङ्गत्वमुच्यत इति सङ्गतिः। तदिदं व्यक्तमेव दर्शयति—नैर्गुण्यमिति । अत्र मृषावादिनां पक्षनुद्य विशेषतस्तत्प्रतिक्षेपार्थमेवेदमधिकरणं प्रवृत्तम्। ते खल्वेवमाहुः—'निर्गुणं निरञ्जनम्' इति ब्रह्मणो नैर्गुण्यमेव प्रामाणिकम्। तर्हि 'सत्यकामस्सत्यसङ्कल्पः' इत्यादि गुणवचनस्य का गतिरित्याशङ्क्याह—गुणवचनमिति । अविद्यापरिकल्पितधर्मार्थवादमात्रमेव गुणवचनं प्रलोभनार्थमित्यर्थः । तर्हि गुणाभावे किं ब्रह्मणो दोषवत्त्वमेव स्वाभाविकमिति भवतोच्यत इत्याशङ्क्याह—नैर्दोष्यमिति। अयमर्थः—ब्रह्मणि नैर्गुण्यं नैर्दोष्यं चोभयमपि स्वाभाविकमिति। तदिदमाह—वस्तुवृत्त्येति । तर्हि श्रुतिपुराणादिसिद्धं ब्रह्मगुणविग्रहादिकं संसारसम्बन्धश्च सर्वलोकप्रसिद्धः किं भवेदित्याशङ्क्याह—तदितरदिति। उक्तमेतदेकदेशमात्रमस्माभिः । इत्थमेवं जीवेश्वरैश्वर्यापहरणप्रवृत्तकुहनावादमोमुह्यमानान् निराकर्तुं 'न स्थानतोपि' इत्यधिकरणमारभ्यते । अनेकभृङ्गम्—बहुप्रकारमित्यर्थः ॥ ३०४ ॥

पद०—नैर्गुण्यमित्यादि। इह—ब्रह्मणि। निर्गुणोक्तेः—'निर्गुणं निरञ्जनम्' इति श्रुतिवचनात्। नैर्गुण्यम्—सर्वगुणशून्यत्वमेव प्रामाणिकमित्यर्थः । गुणवचनम्—'सत्यकामस्सत्यसङ्कल्पः' इत्यादिरूपं भगवद्गुणप्रतिपादकं श्रुतिवचनजातं तु । आविद्यधर्मार्थवादः—अविद्यापरिकल्पितधर्मप्रशंसावादमात्रम्। नतु तत्र वास्तवार्थत्वलेश इति भावः । वस्तुवृत्त्या नैर्दोष्यम्—स्वरूपेणावस्थितस्योपाधिवैशिष्ट्येन जीवभावमनुभवतश्च ब्रह्मणो वस्तुस्थितिक्रमेण दोषशून्यत्वमेव प्रामाणिकम् । तदितरदखिलम्—गुणविग्रहादिकं संसारसम्बन्धश्चेत्येवमादि निखिलमपि । स्वाप्नभोगादितुल्यम्—स्वप्नदशासम्भावितराज्याभिषेकशिरश्छेदव्याघ्रादिभयवत् मिथ्याभूतमेव । ब्रह्मणो निर्गुणत्वं निर्दोषत्वञ्च वास्तवम्, तदितरद्गुणविग्रहादिकं सर्वमत्याविद्यकमवास्तवम्, ब्रह्माभिन्नस्य जीवस्य च संसारो मिथ्या, नैर्दोष्यमेव वस्तुतत्त्वमिति भावः। इत्थम्—उक्तदिशा। जीवेशभूमापहरणकुहनावादमोमुह्यमानान्—जीवस्य भूमा संसारभयाक्रान्तत्वतन्निवर्तनौपयिकभगवदुपासनतदुपयुक्तज्ञानचिकीर्षाद्याश्रयत्वभगवच्छेषत्वपारतन्त्र्यतत्प्रसादलभ्यसकलपुरुषार्थभाक्त्वनिरतिशयज्ञानविकासनिरन्तरभगवदनुभवकैङ्कर्यादिरूपः, ईशभूमा तु जगत्कारणत्वसर्वज्ञत्वसर्वशक्तित्वाद्यनन्तकल्याणगुणाप्राकृतस्वासाधारणदिव्यमङ्गलविग्रहविभूत्यादिरूपः, तयोरपहरणेन

तच्चौर्याय प्रवृत्तेन कुहनावादेन वञ्चनार्थेन ब्रह्मतत्त्ववादेन मोमुह्यमानान् मोहं प्राप्तान् स्वमोहानुगुण्येन प्रलपतो मृषावादिनः । क्षेप्तुम्—प्रतिक्षेप्तुम् । अनेकभृङ्गम्—बहुप्रकारम् । नस्थानतोऽपीत्य-धिकरणम्—'न स्थानतोऽपि' इत्याद्यधिकरणम् । अथ—जीवदोषप्रदर्शकप्रथमपेटिकासमाप्त्यनन्तरम् । आरभ्यते—विरचितम् । सूत्रकारैरिति शेषः ॥ ३०४ ॥

हेयं वस्तु स्वतो यत् स्थितिरिह हि भवेद् दुःखकृत्स्वेच्छयापि
त्याज्यत्वं नान्यथा स्यादिति न निरुपधेर्हेयभावस्य हानेः ।
नित्यस्वातन्त्र्यभाजो भविन इव दशाभेदतो नाप्यवद्यं
श्रुत्यैवैकत्र देहे परतदितरयोश्शुद्ध्यशुद्धी ह्यधीते ॥ ३०५ ॥

चिन्ता०—'दोषदर्शनात्' इत्यादिना भाष्ये सङ्गतिर्व्यक्ता । प्रदर्शिता चास्माभिः पूर्वमेव । तदर्थ-विचारस्तु—सुषुप्त्युत्क्रान्त्यादिस्थानेषु स्थितस्य जीवस्य ये भवन्त्यपुरुषार्थाः, ते तदन्तर्यामिणस्तच्छरीरस्यापि प्रसज्यन्ते नेति । किं जीवस्यापुरुषार्थसम्बन्धश्शरीरसम्बन्धनिबन्धनः, उत कर्मसम्बन्धनिबन्धन इति । किं सशरीरस्यापि ब्रह्मण उभयलिङ्गत्वं श्रुतिप्रतिपन्नं कर्मसम्बन्धस्यैवापुरुषार्थत्वहेतुतामवगमयति नेति । किं श्रुतिप्रतिपन्नमुभयलिङ्गं तात्त्विकम् ? उतातात्त्विकम् ? इति । किं 'अथात आदेशो नेतिनेति' इति प्रकृतः सर्वविशेषनिषेधः ? उत प्रकृतैतावत्त्वनिषेधः ? इति । किं सर्वविशेषनिषेधे वाक्योपक्रमोपसंहारसामञ्जस्यम् ? उत प्रकृतैतावत्त्वनिषेधे ? इति । अत्र पूर्वपक्षाभिप्रायं विशेषतः प्रदर्श्य सिद्धान्ताभिप्रायेण निराकरणमपि दर्शयति—हेयमिति । इत्थं किल पूर्वपक्षी मन्यते—पूयशोणितादिमज्जनं हि यथा राजकिङ्करस्य हेयं तथा राज्ञोऽपि हेयमेव अन्यथा तस्य हेयत्वमेव न स्यात् । तथा चेश्वरस्यापि जीववत् देहावस्थानं दुःखकारणमेव स्यात् । ननु जीवः कर्मपरतन्त्रो देहे वर्तते, ईश्वरः स्वेच्छयैव, अतो न दोष इत्याशङ्क्य-परिहरति—स्वेच्छयेति । स्वेच्छयापि पूयशोणितादिमज्जनं दुःखकारणमेव दृश्यते । अपर्यनुयोज्यत्वाद् वस्तुस्वभावानामिति । उक्तमर्थं प्रतिक्षिपति—नेति । तत्र हेतुमाह—निरुपधेरिति । अयमर्थः—लोके हि त्याज्योपादेयभाव उपाधिभेदेनान्यथाक्रियते । यथा प्रातरनुकूलमौष्ण्यं मध्याह्ने प्रतिकूलमेव । शैत्यं च मध्याह्ने-ऽनुकूलं प्रातः प्रतिकूलमेव, एवं पुरुषभेदेनापि दृश्यते । पशूनामनुकूलं तृणादिकं मनुष्याणां प्रतिकूलम् । एवमवस्थाभेदेनापि क्षुधितस्यानुकूलमन्नं मृष्टमेव भुक्तवतः प्रतिकूलमेव । तदिदमुक्तं भगवता पराशरेण

'तदेव प्रीतये भूत्वा पुनर्दुःखाय जायते ।
तदेव कोपाय यतः प्रसादाय च जायते ॥
तस्माद् दुःखात्मकं नास्ति नच किञ्चित् सुखात्मकम् ॥' इति ।

प्रतिपत्तृभेदेनापि सुखदुःखविभागो दृश्यते । एकस्मिन्नेव बालके तव पुत्रोऽयमित्युक्ते सुखम्, शत्रुपुत्र इत्युक्ते दुःखम् । एवं तत्तदुपाधिभेदात् सुखदुःखविपरिणामस्सर्वलोकसाक्षिकः सुप्रसिद्धः एवं पुण्यपापात्मकर्मोपाधिवशाज्जीवानां सुखदुःखविभागो नापह्नोतुं शक्यते । यथा लोके वातपित्तश्लेष्मवतामनुकूलप्रतिकूलात्मकवस्तुवैषम्यमायुर्वेदादिषु पठ्यते तथैवोपलभ्यते च । तस्मान्नेश्वरस्य शरीरेष्ववस्थानात् कर्मसम्बन्धकथनं तत्प्रयुक्तसुखदुःखसम्बन्धकथनं वा योयुज्यते । नन्वीश्वरस्यापि शरीरसम्बन्धादेव कर्मसम्बन्धोऽपि स्यादित्याशङ्क्य परिहरति—नित्येति । अत्रायं विकल्पः—किमीश्वरशब्देन सर्वस्वामी विश्वजगन्नियन्तोच्यते किं वा राजादिमात्रम् । उत्तरत्र चेत् सिद्धसाधनमेव राजादीनामपि सुखदुःखानुभवस्य विभाव्यमानत्वात् । पूर्वत्र नेश्वरत्वमेव सिध्यति सुखदुःखादिकमनुभवति, ईश्वरश्चेति व्याघातात् । कर्मफलं हि सुखदुःखानुभवः । कर्म चेश्वराज्ञापरिपालनतदुल्लङ्घनजनितो गुणविशेष एव । अथवाऽध्यात्मशास्त्रमर्यादया शासितुरीश्वरस्य निग्रहानुग्रहसङ्कल्पः । तेनेश्वरस्य कथं सुखदुःखानुभवप्रसङ्गः ? यदि वदसि मोहादीश्वरस्यापि कश्चन प्रशास्ता अस्तीति तदा 'न तत्समश्चाभ्यधिकश्च दृश्यते' इत्यादिश्रुतिरेव भवतः कपोलताडनं करोतु । ताडितोऽपि यदि प्रलपसि बहिष्कुर्वन्तु भवन्तं ब्रह्मवादिनः । तस्मादीश्वरस्याज्ञापकेश्वरान्तराभावान्न शास्त्रवश्यत्वम् । शास्त्रवश्यत्वाभावाच्च कर्मानुबन्धः । कर्मसम्बन्धाभावाच्च न शरीरसम्बन्धप्रयुक्तसुखदुःखानुभवप्रसङ्ग इति मानामानविवेककोविदानां महानुभावानां मार्गः । अयमर्थः श्रुत्यैव व्यक्तमेव विभज्य दर्शित इत्याह—श्रुत्यैवेति । 'द्वा सुपर्णा' इति हि श्रुतिरेकस्मिन्देहे वर्तमानयोर्जीवपरमात्मनोरेकस्य कर्मफलोपभोगमितरस्य कर्मफलभोगाभावेननिरतिशयदीप्तियोगञ्चाह । 'द्वा सुपर्णा' इत्यत्र जीवपरमात्मानावेव विभज्योक्ताविति प्रागेव प्रसाधितम् । पैङ्गिश्रुतिविरोधाभावोऽपि तत्रैव विशदं प्रकाशित इत्युपरम्यतेऽस्माभिः ॥ २०५ ॥

पद०—हेयमित्यादि । यत् वस्तु स्वतो हेयम्- स्वरूपेण त्याज्यं निन्द्यम् । इह—एतस्मिन्वस्तुनि । स्वेच्छयापि स्थितिः—परनियोजनेन वा स्वेच्छयैव वा अवस्थानम् । दुःखकृद्भवेद्धि—दुःखप्रदं भवेदिति सर्वलोकसिद्धं हि । अन्यथा—तत्रावस्थानस्य स्वेच्छाकृतस्य दुःखकृत्त्वाभावे । त्याज्यत्वं न स्यात्—तस्य हेयत्वमेव न भवेत् । पूयशोणितादिमज्जनं हि यथा राजकिङ्करस्य हेयम्, तथा राज्ञोऽपि तद्धेयमेव, तथा चेश्वरस्यापि जीववत् देहावस्थानं दुःखकारणमेव स्यात् । इति न—एवं न शङ्क्यम् । निरुपधेर्हेयभावस्य हानेः—निरुपाधिकहेयत्वस्य कस्मिन्नपि वस्तुन्यभावात् ।

'तदेव प्रीतये भूत्वा पुनर्दुःखाय जायते ।
तदेव कोपाय यतः प्रसादाय च जायते ॥
तस्माद्दुःखात्मकं नास्ति नच किञ्चित् सुखात्मकम् ॥'

इति वचनन्यायेन लोके वस्तुषूपलभ्यमानस्यानुकूल्यस्य प्रातिकूल्यस्य च कर्मोपाधिमूलकत्वात् ईश्वरे तदभावात् न तस्य देहसम्बन्धमात्रेण दुःखसम्भव इति भावः । **नित्यस्वातन्त्र्यभाजः**—स्वशासित्रन्तरशून्यत्वेन कदाचिदपि पारतन्त्र्यशून्यस्य परमात्मनः कर्मफलानुभवहेतुभूतपारतन्त्र्यसापराधत्वरूपस्वरूपयोग्यतासहकारियोग्यताशून्यस्येत्यर्थः । **भविन इव**—संसारिणो जीवस्येव । **दशाभेदतोऽप्यवद्यं न**—अवस्थाभेदेनापि सुखदुःखानुभवहेतुभूतकर्मसम्बन्धो न भवति । यथा जीवस्य मुक्तिदशायां कर्मसम्बन्धशून्यत्वेऽपि बन्धदशायां कर्मसम्बन्धोऽस्ति तथाऽवस्थाभेदेनापीश्वरस्य न कर्मसम्बन्धप्रयुक्तावद्यसम्भवः । नित्यस्वतन्त्रत्वेन कदाचिदपि योग्यताद्वयशून्यत्वादिति भावः । **एकत्र देहे**—एकस्मिन् शरीरे । वर्तमानयोरिति शेषः, **परतदितरयोः**—परमात्मजीवात्मनोः । **शुद्ध्यशुद्धी**—कर्मफलाननुभवसिद्धनिरतिशयदीप्तियोग कर्मफलानुभवरूपे शुद्ध्यशुद्धी । **श्रुत्यैव**—

'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति ॥'

इति श्रुत्यैवेत्यर्थः । **अधीते हि**—स्पष्टतया प्रतिपादिते हि अतो देहान्तस्स्थितिमात्रेण नेश्वरस्य कर्ममूलकसुखदुःखानुभव इति भावः ॥ २०५ ॥

**ब्रह्मक्षत्रादिदेहेष्वणुरिव विभुरप्यात्मभावेन तिष्ठन्**
**तत्तच्छब्दाभिलप्यस्तदिह स न कथं तत्तदादेशवश्यः ।**
**मैवं न ज्ञाप्यतेऽसावविदितविरहाच्छासितृत्वान्न शास्यः**
**किञ्चिज्ज्ञो ह्यन्यतन्त्रो जगति हितविदा बोध्यते प्रेर्यते च ॥ २०६ ॥**

चिन्ता०—अत्र कश्चिदुक्तमर्थतत्त्वमान्ध्यादतिगर्वाच्चाजानन् पुनश्चोदयति । 'तथाहि कणभक्षादिपक्षे ईश्वरस्य धर्माधर्मयोः प्रेरकत्वेन शरीरान्तरवस्थानेऽपि शरीरित्वाभावान्न ब्राह्मणादिशब्दवाच्यत्वम् । तेन 'ब्राह्मणो यजेत' 'क्षत्रियो यजेत' इत्यादिवाक्येषु विधिगोचरत्वप्रसङ्ग एव नास्ति । युष्माकं सिद्धान्ते पुनर्ब्रह्मक्षत्रादिशब्दानां प्राधान्येनेश्वरवाचकत्वादीश्वर एव विधिगोचरतामश्नुते । कुर्यान्नकुर्यादिति नियाम्यत्वादीश्वरत्वमेव भज्येत' इति । तदिदमनुवदति—ब्रह्मक्षत्रादीति । अयमत्र शब्दार्थः—ब्रह्मक्षत्रादिदेहेष्वणु जीव इव विभुरीश्वरोऽप्यात्मभावेन शरीरप्रेरकत्वेन तिष्ठन् तत्तच्छब्दाभिलप्यो भवदनुमत्या ब्राह्मणादिशब्दवाच्य एव भवति । तेन स ईश्वरो ब्राह्मणत्वाद्युपाधिविशिष्टस्तत्तद्विधिवश्यः कथं न भवति?—ईश्वरत्वान्न भवतीति चेत् नहि साक्षात् श्रुतिप्रतिपन्नेऽर्थे नास्तिकत्वमङ्गीकर्तव्यम् । तस्माद्

विधिनिषेधशास्त्रगोचरस्येश्वरस्य सर्वदोपाकरत्वमिति । तमिममन्धप्रलापं निराकरोति—मैवमिति । तदेव विवृणोति—न ज्ञाप्यत इत्यादिना । अयमत्र विकल्पः—किमज्ञातज्ञापनमप्रवृत्तप्रवर्तनं वा विधिरिति भवतोच्यते ? न तावदज्ञातज्ञापनमीश्वरस्य सम्भवतीति तदाह—न ज्ञाप्यतेऽसाविति । तत्र हेतुमाह—अविदितविरहादिति । सर्वज्ञत्वादित्यर्थः । नहि दिवाकरस्य दीपेन कश्चिदुपकारः क्रियते । अप्रवृत्त-प्रवर्तनमपि न सम्भवतीत्याह—शासितृत्वादिति । ईश्वरस्य हि सर्वप्रशासितृत्वादितरप्रशासनाविषयतया पूर्वं स्वयमप्रवृत्तस्य प्रवर्तनमपि न सम्भवति । उक्तार्थस्य द्रढिम्ने लोकदृष्ट्या व्यतिरेकदृष्टान्तमाह—किञ्चिज्ज्ञ इति । लोके हि राज्ञा भृत्यादयः किञ्चिज्ज्ञत्वात् कर्तव्येषु बोध्यन्ते परतन्त्रत्वात् प्रेर्यन्ते चेति सर्वलोकदृष्टं नापह्नोतव्यम् । तस्मात् सर्वज्ञ ईश्वरो बोध्यः प्रेर्यश्च स्यादिति वचनं न बुद्धिमतां वादः अपितु बुद्धिहीनानामित्युपहसन्ति सन्तः । यत् श्रुतिप्रतिपन्नत्वाद् ब्राह्मणादिशब्दवाच्यस्येश्वरस्यापि प्रशास्यत्व-मिति, तदपि हास्यम्—श्रुतिर्हि योग्यमेवार्थं वदति । न त्वत्यन्तायोग्यं श्रुत्यन्तरविरुद्धञ्चेति स्वयमेव भावयतु भवानपीति ॥ ३०६ ॥

पद०—ब्रह्मक्षत्रादीत्यादि । ब्रह्मक्षत्रादिदेहेषु—ब्राह्मणक्षत्रियादिशरीरेषु । अणुरिव—अणुपरि-माणो जीव इव । विभुरपि—सर्ववस्तुव्यापक ईश्वरोऽपि । आत्मभावेन तिष्ठन्—शरीरधारकतया तत्प्रतिसम्बन्धिभूतशरीरितया वर्तमानस्सन् । तत्तच्छब्दाभिलप्यः—ब्राह्मणक्षत्रियादिशब्दानां वाच्यभूतः । तत्—तस्मात्कारणात् । ब्राह्मणादिशरीरेष्वात्मतयावस्थाय तत्तच्छब्दवाच्यत्वादित्यर्थः । इह—कर्म-लोके । सः—ईश्वरः । तत्तदादेशवश्यः कथं न—ब्राह्मणो यजेत क्षत्रियो यजेतेत्यादितद्विधिपरतन्त्रः कथं न भवेत् । विधिपरतन्त्रत्वे तदैव कर्मपारवश्यं सुखदुःखानुभवादिकञ्चेश्वरे सिद्धमेवेति प्रष्टुरभिप्रायः । मैवम्—एवं मा शङ्कनीयम् । विधिना ज्ञाप्यते वा प्रवर्त्यते वा परमात्मेति विकल्प्य क्रमेण निरस्यति—न ज्ञाप्यतेऽसावित्यादिना । अविदितविरहात्—'यस्सर्वज्ञस्सर्ववित्' 'अज्ञातं नास्ति ते किञ्चित्' इत्यादिप्रमाणेन सर्वज्ञत्वेनाविदितवस्तुशून्यत्वात् । असौ—ईश्वरः । न ज्ञाप्यते—न प्रत्याय्यते । अज्ञा-तज्ञापनरूपविधिश्चेतनस्याज्ञातांशं ज्ञापयित्वोपकुर्यात्, ईश्वरस्याज्ञातांशाभावात् नाज्ञातज्ञापनं सम्भवतीति भावः । शासितृत्वात्—'एतस्य वा अक्षरस्य प्रशासने' 'अन्तःप्रविष्टश्शास्ता जनानाम्' इति सर्व-प्रशासितृत्वात् । न शास्यः—न परप्रवर्त्यः । जगति—लोके । किञ्चिज्ज्ञः—प्रमाणाधीनबुद्धिरसर्वज्ञः । अन्यतन्त्रः—परतन्त्रश्च यस्स हि । हितविदा—तद्धितं विजानता पित्रादिना पुरुषेण । बोध्यते—इदमित्थमिति ज्ञाप्यते । प्रेर्यते च—कर्तव्ये कार्ये स्वयमप्रवृत्तस्सन् प्रवर्त्यते च । तस्मात् सर्वज्ञ ईश्वरो बोध्यः प्रेर्यश्च स्यादिति वचनं न बुद्धिमतां वादः, अपि तु बुद्धिहीनानामिति भावः ॥ ३०६ ॥

उत्सर्गेणापवादं न खलु नयविदः क्षोभणीयं क्षमन्ते
तस्मात् ब्राह्मे गुणादौ विधिविषयमतिक्रम्य तिष्ठेन्निषेधः ।
एवं शान्ते विरोधे नहि समविषयापच्छिदान्यायसिद्धिः
दृष्टो नित्यं निषेधः पर इह च ततस्स्यादुपक्रान्तिनीतिः ॥ २०७ ॥

चिन्ता०—अस्मिन्नुभयलिङ्गाधिकरणे ह्यखिलहेयप्रत्यनीकत्वं कल्याणैकतानत्वञ्चोभयलिङ्गत्वेनोच्यते । एतच्च त्रिभिन्यायैर्निपुणनिरूपितैरुपपाद्यम् । 'न हिंस्यात् सर्वा भूतानि' 'अग्नीषोमीयं पशुमालभेत' इत्यत्रोत्सर्गापवादन्यायो विहितव्यतिरिक्तविषयत्वान्निषेधशास्त्रस्येति । 'प्रजापतिर्वरुणायाश्वमनयत्' इत्यादावुपक्रमाधिकरणन्यायः, उपसंहारादुपक्रमो बलीयान् उपक्रमस्यासञ्जातविरोधित्वादुपसंहारस्य सञ्जातविरोधित्वादिति । 'यद्युद्गातापच्छिद्येत' इत्यादावनियतपौर्वापर्यविरोधे पुनरपच्छेदाधिकरणन्यायः । 'पूर्वाबाधेन नोत्पत्तिरुत्तरस्य हि सिध्यति' इति पूर्वं बाधित्वैवोत्तरस्योत्पत्तेः । अत्र मृषावादिनः प्राहुः—सगुणवाक्यानि तावत् प्रवर्तन्ते तानि तु पूर्वाण्येव विधिरूपार्थप्रतिपादकत्वात् । निर्गुणवाक्यानि तु पराणि निषेधरूपार्थप्रतिपादकत्वात् । लोके हि विधिपूर्वको निषेध इति सुप्रसिद्धमेतत् । तेन विधायकस्य प्रत्यक्षप्रमाणस्य च पूर्वभावित्वाद् बाध्यत्वम् । निषेधकानां 'निर्गुणं निरञ्जनम्' 'नेह नानास्ति किञ्चन' इत्यादीनां वाक्यानां परत्वाद् बाधकत्वम् । एवमनुमानस्यापि । तथा कर्मशास्त्राणामपि । यानि तु वाक्यानि वेदान्तेऽपि सगुणोपासनपराणि तान्यपि कर्मशास्त्रतुल्यत्वादित्थमेव बाध्यानि । यानि पुनः सगुणब्रह्मस्वरूपपराणीति कानिचिद्वाक्यानि सगुणवादिभिरभिधीयन्ते तान्यपि विधिविषयत्वात् पूर्वभावित्वाद् बाध्यानि । निर्गुणवाक्यानि तु निषेधविषयत्वाच्चरमभावित्वेन बाधकत्वाच्च प्रमाणत्वेनावतिष्ठन्ते । यथा अपच्छेदाधिकरणे उद्गातृप्रतिहर्त्रपच्छेदयोरनुक्रमेण जातयोर्निमित्तयोः परस्परविरुद्धप्रायश्चित्तद्वयप्रसङ्गे पूर्वापच्छेदनिमित्तप्रायश्चित्तं बाधित्वोत्तरापच्छेदनिमित्तप्रायश्चित्तमेवानुष्ठीयते । तेनात्रापि विधिवाक्यविषयगुणं बाधित्वा निर्गुणवाक्यविषयभूतनैर्गुण्यमेव प्रामाणिकैरङ्गीकर्तव्यमिति । तदिदमितरन्यायद्वयनिरूपणेन प्रतिक्षिपति—उत्सर्गेणेति । 'न हिंस्यात् सर्वा भूतानि' इत्युत्सर्गः । 'अग्नीषोमीयं पशुमालभेत' इत्यपवादः । तत्र अपवादेनोत्सर्ग एव क्षोभ्यते न पुनरुत्सर्गेणापवाद इति तान्त्रिकप्रक्रिया । तेन 'निर्गुणं निरञ्जनम्' इत्युत्सर्गः । 'सत्यकामस्सत्यसङ्कल्पः' इत्यपवादः । एकस्य सामान्यविषयत्वादितरस्य च विशेषविषयत्वात् । तेन सगुणवाक्येनैव निर्गुणवाक्यं हेयगुणविषयतया सङ्कोचनीयमिति नीतिविदां निर्णयः । तदिदमाह—तस्मादिति । 'निर्गुणं निरञ्जनम्' इति ब्राह्मे गुणादौ निषेधः 'सत्यकामस्सत्यसङ्कल्पः' इत्यादिविधिविषयमतिक्रम्य तिष्ठेत् । एवमुत्सर्गापवादन्यायेन सगुणनिर्गुणवाक्ययो-

विषयभेदेन विरोधशान्तिमुक्त्वा विरोधे शान्ते सति अपच्छेदाधिकरणन्यायापेक्षैव नास्तीत्याह—नहि समविषयेति । तुल्यविषयत्वे सत्येव ह्यपच्छेदाधिकरणन्यायः प्रवर्तते । अपच्छेदयोः अपच्छेदत्वेन तुल्यत्वात् । अत्र पुनर्न्यायान्तरसिद्धेन विषयभेदेन विरोध उपशान्तः । तेन तदुपशमनहेतुरपच्छेदाधिकरणन्यायो नैरर्थक्यादनपेक्षणीय एव । विषदष्टस्य मणिमन्त्रादिष्वन्यतमेन विषदोषपरिहारे किमितरेण प्रतिविधानाभासेन ? अत्रापच्छेदाधिकरणन्यायप्रसङ्गस्याभासत्वमेव प्रदर्शयति—दृष्ट इति । अयमर्थः—अनियतपौर्वापर्यविषये ह्यपच्छेदाधिकरणन्यायप्रसङ्गः, यथा कदाचिदुद्गाता पूर्वमपच्छिद्यते कदाचित् प्रतिहर्ता, तेन तत्रोत्तरप्राबल्यम् । इह तु नियतपौर्वापर्यमेव विधिः पूर्वो निषेधः पर इति भवतैव नैयत्याभिधानात् । तस्मादुपक्रमाधिकरणन्यायेन सगुणवाक्यस्यैव प्राबल्यमिति । तदाह—तत इति । उपक्रमाधिकरणे हि दातृप्रतिग्रहीत्रोः कस्याश्वप्रतिग्रहेष्टिरिति चिन्तायामुपक्रमवाक्यानुसारेण दातुरित्येव निर्णीतम् । तेनात्रापि पूर्वप्राबल्यात् सगुणवाक्यानामेव प्राबल्यम् , न पुनर्निर्गुणवाक्यानामिति निर्णेतव्यम् । अत्र वक्तव्यशेषमशेषमपि तत्त्वमुक्ताकलापव्याख्याने तत्त्वटीकादौ च द्रष्टव्यम् । भाष्ये च प्रथमसूत्र एव 'उत्तरप्राबल्यकथनं माध्यमिकविजयप्रसङ्गेनापहसितम्' इति । तदेवात्र विस्तरेणानुसन्धेयमवहितकरणैरन्तेवासिभिः । किञ्चोपजीव्यविरोधमाल्पन्ति न्यायविदः । यथाहुः—

'पूर्वात्परबलीयस्त्वं तत्र नाम प्रतीयते ।
अन्योऽन्यनिरपेक्षाणां यत्र जन्म धियां भवेत् ॥' इति ।

तेन स्वरूपे स्वप्रामाण्ये च भेदप्रतीतिसापेक्षाणां भेदनिषेधशास्त्राणां प्राबल्यकथनमश्रुतमीमांसानां श्रुतविस्मृतमीमांसानां वा कथनम् । नहीदं पूर्वमिदं परमिति भेदप्रतीतिमन्तरेणापच्छेदाधिकरणेऽपि प्राबल्यदौर्बल्यनिर्णयः । न च तत्प्रतीतिमन्तरेण प्रामाण्यनिर्णय इत्युपरम्यते ॥ ३०७ ॥

पद०—उत्सर्गेणेत्यादि । नयविदः—न्यायविदो मीमांसकाः । उत्सर्गेण—'न हिंस्यात्सर्वा भूतानि' इत्यादिरूपेणोत्सर्गवचनेन । अपवादम्—अग्नीषोमीयं पशुमालभेत' इत्यादिरूपमपवादवचनम् । क्षोभणीयम्—बाधनीयम् । न क्षमन्ते खलु—न सहन्ते खलु । इदं तान्त्रिकाणां प्रसिद्धमेवेत्यर्थः । अपवादवचनेनैवोत्सर्गवचनस्य विषयसङ्कोचः कार्यते । नतूत्सर्गवचनेनापवादवचनस्य नैरर्थक्यं सम्पाद्यत इति भावः । तस्मात्—अपवादेनैवोत्सर्गस्य विषयसङ्कोचादेर्न्यायसिद्धत्वात् । ब्राह्मे—ब्रह्मसम्बन्धिनि । गुणादौ—गुणविग्रहादौ विषये । निषेधः—'निर्गुणं निरञ्जनम्' 'अशरीरं शरीरेषु' इत्यादिरूपो निषेधः । विधिविषयमतिक्रम्य तिष्ठेत्—'सत्यकामस्सत्यसङ्कल्पः' 'तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी' 'नीलतोयदमध्यस्था विद्युल्लेखेव भास्वरा' इत्यादिविधिवाक्यविषयभूतं कल्याणगुणगणमप्राकृतमकर्मकृतं दिव्यमङ्गलविग्रहञ्च विसृज्य सत्त्वरजस्तमःप्रभृतिहेयगुणान् कर्मकृतं प्राकृतशरीरञ्च स्वविष-

यतया स्वीकृत्य सार्थक्यं भजेत । एवम्—उत्सर्गापवादन्यायेन गुणविग्रहनिषेधपराणां गुणविग्रहविशेष-विधायकानाञ्च वचनानां विषयविभजनेन । विरोधे शान्ते—परस्परबाध्यबाधकभावरूपे विरोधे निवृत्ते सति । समविषयापच्छिदान्यायसिद्धिर्न हि—तुल्यविषयो योऽपच्छेदन्यायः, तस्यात्र प्रवृत्तिर्न भवति । द्वयोर्वचनयोस्समानविषयतया विरोधे सति पूर्वबाधेन परस्य सार्थक्यसम्पादनमपच्छेदन्यायकार्यम् । अत्र द्वयोर्वचनयोरुत्सर्गापवादन्यायेन विषयविभजनवशेन तुल्यविषयत्वस्यापनोदनात् नापच्छेदन्यायस्यायं विषय इति भावः । किञ्चानियतपौर्वापर्यविषये हि अपच्छेदन्यायप्रसङ्गः । यथा कदाचिदुद्गाता पूर्वमपच्छिद्येत कदाचित् प्रतिहर्ता तेन तत्रोत्तरप्राबल्यम् । इह तु नियतं पौर्वापर्यम् ; विधिः पूर्वो निषेधः पर इति भवत्येव नैयत्याभिधानात् । तस्मादुपक्रमाधिकरणन्यायेन सगुणवाक्यस्यैव प्राबल्यमित्याह—दृष्ट इत्यादिना । निषेधो नित्यं परो दृष्टः—निषेधस्य प्रतियोगिसापेक्षत्वेन प्रतियोगिसमर्पणपरं शास्त्रं पूर्वं तन्निषेधपरं शास्त्रं पश्चात्तनमिति सर्वत्र दृष्टमित्यर्थः । ततश्च—तस्माद्धेतोः । इह—भगवद्गुणविग्रहविधिनिषेधविषये । उपक्रान्तिनीतिस्स्यात्—उपक्रमाधिकरणन्याय एव प्रवर्तितव्य इत्यर्थः । उपक्रमाधिकरणे हि उपक्रम-गतवाक्यस्यासंजातविरोधित्वेन प्राबल्यादुपक्रमगतवेदपदार्थाबाधेन तदानुगुण्येनोपसंहारगतऋगादिपदा-नामर्थवत्त्वसम्पादनं कृतम् तद्रीत्यात्राप्यर्थक्रमेणोपक्रमभूतसगुणवाक्यानामसञ्जातविरोधितया प्राबल्यात् तदानुगुण्येन निर्गुणवाक्यानां हेयगुणादिपरत्वमेव न्याय्यमिति भावः ॥ ३०७ ॥

सत्त्वं कार्यस्य गोपायति कथमसतस्सद्भवेदित्याधीतिः
द्रव्यान्यत्वं हि कार्ये व्यपनयति परं मृत्तिकेत्येवशब्दः ।
अन्तर्भावाद्विशिष्टे भगवति जगतो नेहनानेति युक्तं
निर्दिष्टेयत्त्वशङ्कां प्रशमयति परे नेतिनेतीति चोक्तिः ॥ ३०८ ॥

चिन्ता०—' तर्हि श्रुतिमेवाश्रयामः । साहि प्रपञ्चमिथ्यात्वमेव सर्वत्र वदति । तत् तत्त्वमेव । नखलु माता विषं ददाति । तेन ' असदेवेदमग्र आसीत् ' इत्यादिश्रुतिसिद्धत्वात् प्रपञ्चमिथ्यात्वमेव तत्त्वम् ' इति केचित् प्रलपन्ति । तदेतत् श्रुतिपर्यालोचनयैव प्रतिक्षिपति—सत्त्वं कार्यस्येति । अयमर्थः—'कथ-मसतस्सज्जायेत' इति वाक्यं हि कार्यस्य सत्त्वमङ्गीकृत्य कारणासत्त्वमेव प्रतिक्षिपति । तेन कार्यमपि सत् कारणमपि सदित्युक्तं भवति । तेन 'तद्धैक आहुः ' इत्येकशब्दप्रयोगात् असत्त्वस्य परपक्षत्वमेव प्रतीयते । शब्दान्वयस्तु—कथमसतस्सद्भवेदित्यधीतिः कार्यकारणयोर्द्वयोरपि सत्त्वमवगमयतीति । ननु मा भूदिदं वाक्यं ' यथा सोम्य ' इति वाक्यमस्माकमवलम्बनं स्यादित्याशङ्क्य परिहरति—द्रव्यान्यत्वमिति ।

तदपि वाक्यं कार्यकारणयोर्द्रव्यान्यत्वमात्रमेव प्रतिक्षिपति । नपुनः प्रपञ्चमिथ्यात्वं प्रतिपादयतीत्यर्थः । तर्हि नेह नानास्ति किञ्चन' इति वचनमस्माकमवलम्बनमिति च भवद्भिर्न वक्तव्यमित्याह—अन्तर्भावादिति । विशिष्टे भगवति विशेषणानां अन्तर्भावात् 'नेह नाना' इति वाक्यमप्यत्रह्मात्मकनानात्वमेव प्रतिक्षिपति । तर्हि साक्षात् 'नेति नेति' इति प्रपञ्चनिषेधकं वाक्यमस्माकं कुलधनमिति चेत् तदपि स्वप्नलब्धसुवर्णमित्याह—निर्दिष्टेति । पूर्वं ब्रह्मणः कानिचिद् विशेषणान्युक्त्वा निर्दिष्टेयत्त्वमेव ब्रह्मण इति मन्दस्य शङ्कां नेति नेतीतिवादो व्यपनयति । इति न, इति न, इति प्रागुक्तप्रकारविशेषमात्रं निषिध्यते, नपुनर्वक्ष्यमाणं गुणजातमपि । अत एव सूत्रकारः प्राह 'प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः' इति । एवं सर्वासामपि श्रुतीनां विषयभेदेन प्रामाण्यसिद्धेस्सगुणब्रह्मवादिनामेव वेदान्तार्थनिर्णयसाद्गुण्यमिति निर्गुणवादो निर्गुणानामेव स्वेच्छालापः ॥ ३०८ ॥

पद०—तर्हि श्रुतिमेवाश्रयामः, सा हि प्रपञ्चमिथ्यात्वमेव सर्वत्र वदति, तत् तत्त्वमेव, न खलु माता विषं ददाति तेन 'असदेवेदमग्र आसीत्' इत्यादिश्रुतिसिद्धत्वात् प्रपञ्चमिथ्यात्वमेव तत्त्वमिति कैश्चित्प्रलपिते तदेतच्छ्रुतिपर्यालोचनयैव प्रतिक्षिप्यते—सत्त्वं कार्यस्येत्यादिना । कथमसतस्सद्भवेदित्यधीतिः—'कथमसतस्सज्जायेत' इति श्रुतिः । कार्यस्य सत्त्वम् । गोपायति—रक्षति । कार्यस्य सत्त्वमङ्गीकृत्य कारणासत्त्वमेव प्रतिक्षिपति तेन कार्यमपि सत् कारणमपि सदित्युक्तं भवति । 'तद्धैक आ :' इति शब्दप्रयोगादसत्त्वं परपक्ष इत्येव प्रतीयते । ननु मा भूदिदं वाक्यम्, 'यथा सोम्य' इति इतः पूर्वतनं वाक्यमस्माकमर्थसाधकमित्याशङ्क्याह—द्रव्यान्यत्वं हीति । मृत्तिकेत्येवशब्दः—'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' इति वाक्ये मृत्तिकेत्येवेति शब्दः । कार्ये द्रव्यान्यत्वं हि परं व्यपनयति—कार्यस्य कारणातिरिक्तद्रव्यत्वमात्रमेव प्रतिक्षिपति नतु कार्यस्य मिथ्यात्वं स्थापयति । मृत्तिकेत्येवेत्यत्र इति—शिरस्केन मृत्तिकेत्यनेन सावधारणेन सूक्ष्मनिरीक्षणे कार्यमपि मृत्तिकेत्येव प्रामाणिकम्, नत्वतिरिक्तमवयव्यस्तीति खलु प्रतीयत इत्यर्थः । तर्हि 'नेह नानास्ति' इति वचनमस्माकमवलम्बनमित्यत्राह—अन्तर्भावादित्यादि । विशिष्टे भगवति—घटत्वविशिष्टे घट इव प्रभाविशिष्टे भास्कर इव चेतनाचेतनात्मकविशेषणयुक्ते ब्रह्मणि । जगतोऽन्तर्भावात्—तत्प्रकारतैकस्वभावतया पृथगवस्थानाभावात्, ब्रह्मणि भेदो नास्तीत्यत्राङ्गीकार्यब्रह्मपदार्थकोटिप्रविष्टत्वेन निषेध्यकोट्यप्रवेशादित्यर्थः । 'यत्र हि द्वैतमिव भवति' 'नेह नानास्ति किञ्चन' इत्यादिभेदनिषेधपरश्रुतिनिर्वाहकस्य 'तत् कृत्स्नस्य जगतो ब्रह्मकार्यतया तदन्तर्यामिकतया तदात्मकत्वेनैक्यात् तत्प्रत्यनीकनानात्वं प्रतिषिध्यते' इत्यादिभाष्यस्य व्याख्यानावसरे श्रुतप्रकाशिकायां 'तदात्मकत्वं नाम जगतस्तत्प्रकारतैकस्वभावतया पृथगवस्थानाभावात् तदन्तर्गतत्वं तेन प्रकारेणैक्यम्, नतु स्वरूपैक्यम्, विशिष्टान्तर्भाव एवैक्यमित्यर्थः । तत्प्रत्यनीकनानात्वमिति—विहितोभयविधैक्यप्रत्यनीकनानात्वं

निषिध्यत इत्यर्थः । कार्यकारणभेदः कुतर्कमूलभ्रान्तिविषयः, स्वनिष्ठभेदो लौकिकप्रतीतिमूलभ्रान्तिविषयः । अतो भ्रान्तिमूलत्वाविशेषात् विहितैक्यप्रत्यनीकत्वाविशेषाच्च तेनाकारेणोभयविधं भेदं नानाशब्देन परामृश्य निषिध्यत इति न वाक्यभेदः' इत्याद्युपपादनात् तद्रीत्या विशिष्टान्तर्भावरूपैक्यादिति पर्यवसितम् । नेहनानेति युक्तम्—नेह नानेति भेदनिषेधो युक्त एव, 'इह' विशिष्टात्मके ब्रह्मणि 'नाना न' नानात्वं न । कार्यकारणभावमूलकभेदस्स्वनिष्ठभेदश्च नास्तीत्यस्याश्श्रुतेरर्थ इति न काप्यस्माकं हानिर्न कोऽपि भवतां लाभ इति । तर्हि साक्षात् 'नेतिनेति' इति प्रपञ्चनिषेधकं वाक्यमस्माकं कुलधनमिति चेत् तदपि स्वप्नलब्धसुवर्णमित्युच्यते— निर्दिष्टेत्यादिना । नेतिनेतीत्युक्तिश्च—श्रुत्युक्तिश्च । परे—परमात्मनि । निर्दिष्टेयत्त्वशङ्कां प्रशमयति—पूर्वं ब्रह्मणः कानिचिद्विशेषणान्युक्त्वा निर्दिष्टेयत्त्वमेव ब्रह्मण इति मन्दस्य शङ्कां नेतिनेतीतिवादो व्यपनयति । इति न इति न इति प्रागुक्तप्रकारविशिष्टमात्रं न भवति ब्रह्मेत्यर्थः । अत एव च सूत्रे 'प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः' इति । एवं सर्वासामपि श्रुतीनां विषयभेदेनप्रामाण्यसिद्धेस्सगुणब्रह्मवादिनामेव वेदान्तार्थनिर्णयसाद्गुण्यमिति निर्गुणवादो निर्गुणानां स्वेच्छालापः ॥ ३०८ ॥

तत्तद्वस्तुप्रदेशे सकलगुणतया पूर्णदृश्यः परात्मा
वृद्धिह्रासादिभेदोज्झित इति हि जलाधारसूर्योपमोक्तिः ।
अस्पर्शोदाहृतिश्चेन्न हि घटकरकाकाशदृष्टान्तयुक्ति-
स्तस्माद्ब्रह्म द्विलिङ्गं द्विविधविभवमित्येव वेदान्तपक्षः ॥ ३०९ ॥

इति उभयलिङ्गाधिकरणम् ॥ ७९ ॥

चिन्ता०—'ननु सन्त्वेतानि समाधानानि, अथाप्यसमाधेयमिदमेकं दृश्यते । सर्वत्रावस्थितस्य भगवतो 'जलाधारेष्विवांशुमान्' इति दृष्टान्त उपादीयते । तन्मिथ्यात्वमेव प्रतिपादयति' इति कश्चिन्मनुते, तस्याप्युत्तरमाह—तत्तद्वस्त्विति । तात्पर्ये हि शब्दः प्रमाणम् । नात्र जीवानां मिथ्यात्वं विवक्ष्यते प्रमाणविरुद्धत्वात् । अपितु ब्रह्मणस्सर्वत्रावस्थितस्यापि विशेषणभूततत्तद्वस्तुगत वृद्धिह्रासभाक्त्वमेव केवलं निषिध्यते । यथा तरङ्गेषु प्रतीयमानस्य चन्द्रबिम्बस्य तरङ्गगतवृद्धिह्रासादिभाक्त्वं न परमार्थतो विद्यते । एवं सर्वान्तर्यामित्वेनावस्थितस्य परस्य ब्रह्मणस्तत्तद्वस्तुप्रयुक्तदोषसम्बन्धो नास्तीति । अयमत्र भावः—अविद्यमानस्य चन्द्रस्य यथोपाधिप्रयुक्तदोषाभाव एवं विद्यमानस्यापि ब्रह्मणः प्रभावविशेषादौपाधिकदोषप्रसङ्गाभाव इति दृष्टान्तप्रदर्शनमात्रमेतदिति । अयमत्रान्वयः—तत्तद्वस्तुप्रदेशे सकलगुणतया परिपूर्ण-

दृश्यः परात्मा वृद्धिह्रासादिभेदविधुर इति हि 'जलाधारेष्विवांशुमान्' इत्युच्यते। तात्पर्यानुगुणमेवार्थस्योपवर्णनीयत्वात् किमर्थमियं क्लिष्टकल्पना? असंसर्गार्थमेवात्र निदर्शनमुच्यत इत्याशङ्कते—अस्पर्शोदाहृतिश्चेदिति। सर्वैरस्पृष्टमेवात्र ब्रह्मोच्यत इत्यर्थः। तत्रोत्तरमाह—न हीति। न ह्येक एव दृष्टान्तो महर्षिभिरुच्यते। क्वचिद् 'जलाधारेष्विवांशुमान्' इति, इतरत्र 'आकाशमेकं हि यथा घटादिषु पृथग्भवेत्' इति क्वचिदविद्यमानं प्रतिबिम्बमुदाह्रियतेऽपरत्र विद्यमानमेवाकाशम्। तेनोभयदृष्टान्तसामाञ्जस्यार्थमुचित एवार्थ उदाहर्तव्यः। न पुनस्तद्गतदोषैरस्पृष्टत्वमेव। अन्यथैकोपादाने इतरप्रच्यवनादुभयमपि न सिध्येत्। एवं विस्तरेणार्थतत्त्वमुपपाद्योभयलिङ्गत्वं निगमयति—तस्मादिति। द्विलिङ्गम्—अखिलहेयप्रत्यनीककल्याणैकतानत्वादुभयगुणयुक्तम्। द्विविधविभवम्—उभयविभूतिविशिष्टम्। 'पुरुष एवेदं सर्वम्' इत्यादिप्रमाणप्रसिद्धविभूतिद्वयविशिष्टमित्यर्थः। विवृतं हि भगवता पराशरेण 'समस्तकल्याणगुणात्मकोऽसौ' इत्यादिना। वेदान्तपक्ष इति कथनं मृषावादिपक्षस्य बौद्धपक्षनिक्षेपार्थम्॥ ३०९॥

इति उभयलिङ्गाधिकरणम्॥ ७९॥

पद०—तत्तद्वस्त्वित्यादि। तत्तद्वस्तुप्रदेशे—महीमहीधरमहार्णवदेवतिर्यङ्मनुष्यादितत्तद्वस्तुप्रदेशे। सकलगुणतया—परिपूर्णज्ञानशक्त्यादिगुणत्वेन। पूर्णदृश्यः—परिपूर्णतयाऽवगम्यः। परात्मा। वृद्धिह्रासादिभेदोज्झित इति हि—तत्तद्वस्तुगतवृद्धिह्रासादिभेदविधुर इत्येतदर्थप्रत्ययार्थं हि। जलाधारसूर्योपमोक्तिः—'जलाधारेष्विवांशुमान्' इति वचनेन परमात्मनो जलाधारभूतघटमणिककूपतटाकमहार्णवादिप्रतिफलितसूर्यदृष्टान्तकथनम्। किमर्थमियं क्लिष्टकल्पना असंसर्गार्थमेवात्र निदर्शनमुच्यत इत्याशङ्कते-अस्पर्शोदाहृतिश्चेदिति। सर्वैरस्पृष्टं ब्रह्मेत्यस्पर्शार्थमेव जलाधारप्रतिफलितसूर्यदृष्टान्तोपादानमिति चेत्। तर्हि घटकरकाकाशदृष्टान्तयुक्तिर्न हि—'आकाशमेकं हि यथा घटादिषु पृथग्भवेत्' इति वचनान्तरेण परमात्मनो घटकरकादिस्थिताकाशदृष्टान्तयोजनं न हि घटेत। अत उभयदृष्टान्तसामञ्जस्यार्थमुचित एवार्थ उदाहर्तव्यः स पुनस्तद्गतदोषैरस्पृष्टत्वमेवेति भावः। तस्मात्- उक्तोपपादनात्। ब्रह्म द्विलिङ्गं द्विविधविभवमित्येव वेदान्तपक्षः—अखिलहेयप्रत्यनीकत्वकल्याणगुणाकरस्वरूपोभयलिङ्गं लीलाविभूतिभोगविभूतिरूपविभूतिद्वयविशिष्टमित्येव वेदान्तसम्मतः पक्षस्सिद्धान्तः। तथा पराशरादिभिः 'समस्तकल्याणगुणात्मकोऽसौ' इत्यादिभिः प्रतिपादनादिति भावः॥ ३०९॥

इति उभयलिङ्गाधिकरणम्॥ ७९॥

---

## अहिकुण्डलाधिकरणम् ॥ ९० ॥

सूत्रम्—उभयव्यपदेशात्त्वहिकुण्डलवत् ॥ ३४० ॥

विश्वस्रष्टुस्स्वदुःखप्रजननमिह न स्वांशतोऽचित्त्वक्लृप्तौ
मृत्तत्कार्यादिकश्च स्वरसमिह बहूदाहृतं सप्रतिज्ञम् ।
तस्मादव्याकृतादिर्विहरणनियता विक्रियैवेति चेन्न
स्वांशे मौढ्यं वितन्वन्विहरति भगवाननित्यनर्थानपोहात् ॥ ३१० ॥

चिन्ता०—सङ्गतिर्भाष्ये 'तस्याचिद्वस्तुनो ब्रह्मरूपत्वप्रकार इदानीं चिन्त्यते ब्रह्मणो निर्दोषत्वसिद्ध्यर्थम्' इति । अयमर्थः—पूर्वाधिकरणे ब्रह्मणो निर्दोषत्वं प्रतिज्ञातम् । तस्य निर्दोषत्वस्य प्रतिष्ठापनार्थमचिद्वस्तुनो ब्रह्मरूपत्वमहिकुण्डलन्यायेनोत प्रभाप्रभावन्न्यायेन, अथवा विशेषणविशेष्यभावेनेति चिन्त्यत इति पूर्वाधिकरणेन सङ्गतिरिति । तदर्थविचारस्तु—किमचिद्वस्तुनो ब्रह्मरूपत्वमहिकुण्डलन्यायेन ? उत प्रभाप्रभावद्रूपेण ? उत विशेषणविशेष्यभावेनांशांशित्वेन इति । किं 'स वा एष महानज आत्माजरो ऽमरः' इत्याद्यचिद्धर्मप्रतिषेधो विशेषणविशेष्यभावेन ब्रह्मरूपत्वं प्रपञ्चस्यावगमयति नेति । अत्र पूर्वपक्षमाह-विश्वस्रष्टुरिति । विश्वस्रष्टुः परमपुरुषस्य स्वांशतोऽचिद्वर्गप्रजनने स्वदुःखकारणत्वं नास्त्येव । अचितो दुःखाभावात् । अंशतश्चाचित्त्वक्लृप्तौ मृत्तत्कार्यादिकश्च बहूदाहृतं दृष्टान्तजातं सप्रतिज्ञं स्वरसमेव भवति । अतो ब्रह्मैवाव्याकृतादिसृष्टिं विहारवशाद् विक्रियामपि करोति । ततो विकाररूपाप्यचित्सृष्टिर्युज्यत एवेत्यर्थः । तदिदं प्रतिक्षिपति—नेति । तदेव विवृणोति—स्वांश इति । अयमर्थः—द्विविधो ह्यनर्थः । दुःखप्रजननमित्येकः । निरतिशयसुखानुभवयोग्ये वस्तुनि मौढ्यापादनमित्यपरः । अचिद्वस्तुनश्चिद्विलक्षणत्वेन दुःखजननाभावेऽपि निरतिशयज्ञानानन्दात्मनि वस्तुन्यंशे अचिद्रूपतया मौढ्यापादनमपि स्वानर्थापादनमेव । तस्मादचिद्रूपस्वांशसृष्टिर्न घटत एव ॥ ३१० ॥

पद०—विश्वस्रष्टुरित्यादि । विश्वस्रष्टुः—जगत्कारणभूतस्य ब्रह्मणः । स्वांशतोऽचित्त्वक्लृप्तौ—स्वांशतोऽचिद्वर्गप्रजनने । स्वदुःखप्रजननमिह न—इह स्वदुःखकारणत्वं नास्त्येव, अचितो दुःखाभावात् । इह—ब्रह्मणस्स्वांशतोऽचित्त्वक्लृप्तौ । सप्रतिज्ञम्—प्रतिज्ञापूर्वकम् । उदाहृतम्—दृष्टान्ततया निदर्शितम् । बहु—मृत्पिण्डलोहमणिनखनिकृन्तनादिरूपेण बहुविधम् । मृत्तत्कार्यादिकश्च, स्वरसम्—अत्यन्तानुगुणं भवति । तस्मात्—एवं दृष्टान्तस्वारस्यात् । अव्याकृतादिः—प्रकृतिमहदहङ्काराद्यचिद्वर्गः । विहरणनियता विक्रियैव—लीलावशेन रचिता स्वांशविक्रियैव भवितुमर्हति । इति चेन्न—एवं

शङ्क्यते चेत्तन्न युज्यते। भगवान्—ज्ञानानन्दादिकल्याणगुणपरिपूर्णो ज्ञानानन्दात्मा च परमात्मा। स्वांशे—ज्ञानानन्दरूपस्य स्वरूपस्यैकदेशे। मौढ्यं वितन्वन् विहरतीति—जाड्यमापादयन् लीलामनुभवतीति कल्पने। अनर्थानपोहात्—स्वानर्थापादनापत्तेः। द्विविधो ह्यनर्थः दुःखप्रजननमित्येकः, निरतिशयसुखरूपे वस्तुनि मौढ्यापादनमित्यपरः, तत्राचिद्वस्तुनश्चिद्विलक्षणत्वेन दुःखजननाभावेऽपि निरतिशयज्ञानानन्दस्वरूपे वस्तुन्यंशेऽचिद्रूपतया मौढ्यापादनमपि स्वानर्थापादनमेवेति भावः॥ ३१०॥

कश्चिन्नित्योऽचिदंशो विविधविकृतिमान् ब्रह्मणीत्याहुरेके
फेनादिन्यायतोऽन्ये सति विकृतिवशाद् ज्ञाज्ञसर्वज्ञभागान्।
चन्द्रज्योत्स्नादिनीत्या कतिचिदिह जगद्ब्रह्मणोरैकजात्यं
सर्वे ते सर्ववेदस्वरसगतिहतेरत्र वित्रासनीयाः॥ ३११॥

इत्यहिकुण्डलाधिकरणम्॥ ८०॥

चिन्ता०—उक्तपक्षेण सह पक्षान्तराण्यप्यनूद्य निराकरोति—कश्चिदिति। पूर्वं ब्रह्म स्वयमेव स्वस्मिन्नचित्त्वमापादयतीत्याशङ्क्य दूषितम्। अधुना पूर्वोक्तदोषपरिहारार्थं केचिदनादिसिद्धो नित्य एव कश्चिदचिदंशो विविधविकृतिमान् वर्तत इत्याहुः। तत्रापि विरोधस्तदवस्थः—सर्वज्ञस्य ब्रह्मणो नित्यमेव तादृशमौढ्यसंवलितरूपकल्पनस्यात्यन्तदौस्स्थ्यात्। पक्षान्तरमनुवदति—फेनादीति। सन्मात्रे ब्रह्मणि सागरे फेनतरङ्गबुद्बुदन्यायेन चिदचिदीश्वरात्मकं तत्त्वत्रयं विकृतिवशाज्जायत इत्यन्ये प्राहुः। तदपि तादृशमेव; निर्विकारे विकारकल्पनात् स्वानर्थकरणदोषस्य तादवस्थ्याच्च। कतिचित्पुनश्चन्द्रचन्द्रिकान्यायेन जगद्ब्रह्मणोरैकजात्यमेव ब्रुवते। तद् जगद्ब्रह्मणोरैक्यप्रतिपादकवेदान्तवाक्यानामननुकूलत्वादनादरणीयमेव। वस्तुत्वमात्रेण साजात्यञ्चेत् सर्वलोकप्रसिद्धत्वाच्च वेदान्तवेद्यम्। आत्मतया साजात्यंचेत् अचिद्वस्तुनि नास्त्येव। ईश्वरत्वेन साजात्यञ्चेत् तत्त्वत्रयपरिक्लृप्तिपराहतम्। 'भोक्ता भोग्यं प्रेरितारम्' इति श्रुतिविरुद्धञ्च। अतो विशेषणविशेष्यभावेनैकात्म्यमिति वेदान्ततत्त्ववेदिनां निर्णयः। तेन सर्वे वादिनः सर्ववेदान्तवाक्यस्वारस्यविरोधादत्र वित्रासनीया इति शब्दान्वयः॥ ३११॥

इत्यहिकुण्डलाधिकरणम्॥ ८०॥

पद०—कश्चिदित्यादि। एके—केचित्। ब्रह्मणि—ब्रह्मस्वरूपे। कश्चिदंशः—कोऽप्येकदेशः। नित्यः—अनादिसिद्धः। अचित्—चैतन्यशून्यः। विविधविकृतिमानिति—महदहङ्कारादिनानाविधविकृतिशाली वर्तत इति। आहुः। अन्ये—देभ्योऽन्ये केचित्। सति—सद्रूपे ब्रह्मणि। फेनादि-

न्यायतः—सागरे फेनतरङ्गबुद्बुदन्यायेन । ज्ञाज्ञसर्वज्ञभागान्–चिदचिदीश्वराख्यांशान् । विकृतिवशात्–विकारवशेन जातान् प्राहुः । कतिचित्—केचित् । चन्द्रज्योत्स्नादिनीत्या—चन्द्रचन्द्रिकासूर्यातपादिन्यायेन । इह–विषये । जगद्ब्रह्मणोरैकजात्यं आहुः–चन्द्रचन्द्रिकादीनां तेजस्त्वेनेव जगद्ब्रह्मणोः सत्त्वेनाकारेण साजात्यमात्रं न स्वरूपैक्यादिकमिति प्रतिपादयाञ्चक्रुः । ते सर्वे । अत्र–अधिकरणे । सर्ववेदस्वरसगतिहतेः—सर्ववेदान्तस्वारस्यावगतिविरोधात् । वित्रासनीयाः—निरसनीयाः । अयमाशयः–प्रथमपक्षविरोधस्तदवस्थः ; सर्वज्ञस्य ब्रह्मणो नित्यमेव तादृशमौढ्यसंवलितस्वरूपकल्पनस्यात्यन्तदौस्स्थ्यात् । द्वितीयोऽपि पक्षस्तादृशएव निर्विकारे विकारकल्पनात् स्वानर्थकरणदोषस्य तादवस्थ्याच्च । तृतीयेऽपि पक्षे वस्तुत्वमात्रेण साजात्यञ्चेत् सर्वलोकप्रसिद्धत्वात् न वेदान्तवेद्यम् । आत्मतया साजात्यञ्चेत् अचिद्वस्तुनि तन्नास्त्येव, ईश्वरत्वेन साजात्यञ्चेत् तत्त्वत्रयक्लृप्तिपराहतं 'भोक्ता भोग्यं प्रेरितारम्' इति श्रुतिविरुद्धञ्च । अतो विशेषणविशेष्यभावेनैवैकार्थ्यमिति वेदान्ततत्त्ववेदिनां निर्णयः, तेन सर्वे वादिनस्सर्ववेदान्तवाक्यस्वारस्यविरोधेनात्र वित्रासनीया इति ॥ ३११ ॥

इत्यहिकुण्डलाधिकरणम् ॥ ८० ॥

---

## पराधिकरणम् ॥ ८१ ॥

सूत्रम्—परमतस्सेतून्मानसंबन्धभेदव्यपदेशेभ्यः ॥ ३४४ ॥

सेतुं तीर्त्वेत्यधीतेः परिमितिवचनात् प्राप्यसम्बन्धितोक्ते-
रन्याधिक्यश्रुतेरप्यतिवहननयात्कारणं प्रापकं स्यात् ।
प्राप्यं त्वन्यद्भवेदित्यसदनवधिके कारणे प्राप्यतोक्तेः
सेतुत्वाद्युक्तिरस्मिन् बहुभिरविहतां वृत्तिमङ्गीकरोतु ॥ ३१२ ॥

चिन्ता०—भाष्य एव पूर्वाधिकरणनिगमनवाक्यान्वितेनोत्तराधिकरणोपक्रमवाक्येन सङ्गतिरुच्यते 'ब्रह्मणो निर्दोषत्वेन कल्याणगुणाकरत्वेन चोभयलिङ्गत्वमपि सिद्धम् । इदानीमस्मात् परस्माज्जगन्निमित्तोपादानरूपपरमकारणात् परब्रह्मणः परमपि किञ्चित् तत्त्वमस्तीति कैश्चिद्धेत्वाभासैराशङ्क्य निराक्रियते' इति । तदर्थविचारस्तु—यदिदमुभयलिङ्गं ब्रह्म किमस्मात्परमपि किञ्चित् तत्त्वमस्ति? उत नेति । किमस्यैव परत्वे सेतून्मानसम्बन्धभेदव्यपदेशानामुपपत्तिरस्ति? न वेति । अत्र सूत्रकारेणोपात्तान् पूर्वपक्षहेतूननु-

क्रमेणानूद्य सौत्रक्रमेण परिहारमपि दर्शयति—सेतुमिति । 'एतं सेतुं तीर्त्वा' इति तरितव्यत्ववचनात् 'चतुष्पाद् ब्रह्म षोडशकलम्' इति ब्रह्मणः परिमितत्ववचनात् प्राप्यसम्बन्धितोक्तेः 'अमृतस्यैष सेतुः' इति प्राप्यस्यान्यस्यामृतस्य प्रापकतया तत्सम्बन्धित्वेनाभिधानात्, अन्याधिक्यश्रुतेरपि 'परात्परं पुरुषमुपैति दिव्यम्' 'परात्परं यन्महतो महान्तम्' इति सर्वस्मात् परस्यान्यस्य श्रुतेश्च । अतिवहननयात् आतिवाहिकन्यायेनायं परमपुरुषो विश्वकारणभूतः प्रापक एव स्यान्न पुनः प्राप्यः । प्राप्यश्चान्यदेव किञ्चिद् भवेदिति व्योमातीतवादिनः । तदिदं प्रतिक्षिपति—असदिति । यज्जगत्कारणं तदेव ध्येयम् 'कारणं तु ध्येयः' इति नियमात् । यच्च ध्येयं तदेव प्राप्यम् 'ब्रह्मविदाप्नोति परम्' 'ब्रह्मवेद ब्रह्मैव भवति' इति प्राप्यप्रापकयोरेकत्वनिर्णयात् । अतो योऽमृतस्य सेतुस्तदेवामृतमिति त्रय्यन्तवादिनां निर्णयः । अस्मिन् ब्रह्मणि सेतुत्वाद्युक्तिः कथमिति चेदत्रोत्तरम्—सेतुत्वेति । बहुप्रमाणैरविरुद्धां वृत्तिमङ्गीकरोतु । ईश्वरस्यैव तावत्प्राप्यत्वं प्रापकत्वञ्च सकलवेदान्तसिद्धत्वादङ्गीकरणीयमेव । तेन सेतुत्वाद्युक्तीनां योग्यार्थकल्पनयार्थोपवर्णनं कार्यमित्यर्थः । अन्यथा लोके मुख्यामुख्यप्रयोगविभागो न स्यात् । अमुख्यप्रयोगाणां परित्याज्यत्वञ्च स्यात् । उपक्रमोपसंहारादितात्पर्यलिङ्गपरिशोधनेन विदुषां तत्रतत्र वाक्यार्थोपवर्णनमपि न स्यादिति सर्वशास्त्रसङ्क्षोभः ॥ ३१२ ॥

पद०—सेतुं तीर्त्वेत्यादि । सेतुं तीर्त्वेत्यधीतेः—'एतं सेतुं तीर्त्वान्धस्सन्ननन्धो भवति' इत्यादौ सेतुं तीर्त्वेति श्रवणात् । कूलादिप्रापकत्वं हि सेतौ दृश्यते तद्वदस्याप्यन्यप्रापकत्वप्रतीतेस्तीर्त्वेति तरितव्यत्वाभिधानाच्चेत्यर्थः । परिमितिवचनात्—'चतुष्पाद्ब्रह्म षोडशकलम्' इत्यादौ जगत्कारणभूतस्य ब्रह्मणः परिमितत्ववचनात् । प्राप्यसम्बन्धितोक्तेः—'अमृतस्य परं सेतुम्' इति प्राप्यस्यान्यस्य प्रापकतया तत्सम्बन्धित्वेनाभिधानात् । अन्याधिक्यश्रुतेरपि—'परात्परं यन्महतो महान्तम्' 'ततो यदुत्तरतरम्' इत्यादौ सर्वस्मात्परस्यान्यस्य श्रुतेश्च । अतिवहननयात्—अर्चिराद्यातिवाहिकनीत्या । कारणं प्रापकं स्यात्—जगत्कारणभूतं ब्रह्म प्रापकमेव भवेत् । प्राप्यं त्वन्यद्भवेत्—जगत्कारणभूताद्ब्रह्मणोऽन्यदेव स्यात् । इत्यसत्—इत्याशङ्कनमप्यसाधु । अनवधिके कारणे प्राप्यतोक्तेः—स्वरूपगुणैरनवधिके जगत्कारणभूते ब्रह्मणि प्राप्यत्ववचनात् । जगत्कारणं हि ध्येयम् 'कारणं तु ध्येयः' इति श्रुतेः । यच्च ध्येयं तदेव प्राप्यम् 'ब्रह्मविदाप्नोति परम्' 'ब्रह्म वेद ब्रह्मैव भवति' इति प्राप्यप्रापकयोरेकत्वनिर्णयात् । अतो योऽमृतस्य सेतुस्तदेवामृतमिति भावः । तर्हि अस्मिन् ब्रह्मणि सेतुत्वाद्युक्तिः कथमिति चेत् तत्राह—सेतुत्वाद्युक्तिरित्यादि । अस्मिन्—जगत्कारणभूते अत एव प्राप्यप्रापकभूते ब्रह्मणि । सेतुत्वाद्युक्तिः—पूर्वोदाहृतं सेतुत्वतरितव्यत्वपरिमितत्वादिवचनं तु । बहुभिरविहतां वृत्तिमङ्गीकरोतु—

बहुप्रमाणैरविरुद्धां वृत्तिमङ्गीकरोतु। ईश्वरस्यैव प्राप्यत्वं प्रापकत्वञ्च सकलवेदान्तसिद्धत्वादङ्गीकरणीयम्, तेन सेतुत्वाद्युक्तीनामुचितार्थपर्यालोचनयार्थवर्णनं कार्यमिति भावः॥ ३१२॥

सेतुत्वं सेतुतुल्याद्विधरणनियमाद्बन्धनाद्वात्र युक्तं
व्याप्तेऽप्यस्मिन्नुपाधेः परिमितिवचनं सार्थकं सूत्रितं प्राक्।
चातुष्पद्यञ्च तत्तन्मतिसमनुगुणं कल्प्यतेऽनन्तभूम्नः
स्वस्येत्येवामृतस्येत्यभिहितमथवा मुक्तिरेवामृतं स्यात्॥ ३१३॥

चिन्ता०—अत्र पूर्वं सेतुत्वादिवचनं योग्यार्थकल्पनया योज्यमित्युक्तम्। तानेव योग्यानर्थाननुक्रमेण दर्शयति—सेतत्वमिति। सेतुत्वं सेतुतुल्याद् विधरणनियमात्—धारकत्वनियमादित्यर्थः। भगवानेव हि सर्वधारकः। अर्थान्तरमप्याह—बन्धनादिति स एव भगवानसङ्करेण सर्वमपि तत्त्वजातं सम्बध्नाति। परिमितिवचनस्यापि गतिमाह—व्याप्तेऽपीति। व्याप्तेऽप्यस्मिन्परस्मिन् ब्रह्मणि परिमितिवचनं सार्थकमिति दहराकाशादिप्रसङ्गेषु तत्रतत्र सूत्रितमेव। 'चतुष्पाद् ब्रह्म' इति वचनं तु 'पादोऽस्य विश्वा भूतानि' इतिवत् तत्तच्छ्रुतिभिरनुगुणमेव कल्पनीयमनन्तभूम्नोऽपि ब्रह्मणः। 'अमृतस्यैष सेतुः' इत्यमृतरूपस्य ब्रह्मण इति वा ब्रह्मप्राप्तिरूपमोक्षस्यामृतस्येति वा योजनीयम्॥ ३१३॥

पद०—सेतुत्वमित्यादि। सेतुत्वम्। सेतुतुल्याद्विधरणनियमात्—सेतौ यथा धारकत्वनियमस्तथाविधाद्धारकत्वनियमादित्यर्थः। भगवानेव हि सर्वधारकः। बन्धनाद्वा—असङ्करेण सर्वस्य तत्त्वजातस्य स्वस्मिन् बन्धनाद्वा। 'षिञ् बन्धने' इत्यस्माद्धातोस्सेतुशब्दनिष्पत्तिरिति भावः। अत्र—जगत्कारणभूते ब्रह्मणि। युक्तम्—समञ्जसमेवेत्यर्थः। व्याप्तेऽपि—सर्वव्यापकेऽपि। अस्मिन्—ब्रह्मणि। परिमितिवचनम्—अणीयस्त्वचतुष्पात्त्वषोडशकलत्वादिरूपपरिमितत्ववचनम्। उपाधेस्सार्थकं प्राक्सूत्रितम्—हृदयाद्यल्पोपाधिवशेन तथा व्यपदेश इति दहराधिकरणेऽन्यत्र च 'अल्पश्रुतेरिति चेत्तदुक्तम्' इत्यादिना सूत्रेण प्रागेव प्रतिपादितम्। अनन्तभूम्नः—अपरिच्छिन्नविभूतेर्ब्रह्मणः। चातुष्पद्यञ्च—'चतुष्पाद्ब्रह्म' इति श्रुत्युक्तं चतुष्पात्त्वञ्च। तत्तन्मतिसमनुगुणं कल्प्यते—तथातथोपासनात्मकमत्यनुगुणतया कल्प्यते। तथा च भाष्यम्—'योऽयं 'चतुष्पाद्ब्रह्म षोडशकलम्' 'पादोऽस्य विश्वा भूतानि' इत्युन्मानव्यपदेशः, स बुद्ध्यर्थ उपासनार्थः' इत्यादि। चिन्तामणौ तु 'चातुष्पद्यञ्च तत्तच्छ्रुतिभिरनुगुणं कल्प्यतेऽनन्तभूम्नः' इति पाठमङ्गीकृत्य व्याख्यातम्। तथा च तत्रत्यवाक्यम् 'चतुष्पाद्ब्रह्मेति वचनं तु पादोऽस्य विश्वा

भूतानीतिवत् तत्तच्छ्रुतिभिरनुगुणमेव कल्पनीयम्' इति। स्वस्य—ब्रह्मणः। इत्येष—एवं तात्पर्येणैव। अमृतस्येत्यभिहितम्—अमृतस्य स्वस्यैव स्वयं सेतुरिति तात्पर्येणैवामृतस्येत्यभिहितम्, न त्वन्यस्यामृतस्य सेतुरिति। अथवा मुक्तिरेवामृतं स्यात्—मुक्तिरेवामृतशब्दार्थस्स्यादित्यर्थः॥ ३१३॥

अन्यस्याधिक्यवादे परमवधितया कारणं यत्र दृष्टं
तत्र ह्यव्याकृतादिस्तदवधिरितरापेक्षयासौ परश्च।
यस्मादन्यत्परं नेत्यभिहितविषये तत्परोक्तेरयुक्तेः
एवन्त्वादित्यनूक्तिस्तत इति यदिवा व्याप्यमुक्तं तदस्तु॥ ३१४॥

इति पराधिकरणम्॥ ८१॥

चिन्ता०—अत्र नारायणस्य परत्वमङ्गीकृत्य तस्मादप्यन्यस्य परत्वमुच्यत इति पूर्वपक्षिणा वर्ण्यते। तत्र दृष्टान्तोऽप्युक्तः। यथा 'अक्षरात् परतः परः' इत्यत्र परतोऽक्षरादन्यः पर इति पर उच्यत इति। एवमुक्ते दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यमाह—अन्यस्येति। अयमर्थः—दृष्टान्ते हि प्रथमान्तपरशब्दनिर्दिष्टस्य परस्याधिक्यवादे पञ्चम्यन्तपरशब्दनिर्दिष्टमवधितया दृष्टम्। तस्य च परशब्दवाच्यत्वं तत्कार्यरूपमहदाद्यपेक्षयेति वचनान्निर्णीतम्। तत्र स्वकार्यापेक्षया परस्मादक्षरात् परो जीवो वा परमात्मा वेति वक्तुं शक्यते। इह पुनः 'न ह्येतस्मादिति नेत्यन्यत् परमस्ति' इति परमात्मापेक्षया परः प्रतिक्षिप्यते। तस्मादन्यः परो न कल्पनीय एव। ननु 'ततो यदुत्तरतरम्' इत्यत्र तच्छब्देन प्रकृतं परमपुरुषं निर्दिश्य ततोऽप्युत्तरतरं तत्त्वान्तरं निर्दिश्यते। अतः परमपुरुषादुत्तरं तत्त्वमस्तीति केचिदूचुः। तत् परिहरति—एवन्त्वादिति। तत्र तत इत्येवन्त्वादिति हेतुरनूद्यते। पूर्वं बहुभिः प्रमाणैः परमपुरुष एव परतत्त्वमित्युपपादितत्वादित्यर्थः। तेन 'यदुत्तरतरम्' इत्यादिकं परमपुरुषमेवाह नपुनस्तत्त्वान्तरम्। तत इति शब्दस्यार्थान्तरमप्याह—यदि वेति। ततः परमपुरुषव्याप्यत्वेन पूर्वोक्तात् प्रपञ्चात् उत्तरतरं यद्रूपमनामयमित्यन्वयः। अत्रापि परमपुरुष एव परत्वेनोच्यते। यदि परमपुरुषादुत्तरतरं वस्त्वस्तीत्यभिधीयते तदा प्रकरणोपक्रमे पुरुषसूक्तप्रत्यभिज्ञानेन परमपुरुषादुत्तरस्य प्रतिक्षेपादुपक्रमोपसंहारयोरुपक्रमबलीयस्त्वस्य न्याय्यत्वादुपक्रमानुगुण्येनोपसंहारवाक्यमस्मदुक्तप्रक्रिययैव योजनीयमिति भावः। इयमत्रशब्दयोजना—अन्यस्येश्वरस्य 'अक्षरात्परतः परः' इत्याधिक्यवादे परं प्रकृत्यादिकं अवधितया यत्र दृष्टं तत्र तस्मिन्नेवोदाहरणे तदवधिरव्याकृतादिस्तदपेक्षया अवधिस्स्यात्। स्वयञ्च 'अक्षरात् परतः परः' इति स्वकार्यवर्गात् परत्वेनापि निर्दिश्यते। अत्र तु 'न ह्येतस्मादिति नेत्यन्यत्परमस्ति' इति 'इति न'

इत्युपदिष्टादन्यत्परं नास्तीति परान्तरराहित्येनोपदिष्टे विषये तत्परोक्तेस्तस्मात्परस्यान्यस्योक्तेरयुक्तेः। तेन परत्वकल्पनं परमपुरुष एव पर्यवस्यति। 'ततो यदुत्तरतरम्' इत्यत्र तु पञ्चम्यन्तस्य तच्छब्दस्य हेतुपरत्वमित्येको निर्वाहः। अवधिपरत्वेऽपि पूर्वोक्तात् परमपुरुषव्याप्यात् प्रकृतत्वेन तच्छब्देन निर्देष्टुं योग्यादित्यपरो निर्वाह इति ॥ ३१४ ॥

इति पराधिकरणम् ॥ ८१ ॥

पद०—अन्यस्येत्यादि। अन्यस्य-प्रथमान्तपरशब्दनिर्दिष्टस्य। आधिक्यवादे-उत्कृष्टत्वकथने। कारणम्-महदादिकार्यकारणभूतम्। परम्-पञ्चमीतसिलन्तपरशब्दविशेषितपञ्चम्यन्ताक्षरशब्दितं वस्तु। यत्र अवधितया दृष्टम्—यस्मिन्वाक्ये उत्कर्षप्रतियोगितयावगतं यथा 'अक्षरात् परतः परः' इत्यादौ। तत्र हि-तादृशस्थले हि। अव्याकृतादिः—प्रधानादिः। तदवधिः-प्रथमान्तपरशब्दार्थानुयोगिकोत्कर्षस्य प्रतियोगी भवति। असौ—अव्याकृतादिः। इतरापेक्षया—स्वकार्यभूतमहदाद्यपेक्षया। परश्च—उत्कर्षाश्रयतया परशब्दितश्च भवति। 'यस्मात्परं नापरमस्ति किञ्चिद्यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित्। वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम्। ततो यदुत्तरतरं तदरूपमनामयम्। य एतद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवापियन्ति' इत्यस्यां श्रुतौ 'ततो यदुत्तरतरम्' इति जगत्कारणभूताद्ब्रह्मणोऽपि परं प्रतीयत इत्याशङ्क्य तस्याश्श्रुतेर्निर्वाह उच्यते—यस्मादन्यदित्यादिना। यस्मादन्यत्परं नेत्यभिहितविषये—'यस्मात्परं नापरमस्ति किञ्चित्' इति पूर्ववाक्ये अपरशब्दस्यान्यवाचकत्वात् 'किञ्चित्' इत्यस्य केनापि प्रकारेणेति भाषणात् यस्मादन्यत्केनापि प्रकारेण परभूतं वस्तु नास्तीत्युक्तपरमपुरुषविषये इत्यर्थः। तत्परोक्तेरयुक्तेः—अनन्तरवाक्ये 'ततो यदुत्तरतरम्' इत्यत्र तत इति शब्देन पूर्ववाक्ये केनापि प्रकारेण स्वभिन्नपरवस्तुशून्यत्वेन निर्दिष्टं परमपुरुषमवधित्वेन निर्दिश्य 'यदुत्तरतरम्' इति तद्भिन्नस्य कस्यचित् परत्वप्रतिपादनस्यायोगात्। तत इति—तत इति पदेन। एवन्त्वादित्यनूक्तिः—यदुत्तरतरं पुरुषतत्त्वं तदेवारूपमनामयं यतः, तत इति वक्ष्यमाणार्थहेतुत्वेन पूर्ववाक्योक्तार्थस्यानुवाद इत्यर्थः। यदि वा-यद्वा। यद् व्याप्यमुक्तम्—'तेनेदं पूर्णं पुरुषेण सर्वम्' इति पूर्ववाक्ये परमपुरुषव्याप्यत्वेन यत् इदंशब्दविशेषितसर्वशब्दनिर्दिष्टं जगत्। तत्—तदेव। तत इति उक्तमस्तु—तत इत्यवधिवाचकशब्दप्रतिपाद्यमित्यङ्गीक्रियतामित्यर्थः। ततश्चायमर्थस्सम्पद्यते—'ततः' पूर्ववाक्ये व्याप्यतया निर्दिष्टात् सर्वस्मादपि वस्तुनः 'यत् उत्तरतरम्' परभूतं यद्वस्तु तदरूपमनामयमिति। चिन्तामणौ तु 'इयमत्र शब्दयोजना—अन्यस्य ईश्वरस्याक्षरात्परतः पर इत्याधिक्यवादे परं प्रकृत्यादिकं अवधितया यत्र दृष्टं तत्र तस्मिन्नेवोदाहरणे तदवधिरव्याकृतादिस्तदपेक्षयावधिः स्यात्। स्वयञ्चाक्षरात्परत इति स्वकार्यवर्गात्परत्वेनापि निर्दिश्यते। अत्र तु 'नचैतस्मादिति नेत्यन्यत्पर-

मस्ति' इति 'इति न' इत्युपदिष्टादन्यत्परं नास्तीति परान्तरराहित्येनोपदिष्टे विषये तत्परोक्तेस्तस्मात्परस्यान्यस्योक्तेरयुक्तेः। तेन परत्वकल्पनं परमपुरुष एव पर्यवस्यति। ततो यदुत्तरतरमित्यत्र तु पञ्चम्यन्तस्य तच्छब्दस्यहेतुपरत्वमित्येको निर्वाहः। अवधिपरत्वेऽपि पूर्वोक्तात्परमपुरुषव्याप्यात् प्रकृतत्वेन तच्छब्देन निर्देष्टुं योग्यादित्यपरो निर्वाहः' इति ॥ ३१४ ॥

इति पराधिकरणम् ॥ ८१ ॥

---

## फलाधिकरणम् ॥ ८२ ॥

सूत्रम्—फलमतउपपत्तेः ॥ ३५१ ॥

आराध्यः कर्मकाण्डस्थितनयनिवहस्थापितानां क्रियाणां
अध्यक्षो देवतानामनुपधिमहिमा मध्यकाण्डोदितानाम्।
अत्राप्येतावतोक्तो भवभयचकितप्राप्त्युपास्त्येकलक्ष्यं
तत्तच्छास्त्रार्थयोग्यं दिशति फलमिति स्थाप्यतेऽथात्युदारः ॥ ३१५ ॥

चिन्ता०—अत्र पूर्वोत्तराधिकरणयोस्सङ्गतिमाह—आराध्य इति। यत्र हि परत्वमौदार्यञ्च स एव हि सेव्य इति लोकप्रसिद्धम्। परत्वे सत्यपि कदर्यस्यासेव्यत्वात्। तथौदार्ये सत्यपि निर्धनस्यासेव्यत्वात्। तेनोत्तरपादप्रतिपाद्योपास्यत्वसिद्ध्यर्थं भगवतः परत्वमुक्तं पूर्वाधिकरणे। इह पुनः फलप्रदत्वकथनात् औदार्यमुच्यत इति पूर्वोत्तराधिकरणसङ्गतिः। तदिदं परत्वं भगवतस्त्रिकाण्ड्यां सर्वत्रोक्तमनूद्य तदन्वितमौदार्यमधुना प्रख्याप्यते। अन्वयार्थस्तु—'सर्वे वेदा यत्रैकं भवन्ति' 'सर्वे होतारो यत्रैकं भवन्ति' 'वर्णाश्रमाचारवता' इत्यादिभिः प्रमाणैः प्रथमकाण्डे विष्णुरेव सर्वकर्मसमाराध्यतया निर्णीतः। मध्यमकाण्डेऽपि 'अग्निरवमो देवतानां विष्णुः परमः' इति स एव सर्वदेवतान्तर्यामित्वेन तदध्यक्षतया प्रतिपादितः। अस्मिन्नपि ब्रह्मकाण्डे पुनरेतावता दशभिरपि पादैर्भाषितो भवभयचकितप्राप्त्युपास्त्येकलक्ष्यमिति प्रागेवास्मिन्पादे विशदतरमुपपादितम्। अथोभयलिङ्गपादान्ते विद्याप्रतिपादनारम्भे तत्तच्छास्त्रार्थयोग्यं नित्यनैमित्तिककाम्यरूपाणां प्रवृत्तिनिष्ठधर्माणां कर्मयोगज्ञानयोगभक्तियोगादिरूपाणां निवृत्तिनिष्ठधर्माणाञ्चानुगुणं फलं दिशतीति विद्यारम्भसिद्ध्यर्थं विशदमुपपाद्यते। नहि प्रयोजनमन्तरेण प्राणिनां प्रवृत्तिस्सम्भवति। नच प्रयोजनं प्रदातारमन्तरेण। न च प्रदातृत्वं परत्वौदार्याभ्यां विना। नापि चैतौ गुणौ पुरुषोत्तमादुभयविभूतिविशिष्टस्वात्मप्रदानमहावदान्याद् भगवतो नारायणादन्यत्र सम्भवत इति भावः ॥ ३१५ ॥

पद०—आराध्य इत्यादि । कर्मकाण्डस्थितनयनिवहस्थापितानाम्—अथातो धर्मजिज्ञासेत्यादिद्वादशलक्षण्यात्मककर्मकाण्डघटका ये नयनिवहा अधिकरणगणास्तैस्स्थापितानां पूर्वपक्षनिरसनेन सिद्धान्तितानाम् । क्रियाणाम्—अग्निहोत्रादिकर्मणाम् । आराध्यः—अग्नीन्द्रादिदेवतान्तर्यामित्वेनाराध्यः । अनुपधिमहिमा—कर्माद्युपाध्यमूलकनिरतिशयस्वरूपगुणविभूतिवैभवः । अत एव, मध्यकाण्डोदितानां देवतानामध्यक्षः—मध्यकाण्डो देवताकाण्डः, तेन विचारितानामग्नीन्द्रादीनां स्वाराधनलब्धतत्तत्पदानां स्वशरीरभूतानां देवतानां स्वरूपस्वभावविभूतिनिर्वाहकः । अत्रापि—अस्मिन्ब्रह्मकाण्डेऽपि । एतावता—दशपादात्मकेन शास्त्रभागेन । भवभयचकितप्राप्त्युपास्त्येकलक्ष्यं उक्तः—भवभयेन चकितानामार्तानां प्राप्तेरुपास्तेश्च मुख्यविषयभूतः प्राप्यप्रापकभूत इति प्रतिपादितः परमात्मा । अथ—उपरितनेन 'फलमत उपपत्तेः' इत्यधिकरणेन । तत्तच्छास्त्रार्थयोग्यं फलं दिशतीति—तत्तच्छास्त्रार्थानां नित्यनैमित्तिककाम्यरूपाणां प्रवृत्तिनिष्ठधर्माणां कर्मयोगज्ञानयोगभक्तियोगादिरूपाणां निवृत्तिनिष्ठधर्माणाञ्चानुगुणं फलं ददातीति । अत्युदारः स्थाप्यते—विचारम्भसिद्ध्यर्थं तस्यौदार्यं विशदमुपपाद्यते । नहि प्रयोजनमन्तरेण प्राणिनां प्रवृत्तिस्सम्भवति न च प्रयोजनं प्रदातारमन्तरेणेति प्रदातृत्वं तस्य प्रतिपाद्यत इति भावः ॥ ३१५ ॥

कृष्यादेर्मर्दनादेरपि भवति फलं द्वारतो वान्यथा वा
धर्माणां साधनत्वं श्रुतिभिरवगतं दोषबाधोज्झिताभिः ।
तस्मादीशप्रसादात्फलमिति तु वचस्तत्प्रशंसेति चेन्न
श्रौताराध्यप्रसादत्यजनकदनतोऽपूर्वक्लृप्तेरयोगात् ॥ ३१६ ॥

चिन्ता०—सङ्गतिरुक्ता । तदर्थविचारस्तु—किं सापूर्वात्कर्मोपासनात् स्वर्गापवर्गफलोत्पत्तिः उत कर्मोपासनप्रीताद् वाय्वाद्यवस्थात् केवलाच्च परस्माद् ब्रह्मण इति । किं 'स एवैनं भूतिं गमयति' 'यमेवैष वृणुते तेन लभ्यः' इत्यादिवाक्यशेषो वाय्वाद्यवस्थस्य केवलस्य च फलप्रदातृत्वमवगमयति नेति । किमयं वाक्यशेषो यथाप्रतीयमानार्थः, उतान्यपर इति । अत्र पूर्वपक्षवादी मन्यते—कृष्यादेरिति । लोके कृष्यादेर्मर्दनादेरपि फलमस्तीत्यविवादमेतत् । अन्यथा प्रवृत्त्ययोगात् । तच्च फलं दृष्टद्वारेणैव जायते न पुनरदृष्टद्वारा कल्पनागौरवप्रसङ्गात् । अव्यवहितफलोत्पत्तौ दृष्टमपि द्वारं नापेक्षते । धर्माणां पुनः साधनत्वं श्रुत्यवगतत्वादपरित्याज्यमेव । न च 'आदित्यो यूपः' इत्यादिवत् श्रुतिरत्र बाधवती । तेन बाधदोषोज्झिताभिश्श्रुतिभिरवगतत्वादस्त्येव धर्माणां साधनत्वम् । इत्थं धर्माणां साक्षात् साधनत्वे श्रूयमाणेऽपीश्वरप्रसादात् फलमिति वचनमीश्वरप्रशंसार्थमेवेति कल्पयितुं युक्तम् । आशङ्कितमर्थं प्रतिक्षिपति—नेति ।

तत्र हेतुमाह—श्रौतेति। अत्रायं विभागः—कर्मैव कालान्तरभाविफलं ददातीत्येकः पक्षः। कर्मव्यतिरिक्तमपूर्वाभिधानमित्यपरः। कर्मरूपाराधनप्रीतो देवताविशेष इति तृतीयः। प्रथमपक्षे कर्मणश्चिरप्रध्वस्तत्वात् फलहेतुत्वमेव न सम्भवति। द्वितीये तु पक्षे श्रुतहानाश्रुतकल्पनाभ्यां द्वौ दोषौ स्तः। श्रूयते हि 'स एनं प्रीतः प्रीणाति' इत्यादिना देवतायाएव फलप्रदत्वम्। तेन तृतीयः पक्षः श्रौतत्वादर्थविरोधाभावाच्च स्वीकर्तव्य इति देवताया एव फलप्रदत्वं सिद्धम्। इदं तु सामान्यं 'अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च' इति सर्वकर्मसमाराध्यत्वं सर्वकर्मफलप्रदत्वं चोच्यते। अप्रदानशीलस्य हि प्रभुत्वं गगनकुसुमकूर्मरोमनरविषाणादिष्वन्यतमायते। तेन प्रभुत्वमिति फलप्रदत्वमेवोच्यत इति भाष्यकारा निरणैषुः। तस्यैव वाक्ये वक्तुं योग्यत्वादाकाङ्क्षितत्वाच्चेति ॥ ३१६ ॥

पद०—कृष्यादेरित्यादि। कृष्यादेर्मर्दनादेरपि द्वारतो वा अन्यथा वा फल भवति—कृष्यादिव्यापारस्य मर्दनादिव्यापारस्य च किञ्चिददृष्टद्वारा वा साक्षादेव वा तत्तत्फलं भवति। इदं लोकसिद्धमेव हीति भावः। दोषबाधोज्झिताभिश्श्रुतिभिर्धर्माणां साधनत्वमवगतम्—अपौरुषेयतया विप्रलिप्सादिकारणदोषशून्याभिः प्रमाणान्तरानधिगतस्वार्थकतया स्वतःप्रत्यक्षादिवत् प्रमाणतया च प्रमाणान्तरबाधशून्याभिः 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यादिभिश्श्रुतिभिर्ज्योतिष्टोमादिरूपाणां धर्माणां स्वर्गादितत्तत्फलसाधनत्वमवगतम्। तस्मात्—श्रुतिप्रमाणेन ज्योतिष्टोमादिधर्माणामेव तत्तत्फलसाधनत्वावगमात्। ईशप्रसादात्फलम्—ईश्वरप्रसादात् तदाराधनभूतकर्मानुष्ठानजनितात् ऐहिकामुष्मिकसर्वफलम्।

इति वचस्तु—

'यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम्।
स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः॥'

इत्यादिरूपं वचनं तु। तत्प्रशंसा—ईश्वरस्तुतिरेव। इति चेन्न—इति शङ्क्यते चेतन्न सत्। श्रौताराध्यप्रसादत्यजनकदनतः—श्रौतस्य 'वायुमेव स्वेन भागधेयेनोपधावति सएवैनं भूतिं गमयति' इत्यादिश्रुतिवचनैस्तत्तत्फलसाधनतया कण्ठोक्तस्य आराध्यप्रसादस्य आराध्यदेवताप्रसादस्य त्यजनं हानं तदेव कदनं दोषस्तस्मात्। अपूर्वक्लृप्तेरयोगात्—अपूर्वशब्दितस्याश्रुतस्य द्वारस्य कल्पनासम्भवात्। अयमाशयः—कर्मैव कालान्तरभाविफलं ददातीत्येकः पक्षः। कर्मव्यतिरिक्तमपूर्वाख्यमित्यपरः। कर्मरूपाराधनप्रीतो देवताविशेष इत्यन्यः। प्रथमपक्षे कर्मणश्चिरप्रध्वस्तत्वात् फलहेतुत्वमेव न सम्भवति द्वितीयेतु पक्षे श्रुतहानाश्रुतकल्पनाभ्यां द्वौ दोषौ स्तः। तेन तृतीय एव पक्षश्श्रौतत्वात् अर्थविरोधाभावाच्च स्वीकर्तव्य इति देवताया एव फलप्रदत्वं सिद्धम्। तत्र च 'इष्टापूर्तं बहुधाजातं जायमानं विश्वं बिभर्ति भुवनस्य नाभिः'

'चतुर्होतारो यत्र सम्पदं गच्छन्ति देवैः' 'अन्तःप्रविष्टश्शास्ता जनानां सर्वात्मा' 'स आत्मा अङ्गान्यन्या देवताः' योऽग्नौ तिष्ठन्, यो वायौ तिष्ठन्, य आदित्ये तिष्ठन्' 'यस्सर्वेषु देवेषु सर्वेषु भूतेषु' इत्यादिभिः 'अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च' इत्याद्युपबृंहितैर्वाय्वादिदेवतान्तर्यामिणो भगवत एव तत्तत्कर्मसमाराध्यत्वफलप्रदत्वावगमात् तत्तद्देवताशरीरकभगवत्प्रसादादेव सर्वफललाभः, निवृत्तिधर्माणां त्वव्यवधानेन भगवदाराधनरूपत्वात् तत्प्रसादादेव परमपुरुषार्थलाभ इति भगवत एव सर्वफलप्रदत्वरूपं परमौदार्यं विद्यारम्भप्रवृत्त्यर्थमनेनाधिकरणेनोक्तमिति ॥ ३१६ ॥

**यद्यप्याराध्यमूलं फलमपि फलितं देवताधिक्रियायां**
**कर्मापेक्षा तथोक्ता फलजननपरप्रेरणादौ तथापि ।**
**साक्षित्वानादरत्वप्रभृतिपरगुणान् प्रेक्ष्य तत्प्रीणनादौ**
**शङ्कातङ्कैर्निरुद्धांस्त्वरयितुमधुना तादृशोदारतोक्तिः ॥ ३१७ ॥**

चिन्ता०—अत्र फलप्रदत्वकथने तत्रतत्र पूर्वोक्तार्थविशेषेण पौनरुक्त्यमाशङ्क्य प्रतिक्षिपति—यद्यपीति । पूर्वं हि देवताधिकरणे 'प्रीतिः फलप्रदानञ्च देवतानां न विद्यते' इति वदतां प्रतिक्षेपात् फलप्रदत्वमुक्तमेव । समनन्तरं तु 'कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः' इत्यस्मिन्नपि सूत्रे पूर्वकर्मानुरूपं पुण्यपापयोरीश्वरः प्रवर्तयतीति कर्मफलमीश्वराधीनमित्युक्तम् । तत् किमर्थं फलप्रदत्वमत्राप्युच्यते ? तदेतदङ्गीकृत्यैव प्रतिक्षिपति—तथापीति । 'साक्षी चेता' 'अवाक्यनादरः' इत्यादौ तत्रतत्रवेदान्तवाक्ये साक्षित्वानादरत्ववचनात् तच्छ्रवणमात्रेण बिभ्यतउपासकस्योपासनप्रवृत्तिरेवोत्सीदेत् । तेनेश्वरस्योपेक्षकत्वादिशङ्कातङ्कपङ्किलबुद्धेरुपासकस्य भयनिवारणार्थं परमोदारस्य भगवतश्श्रियः पत्युः शरणागतरक्षणैकतानचित्तस्यौदार्यमेव प्रधानगुणमस्मिन्नधिकरणे प्रतिष्ठापयति सूत्रकार इति साफल्यान्न पौनरुक्त्यगन्धावकाशः ॥ ३१७ ॥

पद०—यद्यपीत्यादि । देवताधिक्रियायाम्—'तदुपर्यपि' इत्यादिरूपे देवताधिकरणे । फलमपि आराध्यमूलं यद्यपि फलितम्—तत्तत्कर्मफलमप्याराध्यभूतदेवताप्रसादमूलकमिति यद्यपि फलितम्, उक्तप्रायमेव । तथा फलजननपरप्रेरणादौ कर्मापेक्षा च उक्ता—तद्वदेव 'कृतप्रयत्नापेक्षस्तु' इत्यादिसूत्रे तत्तत्फलप्रदाने पुण्यपापयोर्जीवप्रवर्तने च ईश्वरस्य जीवकर्मसापेक्षत्वमप्युक्तम् । तेन कर्मफलमीश्वराधीनमित्युक्तमेव । तथापि—उक्तं तथ्यमेव तथापि । साक्षित्वानादरत्वप्रभृतिपरगुणान् प्रेक्ष्य—'साक्षी चेता केवलो निर्गुणश्च' 'अवाक्यनादरः' इत्यादिश्रुतिप्रतिपन्नान् साक्षित्वानादरत्वप्रभृतीन्

ईश्वरगुणानालोच्य । कथं तटस्थस्तथानादरश्च भगवानास्माकीनक्षुद्रव्यापारस्य फलं ददातीत्यालोच्येति भावः । तत्प्रीणनादौ शङ्कातङ्कैर्निरुद्धान्—तत्प्रसादजनकविद्यानुष्ठानादौ पूर्वोक्तगुणावगतिमूलकशङ्कापीडनैर्विघ्नितप्रवृत्तिकान् चेतनान् । त्वरयितुम्—साक्षित्वानादरत्वादिकमन्यविषयकमन्यार्थकञ्च, भगवान् व्याजमात्रापेक्षया सर्वफलं ददाति, अतस्सर्वैरपि यथारुचि तत्तत्फललाभाय यथाधिकारं स्वव्यापारैः प्रीणनीय इति प्रतिपादनेन विद्यारम्भे पुनः प्रवर्तयितुमित्यर्थः । अधुना—एतदधिकरणे । तादृशोदारतोक्तिः—तादृश्याः इयत्ताशून्यायाः उदारतायाः अतिस्वल्पव्याजेनाखिलफलप्रदातृत्वरूपायाः उक्तिः प्रतिपादनमिति ॥ ३१७ ॥

सम्राजस्सानुकम्पात्पितुरुचितविदस्साम्यभाजो वदान्यात्
स्थाने विन्दन्ति पुत्रा नियतरुचिभिदायन्त्रितास्तं तमर्थम् ।
तत्र प्राप्यं स्वतो यद्विहतिरिह यतस्तत्प्रशान्तिश्च यस्माद्
देयं यच्चाविशेषाद्दमनमपि यथालोकमत्रापि तत्स्यात् ॥ ३१८ ॥

इति फलाधिकरणम् ॥ ८२ ॥

चिन्ता०—ईश्वरस्य फलप्रदानप्रकारं राजतत्पुत्रन्यायेन लोकदृष्टप्रक्रियया प्रतिष्ठापयति—सम्राज इति । लोके हि केषाञ्चित् पुत्राणां कश्चिदपि पिता सम्राडेव भवति स च सानुकम्पः कर्तव्याकर्तव्ययोरुचितमप्यर्थं जानाति सर्वेषु च पुत्रेषु साम्यमेव भजते वदान्यश्च भवति । सर्वेष्वपि पुत्रेषु औदार्यमपि साधारणमेवेत्यर्थः । एवम्भूतात् पितुः पुत्रा नियतरुचिभिदायन्त्रितास्स्वस्वेच्छानुरूप्येण स्वाभीष्टं तंतमर्थं विन्दन्ति लभन्ते । एवं परमपुरुषादप्येतद्गुणजातोपेतात् पुत्रकल्पास्सर्वे तत्सेवकाः पुरुषाः स्वाभीष्टमर्थं लभन्त इतिशेषः । तत्र प्राप्यप्रापकतद्विरोधितदुपशमनादिकं सकलमपि पितापुत्रन्यायेनेश्वरेऽपि स्यादिति विशदं प्रकाशयति—तत्रेति । स्वतः प्राप्यं गृहक्षेत्रादिकं दायरूपं यत् यतः पित्राज्ञोल्लङ्घनादिहेतोस्तस्य विहातिर्भवति । तत्प्रशान्तिश्च यस्मात्—पुनरागत्य तत्पादप्रणामादेः । यच्च देयं धनाभरणपट्टवस्त्रच्छत्रचामरादिकम् । अविशेषादपराधक्षमापणाभावे दमनमपि शिक्षणमपि यथालोकं तत्सर्वमत्रापि स्यात् । राजभृत्यस्य तु राजाज्ञोल्लङ्घने पादच्छेदादिदमनम्, तत्पुत्रस्य तु जीविकासङ्कोचादिकम् । एवमभागवतानां पापफलं शास्त्रोक्तं नरकप्रायणादिकम् । भागवतानां तु बुद्धिपूर्वकापराधप्रसङ्गे 'न खलु भागवता यमविषयं गच्छन्ति । इहैवैषां केचिदुपप्लवा भवन्ति' इति काणत्वखञ्जत्वादिकमेव दमनम् । तेन 'लघुर्दण्डः प्रपन्नस्य राजपुत्रापराधवत्' इत्युक्तप्रकारेण प्रपन्नानामपराधाननुरूपद-

ण्डनमत्यल्पमेव स्यादिति सकलफलप्रदे भगवति परमकारुणिके विश्वासेन ब्रह्मविद्यानुष्ठानं सहसैव कर्तव्यमितीदमधिकरणमुपासनारम्भमेव सन्धुक्षयति ॥ ३१८ ॥

इति फलाधिकरणम् ॥ ८२ ॥

पद०—सम्राज इत्यादि । सम्राजः—राजसूयकर्ता बहुराजनियन्ता मण्डलाधिपतिस्सम्राड् तथाविधात् । सानुकम्पात्—दयालोः । स्वार्थनैरपेक्ष्येण परदुःखासहिष्णोरित्यर्थः । उचितविदः—कर्तव्याकर्तव्ययोरुचितमर्थं विजानानात् । साम्यभाजः—सर्वेष्वपि पुत्रेषु साम्यं भजमानात् । वदान्यात्—महोदारात् । पितुः—स्वपितुस्सकाशात् । पुत्राः, नियतरुचिभिदायन्त्रिताः—स्वस्वहृदयव्यवस्थितरुचिभेदनियतास्सन्तः । तं तमर्थम्—स्वस्वापेक्षितं धनाभरणादिकम् । विन्दन्ति—लभन्ते । इदं स्थाने—युक्तम् । एवं परमपुरुषादप्येतद्गुणजातोपेतात् पुत्रकल्पास्सर्वेऽपि तत्सेवकाः पुरुषास्स्वाभीष्टं लभन्त इति शेषः । तत्र—दृष्टान्तस्थले । स्वतः प्राप्यं यत्—स्वतः प्राप्यं गृहक्षेत्रादिकं दायरूपं यत् । यतः—पित्राज्ञोल्लङ्घनादिरूपात्प्रतिबन्धकात् । इह—पूर्वोक्तप्राप्यविषये । विहतिः—विघ्नो भवति । तत्प्रशान्तिश्च—दायप्राप्तिविघ्नस्य निवृत्तिश्च । यस्मात्—पुनरागत्य तत्पादप्रणामादेर्यस्मात् । अविशेषादेयं यच्च—अविशेषेण तुल्यतया सर्वेभ्योऽपि प्रदेयञ्च यद्भवति । दमनमपि—अपराधक्षमापणाभावे शिक्षणमपि यत् । तत्—तत्सर्वम् । यथालोकम्—लोकमनतिक्रम्य लोकतुल्यमेवेत्यर्थः । अत्रापि स्यात्—ईश्वरविषयेऽप्यनुसन्धेयं भवतीत्यर्थः । राजभृत्यस्य तु राजाज्ञोल्लङ्घने पादच्छेदादि दमनं तत्पुत्रस्य तु जीविकासङ्कोचादिकम्, एवमभागवतानां पापफलं शास्त्रोक्तं नरकप्रायणादिकम्, भागवतानां तु बुद्धिपूर्वापराधप्रसङ्गे 'न खलु भागवता यमविषयं गच्छन्ति इहैवैषां केचिदुपप्लवा भवन्ति' इति वचनरीत्या कञ्जत्वकाणत्वादिकमेव दमनम् । तेन 'लघुर्दण्डः प्रपन्नस्य राजपुत्रापराधवत्' इत्युक्तप्रकारेण प्रपन्नानामपराधानुरूपमेव दण्डनमत्यल्पमेव स्यादिति सकलफलप्रदे भगवति परमकारुणिके विश्वासेन विद्यानुष्ठानं सहसैव कर्तव्यमितीदमधिकरणमुपासनारम्भमेव सन्धुक्षयति ॥ ३१८ ॥

इति फलाधिकरणम् ॥ ८२ ॥

भगवत्पारम्यज्ञानोद्दीपनाय पादप्रधानार्थकथनम् ।

शुद्धानन्दे तदित्थं शुभगुणजलधौ सत्यनित्यस्वदेहे
देवीभूपायुधाद्यैरतिशयिनि कनद्भोगलीलाविभूतौ ।
शेषित्वाधारभावप्रभृतिबहुविधस्थास्नुसम्बन्धदीप्ते
दृष्टिस्स्वर्गापवर्गप्रसवितरि हरौ निर्निमेषा श्रुतिर्नः ॥ ३१९ ॥

चिन्ता०—पादार्थेषु प्रधानार्थविशेषान् प्रकटयन् भगवत्पारम्यबुद्धिमुद्दीपयति—शुद्धानन्द इति । अयमत्र शब्दार्थः—तत् एवमुपपादनात् शुद्धानन्दस्वरूपे परस्मिन्ब्रह्मणि शुभगुणजलधौ सत्यनित्यस्वदेहे परमार्थनित्यविग्रहवति देवीभूषायुधपरिजनपरिच्छदादिभिरतिशयिनि। कनद्भोगलीलाविभूताविति विभूतिद्वयविशिष्टत्वमाह । कनदिति देदीप्यमानत्वमुच्यते । 'अथ यदतः परो दिवो ज्योतिर्दीप्यते' इति हि श्रुतिः । शेषित्वेति—आधेयत्वविधेयत्वशेषत्वैर्विश्वस्य शरीरत्वम्, आधारत्वादिभिरीश्वरस्य शरीरित्वमिति वेदान्तार्थतत्त्वनिर्णयसारः । सम्बन्धस्य स्थास्नुत्वं नित्यसिद्धत्वम् । स्वर्गापवर्गप्रसवितरीति 'फलमत उपपत्तेः' इत्यधिकरणार्थं विशेषतः प्राह । एवम्भूते हरौ निर्निमेषा दृष्टिरस्माकं श्रुतिरेवाबाधितप्रमाणमित्यर्थः । तेन श्रुतिसिद्धेष्वेतेष्वर्थेषु विवादो न वैदिकैः कर्तव्य इत्यर्थः । तेन कक्षानुमानतुल्यैरनुमानाभासैरीश्वरगुणविग्रहविभूत्यादिकं निराकुर्वतां सर्वेषामेव पूर्ववादिनां श्रुतिरेव परिपन्थिनीति नरशिरःपवित्रत्वानुमानमपि ते नमस्कुर्वन्तु । पुरस्कुर्वन्तु च 'ब्राह्मणेन सुरा पेया' इत्यादिकमपि वचनम्। अथवा मनुष्यत्वादिभिस्स्वब्राह्मण्यमपि तिरस्कुर्वन्त्विति हास्यमेवावशिष्यते ॥ ३१९ ॥

पद०—शुद्धानन्द इत्यादि । तत् इत्थम्–तत एवमुपपादनात् । शुद्धानन्दे—दुःखसंवलनसातिशयत्वरूपाशुद्धिरहितापरिच्छिन्नानन्दे । शुभगुणजलधौ–शुभानां हेयप्रतिभटानां गुणानां ज्ञानशक्तिवीर्यतेजःप्रभृतीनां जलधौ आकरभूते । सत्यनित्यस्वदेहे–सत्यः प्रमाविषयभूतो नित्यस्सदातनः स्वदेहस्स्वासाधारणश्शुद्धसत्त्वमयः कल्याणतमो देहो यस्य स सत्यनित्यस्वदेहस्तस्मिन् । देवीभूषायुधाद्यैरतिशयिनि—देवीभिस्श्रीभूमिनीलादिभिः भूषाभिः किरीटमकुटचूडावतंसप्रभृतिभिः आयुधैः हेतिराजश्रीपाञ्चजन्यनन्दककौमोदकीशार्ङ्गादिभिः आद्यशब्दार्थैश्शेषशेषाशनादिपरिजनपरिच्छदैश्च अतिशयिनि स्वेतरसमस्तचेतनव्यावृत्तातिशयभाजि । कनद्भोगलीलाविभूतौ—कनन्त्यौ भोगविभूतिलीलाविभूती यस्य तस्मिन् । शेषित्वाधारभावप्रभृतिबहुविधस्थास्नुसम्बन्धदीप्ते—शेषित्वं चेतनाचेतनात्मकोभयविभूतिस्थवस्तुजातलब्धलीलाभोगरसात्मकोत्कर्षशालित्वम्, आधारभावः स्वरूपेण सङ्कल्पविशेषेण च धारकत्वम्, एतत्प्रभृतिभिः पितृत्वमातृत्वभ्रातृत्वसुहृत्त्वादिभि र्बहुविधैः स्थास्नुभिः स्थिरतरैर्नित्यैरिति यावत् सम्बन्धैः दीप्ते प्रकाशमाने । स्वर्गापवर्गप्रसवितरि–स्वर्गशब्दस्त्रिवर्गपरः, अपवर्गशब्दो मोक्षवाची, तथाच त्रिवर्गापवर्गात्मकसर्वफलप्रदातरि । हरौ–श्रीमन्नारायणे परमात्मनि विषये । श्रुतिः—अनादिनिधनाविच्छिन्नसम्प्रदायाअसम्भावितदोषगन्धा श्रुतिरेव । नः–अस्माकम् । निर्निमेषा—निमेषरहिता दृष्टिः । तथैवैवङ्गुणगणमेवंविभूतिकमेवंस्वरूपं पुरुषोत्तममद्राक्ष्म येऽन्येऽन्यथा प्रलपन्ति तेऽपदृश्य एवेति तेषां वचनं जात्यन्धवचनवत् दूरतस्त्याज्यमिति भावः ॥ ३१९ ॥

तृतीयाध्यायद्वितीयपादाधिकरणार्थानां विभज्यकथनम्।

पादे स्वाप्नार्थहेतुस्तदयमिह सुषुप्त्याधृतिस्सुप्तगोप्ता
मुग्धोद्बोधादिकर्ता त्वनघशुभगुणोऽचिद्भिरंशी स्वदेहैः।
पारम्यस्यैकसीमा सकलफलद इत्युच्यते भक्तिभूम्ने
सत्ये ह्येवं गुणादावथ परभजने रूपभेदादि चिन्त्यम् ॥ ३२० ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु अधिकरणसारावल्यां
तृतीयस्याध्यायस्य द्वितीयः पादः

चिन्ता०—उत्तरत्र विद्याभेदेषु गुणभेदकथनार्थमेतत्पादे प्रत्यधिकरणमुक्तानर्थभेदान् प्रत्येकमुपादाय प्रकटयति—पाद इति। स्वप्नसम्बन्ध्यर्थस्रष्टा सुषुप्त्याधृतिस्सुषुप्त्याधारस्सुप्तगोप्ता सुप्तस्य विनाशाभावेन संरक्षकः। मुग्धोद्बोधादिकर्ता मूर्च्छितस्योद्बोधं कदाचित् करोति। कदाचिन्मरणमित्यादिशब्दार्थः। अनघशुभगुण इत्युभयलिङ्गत्वमुच्यते। अचिद्भिरंशी स्वदेहैरित्यहिकुण्डलाधिकरणार्थ उच्यते। अथ पराधिकरणार्थः—पारम्यस्यैकसीमेति। एक एव परस्तस्मात् परो नास्तीत्यर्थः। सकलफलद इति फलाधिकरणार्थः। एवमुच्यते भगवान् किमर्थमित्याशङ्क्याह—भक्तिभूम्न इति। वक्ष्यमाणब्रह्मविद्यारूपभक्त्यभिवृद्ध्यर्थमित्यर्थः। ननु व्यावहारिकं गुणजातमेतादृशमस्त्विति वयमपि ब्रूम इति मृषावादिनः प्रवदन्ति तत्रोत्तरमाह—सत्ये हीति। एवमुक्ते गुणादौ सत्ये सत्येव ह्यनन्तरपादे परभजनादौ रूपभेदादिकं वक्तुं शक्यते। अयमर्थः—तत्त्वमेव वेदान्तशास्त्रमुपपादयति। तत्प्रतिपाद्यमर्थजातमतत्त्वं चेत् किं तत्त्वम्? न किमपीति चेत् माध्यमिकसङ्करप्रसङ्गः। विशेषणमतत्त्वं विशेष्यमात्रं तत्त्वमिति चेत् कः प्राह? श्रुतिरितिचेद् वाच्यत्ववेद्यत्वादिभिः पुनरपि मिथ्याभूतं ब्रह्म स्यात्। स्वयम्प्रकाशं तदिति चेत् किं तत् स्वयम्प्रकाशत्वम्? अवेद्यत्वे सति अपरोक्षव्यवहारानुगुणत्वमिति चेद् व्यवहारानुगुणत्वादेव पुनरपि मिथ्यात्वमुन्मज्जेत्। स्वयम्प्रकाशत्वमृषात्वान्न दोषइति चेत् स्वयम्प्रकाशत्वस्य मिथ्यात्वे परप्रकाशत्वमेव तथ्यमिति पुनरपि दृश्यत्वान्मिथ्यात्वं समर्थयसे ब्रह्मण इत्यसम्बद्धवादिना भवता विवादमपि कर्तुमपत्रपामहे ॥ ३२० ॥

इति निखिलतार्किकचूडामणिना सर्वतन्त्रस्वतन्त्रेण
श्रीमद्वरदार्यापरनाम्ना कुमारवेदान्ताचार्येण
विरचिते शारीरकाधिकरणचिन्तामणौ
तृतीयस्याध्यायस्य द्वितीयः पादः

पद०—पाद इत्यादि। तत्—तस्मात् उक्तोपपादनात्। इह पादे—उभयलिङ्गपादे। अयम्—परमात्मा। स्वाप्नार्थहेतुः—स्वप्नसम्बन्ध्यर्थस्य स्रष्टा। सुषुप्त्याधृतिः—सुषुप्त्याधारः। सुप्तगोप्ता—सुप्तस्य विनाशाभावेन संरक्षकः। मुग्धोद्बोधादिकर्ता—मुग्धस्य मूर्च्छितस्य कदाचिदुद्बोधं करोति कदाचिन्न करोतीत्यर्थः। तुः पादपूरणे। अनघशुभगुणः—अनघा हेयप्रत्यनीकाश्शुभगुणाः कल्याणगुणा यस्य सः। उभयलिङ्ग इत्यर्थः। स्वदेहैरचिद्भिरंशी—स्वशरीरभूताचिद्विशिष्ट इत्यर्थः। अचितोऽपि विशेषणत्वेनैवांशत्वमित्यर्थः। पारम्यस्य एकसीमा—एक एष एव परस्तस्मात्परो नास्तीत्यर्थः। सकलफलदः—त्रिवर्गापवर्गफलप्रदः। इति—एतादृशानन्यसाधारणगुणविशिष्टतया। भक्तिभूम्ने उच्यते—वक्ष्यमाणब्रह्मविद्यारूपभक्त्यभिवृद्ध्यर्थमभिहित इत्यर्थः। एवं गुणादौ सत्ये हि—एवमुक्ते गुणादौ सत्ये सत्येव हि। अथ परभजने रूपभेदादि चिन्त्यम्—अनन्तरपादे परभजनादौ रूपभेदादिकं विचारयितुं शक्यम्। उक्तगुणानां वक्ष्यमाणगुणानाञ्चासत्यत्वे रूपभेदादिकं चिन्तयितुं न शक्यमेव रूपाणामेवाभावादिति भावः। स्वाप्नार्थहेतुरिति 'सन्ध्ये सृष्टिः' इत्यादिप्रथमाधिकरणार्थः। सुषुप्त्याधृतिरिति 'तदभावो नाडीषु' इत्यादिद्वितीयाधिकरणार्थः। सुप्तगोप्तेति 'स एव तु कर्मानुस्मृति' इत्यादितृतीयाधिकरणार्थः। मुग्धोद्बोधादिकर्तेति 'मुग्धेऽर्धसम्पत्तिः' इत्यादिचतुर्थाधिकरणार्थः। अनघशुभगुण इति 'न स्थानतोऽपि' इत्यादिपञ्चमाधिकरणार्थः। स्वदेहैरचिद्भिरंशीति 'उभयव्यपदेशात्त्वहिकुण्डलवत्' इत्यादिषष्ठाधिकरणार्थः। पारम्यस्यैकसीमेति 'परमतस्सेतून्मान' इत्यादिसप्तमाधिकरणार्थः। सकलफलद इति 'फलमत उपपत्तेः' इत्याद्यष्टमाधिकरणार्थः। अस्मिन्पादे प्रथमं चतुरधिकरणान्येका पेटिका ततःपरं पञ्चमषष्ठसप्तमाष्टमाधिकरणान्येका पेटिकेति पेटिकाद्वयम्॥ ३२०॥

इति श्रीमद्रङ्गनाथशठमथनयतिराजकटाक्षलब्धोभयवेदान्तहृदयस्य भारद्वाजस्य श्रीनिवासराघवदासस्य (श्रीमदहोबिलमठमहास्थाननिर्वहणधुरन्धर श्रीमद्वेदमार्गप्रतिष्ठापनाचार्य परमहंसपरिव्राजकाचार्य सर्वतन्त्रस्वतन्त्रोभयवेदान्ताचार्य श्रीभगवद्रामानुजसिद्धान्तनिर्धारणसार्वभौम श्रीलक्ष्मीनृसिंहदिव्यपादुकासेवकश्रीवण्शठकोपश्रीशठकोपरामानुजमहादेशिकस्य) कृतौ अधिकरणसारावलीव्याख्यायां पदयोजनाख्यायां

तृतीयस्याध्यायस्य द्वितीयः पादः

———

## तृतीयस्याध्यायस्य तृतीयः पादः

# सर्ववेदान्तप्रत्ययाधिकरणम् ॥ ८३ ॥

सूत्रम्—सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॥ ३५५ ॥

तत्त्वज्ञानानुविद्धं हिततममनघं मोक्ष्यमाणस्य वक्तुं
तत्त्वे निर्धूय तर्कज्वरजनितमहासन्निपातप्रलापान् ।
निष्पन्ने तत्त्वबोधे न किमपि विदुषा साध्यमित्युद्गृणद्भ्यो
यावज्जीवानुवर्त्यं मुररिपुभजनं मुक्तिलाभाय वक्ति ॥ ३२१ ॥

चिन्ता०—एवं पूर्वोक्तैर्दशभिः पादैर्मोक्षोपायोपयुक्तं तत्त्वज्ञानं प्रतिष्ठापितम् । उत्तरत्र षड्भिः पादैः परब्रह्मप्राप्तिरूपफलसंवलितं तद्धेतुभूतमुपासनं विशदमेव प्रकाश्यत इति पूर्वोत्तरयोरन्वयमाह—तत्त्वज्ञानेति । मोक्ष्यमाणस्य पुरुषस्य तत्त्वज्ञानानुविद्धं हिततममुपासनमुत्तरत्र वक्तुं तत्त्वे विषये तर्कज्वरजनितमहासन्निपातप्रलापान् परवादान् निर्धूयाधुना तत्त्वबोधे निष्पन्ने सति तत्त्वज्ञानस्य सञ्जातत्वात् ।

'दग्धाखिलाधिकारत्वात् ब्रह्मज्ञानाग्निना मुनिः ।
वर्तमानश्श्रुतेर्मूर्ध्नि नैव स्याद्वेदकिङ्करः ॥'

इति वेदकिङ्करत्वमपलपद्भ्यो मृषावादिभ्यः 'स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसम्पद्यते' इति श्रुतिसिद्धं यावज्जीवानुवर्त्यं मुररिपुभजनं मुक्तिसिद्धये वक्तीत्यन्वयः । इत्थं किल मृषावादी मन्यते—य एव ह्यहङ्कारादियुक्तः सएव वेदकिङ्करः ; कर्तृत्वभोक्तृत्वयोरनात्मधर्मत्वात् । काम्यकर्तृत्वं तावत् संसारहेतुत्वान्निरस्तमेव ज्ञानिनः । ब्रह्मोपासनकर्तृत्वमपि तथैव निरस्तं तस्यापि सांसारिकधर्मान्तर्भावात् । ब्रह्म तु न ज्ञेयं नोपास्यं न प्राप्यमपि । नच वेदैरयमर्थो ज्ञाप्यते । नित्यस्वयम्प्रकाशत्वात् स्वयम्प्रकाशत्वमपि न निरुच्यते । तदनिर्वचेने कथं ब्रह्मसिद्धिरितिचेत् मा भूत् ब्रह्मसिद्धिः । अत एव ह्यध्यात्मविदः प्रवदन्ति 'अवचनेनैव प्रोवाच' इति । एवमसम्बद्धवादिनो मिथ्यावादिनस्सद्विद्यामपि स्वसमयसारभूततया परिगृहीतां परित्यजन्ति किमुत दहरविद्यादिकान् विद्याभेदान् विविधगुणपरिष्कारयुक्तान् । अतस्तत्प्रतिक्षेपायारभ्यत इति ॥ ३२१ ॥

पद०—तत्त्वज्ञानानुविद्धमित्यादि। मोक्ष्यमाणस्य—'तेनैव मोचनीयास्ते' इति प्रमाणानुसारेण प्रसदनव्यापारशान्तहृदयकालुष्येण भगवता भवपाशात् मोक्ष्यमाणस्य पुरुषस्य। अनघम्—उपनिषत्प्रमाणप्रतिपन्नतया फलव्यभिचारादिदोषशून्यम्। तत्त्वज्ञानानुविद्धम्—तत्त्वज्ञानेन पूर्ववर्तिना नित्यसम्बद्धम्। तत्त्वज्ञाने सिद्धे ह्यनन्तरमुपासनानुष्ठानम्। हिततमम्—अनाद्यज्ञातिलङ्घनजनितस्य दायवत् स्वतःप्राप्तनिरन्तरभगवदनुभवादिरूपपरमपुरुषार्थप्रत्यूहभूतस्य भगवद्धृदयकालुष्यस्य शमनद्वारा पुरुषार्थसाधकमुपासनम्। वक्तुम्—तृतीयपादे सम्यगुपपादयितुम्। तत्त्वे—तदुपोद्घाततया प्रथममवश्यज्ञातव्यचिदचिदीश्वराख्यप्रामाणिकार्थजातविषये। तर्कज्वरजनितमहासन्निपातप्रलापान्—तर्का व्याप्तिशून्यत्वादिदोषाविचारेण प्रवर्त्यमाना व्याप्याभासारोपेण व्यापकाभासारोपरूपास्त एव ज्वरः तज्जनितो महान् अप्रतिचिकित्स्यः सन्निपातो महामोहो येषां तेषां प्रलापान् पूर्वोत्तरविरुद्धवचनानि। निर्धूय—निराकृत्य। दशपादात्मकेन शास्त्रभागेनेतिशेषः। तत्त्वबोधे निष्पन्ने विदुषा किमपि न साध्यमित्युद्घृणद्भ्यः—अधुना तृतीयपादेन तत्त्वज्ञाने सम्पादिते ततःपरं विदुषः कर्तव्यमुपासनादिकं वान्यद्वा नित्यनैमित्तिकादिकर्म किमपि नास्ति—

'दग्धाखिलाधिकारत्वात् ब्रह्मज्ञानाग्निना मुनिः।
वर्तमानश्श्रुतेर्मूर्ध्नि नैव स्याद्वेदकिङ्करः॥'

इति हि प्राचीनजरन्मायिजनानुष्टुबित्युद्घोषयद्भ्यो मायावादिभ्यः। चतुर्थ्यन्तं पदम्। अन्धकाराय दीप इत्यत्रान्धकारं निवर्तयितुमितिवत् तान्निवर्तयितुमित्यर्थः। 'क्रियार्थोपपदस्य च कर्मणि स्थानिनः' इति सूत्रेण चतुर्थी। क्रियार्था क्रिया उपपदं यस्य तस्य स्थानिनोऽप्रयुज्यमानस्य तुमुनः कर्मणि चतुर्थी स्यात्, फलेभ्यो याति फलान्याहर्तुं यातीत्यर्थ इति सूत्रार्थवर्णनमुदाहरणञ्च। मुक्तिलाभाय मुररिपुभजनं यावज्जीवानुवर्त्यं वक्ति—तत्त्वज्ञानेनावगतपरशेषतैकरसस्वरूपस्य चेतनस्यात्माभिमानानुगुणपुरुषार्थव्यवस्थया परमपुरुषार्थलिप्सोरभिलषितस्य मोक्षाख्यस्य पुरुषार्थस्य लाभाय आश्रितविरोधिनिवर्तनैकस्वभावभगवद्भक्तिं 'स खल्वेवं वर्तयन्यावदायुषम्' इति श्रुतेर्यावज्जीवनमनुवर्तनीयां प्रतिपादयतीत्यर्थः॥ ३२१॥

भीमाभ्यो यातनाभ्यः पितृपथगमनावर्तनादश्च बिभ्यत्
तृष्णां कृष्णामृताब्धौ परिणयति परां यावता तावदुक्तम्।
इत्थं लब्धाधिकारः परमधिकुरुते साधने यत्र साङ्गे
पाद्द्वन्द्वे परस्मिंरतीदिह बहुभिदावर्वरं निर्ब्रवीति॥ ३२२॥

चिन्ता०—अत्र तृतीयाध्याये चतुर्णामपि पादानामर्थभेदं द्विकद्वयस्याप्यर्थभेदान्मिथोभेदं पौर्वापर्यनियमञ्च दर्शयति—भीमाभ्य इति। अत्र पूर्वपादद्वयेऽधिकारसम्पत्तिहेतुरधिकारश्च संसारविरक्तिसंवलितो भगवति तृष्णायोगः उभावेतावुभाभ्यां पादाभ्याममिधीयेते इति विशदं प्रकाश्यते। तत्र भीमाभ्य-इत्यादिना वैराग्यपादार्थमाह तृष्णामित्यादिनोभयलिङ्गपादार्थम्। अयमत्र शब्दान्वयः—यावता कृष्णामृताब्धौ तृष्णां परिणयति तावदुक्तमिति। उत्तरपादद्वयार्थमाह—इत्थमिति। अयमत्र शब्दान्वयः—उभाभ्यां पादाभ्यां लब्धाधिकारो यत्र साङ्गे साधने प्रवर्तते तत् साङ्गं साधनं परस्मिन् पादद्वन्द्वे बहुभिदाबर्बरं निर्ब्रवीति—बहुभेदेन विषमितं विकल्पितं निर्ब्रवीति सूत्रकारः। अयमर्थः—ब्रह्मविद्याविशेषाः खलु 'नानाशब्दादि' इति सप्रमाणकं भिन्नतयोपदिष्टाः। 'विकल्पोऽविशिष्टफलत्वात्' इत्येकफलसाधनत्वेन त एव विकल्पिताः। एवमुभयाकारयुक्तसाधनजातमुपदिश्यत इति। अयमत्रानुक्रमः—वैराग्यपूर्वं हि प्राप्यतृष्णा जायते प्राप्यविषयप्रेप्सायां जातायामुपायाधिकारः उपाये प्रवृत्तस्याधिकारिणः पुरस्तादुपाये निर्णीते उपरिष्टात् करणस्थानीयसर्वब्रह्मविद्याङ्गकर्मोपादित्सा जायत इति विद्याङ्गपादस्य पश्चाद्भाव इति ॥ ३२२ ॥

पद०—भीमाभ्य इत्यादि। चेतनः इतिशेषः। भीमाभ्यः—श्रवणमात्रेण महाभयहेतुभ्यः। यातनाभ्यः—नरकयातनाभ्यः। पितृपथगमनावर्तनादेश्च—पितृपथस्य धूमादिमार्गस्य गमनात्, आवर्तनात् योनिप्राप्तिपर्यन्तात्। आदिशब्दार्थभूतात् व्रीह्यादिभावकष्टाच। बिभ्यत्—भीतस्सन्। कृष्णामृताब्धौ—श्रीकृष्ण एवामृताकूपारस्तस्मिन्। परां तृष्णाम्—भक्तिनिश्श्रेणीपर्वभेदभूतां विषयलाभाभावे स्वरूपशैथिल्यमपि कर्तुं प्रवृत्तां वाञ्छाम्। यावता परिणयति—यावता ज्ञातेनार्थजातेन प्रापयति। तावदुक्तम्—अस्मिन्पादद्वन्द्व इति शेषः। वैराग्योभयलिङ्गपादद्वये तावदर्थजातं प्रतिपादितम्। तच्चार्थजातमिदमेव-इहामुत्रच सञ्चरतः पुनःपुनर्नानायोनिषु प्रविशतस्स्वपतस्सुषुप्तस्य मूर्च्छतश्च जीवस्य यानि कष्टानि तानि सर्वेष्वपि वस्तुष्वन्तर्यामित्वेनावस्थितस्यापि तद्गतदोषैरसंस्पृष्टस्य भगवतो निखिलहेयप्रत्यनीकत्वसमस्तकल्याणगुणास्पदत्वनिरतिशयपारम्यनिखिलफलप्रदत्वादिरूपं यच्च वैभवं तच्चेति। अस्मिन् ह्यर्थजातेऽवगते चेतनस्सांसारिकभोगेभ्यो विरज्येत तृष्णाञ्च परमां परमानन्दस्वरूपे भगवति परिणयेत्। इह परस्मिन्पादद्वन्द्वे—अस्मिंस्तृतीयाध्याये तृतीयचतुर्थात्मके उपरितनपादद्वये तु। इत्थम्—उक्तप्रकारेण वैराग्योभयलिङ्गपादार्थजातावगतिरूपहेतुना। लब्धाधिकारः—प्रतिष्ठितसंसारवैराग्यसंवलितभगवत्तृष्णात्मकब्रह्मविद्याधिकारश्चेतनः। साङ्गे यत्र साधने परमधिकुरुते—वर्णाश्रमधर्मशमदमादिगुणाद्यङ्गके यस्मिन् भगवद्भजनात्मके मोक्षोपाये विशेषेणानुष्ठानायोयुङ्क्ते। तत्—साधनमुपासनात्मकम्। बहुभिदाबर्बरम्—बहुभेदेन बर्बरं विषमितं

विकल्पितम् । निर्ब्रवीति—सूत्रकारइति शेषः । अयमर्थः—ब्रह्मविद्याविशेषाः खलु 'नानाशब्दादि' इति सप्रमाणकं भिन्नतयोपदिष्टाः 'विकल्पोऽविशिष्टफलत्वात्' इत्येकफलसाधनत्वेन त एव विकल्पिताः, एवमुभयाकारयुक्तं साधनजातमुपपादयतीति ॥ ३२२ ॥

एकस्मिन्नेव पादे निपुणनयकृता न द्वयोस्तर्कणं स्यात्
भेदोऽभेदश्च नैको विषय इह भवेदन्यहानप्रसङ्गात् ।
तस्मादस्मिन्प्रकीर्णा नयविततिरिति प्रेक्षितग्रन्थचोद्ये
वेद्यावच्छिन्नविद्यानियमकृदयमित्यैदमर्थ्यं समर्थ्यम् ॥ ३२३ ॥

चिन्ता०—ननु पादार्थाभिधाने भगवता भाष्यकारेण 'इदानीं ब्रह्मोपासनानां गुणोपसंहारविकल्पनिर्णयाय विद्याभेदाभेदचिन्ता प्रस्तूयते' इत्युक्तम्, अत्र कोऽयं पादार्थः? किं भेदचिन्ता उताभेदचिन्ता अथवा क्वचिद्भेदचिन्ता क्वचिदभेदचिन्ता यद्वा भेदाभेदचिन्तेति । नाद्यः; सार्वत्रिकत्वाभावात् । अत एव न द्वितीयः । न च तृतीयः; अनुवृत्तार्थासिद्धेः । न चतुर्थः; भेदाभेदात्मकस्य चिन्तनीयस्य व्याहतत्वेन तद्विषयचिन्ताया अयोगात् । चिन्ताशब्देन संशयात्मकं विचारमभिधाय पक्षद्वयाभिधानेऽपि एतस्मिन्पादे गुणोपसंहारानुपसंहारचिन्ता हीयेत । सैव हि चिन्ता पादेऽस्मिन् प्रधाना; गुणोपसंहारपाद इति समाख्यायोगात् । तदिदं सर्वमभिप्रेत्याह—एकस्मिन्निति । अयमत्र शब्दार्थः—एकस्मिन् पादे एक एवार्थस्स्वीकार्यो निपुणनयकृता पुरुषेण । द्वयोस्तर्कणं विचारो न स्यात् । भेदाभेद इत्येकोऽर्थो नास्त्येव, शब्दप्रयोगमात्रेण शशविषाणादिवदस्तित्वेऽपि तस्यैव चिन्तनमस्मिन् पादे स्यात् न पुनरन्यस्य गुणोपसंहारानुपसंहारादेश्चिन्तनम् । तदिदमाह—अन्यहानप्रसङ्गादिति । उक्तमर्थं सङ्कल्य्य निगमयति—तस्मादिति । एवं विकल्पदुष्टत्वादस्मिन् पादे प्रकीर्णा नयविततिर्न्यायविस्तरः प्रशिथिल इति प्रेक्षितग्रन्थचोद्ये विद्याभेदाभेदचिन्ता क्रियत इति दृष्टभाष्यग्रन्थस्य कस्यचित् पुरुषस्य चोद्ये सति वेद्यावच्छिन्नविद्यानियमकृदयं पाद इत्यैदमर्थ्यं तात्पर्यं समर्थ्यम् । अयमर्थः—नात्र भेदो नाप्यभेदः प्रधानतया चिन्त्यते, भेदाभेदौ गुणोपसंहारानुपसंहारार्थावेव । तेन गुणोपसंहारपादप्रसिद्धिरपि युज्यते । तर्हि गुणोपसंहारोऽनुपसंहारो वा पादार्थ इति पुनश्चोद्यमुन्मज्जतीति चेत् यथायोग्यमुपसंहारानुपसंहारान्यतरनिर्णयः पादार्थ इत्यैकार्थ्यसिद्धिः । वेद्यावच्छिन्नविद्यानियमकृदयमिति वेद्यं भिन्नं चेत् विद्या च भिन्ना, अभिन्नं चेत् सा चाभिन्ना, तेन वेद्यानुरूपं विद्यानियमनमिति पादार्थैक्यसिद्धिः । अत्र वेद्यभेदस्तु गुणभेदात् नपुनर्ब्रह्मभेदात् । तेन गुणोपसंहारपादप्रसिद्धिस्सुतरां सङ्घटत इति ॥ ३२३ ॥

पद०—एकस्मिन्नित्यादि । एकस्मिन् पाद एव निपुणनयकृता पुरुषेण द्वयोरर्थयोस्तर्कणं विचारो न स्यात् । अर्थद्वयस्य विचारे सति पादार्थैक्यासिद्धेरेकस्मिन्पादे एकएवार्थो विचार्य इति भावः । भेदोऽभेदश्च इह एको विषयो न भवेत्—भेदोऽभेदश्च परस्परविरुद्धौ द्वावर्थौ तावस्मिन्पादे कथमेकविषयो भवेताम्, अपि तु द्वावेव विषयौ भवेताम् । भवतु, तथापि पादार्थैक्यलाभाय तयोरन्यतरो विषयोऽस्त्विति चेत् अन्यहानप्रसङ्गात्—द्वयोरेकस्य विचार्यत्वेऽन्यस्य त्यागस्स्यात् । एवं वा अन्यहानप्रसङ्गः—परस्परविरुद्धयोर्भेदाभेदयोः कथञ्चिदेकविषयत्वस्वीकारेऽपि तस्यैव चिन्तनमस्मिन्पादे स्यात्, न पुनरन्यस्य गुणोपसंहारानुपसंहारादेश्चिन्तनम्, तच्च गुणोपसंहारपादसंज्ञाबललब्धम्, तस्य हानं प्रसज्येत । तस्मात्–एवं विकल्पदुष्टत्वात् । अस्मिन्–पादे । नयविततिः प्रकीर्णा—अधिकरणगणोऽननुगतप्रधानार्थः स्यात् । इति प्रेक्षितग्रन्थचोद्ये—प्रेक्षितगुणोपसंहारपादावतारभाष्यग्रन्थस्य कस्यचित् जिज्ञासोश्चोदने सति । वेद्यावच्छिन्नविद्यानियमकृदयमिति ऐदम्पर्थ्यं समर्थ्यम्–वेद्यैर्ब्रह्मगुणैरवच्छिन्नानां विसदृशीभ्यो विद्याभ्यो व्यावर्तितानां सुसदृशीभिरैक्यमवगमितानाञ्च विद्यानां वैश्वानरदहरशाण्डिल्योपकोसलादिविद्यानां नियमो नियमनं यथायोगं वेद्यरूपं भिन्नं चेत् विद्ययोर्भेदः, वेद्यरूपमभिन्नं चेत् विद्ययोरभेद इति व्यवस्थापनं तत्करोतीति तथा अयं पाद इति ऐदमर्थ्यं ग्रन्थतात्पर्यं समर्थ्यं समर्थनीयम् । तदिदं प्रेक्षितग्रन्थेत्यस्य विवक्षितं भाष्यम् 'इदानीं ब्रह्मोपासनानां गुणोपसंहारविकल्पनिर्णयाय विद्याभेदाभेदचिन्ता प्रस्तूयते' इति । अयमाशयः—नात्र भेदो नाप्यभेदो वा प्रधानतया चिन्त्यते, भेदाभेदौ गुणोपसंहारानुपसंहारार्थावेव तेन गुणोपसंहारपादप्रसिद्धिरपि युज्यते । तर्ह्युपसंहारो ऽनुपसंहारोवा पादार्थ इति पुनश्चोद्यमुन्मज्जतीति चेत् यथायोग्यमुपसंहारानुपसंहारान्यतरनिर्णयः पादार्थ इत्यैकार्थ्यसिद्धिः । वेद्यावच्छिन्नेत्यादिपदेन चायमर्थो लभ्यते—वेद्यं भिन्नं चेद्विद्या भिन्ना तदभेदे सा चाभिन्नेति वेद्यानुरूपविद्यानियमनमिति पादार्थैक्यसिद्धिरिति ॥ ३२३ ॥

आख्यावन्तं गुणानां निजगदुरुपसंहारतः पादमेतं
विद्यैक्यार्थे तदस्मिन्नपवदनतया भेदचिन्ता प्रसक्ता ।
इत्थं शुश्रूषुशङ्कामिह शिथिलयितुं भाषितं भाष्यकारैः
तद्भेदाभेदमीमांसनमिह विषयस्त्वत्र चोक्तोऽनुवृत्तः ॥ ३२४ ॥

चिन्ता०—पूर्वस्मिन् श्लोके वेद्यावच्छिन्नविद्यानियमकृदयमिति पादस्यैकार्थ्यं समर्थितम् । अत्र कश्चिदाह–मस्त्वैकार्थ्यम्, अथापि विद्यैक्यप्रतिपादकेऽस्मिन्पादे अभेद एवैकः पादार्थः । न पुनर्वि द्या-

भेदः, तर्हि 'विद्याभेदाभेदचिन्ता' इति कथं भाष्यकारैरुच्यते? इति चेत् अस्त्वपवादप्रदर्शनम्। विद्यैक्यमेव पादार्थः। ऐक्यासम्भवे क्वचिद्भेदोऽपि स्यादित्यपवाद एव प्रदर्श्यते नपुनर्भेदः पादार्थभूत इति। इमामाशङ्कामनुवदति—आख्यावन्तमिति। अयमत्र शब्दार्थः—गुणानामुपसंहारतो गुणोपसंहारपाद इत्याख्यावन्तमेतं पादं निजगदुः। तत् तस्मात्कारणादाख्यासामर्थ्यात् विद्यैक्यप्रतिपादकेऽस्मिन्पादे भेदचिन्ता त्वपवादत्वेनैव प्रसक्ता न पुनः पादार्थतया। इमामाशङ्कां परिहर्तुमेव भाष्यकारैरुक्तं 'विद्याभेदाभेदचिन्ता' इति। तदाह—इत्थमिति। कः पुनस्सर्वानुवृत्तः पादार्थ इति चेत्तत्राह—विषय इति॥३२४॥

पद०—आख्यावन्तमित्यादि। एतं पादं गुणानामुपसंहारतः आख्यावन्तं निजगदुः—गुणोपसंहारपाद इत्याख्यावन्तं वदन्तीत्यर्थः। तत्—तस्मात् कारणात् आख्यासामर्थ्यात्। विद्यैक्यार्थे—विद्यैक्यप्रतिपादके। अस्मिन्—पादे। भेदचिन्ता तु अपवदनतया प्रसक्ता—अपवादत्वेनैव प्रसक्ता, न पुनः पादार्थतया। इत्थम्—एवंरूपाम्। इह—एतत्पादचिन्त्यविषये। शुश्रूषुशङ्काम्—कस्यचित् शुश्रूषोश्शङ्काम्। शिथिलयितुम्—परिहर्तुम्। भाष्यकारैः। इह—पादावतारिकादानप्रकरणे। अस्मिन्पादे इतिवा अर्थः। तद्भेदाभेदमीमांसनं भाषितम्—विद्याभेदाभेदविचारणं भाषितम्। द्वयोरपि चिन्तनमुक्तमित्यर्थः। कः पुनरनुवृत्तः पादार्थ इति चेत्तत्राह—विषयस्त्वित्यादि। अत्रत्वनुवृत्तो विषयश्चोक्तः—अस्मिन्पादेतु अनुगतो विषयश्च वेद्यावच्छिन्नविद्यानियमकृदित्यनेन पूर्वमेवोक्तः॥ ३२४॥

निस्सीमानन्दनाडिन्धमनिरुपधिकानन्तसम्पद्गुणौघे
विद्याभेदैर्विभज्य प्रणिधिरिह यदि प्राप्तिरप्यंशतस्स्यात्।
मैवं तैरेव धर्मैस्तदितरसहितैः पूर्णकामस्य पूर्णं
प्राप्यं ब्रह्मैव नान्यत्किमपि फलमतस्तत्क्रतुन्यायसिद्धिः॥ ३२५॥

चिन्ता०—अत्र कश्चिच्चोदयति—गुणभेदात् विद्याभेद इति भवद्भिरुक्तम्। तर्हि फलभेदोऽपि स्यात्। 'यथाक्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवति' इति हि श्रूयते 'तं यथायथोपासते तथैव भवति' इति च। तेन यद्गुणविशिष्टं भगवन्तमुपास्ते तद्गुणविशिष्टमेव प्राप्नोतीति श्रुत्यर्थः। विशेषविधौ शेषनिषेधस्य न्याय्यत्वात् उपास्यगुणव्यतिरिक्तगुणविशिष्टभगवत्प्राप्तिरर्थान्निषिध्यत इति परिपूर्णब्रह्मानुभवो मोक्ष इति वादमात्रमेव स्यात्। तदिदमनुवदति—निस्सीमेति। निस्सीमानन्दपर्वोत्कर्षहेतुभूतनिरुपधिकानन्तसम्पद्गुणौघे परमात्मनि वेद्याकारभेदप्रयुक्तभेदवद्भिर्विद्याभेदैर्विभज्य प्रणिधिर्यदि स्यात्, तर्हि प्राप्तिरपि ब्रह्मणि अंशत एकदेशेन स्यात्। यावानुपासनविषय आकारस्तावानेव प्राप्याकारस्स्यात्।

तथा च न परिपूर्णब्रह्मानुभवः फलमित्यापतेत्। एतच्चोद्यमपाकरोति—मैवमिति। अपाकरणमेव विवृणोति—तैरेवेति। अयमर्थः—'यथाक्रतुरस्मिँल्लोके पुरुषो भवति' इत्यत्रोपास्याकारस्यान्यूनभावेन प्राप्तिरुच्यते। 'तथैव भवति' इति कृत्स्नस्याप्युपास्याकारस्य प्राप्त्यभिधानात्। न्यूनत्वे पुनरुपास्याकारस्य कृत्स्नत्वमेव भज्येत। अधिकाकारसम्बन्धस्त्वत्र न विधीयते नापि निषिध्यते। विशेषविधौ शेषनिषेधन्यायात् निषिध्यत इति चेत् अयमपि भ्रान्तिमूल एवोपन्यासः। विधायकप्रमाणान्तराभावे हि आर्थो निषेधः परिगृह्येत। अत्र तु विधायकमस्ति 'निरञ्जनः परमं साम्यमुपैति' इति श्रुत्यैव परमसाम्याभिधानात्। इदञ्च परमसाम्यं भोगमात्र एवेति सूत्रकारैरेव स्थापयिष्यते 'भोगमात्रसाम्यलिङ्गाच्च' इति। तेन नहि वचनविरोधे न्यायः प्रभवतीति न्यायेनाधिकनिषेधो दुर्न्यायवेदिनामेव निर्णयः। तर्हीश्वरसाम्याङ्गीकारे जीवस्यापीश्वरत्वं प्रसज्यत इति चेन्न; सूत्रकारैरेव मात्रशब्दं प्रयुञ्जानैर्निरस्तत्वात्। शब्दार्थस्तु—तैरेव धर्मैरुपास्यैरेव भगवद्गुणैस्तदितरसहितै रनुपास्यैर्गुणैरपि सहितैः पूर्णं ब्रह्मैव पूर्णकामस्य मुक्तस्य प्राप्यमिति नान्यदत्र फलमस्ति। स्वर्गादिसाधनेषु तूपास्यमन्यत् फलमन्यदिति प्रसिद्धमेतत्। तेनात्र तत्क्रतुन्यायेनोपास्यानुपास्यसकलगुणविशिष्टं तदेव ब्रह्म प्राप्यमिति तत्क्रतुन्यायस्सिध्यति। तेन न क्वचिदपि विद्यासु फलवैषम्यप्रसङ्गः ॥ ३२५ ॥

पद०—निस्सीमेत्यादि। निस्सीमानन्दनाडिन्धमनिरुपधिकानन्तसम्पद्गुणौघे—निस्सीमानन्दस्य नाडिन्धमा वर्णोत्कर्षहेतुभूता निरुपधिका उपाधिशून्या अनन्ता इयत्ताशून्या सम्पत् अतिशयो येषां ते गुणौघा यस्य तस्मिन्। इह—ब्रह्मणि। विद्याभेदैः—वेद्यगुणभेदप्रयुक्तभेदवद्विद्याभेदैः। विभज्य प्रणिधिर्यदि—एकदेशमवलम्ब्य उपासनं यदि क्रियेत तर्हि। प्राप्तिरप्यंशतस्स्यात्—प्राप्तिरपि ब्रह्मण्येकदेशेन स्यात्। यावानुपासनविषय आकारस्तावानेव प्राप्याकारस्स्यात् तथा च न परिपूर्णब्रह्मानुभवः फलमित्यापतेत्। यथाक्रतुश्रुत्या यथोपासनमेव फलप्राप्तिकथनादिति भावः। मैवम्—एवं न शङ्क्यम्। तैरेव धर्मैः—उपास्यैरेव भगवद्गुणैः। तदितरसहितैः—अनुपास्यगुणैरपि सहितैः। पूर्णं ब्रह्मैव। पूर्णकामस्य—मुक्तस्य प्राप्यम्। अन्यत् किमपि फलम्—तदतिरिक्तं किमपि फलम्। न—नास्ति। अतः—उपासितगुणादेः कृत्स्नस्य प्राप्तावबहिष्कारात्। तत्क्रतुन्यायसिद्धिः—'यथाक्रतुः' इत्यादिश्रुतिप्रतिपन्नस्य तत्क्रतुन्यायस्य सिद्धिः। भवतीति शेषः। अयं भावः—'यथाक्रतुरस्मिँल्लोके पुरुषः' इत्यत्रोपास्याकारस्यान्यूनभावेन प्राप्तिरुच्यते। तथैव भवतीति कृत्स्नस्याप्युपास्याकारस्य प्राप्त्यभिधानात्। न्यूनत्वे पुनरुपास्याकारस्य कृत्स्नत्वमेव भज्येत। अधिकाकारसम्बन्धस्त्वत्र न विधीयते नापि निषिध्यते। विशेषविधौ शेषनिषेधन्यायात् निषिध्यत इति चेत् अयमपि भ्रान्तिमूल एवोपन्यासः। विधायकप्रमाणान्त-

राभावे ह्यर्थो निषेधः परिगृह्येत । अत्र विधायकमस्ति 'निरञ्जनः परमं साम्यमुपैति' इति परमसाम्याभिधानात् । इदञ्च परमसाम्यं भोगमात्र एवेति सूत्रकारैरेव 'भोगमात्रसाम्यलिङ्गाच्च' इति स्थापयिष्यते । तेन नहि वचनविरोधे न्यायः प्रभवतीति न्यायेनाधिकनिषेधो दुर्न्यायवेदिनामेव निर्णय इति ॥ ३२५ ॥

भेदश्शब्दान्तराद्यैर्विधिषु नियमितः कर्मकाण्डे द्वितीये
संयोगाद्यैक्यतोऽन्यस्समुदयनियतात् सैव विद्यासु नीतिः ।
आदौ तेनैव शाखान्तरनयमुदितं चोदनादेरभेदात्
श्रुत्यैवाक्षिप्य भूयः प्रतिसमधित तं भेदकान्यार्थतोक्त्या ॥ ३२६ ॥

चिन्ता०—अत्र पादसङ्गतिर्भाष्ये 'उक्तं ब्रह्मोपासिसिषोपजननाय वक्तव्यं ब्रह्मणः फलदायितापर्यन्तम् । इदानीं ब्रह्मोपासनानां गुणोपसंहारविकल्पनिर्णयाय विद्याभेदाभेदचिन्ता प्रस्तूयते' इति । अधिकरणावतारमप्याह 'प्रथमं तावत्' इत्यादिना । 'फलमत उपपत्तेः' इत्यत्र उपास्यस्य ब्रह्मणस्सर्वफलप्रदाने प्राधान्यमुक्तम्, अधुना पुनर्मूर्धादिपादपर्यन्तपरिक्लृप्त्या सविग्रहब्रह्मोपासनरूपाया वैश्वानरविद्यायाः परविद्यान्तरात् प्राधान्येन सैव प्रथमं विचार्यते । अत एव भगवता पराशरेण ब्रह्मविद्याप्रसङ्गे सविग्रहमेव ब्रह्म प्रथमं चिन्तनीयं शुभाश्रयत्वात्, ब्रह्मस्वरूपं तु न योगयुजा चिन्त्यम्, आरूढयोगेनैव चिन्त्यमित्युक्तम् । अस्याञ्च विद्यायां पूर्वकाण्डशाखान्तराधिकरणोक्तसकलन्यायसमुच्चयस्य विद्यमानत्वात् एतद्विचारपूर्वकमेव विद्यान्तरविचारौचित्यादेषैव विद्या पूर्वं विचार्यत इत्यभिप्रायः । एतदेव 'प्रथमं तावत्' इति द्वाभ्यामपि पदाभ्यां द्योत्यते । तदर्थविचारस्तु—नानाशाखास्वधीताया वैश्वानरादिकाया विद्यायाः किं प्रतिशाखं भेदः, उतैक्यमिति । किं शाखान्तरे प्रत्यभिज्ञास्ति नेति । किं 'तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद्यैस्तु चीर्णम्' इति शिरोव्रतवतामाथर्वणिकानां विद्योपदेशनियमो भेदोपपादकतया प्रत्यभिज्ञाविरोधी नेति । किं शिरोव्रतं विद्याङ्गम्, उताध्ययनाङ्गमिति । अत्र कर्मकाण्डशाखान्तराधिकरणोक्ताभेदकन्यायैरभेदमुक्त्वा पुनर्भेदकन्यायैराक्षिप्य भेदकानां तेषामन्यार्थत्वप्रदर्शनेनाभेदमेव पुनः प्रतिष्ठापयामास सूत्रकार इत्याह—भेद इत्यादिना । अयमर्थः—कर्मकाण्डे हि संयोगरूपचोदनाख्याविशेषात् कर्मणामैक्यमुक्तम् । संयोगो नाम फलसंयोगः । रूपञ्च द्रव्यदेवते । द्रव्यदेवते हि कर्मणो रूपमिति तान्त्रिकाः । चोदना लिङ्लोट्तव्यप्रत्ययादिशिरस्कः क्रियावाचिशब्दः । आख्या ज्योतिष्टोमादिनामधेयम् । तेषामविशेषात् कर्मैक्यमिति 'संयोगरूपचोदनाख्याविशेषात्' इति सूत्रार्थः । भेदकप्रमाणानि तु शब्दान्तरादीनि । अपर्यायशब्दश्शब्दान्तरं यजति जुहोति ददातीत्यादि । अभ्यासस्तु

'समिधो यजति' 'तनूनपातं यजति' इत्यादिरूपः पुनःपुनःपाठः । सङ्ख्या 'तिस्र आहुतीर्जुहोति' इत्यादिषु दृष्टा त्रित्वादिः । गुणस्तु 'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनम्' इत्यादिषु श्रुतो वाजिनादिः । 'उपसद्भिश्चरित्वा मासमग्निहोत्रं जुहोति' इत्यादिषु प्रकरणान्तरमुपलभ्यते । नामधेयमपि भेदकं दृश्यते 'अथैष ज्योतिरथैष विश्वज्योतिरथैष सर्वज्योतिः' इत्यादौ । तेन पूर्वकाण्डोक्तन्यायकलापैर्भेदकैरभेदकैश्चेदमधिकरणं व्यारचितम् । तत्र शब्दान्वयस्तु—कर्मकाण्डे द्वितीयाध्याये शब्दान्तराद्यैर्भेदो विधिषु नियमितः प्रतिपादितः । समुदयनियतात् समुच्चितात् संयोगाद्यैक्यतः संयोगरूपचोदनाख्याविशेषात् अन्यः कर्मणामभेदोऽपि स्थापितः । कर्मब्रह्मकाण्डयोरैकशास्त्र्यात् न्यायप्रवृत्तेरपि तुल्यत्वात् विद्यायामपि कर्मनीतिरेव नीतिः । इत्थं सामान्येनार्थतत्त्वमभिधाय एतस्याधिकरणस्य सिद्धान्तारम्भपूर्वकत्वात् प्रथमं सिद्धान्तमभिधाय पूर्वपक्षाभिप्रायेणाक्षिप्य पुनस्तमेव सिद्धान्तं स्थापयामास सूत्रकार इति दर्शयति—आदाविति । शब्दान्वयस्तु—तेनैव कर्मकाण्डेनैव चोदनादेरभेदादादावुदितमुक्तं शाखान्तरनयं श्रुत्यैवाक्षिप्य श्रुत्यन्तर्गतात् भेदकप्रमाणादाक्षिप्य तं पूर्वोक्तमेवार्थं प्रतिसमाधित स्थापयामास । तत्र हेतुमाह भेदकान्यार्थतोक्त्येति । भेदकस्य प्रमाणस्य अर्थान्तरे तात्पर्यादित्यर्थः ॥ ३२६ ॥

पद०—भेद इत्यादि । कर्मकाण्डे द्वितीये—कर्मकाण्डे द्वितीयाध्याये । शब्दान्तराद्यः—शब्दान्तराभ्याससङ्ख्यागुणप्रक्रियानामधेयैः । भेदः, विधिषु-कर्मचोदनासु । नियमितः–प्रतिपादितः । तत्र अपर्यायश्शब्दश्शब्दान्तरं यजति जुहोति ददातीत्यादि । अभ्यासः 'समिधो यजति' 'तनूनपातं यजति' इत्यादिषु यजतियजतीति पुनःपाठः । 'तिस्र आहुतीर्जुहोति' इत्यादिषु त्रित्वादिरूपा सङ्ख्या । 'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनम्' इत्यादिषु श्रुतो वाजिनादिर्गुणः । 'उपसद्भिश्चरित्वा मासमग्निहोत्रं जुहोति' इत्यादिषु प्रकरणान्तरम् । 'अथैष ज्योतिरथैष विश्वज्योतिरथैष सर्वज्योतिः' इत्यादौ नामधेयम् । एतैः कर्मभेदकैः कर्मभेदः प्रतिपादित इत्यर्थः । समुदयनियतात्—समुच्चितात् । संयोगाद्यैक्यतः—'एकं वा संयोगरूपचोदनाख्याविशेषात्' इति सूत्रोक्तात् संयोगादीनामैक्यात् । अन्यः—कर्मणामभेदोऽपि । नियमित इत्यनुषङ्गः । संयोगो नाम फलसम्बन्धः । रूपञ्च द्रव्यदेवते । द्रव्यदेवते हि कर्मणो रूपमिति तान्त्रिकाः । चोदना लिङ्लोट्तव्यप्रत्ययादिशिरस्कः क्रियावाचिशब्दः । आख्या ज्योतिष्टोमादिनामधेयम् । तेषामविशेषे कर्मैक्यमिति सूत्रार्थः । विद्यासु सैव नीतिः—कर्मब्रह्मकाण्डयोरैकशास्त्र्यात् न्यायप्रवृत्तेरपि तुल्यत्वात् विद्यास्वपि या कर्मसु नीतिस्सैव नीतिः । चोदनादेरभेदात् तेनैव आदावुदितं शाखान्तरनयं श्रुत्यैवाक्षिप्य—पूर्वोक्ताचोदनादेः चोदनासंयोगरूपाख्यानामभेदात् अविशेषात् कर्मकाण्डेनैव द्वितीयाध्याये उक्तं शाखान्तरनयं सर्वशाखा-

प्रत्ययन्यायं श्रुत्यन्तर्गतभेदकप्रमाणेनैवाक्षिप्य । भेदकान्यार्थतोक्त्या—भेदकानां भेदकत्वेनोपन्यस्तानामविशेषपुनश्श्रवणप्रकरणान्तरव्रतविशेषयुक्तपुरुषोपदेशनियमरूपाणां अन्यार्थतोक्त्या प्रतिपत्त्रन्तरप्रतिपत्त्यर्थत्ववेदविद्याङ्गत्वमूलकतदुपदेशविषयत्वरूपार्थान्तरार्थत्वप्रतिपादनेन । तम्—शाखान्तरनयम् । भूयः प्रतिसमाधित—पुनस्समाधिना स्थापयामास सूत्रकार इत्यर्थः ॥ ३२६ ॥

शाखासु प्रक्रियान्या श्रवणमपि पुनर्दृष्टमत्राविशेषं
विद्याभेदस्ततस्स्यादिति न तदुभयं युक्तमध्येतृभेदात् ।
तेषामेवेति वाक्यात् क्वचिदुपजनिता भेदशङ्का त्वयुक्ता
स्वाध्याये ब्रह्मविद्यापदमिह हि भवेत्तद्व्रतेनान्वयोक्तेः ॥ ३२७ ॥

चिन्ता०—अत्रोक्तार्थापवादरूपं विद्याभेदहेतुमनूद्य तत्परिहारमपि भाष्योक्तमेव विशदं प्रकाशयति—शाखास्विति । अयमर्थः—अविशेषपुनश्श्रवणात् प्रकरणान्तराच्च विद्याभेद एवात्र समुचितः । 'समिधो यजति' 'तनूनपातं यजति' इत्यादौ यजति यजतीत्यविशेषपुनश्श्रवणात् 'उपसद्भिश्चरित्वा मासमग्निहोत्रं जुहोति' 'इत्यत्र प्रकरणान्तराच्च कर्मभेदो दृष्टः । एवमत्रापि ताभ्यामेव हेतुभ्यां विद्याभेदो ऽङ्गीकार्य एव । अयमत्रान्वयः—ब्रह्मविद्यावादिनीषु शाखासु तत्रतत्र प्रक्रिया अन्या दृष्टा अत्र च अविशेषमपि पुनश्श्रवणं दृष्टं ततो विद्याभेदस्स्यादिति । तदेतत् प्रतिक्षिपति—नेति । तदुभयं अविशेषपुनश्श्रवणं प्रकरणान्तरञ्च अध्येतृभेदायुक्तमेव । अयमर्थः—इत्थं किल मीमांसकानां मर्यादा । अविशेषपुनश्श्रवणं प्रकरणान्तरञ्च विधेयभेदावहमेव यद्यध्येतृभेदो न स्यात् । प्रतिपत्तृभेदे सति अविशेषपुनश्श्रवणं प्रकरणान्तरञ्च न भेदकमेव । तेनात्र प्रतिपत्तृभेदस्य विद्यमानत्वात् न विद्याभेदप्रसङ्गः । ननु 'तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद्यैस्तु चीर्णम्' इति शिरोव्रतवतामेव ब्रह्मविद्योपदेशनियमात् विद्याभेदोऽस्त्विति मयोक्तं तत्र कोऽयं परिहार इति पूर्वपक्षिणोऽभिप्रायमाशङ्क्य तत्रापि परिहारमाह—अयुक्तेति । कथमयुक्तत्वमित्यत्राह—स्वाध्याय इति । अत्र ब्रह्मविद्यापदं स्वाध्यायवाचकमेव न पुनर्विद्यावाचकं 'नैतदचीर्णव्रतोऽधीयीत' इति वेदव्रतेन वेदाध्ययनस्यान्वयोक्तेरित्यर्थः ॥ ३२७ ॥

पद०—शाखास्वित्यादि । शाखासु प्रक्रिया अन्या—ब्रह्मविद्यावादिनीषु तासुतासु शाखासु प्रकरणमन्यत् । अत्र अविशेषं पुनश्श्रवणमपि दृष्टम्—यत् प्रकरणान्तरमविशेषपुनश्श्रवणञ्च कर्मभेदकत्वेन कर्मकाण्डोपन्यस्तम्, तदत्र दृश्यत इत्यर्थः । ततः—भेदकप्रमाणसद्भावात् । विद्याभेदस्स्यादिति । न—न युक्तमिदम् । तदुभयम्—प्रकरणान्तराविशेषपुनश्श्रवणद्वयम् । अध्येतृभेदात् युक्तम्–

प्रतिपत्तृभेदादुपपन्नम्। न तु विद्याभेदकम्। यत्र प्रतिपत्त्रन्तराभावस्तत्रैवाविशेषपुनश्श्रवणं प्रकरणान्तरञ्च भेदकम्, यत्र प्रतिपत्त्रन्तरं दृश्यते तत्र तयोस्तादर्थ्यमेवेति भावः। तेषामेवेति क्वचिद्वाक्यादुपजनिता भेदशङ्का तु अयुक्ता—'तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद्यैस्तु चीर्णम्' इति शाखाभेदे श्रुतात् वाक्यात् शिरोव्रतवतामाथर्वणिकानामेव विद्योपदेशप्रतिपादकात् जनिता विद्याभेदशङ्का तु न साध्वी। तद्व्रतेन—स्वाध्यायाङ्गव्रतभूतेन शिरोव्रतेन सह। अन्वयोक्तेः—ब्रह्मविद्यापदार्थस्यान्वयाभि-धानात् 'तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद्यैस्तु चीर्णम्' इति वाक्ये स्वाध्यायाङ्गभूतशिरोव्रतेन सहाङ्गाङ्गिभावेन सम्बन्धाभिधानात्। इह—अस्मिन्वाक्ये। ब्रह्मविद्यापदं स्वाध्याये हि भवेत्—ब्रह्मविद्यापदं 'वेदस्तत्त्वं तपो ब्रह्म' इति निघण्टुपाठात् आथर्वणवेदात्मिकां विद्यामित्यर्थगत्या स्वाध्यायप्रतिपादक-मित्यर्थः। शिरोव्रतस्य स्वाध्यायाङ्गत्वं तु 'इदमपि वेदव्रतेन व्याख्यातम्' इति समाचाराख्यग्रन्थवाक्ये शिरोव्रतस्य वेदव्रतत्वाभिधानादवगम्यते। 'इदं' व्रतान्तरम् 'वेदव्रतेन' साङ्गोपाङ्गं प्रतिपादितेन वेदव्रत-शब्दितेन शिरोव्रतेन 'व्याख्यातम्' तद्वदिदमनुष्ठेयमिति अतिदेशवाक्यं हीदम्। किञ्च 'नैतदचीर्णव्रतो-ऽधीयीत' इति व्यतिरेकविधया व्रतशब्दितस्य शिरोव्रतस्याध्ययनकर्मभूतवेदसम्बन्धावगमाच्च। चिन्ताम-णिकारास्तु—'अत्र ब्रह्मविद्यापदं स्वाध्यायवाचकमेव नपुनर्विद्यावाचकम्, नैतदचीर्णव्रतोऽधीयीतेति वेदव्रतेन वेदाध्ययनस्यान्वयोक्तेरित्यर्थः' इत्यभ्यधुः॥ ३२७॥

रूपैक्यादैक्यसिद्धौ किमितरदुपसंहार्यमन्यो गुणश्चेत्
भेदो न स्याद्विकल्प्यं तदिह किमफला तेन चिन्तेति चेन्न।
वेद्याकारैक्यमैक्यं दिशति तदधिकं किञ्चिदाकृष्यतेऽङ्गं
कर्मण्यप्येवमेव ह्युपहृतिविषयो भेदकांशातिरिक्तः॥ ३२८॥

इति सर्ववेदान्तप्रत्ययाधिकरणम्॥ ८४॥

चिन्ता—अत्र कश्चिच्चोदयति रूपैक्यात् विद्यैक्ये सिद्धे सति किमितरदुपसंहार्यम्? तदेव रूपै-क्यमिति चेन्न इतरेतराश्रयादिप्रसङ्गात् रूपैक्यात् विद्यैक्यं विद्यैक्यात् रूपैक्यमिति। अथवा चक्रकमेव रूपै-क्यात् विद्यैक्यं विद्यैक्यात् वेद्याकाररूपगुणोपसंहारो गुणोपसंहारात् रूपैक्यमिति। तर्हि वेद्याकारादन्यो गुण-उपसंहार्य इति चेत् स चान्यो विरुद्धो वा किं वा अविरुद्धः। विरुद्धश्चेत् तर्हि विरुद्धधर्मयोरेकत्रोपसंहा-राङ्गीकारे सति लोके सर्वत्र भेद एव न स्यात्। उष्णत्वशीतत्वयोरेकत्रोपसंहारसम्भवे कोऽन्यो भेदकः? तेन कर्मणां विद्यानां वा तत्तदसाधारणभेदकधर्मोपसंहारे यागदानहोमादीनां सद्विद्यादहरविद्याभूमविद्यादीनां

भेदएव न स्यात्। ननु विकल्पेनोपसंहारस्स्यात् कदाचित् स्वधर्मान्वयः अन्यदा तद्विरुद्धान्यधर्मान्वय इति, तदपि न; विकल्पस्याष्टदोपदुष्टत्वात्। किञ्च विकल्प एवात्र न सम्भवति स्वधर्मस्य श्रुत्यैवोपदिष्टत्वात् अन्यस्य विरुद्धधर्मस्य श्रुत्या अनुपदिष्टत्वात्। तुल्ययोर्हि विकल्पो न पुनरतुल्ययोः। तेनोपसंहार्यो धर्मः कोऽयमिति। तस्मात् भेदाभेदचिन्ता गुणोपसंहारानुपसंहारार्थेति व्यर्थाभिधानमिति। तदेतदनुवदति—रूपैक्यादिति। शब्दान्वयस्तु–रूपैक्यादैक्यसिद्धौ किमितरदुपसंहार्यम्? अन्यो गुणश्चेत् विद्यान्तरादिव्यवस्थितो गुणश्चेत् कर्मणां विद्यानां वा क्वचिदपि रूपभेदव्यवस्थितो भेदो न स्यात्। विकल्प्यं तदिह किमिति। अत्र किमिति प्रतिक्षेपे। विकल्प्यं तद्रूपमिह न भवत्येव विद्यान्तरासाधारणत्वात्। तेन एवमुपपादनेन भेदाभेदचिन्ता न गुणोपसंहारानुपसंहारार्था भवतीति निष्फलेति। अत्रोत्तरम्—नेति। उपसंहार्यानुपसंहार्यविभागं व्यक्तमेव दर्शयति—वेद्याकारेति। वेद्याकारैक्यं विद्यैक्यं दिशति। तत्तु वेद्याकारैक्यमनुपसंहार्यमेव प्रागेव सिद्धत्वात्। तेन न चक्रकम्, नाप्यन्योन्याश्रयः। तथा च विद्याया ऐक्ये सिद्धे तदधिकं विद्याया ऐक्यापादकाकारादधिकमन्यदेव किञ्चिदङ्गमाकृष्यते तच्चापि तत्तच्छाखासु सर्वत्र श्रुतं चेत् अनुपसंहार्यमेव श्रुतत्वात्। क्वचिदेव श्रुतं चेत् तदानीं विद्यैक्यात् शाखान्तरेऽप्युपसंहर्तव्यमिति न्यायमार्गः। इयं किल मर्यादा किं भवतैव परिक्लृप्तेत्याशङ्क्य कर्मकाण्डविदामपीयमेव मर्यादेति स्वोक्तमर्थं सर्वविद्वज्जनसम्मत्या द्रढयति—कर्मण्यपीति। अस्मदुक्तानङ्गीकारे सर्वशास्त्रव्याकोपस्स्यादित्यर्थः। अयमत्र शब्दान्वयः—कर्मण्यपि कर्मकाण्डेऽपि एवमेव एवम्प्रकारेणैवोपसंहारविषयो गुणो भेदकगुणातिरिक्त एव स्वीकृतः। अत्र हि यागदानहोमादीनां भिन्नानां कर्मणां तत्तदसाधारणधर्माद्भेदकादतिरिक्तः कश्चित् धर्मस्संयोगरूपचोदनाख्याविशेषात् कर्मैक्ये सिद्धे तस्मादेवैक्यात् सर्वत्रोपसंह्रियत इति। अयमर्थः—कर्मसु परस्परविरुद्धो धर्मो नोपसंहार्यः, रूपाद्यैक्यादैक्ये सिद्धेऽपि ऐक्यापादकं रूपमपि नोपसंहार्यम्, तद्व्यतिरिक्तमपि रूपमेकत्रैव प्रतिपन्नं चेत् इतरत्रोपसंहार्यम्। तच्चोभयत्रापि प्रतिपन्नंचेत् अनुपसंहार्यमेवेति तान्त्रिकगोष्ठीनिष्ठानां निर्णयः॥ ३२८॥

इति सर्ववेदान्तप्रत्ययाधिकरणम्॥ ८४॥

पद०—रूपैक्यादित्यादि। रूपैक्यादैक्यसिद्धौ किमितरदुपसंहार्यम्—रूपैक्यात् विद्यैक्ये सिद्धे सति किमन्यदुपसंहार्यम्। रूपैक्यस्यैवोपसंहार्यत्वे रूपैक्यात् विद्यैक्यं विद्यैक्याद्रूपैक्यमितीतरेतराश्रयत्वं रूपैक्यात् विद्यैक्यं विद्यैक्यात् वेद्याकाररूपगुणोपसंहारो गुणोपसंहाराद्रूपैक्यमिति चक्रकं वा आपतेत्। अन्यो गुणश्चेत्—वेद्याकारादन्यो गुण उपसंहार्य इति चेत्। भेदो न स्यात्—तस्याविरुद्धत्वे वेद्याकारादन्यत्वासिद्ध्या विरुद्धगुणत्वस्याङ्गीकार्यत्वात् तत्तद्विद्यासु व्यवस्थितानां परस्परभेदकानां गुणानां

परस्परमुपसंहारे विद्यानां भेदो न स्यादित्यर्थः। विकल्प्यम्—विकल्पशब्दो भेदपरः, हितार्थयत्प्रत्ययस्साधकवचनः। भेदसाधकमित्यर्थः। तत्—विद्यान्तरस्यासाधारणं रूपम्। इह—अस्मिन् विद्याविशेषे। किम्—अत्र किमितिप्रतिक्षेपे। न भवत्येव। विद्यान्तरस्यासाधारणं रूपं विद्यान्तरे न भवति हीति भावः। तेन—एवमुपपादनेन। चिन्ता—भेदाभेदचिन्ता। अफला—गुणोपसंहारानुपसंहारार्था न भवतीति निष्फलैव। इति चेन्न। वेद्याकारैक्यम्, ऐक्यं दिशति—विद्यैक्यमापादयति। वेद्याकारैक्यमनुपसंहार्यमेव प्रागेव सिद्धत्वात्, तेन न चक्रकान्योन्याश्रयाविति भावः। तदधिकं किञ्चित् अङ्गमाकृष्यते—तथा च विद्याया ऐक्ये सिद्धे तदधिकं विद्याया ऐक्यापादकाकारादन्यदेव किञ्चिदङ्गमाकृष्यते उपसंह्रियते। तच्चापि तत्तच्छाखासु सर्वत्र श्रुतं चेदनुपसंहार्यमेव श्रुतत्वात्। क्वचिदेव श्रुतं चेत् विद्यैक्यात् शाखान्तरेऽप्युपसंहर्तव्यमिति भावः। कर्मण्यप्येवमेव भेदकांशातिरिक्तो हि उपहृतिविषयः—कर्मकाण्डेऽप्येवम्प्रकारेणैव भेदकगुणातिरिक्त एवोपसंहारविषयो गुणस्स्वीकृत इत्यर्थः। अयमाशयः—कर्मस्वपि परस्परविरुद्धो धर्मो नोपसंहार्यः। रूपाद्यैक्याद्यैक्ये सिद्धेऽपि तदैक्यापादकञ्च रूपं पूर्वमेव सिद्धत्वान्नोपसंहार्यम्। तद्व्यतिरिक्तञ्च रूपमेकत्रैव प्रतिपन्नञ्चेत् इतरत्रोपसंहार्यम्। तच्चोभयत्रापि प्रतिपन्नंचेत् नैवोपसंहार्यमिति न्यायवित्सम्मतो मार्गः। स एव विद्यास्वप्यनुसर्तव्य इति न कापि हानिरिति ॥ ३२८ ॥

इति सर्ववेदान्तप्रत्ययाधिकरणम् ॥ ८४ ॥

---

## अन्यथात्वाधिकरणम् ॥ ८४ ॥

सूत्रम्—अन्यथात्वं शब्दादिति चेन्नाविशेषात् ॥ ३६० ॥

प्राग्वच्छाखाविभेदेऽप्युपशमितभिदा तादृगुद्गीथविद्या
स्यादेका चोदनाद्यैस्तदसदुभयथा रूपभेदोपलब्धेः।
गाता गेयञ्च गेये सकलमसकलञ्चेति वैषम्यसिद्धौ
शेषाभेदोऽप्यभेदं न गमयति भिदा त्वेकभेदेऽपि सिध्येत् ॥ ३२९ ॥

चिन्ता०—अत्र सङ्गतिर्भाष्ये 'एवं चोदनाद्यविशेषात् विद्यैकत्वम्, एकत्वे च गुणोपसंहारः कर्तव्य इत्युक्तम्। अतः परं काञ्चन विद्या अधिकृत्य प्रत्यभिज्ञाहेतुभूतचोदनाद्यविशेषोऽस्ति नेति निरूप्य निर्णीयते' इति। तदर्थविचारस्तु—अस्त्युद्गीथविद्या वाजिनां छन्दोगानाञ्च, किमुभयत्र विद्यैकत्वमुत विद्याभेद इति। तदर्थं विचार्यते—किमुभयत्र विद्याप्रत्यभिज्ञानमस्ति नेति। किमुभयत्रोद्गीथस्यैवोपासनकर्मत्वमुत च्छन्दो-

गानामुद्गीथावयवप्रणवस्येति। किमुभयत्रोद्गीथशब्दः उद्गीथपरः उत च्छन्दोगानामुद्गीथावयवभूतप्रणवपर। इति। किं 'ओमित्येतदक्षरमुद्गीथमुपासीत' इति प्रणवपरोद्गीथशब्दस्योपक्रमस्थत्वं 'उद्गीथमुपासाञ्चक्रिरे' इत्युद्गीथशब्दस्य प्रणवपरतामवगमयति नेति। पूर्वं वैश्वानरविद्यायां संयोगरूपचोदनाख्याविशेषात् विद्यैक्यमुक्तम्, एवं तर्हि विद्यान्तरेष्वपि तेनैवाविशेषेण विद्यैक्यं ग्राह्यम्। तत्रोदाहरणत्वेन तावदुद्गीथविद्योच्यते। तदिदमाह—प्राग्वदिति। वैश्वानरविद्यावत् शाखाभेदेऽप्युपशमितभिदा स्यादेकैवोद्गीथविद्या। इत्थमाशङ्क्य तदेतन्निराकरोति—तदसदिति। तत्र हेतुमाह—उभयथेति। रूपभेदो हि सर्वेष्वपि भेदकेषु प्रधानः, सच रूपभेदोऽत्र नैकविध्येनोपलभ्यते, अपितूभयथा। तेन भेदकप्रमाणभूयस्त्वात् भेद एवाङ्गीकार्यः। उक्तमेव भेदकप्रमाणद्वैविध्यं दर्शयति—गातेति। क्वचिदुद्गीथविद्याया-मुद्गाता ध्येयतयोच्यते, अपरत्रतु गेयम्, अयमेको रूपभेदः। रूपभेदान्तरमप्याह—गेय इति। क्वचित् सकलगेयानुध्यानम्, अन्यत्रासकलगेयानुध्यानमिति विभागः। एवं रूपवैषम्यसिद्धौ संयोगरूपचोदनाख्यासु रूपव्यतिरिक्तानां संयोगादीनामभेदोऽपि विद्याया अभेदं न गमयत्येव। तदेव विवृणोति—भिदेति। इयं खलु मीमांसकानां मर्यादा संयोगरूपचोदनाख्यानामेकभेदेऽपि कर्मभेदस्सिध्येदेव। तद्वदत्रापि प्रधानभूतस्यैकस्यापि रूपस्य भेदे सिद्धे विद्याभेदोऽङ्गीकर्तव्य एव। अत्र पुनः प्रधानस्य रूपस्य भेद उभयथा दृश्यते। तेन सुतरामपि विद्याभेदस्सिद्ध इति भावः॥ ३२९॥

-

पद०—प्राग्वदित्यादि। प्राग्वत्—वैश्वानरविद्यावत्। शाखाविभेदेऽपि—वेदभेदे सत्यपि। **चोदनाद्यैः**—चोदनासंयोगाख्याभिः। तादृक्—शाखान्तरस्थोद्गीथतुल्या। एकाकारचोदनासंयोगाख्यायुक्ततया भिन्नशाखाम्नातापि परस्परतुल्यतया भासमानेत्यर्थः। उपशमितभिदा—अतएव अनवधार्यमाणपरस्परभेदा। उद्गीथविद्या एका स्यात्। तदसत्। उभयथा रूपभेदोपलब्धेः—एकधा रूपभेदोपलब्धावपि विद्याभेदस्स्यात्, किमुतोभयथा रूपभेदोपलब्धाविति भावः। कथमित्यत्र तामेव दर्शयति—गातेत्यादिना। गाता गेयञ्च—एकस्यां शाखायां गाता उद्गाता अध्यस्तप्राणभावउपास्यः, अपरस्यां तु शाखायां उद्गीथाख्यं गेयमध्यस्तप्राणभावमुपास्यम्, अयमेको भेद इति दर्शयितुञ्चकारः। गेये सकलम्—एकस्यां गेये उद्गीथे सकलं सर्वांशजातमुपास्यकोट्यन्तर्भूतम्, वाजसनेयके कृत्स्नोद्गीथोद्गानकर्तुर्उद्गातर्यध्यस्तप्राणभावेनोपासनविधानेन कृत्स्नोऽप्युद्गीथांश उपास्यकोट्यन्तर्भूत इत्यर्थः। गेये असकलञ्च—अन्यस्यां गेये उद्गीथे असकलं असम्पूर्णं एकांशात्मकं गेयमुपास्यम्। छान्दोग्ये 'ओमित्येतदक्षरमुद्गीथमुपासीत' इत्युद्गीथावयवभूतप्रणवोपासनप्रक्रमपूर्वकमुपर्युपरि तस्यैवोपासनभेदविधानात् तन्मध्यप्रविष्टैतदुपासनेऽपि उद्गीथावयवभूतप्रणवस्यैवोपास्यत्वमित्यर्थः। अयं द्वितीयो भेद इति दर्शयितुं द्वितीयश्चकारः। इति वैषम्य-

सिद्धौ—एवं रूपभेदद्वयेन विद्याभेदसिद्धौ सत्याम्। शेषाभेदोऽप्यभेदं न गमयति—अवशिष्टानां चोदनादीनां त्रयाणाममेदोऽपि अमेदावगतिहेतुर्न भवति। तत् कुत इत्यत्राह–भिदात्वित्यादि। एकभेदेऽपि भिदातु सिध्येत्–संयोगरूपचोदनाख्यासु प्रधानस्य रूपस्यैकस्य भेदेऽपि भेदस्सिध्येदेवेत्यर्थः। इत्थं खलु तान्त्रिकव्यवस्था संयोगरूपचोदनाख्यानामेकभेदेऽपि कर्मभेदस्सिध्यतीति। तद्वदत्रापि प्रधानभूतस्य रूपस्यैकस्यापि भेदे सिद्धे विद्याभेदोऽङ्गीकर्तव्य एव। अत्र पुनः प्रधानस्य रूपस्य भेद उभयथा दृश्यते। तेन सुतरामपि विद्याभेदस्सिद्ध इति भावः॥ ३२९॥

छन्दोगोद्गीथशब्दस्तदवयवपरः प्रक्रमादिप्रसिद्धेः
कृत्स्नोद्गीथाभिधायी प्रकरणनियमाभावतो वाजिनां स्यात्।
उद्गीथोक्तिश्च नैषामुपचरितवती गातरि प्रक्रमस्था
तत्कर्त्रा साधनीये द्विषदुपशमने तत्फलत्वोक्त्यबाधात्॥ ३३०॥

चिन्ता०—पूर्वमुद्गीथविषयोर्भेदसिद्ध्यर्थं वेद्याकारभिदा प्रतिज्ञाता तामेव वेद्याकारभिदां विशदमुपपादयति–छन्दोगेति। छान्दोग्यवाक्ये तावदुद्गीथशब्दस्तदवयवभूतप्रणवपर एव। तत्र हेतुमाह—प्रक्रमादिप्रसिद्धेरिति। छान्दोग्यवाक्योपक्रमे उद्गीथशब्दस्य प्रणवपरत्वेनाभिधानात्, वाजसनेयके तु नियामकप्रकरणाद्यभावात् उद्गीथशब्दः कृत्स्नोद्गीथाभिधायी। तेन क्वचिदुद्गीथाभिधायी अन्यत्रोद्गीथावयवभूतप्रणवाभिधायीति रूपभेदस्सिध्यति। उद्गीथो नाम सामावयवो भक्तिविशेषः, तदवयवः प्रणव- इति तयोर्भेदः प्रसिद्धः। एवं तर्हि वाजिनामुद्गीथशब्द उपक्रमस्थ औपचारिकस्स्यात् उद्गातर्युद्गीथशब्दप्रयोगात् तेनोपचार एव दोष इति चेत् नात्रोपचारदोष इत्याह—तदिति। अयमर्थः–उद्गाता नाम उद्गीथस्य कर्ता, तत्कर्त्रा साधनीये कार्ये तस्याप्युद्गीथस्य नागृहीतविशेषणणेतिन्यायेन साधनत्वमस्त्येव, तेन 'उद्गीथेनात्ययाम' इत्युद्गीथस्यैव साधनत्वोपदेशे सति नोपचारप्रसङ्ग इति शब्दार्थः। द्विषदुपशमने–शत्रुपराजये। तत्फलत्वोक्त्यबाधात्–उद्गीथफलत्वोक्तेरबाधादिति॥ ३३०॥

पद०—छन्दोगोद्गीथशब्द इत्यादि। छन्दोगोद्गीथशब्दः—छन्दोगानां 'तद्ध देवा उद्गीथमाजह्रुरनेनैनानभिहनिष्यामः' इति च्छान्दोग्योद्गीथप्राणविद्याप्रकरणपठित उद्गीथशब्दः। प्रक्रमादिप्रसिद्धेस्तदवयवपरः—उपक्रमप्रभृतिषु प्रदेशेषूद्गीथशब्दस्य तदवयवभूतप्रणवपरत्वप्रसिद्धेः उद्गीथावयवभूतप्रणवपरः। 'ओमित्येतदक्षरमुद्गीथमुपासीत' इत्युपक्रमे प्रणवपरतयोद्गीथशब्दप्रयोगात् तदुपर्यप्येवं द्रष्टव्यम्। उपरितनवाक्ये उद्गीथशब्दशब्दस्य समस्तैकदेशस्यानुषङ्गः। वाजिनाम्–वाजसनेयिनां तु। प्रकरणनियमाभावतः–

प्रकरणात्मकव्यवस्थापकाभावात् । उद्गीथशब्दः कृत्स्नोद्गीथाभिधायी स्यात्—उद्गीथशब्दस्य प्रस्तावोद्गीथप्रतिहारोपद्रवनिधनाख्यसामभक्तिपञ्चकैकतमांशवाचित्वेन तमंशं सकलमभिदधातीत्यर्थः । तत्कर्ता—उद्गीथस्य कर्त्रा उद्गात्रा । साधनीये—सम्पादनीये । द्विषदुपशमने—शत्रुपराभवे । तत्फलत्वोक्त्यबाधात्—दण्डिना जितमिति विषये दण्डेन जितमित्युक्तौ तृतीयया दण्डस्य जयसाधनत्वावगतिवत् 'उद्गीथेनात्ययाम' इत्यत्रोद्गीथकर्त्रुद्गातृसाध्येऽपि शत्रुपराभवे नागृहीतविशेषणेतिन्यायेन उद्गीथस्य साधनत्वावगमात् शत्रुपराभवे तत्फलत्वोक्तेर्बाधाभावादित्यर्थः । एषाम्—वाजिनाम् । प्रक्रमस्था—'हन्तासुरान् यज्ञ उद्गीथेनात्ययाम' इत्युपक्रमपठिता । उद्गीथोक्तिश्च । गातरि—उद्गातरि । उपचरितवती न—औपचारिकप्रवृत्तिमती न भवति । उद्गीथशब्दस्य उद्गीथाख्यसामभक्तिरूपशक्यार्थपरत्वेनैव वाक्यार्थोपपत्तिवर्णनादुद्गातृलक्षणा नाङ्गीकार्येति भावः ॥ ३३० ॥

यद्यप्यब्रह्मविद्या परपरिभवनाद्यैहिकार्थप्रयुक्ता
न ग्राह्या मोक्षशास्त्रे तदपि समतया तत्परीक्षेति केचित् ।
काम्या विद्याप्यनिष्टव्यपनयनमुखैर्ब्रह्मविद्योपयुक्तैः
तत्तत्साध्यप्रभेदैर्भवति समुचितालोचनेत्याहुरन्ये ॥ ३३१ ॥

चिन्ता०—गुणोपसंहारपादे ब्रह्मविद्यैव सञ्चिन्तनीया, अध्यात्मशास्त्रत्वात् तथा सैव सर्वत्र सञ्चिन्त्यते च, अथापि किमत्र स्वयमब्रह्मविद्या शत्रुपराजयादिक्षुद्रफलान्तरार्था चोद्गीथविद्या सञ्चिन्त्यत इत्याशङ्क्य द्वेधा समाधानमाह—यद्यपीति । तत्रैकदेशिभिरुक्तः परिहारस्तावदुच्यते—यद्यपि इयमब्रह्मविद्यैव क्षुद्रफलार्था च तेनात्र न ग्राह्या च मोक्षशास्त्रे, तथापि संयोगरूपचोदनाख्याविशेषादितिन्यायेन सञ्चिन्तनीयत्वाविशेषादत्र सञ्चिन्त्यत इत्येकदेशिनामयं पक्षः । अपरेषां तु इयं विद्या काम्यापि ब्रह्मविद्यानुष्ठानोपयुक्तस्य तद्विरोधिनिराकरणस्य साधनत्वेनोपदिष्टत्वात् उपयोगविशेषस्य विद्यमानत्वेन ब्रह्मविद्यान्तर्गतत्वात् तत्र विशेषतस्सञ्चिन्तनीयेति । शत्रवो हि विद्यानुष्ठानप्रतिपक्षा वादादयः, तत्प्रवर्तकाश्च पुरुषा इति । तेषां परिभवश्च विद्यासाद्गुण्यमेवापादयतीत्युद्गीथादिविद्याचिन्तनमत्रैव विशेषेण सङ्गच्छत इति ॥ ३३१ ॥

पद०—यद्यपीत्यादि । मोक्षशास्त्रे—मोक्षतत्साधनतदुपयुक्तार्थप्रतिपादकेऽस्मिन् शारीरकशास्त्रे तत्र च ब्रह्मोपासनविचारप्रकरणे । परपरिभवनाद्यैहिकार्थप्रयुक्ता—शत्रुपराभवादिरूपैहिकफले साधनत्वेन श्रुत्या विहिता । अत एव अब्रह्मविद्या—ब्रह्मविद्याभिन्ना उद्गीथविद्या । यद्यपि, न ग्राह्या—न विचारणीया । तदपि—तथापि । समतया—संयोगरूपचोदनाख्याविशेषादिति न्यायेन तुल्यतया । तत्परीक्षेति—उद्गीथ-

विद्याविचारः क्रियत इति। केचित्–एकदेशिन ऊचुः। अन्ये तु। विद्या–उद्गीथविद्या। काम्यापि—फलान्तरार्थापि। अनिष्टव्यपनयनमुखैः–विद्यानुष्ठानविरोधिवादप्रवर्तकपुरुषपरिभवप्रमुखैः। ब्रह्मविद्योपयुक्तैः–अत एव विरोधिनिवृत्तिद्वारा ब्रह्मविद्यासहकारिभिः। तत्तत्साध्यप्रभेदैः—तत्तत्फलविशेषैः। समुचितालोचना भवतीत्याहुः—उपयुक्तार्थविषयतयोचितविचारैवेत्याहुः ॥ ३३१ ॥

अज्ञातब्रह्मतत्त्वः कथमिव विमृशेत् कुत्रचिद् ब्रह्मदृष्टिं
तस्मात्तत्तादृशीनां समुचितमगतेरत्र मीमांसनं स्यात्।
आदध्युः कर्मणाञ्च स्वफलवितरणे वीर्यवत्त्वातिरेकं
ब्रह्मध्यानार्थकर्मातिशयजननतः प्रस्तुतापेक्षितं तत् ॥ ३३२ ॥

इत्यन्यथात्वाधिकरणम् ॥ ८५ ॥

चिन्ता०—अत्रैवोद्गीथविद्यायाश्चिन्तनीयत्वे प्रकारान्तरेणापि हेतुद्वयमाह—अज्ञातेति। इदं किल हेतुद्वयं उद्गीथाद्युपासनानि ब्रह्मदृष्टिरूपाणि तानि च द्रष्टव्यब्रह्मपरिज्ञानाभावे कर्तुमेव न शक्यन्ते। तेनोद्गीथाद्युपासनचिन्तनस्यात्रैव सङ्गतिः। अत एव पूर्वं द्रष्टव्यब्रह्मविषयवैश्वानरविद्यादिकमस्मिन् पादे प्रथममेव चिन्तितम्। इदानीं ब्रह्मदृष्टिरूपोद्गीथादिविद्या चिन्त्यत इति। अयमत्र शब्दान्वयः—अज्ञातब्रह्मस्वरूपयाथात्म्यः कथमिव कुत्रचिदुद्गीथादिषु ब्रह्मदृष्टिं विमृशेत्। तस्मात् ब्रह्मज्ञानमन्तरेण उद्गीथादिदृष्टिविधीनामशक्यचिन्तनत्वात् अगत्या अत्रैव ब्रह्मकाण्ड एव चिन्तनीयता स्यात् न पुनः कर्मकाण्डे ईदृशसङ्गत्यभावात्। अयमेको हेतुरुद्गीथाद्युपासनचिन्तनानामत्रैव कर्तव्यत्व उक्तः। हेत्वन्तरमप्युपयोगविशेषरूपं दर्शयति—आदध्युरिति। 'यदेव विद्यया करोति, तदेव वीर्यवत्तरम्' इति विद्याङ्गकर्मणां वीर्यवत्तरत्वापादकत्वेनोद्गीथविद्या विशेषेणात्रैव कर्तव्या, वीर्यवत्तरत्वं नाम विद्याङ्गकर्मणामप्रतिबद्धफलत्वम्। प्रतिबन्धकाभावे हि विद्याङ्गकर्माणि ब्रह्मविद्यां सहसैव साधयितुं शक्नुवन्ति। तेन ब्रह्मविद्योत्पत्तिप्रतिबन्धकनिराकरणार्थत्वात् स्वयं ब्रह्मदृष्टिरूपत्वाच्च उभयथाप्युद्गीथादिविद्यानामत्रैव चिन्तनं समुचितमित्यर्थः। अयमत्र निर्णयः—विद्याङ्गकर्मणां स्वफलवितरणे वीर्यवत्त्वातिरेकमुद्गीथादिविद्याः खल्वादध्युः। तस्मात् ब्रह्मध्यानार्थकर्मणामतिशयजननेनोद्गीथाद्युपासनचिन्तनं प्रस्तुतापेक्षितमेवेति ॥ ३३२ ॥

इत्यन्यथात्वाधिकरणम् ॥ ८४ ॥

पद०—अज्ञातब्रह्मतत्त्व इत्यादि। अज्ञातब्रह्मतत्त्वः—अज्ञातब्रह्मस्वरूपयाथात्म्यः पुरुषः। कुत्रचित् ब्रह्मदृष्टिं कथमिव विमृशेत्–उद्गीथादिषु ब्रह्मत्वेनोपासनं कथमिवावलम्बेत। तस्मात्–उद्गीथा-

दिषु ब्रह्मदृष्टेर्ब्रह्मज्ञानसापेक्षत्वात् । तत्तादृशीनाम्—ब्रह्मदृष्टिरूपाणामुद्गीथादिविद्यानाम् । अगतेः—अगत्या । अत्र मीमांसनं समुचितं स्यात्—अस्मिन्ब्रह्मकाण्डे विचारणमुचितं भवेत् । अयमेकस्समाधिः । समाध्यन्तरमाह—आदध्युरित्यादिना । कर्मणां स्वफलवितरणे वीर्यवत्त्वातिरेकमादध्युश्च—विद्याङ्गकर्मणां स्वफलभूतब्रह्मविद्याविरोधिमनोमालिन्यनिवर्तनादौ अप्रतिबद्धफलत्वरूपवीर्यवत्त्वातिशयं उद्गीथादिविद्याः विदध्युः खलु । 'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति' इति श्रुत्या 'पृथग्घ्यप्रतिबन्धः फलम्' इति सूत्रेण च तादृशफलनिर्णयादिति भावः । तत्—तस्मात् । ब्रह्मध्यानार्थकर्मातिशयजननतः प्रस्तुतापेक्षितम्—उक्तरीत्या ब्रह्मविद्याङ्गकर्मसु प्रबलकर्मान्तरप्रतिबन्धाभावेनाविलम्बेन स्वफलवितरणरूपातिशयजननेन प्रकृतब्रह्मविद्योपयुक्तमेवोद्गीथादिविद्याविचारणमिति ॥ ३३२ ॥

इत्यन्यथात्वाधिकरणम् ॥ ८४ ॥

---

## सर्वाभेदाधिकरणम् ॥ ८५ ॥

सूत्रम्—सर्वाभेदादन्यत्रेमे ॥ ३६४ ॥

ज्यैष्ठ्यश्रैष्ठ्यादिसाम्ये क्वचन समधिकं भाति वासिष्ठ्यपूर्वं
तेनेत्थंरूपभेदाद्बहुनिगमगता भिद्यतां प्राणविद्या ।
मैवं वागादितत्तद्गुणपरवशतावर्णनस्याविशेषात्
वागाद्यैस्स्वस्वधर्मोपचरणमकृतं तावता स्यान्न भेदः ॥ ३३३ ॥

इति सर्वाभेदाधिकरणम् ॥ ८५ ॥

चिन्ता०—पूर्वस्मिन्नधिकरणे रूपभेदाद्विद्याभेद इत्युक्तम्, ततः पूर्वं वैश्वानराधिकरणे रूपैक्याद्विद्यैक्यमिति, अधुना पूर्वाधिकरणवत् रूपभेदाद्विद्याभेदमाशङ्क्य तत्प्रतिक्षेपेण वैश्वानराधिकरणवत् रूपैक्यात् विद्यैक्यमेव पुनः प्रतिष्ठाप्यत इति सङ्गतिः । तदर्थविचारस्तु—छन्दोगानां कौषीतकीनाञ्च प्राणविद्या आम्नाता, किमुभयत्र विद्यैक्यमुत भेद इति । किमुभयत्र वसिष्ठत्वादिगुणकमुपासनमुत कौषीतकीनां तद्विधुरमिति । किं कौषीतकीनां प्राणविद्यायामपि वसिष्ठत्वादिप्राप्तिरस्ति नेति । किं कौषीतकीनां 'यदहं वसिष्ठास्मि त्वं तद्वसिष्ठोऽसि' इत्यनुवादाभावेऽप्युपक्रमे प्राणायत्तस्थितिकार्यकरत्वाभिधानात् वागादीनां तथारूपवसिष्ठत्वादिप्राप्तिः प्राणविद्यायां गम्यते नेति । तत्र पूर्वपक्षमाह—छान्दोग्यवाजसनेयककौषीतकि-

ब्राह्मणेषु ज्यैष्ठ्यश्रैष्ठ्यादीन्यधीतानि प्राणे, कौषीतकिविद्यायामस्य सर्वस्यापि गुणजातस्य साम्येऽपि केवलं वागादिवसिष्ठत्वादिकम्, मद्वसिष्ठत्वादिकं त्वद्वसिष्ठत्वाधीनमिति वागादिभिः प्राणमुद्दिश्य नानूदितम्। तत्रेत्थंरूपभेदाद्बह्वीषु शाखासु प्रतिपन्ना प्राणविद्या भिद्यतामिति । इमं पूर्वपक्षमनुवदति—ज्यैष्ठ्येति। तत्प्रतिक्षिपति—मैवमिति । वागादीनां तत्तज्ज्यैष्ठ्यश्रैष्ठ्यवासिष्ठ्यादिगुणानां प्राणपरवशतावर्णनस्याविशेषात् वागाद्यैः प्राणे स्वस्वधर्मोपचरणमात्रं न कृतम्, तावता न रूपभेदः। वागादीनां वसिष्ठत्वादेः प्राणाधीनत्वोपपादनादेव वागादिवसिष्ठत्वं प्राणवसिष्ठत्वमित्यर्थादुक्तं भवतीति न पृथग्वक्तव्यमवशिष्यते। तेन न रूपभेदाद्विद्याभेदावकाश इति। तदेतत्सर्वं भाष्य एव सुव्यक्तं विवृतमिति नाचार्यैर्विवरणीयमवशिष्टं किञ्चिदस्तीत्युपरम्यते ॥ ३३३ ॥

इति सर्वाभेदाधिकरणम् ॥ ८५ ॥

पद०—ज्यैष्ठ्यश्रैष्ठ्यादिसाम्य इत्यादि । ज्यैष्ठ्यश्रैष्ठ्यादिसाम्ये—छान्दोग्यवाजसनेयककौषीतकिब्राह्मणेषु ज्यैष्ठ्यश्रैष्ठ्यादिगुणानामुपास्यप्राणसम्बन्धितया श्रवणस्य साम्येऽपि। क्वचन—छान्दोग्यवाजसनेयकयोः। वासिष्ठ्यपूर्वं समधिकं भाति—वसिष्ठत्वादिगुणजातमधिकं प्राणसम्बन्धितया प्रतीयते। तेन—कारणेन। इत्थंरूपभेदात्—एकत्र ज्यैष्ठ्यश्रैष्ठ्यवासिष्ठ्यादिगुणयुक्तः प्राण उपास्यः, अपरत्र ज्यैष्ठ्यश्रैष्ठ्यमात्रगुणकः प्राण उपास्य इत्युपास्यरूपभेदात्। बहुनिगमगता—अनेकशाखास्वाम्नाता। प्रकरणादिभेदोऽपि सिद्ध इति भावः। प्राणविद्या भिद्यताम्—भिन्ना भवतु। मैवम्—एवं मा शङ्कस्वेत्यर्थः। वागादितत्तद्गुणपरवशतावर्णनस्याविशेषात्—वागादीनां वाक्चक्षुश्श्रोत्रमनसां तेते गुणा वसिष्ठत्वप्रतिष्ठात्वसम्पत्त्वायतनत्वरूपास्तेषां परवशतायाः प्राणधीनताया वर्णनस्य प्रतिपादनस्य अविशेषात् तुल्यत्वात्। वागाद्यैस्स्वस्वधर्मोपचरणम्—वाक्चक्षुश्श्रोत्रमनोभिस्स्वस्वधर्माणां वसिष्ठत्वप्रतिष्ठात्वसम्पत्त्वायतनत्वरूपाणां उपचरणं छान्दोग्यवाजसनेयकयोः 'यदहं वसिष्ठास्मि त्वं तद्वसिष्ठोऽसि यदहं प्रतिष्ठास्मि त्वं तत्प्रतिष्ठासि यदहं सम्पदस्मि त्वं तत्सम्पदसि यदहमायतनमस्मि त्वं तदायतनमसि' इत्यादिरूपेणैव प्राणसम्बन्धितया समर्पणम्। अकृतम्—न कृतम्। कौषीतकिशाखायामिति शेषः। तावता—वागादिभिरुपचारमात्राकरणेन। भेदो न स्यात्—रूपभेदो विद्याभेदस्तत्कृतोऽपि न स्यात्। स्वस्वगुणानां प्राणाधीनत्वोपपादनतुल्यतया तेषां गुणानां प्राणसम्बन्धित्वं तादधीन्यरूपं सिद्धमिति भावः ॥ ३३३ ॥

इति सर्वाभेदाधिकरणम् ॥ ८५ ॥

## आनन्दाद्यधिकरणम् ॥ ८६ ॥

सूत्रम्—आनन्दादयः प्रधानस्य ॥ ३६५ ॥

नानाशब्दादिभेदादिति खलु भिदुरां वक्ष्यति ब्रह्मविद्यां
रूपं विद्यान्तरस्य प्रकरणपठितं नान्यदन्यत्र योज्यम् ।
तस्मात् सत्यत्वपूर्वास्तदितरगुणवत् स्युर्व्यवस्थापनीयाः
मैवं ब्रह्मस्वरूपावगतिरिह यतस्तद्धि सर्वास्वपेक्ष्यम् ॥ ३३४ ॥

चिन्ता—पूर्वं त्रिभिरधिकरणैर्विद्यानां भेदाभेदचिन्ता कृता, तत्र च वैश्वानरविद्यायां 'वायुः प्राणः' इति वायुः परमपुरुषप्राणत्वेन ध्येयतया परिकल्पितः । उद्गीथविद्यायां पुनरुद्गीथादिषु प्राणदृष्टिरूपत्वेन प्राणप्रसङ्गः कृतः । इतः पूर्वस्मिन्नधिकरणे साक्षात् प्राण एव निरूपितः । अतोऽपि च पूर्वेषामधिकरणानां परस्परसाङ्गत्यम् । ज्यैष्ठ्यश्रैष्ठ्यादिगुणोपपादनान्तर्भावेन वसिष्ठत्वादीनामप्यनुसन्धेयत्वमुक्तम् । तत्प्रसङ्गात् ब्रह्मणस्सर्वविद्यावेद्यत्वात् तत्स्वरूपनिरूपकधर्माणामानन्दादीनां तत्स्वरूपनिरूपणान्तर्भावेनानुसन्धेयत्वमुच्यतइति सङ्गतिः । भाष्येच सङ्गतिस्स्पष्टा दृश्यते 'अत्र ब्रह्मस्वरूपगुणानां सर्वासु परविद्यासूपसंहारोऽस्ति नेति विचार्यते' इति । तदर्थविचारस्तु-किमानन्दादयो गुणास्सर्वासु विद्यासूपसंहार्याः, उत यत्र श्रूयन्ते तत्रैवेति । किमानन्दादीनामैश्वर्यादिवत् गुण्यपृथक्त्वमात्रमेव, उत ब्रह्मस्वरूपवत् स्वरूपप्रतीत्यनुबन्धित्वमस्तीति । पूर्वपक्षाभिप्रायेण सङ्गतिं प्रदर्शयन् पूर्वपक्षं तावदाह—नानाशब्देति । अयमर्थः—पूर्वं गुणभेदाद्विद्याभेद इति भवतैवोक्तम्, तेन तत्र तत्र श्रुतानामन्येषां गुणानां व्यवस्थितिस्सिद्धा, तद्वदेव सत्यत्वादीनामपि धर्माणां ब्रह्मस्वरूपव्यतिरिक्तानां विद्याभेदेन व्यवस्थितिरिति पूर्वपक्षिणोऽभिप्रायः । उत्तरत्र सूत्रकारो 'नाना शब्दादिभेदात्' इति गुणभेदाद् भिदुरां ब्रह्मविद्यां वक्ष्यति । तेन स्वप्रकरणपठितात् रूपादन्यत् विद्यान्तरस्य रूपम् अन्यत्र विद्यान्तरे न योज्यम् । उभयत्रापि पठितं चेत् उभयत्रापि योज्यमस्तु नाम । इयमेव हि नीतिविदां मर्यादा । तस्मात् एवं न्यायमर्यादानिर्णीतत्वात् सत्यत्वपूर्वा गुणा अपि सत्यत्वज्ञानत्वानन्तत्वानन्दत्वामलत्वान्यपि तदितरगुणवत् व्यवस्थापनीयास्स्युरिति पूर्वः पक्षः । तदिदमपाकरोति-मैवमिति । अपाकरणप्रकारमेव विवृणोति—ब्रह्मेति । अयमर्थः—लोके हि वस्तूनां गुणा द्विविधाः, तत्र स्वरूपनिरूपकाः केचित्, निरूपितस्वरूपविशेषकाश्चापरे, यत् स्वरूपनिरूपकं तत् वस्तुस्वरूपप्रसङ्गे सर्वत्रान्वेति यथा घटप्रसङ्गे घटत्वम् । निरूपितस्वरूपविशेषकं तु रक्तत्वकृष्णत्वादिकं तत्रतत्र व्यवतिष्ठते । एवं स्वरूपनिरूपकत्वादानन्दादीनि सर्वत्रा-

नुवर्तन्ते । परे पुनः प्रियशिरस्त्वादयस्तत्रतत्र व्यवतिष्ठन्त इति सर्वविद्यासाधारण्यमेवानन्दादीनाम् । ब्रह्मस्वरूपेति—ब्रह्मस्वरूपावगतिर्यस्माद्भवति तत् स्वरूपवत् सर्वासु विद्यास्वपेक्षणीयमिति । अयमन्वारोहः । स्वरूपनिरूपकधर्मत्वात् स्वरूपप्रतिपत्त्यर्थमेवेति तत्त्वम् ॥ ३३४ ॥

पद०—नानाशब्दादीत्यादि । नानाशब्दादिभेदादिति ब्रह्मविद्यां भिदुरां वक्ष्यति खलु—उत्तरत्र हि सूत्रकारः 'नानाशब्दादिभेदात्' इत्येतत्सूत्रेण ब्रह्मविद्यां गुणभेदाद्भिन्नां वक्ष्यति किल । अन्यत् विद्यान्तरस्य प्रकरणपठितं रूपं अन्यत्र न योज्यम्—तेन स्वप्रकरणपठिताद्रूपादन्यत् विद्यान्तरसम्बन्धि तत्प्रकरणपठितं रूपं गुणजातं विद्यान्तरे न योज्यं हीत्यर्थः । तस्मात्—एवंन्यायमर्यादानिर्णीतत्वात् । सत्यत्वपूर्वास्तदितरगुणवत् व्यवस्थापनीयास्स्युः—सत्यत्वज्ञानत्वानन्तत्वानन्दत्वामलत्वरूपा गुणा अपि ऐश्वर्यादिगुणान्तरवत् यत्रयत्र येये पठितास्तत्रतत्रैव तेते स्थापनीयाः । यद्विद्याप्रकरणे ये पठितास्तस्यामेव तेऽनुसन्धेया इति । मैवम्—एवं मा शङ्किष्ठाः । इह—शास्त्रे । ब्रह्मस्वरूपावगतिर्यतः—ब्रह्मस्वरूपनिश्चयो यस्माद्गुणजाताद्भवति । तत्—गुणजातम् । सर्वास्वपेक्ष्यं हि—सर्वविद्यास्वनुसन्धेयमेव । अयमाशयः—लोके हि वस्तूनां गुणा द्विविधाः, तत्र स्वरूपनिरूपकाः केचित्, निरूपितस्वरूपविशेषकाश्चापरे यत् स्वरूपनिरूपकं तत् वस्तुस्वरूपप्रसङ्गे सर्वत्रान्वेति यथा घटप्रसङ्गेषु घटत्वम्, निरूपितस्वरूपविशेषकं तु रक्तत्वकृष्णत्वादिकं तत्रतत्र व्यवतिष्ठते एवं स्वरूपनिरूपकत्वात् आनन्दादीनि सर्वत्रानुवर्तन्ते परे पुनस्तत्रतत्र व्यवतिष्ठन्ते अतस्सर्वविद्यासाधारण्यमेवानन्दादीनामिति । अत्र चिन्तामणिः—'ब्रह्मस्वरूपेति—ब्रह्मस्वरूपावगतिर्यस्माद्भवति तत् स्वरूपवत् सर्वासु विद्यास्वपेक्षणीयमिति । अयमन्वारोहः । स्वरूपनिरूपकधर्मत्वात् स्वरूपप्रतिपत्त्यर्थमेवेति तत्त्वम्' इति । वस्तुतस्तु सत्यत्वादीनामपि तत्तद्विद्यानुसन्धेयगुणवत् व्यवस्थापनीयत्वे शङ्किते तेषां ब्रह्मस्वरूपप्रतिपत्त्यर्थं सर्वविद्यानिष्ठानामप्यपेक्षणीयत्वमेव, अतो न तेषां व्यवस्थावकाशः, अनुसन्धेयगुणानां हि व्यवस्था, इमे तु सर्वविद्यानिष्ठैरपि इतरव्यावृत्ततया ब्रह्मस्वरूपनिष्कर्षवेलायामेवानुसन्धेया इति समाहितमिति प्रतीयते । अत्र तत्त्वं तत्त्वविद एव विदाङ्कुर्वन्तु ॥ ३३४ ॥

सत्यत्वं विश्वहेतौ बहुविधचिदचिद्विक्रियाजालहाने:
ज्ञानत्वं ज्ञातृभावात् स्वरबहुलतया स्वप्रकाशत्वतश्च ।
त्रिद्व्येकाभिस्तु सर्वं प्रमितमिह परिच्छित्तिभिर्ब्रह्मणोऽन्यत्
तस्यानन्त्यं वियोगात् तिसृभिरपि सदानिर्मलानन्दधाम्नः ॥ ३३५ ॥

चिन्ता०—प्रसक्तं सत्यत्वादिकं स्वरूपेण विभज्य दर्शयति—सत्यत्वमिति । सत्यत्वं विश्वहेतौ परस्मिन्ब्रह्मणि बहुविधचिदचिद्विक्रियाजालहानेर्भवति ज्ञानत्वं ज्ञातृभावात् भवति । ज्ञानशब्दः कर्तर्यपि प्रयुज्यते 'कृत्यल्युटो बहुलम्' इति कर्तर्यपि ल्युट्प्रयोगसम्भवात् । 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः' इति कर्तर्येव ल्युप्रयोगमाश्रित्य निर्वोढुं शक्यत्वात् । 'तद्गुणसारत्वात्तु तद्व्यपदेशः' इति ज्ञानगुणसारे ज्ञानशब्दस्य प्रयोक्तुमपि शक्यत्वात् । स्वरूपस्य स्वप्रकाशत्वेन स्वप्रकाशस्वरूपवाचिनो ज्ञानशब्दस्य तत्रैव समन्वयाच्च । नन्वत्र कर्तृत्वेन भावत्वेन प्रत्ययभेदेनापि बहुधानिर्वाहे सति अर्थभेदात् स्वरभेदस्स्यादित्याशङ्क्य तत्राप्युत्तरमाह—स्वरबहुलतयेति । स्वरस्य वैकल्पिकत्वादित्यर्थः । यत्र स्वरानुपपत्तिर्न विद्यते तत्र तथैव स्वीकार्यम् । यत्र पुनस्स्वरभेदोऽङ्गीकार्यः, तत्र 'बहुलं छन्दसि' इति स्वरादीनां बहुलत्वेन न सङ्कटं किञ्चित् । अन्यथा कथं 'उणादयो बहुलम्' इत्यादिव्यपदेशो भगवतः पाणिनेरपि । त्रिविधपरिच्छेदाभावरूपं ब्रह्मणोऽनन्तत्वं वक्तुं परिच्छेदप्रकारमाह—त्रिद्व्येकाभिरिति । त्रिपरिच्छिन्ना घटादयः देशतः कालतो वस्तुतश्च परिच्छिन्नत्वात् । द्विपरिच्छिन्नः परमाणुः अणुत्वादनन्तर्यामित्वाच्च । एकपरिच्छिन्नः पुनः कालः विभुत्वे नित्यत्वे च सति केवलमनन्तर्यामित्वेन वस्तुपरिच्छिन्नत्वात् । ब्रह्मण आनन्त्यमप्याह—तस्येति । तिसृभिः परिच्छित्तिभिरयोगात् परब्रह्मण आनन्त्यमिति । सदा निर्मलानन्दधाम्न इति वचनमानन्दस्य ब्रह्मगुणेषु प्राधान्यप्रख्यापनार्थम् ॥ ३२५ ॥

पद०—सत्यत्वमित्यादि । विश्वहेतौ—जगत्कारणभूते ब्रह्मणि । सत्यत्वम् । बहुविधचिदचिद्विक्रियाजालहानेः—बहुविधस्य चिदचित्सम्बन्धितया दृष्टस्य विक्रियाजालस्य स्वरूपस्वभावविकारवर्गस्य हानेर्निवृत्त्या भवति । ज्ञानत्वं ज्ञातृभावात्—'कृत्यल्युटो बहुलम्' इति कर्तरिल्युट्प्रत्ययेन व्युत्पत्तौ वा 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः' इति सूत्रेण नन्द्यादित्वाश्रयणेन कर्तरिल्युप्रत्ययेन व्युत्पत्तौ वा 'तद्गुणसारत्वात्तु तद्व्यपदेशः' इति न्यायाश्रयणेन व्युत्पत्तौ वा ज्ञानाश्रयत्वात् । स्वप्रकाशत्वतः—ज्ञानशब्दप्रवृत्तिनिमित्तभूतस्वप्रकाशत्वस्य ब्रह्मस्वरूपे विद्यमानत्वात् । स्वरबहुलतया च—अर्थभेदकल्पनानुगुणप्रत्ययभेदकल्पनया स्वरभेदे कल्पनीये 'बहुलञ्छन्दसि' इति स्वरादीनां बहुलत्वेन सङ्कटाभावाच्च भवतीत्यर्थः । इह ब्रह्मणोऽन्यत्सर्वं तु त्रिद्व्येकाभिः परिच्छित्तिभिः प्रमितम्—इह लोके ब्रह्मभिन्नं सर्वमपि वस्तु यथायोगं तिसृभिः परिच्छित्तिभिर्द्वाभ्यां परिच्छित्तिभ्यामेकया वा परिच्छित्त्या प्रमितं परिच्छिन्नम् । तिसृभिः परिच्छिन्ना घटादयो देशतः कालतो वस्तुतश्च परिच्छिन्नत्वात् । द्वाभ्यां परिच्छिन्नः परमाणुरूपो जीवः, अणुत्वेन सर्ववस्त्वनन्तर्यामित्वेन च । एकया परिच्छिन्नः कालो विभुत्वे नित्यत्वे च सति केवलमनन्तर्यामित्वेन वस्तुपरिच्छिन्नत्वात् । सदा निर्मलानन्दधाम्नस्तस्य—सर्वस्मिन्नपि काले दुःखसंवलनसाति-

शयत्वादिरूपमलरहितापरिच्छिन्नानन्दाश्रयस्य ब्रह्मणः । तिसृभिरपि वियोगात्—सर्वदेशसम्बन्धित्वात् सर्वकालसम्बन्धित्वात् सर्ववस्त्वन्तर्यामित्वाच्च तिसृभिरपि देशकालवस्तुरूपाभिः परिच्छित्तिभिर्वियोगात्परिच्छेदनरूपसम्बन्धाभावात् । आनन्त्यम्—सिध्यतीति शेषः । निर्मलानन्दधाम्न इतिवचनं ब्रह्मगुणेषु प्राधान्यख्यापनार्थम् ॥ ३३५ ॥

उक्तं जन्मादिसूत्रे ननु निखिलजगद्धेतुता ब्रह्मलक्ष्म
स्यात्तेनैव स्वरूपावगतिरिह मुधा सत्यतादीति चेन्न ।
हेतोरीशस्य हेत्वन्तरगतविविधावद्यवर्गप्रसङ्गे
शङ्कारूढे क्रमेणेतरविभजनतस्तस्य साफल्यसिद्धेः ॥ ३३६ ॥

चिन्ता०—ननु जन्मादिसूत्र एव ब्रह्मणो लक्षणमुक्तम् । तच्च लक्षणं लक्षणत्वादेव समानासमानजातीयव्यावर्तकम्, अतस्तेनैव लक्षणेनालम्, किमर्थमिदं स्वरूपलक्षणमिति सत्यत्वादिकमुच्यत इत्याशङ्क्य प्रयोजनविशेषाभिधानेन परिहरति—उक्तमिति । अयमत्र शब्दान्वयः—जन्मादिसूत्र एव निखिलजगद्धेतुता ब्रह्मलक्ष्मेत्युक्तम् । नन्विति चोद्यं द्योतयति । तेनैव स्वरूपावगतिः स्यात् । सत्यत्वादिकमत्र निरर्थकमेव । सत्यादिशब्देन तदेव ब्रह्मोच्यते चेत् पौनरुक्त्यम् । अन्यच्चेत् तर्हि ब्रह्म न स्यात् । नहि ब्रह्मद्वितयमस्ति । लक्षणान्तरं चेत् कृतकरत्वादेव नैरर्थक्यम् । प्रयोजनविशेषोऽस्ति चेत् तत् किमिति विशदं प्रकाशयेति पराभिप्रायः । परिहरति—नेति । तदेव विवृणोति—हेतोरिति । ईश्वरस्य जगत्कारणत्वे प्रतिपन्ने कारणत्वाशङ्कितदोषपरिहारार्थं सत्यत्वादिकमभिधीयत इति भाष्यकारैरेव प्रागेवोक्तम् । अचित्संसृष्टजीवमुक्तनित्यानामनुक्रमेण व्यवच्छेदात् । तेन सर्वविलक्षणत्वेन प्रतिपन्नब्रह्मस्वरूपपरिशोधनार्थं सत्यादिवाक्यमपीति न नैरर्थक्यप्रसङ्गः । किञ्चास्मत्पक्षे ब्रह्मणि नानागुणोपादानमुपासनार्थम्, अथवा फलदशायामनुसन्धानार्थमिति सर्वसाफल्यसिद्धिः ॥ ३३६ ॥

पद०—उक्तमित्यादि । ननु—किञ्चिच्चोद्यत इत्यर्थः । जन्मादिसूत्रे—'जन्माद्यस्य यतः' इति सूत्रे । निखिलजगद्धेतुता—निखिलजगत्कारणत्वरूपम् । ब्रह्मलक्ष्म—ब्रह्मण इतरव्यावर्तकमसाधारणधर्मरूपं लक्षणम् । उक्तम्—उक्तं खलु । तेनैव स्वरूपावगतिस्स्यात्—तेनैव ब्रह्मस्वरूपस्येतरव्यावृत्ततया अवगतिस्स्यात् । अतः इह सत्यतादि मुधा इति चेन्न—अत्र सत्यत्वादिकं निरर्थकमेवेति शङ्क्यते चेत्तन्न युक्तम् । हेतोरीशस्य हेत्वन्तरगतविविधावद्यवर्गप्रसङ्गे शङ्कारूढे—जगत्कारणभूतस्य परमात्मनो

लोकसिद्धकारणान्तरगतो यो विविधावद्यवर्गः अचिति दृष्टः स्वरूपविकारादिः, तत्संसृष्टचेतने दृष्टः स्वभाव-विकारादिः, मुक्ते कादाचित्कज्ञानसङ्कोचादिः, नित्ये सातिशयस्वरूपगुणादिः, तस्य प्रसङ्गे ब्रह्मण्यपि स्यादि-त्यापादने शङ्कारूढे शङ्कया प्राप्ते सति। क्रमेण—सत्यज्ञानानन्तपदैरुदाहृततत्तद्दोषविरोधितत्तदाकार-समर्पणक्रमेण। इतरविभजनतः—इतरेभ्यः अचित्तत्संसृष्टबद्धचेतनमुक्तनित्येभ्यो विभजनतो ब्रह्मणो व्यावर्तनात्। तस्य—सत्यत्वादेः। साफल्यसिद्धेः—साफल्यसिद्ध्या उक्तशङ्का न कार्येति पूर्वेणा-न्वयः। अत्रायं सत्यादिपदानामर्थतो व्यावर्तनक्रमः—सत्यपदं निरुपाधिकसत्तायोगि ब्रह्माभिदधाति तेन विकारास्पदादचेतनात् तत्संसृष्टाद्बद्धचेतनाच्च ब्रह्म व्यावर्तितम्। नामान्तरभजनार्हावस्थान्तरयोगेन तयो-र्निरुपाधिकसत्तायोगरहितत्वात्। ज्ञानपदं नित्यासङ्कुचितज्ञानस्वरूपं नित्यासङ्कुचितज्ञानगुणकञ्च ब्रह्माह तेन कदाचित्सङ्कुचितज्ञानेभ्यो मुक्तेभ्यो ब्रह्म व्यावर्तितम्। अनन्तपदं देशकालवस्तुपरिच्छेदरहितस्वरूपं ब्रह्माभिदधाति तत्र सगुणत्वात् स्वरूपस्य स्वरूपेण गुणैश्चानन्त्यम्। तेन पूर्वपदद्वयव्यावृत्तकोटिद्वय-विलक्षणेभ्यस्सातिशयस्वरूपगुणेभ्यो नित्येभ्यो ब्रह्म व्यावर्तितमिति ॥ ३३६ ॥

नन्वाध्यानं प्रियाद्यैरपि भवति शिरःपक्षपुच्छादिरूपैः
बाढं तत्र प्रियाद्यैस्तदवगतिरतस्ते तु सर्वानुवृत्ताः।
पुच्छाद्यंशो निरंशे न भवति नच तद्दृष्टिरुत्कृष्टतत्त्वे
तस्माच्चित्याग्निरूपक्रमवदिह कृतं रूपणं ब्रह्मणि स्यात् ॥ ३३७ ॥

चिन्ता०—ननु ब्रह्मध्यानार्थं सत्यत्वाद्यनुसन्धेयमित्युक्तं भवता, तर्हि ब्रह्मानुध्यानं प्रियशिरस्त्वाद्यनु-सन्धानेनापि सिध्यतीत्याशङ्क्य वैषम्यं दर्शयति—नन्विति। अयमत्र शब्दार्थः—ब्रह्मानुध्यानं 'तस्य प्रियमेव शिरः' इत्यादिभिरपि सिध्यतीति। प्रियशिरस्त्वादीनामपि ब्रह्मणि नियमेनानुसन्धानं स्यादित्या-शङ्क्य तत्रार्धाङ्गीकारमाह—बाढमिति। अयमर्थः—त्वदुक्ते किञ्चिदङ्गीक्रियते किञ्चिच्च न, प्रियादीनां परमानन्दरूपब्रह्मान्तर्भावादङ्गीकारः पक्षादीनां परिकल्पनामात्रत्वादनङ्गीकारश्च। तेन प्रियादीनामपि ब्रह्म-स्वरूपावगतिहेतुत्वात् ते प्रियादयो गुणाः सर्वानुवृत्ताः। प्रियाद्यैस्तदवगतिः—प्रियमोदप्रमोदादिभि-र्ब्रह्मस्वरूपावगतिरित्यर्थः। तर्हि पुच्छत्वादिकमपि 'ब्रह्मपुच्छं प्रतिष्ठा' इत्यादिभिरधीतमनुसन्धेयं स्यादि-त्याशङ्क्यासम्भवान्नेत्याह—पुच्छाद्यंश इति। असम्भवमेवाह—निरंश इति। निरंशे ब्रह्मणि पुच्छाद्यंशो न भवतीत्यन्वयः। तर्हि ब्रह्मणि पुच्छत्वदृष्टिस्स्यात्, दृष्टिविधौ ह्यविद्यमानस्य दर्शनं भूषणमेव स्यादि-त्याशङ्क्य परिहरति—न चेति। अपकृष्टे ह्युत्कृष्टदृष्टिविधानं दृष्टिविधिः। यथा 'मनो ब्रह्मेत्युपासीत'

इत्यादौ । इह पुनर्ब्रह्मणि पुच्छत्वादिदृष्टिश्चेत् विपरीतमेव स्यात् । उत्कृष्टब्रह्मणि अपकृष्टपुच्छत्वादिदृष्टि-विधेरयोगात् । तर्हि 'तस्य प्रियमेव शिरः' इत्यादेः कथमिह परिकल्पनमित्याशङ्कायां तत्परिकल्पने निर्वाहमाह—तस्मादिति । एवं प्रियशिरस्त्वादीनां बुद्ध्यारोहार्थत्वोपपादनात् उत्तरत्राभिधीयमानचित्या-ग्निरूपक्रमवदिह परस्मिन् ब्रह्मणि शिरःप्रभृतिपरिकल्पनं समुचितमेव ॥ ३३७ ॥

पद०—नन्वाध्यानमित्यादि । ननु—प्रश्ने । शिरःपक्षपुच्छादिरूपैः—शिरःपक्षपुच्छात्मप्रति-ष्ठात्वेन प्रतिपादितैः । प्रियाद्यैरपि—प्रियमोदप्रमोदानन्दब्रह्मभिरपि । आध्यानम्—ब्रह्मानुध्यानम् । भवति खलु । अतः प्रियशिरस्त्वादीनामपि ब्रह्मणि नियतमनुसन्धानं स्यादिति शङ्का । बाढमित्यर्धाङ्गी-कारे । तत्राङ्गीकृतांशमाह—तत्रेत्यादिना । तत्र—भवदुक्तप्रियशिरस्त्वादिविषये । प्रियाद्यैः—प्रियमोदप्रमोदानन्दब्रह्मभिः । तदवगतिः—सत्यत्वादिभिरिव ब्रह्मस्वरूपावगतिर्भवति । अतः—कार-णात् । ते तु—तएव । सर्वानुवृत्ताः—सर्वविद्यास्वपि स्वरूपावगतिहेतुत्वेनानुगता भवन्तु । पुच्छाद्यंशो निरंशे न भवति—पुच्छशिरःपक्षात्मप्रतिष्ठारूपोऽशः अंशभेदरहिते ब्रह्मणि न भवितुमर्हति हि । उत्कृष्टतत्त्वे तद्दृष्टिश्च न—सर्वोत्कृष्टब्रह्मस्वरूपे शिरःप्रभृतित्वेनारोपितानुसन्धानमपि न युक्तम् । 'ब्रह्मदृष्टिरुत्कर्षात्' इतिन्यायेनोत्कृष्टे ब्रह्मण्यपकृष्टशिरआदिदृष्टेरयोगादिति भावः । तस्मात्—शिरःप्रभृतीनां स्वरूपासङ्गतत्वदृष्टिविशेषणतायोग्यत्वरूपात् कारणात् । चित्याग्निरूपक्रमवत्—'पूर्वविकल्पः प्रकरणा-त्स्यात्' इत्याद्युपरितनाधिकरणविषयवाक्यविषयभूतमनश्चिन्नामकचित्याग्नेर्यो रूपक्रमः 'मनसाधीयन्त मनसाचीयन्त मनसैषु ग्रहा अगृह्यन्त मनसास्तुवन्त' इत्यादिना क्रियमाणः उपयुक्ताग्न्याधानचयन-ग्रहग्रहणस्तोत्रशस्त्रादिकल्पनाक्रमः, तत्तुल्यम् । इह—तैत्तिरीयकानन्दमयविद्याप्रकरणेऽपि । ब्रह्मणि—'ब्रह्मविदाप्नोति परम्' इत्यादिना विविच्य ज्ञापनीयत्वेन प्रक्रियमाणे परमात्मनि । रूपणं कृतं स्यात्—बुद्ध्यारोहाय शिरआदित्वेन कल्पनं कृतं भवेदित्यर्थः ॥ ३३७ ॥

आनन्दत्वप्रधानं कतिचिदिह विदुस्सौत्रमानन्दशब्दं
धर्मानन्दाभिधानं तदुभयवचनं वेति पश्यन्ति केचित् ।
ज्ञानोक्तौ चैतदेवं तदितरसमता यावता स्यान्न शङ्क्या
तावद्धर्मानुवृत्तिर्बहुभजनपदे ब्रह्मणि स्थाप्यतेऽत्र ॥ ३३८ ॥

इत्यानन्दाद्यधिकरणम् ॥ ८६ ॥

चिन्ता०—अत्रानन्दादिशब्दानामर्थभेदं पक्षभेदेनोक्त्वा भाष्यकाराभिमतप्रकारेण स्वीयमर्थं निग-मयति—आनन्दत्वेति । केचिदत्र सौत्रमानन्दशब्दं स्वरूपस्य आनन्दरूपत्वप्रधानं वर्णयन्ति । अपरे

पुनः धर्मानन्दाभिधानमाहुः । तद्गुणसारत्वादिति न्यायेनानन्दित्वमेवानन्दशब्दः प्राहेति । तथा तृतीयं पक्षमाह—तदुभयवचनमिति । आनन्दित्वमानन्दत्वञ्चोभयमपि आनन्दशब्दः कथयतीति । अत्र पक्षद्वयमपि विकल्पेनैककोटित्वेनोपात्तम् । अयमर्थः—आनन्दत्वमेवोच्यत इत्येके । अपरे आनन्दित्वमेव यद्वोभयमपीत्याहुः । यद्वा केचिच्छब्दावृत्त्या पक्षत्रयमपि त्रयाणां पक्षइति पृथक्पृथक् पक्षत्वेन वाच्यम् । अत्रानन्दशब्दोक्तमर्यादां ज्ञानशब्देऽप्यतिदिशति—ज्ञानोक्ताविति । ज्ञानत्वं ज्ञानित्वं तदुभयं वा ज्ञानशब्देनोच्यत इति । एवं पक्षभेदानुक्त्वा भाष्यकाराभिप्रेतं पक्षं वैशद्याय दर्शयति—तदितरसमतेति । अयमर्थः—ब्रह्मस्वरूपप्रतिपत्तिवेलायां ब्रह्मव्यतिरिक्तार्थसाम्यशङ्का यावता विशेषणेन न स्यात् तावद्धर्मानुवृत्तिस्तावद्विशेषणानि चहुभजनपदे सर्वब्रह्मविद्यावेद्ये परस्मिन् ब्रह्मणि अनुसन्धेयानीत्यत्र स्थाप्यते । तानि च सत्यत्वज्ञानत्वानन्तत्वानन्दत्वामलत्वान्यनुक्रमेणोपयुक्ततया भाष्य एव स्थापितानीति तत्रैव विस्तरेण द्रष्टव्यम् ॥ ३३८ ॥

इत्यानन्दाद्यधिकरणम् ॥ ८६ ॥

पद०—आनन्दत्वप्रधानमित्यादि । कतिचित्—केचित् । इह—अस्मिन् प्रकरणे । सौत्रमानन्दशब्दम्—'आनन्दादयः प्रधानस्य' इति सूत्रस्थमानन्दशब्दम् । आनन्दत्वप्रधानम्—भावप्रधानं स्वरूपगतानन्दरूपत्वपरमित्यर्थः । विदुः—उपलब्धवन्तः । केचित्, धर्मानन्दाभिधानम्—'तद्गुणसारत्वात्' इति न्यायेनानन्दित्वमेवानन्दशब्दार्थ इति धर्मानन्दाभिधायकम् । तदुभयवचनं वा इति पश्यन्ति—यद्वा आनन्दत्वानन्दित्वोभयपरमिति योजयन्ति । द्वितीयपक्षे विकल्पेनाकारद्वयम् । केचिच्छब्दस्यावृत्त्या धर्मानन्दाभिधानमपि केपाञ्चित्पक्षतया कल्पयितुं शक्यते तथा सति पक्षत्रयम् । ज्ञानोक्तौ च—ज्ञानशब्देऽपि । एतत्—ज्ञानत्वपरत्वज्ञानित्वपरत्वतदुभयपरत्वरूपपक्षद्वयपक्षत्रयपरिकल्पनम् । एवम्—पूर्वोक्तरीत्या । योजनीयमिति शेषः । एवं पक्षभेदानुक्त्वा एतदधिकरणे भाष्यकाराभिमतं वैशद्याय दर्शयति—तदितरसमतेत्यादिना । तदितरसमता यावता न शङ्क्या स्यात् तावद्धर्मानुवृत्तिर्बहुभजनपदे ब्रह्मणि अत्र स्थाप्यते—ब्रह्मस्वरूपप्रतिपत्तिवेलायां ब्रह्मव्यतिरिक्तार्थसाम्यशङ्का यावता विशेषणेन न स्यात् तावद्धर्मानुवृत्तिस्सर्वब्रह्मविद्यावेद्ये ब्रह्मण्यनुसन्धेयेत्यस्मिन्नधिकरणे स्थाप्यते । तथानुसन्धेयाश्चैते धर्मास्सत्यत्वज्ञानत्वानन्तत्वानन्दत्वामलत्वरूपाः पञ्चैव, तथा भाष्य एवाभिधानात् । ज्ञानानन्दशब्दयोर्ज्ञानित्वज्ञानत्वानन्दित्वानन्दत्वोभयपरत्वमेवाचार्यसम्मतमिति भाति 'ज्ञानत्वं ज्ञातृभावात् स्वरबहुलतया स्वप्रकाशत्वतश्च' इति व्यवाहितपूर्वश्लोकेऽनुगृहीतत्वादिति ॥ ३३८ ॥

इत्यानन्दाद्यधिकरणम् ॥ ८६ ॥

---

## कार्याख्यानाधिकरणम् ॥ ८७ ॥

सूत्रम्—कार्याख्यानादपूर्वम् ॥ ३७२ ॥

आचामेदित्यपूर्वाचमनमिह विधेः प्राणविद्यावतस्स्यात्
मैवं स्मृत्यादिसिद्धेः परमनुविहिता प्राणवासस्त्वदृष्टिः ।
भुञ्जीतेत्यादिनीत्या विधिरपि घटते प्राप्तधात्वर्थनिष्ठः
प्रागुक्ता प्राणविद्या तदिदमवसरे चिन्तितं त्वङ्गमस्याः ॥ ३३९ ॥

चिन्ता०—पूर्वप्रस्तुतावशिष्टतया सङ्गतिर्भाष्ये । तदर्थविचारस्तु—छान्दोग्यवाजसनेयकवाक्ययोः प्राणवासोदृष्टिपरत्वमाचमनीयास्वप्सु प्रतीयते नेति । अत्र पूर्वपक्षमाह—आचामेदिति । भाष्ये वाक्यार्थस्य विस्तृतत्वात् शब्दान्वयमात्रप्रदर्शनमत्र क्रियते । अत्राचामेदिति विधिश्रवणात् विधेश्च 'अप्राप्ते शास्त्रमर्थवत्' इति न्यायेनापूर्वार्थे तात्पर्यात् स्मृत्याचारप्राप्ताचमनव्यतिरिक्तमाचमनान्तरं विधीयत इति । तमिमं पक्षं प्रतिक्षिपति—मैवमिति । प्रतिक्षेपप्रकारमाह—स्मृत्यादीति । भोजनाङ्गस्याचमनस्य स्मृत्यादिसिद्धत्वात् प्राणवासस्त्वानुसन्धानमपूर्वमेवात्र विधीयते । तेनापूर्वार्थविशेषविधानादस्मिन्पक्षे न विधिभङ्गः । तर्ह्यपूर्वाचमनविधानाभावे पूर्वस्य तस्याचमनस्य सिद्धत्वात् आचामेदिति कथं विधिश्रवणमित्याशङ्क्याह—भुञ्जीतेति । यथा 'स्नात्वा भुञ्जीत' इत्यत्र प्राप्ते भोजने विधिश्श्रूयते, अथापि विधिरप्राप्तस्नानविधानपर एव, एवमत्राप्याचामेदिति पूर्वप्राप्ताचमने विधिश्श्रूयतां नाम, अथाप्यप्राप्तप्राणवासस्त्वानुसन्धान एव विधिर्भवेत् । अतो न शब्दान्वयविरोधः । अन्यत्र स्थितस्य विधिश्रवणस्य उपक्रमोपसंहारादितात्पर्यलिङ्गपरामर्शेनान्यत्रान्वयेन निर्वाहस्तान्त्रिकाणां सम्मत एवेति तथैवात्र स्यात् । प्राप्तधात्वर्थनिष्ठ इति पूर्वप्राप्ताचमनमुच्यते । श्रवणं तत्रास्तु तथापि तात्पर्यमन्यत्रेत्यर्थः । अत्राप्युपक्रमोपसंहारादिपरामर्शेन वाक्यस्य प्राणवासस्त्वानुसन्धानविधानपरत्वं भाष्य एव विवृतमिति विस्तरभयादुपरम्यते । ननु प्राणविद्या पूर्वमप्युक्ता किमर्थमिदानीमप्युच्यत इति बालिशचोद्ये परिहारमाह—प्रागिति । पूर्वं प्राणविद्यायां भेदाभेदादिचिन्ता कृता, इदानीं प्राणविद्यायामाचमनीयानामपां प्राणवासस्त्वानुसन्धानरूपमङ्गं चिन्त्यत इत्यधिकरणभेदोपपत्तिः ॥ ३३९ ॥

पद०—आचामेदित्यादि । इह प्राणविद्यावत आचामेदिति विधेरपूर्वाचमनं स्यात्—प्राणविद्याप्रकरणे तद्विद्यानिष्ठस्य 'अशिष्यन्नाचामेत्' इति विधेस्स्मृत्याचारादिप्राप्ताचमनादन्यदेवापूर्वमाचमनं भवेत् । स्मृत्याचारप्राप्तस्याचमनस्यैवात्र विधाने विधेरप्राप्तार्थत्वं न स्यादिति भावः । मैवम्—

एवं मा शङ्किष्ठाः । स्मृत्यादिसिद्धेः—भोजनाङ्गस्याचमनस्य स्मृत्यादिसिद्धत्वात् तस्य विधानायोगात् आचमनान्तरस्य विधाने गौरवात् । प्राणवासस्त्वदृष्टिः परमनुविहिता—आचमनीयास्वप्सु प्राणवासस्त्वानुसन्धानमपूर्वमेव विधीयते । भुञ्जीतेत्यादिनीत्या प्राप्तधात्वर्थनिष्ठोऽपि विधिर्घटते—स्नात्वा भुञ्जीतेत्यादाविव प्राप्तधात्वर्थनिष्ठतया प्रतीयमानोऽपि विधिरप्राप्तस्नानादिपरतानयनेनेवोक्तप्राणवासस्त्वानुसन्धानपरतानयनेन युज्यते । प्राणविद्या प्रागुक्ता—प्राणविद्या 'सर्वाभेदादन्यत्रेमे' इत्यधिकरणे भेदाभेदादिनिर्णयाय प्रतिपादितैव । अस्यास्तदिदमङ्गं त्ववसरे चिन्तितम्—अस्याः प्राणविद्यायाः उक्तरीत्या प्रतिपादितमाचमनीयास्वप्सु प्राणवासस्त्वानुसन्धानरूपमङ्गमस्मिन्नवसरे विचारितम् । तेनाधिकरणभेदोपपत्तिरिति भावः ॥ ३३९ ॥

आदावन्ते च वासःपरिधिरभिहितो मन्यतिश्चात्र दृष्टयै
साचाराध्यप्रियार्था स्तुतिरिह न भवेद्गत्यलाभाभिनन्द्या ।
युक्तश्चापूर्वभावात् परिदधतिगिरा तद्विधानाभिसन्धिः
प्राणश्चाराधनीयः परिहितवसनो युज्यते सद्भिरद्भिः ॥ ३४० ॥

इति कार्याख्यानाधिकरणम् ॥ ८७ ॥

चिन्ता०—एवमुक्तेऽप्यधिकरणार्थे शिष्याणां वैशद्याय उक्तानुक्तांश्च हेतुविशेषान् संगृह्य कथयति—आदाविति । उपक्रमोपसंहारयोर्वासःपरिधानाभिधानमित्येको हेतुः । अपरमपि हेतुमाह—मन्यतिरिति । 'मन्यन्ते' इति मन्यतिशब्दप्रयोगो दृष्टिविध्यर्थ एव । ननु प्राणवासस्त्वमस्तु, अनेन किं प्रयोजनमित्याशङ्क्य प्रयोजनमाह—आराध्यप्रियार्थेति । अयमर्थः—विहितायाः क्रियाया योग्यमेव प्रयोजनं कल्प्यम्, यथा विहिताया आचमनक्रियायाः प्रयोजनमाराध्यप्रीतिः, एवं प्राणवासस्त्वानुसन्धानस्यापि प्रयोजनमाराध्यप्रीतिरेव । सा च मन्यतिराराध्यप्रियार्थेत्यन्वयः । ननु प्राणवासस्त्वानुसन्धानवचनं स्तोत्रमेव किं न स्यादित्याशङ्क्य प्रतिक्षिपति—स्तुतिरिति । गत्यभावे हि स्तुतिरभिनन्द्या, अत्रापूर्वार्थविधानेन गतिसम्भवे सति स्तुतिर्न कल्प्येत्यर्थः । अत्र च 'अद्भिः परिदधति' इति परिधानरूपापूर्वार्थस्य विशेषतः प्रतिपादनात् प्राणवासस्त्वानुसन्धानविधिर्युक्त एव । किञ्च प्राणोऽत्राराधनीयत्वेन प्रतिपाद्यते आराधनीयस्य च देवताविशेषस्याद्भिः परिधानवचनमाराधनाङ्गत्वात् युज्यत एव । यथा लोके वस्त्रप्रदानं देवताराधनाङ्गं तद्वदिहापीति भाव्यम् ॥ ३४० ॥

इति कार्याख्यानाधिकरणम् ॥ ८७ ॥

पद०—आदावन्तेचेत्यादि । अत्रादावन्ते चाभिहितो वासःपरिधिर्मन्यतिश्च दृष्ट्यै—प्राणविद्याङ्गप्रकरणे 'किं मे वासो भविष्यतीत्याप इति होचुः' इत्युपक्रमे 'तस्माद्वा एतदशिष्यन्तः पुरस्ताच्चोपरिष्टाच्चाद्भिः परिदधति' इत्युपसंहारे चोक्तो वासःपरिधिर्वासःपरिधानं मन्यतिश्च 'एतमेव तदनमनग्नं कुर्वन्तो मन्यन्ते' इति मनधातुश्च दृष्ट्यै दृष्टिविध्यर्थएव । सा च—आचमनीयास्वप्सु प्राणवासस्त्वदृष्टिश्च । आराध्यप्रियार्था—आचमनस्य यथा आराध्यप्रीत्यर्थत्वमेवमियमप्याराध्यप्राणदेवताप्रीत्यर्थैव । गत्यलाभाभिनन्द्या स्तुतिरिह न भवेत्—गत्यन्तरालाभस्थले ग्राह्या स्तुतिः अप्राप्तार्थसम्भवयुक्तेऽस्मिन् प्रकरणे न भवेदेव । परिदधतिगिरा—'अद्भिः परिदधति' इति वचनेन । अपूर्वभावात्—अपूर्वस्य अप्सु वासस्त्वानुसन्धानरूपस्यार्थस्य भावात् विद्यमानत्वात् । तद्विधानाभिसन्धिश्च युक्तः—अप्सु प्राणवासस्त्वानुसन्धानविधानाभिप्रायः प्रकरणसुगमतया युक्त एव । सद्भिराराधनीयः प्राणश्च—विद्यानिष्ठैःपूजनीयः प्राणश्च । अद्भिः परिहितवसनो युज्यते—अद्भिर्लब्धवासा एवाराधितुं युज्यते । आराधनीयदेवताया वस्त्रप्रदानं हि प्रधानाङ्गमिति भावः ॥ ३४० ॥

इति कार्याख्यानाधिकरणम् ॥ ८७ ॥

---

## समानाधिकरणम् ॥ ८८ ॥

सूत्रम्—समान एवञ्चाभेदात् ॥ ३७२ ॥

**शाखैक्येऽध्येतृभेदो न भवति न गुणः कश्चिदन्यो विधेयः**
**तस्मादुक्ताविशेषश्रवणमिह पुनः किं न विद्यां विभिन्द्यात् ।**
**मैवं यद्यप्यनूक्तिर्नतु गुणविधये कल्पतेऽस्यास्तथापि**
**व्यक्त्यै सौकर्यतश्च व्यसनसमसनन्यायतस्त्वैक्यसिद्धेः ॥ ३४१ ॥**

चिन्ता०—अत्र पूर्वाधिकरणं प्राणविद्याशेषत्वेन प्रसङ्गसङ्गत्योक्तम्, तत्पूर्वाधिकरणे पुनस्स्वरूपनिरूपकधर्माणां स्वरूपप्रतीत्यन्तर्भावेनोपसंहार्यत्वमुक्तम् । अधुना पुनस्सत्यसङ्कल्पत्वान्तर्भूतानां वशित्वादिगुणानामुपसंहार उच्यत इति सङ्गतिः । तदर्थविचारस्तु—वाजसनेयकेऽग्निरहस्ये बृहदारण्यके च शाण्डिल्यविद्या आम्नाता, किमत्र विद्या भिद्यते नेति । किमुभयत्र रूपभेदोऽस्ति नेति । किमग्निरहस्ये वशित्वादिप्राप्तिरस्ति नेति । किं मनोमयत्वसत्यसङ्कल्पत्वाम्नानमेव गुणिप्रत्यभिज्ञाया वशित्वादिप्राप्तिं गमयति नेति ।

अत्र पूर्वपक्षी मन्यते—'समिधो यजति' इत्यादिवत् अविशेषपुनश्श्रवणात् विद्याभेदोऽवर्जनीयः। नचाध्येतृभेदादविशेषपुनश्श्रवणमिति न तेन भेद इति वाच्यम्; शाखैक्ये सति अध्येतृभेदासम्भवात्। एकस्यां शाखायामध्येतृभेदो न सम्भवतीति साधारणोऽयं न्यायः। अतोऽत्र विद्याभेदस्स्यादिति। नचात्र गुणविधिः कश्चित् दृश्यते येन विध्यैक्यमाश्रीयेत। यदि गुणाभिधानमत्र स्यात्, तदा खलु पूर्वस्यामेव विद्यायां गुणविधानार्थं पुनश्श्रवणमिति वक्तुं शक्येत। तस्मात् विद्याभेदः स्वीकर्तव्य इति। तदिदमाह—शाखैक्य इति। अयमत्र शब्दार्थः—शाखैक्ये सिद्धे सति अध्येतृभेदोऽस्तीति वक्तुं न शक्यते। अत्र कश्चिदपि गुणो न विधेयः, तेन गुणविधानार्थं पुनरभिधानमिति न वाच्यम्। तस्मादुक्ताविशेषश्रवणमिह विद्यां कथं न भिन्द्यादिति। उक्तं पक्षं प्रतिक्षिपति—मैवमिति। प्रतिक्षेपप्रकारमाह—यद्यपीति। अत्र गुणविधिर्नास्तीति भवतोक्तं तत्तथैव, विधेयस्य गुणान्तरस्यात्रादर्शनात्। तथापि पूर्वोक्तस्यैवात्रानूक्तिर्व्यक्त्यै विविच्याभिधानेनोक्तार्थाभिव्यक्त्यै सौकर्यतश्च शिष्याणां सौकर्यार्थं च। तत्र दृष्टान्तमाह—व्यसनेति। लोके हि समासेनोक्तमर्थं विग्रहवाक्येन व्यासेनापि वदन्ति तद्वदत्रापि सत्यसङ्कल्पत्वशब्देनोक्तमेव तदन्तर्गतं वशित्वादिकं वशित्वादिशब्देनापि विव्रियते तेन विवरणार्थमेव पुनरनुवाद इति न कश्चिद्दोष इति ॥ २४१ ॥

पद०—शाखैक्य इत्यादि। शाखैक्येऽध्येतृभेदो न भवति—वाजसनेयकेऽग्निरहस्ये बृहदारण्यके च शाण्डिल्यविद्या आम्नाता तत्र 'समिधो यजति' इत्यादाविव अविशेषपुनश्श्रवणात् विद्याभेदस्स्यात्, नचाध्येतृभेदादविशेषपुनश्श्रवणमिति न तेन भेदस्स्यादिति वाच्यं शाखैक्ये सिद्धे सत्यध्येतृभेदोऽस्तीति न वक्तुं शक्यते। कश्चिदन्यो गुणो न विधेयः—तेन गुणविधानार्थं पुनरभिधानमिति च न वक्तुं युज्यत इति भावः। तस्मात्—भेदकस्याविशेषपुनश्श्रवणस्यान्यपर्यासम्भवात्। इह—प्रकरणे। पुनः उक्ताविशेषश्रवणं विद्यां किं न विभिन्द्यात्—एकत्रोक्तेऽपि पुनश्चोक्तादविशेषेण श्रवणं विद्याभेदकं कुतो न स्यात्। मैवम्—एवं मा शङ्किष्ठाः। यद्यप्यस्या अनूक्तिस्तु गुणविधये न कल्पते—अत्र गुणविधिर्नास्तीति भवतोक्तं तत्तथैव विधेयस्य गुणान्तरस्यादर्शनात् अतोऽस्या विद्याया अनुवादो न गुणविध्यर्थः कल्पते। तथापि व्यसनसमसनन्यायतस्तु व्यक्त्यै सौकर्यतश्च—अनूक्तिः कल्पत इत्यनुषङ्गः। तथापि समसनेन सङ्ग्रहेणोक्तस्यार्थस्य व्यसनेन विस्तरेण कथनन्यायेन विद्याया अनूक्तिविविच्याभिधानेनोक्तार्थाभिव्यक्त्यै शिष्याणां सौकर्याय कल्पत एव। अतः ऐक्यसिद्धेः—तस्मात् द्वयोर्विद्ययोरैक्यसिद्धेः। मैवमिति सम्बन्धः ॥ २४१ ॥

छन्दोगैर्वाजिभिश्च स्फुटमनुपठिता भाति शाण्डिल्यविद्या
भेदाभेदावमर्शस्त्विह किमिति न सन्दर्शितो भाष्यकारैः ।
तद्ब्रूमो यत्रयत्राधिकपरिपठनं तत्रतत्राधिकानां
अन्तर्भावादियुक्तावधिकमनधिकं वेति साधारणोक्तेः ॥ ३४२ ॥

चिन्ता०—अत्र कश्चिच्चोदयति—ननु वाजसनेयकवाक्ये स्थलद्वयपठिता शाण्डिल्यविद्या भाष्यकारैरुपात्ता न पुनश्छान्दोग्यवाजसनेयकयोः पठिता शाण्डिल्यविद्या भिन्ना अभिन्ना वेति विचारिता, तत् किमर्थमित्याशङ्क्य एकत्र निर्णीतस्य न्यायस्येतरत्रापि स्वयमेव योज्यत्वात् स्वयमेव शिष्या विदाङ्कुर्वन्त्विति भाष्यकाराभिप्राय इति परिहरति—छन्दोगैरिति । अयमत्र शब्दार्थः—छन्दोगैस्तथा वाजिभिश्च स्फुटमेवानुपठिता शाण्डिल्यविद्या भाति इहोदाहरणे भेदाभेदावमर्शो भाष्यकारैः किमिति न सन्दर्शित इति । इमामाशङ्कां परिहरति—तद्ब्रूम इति । तदेव विवृणोति—यत्र यत्रेति । वाजसनेयके वा छान्दोग्ये वा यत्रयत्र वशित्वाद्यधिकपठनं दृश्यते तत्रतत्राधिकानां गुणानां सत्यसङ्कल्पत्वादिगुणान्तर्भावादियुक्तौ सत्यामधिकमनधिकं वेति साधारणोक्तेर्युक्तत्वादित्यर्थः । एकत्र निर्णीतन्यायसिद्धार्थस्य पुनरभिधानापेक्षाभावादित्यर्थः ॥ ३४२ ॥

पद०—छन्दोगैरित्यादि । छन्दोगैः, वाजिभिश्च—वाजसनेयिभिश्च । शाण्डिल्यविद्या स्फुटमनुपठिता भाति । इह—विषये । भाष्यकारैः, भेदाभेदावमर्शस्तु—विद्याभेदाभेदविचारः । किमिति न सन्दर्शितः । तत्—तत्र भेदाभेदविचाराकरणनिमित्तम् । ब्रूमः । यत्रयत्राधिकपरिपठनं तत्रतत्राधिकानामन्तर्भावादियुक्तौ—वाजसनेयके वा छान्दोग्ये वा यत्रयत्र वशित्वाद्यधिकपरिपठनं दृश्यते तत्रतत्राधिकानां गुणानां सत्यसङ्कल्पत्वादिगुणान्तर्भावादियुक्तौ सत्याम् । अधिकमनधिकं वेति साधारणोक्तेः—अधिकं वा अनधिकं वेति साधारणोक्तेर्युक्तत्वादित्यर्थः । एकत्र निर्णीतन्यायसिद्धार्थस्य पुनरभिधानापेक्षाभावादित्यर्थः ॥ ३४२ ॥

स्थानद्वन्द्वे वशित्वप्रभृतिविरहिता वाजिभिस्तद्युता चा-
धीता शाण्डिल्यविद्या तदिह भिदुरता कल्पनीयेति चेन्न ।
आरण्योक्तं वशित्वाद्यपि खलु विततिस्सत्यसङ्कल्पतायाः
साधीतान्तेरहस्येऽप्यधिकविरहतो नात्र विद्यैक्यबाधः ॥ ३४३ ॥

इति समानाधिकरणम् ॥ ८८ ॥

चिन्ता०—पुनरुक्तस्यार्थस्यात्यन्तवैशद्यार्थं वाजसनेयकोक्तस्थानद्वन्द्वस्थशाण्डिल्यविद्यायाः प्रकार-भेदं दर्शयन् अत्र विद्यैक्यसिद्ध्यथ रूपभेदाभावमप्याह—स्थानद्वन्द्व इति। वाजसनेयके ह्यग्निरहस्ये वशित्वादिविरहिता सत्यसङ्कल्पत्वाद्युक्तिमती शाण्डिल्यविद्या समाम्नाता। बृहदारण्यके वशित्वाद्य-विरहिता सैवाम्नाता। तेनात्र वेद्यभेदेन रूपभेदात् शाण्डिल्यविद्याया भिदुरता कल्पनीयेति चेत्। तदिदं प्रतिक्षिपति—नेति। तदेव विवृणोति—आरण्येति। बृहदारण्यकोक्तं वशित्वादिकमग्निरहस्यो-क्तसत्यसङ्कल्पताया भिन्नं चेत् तदा रूपभेदात् विद्याभेद इति वक्तुं शक्यते, नचैतद्भिन्नं सत्यसङ्कल्पत्व-विवरणरूपत्वात् वशित्वादेः, तेन रूपभेदाभावात् न विद्याभेदः। तदेवोपपादयति—सेति। सा सत्य-सङ्कल्पता अग्नेः रहस्ये अधीता। सत्यसङ्कल्पताया विवरणरूपत्वात् वशित्वादिकमपि तत्रैवाधीतमेव भवति। तेन रूपभेदाभावात् न विद्याभेद इत्याह—अधिकविरहत इति॥ ३४२॥

इति समानाधिकरणम्॥ ८८॥

पद०—स्थानद्वन्द्व इत्यादि। वाजिभिः स्थानद्वन्द्वे वशित्वप्रभृतिविरहिता तद्युता च शाण्डिल्यविद्या अधीता—वाजसनेयिभिरग्निरहस्यबृहदारण्यकरूपस्थानद्वये क्रमेण वशित्वादिगुणविरहिता वशित्वादिगुणयुक्ता च शाण्डिल्यविद्या आम्नाता। तत्—तस्मात् एकत्र वशित्वादिगुणविरहिततया अपरत्र तद्गुणयुक्ततयाचाम्नानेन गुणाधिक्येन रूपभेदात्। इह–विद्याद्वये। भिदुरता कल्पनीया—परस्पर-भिन्नविद्यात्वं कल्पनीयम्। इति चेन्न—एवमुच्यते चेन्नैतद्युक्तम्। आरण्योक्तं वशित्वाद्यपि सत्य-सङ्कल्पताया विततिः खलु—बृहदारण्यकोक्तं वशित्वादिगुणजातं सत्यसङ्कल्पत्वरूपगुणविवरणमिति भवतापि सम्मन्तव्यमेव किल। किं तत इति चेत् सा अग्नेः रहस्ये अधीता–वशित्वादिकं बृहदारण्यकोक्तं गुणजातं यद्विवरणरूपं सा सत्यसङ्कल्पता अग्निरहस्ये समाम्नाता। अधिकविरहतोऽपि—अतः उक्तरीत्या रूपाधिक्याभावात् विवरणविवरणिरूपत्वादिहेत्वन्तराच्च। अत्र विद्यैक्यबाधो न—आरण्यकाग्नि-रहस्ययोर्विद्यैक्यबाधकं नास्ति प्रत्युत साधकमेवास्तीति भावः॥ ३४२॥

इति समानाधिकरणम्॥ ८८॥

———

## सम्बन्धाधिकरणम् ॥ ८९ ॥

सूत्रम्—सम्बन्धादेवमन्यत्रापि ॥ ३७४ ॥

अक्ष्यादित्योपलक्ष्ये भगवति भजनं चोदनादेरभेदात्
एकं स्यात् तेन नाम्नोरनियतिरिति न स्थानतो रूपभेदात्।
स्थानं तत्स्थत्वबुद्ध्यै ह्युपदिशति नचेत् स्यान्न रूपातिदेशः
तस्मादर्काक्षियोगादहरहमिति तन्नामनी स्थापनीये ॥ ३४४ ॥

इति सम्बन्धाधिकरणम् ॥ ८९ ॥

चिन्ता०—पूर्वं शाण्डिल्यविद्यायां रूपभेदाभावात् विद्यैक्यमुक्तम्, तर्हि बृहदारण्यकोक्तादित्यमण्डलाक्ष्यन्तर्वर्तिपुरुषविषयविद्यायामपि रूपभेदाभावात् विद्यैक्यमित्याशङ्क्य स्थानभेदाद्रूपभेदोऽस्तीत्यभिधीयत इतीह सङ्गतिः । तदर्थविचारस्तु—आदित्याक्ष्यन्तर्वर्तिनोराम्नाते किमेते नामनी यथाश्रुतमेकैकत्र्यवस्थिते, उतोभयत्राप्यव्यवस्थयोपसंहार्ये इति । किमत्र विद्यैक्यमुत नेति । किं व्याहृतिशरीरस्योपास्यत्वमुभयत्र विद्यैक्यं गमयति नेति । किमुपास्यगुणैक्यमात्रमभेदहेतुः, उत स्थानैक्यमपीति । स्थानं किमुपास्यान्तर्गतमुत नेति । अत्राक्ष्यादित्यान्तर्वर्तिनोः पुरुषयोरुपासने रूपैक्याद्विद्यैक्यमाशङ्क्य उभयत्रापि स्थानभेदेन रूपभेदात् विद्याभेद इति दर्शयति—अक्षीति । शब्दार्थस्तु—अक्ष्यादित्योपलक्ष्ये भगवति भजनं संयोगरूपचोदनाद्यैक्यादेकमेव स्यात् । तेन द्वयोरपि नाम्नोरुभयस्थानस्थे परस्मिन् ब्रह्मणि अनियतिरेव स्यादिति । तमिमं पक्षं प्रतिक्षिपति—नेति । तत्र हेतुमाह—स्थानत इति । स्थानभेदेन रूपभेदस्य विद्यमानत्वात् । तमेव रूपभेदमुपपादयति—स्थानमिति । स्थानं हि भगवतस्तत्स्थानावस्थितत्वप्रतिपत्त्यै ह्युपदिश्यते । अत्र प्रतिबन्दीमाह—न चेदिति । यदि स्थानं नैरर्थक्येनोपदिश्यते तर्हि तत् रूपमपि तादृग्विधमेव स्यादित्यर्थः । उक्तमर्थं सहेतुकं निगमयति—तस्मादिति । अनयोर्नाम्नोर्व्यवस्थयैवोपसंहार इत्यर्थः ॥ ३४४ ॥

इति सम्बन्धाधिकरणम् ॥ ८९ ॥

पद०—अक्ष्यादित्यत्यादि । अक्ष्यादित्योपलक्ष्ये भगवति भजनं चोदनादेरभेदात् एकं स्यात्—बृहदारण्यके 'तद्यत्सत्यमसौ स आदित्यो य एष एतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन्' इत्युपक्रम्य 'तस्योपनिषदहरित्यधिदैवतम्' 'तस्योपनिषदहमित्यध्यात्मम्' इत्यादिवाक्यस्थले अक्षण्यादित्ये चोपास्ये भगवति परमपुरुषे विहितमुपासनं चोदनादेरविशेषादेकविद्यात्मकं स्यात् । तेन नाम्नोरनिय-

तिरिति—एवमेकविद्यात्वेन तत्राम्नातयोरहरहमितिनाम्नोर्द्वयोरपि स्थानद्वयेऽप्यनुसन्धानं न त्वेकत्रैवेति व्यवस्थेति । न—न साध्वेतत् । स्थानतो रूपभेदात्—एकत्राक्षिरूपस्य अपरत्रादित्यरूपस्य च स्थानस्य भेदेन रूपभेदस्य विद्यमानत्वात् । तत्स्थत्वबुद्ध्यै हि स्थानमुपादशति—भगवतस्तत्तत्स्थानावस्थितत्वेन उपासनार्थं हि अक्षिरूपमादित्यरूपञ्चेति स्थानमुपदिशति । न चेत्—स्थानस्योपास्त्यर्थत्वाभावे केवलं निरर्थकोपदेशश्चेत् । रूपातिदेशो न स्यात्—तर्हि तत्स्वरूपमपि तादृशमेव निरर्थकमेव स्यात् । योजनान्तरं भाति ; न चेत्—एवमुपासनाभेदो नाङ्गीक्रियत इति चेत् । रूपातिदेशो न स्यात्—'तस्यैतस्य तदेव रूपं यदमुष्य रूपम्' इत्यादिना रूपातिदेशो न स्यात् । स्वतो ह्यप्राप्तावतिदेशेन प्राप्त्यपेक्षा अतोऽनेनैव रूपातिदेशेनानयोर्विद्ययोर्गुणोपसंहारो नास्तीति स्पष्टमवगम्यते । एतदधिकरणे 'दर्शयति च' इति गुणसूत्रभाषित एवायमर्थः । तस्मादर्काक्षियोगादहरहमिति तन्नामनी स्थापनीये—आदित्याक्षिरूपस्थानभेदयोगात् आदित्यमण्डलान्तर्वर्तिभगवदुपासने अहरितिनाम अक्ष्यन्तर्वर्तिभगवदुपासने अहमिति नाम, एवं तन्नामनी व्यवस्थया अनुसन्धेये इति ॥ ३४४ ॥

इति सम्बन्धाधिकरणम् ॥ ८९ ॥

---

## सम्भृत्याधिकरणम् ॥ ९० ॥

सूत्रम्—सम्भृतिद्युव्याप्त्यपि चातः ॥ ३७७ ॥

सम्भृत्यादिर्गुणौघः प्रकरणपठनाभावतस्सर्वविद्या-
स्वन्वीयेतेति चेन्न क्वचिदगतिकतो लिङ्गतस्स्थापितत्वात् ।
अल्पस्थानासु विद्यास्वघटितवपुषस्स्वोचितस्थानवृत्तेः
द्युव्याप्तेरेकमन्त्रे सहपठनवशात् तत्समस्थानिनोऽन्ये ॥ ३४५ ॥

इति सम्भृत्यधिकरणम् ॥ ९० ॥

चिन्ता०—पूर्वाधिकरणे नाम्नोस्स्थानभेदात् व्यवस्था कृता इह पुनरनारभ्याधीतस्य सम्भृत्यादिकस्यापि तेनैव स्थानभेदेन व्यवस्थोच्यत इति सङ्गतिः । तदर्थविचारस्तु—राणायनीयानां खिलेषु 'ब्रह्मज्येष्ठा वीर्या सम्भृतानि' इत्यादिवाक्यानि श्रूयन्ते तत्र सम्भृतिद्युव्याप्त्यादिकं कथ्यते । तत्किं सर्वविद्यासूपसंहार्यमुत कासुचिदेवेति । तदर्थं विचार्यते—किमनारभ्याधीतानां सर्वासु विनियोगः, उत कासुचिदे-

चेति । किं सामर्थ्यं सर्वासु विद्यासु विनियुङ्क्ते उत कासुचिदेव विनियुङ्क्त इति । अत्र पूर्वपक्षमाह— सम्भृत्यादिरिति । 'ब्रह्म ज्येष्ठा' इत्यादिवाक्योक्तः सम्भृत्यादिर्गुणौघः प्रकरणपठनाभावात् सर्वास्वपि विद्यास्वन्वीयेतेति । सिद्धान्तमाह—नेति । तत्र हेतुमाह—क्वचिदिति । अयमर्थः—न सर्वत्रान्वेति, अपितु क्वचिदेव, अगतिकात् लिङ्गात् क्वचिदेवेति स्थापितत्वात् । लिङ्गस्यागतिकत्वमनन्यथासिद्धत्वम् । तदेव हि प्राबल्यहेतुः । अन्यथासिद्धानां हेतूनां दुर्बलत्वात् । अनन्यथासिद्धत्वमेव विशदं प्रकाशयति—अल्पेति । अयमर्थः—'ब्रह्म ज्येष्ठा' इति मन्त्रे 'ब्रह्माग्रे ज्येष्ठं दिवमाततान' इति ब्रह्मणो विश्वव्यापित्वमुक्तम् । तच्च विश्वव्यापित्वमल्पस्थानासु विद्यासु न घटते, अपितु व्याप्त्या ब्रह्मोपासनेष्वेव घटते । तेनैतन्मन्त्रस्थविश्वव्याप्त्यादेः स्वोचितस्थानवृत्तेरवश्यम्भावादेकस्मिन् मन्त्रे द्युव्याप्त्या सह पठिता इतरे सम्भृत्यादिधर्मास्तत्समस्थानिनः द्युव्याप्तिर्यत्र वर्तते तत्रैव सह वर्तन्त इति तत्समस्थानिन इति ॥ ३४५ ॥

इति सम्भृत्यधिकरणम् ॥ ९० ॥

पद०—सम्भृत्यादिरित्यादि । सम्भृत्यादिर्गुणौघः प्रकरणपठनाभावतस्सर्वविद्यास्वन्वीयेत—तैत्तिरीयके राणायनीयानां खिलेषु च 'ब्रह्मज्येष्ठा वीर्या सम्भृतानि ब्रह्माग्रे ज्येष्ठं दिवमाततान । ऋतस्य ब्रह्म प्रथमोत जज्ञे तेनार्हति ब्रह्मणा स्पर्धितुं कः ॥' इत्यादिवाक्येषु पठितो ज्येष्ठवीर्यसम्भृत्यादिको गुणवर्ग एकविद्याप्रकरणपाठरूपव्यवस्थापकाभावात् सर्वास्वपि विद्यास्वनुसन्धेयस्स्यात् । इति चेन्न—इत्युच्यते चेन्नैतत्साधु । अगतिकतो लिङ्गतः क्वचित् स्थापितत्वात्—लिङ्गस्यागतिकत्वमनन्यथासिद्धत्वम्, तदेव हि प्राबल्यहेतुः, तादृशाल्लिङ्गात् क्वचिद्विद्याविशेषे स्थापितत्वात् न सर्वविद्यान्वयित्वमित्यर्थः । एतद्विवरणमेवोपरि, अल्पस्थानासु विद्यास्वघटितवपुषस्स्वोचितस्थानवृत्तेर्द्युव्याप्तेः एकमन्त्रे सहपठनवशात्—दहराद्यल्पस्थानकासु विद्यासु असंयोज्यस्वरूपत्वात् स्वोचितविपुलस्थानकविद्यान्विताया द्युव्याप्तेर्दिवमाततानेत्युक्तस्वर्गलोकादिसकलजगद्व्याप्तिरूपगुणस्य एकमन्त्रे सहपाठरूपहेतोः । अन्ये—ज्येष्ठवीर्यसम्भृत्यादयोऽपि गुणाः । तत्समस्थानिनः—तया सहैकस्थानिनस्स्युः । सा यस्मिन्स्थानेऽनुसन्धीयते तत्रैवान्येऽपि गुणा इत्यर्थः ॥ ३४५ ॥

इति सम्भृत्यधिकरणम् ॥ ९० ॥

---

# पुरुषविद्याधिकरणम् ॥ ९१ ॥

सूत्रम्—पुरुषविद्यायामपि चेतरेषामनाम्नानात् ॥ ३७८ ॥

आख्याद्यैक्यादभेदः पुरुषविषययोर्विद्ययोरित्ययुक्तं
यज्ञाद्याकारक्लृप्तेरिह विषमतया रूपभेदप्रसिद्धेः ।
तादर्थ्यात् तैत्तिरीये परभजनफलं मुक्तिरत्राप्यनूक्ता
छान्दोग्ये पूर्णमायुः फलमिति तु तयोर्भाति संयोगभेदः ॥ ३४६ ॥

चिन्ता०—वृत्त्याप्तिसन्निधिसमाम्नातस्य सम्भृत्यादेस्तत्समानस्थानानुप्रवेशात् एकविद्यान्वय उक्तः, इदानीं ब्रह्मविद्यासन्निधिसमाम्नातपुरुषविद्याया ब्रह्मविद्याशेषत्वमुच्यत इतिसङ्गतिः । तदर्थविचारस्तु—तैत्तिरीयके 'तस्यैवं विदुषो यज्ञस्य' इत्यादिना पुरुषविद्या आम्नाता, तथा छान्दोग्येऽपि 'पुरुषो वाव यज्ञः' इत्यादिनापुरुषविद्या आम्नाता, किमुभयत्र विद्यैक्यमुत विद्याभेद इति । तदर्थं विचार्यते—किमुभयत्र रूपफलसंयोगभेदोऽस्ति न वेति । किं 'प्र ह षोडशं वर्षशतं जीवति' इति च्छान्दोग्योक्तायुःप्राप्तिरेवोभयत्र फलमुत तैत्तिरीयपुरुषविद्यायां ब्रह्मप्राप्तिः फलमिति । किं तैत्तिरीयपुरुषविद्या 'ब्रह्मणे त्वा महस ओमित्यात्मानं युञ्जीत' इति प्रकृतब्रह्मविद्याङ्गमुत नेति । किं 'तस्यैवं विदुषः' इति निर्देशो ब्रह्मविद्याङ्गत्वमवगमयति नेति । अत्र पूर्वपक्षमुपन्यस्य प्रतिक्षिपति—आख्याद्यैक्यादिति । संयोगरूपचोदनाख्यानामैक्यात् पुरुषविषययोर्विद्ययोरभेद इति । तमिमं प्रतिक्षिपति—अयुक्तमिति । संयोगरूपचोदनाख्याविशेषात् पुरुषविद्ययोरैक्यमित्ययुक्तम् । अयुक्तत्वमेव दर्शयति—यज्ञाद्याकारक्लृप्तेरिति । तैत्तिरीयके यथा यज्ञाद्याकारक्लृप्तिः, न तथा छान्दोग्ये । उभयत्रापि वैषम्यस्य दर्शनात् । तेन रूपभेदात् विद्याभेदः । किञ्च तैत्तिरीयके पुरुषविद्याया ब्रह्मविद्याशेषत्वात् पूर्वोक्तब्रह्मविद्याफलमेव अत्र फलतया निर्दिश्यते । छान्दोग्ये तु आयुःप्राप्तिः फलत्वेनोच्यते । तेनोभयत्रापि फलभेदोऽस्तीति न संयोगाद्यविशेष इति विद्यैक्यम् ॥ ३४६ ॥

पद०—आख्याद्यैक्यादित्यादि । पुरुषविषययोः—उपासकपुरुषशरीरात्मगुणादिविषययोः । विद्ययोः—तैत्तिरीयके 'तस्यैवं विदुषो यज्ञस्यात्मा यजमानः' इत्यारभ्य 'महिमानमित्युपनिषत्' इत्यन्तेन, छान्दोग्ये 'पुरुषो वाव यज्ञः' इत्यारभ्य 'ज्योतिरुत्तमम्' इत्यन्तेन चाम्नातयोः पुरुषविद्याभिधानयोर्द्वयोर्विद्ययोः । आख्याद्यैक्यादभेदः—पुरुषविद्येति द्वयोर्विद्ययोर्नामैक्यात् यज्ञाङ्गकल्पनारूपस्य रूपस्य चैक्यात् तैत्तिरीयके फलस्याश्रवणात् छान्दोग्ये 'प्र ह षोडशं वर्षशतं जीवति' इत्युक्त्या षोडशोत्तर-

शतवर्षजीवित्वरूपायुष एव स्थलद्वयेऽपि फलत्वेन कल्पनीयत्वात् फलसंयोगस्य चैक्यात् द्वयोरपि विद्ययोरैक्यं स्यात्। इत्ययुक्तम्। इह यज्ञाद्याकारक्लृप्तेर्विषमतया रूपभेदप्रसिद्धेः—स्थलद्वयेऽपि यज्ञाद्याकारभूतानां प्रातस्सवनादीनां या क्लृप्तिस्तस्या वैषम्येण रूपभेदस्य प्रकर्षेण सिद्धत्वात्। 'यत्सायं प्रातर्मध्यन्दिनञ्च तानि सवनानि' इति सायंप्रातर्मध्यन्दिनानां सवनत्रयत्वेन कल्पनं तैत्तिरीयके कृतम्। त्रेधा विभक्तं पुरुषायुषं छान्दोग्ये सवनत्वेन कल्प्यते। छान्दोग्ये श्रुतानामशिशिषादीनां दीक्षादित्वकल्पनं तैत्तिरीयके न कृतम्। यजमानपत्न्यादिकल्पनञ्चान्यथा। अतो यज्ञाद्याकारक्लृप्तेर्भिन्नभिन्नतया रूपभेदादित्यर्थः। तैत्तिरीये तादर्थ्यात् परभजनफलं मुक्तिरत्राप्यनूक्ता—तैत्तिरीयशाखायां 'तस्यैवं विदुषः' इत्यनुवाकाम्नातपुरुषविद्यायाः पूर्वानुवाके 'ओमित्यात्मानं युञ्जीत' इति प्रतिपादितब्रह्मविद्याशेषत्वात् पूर्वानुवाकोक्तपरमात्मभक्तिफलभूता मुक्तिरस्यामप्यङ्गविद्यायामनूद्यते। अङ्गिफलमेवाङ्गस्यापि फलमित्यर्थः। छान्दोग्ये तु पूर्णमायुः फलम्—'प्र ह षोडशं वर्षशतं जीवति' इति प्रतिपादितं पूर्णमायुश्छान्दोग्ये पुरुषविद्यायाः फलम्। इति तयोस्संयोगभेदो भाति—एवमुक्तक्रमेण तयोर्द्वयोः पुरुषविद्ययोर्ब्रह्मविद्याङ्गत्वेन ब्रह्मप्राप्तिफलकत्वपूर्णायुःप्राप्तिफलकत्वाभ्यां फलसम्बन्धभेदः प्रतीयत इति ॥ ३४६ ॥

स्पष्टे रूपादिभेदे हठसमुपनतो नामसाम्यादिमात्रात्
पुंविद्यापूर्वपक्षो मृदुरिति विफलाधिक्रियैषेति चेन्न।
अन्यैवं न्यासविद्या प्रकरणपठिता तद्विधानप्रधाने-
त्यस्वातन्त्र्यादिसिद्ध्यै विभजनमनयोरित्यतीवार्थवत्त्वात् ॥ ३४७ ॥

चिन्ता०—अत्र कश्चित् पुरुषविद्याप्रसङ्ग एव न कर्तव्यः प्रस्फुटपूर्वपक्षहेत्वभावादित्याशङ्कते तामाशङ्कां प्रतिक्षेप्तुमनुवदति—स्पष्ट इति। द्वयोरपि पुरुषविद्ययोः रूपादिभेदे स्पष्टे सति नामसाम्यादिमात्रात् हठेनैव समुपनतः पुरुषविद्यापूर्वपक्षः अत्यन्तमृदुत्वादवाच्य इति एतदधिकरणं विफलमेवेति। इमामाशङ्कां निराकरोति—नेति। निराकरणे कारणमाह—अन्यैति। अत्र खलु द्वे विद्ये 'ब्रह्मणे त्वा महस ओमित्यात्मानं युञ्जीत' इति पूर्वं विहिता न्यासविद्या अन्या। इयं तु 'तस्यैवं विदुषः' इत्याम्नाता पुरुषविद्या तच्छेषभूता अन्या तेन न्यासविद्याप्राधान्यकथनार्थं तच्छेषभूता पुरुषविद्या पुनरत्र विशोध्यते। छान्दोग्यस्था पुरुषविद्या पुनरायुःप्राप्त्यर्थत्वेन विधानात् न ब्रह्मविद्याङ्गभूतया त्वनया पुरुषविद्यया तादात्म्यं भजत इति न पुरुषविद्ययोरैक्यप्रसङ्ग इति वक्तव्यमशेषं न्यासविंशत्यादिषु प्रबन्धान्तरेषु व्यक्तमुक्तमिति नेह प्रतन्यते ॥ ३४७ ॥

पद०—स्पष्ट इत्यादि । रूपादिभेदे स्पष्टे—पूर्वश्लोकदर्शितक्रमेण यज्ञाङ्गकल्पनादिरूपरूपभेदे स्पष्टे सति । नामसाम्यादिमात्रात् हठसमुपनतः—पुरुषविद्येति द्वयोरपि विद्ययोर्नामसाम्यमात्रात् बलात्कारवशेन कल्पितः । पुंविद्यापूर्वपक्षो मृदुरित्येषा अधिक्रिया विफला—द्वयोरपि पुरुषविद्ययो- र्भेदाभेदादिनिष्कर्षाय कृतोऽभेदपूर्वपक्षो दृढतरहेत्ववलम्बाभावात् मन्दः, अत इदमधिकरणं विफलम् । इति चेन्न—इति शङ्क्यते चेत्तन्न युक्तम् । न्यासविद्या अन्यैव प्रकरणपठिता तद्विधानप्रधाना अन्यैवेत्यस्वातन्त्र्यादिसिद्ध्यै अनयोर्विभजनमित्यतीवार्थवत्त्वात्—अत्र खलु द्वे विद्ये 'ब्रह्मणे त्वा महस ओमित्यात्मानं युञ्जीत' इति पूर्वं विहिता न्यासविद्यान्या इयं तु 'तस्यैवं विदुषः' इति तद्विद्याप्रकरणपठिता पुरुषविद्या तद्विधानप्रधाना तच्छेषभूता अन्यैवेति तैत्तिरीयकपुरुषविद्याया अस्वा- तन्त्र्यमङ्गित्वाभावः, अङ्गिद्वारा ब्रह्मप्राप्तिहेतुत्वमादिशब्दार्थः, तत्सिद्ध्यै अनयोर्विद्ययोर्भेदसाधनम्, एवम्प्रकारेणाधिकरणस्यात्यन्तं साफल्यात् । इति चेन्नेति पूर्वेणान्वयः । छान्दोग्यपुरुषविद्या तु आयुः- प्राप्त्यर्थत्वेन विधानात् न ब्रह्मविद्याङ्गभूतया अनया पुरुषविद्यया सह तादात्म्यमर्हतीति ॥ ३४७ ॥

यद्येवं यज्ञदृष्टिः परविदि पुरुषे चोद्यते सानुबन्धे
यज्ञस्यानङ्गभूतं कथमिह विविधं कल्प्यते तत्रतत्र ।
तस्मात् प्रक्रान्तविद्यास्तुतिरियमुचितेत्याहुरेकेऽन्यथान्ये
तिष्ठत्वेतद् द्विधापि प्रकृतसुघटता सम्प्रदायस्तु चिन्त्यः ॥ ३४८ ॥

इति पुरुषविद्याधिकरणम् ॥ ९१ ॥

चिन्ता०—अत्र पुरुषविद्याविषयपक्षद्वयं तत्तदेकदेशिप्रोक्तमनूद्य उभयथापि भाष्यकारपरिकल्पिता- धिकरणचिन्ता सङ्घटत इति सन्दर्शयति—यद्येवमिति । अयमत्र केषाञ्चित् पक्षः—इह यज्ञदृष्टिर्न कल्प्यते अपितु पूर्वोक्तन्यासविद्यानिष्ठस्य माहात्म्यप्रदर्शनार्थं सकलमपि कर्मजातं तस्य शरीर एव वर्तत इति यज्ञक्लृप्त्या प्रशंसामात्रमुच्यते यज्ञानङ्गभूतचातुर्मास्यादेर्मध्ये परिकल्पनात् । अपरे पुनरेवं मन्यन्ते— अपर्यनुयोज्यस्वभावा खलु श्रुतिः । अतस्तत्प्रामाण्यवशात् तादृग्विधं यज्ञान्तरमस्तीति तत्कल्पनरूपा पुरुष- विद्यापि काचित् विद्यत इति पुरुषविद्ययोर्भेदोऽपि प्रतिपाद्यत इत्यैक्यासिद्धिः । तेन क्वचित्पक्षे पुरुषविद्ययो- रभावादैक्यासिद्धिः पक्षान्तरे तु तयोरूपादिभेदादैक्यासिद्धिरित्यैक्यनिराकरणार्थमिदमधिकरणं सङ्गच्छते । तदिदं सर्वमभिप्रेत्याह—तिष्ठत्विति । द्वयोरपि पक्षयोर्भाष्यकारकल्पिताधिकरणप्रकारस्य सुघटतैव

वर्तते । तर्हि कोऽयं परमार्थ इत्याशङ्क्य यथासम्प्रदायमभिधीयताम् , असाम्प्रदायिकपक्षो न संग्राह्य इति सामान्यतः प्राह—सम्प्रदाय इति । युक्तियुक्तत्वात् प्राक्तन एव पक्षः परिग्राह्य इत्यर्थः ॥ ३४८ ॥

इति पुरुषविद्याधिकरणम् ॥ ९१ ॥

पद०—यद्येवमित्यादि । सानुबन्धे परविदि पुरुषे एवं यज्ञदृष्टिश्चोद्येत यदि—श्रद्धाशरीरोरःप्रभृत्यात्मशरीरतदनुबन्धिवर्गयुक्ते न्यासविद्यानिष्ठे पुरुषे तदनुवाकोक्तरीत्या यज्ञदृष्टिः कर्तव्यतया विधीयत इति यद्यङ्गीक्रियते । इह तत्रतत्र यज्ञस्यानङ्गभूतं विविधं कथं कल्प्यते—तथासत्यस्मिन्ननुवाके 'ये अर्धमासाश्च मासाश्च ते चातुर्मास्यानि य ऋतवस्ते पशुबन्धा ये संवत्सराश्च परिवत्सराश्च तेऽहर्गणाः' इत्यादौ तत्तद्वाक्ये यज्ञस्यानङ्गभूतं चातुर्मास्यपशुबन्धाहीनयागादिरूपं नानाविधं वस्तु कथं कल्प्यते । तस्मात्—यज्ञानङ्गानामपि कल्पनात् । इयं प्रक्रान्तविद्यास्तुतिरुचितेत्येके आहुः—इयं विद्यावत् भासमाना श्रुतिः पूर्वानुवाकान्ते उपक्रान्ताया न्यासविद्यायास्तन्निष्ठपुरुषसाध्याङ्गनैरपेक्ष्यसूचनद्वारा अङ्गसापेक्षविद्यान्तरापेक्षयोत्कर्षप्रकटनरूपा स्तुतिरित्येवोचितेति केचिन्मेधाविनः प्राहुः । अन्येऽन्यथा—अन्ये केचित् श्रुतेरपर्यनुयोज्यस्वभावत्वात् तथाविधं यज्ञान्तरमस्तीत्येव प्रत्याय्यम् , तथा चेयं न्यासविद्याङ्गविधैवेत्यूचुः । 'युक्तियुक्तत्वात् प्राक्तन एव पक्षः परिग्राह्यः' इति चिन्तामणिः । एतत् तिष्ठतु द्विधापि प्रकृतसुघटता—उक्तपक्षद्वयबलाबलचिन्तनादिकमत्र मा भूत् निक्षेपरक्षादिष्वस्तु प्रकृते पक्षद्वयेऽपि भाष्यकारपरिकल्पिताधिकरणप्रकारस्य सुघटतैव विद्यते । प्रथमपक्षे न्यासविद्यास्तुतिरूपत्वेन विद्यात्वाभावात् द्वयोरैक्यासिद्धिः पक्षान्तरे तु रूपादिभेदादैक्यासिद्धिरिति । तर्हि कः परमार्थ इति चेत् यथासम्प्रदायमस्तु असाम्प्रदायिकः पक्षो न ग्राह्य इति तात्पर्येणाह—सम्प्रदायस्तु चिन्त्य इति ३४८ ॥

इति पुरुषविद्याधिकरणम् ॥ ९१ ॥

---

## वेधाद्यधिकरणम् ॥ ९२ ॥

सूत्रम्—वेधाद्यर्थभेदात् ॥ ३७२ ॥

युज्येरन् ब्रह्मविद्यापरिसरपठिताश्शन्न इत्यादिमन्त्राः
तादर्थ्यात् सर्वविद्यास्विति न तदुदिताधीतिशेषत्वलिङ्गात् ।
नोचेदन्येऽपि तद्वत् सविधपठनतस्सन्तु शुक्रं प्रविध्ये-
त्येवम्प्रायास्तदर्था न च घटत इदं लिङ्गतो दुर्बलत्वात् ॥ ३४९ ॥

इति वेधाद्यधिकरणम् ॥ ९२ ॥

चिन्ता०—ब्रह्मविद्यासन्निधिसमाम्नानात् ब्रह्मविद्याङ्गत्वं पुरुषविद्याया उक्तम् , इदानीं पुनर्ब्रह्मविद्यासन्निधिसमाम्नातानां 'शन्नो मित्रः' इत्यादिमन्त्राणां ब्रह्मविद्याङ्गत्वं स्यादिति शङ्कया सङ्गतिः । तदर्थविचारस्तु—किमुपनिषदारम्भेष्वधीताः 'शुक्रं प्रविध्य' 'शन्नो मित्रः' इत्यादयो मन्त्राः प्रवर्ग्यादीनि च कर्माणि विद्याङ्गमुत नेति । किमेषां श्रुतिलिङ्गवाक्यैः कर्मस्वेव विनियोगः, उत ब्रह्मविद्यायां प्रकरणाद्विनियोगः । किमेषां प्रकरणपाठोऽङ्गत्वाय उत दिवाकीर्त्यारण्यानुवाक्यतायै । अत्र पूर्वपक्षमाह—युज्येरन्निति । 'शन्नः' इत्यादिमन्त्रा ब्रह्मविद्यापरिसरपठितत्वात् तेषां विद्याशेषत्वाविशेषाच्च सर्वविद्यास्वपि शेषत्वेन युज्येरन्निति । तदेतत्प्रतिक्षिपति—नेति । तत्र हेतुमाह—तदुदितेति । अयमर्थः—लिङ्गात् तत्तत्कर्मशेषत्वं प्रतीयते, सन्निधेर्ब्रह्मविद्याशेषत्वम् , तत्र लिङ्गसन्निध्योर्लिङ्गस्यात्यन्तबलीयस्त्वं सर्वेषामपि सम्मतम् । तत्र 'शन्नो मित्रः' इत्यादिमन्त्रस्य 'नमो ब्रह्मणे' इत्यादिना लिङ्गेनाध्ययनशेषत्वस्य स्पष्टदृष्टत्वादत्यन्तकनीयसा सन्निधिना कल्पनीयं ब्रह्मविद्याशेषत्वं बाध्यत एव । एवमनङ्गीकारे विपक्षे बाधकमाह—नो चेदिति । 'शन्नो मित्रः' इत्यादिमन्त्रस्य ब्रह्मविद्याशेषत्वे 'शुक्रं प्रविध्य' इत्यादिमन्त्रस्यापि ब्रह्मविद्यासन्निधिसमाम्नातस्य ब्रह्मविद्याशेषत्वं स्यात् । तच्च विरुद्धमेव 'शुक्रं प्रविध्य हृदयं प्रविध्य' इति परपीडाप्रार्थनात्मकस्य कर्मणो ब्रह्मविद्याविरोधित्वेन तदङ्गत्वकल्पनायोगात्, लिङ्गतो दुर्बलत्वाच्च सन्निधिसमाम्नानस्य । तेन न ब्रह्मविद्याशेषत्वमिति कथं सर्वविद्याङ्गत्वकल्पनं योयुज्येत ॥ ३४९ ॥

इति वेधाद्यधिकरणम् ॥ ९२ ॥

पद०—युज्येरन्नित्यादि । ब्रह्मविद्यापरिसरपठिताश्शन्न इत्यादिमन्त्रास्तादर्थ्यात् सर्वविद्यासु युज्येरन्—'ब्रह्मविदाप्नोति परम्' इत्यादिब्रह्मविद्यासन्निधिपठिताश्शन्नोमित्रइत्यादिमन्त्रास्सन्निधिबलेन ब्रह्मविद्याशेषत्वलाभात् तत्सामान्यभूतासु सर्वासु ब्रह्मविद्यास्वनुसन्धेयतया सम्बध्येरन् । इति न—इति शङ्कनं न युक्तम् । तदुदिताधीतिशेषत्वलिङ्गात्—उक्तमन्त्रेषु 'तेजस्वि नावधीतमस्तु' इत्यधीतस्य तेजस्वित्वप्रार्थनरूपस्य 'नमो ब्रह्मणे' इति वेदनमस्करणरूपस्य चाध्ययनशेषत्वलिङ्गस्योपलम्भात् । नो चेत् शुक्रं प्रविध्येत्येवम्पाया अन्येऽपि तद्वत् सविधपठनतस्तदर्थास्सन्तु—एवमध्ययनशेषत्वानङ्गीकारे विद्याशेषत्वाङ्गीकारे 'शुक्रं प्रविध्य' इत्येवमादिरूपा अन्ये मन्त्राः 'शन्नो मित्रः' इत्यादिपूर्वोक्तमन्त्रवत् ब्रह्मविद्यासमीपपठनमात्राद्धेतोर्विद्याशेषभूता भवन्तु सन्निधिरूपस्य हेतोस्तुल्यत्वादित्यर्थः । इदं न घटते च—'शुक्रं प्रविध्य' इत्यादिमन्त्राणां ब्रह्मविद्याङ्गत्वकल्पनं न युज्यते च । शत्रोश्शुक्रधातुं वेधय शत्रोर्हृदयं वेधयेत्येवं परपीडाप्रार्थनारूपस्य कर्मणो ब्रह्मविद्याविरोधित्वेन तन्तुवायस्य मर्कटशिशुपोषणन्यायापत्तेः । लिङ्गतो दुर्बलत्वात्—सन्निधिसमाम्नानस्य लिङ्गापेक्षया दुर्बलत्वाच्च । इदं न घटत इत्यन्वयः ॥ ३४९ ॥

इति वेधाद्यधिकरणम् ॥ ९२ ॥

## हान्यधिकरणम् ॥ ९३ ॥

सूत्रम्—हानौ तूपायनशब्दशेषत्वात्कुशाच्छन्दस्तुत्युपगानवत्तदुक्तम् ॥ ३८० ॥

शाखे द्वे मुक्तिभाजः क्वचन कथयतः पुण्यपापप्रहाणं
ब्रूतेऽन्या तत्प्रवेशं प्रियतदितरयोर्दायसंक्रान्तिकाले ।
हानञ्चोपायनञ्च क्वचिदिति पृथगाम्नातसम्पर्कसिद्धिः
वाक्यं शाखान्तरस्थं भवति हि विहिताकाङ्क्षया वाक्यशेषम् ॥ ३५०॥

चिन्ता०—अत्र ब्रह्मविद्यासन्निधिसमाम्नातानां 'शुक्रं प्रविध्य' इत्यादीनां ब्रह्मविद्यानङ्गत्वमुक्तम् । तथा सन्निधिसमाम्नातहानोपायनचिन्ता अनन्तरं प्राप्तेति सङ्गतिः । अथवा 'शुक्रं प्रविध्य' इत्यादिमन्त्राणां लिङ्गात् तत्तत्कर्मशेषत्वमुक्तम्, इह पुनरुपायनस्य प्रहाणविषयत्वरूपार्थसामर्थ्यलिङ्गात् उभयोरन्योन्यान्वयनियमेनोभयोरुभयत्रानुसन्धेयत्वमुच्यतइति सङ्गतिः । तदर्थविचारस्तु—'अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात्' 'तथा विद्वान्पुण्यपापे विधूय' इति क्वचित् सुकृतदुष्कृतयोर्हानिचिन्तनमाम्नातम्, 'सुहृदस्साधुकृत्यां द्विषन्तः पापकृत्याम्' इत्युपायनचिन्तनं क्वचिदाम्नातम्, क्वचिदुभयचिन्तनम् 'तत्सुकृतदुष्कृते धूनुते तस्य प्रिया ज्ञातयस्सुकृतमुपयन्ति अप्रिया दुष्कृतम्' इति, तत्र किं हानिचिन्तनोपायनचिन्तनोभयचिन्तनानि समुच्चीयेरन् उत विकल्पेरन्निति । किमुपायनं हानिशेषतया विद्याङ्गमुत स्वतन्त्रतयेति । किमुपायनवाक्यं शाखान्तराधीतमपि हानिवाक्यशेषभूतं उत स्वतन्त्रम् । किं कौषीतकीनामुभयाम्नानमुपायनवाक्यस्य हानिवाक्यशेषताविरोधि नेति । अत्र विषयं विशोध्य उद्ग्रन्थमेव पूर्वपक्षं निराकुर्वन् सैद्धान्तिकमर्थं सम्यगेव प्रमाणन्यायाभ्यामुपपादयति—शाखे द्वे इति । अयमत्र शब्दान्वयः—द्वे शाखे मुक्तिभाजः पुरुषस्य पुण्यपापप्रहाणं क्वचित् कथयतः । अन्या पुनः शाखा प्रियतदितरयोर्दायसंक्रान्तिकाले पुण्यपापप्रवेशं ब्रूते । प्रियाप्रिययोः पुण्यपापसङ्क्रान्तिमाचष्टइत्यर्थः । क्वचित् शाखायां हानञ्चोपायनञ्च समुच्चित्य कथितमिति अन्यत्र पृथगाम्नातयोस्तयोस्सम्पर्क एव न्यायानुगृहीतप्रमाणविषयत्वेन सिध्यति । असन्निहितानां शाखान्तरस्थानां वाक्यानामन्योन्यान्वयसिद्धिः कथं स्यादित्याशङ्क्य सर्वशाखाप्रत्ययन्यायमेव प्रागुक्तमिह प्रत्यभिज्ञापयति—वाक्यमिति ॥ ३५० ॥

पद०—शाखे द्वे इत्यादि । द्वे शाखे—'अश्व इव रोमाणि विधूय पापम्' 'तदा विद्वान् पुण्यपापे विधूय' इति द्वे सामाथर्वणशाखे । मुक्तिभाजः–मुक्तिं प्राप्नुवतः पुरुषस्य । क्वचन–स्थलविशेषनिर्देशं विना क्वापि स्थले । पुण्यपापप्रहाणं कथयतः—पुण्यपापयोः प्रहाणं त्यागं प्रतिपादयतः ।

अन्या दायसंक्रान्तिकाले प्रियतदितरयोस्तत्प्रवेशं ब्रूते—'तस्य पुत्रा दायमुपयन्ति सुहृदस्साधुकृत्यां द्विषन्तः पापकृत्याम्' इत्यन्या शाट्यायनीनां श्रुतिः पुत्रेषु दायसंक्रमणकाले प्रियतदितरयोर्मित्रामित्रयोः तयोस्सुकृतदुष्कृतयोः प्रवेशं प्रतिपादयति। क्वचित् हानं चोपायनश्चेति पृथगाम्नातसम्पर्कसिद्धिः—'तत्सुकृतदुष्कृते धूनुते तस्य प्रिया ज्ञातयस्सुकृतमुपयन्त्यप्रिया दुष्कृतम्' इति कौषीतकिशाखायां सुकृतदुष्कृतप्रहाणं प्रियाप्रिययोरुपायनञ्च समुच्चित्य कथितमित्यन्यत्र पृथगाम्नातयोर्न्यायानुगृहीतप्रमाणविषयस्सम्पर्कस्सिध्यतीत्यर्थः। शाखान्तरस्थं वाक्यं विहिताकाङ्क्षया वाक्यशेषं भवति हि—शाखान्तरस्थं वाक्यं शाखान्तरस्थवाक्यविहितार्थाकाङ्क्षावशेन तदपेक्षितार्थं समर्पयत् तद्वाक्यशेषत्वं भजत इति प्रसिद्धं हि पूर्वकाण्डे। यथा सामस्तोत्रसंख्यानार्थशङ्कुविशेषरूपकुशाविषये 'वानस्पत्याः कुशाः' इति विहितवनस्पतिमयत्वरूपसामान्याकारार्थश्रवणजनितविशेषाकाङ्क्षावशेन तदपेक्षितवनस्पतिविशेषमयत्वसमर्पकं 'औदुम्बर्यः कुशाः' इति शाखान्तरस्थं वाक्यं तद्वाक्यशेषं दृष्टम्। एवं 'देवासुराणां छन्दोभिः' इति वाक्यं छन्दोभिः कार्ये करणीये पौर्वापर्यनियामकं यावदपेक्षते तावदेव 'देवच्छन्दांसि पूर्वम्' इति वाक्यं तदपेक्षितपौर्वापर्यसमर्पणात् तच्छेषत्वं प्राप्तम्। 'षोडशिनस्तोत्रमुपाकरोति' इति वाक्ये कदेत्यपेक्षमाणे 'समयाविषिते सूर्ये षोडशिनस्तोत्रमुपाकरोति' इत्यर्धास्तमितसूर्यककालविशेषं तस्मै समर्प्य तच्छेषभावमिदं वाक्यमाटीकत, एवं 'ऋत्विज उपगायन्ति' इत्यृत्विजामविशेषेणोपगानं विदधद्वाक्यं यावदपवादं प्रतीक्षते तावदेव 'नाध्वर्युरुपगायेत्' इत्युपगानादध्वर्युं निवर्तयद्वाक्यं तच्छेषत्वं प्राप, एवमिहापीति भावः॥ ३५०॥

इत्थं ब्रह्मज्ञकर्मत्यजनमितरसंक्रान्तिसम्पृक्तमस्तु
स्याच्चिन्तायां व्यवस्था पृथगनुपठनादित्यसत् क्लृप्तिदौस्स्थ्यात्।
सर्वेषां मुक्तिभाजां द्वितयमपि यथोपास्तिसाध्यं समानं
तच्चिन्तासौ तथा तन्महिमविद इति स्थापनीयोभयत्र॥ ३५१॥

चिन्ता०—पूर्वं हानोपायनयोर्वैकल्पिकत्वं पूर्वपक्षिणोक्तं प्रमाणतर्काभ्यां परिहृतम्, तर्हि मा भूत् तयोर्वैकल्पिकत्वम्, तथापि तच्चिन्तने वैकल्पिकत्वं स्यादित्याशङ्क्य तदपि नेत्याह—इत्थमिति। अयमत्र शब्दार्थः—इत्थं ब्रह्मज्ञानां कर्मत्यजनं कर्मप्रहाणं प्रियाप्रिययोस्सङ्क्रान्तिसम्पृक्तमस्तु नाम। चिन्तायां पुनर्व्यवस्था विकल्प एव भवतु। कुत इत्यत्राह—पृथगनुपठनादिति। तत्प्रतिक्षिपति—असदिति। सर्वत्रैकरूप्येण कल्पने सम्भाव्यमाने सत्यपि वैरूप्येण कल्पनाया अन्याय्यत्वादित्यर्थः।

तदिदमाह—क्लृप्तिदौस्स्थ्यादिति । वैरूप्यकल्पनाया अन्याय्यत्वमेव विशदं प्रकाशयति—सर्वेषामिति । सर्वेषामपि मुक्तिभाजां द्वितयमपि हानमुपायनमुभयमपि यथोपासनं साध्यं समानमेव । एवं हानमुपायनञ्च पुण्यपापयोरस्तीत्युक्तम् । तद्वत् हानोपायनचिन्ताच ब्रह्मविन्माहात्म्यविद उपासकस्याधिकारिणः कर्तव्येत्युभयत्र हानोपायनयोरपि चिन्ता स्वीकार्या । यथोपासनं फलप्राप्तिरिति नियमेन हानोपायनचिन्ताऽभावे हानोपायनरूपफलप्राप्तेरयोगात् । लोके खलु इष्टानिष्टचिन्तयोरिष्टानिष्टफलप्राप्तिस्स्वफलमेवेति हि सर्वे मन्यन्ते । अतो हानोपायनयोर्ब्रह्मविद्याफलत्वात् उपासनदशायां फलचिन्तनं कर्तव्यमेवेति निर्णयः । श्रूयते हि उपासनदशायां फलचिन्तनम् 'ब्रह्मलोकमभिसम्भवानि' 'एतमितः प्रेत्याभिसम्भवितास्मि' इत्यादि । 'विष्णुर्जयतु नासुरः' इति ब्रह्मविदां विष्णुभक्तिविरोधिनिराकरणं प्रार्थनीयतया फलमेवेति सुप्रसिद्धमेव ॥ ३५१ ॥

पद०—इत्थमित्यादि । इत्थं ब्रह्मज्ञकर्मत्यजनमितरसंक्रान्तिसम्पृक्तमस्तु—पूर्वोक्तन्यायेन ब्रह्मज्ञानां सुकृतदुष्कृतरूपकर्मप्रहाणमितरयोस्सुहृद्द्विषतोस्सङ्क्रमेण सम्पृक्तं सम्बद्धं भवतु । पृथगनुपठनात् चिन्तायां व्यवस्था स्यात्—क्वचिद्धानस्य क्वचिदुपायनस्य क्वचिदुभयस्य च अनुपठनात् हानोपायनचिन्तने व्यवस्था विकल्पस्स्यात् । इत्यसत्–इति शङ्कनमसाधु । कुतः? क्लृप्तिदौस्स्थ्यात्–सर्वत्रैकरूप्ये सम्भाव्यमानेऽपि वैरूप्येण कल्पनाया अन्याय्यत्वादित्यर्थः । अस्यैवोपरि विवरणम्—मुक्तिभाजां सर्वेषां यथोपास्ति द्वितयमपि साध्यं समानम्—सर्वेषामपि मुमुक्षूणां यथाक्रतुन्यायेन यथोपासनं हानमुपायनञ्चेत्युभयमपि फलं तुल्यम् । तन्महिमविदस्तच्चिन्ता असौ तथेत्युभयत्र स्थापनीया—ब्रह्मविन्माहात्म्यविद उपासकस्याधिकारिणो हानोपायनचिन्ताप्यसौ तथा तुल्येति हेतोरुभयत्र एकैकाम्नानस्थलद्वयेऽपि स्थापनीया कार्यतया योजनीयेत्यर्थः । इयं चिन्तामणियोजना । योजनान्तरं स्फुरति—यथेति भिन्नं पदम् । मुक्तिभाजां सर्वेषामपि उपास्तिसाध्यं द्वितयमपि यथा समानम्, तन्महिमविदस्तच्चिन्ताचासौ तथा समानेत्युभयत्र स्थापनीयेति ॥ ३५१ ॥

कर्त्रा तेनैव भोग्यं शुभमितरदपि स्थापितं कर्मकाण्डे
तस्माद् ब्रह्मज्ञकर्म द्विषति सुहृदि वा नापतेदित्ययुक्तम् ।
विद्यामाहात्म्यतो यद्विगलति विदुषः कर्म तत्साध्यतुल्यं
विद्वत्प्रद्वेषभक्त्योः फलमिति कथने वाक्यतात्पर्यसिद्धेः ॥ ३५२ ॥

इति हान्यधिकरणम् ॥ ९३ ॥

चिन्ता०—नन्वत्र प्रियाप्रिययोस्सुकृतदुष्कृतसङ्क्रान्तिरुपदिष्टा, सेयं विरुद्धैव, नह्यन्येन कृतं कर्मान्यत्र सङ्क्रामति, नह्यन्यकर्मफलमन्यत्रोत्पद्यते, अकृताभ्यागमकृतविप्रणाशप्रसङ्गात्, तेन विरुद्धमेतद्भवदुक्तमित्याशङ्कते—कर्त्रेति। अयमत्र शब्दान्वयः—यः करोति कर्म तेनैव कर्त्रा तत्फलं भोग्यमिति कर्मकाण्डे स्थापितम्। दृश्यते हि 'शास्त्रफलं प्रयोक्तरि' इति। तस्मात् ब्रह्मज्ञकर्म शत्रौ मित्रे वा सङ्क्रामतीति न घटते। तदिदं प्रतिक्षिपति—अयुक्तमिति। विद्यामाहात्म्यत इति—अयमर्थः—न ह्यस्माभिर्ब्रह्मविन्निष्ठपुण्यपापयोः प्रियाप्रिययोस्सङ्क्रान्तिरुच्यते, नापि प्रियाप्रियफलयोस्सुहृदि दुर्हृदि वा जननम्, अपि तु स्वकर्मफलमेव सुहृदां दुर्हृदामप्युच्यते। यो हि ब्रह्मविद्विषये प्रीणाति यश्च तस्मै द्रुह्यति तयोरुभयोरपि स्वाचरितस्य सुकृतस्य दुष्कृतस्य च निष्फलत्वायोगात् स्वकीयकर्मफलमेवोच्यते। तर्हि स्वकर्मफलभोगे कर्मफलसंक्रान्तिवचनं कथं स्यात्? तदिदमवहितमनाश्शृणु, अन्यकर्मणोऽन्यत्र संक्रान्तेरयोगात् अन्यकर्मफलस्यान्यत्र जननायोगाच्च न कर्मसंक्रान्त्यतिदेशो नापि फलजननातिदेशः, अपि तु तत्तत्कर्मफलपरिमाणमेवोच्यते। परमकारुणिकेन भगवता यावत्पुण्यफलमध्यात्मवित्सु न दत्तं तावत्पुण्यफलमध्यात्मविदनुकूलेषु स्वकृतानुकूल्यफलतया दीयते, यावत्पापफलमध्यात्मवित्सु न दत्तं तावत्पापफलमध्यात्मवित्प्रतिकूलेषु स्वकृतप्रातिकूल्यफलतया दीयत इति। तेनाध्यात्मविदनुकूलप्रतिकूलयोर्दीयमानफलपरिमाणप्रदर्शनमात्रमत्रोच्यते न पुनरन्यकर्मणामन्यत्र संक्रान्तिरिति सर्वं समाहितम्॥ ३५२॥

इति हान्यधिकरणम्॥ ९३॥

पद०—कर्त्रा तेनैवेत्यादि। कर्मकाण्डे शुभमितरदपि तेनैव कर्त्रा भोग्यं स्थापितम्—द्वादशलक्षण्यां 'शास्त्रफलं प्रयोक्तरि' इत्यादौ पुण्यं पापमपि यः कर्ता तेनैव तदनुभाव्यमिति सिद्धान्तितम्। तस्मात्—अन्यकृतकर्मणोऽन्यानुभाव्यत्वात्। ब्रह्मज्ञकर्म द्विषति सुहृदि वा नापतेत्—ब्रह्मविदः पापं पुण्यञ्च तद्द्वेषिणि तन्मित्रे वा न प्रसजति। इत्ययुक्तम्—इति चिन्तनमयुक्तम्। विदुषो विद्यामाहात्म्यतो यत्कर्म विगलति तत्साध्यतुल्यं विद्वत्प्रद्वेषभक्त्योः फलमिति कथने वाक्यतात्पर्यसिद्धेः—ब्रह्मविद उपासनसामर्थ्यात् यत् पापपुण्यरूपं कर्म प्रहीयते तत्साध्यफलतुल्यं विद्वद्विद्वेषतद्भक्तिरूपपापपुण्यकर्मणोः फलमिति प्रतिपादने तद्वाक्यतात्पर्यसिद्धेः। तथा च नानेन वाक्येनान्यकर्मणोऽन्यकर्मफलस्य वा अन्यस्मिन्संक्रमणमुच्यते किं तु ब्रह्मविदो यत् पापं विद्यामाहात्म्याद्गलति तस्य कर्मणो यावद्दुःखं फलं तावद्दुःखं ब्रह्मविद्विद्वेषरूपपापस्य फलं भगवान् ददाति, एवं ब्रह्मविदो यत्पुण्यं विद्यासामर्थ्याद्गलति तस्य सर्वस्य यावत् सुखं फलं तावत् सुखं ब्रह्मविद्भक्तिरूपपुण्यकर्मण इत्येतदेवास्य तात्पर्यमिति॥ ३५२॥

इति हान्यधिकरणम्॥ ९३॥

## साम्परायाधिकरणम् ॥ १४ ॥

सूत्रम्—साम्पराये तर्तव्याभावात्तथाह्यन्ये ॥ ३८१ ॥

कर्मोद्धूतिर्मुमुक्षोः क्वचिदुपनिषदि श्रूयते साम्पराये
मार्गेऽन्यस्यां द्विधैवं शकलश इह तच्चिन्तनञ्चास्तु मा भूत् ।
नह्युक्तं कर्मसाध्यं पथि फलमथ गत्यर्थदेहानुवृत्तिं
मुक्त्यै विद्यैव कुर्यादघहतिवचने पाठतोऽर्थो बलीयान् ॥ २५२ ॥

चिन्ता०—सङ्गतिर्भाष्ये 'सुकृतदुष्कृतयोर्हानमुपायनञ्च सर्वासु विद्यासु चिन्तनीयमित्युक्तम् । तद्धानं किं देहवियोगकाले देहादुत्क्रान्तस्याध्वनि च, उत देहवियोगकाल एवेति विशये' इति । तदर्थविचारस्तु—किं सुकृतदुष्कृतहानं देहवियोगकाले ऽध्वनि च, उत देहवियोगकाल एवेति । किमुभयत्र हानिश्रवणं उत देहवियोगकाल एवेति । किं 'स एतं देवयानं पन्थानमापद्याग्निलोकं गच्छति' इत्युपक्रम्य 'स आगच्छति विरजां नदीं तां मनसात्येति तत्सुकृतदुष्कृते धूनुते' इतिचरमश्रुतस्य 'तत्सुकृतदुष्कृते धूनुते' इति वाक्यावयवस्य 'स एतं देवयानम्' इत्येतस्मात् प्रागन्वयः, उत यथापाठमन्वय इति । किं 'अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' इत्यशरीरस्य सुखदुःखाननुभवश्रवणानुरोधेन प्रागन्वयवर्णनं न्याय्यम्, उत देवयानगमनश्रवणानुरोधेन सूक्ष्मशरीर-स्थित्यर्थं यथापाठमन्वयवर्णनं न्याय्यमिति । अत्र पूर्वपक्षी मन्यते—ताण्डिनो हि देहवियोगकाले सुकृत-दुष्कृतविधूननमधीयते 'अश्व इव रोमाणि विधूय' इत्यादिना । कौषीतकिनस्तु 'स आगच्छति विरजां नदीं तां मनसात्येति तत् सुकृतदुष्कृते धूनुते' इति विरजातरणानन्तरं सुकृतदुष्कृतविधूननमामनन्ति । तेनोभयवाक्यप्रमाण्यात् उभयत्रांशेन सुकृतदुष्कृतविधूननं तच्चिन्तनमपि ब्रह्मविदा कर्तव्यं तथैवांशे-नास्त्विति । तदिदमाह—कर्मोद्धूतिरिति । शब्दान्वयस्तु—क्वचिदुपनिषदि कर्मविधूननं मुमुक्षो-र्देहवियोगकाले श्रूयते अन्यस्यामुपनिषदि मार्गे, तेन द्वयमपि प्रमाणम् । शकलशो द्विधैवमस्तु केषाञ्चित् कर्मणां देहवियोगकालेऽपरेषां मार्ग इति चिन्तनमपि शकलशोऽस्त्विति । तदिदं प्रतिक्षिपति-मा भूदिति । तदेव विवृणोति—न हीति । यदि मार्गे किमपि फलमुक्तं स्यात् तदा तत्फलार्थं कर्मा-वशेषोऽस्तीति वक्तुं शक्येत मार्गानुभाव्यफलाभावात् सफलं कर्म सर्वमपि साम्पराये नश्यतीत्यर्थः । ननु यदि सर्वं कर्म देहावसाने नश्येत्, तर्हि अर्चिरादिमार्गेण गमनमेव न स्यात् तथाच निरर्थक एवाध्या-त्मविदां प्रयास इत्याशङ्क्य परिहरति—अथेति । मुक्त्यै गत्यर्थदेहानुवृत्तिं ब्रह्मविद्यैव कुर्यात् । तर्हि

द्वयोः प्रमाणयोस्तुल्यबलत्वात् कथं देहावसान एवेति नियम इत्याशङ्क्य पाठक्रमादर्थक्रमस्य बलीयस्त्वेन देहावसाने कर्मक्षयस्यार्थक्रमप्राप्तत्वात् पाठक्रमप्राप्तं मार्गे कर्मक्षयं बाधित्वा अर्थो वर्ण्यत इति न कश्चिद्विरोधः ॥ ३५३ ॥

पद०—कर्मोद्धूतिरित्यादि । क्वचिदुपनिषदि—क्वचिदुपनिषदि च्छान्दोग्ये 'अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात्प्रमुच्य । धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवानि' ॥ इति वाक्ये । मुमुक्षोः कर्मोद्धूतिस्साम्पराये श्रूयते—मुमुक्षोर्ब्रह्मविदः कर्मनिवृत्तिर्देहवियोगकाले श्रूयते । अन्यस्यां मार्गे—कर्मोद्धूतिश्श्रूयते इति पदद्वयस्यानुषङ्गः । अन्यस्यां कौषीतकिशाखायां 'स आगच्छति विरजां नदीं तां मनसात्येति तत्सुकृतदुष्कृते धूनुते' इत्यादिवाक्ये ब्रह्मलोकमार्गे कर्मोद्धूतिश्श्रूयते । इह तच्चिन्तनञ्च शकलशो द्विधैवमस्तु—तेन कर्तव्यं तच्चिन्तनमपि केषांचित् कर्मणां देहवियोगकाले अपरेषां मार्गे इत्यंशतो द्विधैवमस्तु । मा भूत्—इदं शङ्कनं न स्यात् । पथि कर्मसाध्यं फलं नोक्तं हि—ब्रह्मलोकमार्गे कर्मसाध्यं किमपि सुखरूपं दुःखरूपं वा फलं ब्रह्मविदोऽनुभाव्यतया श्रुत्या नोक्तं हि । तथोक्ते तत्फलार्थं कर्मावशेषोऽस्तीत्युच्येत । अतो मार्गेऽनुभाव्यफलाभावात् निश्शेषं कर्म देहवियोगकाल एव नश्यतीत्यर्थः । कर्मनाशे तन्मूलको देहः कथं तिष्ठेत् मार्गगमनाय देहेन भाव्यं हीत्यत्राह—अथेत्यादिना । अथ मुक्त्यै गत्यर्थदेहानुवृत्तिं विद्यैव कुर्यात्—अथ देहवियोगकाल एव निश्शेषकर्मनाशे सति पश्चात्स्वसाध्यमुक्तिरूपफललाभाय मार्गगत्यपेक्षितसूक्ष्मदेहानुवृत्तिं विद्यैव सम्पादयेत् । अतो न तदर्थं कर्मणा भाव्यमिति भावः । तर्हि कौषीतकिश्रुतौ वाक्यं विरुध्येतेत्यत्रोच्यते—अघहातिवचने पाठतोऽर्थो बलीयानिति । कौषीतकिश्रुतौ 'तत्सुकृतदुष्कृते धूनुते' इति कर्मनिवृत्तिवाक्ये पाठक्रमादर्थक्रमो बलीयान् हि । अतः 'स एतं देवयानं पन्थानमापद्य' इत्यतः प्राक् 'तत्सुकृतदुष्कृते धूनुते' इति पठनीयम् । एवं पठिते 'अश्व इव' इत्यादिश्रुत्यन्तरोक्तक्रमेण देहवियोगकाले निश्शेषकर्मक्षये सति पश्चाद्गत्यर्थं देवयानमार्गं प्राप्नोतीत्यर्थो निष्पद्यते इति भावः ॥ ३५३ ॥

निश्शेषं कर्म नश्येदिह यदि विदुषस्स्थूलदेहान्तमात्रे
विश्राम्येत् तस्य तावच्चिरमिति हि वचो नार्थवत्त्वं गतेस्स्यात् ।
गत्वा सम्पद्य चाविर्भवनमिति न संवोभवीतीत्ययुक्तं
स्याद्धीसङ्कोचमात्रस्थितिकृदनुगतस्सूक्ष्मसंस्कारयोगः ॥ ३५४ ॥

इति साम्परायाधिकरणम् ॥ ९५ ॥

चिन्ता०—स्यादेतत् निश्शेषं कर्म विदुषो यदीहैव नश्येत् तदा 'तस्य तावदेव चिरम्' इति वाक्यं स्थूलदेहान्तमात्रे विश्राम्येत्। तथा च तदानीमेवासौ मुक्तस्स्यात्। एवञ्च सति अर्चिरादिगमनस्य प्रयोजनवत्त्वं न स्यात्। नचार्चिरादिगमनं नास्तीति वक्तुं शक्यम्; 'परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' इत्यर्चिरादिमार्गेण गत्वा परमपुरुषप्राप्त्यनन्तरमेव मोक्षस्याम्नातत्वात्। तत् कथं स्थूलदेहावसाने निश्शेषकर्मविलोप इति कस्यचित् शङ्का। तदिदमनुवदति—निश्शेषमिति। उक्तशङ्कां निराकरोति—अयुक्तमिति। अयुक्तत्वमेवोपपादयति—स्यादिति। अयमर्थः—सुखदुःखादिफलप्राप्तिहेतुः कर्मकलापो देहावसाने यद्यपि विश्रान्तः, तथापि परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पत्तिपर्यन्तं ज्ञानसङ्कोचमात्रहेतुसूक्ष्मकर्मशेषोऽनुवर्तते। कथमेतदिति चेत् 'परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' इति श्रुतिसामर्थ्यात्। नहि स्वाभाविकज्ञानवतः पुरुषस्याकारणक एव तावन्तं कालं ज्ञानसङ्कोच इति वक्तुं शक्यते। न च तस्य भगवन्निग्रहशेषमन्तरेण कारणान्तरमस्तीति। तेन भगवन्तं प्राप्तस्यैवासङ्कुचितब्रह्मानुभवरूपमोक्षसिद्धेस्साक्षादेव श्रुतत्वादनुक्रमेणैव भगवन्निग्रहनिवृत्तिरिति सिद्धम् ॥ ३५४ ॥

इति साम्परायाधिकरणम् ॥ ९५ ॥

पद०—निश्शेषमित्यादि। विदुषः कर्म इह निश्शेषं नश्येद्यदि तस्य तावच्चिरमिति वचः स्थूलदेहान्तमात्रे हि विश्राम्येत्—ब्रह्मविदः पुण्यपापात्मकं कर्म स्थूलदेहवियोगकाल एव निश्शेषं नश्येद्यदि 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये' इति च्छान्दोग्यस्थं मोक्षविलम्बप्रतिपादकं वचनं स्थूलदेहावसान एव पर्यवस्येत्। स्थूलदेहावसान एव निश्शेषकर्मक्षयस्योक्तत्वात् तावत्पर्यन्तमेव विलम्ब इत्येवमर्थे पर्यवस्येत्, नतु ब्रह्मलोकमार्गगमनादिविलम्बं सहेतेत्यर्थः। अस्त्वेवमिति चेत्तत्राह—नार्थवत्त्वमित्यादि। गतेरर्थवत्त्वं न स्यात्—एवं विलम्बाभावेऽङ्गीकृतेऽर्चिरादिगमनस्य प्रयोजनवत्त्वं न स्यात्। मार्गगमनात्पूर्वमेव मुक्तिलाभे मार्गगमनं निरर्थकं स्यात् किलेति भावः। एवमप्यस्तु किं प्रमाणं विरुध्यत इत्यत्राह—गत्वा सम्पद्य चाविर्भवनमिति न संबोभवीति—अर्चिरादिना गत्वा परं ज्योतिः प्राप्यावस्थितस्यैव स्वाभाविकज्ञानाविर्भावरूपो मोक्ष इत्येवमर्थकं श्रुतिवाक्यं न सङ्गच्छते, विरुणद्धीत्यर्थः। इत्ययुक्तम्। धीसङ्कोचमात्रस्थितिकृत् सूक्ष्मसंस्कारयोगोऽनुगतस्स्यात्—ज्ञानसङ्कोचमात्रहेतुसूक्ष्मकर्मशेषोऽनुवर्तत इत्यर्थः। कथमेवमेतदिति चेत् 'परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' इति श्रुतिसामर्थ्यात्, न हि स्वाभाविकज्ञानवतः पुरुषस्याकारणक एव तावन्तं कालं ज्ञानसङ्कोच इति वक्तुं शक्यते; न च तस्य भगवन्निग्रहमन्तरेण कारणान्तरमस्ति, तेन भगवन्तं प्राप्तस्यैवासङ्कुचितब्रह्मानुभवरूपमोक्षसिद्धेस्साक्षादेव श्रुतत्वादनुक्रमेणैव भगवन्निग्रहनिवृत्तिरिति सिद्धम् ॥ ३५४ ॥

इति साम्परायाधिकरणम् ॥ ९५ ॥

# अनियमाधिकरणम् ॥ ९५ ॥

सूत्रम्—अनियमस्सर्वेषामविरोधश्शब्दानुमानाभ्याम् ॥ ३८६ ॥

पन्थास्स्यादर्चिरादिः फलमिह सकलब्रह्मविद्यासु मा वा
प्रारभ्याधीतियोगात् प्रकरणनियता तस्य चिन्तेति चेन्न ।
सर्वासां तद्य इत्थं विदुरिति वचसात्राथ येचेति चोक्त्या
मार्गे साधारणेऽस्मिंस्तदनुसरणतस्तद्वदेवास्य चिन्ता ॥ ३५५ ॥

चिन्ता०—पूर्वाधिकरणे स्थूलदेहावसान एवार्चिरादिमार्गोपक्रमे स्थूलसर्वकर्मक्षयः, सूक्ष्मसंस्कारशेषेण परं ज्योतिरुपसम्पन्नस्यैव स्वेन रूपेणाभिनिष्पत्तिरित्युपक्षिप्तम् । तत्र प्रस्तुतोऽयमर्चिरादिमार्गो यस्यां विद्यायामधीतस्तद्विद्यानिष्ठस्यैव स्यात् किं वा सर्वविद्यानिष्ठस्येति चिन्त्यत इति सङ्गतिः । तदर्थविचारस्तु—किमर्चिरादिगतिः पञ्चाग्निविद्यानिष्ठानामेव उत सर्वविद्यानिष्ठानामिति । तदर्थं विचार्यते—किं पञ्चाग्निविद्यायां 'य एवमेतद्विदुर्ये चामी अरण्ये श्रद्धां सत्यमुपासते तेऽर्चिषमभिसम्भवन्ति' 'तद्य इत्थं विदुर्येचेमे ऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसम्भवन्ति' इतीतरानपि चोद्दिश्यार्चिरादिगतिविधिश्श्रूयते उत पञ्चाग्निविद्यानिष्ठानेवोद्दिश्येति । किं श्रद्धासत्यतपश्शब्दैरुपास्यब्रह्मोपस्थापनमुखेनात्रोपासनान्तरप्रतिपत्तिरस्ति नेति । किमुपकोसलविद्यायां 'आचार्यस्तु ते गतिं वक्ता' इति गत्यनुवाद उपासनान्तरप्रतिपत्तिमुपोद्बलयति नेति । तत्र शङ्कापूर्वकं पूर्वपक्षमुपन्यस्य सिद्धान्तमपि प्रकटयति—पन्था इति । भाष्योक्तं संशयस्वरूपं प्रथमं दर्शयति । इदं हि भाष्यवाक्यं 'उपकोसलादिषु येषूपासनेष्वर्चिरादिगतिश्श्रूयते किं तन्निष्ठानामेव तया ब्रह्मप्राप्तिः उत सर्वेषां ब्रह्मोपासननिष्ठानाम्' इति । अत्र प्रारभ्येत्यादिना पूर्वपक्षं दर्शयति । अयमर्थः—उपकोसलादिविद्याविशेषं प्रारभ्य यत्रयत्रार्चिराद्याम्नानं तत्रतत्रैव स्यादर्चिरादिगतिः तदनुसारात् तच्चिन्तनमपि तथा नान्यत्रेति । तदिदं प्रतिक्षिपति—नेति । तदेव विवृणोति—सर्वासामिति । अयमर्थः—पञ्चाग्निविद्यायां 'तद्य इत्थं विदुः' इति पञ्चाग्निविद्यानिष्ठाननूद्य 'ये चेमे ऽरण्ये' इति विद्यान्तरनिष्ठांश्चानूद्यार्चिरादिमार्गो विधीयते, तेन सर्वासामपि विद्यानामर्चिरादिमार्गः फलतया साधारण एव तेन ब्रह्मविद्यानिष्ठानां फलचिन्तनस्यावश्यम्भावित्वात् अर्चिरादिमार्गचिन्तनमपि तद्वदेव मार्गवदेव साधारणं स्यादिति । नहि फलानुसन्धानमन्तरेणोपायनिष्ठानामुपासनं सम्भवति । अत एव 'ब्रह्मलोकमभिसम्भवानि' इति चिन्तनमवश्यकर्तव्यत्वेन प्रतिपादितमिति पूर्वमप्युक्तमस्माभिः ॥ ३५५ ॥

पद०—पन्थास्स्यादित्यादि । फलं अर्चिरादिः पन्था इह सकलब्रह्मविद्यासु स्यात् मा वा—फलभूतोऽर्चिरादिमार्गो वेदान्ते प्रतिपन्नासु सर्वब्रह्मविद्यासु तन्निष्ठपुरुषगन्तव्यतया सम्बध्यते वा उत यत्रयत्राधीतस्तद्विद्यास्वेव सम्बध्यते वा इत्ययं संशयः । प्रारभ्येत्यादिपूर्वपक्षः । प्रारभ्याधीतियोगात् प्रकरणनियता तस्य चिन्ता—प्रकरणनियतपदं पुल्लिङ्गान्ततया प्रथमं विपरिणाम्यम् । अर्चिरादिः पन्था इत्यनुषङ्गः । प्रारभ्याधीतियोगात् अर्चिरादिः पन्थाः प्रकरणनियतः, तत एव हेतोस्तच्चिन्ता च प्रकरणनियता । अर्चिरादिमार्ग उपकोसलादिविद्याविशेषं प्रारभ्याधीतत्वात् तद्विद्याप्रकरण एव नियतस्स्यात् । अन्यथा अनारभ्याधीतस्स्यात्, तद्वदेव तच्चिन्ता च तत्प्रकरणस्था विद्यानिष्ठनियतैव स्यात् । इति चेन्न—इति शङ्कयते चेन्नैतद्युक्तम् । तद्य इत्थं विदुरिति वचसा अत्र अथ ये चेत्युक्त्या च अस्मिन्मार्गे सर्वासां साधारणे तदनुसरणतोऽस्य चिन्ता तद्वदेव—छान्दोग्ये पञ्चाग्निविद्यायां 'तद्य इत्थं विदुः' इति पञ्चाग्निविद्यानिष्ठपरामर्शकवचनेन तत्रैवोपरि 'येचेमेऽरण्ये श्रद्धा तप इत्युपासते' इति श्रद्धापूर्वकतपश्शब्दितब्रह्मोपासननिष्ठान् पञ्चाग्निविद्यानिष्ठभिन्नान् सर्वान् परामृशता च वाक्येनास्मिन्नर्चिरादिमार्गे सर्वविद्यासाधारणतयाङ्गीकरणोये सति तदनुसारेणार्चिरादिमार्गचिन्तनमपि तद्वदेव सर्वविद्यानिष्ठसाधारणं भवेदिति ॥ ३५५ ॥

हेयोपादेयमार्गद्वितयमुपदिशन् मुक्तिदाता मुमुक्षोः
योगी यः कश्चनैतत्सरणियुगलविन्मुह्यते नेत्यगायत् ।
तस्मादस्मादशाधीत्यविशदविशदीकर्तृवाक्यावमर्शात्
ब्रह्मप्राप्त्यर्हकृत्स्नप्रणिहितविहितं मार्गचिन्ताविधानम् ॥ ३५६ ॥

चिन्ता०—गतिचिन्तनादेरवश्यकर्तव्यत्वं भगवद्वाक्यपरामर्शेनाप्युपपादयति—हेयोपादेयेति । अयमर्थः—हेयमार्गो धूमादिमार्गः । उपादेयमार्गः पुनरर्चिरादिमार्गः । उभयमपि मार्गमुपदिशन् मुक्तिदाता भगवान् 'नैते सृती पार्थ जानन् योगी मुह्यति कश्चन' इति गतिचिन्तनस्यावश्यकर्तव्यत्वमगायत् । तस्मादस्मादशाध्ययनाविशदार्थविशदीकर्तुर्भगवतो वाक्यावमर्शात् ब्रह्मप्राप्त्युपयुक्तकृत्स्नार्थप्रणिहितविहितम् । प्रणिहितं प्रणिधानं भावे निष्ठा । अयमत्र निर्णयः—न केवलमत्र मार्गचिन्ताविधानमुच्यते अपि तु ब्रह्मप्राप्त्युपयुक्तं यद्यदत्र प्रामाणिकमुपलभ्यते तत्सर्वमपि चिन्तनीयं देहावसानसर्वकर्मक्षयप्रियाप्रियसंक्रान्त्यर्चिरादिमार्गविरजातरणादिकं सर्वमपि फलत्वादुपायदशायां चिन्तनीयमिति ॥ ३५६ ॥

पद०—हेयोपादेयेत्यादि । मुक्तिदाता—'अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि' 'मामेव ये प्रपद्यन्ते

मायामेतां तरन्ति ते' इति स्वकण्ठोक्त्या 'मोक्षमिच्छेज्जनार्दनात्' इत्यादिसर्वप्रमाणैश्च सर्वेषामप्याश्रितानां मोक्षं दातुमुद्युक्तः पार्थसारथिः। मुमुक्षोः—मुक्तिकामस्य ब्रह्मविदः। हेयोपादेयमार्गद्वितयमुपादिशन्—त्याज्यं धूमादिमार्गमुपादेयमर्चिरादिमार्गञ्च 'अग्निर्ज्योतिरहश्शुक्लष्षण्मासा उत्तरायणम्' इत्यादिना 'धूमो रात्रिस्तथा कृष्णष्षण्मासा दक्षिणायनम्' इत्यादिना च वाक्येन उपदिशन् सन्। यः कश्चन योगी एतत्सरणियुगलवित् न मुह्यत इत्यगायत्—'नैते सृती पार्थ जानन् योगी मुह्यति कश्चन' इति वचनेन यः कश्चिद्योगी एतन्मार्गद्वयमनुदिनं चिन्तयति स न मुह्यतीति गीतायामाह। तस्मात् अस्माद्दशाधीत्यविशदविशदीकर्तृवाक्यावमर्शात् मार्गचिन्ताविधानं ब्रह्मप्राप्त्यर्हक्रत्वप्राणिहितविहितम्—अत्र प्रणिहितशब्दो भावार्थनिष्ठान्तः। तस्मादस्माद्दशाध्ययनाविशदार्थविशदीकर्तुर्भगवतो यत् पूर्वोदाहृतं 'नैते सृती' इत्यादिवाक्यं तदर्थपरामर्शाद्धेतोरर्चिरादिमार्गस्यानुदिनं चिन्तनविधानं ब्रह्मप्राप्त्युपयुक्तकृत्स्नार्थचिन्तनार्थं विहितम्। न केवलमत्र मार्गचिन्तनविधानम्, अपि तु ब्रह्मप्राप्त्युपयुक्तं यद्यत् प्रामाणिकमुपलभ्यते तत्सर्वमपि चिन्तनीयमिति, तथा च देहावसाने सर्वकर्मक्षयः क्षीणयोः पुण्यपापयोः प्रियाप्रिययोस्संक्रान्तिः अर्चिरादिमार्गः, विरजातरणादिश्चेत्यादिकं सर्वमपि फलत्वादुपायदशायां चिन्तनीयमिति भावः॥ ३५६॥

हानादेरर्चिरादेरपि किमभिहितं चिन्तनं सूत्रकारैः
विद्याङ्गत्वादिसिद्ध्यै यदि भवतु तदानन्तरे पाद एतत्।
मैवं विद्याङ्गतायामपि भजनमिवेदञ्च धीत्वाविशेषात्
कर्मादिभ्यो विभक्तं कथयितुमिह तत्सूत्रणं स्थानपाति॥ ३५७॥

इत्यनियमाधिकरणम्॥ ९५॥

चिन्ता०—अत्र सूत्रकारैर्हानोपायनाभिधानस्य पादासङ्गतिमाशङ्क्य परिहरति—हानादेरिति। अयमत्र पूर्वपक्षिणो भावः—हानोपायनादिचिन्तनं विद्याङ्गमेव, अङ्गं च निरूपणीयमुत्तरत्र विद्याङ्गपादे, अयञ्च पादो विद्यास्वरूपोपदेशपरः, तस्मादत्र कथं सङ्गतिरिति। हानादेरर्चिरादेरपि सूत्रकारैश्चिन्तनं किमर्थमिहाभिहितम्? विद्याङ्गत्वसिद्ध्यै चेत् तदा अनन्तरे विद्याङ्गपादे भवतु नात्रेति। इमामाशङ्कां प्रतिक्षिपति—मैवमिति। अत्रैव गतिचिन्तनादिसूत्रस्य स्थानपातित्वमस्त्येव। कुतइत्यत्राह—विद्याङ्गतायामिति। गतिचिन्तनादेर्विद्याङ्गत्वे सत्यपि भजनमिव साधनभूतमुपासनमिव उपासनाङ्गभूतमिदञ्च गतिचिन्तनादिकमपि कर्मादिभ्यो विभक्तं इति कथयितुमिह तत्सूत्रणं स्थानपातीत्यन्वयः। अयमत्र भावः—विद्याङ्गानि कानिचित् ज्ञानरूपाणि, कानिचित् क्रियारूपाणि, ज्ञानरूपाणां गतिचिन्तनादीनां प्रधानभूत-

विद्यातुल्यत्वप्रदर्शनार्थमिह तच्चिन्तनम्, इतरेषां कर्मरूपाणां प्राचुर्येण विद्याङ्गपादे चिन्तनमिति विभागः। तेन गतिचिन्तनादेस्स्थान एवाभिधानमिति नास्थानपातित्वशङ्कावकाशः ॥ ३५७ ॥

इत्यनियमाधिकरणम् ॥ ९५ ॥

पद०—हानादेरित्यादि । सूत्रकारैर्हानादेरर्चिरादेरपि चिन्तनं किमभिहितम्—सूत्रकारैर्देहावसानसम्भविकर्मप्रहाणतदुपायनयोरर्चिरादिमार्गस्य च चिन्तनं कार्यमित्यस्मिन्पादे कुतोऽभिहितम् । विद्याङ्गत्वादिसिद्ध्यै यदि तदा अनन्तरे पादे एतद्भवतु—हानादिचिन्तनस्य विद्याङ्गत्वादिसिद्ध्यर्थमत्राभिधानमिति चेत् तर्हि विद्याङ्गविचारार्थे एतदध्यायचतुर्थपादे एतदभिधानमस्तु । नत्वस्मिन् विद्यास्वरूपविशोधके पादे इति भावः । तथाचाङ्गपादे कथनीयस्यात्र कथनमसङ्गतमिति । मैवम्—एवं न शङ्क्यम् । विद्याङ्गतायामपि भजनमिव इदञ्च धीत्वाविशेषात् कर्मादिभ्यो विभक्तं कथयितुमिह तत्सूत्रणं स्थानपाति—हानादिचिन्तनस्य विद्याङ्गत्वेऽपि उपासनमिव हानादिचिन्तनमपीदं ज्ञानरूपत्वेन विद्यातोऽविशेषात् कर्मादिभ्यो विशेषाच्च कर्मादिभ्यो विलक्षणमिति दर्शयितुमस्मिन्पादे हानादिचिन्तनसूत्रप्रणयनम्, अत इदमुचितस्थान एव विन्यस्तमिति नासाङ्गत्यशङ्कावकाश इत्यर्थः ॥ ३५७ ॥

इत्यनियमाधिकरणम् ॥ ९५ ॥

---

## अक्षरध्यधिकरणम् ॥ ९६ ॥

सूत्रम्—अक्षरधियां त्ववरोधस्सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम् ॥ ३८७ ॥

यस्यामस्थूलतादि प्रपठितमुचितं चिन्तनं तस्य तस्यां
नान्यस्यां मानहानेर्न यदि नियमनं कस्य कुत्रेति चेन्न ।
हेतुत्वोन्नेयदोषव्यपनयनमिह ब्रह्मविद्यासु सर्वा-
स्वानन्दाधिक्रियोक्तक्रमनियमितमित्यस्य सार्वत्रिकत्वात् ॥ ३५८ ॥

चिन्ता०—पूर्वमर्चिरादिगतेस्सर्वविद्यासाधारण्येन श्रुतत्वात् तच्चिन्तनस्यापि न्यायप्राप्तं सर्वविद्यासाधारण्यं प्रतिपादितम्, अधुना पुनरक्षरधियां सर्वविद्यासाधारण्यं न वेति चिन्त्यत इति सङ्गतिः । पूर्वाधिकरणे प्रकरणं पूर्वपक्षहेतुः, अत्रापि तथैति वा सङ्गतिः । तदर्थविचारस्तु—बृहदारण्यके गार्गिब्राह्मणे 'एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वम्' इत्याद्यस्थूलत्वादिकं तत्रैवोपसंहार्यमुत सर्वासु विद्यास्विति । तदर्थं विचार्यते—किं निषेधरूपाणामस्थूलत्वादीनामेव ब्रह्मासाधारणाकार-

तया ब्रह्मस्वरूपनिरूपकत्वमुत केवलज्ञानानन्दादीनामिति । किमस्थूलत्वादिकं विना शङ्कितकृत्स्नदोषव्या-वृत्तिप्रतीतिरस्ति नेति । अत्र पूर्वपक्षी मन्यते—ननु गार्गीब्राह्मणादिषु क्वचिदेवाक्षरत्वादिकमाम्नातम्, यस्यां तु विद्यायां यावद्गुणजातमाम्नातं तावदेव तत्रोपसंहार्यं तत्प्रकरणपठितत्वात्; अन्यथा सर्वं सर्वत्रो-पसंहार्यमिति सद्विद्यादीनां गुणसङ्करस्स्यात्, ब्रह्मस्वरूपप्रतिपत्तिस्त्वानन्दादिभिरेवेति प्रागेवोक्तम्, तेन किमनेनाजागलस्तनायमानेन ब्रह्मस्वरूपप्रतिपत्त्यावक्षरत्वादिना गुणेनेति । तदिदमनुवदति—यस्यामिति । अन्यत्रानुपसंहार्यत्वमाह—नान्यस्यामिति । तत्र हेतुमाह—मानहानेरिति । सर्वस्यापि गुणस्य सर्वत्रोपसंहारस्स्यादित्यर्थः । एवं पूर्वपक्षमनूद्य दूषयति—नेति । पूर्वपक्षप्रतिक्षेपप्रकारं विशदमेव दर्शयति—हेतुत्वेति । अयमत्राभिप्रायः—न केवलं ब्रह्मगुणमात्रमत्रोच्यते, अपि तु कारणत्वाशङ्कितदोषपरिहारेण स्वरूपप्रतिपत्तिहेतुर्गुणविशेषः । स पुनरमलत्वम्, तेन सहि-तास्सत्यत्वादयोऽपि । तथाहि सत्यत्वं सविकारमचिद्वस्तु व्यावर्तयति । ज्ञानत्वं विलुप्तबुद्धिकं तत्संसृष्टं जीवम् । अनन्तत्वं पूर्वावधिमन्तं मुक्तम् । आनन्दत्वमपि परवादिपरिकल्पितं निरानन्द-मीश्वरम् । तेनामलत्वेन नित्यो व्यावर्त्यते । यद्यप्यनन्तपदेनैवाणुस्वरूपो नित्योऽपि व्यावर्त्यते तथापि धर्मभूतज्ञानतो देशकालाभ्यामानन्त्यस्य तस्मिन् विद्यमानत्वात् कथञ्चिदानन्त्यं वक्तुं शक्यते । अमलत्वं तु सर्वेषां व्यावर्तकमेव । नित्योऽपि परतन्त्रचेतनत्वात् संसारे स्वरूपयोग्यतावान् केवलं भगवदपचाररूपसहकारियोग्यताभावात् नित्यमेवासंसारी वर्तते । ईश्वरस्तु स्वतन्त्रचेतनत्वात् संसारे स्वरूपयोग्यतारहितः । तेनेदमेवामलत्वमीश्वरस्यासाधारणमेव । किञ्चेतरसंसरणनिवर्तकत्व-मीश्वरस्यासाधारणम्, तच्चामलत्वमेव । तेन स्वयं मलरहितत्वात् इतरमलप्रतिभटत्वाच्च ईश्वर एवामल इत्युच्यते । तर्ह्यमलत्वमेवास्तु किं सत्यत्वादिभिरिति चोद्यमवशिष्यते तच्चात्र नास्तीत्याह—हेतुत्वेति । द्वेधा हि लक्षणमभिधीयते एकेनैव विशेषणेन कृत्स्नालक्ष्यव्यावृत्तिरित्येकः पक्षः, अपरस्तु नानाविशेष-णैर्बुद्ध्यवतरणक्रमेणालक्ष्यव्यावृत्त्या लक्ष्यस्वरूपनिरूपणं क्रियते तदिदमिति भाष्यकाराभिप्रायः । अयमत्र शब्दार्थः—कारणत्वेन वस्त्वन्तरनिष्ठदोषा आशङ्क्यन्ते । तेषां व्यपनयनं सत्यज्ञानानन्तानन्दामलपदैः क्रियते । तेन क्रमाद्दोषव्यपायप्रतिपत्तिः । प्रतिपत्तिसौकर्यार्थमनुक्रमादर्थविशेषप्रतिपत्तौ दृष्टान्तमाह—आनन्देति । आनन्दमयाधिकरणेऽन्नमयप्राणमयमनोमयविज्ञानमयानन्दमया उत्तरोत्तरं क्रमादेवाधिकत्वेन प्रतिपाद्यन्ते । एवमत्राप्यनुक्रमेण सर्वाधिकत्वेन भगवान् प्रतिपाद्यते । तेन प्रथमत एवामलत्वेन भगवतस्सर्वाधिकत्व-प्रतिपत्तौ किमेभिस्सत्यत्वादिभिर्विशेषणैरिति चोद्यं परिहृतमेवेति । अस्य सार्वत्रिकत्वात्—एतस्यानु-क्रमबोधनन्यायस्य सर्वलोकप्रसिद्धत्वादित्यर्थः ॥ ३५८ ॥

पद०—यस्यामित्यादि । यस्यामस्थूलादि प्रपठितं तस्य चिन्तनं तस्यामुचितम्—

गार्गीब्राह्मणादिश्रुतौ यस्यां विद्यायां 'अस्थूलमनण्वह्रस्वम्' इत्यादिना अस्थूलत्वादिगुणजातं प्रपठितं तस्य गुणजातस्य तस्यां विद्यायां चिन्तनमुचितम्। नान्यस्याम्—तच्चिन्तनमुचितमिति पदद्वयस्यानुषङ्गः। अन्यस्यां विद्यायां तच्चिन्तनं नोचितम्। कुत इति चेत् मानहानेः—प्रमाणाभावात्। यद्विद्याप्रकरणे यद्गुणजातमाम्नातं तस्यामेव तच्चिन्तनीयमित्यत्र तत्प्रकरणं प्रमाणम्, अन्यस्यां तदनुसन्धाने किं प्रमाणमस्ति। न यदि कस्य कुत्र नियमनम्—एवं प्रकरणादिना व्यवस्थानङ्गीकारे सर्वस्यापि गुणजातस्य सर्वविद्यास्वनुसन्धेयत्वापत्तौ कस्य गुणस्य कुत्र व्यवस्था सिध्येदित्यर्थः। इति चेन्न—इत्याशङ्क्यते चेत्तन्न युक्तम्। इह—ब्रह्मणि। हेतुत्वोन्नेयदोषव्यपनयनम्—हेतुत्वेन निमित्तोपादानत्वरूपेण उन्नेयः आरोप्यमाणा ये स्थूलत्वाणुत्वादयो दोषास्तेषां निषेधनम्'। सर्वासु ब्रह्मविद्यासु आनन्दाधिक्रियोक्तक्रमनियमितमिति—सर्वासु ब्रह्मविद्यासु 'आनन्दादयः प्रधानस्य' इत्यधिकरणोक्तेन क्रमेणेतरव्यावृत्तब्रह्मस्वरूपावगतिहेतुस्वरूपनियामकेन नियमितं व्यवस्थापितमिति हेतोः। अस्य—अस्थूलत्वादिगुणजातस्य। सार्वत्रिकत्वात्—सर्वविद्यानुवृत्तत्वात्। इति चेन्नेत्यन्वयः। अत्र चिन्तामणौ पङ्क्तिर्दृश्यते 'अयमत्र शब्दार्थः—कारणत्वेन वस्त्वन्तरनिष्ठदोषा आशङ्क्यन्ते। तेषां व्यपनयनं सत्यज्ञानानन्तानन्दामलपदैः क्रियते। तेन क्रमाद्दोषव्यपायप्रतिपत्तिः। प्रतिपत्तिसौकर्यार्थमनुक्रमादर्थविशेषप्रतिपत्तौ दृष्टान्तमाह—आनन्देति। आनन्दमयाधिकरणे अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमया उत्तरोत्तरं क्रमादेवाधिकत्वेन प्रतिपाद्यन्ते। एवमत्राप्यनुक्रमेण सर्वाधिकत्वेन भगवान् प्रतिपाद्यते। तेन प्रथमत एवामलत्वेन भगवतस्सर्वाधिकत्वप्रतिपत्तौ किमेभिस्सत्यत्वादिभिर्विशेषणैरिति चोद्यं परिहृतमेवेति। अस्य सार्वत्रिकत्वात्—एतस्यानुक्रमबोधनन्यायस्य सर्वलोकप्रसिद्धत्वादित्यर्थः' इति। अस्मिन्व्याख्याने विशेषाः पण्डितैश्चिन्तनीयाः। श्लोकाननुरूपत्वादिभिः प्रक्षिप्त एवायं ग्रन्थ इति मन्ये ॥ ३५८ ॥

सत्यत्वाद्यैस्स्वरूपावगतिरभिहिता सर्वविद्यानुवृत्त्या
भूयस्तत्तुल्यधर्मेष्वधिकरणमिदं स्याद् वृथैवेति चेन्न।
कैश्चिज्ज्ञातस्वरूपे क्वचिदितरगतं किञ्चिदन्यन्निषेध्यं
व्यावृत्त्या न स्वरूपावगतिरत इति प्रेक्षणस्यापि रोधात् ॥ ३५९ ॥

चिन्ता०—अत्र कश्चिच्चोदयति—सत्यत्वाद्यैर्गुणैस्स्वरूपावगतिरभिहिता सर्वविद्यानुवृत्ततया। तेन भूयोऽपि तत्तुल्यधर्मेष्वक्षरत्वादिष्विदमधिकरणं वृथैव स्यादिति। तदिदमनुवदति—सत्यत्वाद्यैरिति। अनूदितमर्थं निराकरोति—नेति। निराकरणप्रकारमेव विवृणोति—कैश्चिदिति। 'ज्ञातरूपे क्वचित् किञ्चित् ताद्दगन्यन्निषिध्यते' इति न्यायेन वस्तुस्वरूपप्रतिपत्तौ विशेषणान्तरैस्सिद्धायां

पश्चादेव व्यावृत्तिप्रतिपत्तिः, तथा च वस्तुस्वरूपप्रतिपत्तौ व्यावृत्तिप्रतिपत्तिर्नोपकरोतीत्यनध्यक्षितन्यायः कश्चिन्मन्यते तत्प्रेक्षणस्यात्रोपरोधार्थमिदमधिकरणं सफलमेवेत्यर्थः । अयमत्र भावः—लोके कर्मव्यतिरिक्तत्वे सति जातिमात्राश्रयो गुण इत्यादौ व्यावृत्तिप्रतिपत्तिरपि गुणादिस्वरूपविशेषप्रतिपत्तावुपयुज्यते । तद्वदत्रापि ब्रह्मस्वरूपप्रतिपत्तौ व्यावृत्तेः प्रतिपत्तिरुपयुज्यते । तर्हि 'लब्धरूपे क्वचित्किञ्चित्तादृगन्यन्निषिध्यते' इत्यस्य कोऽर्थः ? केनापि प्रकारेण सिद्धे वस्तुनि इतरव्यावृत्तिरूपं प्रकारान्तरमपि प्रतीयत इति न कश्चिद्दोषः । अयमर्थः—विधिनिषेधयोः पूर्वं विधिरूपेण केनापि प्रकारेण प्रतिपन्ने वस्तुनि पश्चात् निषेधप्रवृत्तिः न पुनरत्यन्ताप्रतिपन्ने इति ॥ ३५९ ॥

पद०—सत्यत्वाद्यैरित्यादि । सर्वविद्यानुवृत्त्या सत्यत्वाद्यैस्स्वरूपावगतिरभिहिता—सर्वविद्यानुवृत्तत्वेन सत्यत्वज्ञानत्वानन्तत्वानन्दत्वामलत्वैर्ब्रह्मस्वरूपावगतिः 'आनन्दादयः' इत्यधिकरणे अभिहिता । भूयस्तत्तुल्यधर्मेषु इदमधिकरणं वृथैव स्यात्—तेन पुनरपि तत्तुल्यधर्मेषु अस्थूलत्वादिषु प्रवृत्तमिदमधिकरणं वृथैव स्यात् । इति चेन्न—इति शङ्क्यते चेत् तन्न सम्भवति । कैश्चित् ज्ञातस्वरूपे क्वाचित् इतरगतमन्यत् किञ्चिन्निषेध्यम्—कैश्चिद्विशेषणैर्ज्ञातस्वरूपे हि क्वचिद्धर्मिणि वस्त्वन्तरगतमन्यत् किञ्चिन्निषेध्यम् । अतो व्यावृत्त्या न स्वरूपावगतिरिति प्रेक्षणस्य रोधादपि—तस्मादितरव्यावृत्त्या स्वरूपावगतिर्नास्तीति कस्यचिन्मन्दबुद्धेरुत्प्रेक्षणस्य निरोधनेन साफल्याच्च । इति चेन्नेत्यन्वयः । अत्र चिन्तामणिः 'अयमत्र भावः—लोके कर्मव्यतिरिक्तत्वे सति जातिमात्राश्रयो गुण इत्यादौ व्यावृत्तिप्रतिपत्तिरपि गुणादिस्वरूपप्रतिपत्तावुपयुज्यते । तद्वदत्रापि ब्रह्मस्वरूपप्रतिपत्तौ व्यावृत्तेः प्रतिपत्तिरुपयुज्यते । तर्हि 'लब्धरूपे क्वचित् किञ्चित् तादृगन्यन्निषिध्यते' इत्यस्य कोऽर्थः ? केनापि प्रकारेण सिद्धे वस्तुनीतरव्यावृत्तिरूपं प्रकारान्तरमपि प्रतीयत इति न कश्चिद्दोषः । अयमर्थः—विधिनिषेधयोः पूर्वं विधिरूपेण केनापि प्रकारेण प्रतिपन्ने वस्तुनि पश्चान्निषेधप्रवृत्तिः, नपुनरत्यन्ताप्रतिपन्ने' इति । तथाचेतरव्यावृत्तस्वरूपावगतौ अस्थूलत्वादिकमप्युपयुज्यत इति न 'लब्धरूपे' इत्यादिन्यायावलम्बनेन निषेधरूपाणामस्थूलत्वादीनां स्वरूपावगतिहेतुत्वाभाव इति भावः ॥ ३५९ ॥

व्यावर्त्यानन्त्यतस्तद्व्युदसनमपि हि स्यादनन्तं ततस्त-
च्चिन्ता किञ्चिज्ज्ञसाध्या जलधितरणवन्नोपदिश्येत मैवम् ।
तत्तत्सामान्यधर्मानुगतिकवलिताशेषभेदोपदेशे
तादृशिन्नन्तोपपत्तेरनघमिति वा गृह्यतां संगृहीतिः ॥ ३६० ॥

इत्यक्षरध्यधिकरणम् ॥ ९६ ॥

चिन्ता०—अत्र कश्चिदाह—व्यावर्त्यानामनन्तत्वात् व्यावृत्तिरप्यनन्ता । तस्याः पुनरानन्त्ये तद्व्यावर्तकमप्यनन्तमेव वाच्यम् । तथा च कर्तुमेव न शक्यते । न ह्यशक्यं सागरतरणं कैश्चिदुपदिश्यते । अशक्यविधाने वाक्यस्याननुष्ठानलक्षणाप्रामाण्यप्रसङ्गादिति । तदिदमनुवदति—व्यावर्त्येति । अयमत्र शब्दान्वयः—व्यावर्त्यानन्त्यात् व्यावर्तनमप्यनन्तं स्यात् तेन तच्चिन्ता व्यावृत्तिचिन्ता किञ्चिज्ज्ञसाध्यतया नोपदिश्येत । तत्राशक्योपदेशे दृष्टान्तमाह—जलधितरणवदिति । तदिदं प्रतिक्षिपति—मैवमिति । प्रतिक्षेपप्रकारमेव दर्शयति—तत्तदिति । द्रव्यत्वगुणत्वकर्मत्वादिसामान्यधर्मोपादाने-नानन्तानामपि व्यक्तीनां यथा लोके निरासः एवमत्रापि प्रतिक्षेप्याणां धर्माणां सामान्यधर्मोपादानेन निरासस्स्यात् । अथवा एकेनैव विशेषणेन सर्वधर्मव्यावृत्तिस्सेत्स्यतीत्याह—अनवममिति । 'अनवमं ब्रह्म' इत्येकेन विशेषणेनापरेषां प्रतिक्षेप्याणामवमानां संगृहीतिर्गृह्यतां संग्रहेणोपादानं स्वीक्रियतामित्यर्थः ॥ ३६० ॥

इत्यक्षरध्यधिकरणम् ॥ ९६ ॥

पद०—व्यावर्त्यानन्त्यत इत्यादि । व्यावर्त्यानन्त्यतस्तद्व्युदसनमपि अनन्तं स्यात् हि—व्यावर्त्यानामनन्तत्वात् व्यावृत्तिरप्यनन्ता स्याद्धि । ततस्तच्चिन्ता जलधितरणवत् किञ्चिज्ज्ञसाध्या नोपदिश्येत—तस्मात् कारणात् तादृशव्यावृत्तिचिन्ता जलधितरणवत् किञ्चिज्ज्ञसाध्यतया नोपदिश्येत । मैवम्—एवं मा शङ्किष्ठाः । तत्तत्सामान्यधर्मानुगतिकवलिताशेषभेदोपदेशे तादृक्चिन्तोपपत्तेः—द्रव्यत्वगुणत्वकर्मत्वादिसामान्यधर्मोपादानेनानन्तानामपि व्यक्तीनां यथा लोके निरासः, एवमत्रापि तत्तत्सामान्यधर्माणामनुगत्या यावद्व्यक्तिव्याप्त्या कवलितास्संगृहीता येऽशेषभेदास्तेषामुपदेशे कृते सति द्रव्यत्वाश्रयव्यक्तीनां गुणत्वाश्रयव्यक्तीनां कर्मत्वाश्रयव्यक्तीनाञ्चानन्त्येऽपि तावद्व्यक्तिव्यावृत्तिसौकर्याय द्रव्यभिन्नं गुणभिन्नं कर्मभिन्नं सामान्यमित्यनन्तव्यक्तिभेदानां द्रव्यत्वादिधर्मत्रयानुगत्या ग्रहणवत् सामान्यधर्मानुगत्या निखिलभेदानां कतिपयरूपत्वेन चिन्तनोपपत्तेः । अनवममिति वा संगृहीतिर्गृह्यताम्—अवमानि दोषाश्रितानि यावन्ति वस्तूनि तद्भिन्नमित्येकविशेषणरूपेण वा संगृहीतिस्सर्वभेदसंग्रहः परिगृह्यताम् । एतदर्थमेव हेयप्रतिभटमित्युच्यत इति भावः ॥ ३६० ॥

इत्यक्षरध्यधिकरणम् ॥ ९६ ॥

---

## अन्तरत्वाधिकरणम् ॥ १७ ॥

सूत्रम्—अन्तरा भूतग्रामवत्स्वात्मनोऽन्यथाभेदानुपपत्तिरिति चेन्नोपदेशान्तरवत् ॥ ३८९ ॥

सूत्रस्वारस्यलाभात् प्रथममसुभृतः पूर्वपक्षे निवेशः
सिद्धान्ते ब्रह्मणश्चेत्यधिकरणगतिस्तोकशङ्कापनुत्त्यै ।
साक्षाद्ब्रह्मेति वाक्यद्वयमवमृशतामन्यशङ्कैव न स्या-
दित्यालोच्याथ भाष्ये परविषयतया पूर्वपक्षोऽप्युपात्तः ॥ ३६१ ॥

चिन्ता०—हेयप्रत्यनीकत्वं ब्रह्मणोऽसाधारणं चेत् अशनायाद्यतीतत्वविशिष्टं ब्रह्म स्यात्, प्राणितृत्वादिविशिष्टस्तु जीवस्स्यादिति शङ्कया सङ्गतिः । तदर्थविचारस्तु—'यत् साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरस्तं मे व्याचक्ष्व' 'यदेव साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरस्तं मे व्याचक्ष्व' इति प्रश्नः उषस्तकहोलयोः । प्रतिवचनमपि 'यः प्राणेन प्राणिति स त आत्मा सर्वान्तरः' इत्येकत्र 'योऽशनायापिपासे शोकं मोहम्' इत्याद्यन्यत्र । किमुभयत्र विद्यैक्यमुत विद्याभेद इति । किं पूर्वत्र जीव उपास्यः परत्र परः, उतोभयत्र पर एवेति । किं तत्र 'यः प्राणेन प्राणिति स त आत्मा सर्वान्तरः' इत्यादिप्रतिवचनपर्यालोचनया जीवस्योपास्यत्वं प्रतीयते नेति । किं सर्वान्तरत्वप्राणनकर्तृत्वे देहाद्यपेक्षया जाग्रदवस्थापेक्षया च औपाधिके, उत निरुपाधिके इति । किं 'न दृष्टेर्द्रष्टारं पश्येः, न मतेर्मन्तारं मन्वीथाः' इति पुनः—प्रश्नप्रतिवचनपर्यालोचनया 'य आत्मनोऽन्तरः' 'को ह्येवान्यात्' इति प्रतिपन्ने ब्रह्मणो निरुपाधिकसर्वान्तरत्वप्राणनकर्तृत्वे प्रतीयेते नेति । किं 'न दृष्टेर्द्रष्टारम्' इति दृष्टेर्ज्ञानहेतुना द्रष्टारं ब्रह्म न मन्वीथा इति वाक्यार्थः, आहोस्वित् दृष्टेरनुभूतेर्द्रष्टारं न मन्वीथा इति वा । अत्र भाष्ये द्वौ पक्षावभिहितौ । एकत्र पक्षे क्वचिज्जीवपरत्वमाशङ्क्य सर्वत्र परमात्मपरत्वनिर्णयः । अन्यत्र उभयत्र परमात्मपरत्वे सत्यपि पूर्वत्र गुणभेदाङ्गीकारेण रूपान्तरविशिष्टब्रह्मपरत्वम्, उत्तरत्र परमात्मासाधारणाशनायाद्यतीतत्वादिगुणानुबन्धाद्रूपान्तरविशिष्टपरमात्मपरत्वमित्याशङ्क्योभयत्रापि रूपाभेदादेकरूपपरमात्मपरत्वमिति निर्णीयत इति । अत्र द्वयोरपि पक्षपरिकल्पनयोः कारणं वैषम्यञ्च दर्शयति—सूत्रेति । पूर्वस्यां कल्पनायां सूत्रस्वारस्यलाभः कारणं 'भूतग्रामवत्' इति जीवस्य दर्शनात् । उत्तरस्यां तु श्रुतिस्वारस्यलाभो हेतुः द्वयोरपि प्रश्नयोः 'साक्षादपरोक्षाद्ब्रह्म' इति ब्रह्मस्वरूपप्रश्नदर्शनात् । अयमत्र शब्दान्वयः—सूत्रस्वारस्यलाभात् प्रथममसुभृतः जीवस्य पूर्वपक्षे निवेशः । सिद्धान्ते तु ब्रह्मणो निवेशः । अयं तोकशङ्कापनुत्त्यै—बालिशशङ्कापनोदनायेत्यर्थः । अथ तोकशङ्कापनुत्त्यै उत्तरामपि कल्पनामनुवदति—साक्षादिति । 'यत्साक्षाद-

परोक्षाद्ब्रह्म' इति ब्रह्मशब्दानुविद्धं प्रश्नद्वयवाक्यं परामृशतां विदुषां अन्यशङ्कैव न स्यादिति विचार्य पूर्वत्रापरितोषात् अथानन्तरं भाष्ये परमात्मविषयतया पूर्वपक्षोऽपि परिकल्पित इति ॥ ३६१ ॥

पद०—सूत्रस्वारस्येत्यादि । सूत्रस्वारस्यलाभात् प्रथमं पूर्वपक्षे असुभृतो निवेशः—कृत इति शेषः । 'भूतग्रामवरस्वात्मनः' इति जीववाचकपदस्य सूत्रे दर्शनात् तत्परत्वेन पूर्वपक्षे सूत्रस्वारस्यं लभ्यतेति मन्यमानैर्भाष्यकारैः प्रथमयोजनायां पूर्वपक्षे जीवस्य निवेशः कृतः । जीवपरतया पूर्वपक्षोपन्यासः कृत इत्यर्थः । सिद्धान्ते च ब्रह्मणो निवेशः—तद्योजनायामेव सिद्धान्ते च ब्रह्मणो निवेशः । ब्रह्मपरतया सिद्धान्तः कृत इति भावः । इत्यधिकरणगतिः- एवमधिकरणकल्पना । तावकशङ्कापनुत्त्यै—बालशङ्कापनुत्त्यै भवति । पूर्वपक्षस्य दुर्बलत्वादिति भावः । साक्षाद्ब्रह्मेति वाक्यद्वयमवमृशतामन्यशङ्कैव न स्यादित्यालोच्याथ भाष्ये परविषयतयापि पूर्वपक्ष उपात्तः-'यत्साक्षादपरोक्षाद्ब्रह्म' इत्युषस्तप्रश्नः 'यदेव साक्षादपरोक्षाद्ब्रह्म' इति कहोलप्रश्नः, एवं प्रश्नद्वयगतं परमात्मासाधारणसविशेषणब्रह्मपदघटितं वाक्यद्वयं पर्यालोचयतां विदुषां वाक्यस्य जीवपरत्वशङ्कैव न स्यादित्यालोच्यातृप्तेर्भाष्यकारैः पश्चाद्भाष्ये परमात्मविषयकमेव प्रश्नद्वयमङ्गीकृत्य रूपभेदेन विद्याभेदपूर्वपक्ष उपन्यस्त इत्यर्थः ॥ ३६१ ॥

यत्साक्षादित्यमुष्मिञ्छ्रुतिशिरसि परं ब्रह्म वेद्यं यदेवे-
त्येतस्मिंश्चास्त्वथापि प्रतिवचनभिदा तत्र रूपं भिनत्ति ।
विद्याभित् प्रष्टृभेदोऽप्ययमिति यदि नानूद्य भूयोऽनुयोगात्
पश्चादुक्तश्च दोषात्यय इह न भिदां सौति साधारणत्वात् ॥ ३६२ ॥

चिन्ता०—अत्र स्वाभिमतामुत्तरपक्षकल्पनां शिष्याणां सुखप्रतिपत्त्यर्थं पूर्वपक्षसिद्धान्तविभागेन विशदं प्रकाशयति—यत्साक्षादिति । अयमत्र शब्दान्वयः—'यत्साक्षात्' इत्यमुष्मिन् वाक्ये 'यदेव साक्षात्' इत्येतस्मिंश्च वाक्ये परं ब्रह्मैव वेद्यमस्तु अथापि प्रतिवचनभेदो रूपं भिनत्त्येव । रूपभेदात् विद्याभेदश्च सिध्यति । न केवलं रूपभेदात्, प्रष्टृभेदादपि विद्याभेदस्सिध्यतीत्याह—विद्याभिदिति । प्रष्टृभेदोऽपि विद्यां भिनत्तीत्यर्थः । क्वचिदुषस्तः प्रष्टा, अपरत्र कहोलः । यदीति पूर्वपक्षानुवादं द्योतयति । तदिदं प्रतिक्षिपति—नेति । तत्र हेतुमाह—अनूद्येति । 'यदेव साक्षादपरोक्षाद्ब्रह्म' इति सावधारणमनूद्योषस्तेन श्रुतस्य पूर्वस्यैव ब्रह्मणः पुनरनुयोगादित्यर्थः । तर्हि पश्चादुक्तमशनायाद्यतीतत्वं विद्यां भिनत्तीत्याशङ्क्य तदपि न भिनत्तीत्याह—पश्चादुक्त इति । अयमर्थः—पश्चादुक्तं ह्यशनाद्यतीतत्वं पूर्वाधिकरणोक्तामलत्वान्तर्गतमेव । तच्चामलत्वं सर्वविद्यासाधारणत्वात् न विद्यां भिनत्तीति ।

अथवा द्वयोरपि प्रष्ट्रोस्साधारणत्वात् सब्रह्मचर्येण सन्निहितयोस्साधारणत्वादित्यर्थः । एवं विद्यैक्ये सिद्धे विशदप्रतिपत्त्यर्थः प्रष्टृभेदो न विद्यां भिनत्तीति भावः ॥ ३६२ ॥

पद०—यत्साक्षादित्यादि । यत्साक्षादित्यमुष्मिन् यदेवेत्येतस्मिंश्च श्रुतिशिरसि परं ब्रह्म वेद्यमस्तु अथापि प्रतिवचनभिदा तत्र रूपं भिनत्ति—'यत्साक्षात्' इत्यस्मिन्वाक्ये 'यदेव साक्षात्' इत्यस्मिंश्च वाक्ये परं ब्रह्मैव वेद्यमस्तु अथापि प्रतिवचनभेदो विद्याद्वये रूपं भिनत्त्येव, रूपभेदात् विद्याभेदश्च सिद्धः । अयं प्रष्टृभेदोऽपि विद्याभित्—पूर्वत्रोपस्तः प्रष्टा अपरत्र कहोलः प्रष्टा, अतः प्रष्टृभेदोऽपि विद्याभेदकः । इति यदि—एवं शङ्क्यते यदि । न—नैतद्युक्तम् । अनूद्य भूयोऽनुयोगात्—'यदेव साक्षादपरोक्षाद्ब्रह्म' इत्युपस्तपृष्टमेव सावधारणमनूद्य पुनरपि कहोलेनानुयोगात् । नेति पूर्वेणान्वयः । पश्चादुक्तो दोषात्ययश्च साधारणत्वात् इह न भिदां सौति—पश्चादुक्तं ह्यशनायाद्यतीतत्वं पूर्वाधिकरणोक्तामलत्वान्तर्गतमेव तच्चामलत्वं सर्वविद्यासाधारणत्वान्न विद्याभेदकमित्यर्थः । अथवा द्वयोरपि प्रष्ट्रोस्साधारणत्वात् सब्रह्मचर्येण सन्निहितयोस्साधारणत्वादित्युक्तं भवति । एवं विद्यैक्ये सिद्धे विशदप्रतीत्यर्थः प्रष्टृभेदो न विद्यां भिनत्तीति भावः ॥ ३६२ ॥

सद्विद्यायां यथा हि प्रतिवचनभिदा प्रश्नभेदानुसारात्
विद्यैकत्वे विशेष्यं प्रकटयति परां देवतामेवमत्र ।
तेनोपस्तः कहोलश्श्रुतमपि स च तत्संश्रुतं सङ्कलय्य
ध्यायेतां ब्रह्म सर्वान्तरमिति फलवत्तत्र सब्रह्मचर्यम् ॥ ३६३ ॥

इत्यन्तरत्वाधिकरणम् ॥ ९७ ॥

चिन्ता०—ननु भाष्ये सद्विद्यादृष्टान्तेन साधारण्यमुपपादितम्, तत्र प्रष्ट्रैक्यमङ्गीकुर्महे तेन सर्वेषामप्युत्तराणां साधारण्यमस्तु नाम इह तु प्रष्टृभेदात् कथमुत्तरसाधारण्यमित्यजानानस्य कस्यचिच्चोदकस्योक्तमेवार्थं विशदं प्रकाशयति—सद्विद्यायामिति । अयमत्र भावः—अस्तु नाम सद्विद्यायां प्रष्ट्रैक्यम्, अस्तु चात्र प्रष्टृभेदः, अथाप्युत्तरसाधारण्यमङ्गीकर्तव्यमेव, लोके ह्येकमेवाचार्यमुद्दिश्य द्वयोः शिष्ययोरागतयोरेकार्थं पृष्टवतोरुपदेशवेलायामेकैकाभिमुख्येनोक्तमर्थद्वयं द्वयोरपि प्रतिपन्नमुपादेयमनुसन्धेयञ्च भवति । एवमत्राप्युभयत्राप्युक्तमुत्तरमुभयोरपि साधारणमेव । किं कारणमत्रेति चेत् तयोस्सब्रह्मचर्यमेव । उभौ खलु सहैवागत्य पृष्टवन्तौ उभयमप्युत्तरं लब्धवन्ताविति लोकदृष्टानुकूलमेतत् । अयमत्र शब्दान्वयः—उपक्रमोपसंहारादिपरामर्शेन विद्यैकत्वे प्रतिपन्ने सति सद्विद्यायां यथा प्रतिवचनभेदः प्रश्नभेदानुसारात् परामेव देवतां

विशेष्यं प्रकटयति, तेनैव न्यायेन उपस्तः कहोलश्रुतमपि कहोलश्चोपस्तश्रुतमपि सङ्कलय्य प्रतिपद्य ध्यायेतां सर्वान्तरमेव ब्रह्म । ननूक्तस्सद्विद्यायामेकः प्रष्टेति विशेषः तेन तत्र विद्यैक्यमस्तु एवं तर्ह्यत्रापि विशेषोऽस्ति यत् पुनस्सब्रह्मचर्यमित्याह—फलवदिति । यथा लोके शृण्वतां बहूनां सब्रह्मचारिणां शास्त्रश्रवणवेलायां प्रत्येकचोद्यप्रशमनार्थः पृथगुपदेशस्सर्वसाधारणः, तथोपस्तः कहोलश्रुतं सङ्कलय्य स च कहोल-उपस्तश्रुतं सङ्कलय्य द्वावपि सर्वान्तरं ब्रह्म ध्यायेतामित्युक्तं भवति ॥ ३६३ ॥

इत्यन्तरत्वाधिकरणम् ॥ ९७ ॥

पद०—सद्विद्यायामित्यादि । विद्यैकत्वे यथा सद्विद्यायां प्रश्नभेदानुसारात् प्रतिवचनभिदा परां देवतां विशेष्यं प्रकटयति हि —उपक्रमोपसंहारादिपरामर्शेन विद्यैकत्वे प्रतिपन्ने सति यथा सद्विद्यायां प्रश्नभेदानुसारात् प्रतिवचनभेदः परामेव देवतां विशेष्यतया प्रकटयति हि । एवमत्र—एवमत्रापि सर्वान्तरं ब्रह्मैव प्रतिपत्तव्यम् । तेनोपस्तः कहोलश्रुतमपि स च तत्संश्रुतं सङ्कलय्य ब्रह्म सर्वान्तरमिति ध्यायेताम्—तेन उक्तोपपादनेनोपस्तः कहोलश्रुतं स च कहोलश्च तत्संश्रुतं उपस्तश्रुतं सङ्कलय्य मिश्रीकृत्य सर्वान्तरत्वगुणविशिष्टमिति ब्रह्म ध्यायेताम् । तत्र सब्रह्मचर्यं फलवत्—'एकब्रह्मव्रताचारा मिथस्सब्रह्मचारिणः' इत्युक्तरीत्या प्रतिवचनद्वयेऽपि व्यावर्तकधर्मैः प्राणेन प्राणितृत्वाशनायाद्यतीतत्वादिभिर्ब्रह्म सकलेतरविलक्षणतया अनुसन्धाय सर्वान्तरत्वगुणविशिष्टब्रह्मध्यानरूपैकविद्यानुष्ठाने द्वाभ्यां कृते सब्रह्मचर्यं फलवद्भवेदित्यर्थः ॥ ३६३ ॥

इत्यन्तरत्वाधिकरणम् ॥ ९७ ॥

---

## कामाद्यधिकरणम् ॥ ९८ ॥

सूत्रम्—कामादीतरत्र तत्र चायतनादिभ्यः ॥ ३९२ ॥

आकाशं ताण्डिनस्तच्छयितमधिजगुर्वाजिनस्तेन विद्या
भिद्येतात्रेति चेन्न द्विविध इह यतो ब्रह्मनिर्देश एषः ।
सर्वाधारत्वपूर्वैः परतरविषयस्सामगाकाशशब्दो
विश्वेशाधारतोक्त्या सुषिरविषयतान्यत्र रूपं तु नान्यत् ॥ ३६४ ॥

चिन्ता०—प्राणितृत्वादीनामशनायाद्यतीतत्वानाञ्चैकधर्मिनिष्ठत्वात् विद्यैक्यं प्रतिपादितम्, अत्र त्वपहतपाप्मत्वादिगुणाष्टकस्य च वशित्वादेश्च धर्मिभेदाशङ्कया पूर्वपक्षोत्थानमिति सङ्गतिः । तदर्थविचारस्तु—'अथ यदिदमस्मिन्' इति दहरविद्यायां छान्दोग्ये अपहतपाप्मत्वादिविशिष्टमुपास्यं ब्रह्म, वाजसने-

यके वशित्वादिविशिष्टमुतोभयत्रापहतपाप्मत्वादिविशिष्टमिति । तदर्थं विचार्यते—किं वाजसनेयके हृदयायतनत्वसत्यसङ्कल्पत्वावान्तरविशेषवशित्वादिमुखेन सत्यसङ्कल्पत्वसहचरापहतपाप्मत्वादीनां प्रतिपत्तिरस्ति नेति । अत्र च्छान्दोग्यवाजसनेयकवाक्ययोर्विद्याभेदाभेदचिन्ता भाष्ये व्यक्तमुक्ता, न पुनस्ताण्डिनां वाक्यमुपात्तम्, अथापि तद्वाक्यस्यापि न्यायसिद्धं ब्रह्मविषयत्वमनूद्य भाष्योक्तामपि प्रक्रियां छान्दोग्यवाजसनेयकयोरेकविद्यात्वप्रकटनीं निश्शेषशङ्कानिराकरणेन प्रकटयति—आकाशमिति । अयमत्र वाक्यार्थः—आकाशं ताण्डिनो ध्येयमधीयते वाजिनस्त्वाकाशशयितं पुरुषम् । तेन ताण्डिवाक्ये वाजसनेयकवाक्ये च विद्या भिद्येतेति कस्यचिच्चोद्यम् । तत् प्रतिक्षिपति—नेति । तत्र हेतुमाह—द्विविध इति । द्विविधोऽपि निर्देशो ब्रह्मनिर्देश इति निर्णीतो यतः, अतस्ताण्डिवाजसनेयकवाक्ययोर्न विद्याभेद इति सिद्धम् । अतः परं तु भाष्यानुक्रमेण च्छान्दोग्यवाजसनेयकवाक्ययोर्भेदचिन्ता सन्तन्यते—सर्वाधारत्वपूर्वैर्भगवदसाधारणैर्गुणगणैस्सामगाकाशशब्दः 'दहरोऽस्मिन्नन्तर आकाशः' इति च्छान्दोग्यस्थाकाशशब्दः परमात्मविषयः । वाजसनेयके तु 'य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते सर्वस्य वशी सर्वस्येशानः' इति वशित्वादिगुणोपेतस्य भगवत आकाशे शयानत्ववचनात् आकाशशब्दः परमात्माधारभूतसुषिरवाचकः । अत्र द्वयोरपि विद्ययो रूपभेदमाशङ्क्य परिहरति—रूपं तु नान्यदिति । छान्दोग्ये वाजसनेयके चोभयत्राप्यपहतपाप्मत्वादिगुणविशिष्टः परमपुरुष एवानुसन्धेयतयोच्यत इति रूपभेदो नास्तीति न विद्याभेद इति भाष्य एव विस्तृतम् ॥ ३६४ ॥

पद०—आकाशमित्यादि । ताण्डिन आकाशमधिजगुः—ताण्डिनश्छन्दोगाः । 'हानौ तूपायन' इत्यधिकरणे शङ्करभाष्ये "अस्ति ताण्डिनां श्रुतिः 'अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात्प्रमुच्य । धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवानि" इत्युदाहृतम् । अस्मिन्नेवाधिकरणे श्रीभाष्ये "छन्दोगा आमनन्ति 'अश्व इव रोमाणि'" इत्युदाहृतम् । इयञ्च श्रुतिश्छान्दोग्ये अष्टमाध्याये दृश्यते । अन्यत्र च 'पुरुषविद्यायाम्' इत्यस्मिन्नधिकरणे शङ्करभाष्ये 'अस्ति ताण्डिनां पैङ्गिनाञ्च रहस्यब्राह्मणे पुरुषविद्या' इत्यादि । एवं बहुस्थलेषु च्छन्दोगानां ताण्डिन इति व्यवहारात् छन्दोगा एव ताण्डिनः । ते 'अथ यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः' इति आकाशं ध्येयमधीयते स्म । वाजिनस्तच्छयितमधिजगुः—वाजसनेयिनस्तु 'स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते सर्वस्य वशी सर्वस्येशानः' इत्यादिवाक्ये तच्छयितमाकाशे शयितं पुरुषं ध्येयमधीयते स्म । तेन—रूपभेदेन । अत्र—उक्तशाखाद्वये । विद्या भिद्येतेति चेन्न । यतः इह द्विविध एष ब्रह्मनिर्देशः—यतः इह वाक्यद्वये आकाशशब्देन

तच्छयितत्वेन च द्विविधोऽपि एष निर्देशो ब्रह्मनिर्देश इति निर्णीतः। अतः पूर्वोदाहृतवाक्यद्वये विद्या न भिद्येतेत्यर्थः। तदेव विवृणोत्युत्तरार्धेन सामगाकाशशब्दस्सर्वाधारत्वपूर्वैः परतराविषयः—सामगैः पूर्वोदाहृतदहरविद्या वाक्यपठित आकाशशब्दः 'उभे अस्मिन्द्यावापृथिवी अन्तरेव समाहिते' इत्यादि-प्रकरणवाक्यसिद्धैस्सर्वाधारत्वादिगुणैः परमात्मपरः। अन्यत्र विश्वेशाधारतोक्त्या सुषिरविषयता—अन्यत्र वाजसनेयके तु आकाशशब्दस्य विश्वेशस्य परमात्मन आधारत्वाभिधानात् 'तस्यान्ते सुषिरं सूक्ष्मम्' इत्युक्तसूक्ष्मसुषिरविषयत्वम्। रूपं तु अन्यत् न—ध्येयतद्गुणादिकं त्वेकरूपमिति न विद्याभेद इत्यर्थः। अत्र चिन्तामणौ 'छान्दोग्यवाजसनेयकवाक्ययोर्विद्याभेदाभेदचिन्ता भाष्ये व्यक्तमुक्ता, नपुनस्ताण्डिनां वाक्यमुपात्तम्, अथापि तद्वाक्यस्यापि न्यायसिद्धं ब्रह्मविषयत्वमनूद्य भाष्योक्तामपि प्रक्रियां छान्दोग्यवाजसनेयकयोरेकविद्यात्वप्रकटनीं निश्शेषशङ्कानिराकरणेन प्रकटयति—आकाशमिति। अयमत्रवाक्यार्थः—आकाशं ताण्डिनो ध्येयमधीयते। वाजिनस्त्वाकाशशयितं पुरुषम्। तेन ताण्डिवाक्ये वाजसनेयकवाक्ये च विद्या भिद्येतेति कस्यचिच्चोद्यम्। तत्प्रतिक्षिपति—नेति। तत्र हेतुमाह—द्विविध इति। द्विविधोऽपि निर्देशो ब्रह्मनिर्देश इति निर्णीतो यतः, अतस्ताण्डिवाजसनेयकवाक्ययोर्न विद्याभेद इति सिद्धम्। अतःपरं तु भाष्यानुक्रमेण च्छान्दोग्यवाजसनेयकवाक्ययोर्भेदचिन्ता सन्तन्यते' इत्यादिपङ्क्तिर्दृश्यते। एवं व्याख्याने ताण्डिशब्दार्थान्यथाप्रतिपत्तिरेव मूलम्। व्याख्यानञ्च श्लोकाननुरूपम्। अत इदमपि श्लोकव्याख्यानं प्रक्षिप्तमेव। सम्भाव्यते च जीर्णकोशनष्टपङ्क्तीनामल्पज्ञाधुनिककल्पनेऽन्यथाभानादिकम्। अत्र तत्त्वं द्रष्टुं तत्त्ववेदिन एव प्रमाणम्॥ ३६४॥

छन्दोगानामुपास्यं प्रथितमिह गुणैरष्टभिर्ब्रह्म जुष्टं
तच्चान्येषां वशित्वप्रभृतिघटितमित्यस्तु रूपे तु भेदः।
मैवं यत्तद्वशित्वाद्यपि तदिह भिदा सत्यसङ्कल्पतायाः
इत्यैकार्थ्यं निरूढं परमपि दहरोपासनं तद्वदूह्यम्॥ ३६५॥

चिन्ता०—अत्र च्छान्दोग्यवाजसनेयकवाक्ययोरविरोधोपपादनप्रकारमुक्त्वा तेनैव प्रकारेण ताण्डिवाजसनेयकवाक्ययोरविरोधं सिद्धं कृत्वा तैत्तिरीयकोक्तदहरवाक्यमप्यनेनैव प्रकारेणोपपाद्यमित्याचष्टे—छन्दोगानामिति। अयमर्थः—छन्दोगानामुपास्यं ब्रह्म अपहतपाप्मेत्याद्युक्तगुणाष्टकजुष्टं प्रथितमेव। तच्च ब्रह्म अन्येषां वाजसनेयिनां वाक्ये वशित्वादिगुणघटितमिति रूपभेदोऽस्तु। अतो विद्याभेदोऽस्त्विति पूर्वः पक्षः। इमं निराकरोति—मैवमिति। निराकरणप्रकारमाह—यत्तदिति। यत्तद्वशित्वादि गुणजातं

तत् सत्यसङ्कल्पताया भेद एव। वशित्वं हि स्ववशे वर्तमानत्वम् अथवा इतरान् स्ववशे वर्तयतीति निरुच्यते। तत् सत्यसङ्कल्पत्वमेव प्रकारान्तरेणोच्यते। तदिदमाह—तदिह भिदेति। इत्यैकार्थ्यं निरूढम्—छान्दोग्यवाजसनेयकवाक्ययोरैकार्थ्यं निरूढमित्यर्थः। एवं ताण्डिवाजसनेयकवाक्यद्वयं निर्णीतम्। एवं तैत्तिरीयकस्थमपि दहरवाक्यं तद्वदेव छान्दोग्यवाजसनेयकवाक्यवत् विचारणीयमित्यर्थः ॥३६५॥

पद०—छन्दोगानामित्यादि। इह अष्टभिर्गुणैर्जुष्टं ब्रह्म च्छन्दोगानामुपास्यं प्रथितम्—इह दहरविद्यायामपहतपाप्मत्वादिभिरष्टभिर्गुणैर्युक्तं ब्रह्म च्छन्दोगानामुपास्यं प्रसिद्धम्। अन्येषाम्—वाजसनेयिनां तु। तच्च—ब्रह्म। वशित्वप्रभृतिघटितम्—वशित्वप्रभृतिगुणयुक्तमुपास्यम्। इति रूपे तु भेदोऽस्तु—इत्येवमुपास्यरूपभेदोऽस्तु। मैवम्—एवं न शङ्क्यम्। यत्तद्वशित्वादि तदपि इह सत्यसङ्कल्पताया भिदा—'यत्तत्कृत्यं श्रुतीनाम्' इत्यादिष्विव यत्तच्छब्दौ द्वावपि यच्छब्दार्थे। वाजसनेयपठितं यद्वशित्वादि अधिकतया प्रतीयमानं तदपि इह च्छान्दोग्यप्रतिपन्नायास्सत्यसङ्कल्पताया भिदा प्रकारभेद एव। वशित्वं हि नाम स्ववशे वर्तमानत्वं स्ववशीकृतस्वेतरकत्वं वा तत् सत्यसङ्कल्पत्वप्रकारभेद एवेति भावः। इत्यैकार्थ्यं निरूढम्—एवं छान्दोग्यवाजसनेयकवाक्ययोरेकगुणप्रतिपादकत्वं स्थापितम्। परं दहरोपासनमपि तद्वदूह्यम्—तैत्तिरीयके 'दह्रं विपाप्मम्' इत्यादिश्रुतं दहरोपासनमपि च्छान्दोग्यवाजसनेयकवाक्यनिर्वाहक्रमेण एकविद्यात्वेनोह्यमित्यर्थः ॥ ३६५ ॥

नन्वाकाशो गुणाद्यैः पर इति दहराधिक्रियायां पुरोक्तं
तस्मान्नान्यार्थशङ्केत्यधिकरणमिदं नोज्जिहीतेति चेन्न।
व्योमातीतं निमित्तं दहरमिदमुपादानमित्युद्गृणन्तः
पूर्वं क्षिप्ताः प्रसङ्गात् पुनरपि गमितास्छिन्नमूलत्वमत्र ॥ ३६६ ॥

इति कामाद्यधिकरणम् ॥ ९८ ॥

चिन्ता०—ननु दहराधिकरणे प्रागेव दहरवाक्यं निरूपितम्, तत् किमत्र प्रस्तूयत इत्याशङ्क्य प्रयोजनविशेषात् न पौनरुक्त्यमिति परिहरति—नन्विति। दहराकाशः परमात्मासाधारणगुणाद्यैः परमपुरुष एनेति दहराधिकरणे प्रागेवोक्तम्, अतः परमात्मव्यतिरिक्तार्थशङ्का नास्ति, तस्मादिदमधिकरणं नोज्जिहीत इति कश्चिदाचष्टे। तत्प्रतिक्षिपति—नेति। पौनरुक्त्याभावमुपपादयति—व्योमातीतमिति। अयमर्थः—व्योमातीतवादिनिराकरणार्थं पूर्वं दहराधिकरणं प्रवृत्तम्, दहराकाशः परमपुरुषः उपादानं तत उपरि किञ्चित् निमित्तं वस्त्वस्तीति वदन्तो व्योमातीतवादिनः पूर्वं प्रतिक्षिप्ताः, तेन तत्प्रतिक्षेपप्रधानं दहराधि-

करणम् , इदं पुनरधिकरणं विद्याभेदाभेदचिन्ताप्रधानम् , अतः प्रयोजनभेदान्नपौनरुक्त्यम् । पूर्वं प्रतिक्षिप्ता अपि व्योमातीतवादिनोऽत्र प्रसङ्गात् छिन्नमूलत्वं गमिता इति ॥ ३६६ ॥

इति कामाद्यधिकरणम् ॥ ९८ ॥

पद०—नन्वाकाश इत्यादि । नन्विति प्रश्ने । पुरा—प्रथमाध्याये तृतीयपादे । दहराधिक्रियायाम्—दहराधिकरणे । गुणाद्यैराकाशः पर इत्युक्तम्—परमात्मासाधारणगुणादिभिर्दहराकाशः परमात्मेति निर्णीतं खलु । तस्मात्—कारणात् । अन्यार्थशङ्का नेतीदमधिकरणं नोज्जिहीतेतिचेन्न—परमात्मव्यतिरिक्तार्थपरत्वशङ्का न विद्यत इति इदमधिकरणं नोत्तिष्ठेदिति चेन्नैतद्युक्तम् । दहरमिदमुपादानं निमित्तं व्योमातीतमित्युद्गृणन्तः पूर्वं क्षिप्ताः—दहराकाशशब्दवाच्यः परमपुरुष उपादानम् निमित्तकारणं तु दहराकाशशब्दिताद्व्योम्नोऽप्यतीतमुपरि वर्तमानं किञ्चिद्वस्त्वस्तीति वदन्तो व्योमातीतवादिनः पूर्वं दहराधिकरणे प्रतिक्षिप्ताः । पुनरपि अत्र प्रसङ्गात् छिन्नमूलत्वं गमिताः—इदं पुनरधिकरणं विद्याभेदाभेदचिन्ताप्रधानम् । अतः प्रयोजनभेदान्न पौनरुक्त्यम् । अत्र च प्रसङ्गात् पूर्वं प्रतिक्षिप्ता अपि व्योमातीतवादिनः पुनश्छिन्नमूलत्वं गमिता इत्यर्थः ॥ ३६६ ॥

इति कामाद्यधिकरणम् ॥ ९८ ॥

---

## तन्निर्धारणानियमाधिकरणम् ॥ ९९ ॥

सूत्रम्—तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम् ॥ ३९५ ॥

उद्गीथादौ क्रियाङ्गे भजनमपि भवेत्पर्णताद्युक्तनीत्या
कर्माङ्गं तत्फलोक्तिस्त्विह नुतिरिति गोदोहनन्यायभग्नम् ।
स्वर्गादीनां फलत्वं क्रतुषु तदधिको ह्यत्र वीर्यातिरेकः
पर्णत्वादौ न वाक्यं वदति करणतां कर्म चाहानुपास्तौ ॥ ३६७ ॥

चिन्ता०—पूर्वत्र सत्यकामत्वसत्यसङ्कल्पत्वादीनां गुणानामुपसंहार्यत्वमुक्तम् , एवमुद्गीथाद्युपासनानामपि नियमेनोपसंहार्यत्वं स्यादिति शङ्कोत्थानेन सङ्गतिः । तदर्थविचारस्तु—' ओमित्येतदक्षरमुद्गीथमुपासीत ' इत्यादिकर्माङ्गाश्रितोद्गीथाद्युपासनादीनि किं क्रतुषु नियमेनोपादेयानि उतानियमेन इति । तदर्थं विचार्यते—किमेतानि क्रत्वङ्गोद्गीथादिमुखेन क्रत्वङ्गानि ? उत गोदोहनादिवत् पुरुषार्थभूतानि ?

इति। किं 'तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद' इत्यनियमदर्शनं गोदोहनादिवत् पुरुषार्थता-मवगमयति नेति। 'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति' इति अपापश्लोक-श्रवणादिवत् किं फलार्थवादः, उत फलविधिरिति। अत्र 'यस्य पर्णमयी जुहूर्भवति' इति पर्णमय्य-धिकरणोक्तन्यायेन उद्गीथादौ क्रियाङ्गे भजनं कर्माङ्गं भवेत्। पर्णमय्यधिकरणेऽप्यव्यभिचरितक्रतु-सम्बन्धिजुह्वादिमुखेन पर्णतादिकं क्रत्वङ्गमित्येव हि निरणायि। तत्र यथा अपापश्लोकश्रवणादिकं फलं स्तुतिरेव, एवं 'यदेव विद्यया करोति' इत्यारभ्य 'तदेव वीर्यवत्तरम्' इति फलोक्तिरर्थवाद एव स्यात्। उभयत्रापि 'यस्य पर्णमयी जुहूर्भवति' 'यदेव विद्यया करोति' इति वर्तमाननिर्देशस्याविशिष्टत्वात्। तदिदमाह—उद्गीथादाविति। उक्तमिमं पूर्वपक्षं प्रतिक्षिपति—गोदोहनेति। ननु गोदोहनादौ प्रधानफलात् फलान्तरस्य पशोर्दर्शनादधिकृताधिकारत्वमङ्गीकृतम्, इदमेवाश्रित्यविधानमित्युच्यते इह तु कथमित्याशङ्क्यात्रापि फलान्तरदर्शनमस्तीति परिहार उच्यते—स्वर्गादीनामिति। अयमत्र शब्दा-न्वयः—क्रतुषु स्वर्गादीनामेव फलत्वम्, क्रत्वङ्गाश्रयोद्गीथाद्युपासनेष्वत्र वीर्यातिरेकः पूर्वोक्तफलाद-धिकमेव फलम्। तत्र वीर्यवत्तरत्वं नाम कर्मान्तरैरप्रतिबद्धफलकत्वम्। लोके हि कर्मफलं प्रबलकर्मान्त-रफलैः प्रतिबध्यते। उद्गीथाद्युपासनं तु प्राचीनकर्मान्तरप्रतिबन्धवारणसामर्थ्यं करोतीत्युद्गीथाद्युपासनस्य वीर्यवत्तरत्वं फलमित्यर्थः। दृश्यते हि लोके स्वभावतः कारणं स्वकार्यकरणमातनुते, प्रतिबन्धकमागत्य तच्छक्तिं निरुन्धे, उत्तम्भकं पुनर्मणिमन्त्रादिकं तामेव करणशक्तिमुत्तम्भयति। तेनायमर्थः—उद्गीथाद्यु-पासनसहितं चेत् कर्म सहसैव स्वकार्यं कुर्यात्, नचेत् सहसैव न कुर्यादिति। तेनोद्गीथादिकं कर्माङ्गं प्रधानफलेनैव फलवत्त्वात्। उपासनं तु न कर्माङ्गम्; प्रधानफलातिरिक्तवीर्यवत्तरत्वरूपफलान्तरवत्त्वात्। पर्णतादिकं तु पृथक्फलशून्यत्वात् अव्यभिचरितक्रतुसम्बन्धिजुह्वादिमुखेन क्रत्वङ्गमेव। ननु 'यस्य पर्णमयी' 'यदेव विद्यया' इति वाक्ययोस्तुल्यतया फलश्रवणे कथमिह वैषम्यमभिधीयते? इत्थम्। इदमवधानेनाकर्णयेथाः। विषमरूपत्वाद्वाक्यश्रवणस्य, क्वचिद्विद्ययेति तृतीया श्रुतिराकर्ण्यते। सा च तृतीया फलसाधनत्वमेव साक्षादुपदिशति। पर्णतावाक्ये तु न तृतीयानिर्देशः। तेन तत्र न फलसम्बन्धः। तस्मादर्थवादमात्रमेव। तदिदं विशदमेव दर्शयति—पर्णत्वादाविति। यदि करणत्वं न वदति किं तर्हि तत्राहेत्यत आह—कर्म चाहानुपास्ताविति। अनुपास्तौ उपासनव्यतिरिक्ते कर्मप्रयोगे अङ्गभूत-जुह्वादेः परिग्रहरूपं कर्मैव वाक्यं वदतीत्यर्थः। चोऽवधारणे कर्मैव वदतीति॥ ३६७॥

पद०—उद्गीथादावित्यादि। क्रियाङ्गे उद्गीथादौ भजनमपि पर्णताद्युक्तनीत्या कर्माङ्गं भवेत्—यज्ञाङ्गभूते उद्गीथादौ उपासनमपि अव्यभिचरितक्रतुसम्बन्धिजुह्वादिमुखेन पर्णतादिकं क्रत्वङ्ग-

मिति पर्णमय्यधिकरणोक्तन्यायेन । कर्माङ्गं भवेत् । इह—'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति' इति वाक्ये तत्फलोक्तिस्तु—उपासनस्य फलोक्तिस्तु । नुतिरिति—अपापश्लोकश्रवणवाक्यवदङ्गभूतोपासनस्तुतिरिति । गोदोहनन्यायभग्नम्—'गोदोहनेन पशुकामस्य प्रणयेत्' इति विहिते क्रतुफलभिन्नपशुरूपफलाय गोदोहनपात्रेणाप्प्रणयने क्रतुफलभिन्नफलदर्शनेन यो नियमन्यायस्तेन पूर्वोक्ताशङ्कनं निरस्तमित्यर्थः । गोदोहने क्रतुफलभिन्नं फलं दृष्टम्, अत्र क्रतुफलभिन्नं किं फलमस्तीत्याशङ्कायां तद्विवृणोत्युत्तरार्धेन—क्रतुषु स्वर्गादीनां फलत्वम्—ज्योतिष्टोमादिक्रतुषु स्वर्गादीनां हि फलत्वं सर्वसम्मतम् । अत्र वीर्यातिरेकः तदधिको हि—अत्रोद्गीथाद्युपासने श्रुतो वीर्यातिरेकः प्रबलकर्मान्तराप्रतिबन्धरूपस्तदधिको हि क्रतुफलाद्भिन्नो हि । पर्णत्वादौ—जुह्वादीनां पर्णमयत्वादौ । करणताम्—अपापश्लोकश्रवणरूपफलकरणताम् । वाक्यम्—'यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति' इति वाक्यम् । न वदति—न प्रतिपादयति । उद्गीथोपासनविषये तु 'यदेव विद्यया' इति वीर्यवत्तरत्वरूपफलकरणतां तृतीयाश्रुतिर्वक्तीत्यर्थः । किञ्च अनुपास्तौ च कर्माह—उपासनाभावेऽप्युद्गीथरूपकर्मानुष्ठानं श्रुतिराह । 'तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद' इत्युपासनाभावेऽप्युद्गीथानुष्ठानं दर्शयति । नह्यङ्गत्वेऽनुष्ठानानियम उपपद्यते । तथाच भाष्यं 'उपलभ्यते ह्युपासनानियमः—'तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद' इत्यविदुषोऽप्यनुष्ठानवचनात् । नचाङ्गत्वे सत्युपासनस्यानुष्ठानानियम उपपद्यते' इत्यादि । एवं स्वरसार्थे सत्यपि श्रीभाष्येऽपि जाग्रति चिन्तामणौ पङ्क्तिर्दृश्यते 'यदि करणत्वं न वदति किं तर्हि तत्राहेत्यत आह—कर्म चाहानुपास्ताविति । अनुपास्तौ उपासनव्यतिरिक्ते कर्मप्रयोगेऽङ्गभूतजुह्वादेः परिग्रहरूपं कर्मैव वाक्यं वदतीत्यर्थः । चोऽवधारणे कर्मैव वदति' इत्यादिः । इदं व्याख्यानं कीदृशं प्रक्षिप्तमेवेति युक्तम् ॥ ३६७ ॥

उद्गीथे प्राणदृष्टौ क्रतुघटितफलादन्यदुक्तं फलं तत्
स्वीकृत्य प्राग्विचारस्स्थित इति विहतः पूर्वपक्षोऽत्र मैवम् ।
अत्रत्येऽनङ्गभावे स्थिरनिहितधियस्तत्र विद्यैक्यशङ्का
त्यक्त्वाङ्गानङ्गभावौ पृथगपृथगिति स्याच्च पूर्वत्र चिन्ता ॥ ३६८ ॥

इति तन्निर्धारणानियमाधिकरणम् ॥ ९९ ॥

चिन्ता०—अत्र कश्चिच्चोदयति—उद्गीथे प्राणदृष्टौ क्रतुफलादन्यदेव फलं वीर्यवत्तरत्वादिकं परामृश्यैव पूर्वं 'अन्यथात्वं शब्दात्' इत्यस्मिन्नधिकरणे विद्याभेदाभेदचिन्ता कृता । तेन पुनः फलान्तरार्थतया पूर्वपक्षोत्थानं विहतमेवेति । तदेतदनुवदति—उद्गीथ इति । तदेतत् प्रतिक्षिपति—मैवमिति । तदेव

विवृणोति—अत्रत्य इति। अयमर्थः—उद्गीथविषये द्वावर्थावुपपाद्यौ। अत्र पुनः फलान्तरार्थतया कर्मानङ्गत्वनिर्णयः। तत्र त्वनागतावेक्षणन्यायेन एतदधिकरणनिर्णीतमर्थमुपजीव्य विद्याभेदाभेदचिन्ता। ततो न पौनरुक्त्यम्। अयमत्र शब्दान्वयः—अत्रत्येऽनङ्गभावे स्थिरनिहितधियः श्रोतुरधिकारिणस्तत्र विद्यैक्यशङ्का सा च परिहृतेत्येकोऽयं समाधिः। समाधानान्तरमप्याह—त्यक्त्वेति। अस्याङ्गानङ्गभावौ परित्यज्य विद्याद्वयं पृथगपृथगिति पूर्वत्र चिन्ता, तत्र विद्याद्वयस्य पृथक्त्वे निर्णीते विद्यायाः पृथक्फलत्वेनाश्रयिकर्मत्वमत्र केवलं समर्थ्यते॥ ३६८॥

इति तन्निर्धारणानियमाधिकरणम्॥ ९९॥

पद०—उद्गीथ इत्यादि। उद्गीथे—उद्गीथावयवभूते प्रणवे। प्राणदृष्टौ—प्राणत्वेनोपासने। क्रतुघटितफलात् अन्यत् फलमुक्तम्—क्रतुसम्बन्धिफलादन्यत् शत्रुपरिभवाख्यं फलं श्रुत्युक्तम्। तत्स्वीकृत्य—तदङ्गीकृत्य। प्राक्—पूर्वं 'अन्यथात्वं शब्दादिति चेत्' इत्यधिकरणे। विचारः—विद्याभेदाभेदविचारः स्थितः। इति—एवमुद्गीथोपासनस्य क्रतुफलभिन्नफलत्वस्य पूर्वमेवाङ्गीकृत्य विचारकरणाद्धेतोः। अत्र—अस्मिन्नधिकरणेऽपि। पूर्वपक्षः—पृथक्फलकत्वाभावपूर्वपक्षः। विहतः—निरुद्धः, नोत्तिष्ठेदित्यर्थः। मैवम्—एवं मा शङ्किष्ठाः। अत्रत्येऽनङ्गभावे स्थिरनिहितधियस्तत्र विद्यैक्यशङ्का—एतदधिकरणसिद्धे उद्गीथोपासनस्य क्रत्वनङ्गभावे स्थिरतया न्यस्तबुद्धेःश्रोतुरधिकारिणस्तस्मिन्नधिकरणे विद्यैक्यशङ्का सा च परिहृता। अयमेकस्समाधिः। यद्वा अङ्गानङ्गभावौ त्यक्त्वा च पूर्वत्र पृथगपृथगिति चिन्ता स्यात्—अत्रत्याङ्गानङ्गभावौ परित्यज्यानवलम्ब्यापि पूर्वोक्ताधिकरणे विद्याद्वयस्य पृथक्त्वापृथक्त्वचिन्ता स्यात्। तत्र विद्याद्वयस्य पृथक्त्वे निर्णीते विद्यायाः पृथक्फलत्वेनाश्रयिकर्मत्वमत्र केवलं समर्थ्यत इति भावः॥ ३६८॥

इति तन्निर्धारणानियमाधिकरणम्॥ ९९॥

---

## प्रदानाधिकरणम्॥ १००॥

सूत्रम्—प्रदानवदेव तदुक्तम्॥ ३९६॥

कामानेतांश्च सत्यानितिवचनबलाद्धर्म्युपास्तेर्विभक्ता
धर्मोपास्तिस्तदर्थं गुणिपरिगणनं तन्त्रतोऽस्त्वित्ययुक्तम्।
तत्तद्वैशिष्ट्यभेदात् प्रतिविधि गुणिनश्चिन्तनावृत्तिरर्थ्या
राजत्वाद्यैः पृथक्त्वाद्भवति हि हविषो दानमावृत्तमिन्द्रे॥ ३६९॥

चिन्ता०—पूर्वाधिकरणं प्रसङ्गादायातम्, अधुना तत्पूर्वदहरविद्याविषयनिरूपणमत्र क्रियत इति सङ्गतिः। तदर्थविचारस्तु—'तद्य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान्' इति अपहतपाप्मत्वादीनामपि भेदेनोपासनं विहितम्, तत्र गुणचिन्तने गुणविशिष्टतया दहरस्यात्मनश्चिन्तनमावर्तनीयं नेति। तदर्थं विचार्यते—किं दहरमात्रचिन्तने गुणवद्दहरचिन्तनमपि कृतं नेति। अत्र कश्चिदाह—'य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान्' इति पृथगनुध्यानवचनबलात् धर्म्युपासनात विभक्ता धर्मोपास्तिः। तदर्थं गुणिपरिगणनं धर्मोपासनार्थं धर्म्युपादानं तन्त्रतोऽस्तु एकवारमेवास्तु। अयमर्थः—धर्म्युपासनार्थे धर्म्युपादाने कृते तदुपजीवनादेव धर्मोपासनार्थं पुनर्धर्म्युपादानं न कर्तव्यम्, पूर्वोपात्तधर्म्युपादानेनैवोत्तरोपासनेऽपि धर्मिसिद्धेरिति। तदेतत् सर्वमनुवदति—कामानिति। तदिदं निराकरोति—अयुक्तमिति। अयुक्तत्वमेवोपपादयति—तत्तदिति। अपहतपाप्मत्वादिगुणगणविशिष्टोपासने तत्तद्गुणवैशिष्ट्यभेदात् प्रतिविधि तत्तद्गुणविशिष्टब्रह्मोपासनविधाने सर्वत्रापि गुणिनो ब्रह्मणश्चिन्तनावृत्तिरर्थ्या अर्थादनपेता। तेन पूर्वं 'अनुविद्य' इति विहितगुण्यनुसन्धाने एतांश्च सत्यान्कामाननुविद्य व्रजन्तीति तत्तद्गुणविशिष्टब्रह्मानुसन्धाने गुण्यनुसन्धानं प्रत्येकमेव कर्तव्यमित्यर्थः। अस्मिन्नर्थे पूर्वकाण्डोक्तन्यायं दृष्टान्ततया सूत्रकारोक्तं दर्शयति—राजवाद्यैरिति। अयमर्थः—'इन्द्राय राज्ञे पुरोडाशमेकादशकपालं निर्वपेत्' इत्यादौ तत्तद्विशेषणविशिष्टेन्द्रे प्रदानाख्यं कर्मावृत्तम्। एवमपहतपाप्मत्वादिनानाविशेषणविशिष्टे परस्मिन् ब्रह्मणि स्थिते तस्यैव परस्य ब्रह्मणः पौनःपुन्येनावृत्तिरर्थवतीति ॥ २६९ ॥

पद०—कामानेतांश्चेत्यादि। एतांश्च सत्यान्कामान् इति वचनबलात्—दहरविद्यायां 'तद्य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामान्' इतिवाक्ये 'आत्मानमनुविद्य' इति दहराकाशशब्दितपरमात्मोपासनविध्यनन्तरं एतांश्च सत्यान्कामाननुविद्येति सत्यकामशब्दवाच्यगुणोपासनविधायकवचनबलात्। धर्मोपास्तिर्धर्म्युपास्तेर्विभक्ता — धर्मभूतसत्यकामशब्दवाच्यापहतपाप्मत्वादिगुणाष्टकोपास्तिरात्मानमनुविद्येत्युक्तगुणाष्टकाश्रयपरमात्मस्वरूपोपासनात् भिन्ना। तदर्थं गुणिपरिगणनं तन्त्रतोऽस्तु—धर्मोपासनार्थं गुणाश्रयभूतधर्मिचिन्तनम् एकवारमेवास्तु। धर्म्युपासनार्थं धर्म्युपादाने कृते तदुपजीवनेनैव धर्मोपासनेऽपि धर्म्युपादानसिद्धेर्धर्मोपासनार्थं पुनर्धर्म्युपादानं न कर्तव्यमित्यर्थः। इत्ययुक्तम्—इति चिन्तनमयुक्तम्। तत्तद्वैशिष्ट्यभेदात्—अपहतपाप्मत्वादिगुणविशिष्टोपासने तत्तद्गुणवैशिष्ट्यभेदात् तत्तद्गुणवैशिष्ट्यकृताद्धर्मिभेदात्। प्रतिविधि—तत्तद्गुणविशिष्टब्रह्मोपासनविधाने सर्वत्रापि। गुणिनः—ब्रह्मणः। चिन्तनावृत्तिः—चिन्तनस्य पुनःपुनःकरणम्। अर्थ्या—अर्थादनपेता फलवतीत्यर्थः। तेन पूर्व-

मनुविधेति विहितगुण्यनुसन्धाने एतांश्च सत्यान् कामानिति विहितगुणविशिष्टानुसन्धाने च गुण्यनुसन्धानं प्रत्येकमेव कर्तव्यमित्यर्थः । राजत्वाद्यैः—'इन्द्राय राज्ञे पुरोडाशमेकादशकपालं निर्वपेत्, इन्द्रायाधिराजाय, इन्द्राय स्वराज्ञे' इत्यादिवाक्यविहितेष्टिविशेषे राजत्वाधिराजत्वस्वराट्त्वधर्मैः । पृथक्त्वात्—पूर्वपूर्वधर्मविशिष्टेन्द्रापेक्षयोत्तरोत्तरधर्मविशिष्टेन्द्रस्य भिन्नत्वात् । इन्द्रे—एकस्मिन्नेवेन्द्रे । हविषो दानम्—एकादशकपालसंस्कृतपुरोडाशात्मकहविषस्समर्पणम् । आवृत्तं भवति—असकृत् कृतं भवति । हीत्यनेन 'नाना वा देवता पृथक्त्वात्' इत्यादिपूर्वकाण्डसूत्रप्रसिद्धिस्सूच्यते ॥ ३६९ ॥

तत्तद्भोगप्रगीतैर्गुणघटितपरोपासना भोगहेतुः
मुक्तिश्च स्यात् क्रमादित्यसदगुणवचस्यान्यपर्याभिधानात् ।
शास्त्रेऽस्मिन्ना समाप्तेः क्व फलमभिहितं निर्गुणोपास्तिसाध्यं
नोच्छास्त्रञ्च प्रकल्प्यं गुणनियमनतः ख्यातिमांश्चैष पादः ॥ ३७० ॥

चिन्ता०—अत्र कश्चिदाह—अत्र खलु द्विविधमुपासनमुक्तम्, निर्गुणस्वरूपोपासनमेकम्, गुणविशिष्टब्रह्मोपासनमपरम्, इह च यथोपासनं फलमिति न्यायेन निर्गुणस्वरूपोपासनात् निर्गुणब्रह्मप्राप्तिः, तदिदमुच्यते 'परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' इति, सगुणोपासनात् पुनस्सगुणब्रह्मप्राप्तिः, तदप्यत्रोच्यते 'जक्षत् क्रीडन् रममाणः' इत्यादिना, तेन क्रममुक्तिमत्रोपकल्पयामः, ततस्सगुणोपासनात् सगुणं प्राप्य निर्गुणोपासनात् निर्गुणमपि प्राप्नोतीति । तदिदं सर्वमनुवदति—तत्तद्भोगेति । तत् प्रतिक्षिपति—असदिति । अयमर्थः—अत्रोभयविधोपासनं भवता किं प्रमाणमनुसृत्य कल्प्यते उत न । नाद्यः—उपासनस्य सर्वस्यापि सगुणविषयत्वात् । न द्वितीयः—अतिप्रसङ्गात् । असत्या एव गुणा इति चेन्न 'त इमे सत्याः कामाः' इति तत्सत्यत्वस्यैवात्यादरेण प्रतिपादनात् । 'परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' इत्येतस्मादनन्तरमेव 'जक्षत्क्रीडन् रममाणः' इति सगुणफलस्य प्रतिपादनाच्च । पूर्वमेव निर्गुणवाक्यस्य हेयगुणनिषेधविषयत्वेन व्यवस्थापनादिति । तेन निर्गुणमेव नास्ति कुतस्तस्योपासनं कुतस्तरां निर्गुणब्रह्मप्राप्तिः कुतस्तमाश्चोपासनफलद्वैविध्येन वाक्यार्थभेदपरिक्लृप्तिरिति । उक्तमेवार्थं वैशद्याय पुनरुपपादयति—शास्त्रेऽस्मिन्निति । अस्मिन् शास्त्रे खलु 'अथातो ब्रह्मजिज्ञासा' इत्यारभ्य 'अनावृत्तिश्शब्दादनावृत्तिश्शब्दात्' इति सूत्रपर्यन्तं निर्गुणब्रह्मोपासनप्रसङ्ग एव नास्ति । फलञ्च निर्गुणोपासने परिकल्पयितुं न शक्यते । तत्फलं इष्टमेवैतद्भवतां उपास्यत्वेन मिथ्यात्वप्रसङ्गात् । तच्च फलं सगुणात्मकब्रह्मस्वरूपं चेदनादिसिद्धत्वादफलमेव । तस्मात् सगुणादेवोपासनात् फलसिद्धिः ।

मेवेति सिद्धम् । मा भूत् शास्त्रे निर्गुणब्रह्मोपासनम् , मा भूदपि तत्फलम् , अथाप्यस्मत्संप्रदायपारम्पर्यात् परिकल्पितमितिचेत् तत्रोत्तरमाह—नोच्छास्त्रमिति । तिष्ठन्त्वेतानि दूषणानि, इदमेकं ब्रह्मास्त्रम् । अयं खलु पादो गुणोपसंहारपाद इति नामतः प्रसिद्धः । अस्मिन्पादे गुणनिषेधवचनं भवतामुन्मत्तप्रलपितमेवेत्याह–गुणनियमनत इति ॥ ३७० ॥

पद०–तत्तद्भोगेत्यादि । तत्तद्भोगप्रगीतैर्गुणघटितपरोपासना भोगहेतुः—'जक्षत्क्रीडन् रममाणस्त्रीभिर्वा यानैर्वा' इत्यादिभिर्वाक्यैर्नानाविधभोगवचनात् गुणयुक्तपरोपासना भोगहेतुः । मुक्तिश्च क्रमात् स्यात्—निश्शेषाविद्यानिवृत्तिपूर्वकनिर्गुणस्वस्वरूपानुभवरूपमोक्षश्च उत्तरकाले क्रमेण भवेत् । इत्यसत्–इति कल्पनमयुक्तम् । अगुणवचस्यान्यपर्याभिधानात्—'नेह नानास्ति' 'अथात आदेशो नेतिनेति' इत्यादिनैर्गुण्यवचनस्य 'न स्थानतोऽपि' इत्यधिकरणे 'उत्सर्गेणापवादं न खलु नयविदः क्षोभणीयं क्षमन्ते तस्माद्ब्राह्मे गणादौ विधिविषयमतिक्रम्य तिष्ठेन्निषेधः' इत्यादिना हेयगुणनिषेधविषयत्वेन व्यवस्थापनात् । तेन निर्गुणमेव नास्ति कुतस्तस्योपासनम् कुतस्तरां निर्गुणब्रह्मप्राप्तिः कुतस्तमाब्रह्मोपासनफलवैविध्येन वाक्यार्थभेदपरिक्लृप्तिरिति भावः । उक्तमेवार्थं वैशद्याय पुनरुपपादयत्युत्तरार्धेन अस्मिन् शास्त्रे आ समाप्तेर्निर्गुणोपास्तिसाध्यं फलं क्वाभिहितम्–अस्मिन् शारीरकशास्त्रे 'अथातो ब्रह्मजिज्ञासा' इत्यारभ्य 'अनावृत्तिश्शब्दात्' इत्यादिचरमसूत्रपर्यन्तं निर्गुणब्रह्मोपासनसाध्यं फलमिदम् एवंविधमिति क्व सूत्रेऽभिहितम् । मा भूत् शास्त्रे निर्गुणब्रह्मोपासनविधानं तत्फलञ्च, तथाप्यस्मत्सम्प्रदायपारम्पर्येण तथाङ्गीकार्यमित्यत्रोच्यते—नोच्छास्त्रञ्च प्रकल्प्यमिति । न ह्यतीन्द्रियविषये शास्त्रमुत्सृज्य केवलबुद्ध्या कल्पनं विद्वच्छिष्टसम्मतं भवेत् । एष पादश्च गणनियमनतः ख्यातिमान्—तिष्ठन्त्वितराणि दूषणानि, इदमेकं ब्रह्मास्त्रम् । अयं खलु पादो गुणोपसंहारपाद इति नामतः प्रसिद्धः । अस्मिन्पादे गुणनिषेधवचनमुन्मत्तप्रलपितमेव भवेदिति भावः ॥ ३७० ॥

प्रत्येकं मेलनाद्वा दहरगुणगणेऽप्यत्र सञ्चिन्त्यमाने
गुण्यावृत्त्यर्थलब्धेः कथमिह तदनावृत्तिशङ्केति चेन्न ।
बुद्ध्यारोहे गुणानां यदवधि गुणिनो रूपमर्थ्यं ततोऽन्यद्
विद्यैकान्तं तदावृत्त्यनुघटिततदावृत्तिचिन्ताप्रवृत्तेः ॥ ३७१ ॥

इति प्रदानाधिकरणम् ॥ १०० ॥

चिन्ता०—एतस्मिन्नधिकरणे पूर्वपक्षोत्थानमाक्षिप्य समाधातुमुपक्रमते—प्रत्येकमित्यादिना । 'अपहतपाप्मा' इत्यादिना प्रत्येकानुसन्धानम् । 'व्रजन्त्येतांश्च सत्यान् कामान्' इत्यादिना मेलनानु-

सन्धानम्। यद्वा तद्वा भवतु। उभयथानुसन्धानेऽपि गुणिनमन्तरेण गुणानुसन्धानाभावात् ब्रह्मानुसन्धानं स्वयमेव सिध्यति। अत्र गुण्यननुसन्धानं कथमिवाशङ्क्यते आशङ्काभावे कथमिव समाधीयतइति चोदकाभिप्रायः। तदिदं प्रतिक्षिपति–नेति। प्रतिक्षेपप्रकारमाह—गुणानामिति। गुणानां बुद्ध्यारोहे यदवधि गुणिनो रूपं सत्यत्वज्ञानत्वानन्तत्वादिरूपं अर्थ्यं अर्थादनपेतं तदवियुक्तमित्यर्थः। तत् स्वयमेव सिध्यत्येव। ततोऽन्यत् यत् तत् विद्यैकान्तं स्थानादिरूपम्। तदावृत्तीति—तस्य स्थानादेरावृत्तिसहितस्य ब्रह्मण आवृत्तिचिन्ताप्रवृत्तेरिति शब्दार्थः। अयमर्थः—सर्वविद्यासाधारणसामान्यगुणातिरिक्ततत्तद्विद्याविशेषनियतस्थानादिविशेषणसहितस्यैव ब्रह्मण आवृत्तिरिति ॥ ३७१ ॥

इति प्रदानाधिकरणम् ॥ १०० ॥

पद०—प्रत्येकमित्यादि। अत्र प्रत्येकं मेलनाद्वा दहरगुणगणे सञ्चिन्त्यमानेऽपि गुण्यावृत्त्यर्थलब्धेः इह तदनावृत्तिशङ्का कथम्—अत्र दहरविद्यायां 'अपहतपाप्मा विजरः' इत्याद्युक्तरीत्या प्रत्येकं तत्तद्गुणविशिष्टानुसन्धानपक्षे 'एतांश्च सत्यान्कामान्' इत्युक्तरीत्या यावद्गुणविशिष्टतया मेलनेनानुसन्धानपक्षेऽपि गुणिनमन्तरेण गुणानुसन्धानासम्भवात् ब्रह्मानुसन्धानं स्वयमेव सिध्यतीति गुणिनो ब्रह्मण आवृत्तेरर्थाल्लाभेनात्र गुण्यनुसन्धानानावृत्तिशङ्का कथं क्रियते। तथाचैतदधिकरणपूर्वपक्षोऽनुत्थान इति भावः। इति चेन्न—इति शङ्क्यते चेत् तन्न युक्तम्। गुणानां बुद्ध्यारोहे यदवधि गुणिनो रूपमर्थ्यं ततोऽन्यद्विद्यैकान्तं तदावृत्त्यनुघटिततदावृत्तिचिन्ताप्रवृत्तेः—गुणानां बुद्ध्या विषयीकरणे यदवधि यावत्, गुणिनो रूपं सत्यत्वज्ञानत्वानन्तत्वादिरूपं अर्थ्यमर्थादनपेतमवियुक्तमित्यर्थः, तद्गुणानुसन्धाने अत्याज्यतया स्वयमेव सिध्यत्येव, ततोऽन्यत् विद्यैकान्तं स्थानादिरूपं तदावृत्त्यनुघटिततदावृत्तिचिन्ताप्रवृत्तेः—तादृशस्थानादिघटितस्य तस्य ब्रह्मण आवृत्तिचिन्ताप्रवृत्तेस्सर्वविद्यासाधारणसामान्यगुणातिरिक्ततत्तद्विद्याविशेषनियतस्थानादिविशेषणसहितस्यैव ब्रह्मण आवृत्तिचिन्तेत्यर्थः ॥ ३७१ ॥

इति प्रदानाधिकरणम् ॥ १०० ॥

---

## लिङ्गभूयस्त्वाधिकरणम् ॥ १०१ ॥

सूत्रम्—लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ॥ ३९७ ॥

प्रक्रान्ता दहरविद्या प्रकटमुपरि च ज्ञायते तैत्तिरीये
तस्मादूर्ध्वानुवाकः प्रकृतविषयनिर्धारणार्थोऽस्तु मैवम् ।
तत्तद्विद्योदितैस्तैः परमिह पुरुषं प्रत्यभिज्ञाप्य शब्दैः
तस्मिन्नारायणत्वं वददधिकबलं प्रक्रियातो हि वाक्यम् ॥ ३७२ ॥

चिन्ता०—अत्र भाष्ये सङ्गतिरुक्ता 'किं पूर्वप्रकृतविद्यया एकविद्यात्वेन तदुपास्यविशेषनिर्धारणमनेन क्रियते' इति पूर्वपक्षोत्थानक्रमाभिधानात् । तदर्थविचारस्तु—किं सर्वासु परविद्यासु नारायण एवोपास्यः, उत दहरविद्यायामेव नारायण उपास्य इति । तदर्थं विचार्यते—किं नारायणानुवाके सर्वविद्योपास्यविशेषनिर्धारणं क्रियते उत दहरविद्योपास्यविशेषनिर्धारणमिति । किमत्र 'पद्मकोशप्रतीकाशं हृदयञ्चाप्यधोमुखम्' इत्यादिना प्रतीयमानदहरविद्योपास्यदहरोद्देशेन नारायणत्वं विधीयते, उत सर्वविद्यासु अक्षरशिवशम्भुपरब्रह्मपरज्योतिःपरतत्त्वपरमात्मादिशब्दनिर्दिष्टमुपास्यं वस्त्विह तैरेव शब्दैरनूद्य नारायणत्वं विधीयत इति । किं 'पद्मकोशप्रतीकाशम्' इत्यादिहृदयायतनत्वश्रवणानुरोधेन दहरोद्देशेन विधानं न्याय्यम्, उत विधेयनारायणत्वानुरोधेन लिङ्गभूयस्त्वेन सर्वोपास्योद्देशेन नारायणत्वविधानं न्याय्यमिति । अत्र सङ्गतिगर्भं पूर्वपक्षोपन्यासमाह—प्रक्रान्तेति । 'अणोरणीयान्' इत्यस्मिन्ननुवाके दहरविद्या प्रक्रान्ता । 'सहस्रशीर्षम्' इत्यनुवाके पुनरुपरि 'पद्मकोशप्रतीकाशम्' इत्यादिना तैत्तिरीयकवाक्ये सैव विद्या प्रत्यभिज्ञायते । तेन 'सहस्रशीर्षम्' इत्यनुवाकः पूर्वप्रकृतदहरविद्यावेद्यनिर्धारणार्थ इति पूर्वपक्षोत्थानम् । तद्दूषयति—मैवमिति । पूर्वपक्षप्रतिक्षेपप्रकारं प्रकटयति—तत्तदिति । श्रुतिलिङ्गवाक्यादिषु प्रमाणेषु उत्तरोत्तरदौर्बल्यस्य न्यायसिद्धत्वात् प्रकरणाद्वाक्यं बलीयः । 'नारायण परं ब्रह्म' इति पदान्तरसमभिव्याहारो वाक्यम् । तच्च वाक्यं 'तत्त्वं नारायणः परः, नारायण परो ज्योतिः' इत्यादिरूपं सर्वविद्यावेद्योपस्थापनं करोति । भवता पुनः प्रकरणादेव दहरविद्यामात्रशेषत्वमभिधीयते । तेन दुर्बलप्रमाणसिद्धं दहरविद्यामात्रशेषत्वं परित्यज्य प्रबलप्रमाणसिद्धं सर्वविद्याशेषत्वमेव संग्राह्यमिति । तदिदमाह—अधिकबलं प्रक्रियातो हि वाक्यमिति ॥ ३७२ ॥

पद०—प्रक्रान्तेत्यादि । तैत्तिरीये दहरविद्या प्रक्रान्ता उपरि च प्रकटं ज्ञायते—तैत्तिरीयके 'अणोरणीयान्' इत्यनुवाके 'दहं विपाप्मं परवेश्मभूतं यत्पुण्डरीकं पुरमध्यसंस्थम्' इत्यादिवाक्येन

हि दहरविद्योपक्रान्ता, 'सहस्रशीर्षम्' इत्याद्युपरितनानुवाके च 'पद्मकोशप्रतीकाशं हृदयं चाप्यधोमुखम्' इत्यादिवाक्ये लिङ्गेन च स्फुटतया दहविद्याप्रत्यभिज्ञायते। तस्मादूर्ध्वानुवाकः प्रकृतविषयनिर्धारणार्थोऽस्तु—तस्मात् एवंरूपहेतोः ऊर्ध्वानुवाकः'सहस्रशीर्षम्' इत्याद्यूर्ध्वानुवाकः प्रकृतदहरविद्याविषयभूतदेवताविशेषो नारायण इत्येवं निर्धारणफलकोऽस्तु। मैवम्—एवं मा शङ्किष्ठाः। इह—'सहस्रशीर्षम्' इत्यनुवाके। तत्तद्विद्योदितैः—तासुतासूपनिषद्विद्यासु पठितैः। तैश्शब्दैः—उपास्यसमर्पकैरक्षरशिवशम्भुपरब्रह्मपरज्योतिःपरतत्त्वपरमात्मादिभिश्शब्दैः। परं पुरुषम्—तासुतासु विद्यासूपास्यतयोक्तं परमात्मानम्। प्रत्यभिज्ञाप्य—सएवायमिति बुद्धिविषयीकृत्य। तस्मिन्—सर्वविद्योपास्ये परमात्मनि। नारायणत्वं वदत्—नारायणत्वं विदधत्, तत्तद्विद्योपास्यः परमात्मा नारायणइति निर्धारयत्। वाक्यम्—'नारायण परं ब्रह्म तत्त्वं नारायणः परः' इत्यादिवाक्यम्। प्रक्रियातः—प्रकरणात्। अधिकबलं हि—प्रबलमिति प्रसिद्धं खलु। 'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्' इत्यादिकर्मकाण्ड इत्यर्थः ॥ ३७२ ॥

वाक्यैस्सर्वार्थतायां दहरभजनमप्यत्र भागीति सार्थः
तल्लिङ्गोपेतभागो नच बहुभिरलं योद्धुमेकं गतार्थम्।
नैकस्यास्योपकुर्यात् प्रकरणमलसं किञ्च सर्वोपजीव्ये
तत्त्वे तात्पर्यमत्र स्फुटमिति वितथा तत्परित्यागक्लृप्तिः ॥ ३७३ ॥

चिन्ता०—ननु न केवलं प्रकरणमात्रमस्माभिरवलम्ब्यते, अपि तु दहरविद्याशेषत्वोपपादकलिङ्गमप्यस्मिन्वाक्ये दृश्यते तेन तद्विरोधे सति वाक्याल्लिङ्गस्य प्राबल्यात् दहरविद्याशेषत्वमेवाङ्गीकार्यमित्याशङ्क्य परिहरति—वाक्यैरिति। अयमर्थः—यद्येकमेव वाक्यं तदा लिङ्गस्य प्राबल्यं वक्तुं शक्येतापि। अत्रतु बहूनि वाक्यानि विद्यन्ते, अतस्तेषामेव प्राबल्यम्। नच तानि लिङ्गेन विरुध्यन्ते। सर्वविद्याशेषत्वमेव हि वाक्यैरुपपाद्यते। अत्रोपलक्षणन्यायेन कतिपयोपादानमिति सर्वविद्याशेषत्वसिद्धौ दहरविद्यापि सर्वविद्यान्तर्गतेति तद्विद्याशेषत्वमपि वाक्यानामभिमतमेव। तेनोपशान्तविरोधं स्ववाक्ये दहरविद्याशेषत्वलिङ्गमविरोधेनावतिष्ठते। प्रकरणमपि दहरविद्याशेषत्वोपपादकं तच्छेषत्वलाभेन कृतार्थत्वात् सर्वविद्याशेषत्वप्रतिपादकवाक्यैः प्रबलैर्न विरुध्यते। किञ्च 'सहस्रशीर्षं देवम्' 'सहस्रशीर्षा पुरुषः' इति पुरुषनारायणप्रत्यभिज्ञारूपलिङ्गमुपक्रमस्थत्वादत्यन्तप्रबलमेव दृश्यते। तेन लिङ्गादुपसंहारस्थात् न दहरविद्यामात्रशेषत्वसिद्धिः। अयमत्र शब्दान्वयः—वाक्यैस्सर्वार्थतायामुपपादितायां दहरभजनमप्यत्र-

भागीति अस्मिन्नर्थे भागवदिति सार्थः कृतार्थतावान् अस्मिन्वाक्ये दहरविद्याशेषत्वोपपादकलिङ्गान्वितो भागः, तस्मादेव कृतार्थत्वात् लिङ्गस्य विरोध एव नास्ति । स्वाभिमतार्थलाभेन विरोधाभावात् लिङ्गमुदासीनमेवावतिष्ठते । एवं कृतार्थत्वेनोदासीनं लिङ्गं बहुभिस्तत्परैर्वाक्यैर्योद्धुं नालमेव । एवञ्च सति प्रकरणमपि स्वयमलसं स्वभावतो दुर्बलत्वात् दहर विद्याशेषत्वस्यापि लाभेन कृतार्थत्वाच्च। तेन नैकस्यास्य लिङ्गस्योपकरोति । नहि बहुषु विरुद्धेषु बलवत्सु विद्यमानेषु स्वयं कृतार्थत्वादलसस्य लिङ्गस्य स्वयमपि स्वभावतो दुर्बलं कृतार्थत्वादलसं च प्रकरणमुपकरोति । किञ्चोपक्रमोपसंहारादिषड्विधतात्पर्यलिङ्गपरामर्शेन वाक्यार्थे निर्णीते प्रतिपन्नमर्थान्तरं त्याज्यमेवेतिहि न्यायमार्गः । अत्र पुनस्सर्वविद्योपजीव्यत्वात् नारायणस्यैव परमप्राप्यत्वप्रतिपादनमिति स्फुटमेवोपक्रमादिपरामर्शेनोपलभ्यते । तच्च दहरविद्यायामप्युपकरोति । तेन प्रधानभूतं स्फुटप्रतिपन्नमसंकुचितमर्थं परित्यज्य दहरविद्यामात्रशेषत्वं नोपपादनीयमिति सर्वविद्याशेषत्वमेव वाक्यस्येति सिद्धम् । अयमर्थः—इदं तु वाक्यं न केवलशेषत्वोपपादकम् । समन्वयाधिकरणे विधिशेषत्वमन्तरेणापि वाक्यप्रामाण्यस्योपपादनात् । अथापि सर्वविद्योपकारकमेव, परतत्त्वपरिज्ञानमन्तरेण तद्ध्यानस्य कर्तुमशक्यत्वात् । तेन प्रमाणबलात् सर्वोपजीव्यत्वसिद्धिरिति तत्परित्यागक्लृप्तिर्वितथैव ॥ ३७३ ॥

पद०—वाक्यैरित्यादि । वाक्यैः ' नारायण परं ब्रह्म ' इत्यादिरूपैर्बहुभिर्वाक्यैः । सर्वार्थतायाम्—सर्वविद्याविषयदेवतानिर्धारणार्थतायामुपपादितायाम् दहरभजनमपि—दहरोपासनमपि । अत्र—अस्मिन्नर्थे । भागीति— भागवदिति हेतोः । तल्लिङ्गोपेतभागस्सार्थः—दहरविद्याशेषत्वोपपादकलिङ्गान्वितो वाक्यभागः कृतार्थ एव । गतार्थमेकं बहुभिर्योद्धुश्च नालम्—एवं कृतार्थम् अतएवोदासीनं लिङ्गं बहुभिस्तत्परैर्वाक्यैस्स्पर्धितुं न समर्थञ्च । अलसं प्रकरणमेकस्यास्य नोपकुर्यात्—प्रकरणमपि स्वभावतो दुर्बलत्वात् दहरविद्याशेषत्वस्यापि लाभेन कृतार्थत्वाच्चालसमेकस्य लिङ्गस्योपकर्तुं न प्रवर्तेत । नहि बहुषु विरुद्धेषु बलवत्सु विद्यमानेषु स्वयं कृतार्थत्वादलसस्य लिङ्गस्य स्वयमपि स्वभावतो दुर्बलं कृतार्थत्वादलसञ्च प्रकरणमुपकरोतीति भावः । किञ्च सर्वोपजीव्ये तत्त्वे तात्पर्यमत्र स्फुटमिति तत्परित्यागक्लृप्तिर्वितथा—' सहस्रशीर्षं देवम् ' इति पुरुषसूक्तप्रत्यभिज्ञया पूर्वोक्तैस्सर्वविद्यापठिताक्षरशिवादिशब्दघटितैर्बहुभिर्वाक्यैस्सर्वविद्यापेक्षिततत्त्वनिर्धारणतात्पर्यस्यास्मिन् वाक्ये स्फुटप्रतिपत्त्या तत्परित्यागकल्पना विफला विरुद्धा चेत्यर्थः ॥ ३७३ ॥

आत्मैक्यं देवतैक्यं त्रिकसमधिगता तुल्यतैक्यं त्रयाणाम्
अन्यत्रैश्वर्यमित्याद्यनिपुणफणितीराद्रियन्ते न सन्तः ।
त्रय्यन्तैरेककण्ठैस्तदनुगुणमनुव्यासमुख्योक्तिभिश्च
श्रीमान्नारायणो नः पतिरखिलतनुर्मुक्तिदो मुक्तभोग्यः ॥ ३७४ ॥

इति लिङ्गभूयस्त्वाधिकरणम् ॥ १०१ ॥

चिन्ता०—उक्तं नारायणस्यैव पारम्यं नानाविधपरपक्षप्रतिक्षेपपूर्वकं सम्प्रतिपन्नप्रमाणविशेषप्रतिपादनादुपपादयति—आत्मैक्यमिति । सर्वेऽप्यात्मान एकमेवेति भास्करयादवप्रकाशशङ्करमतानुसारिणो वदन्ति । सर्वासां देवतानामैक्यमिति प्रशिथिलपरिपठितकतिपयनिगमाः पामरप्रायाः । त्रिमूर्त्युत्तीर्णं किमपि तत्त्वमस्तीति व्योमातीतवादिनः । केवलपुराणपठनमात्रसंतुष्टा विशेषज्ञानविधुरा ब्रह्मविष्णुरुद्राणां तुल्यत्वमिति प्रतिपेदिरे । तादृशा एवान्ये पुनस्त्रयाणामैक्यमिति । अपरे पुनरयथायथमेव यथाभिमानं कल्पयन्तो भास्करादिष्वन्यतममेव सर्वस्मात्परं वर्णयन्ति । अनिपुणा एवैते । वेदविरोधात् स्मृतिविरोधात् सत्त्वोत्तरपुराणविरोधाच्च एतेषां फणितीस्तत्त्वविदो नाद्रियन्ते । तर्हि किं प्रमाणं भवतामित्याशङ्क्य प्रमाणोपादानपूर्वकं परतत्त्वनिर्णयमुपपादयति—त्रय्यन्तैरिति । एककण्ठैरिति सर्वश्रुत्यविरोधमाह । तदनुगुणेति सोपबृंहणत्वमाह । श्रीमानिति 'ह्रीश्च ते लक्ष्मीश्च पत्न्यौ' इत्युत्तरनारायणोक्तनियामकलिङ्गं दर्शयति । नारायण इति अस्यैव नारायणानुवाकोपादानम् । पतिरिति 'पतिं विश्वस्य' इत्यादिनानाविधश्रुतिप्रतिपन्नशेषशेषिभावव्यक्तीकरणम् । स एव हि प्रणवार्थः । प्रणव एव हि सकलवेदसारः 'सर्वे वेदा यत्पदमामनन्ति' इत्यारभ्य 'तत्ते पदं संग्रहेण ब्रवीम्योमित्येतत्' इति निगमनात् । नः पतिरिति बहुवचनोपादानात् 'नित्यो नित्यानाम्' इति श्रुतिसिद्धजीवनानात्वमुपपाद्यते । अखिलतनुरिति अन्तर्यामिब्राह्मणादिसिद्धमध्यात्मशास्त्रसारभूतं सर्वशरीरत्वमुच्यते । मुक्तिदो मुक्तभोग्य इति तृतीयचतुर्थाध्यायप्रतिपाद्यार्थतत्त्वमभिधीयते । मोक्षप्रदत्वं तृतीये मुक्तप्राप्यत्वं चतुर्थे इति तयोरर्थविभागः ॥ ३७४ ॥

इति लिङ्गभूयस्त्वाधिकरणम् ॥ १०१ ॥

पद०—आत्मैक्यमित्यादि । आत्मैक्यम्—अत्रात्मशब्दः परमात्मपरः । तस्य चेतनाचेतनात्मककृत्स्नप्रपञ्चैक्यमित्यर्थः । इदं यादवभास्करमतद्वयसंग्रहणम् । मायिमतं तु इत्याद्यनिपुणेत्यत्र आदिशब्देन ग्राह्यम् । देवतैक्यम्—देवतानां सर्वासामन्योन्यं परमात्मना चैक्यम् । एवं केषाञ्चित्पक्षः । त्रिकसमधिगता—त्रिकं प्रसिद्धं ब्रह्मविष्णुरुद्ररूपमूर्तित्रयं समधिगता प्राप्ता । तुल्यता—मूर्तित्रयं तुल्यमिति केषाञ्चि-

त्पक्षः । त्रयाणामैक्यम्—तेषामेव ब्रह्मविष्णुरुद्राणामेकवस्तुत्वम् । इदं केषाञ्चिन्मतम् । अन्यत्र—विष्णोरन्यत्र रुद्रे वा चतुर्मुखे वा मूर्तित्रयादुत्तीर्णे कस्मिंश्चिद्वा । ऐश्वर्यम्—स्वेतरसमस्तवस्तुनियन्तृत्वरूपमीश्वरत्वम् । इत्याद्यनिपुणफणितीः—इति उक्ताः प्रकाराः, आदिः निर्गुणं ब्रह्मैव तत्त्वं तद्व्यतिरिक्तं किमपि नास्तीति मायिपक्षः, तत्सम्बन्धिनीः अनिपुणानां तत्त्वनिर्धारणोपयुक्तसत्सम्प्रदायतन्मूलकयथावस्थितज्ञान-शून्यानां फणितीरुक्तीः । इति च आदिश्च इत्यादयः तत्सम्बन्धिन्योऽनिपुणफणितयः इत्याद्यनिपुणफणि-तयस्ताः । यद्वा इति उक्तप्रकाराः पक्षाः आदिर्यस्य मायिमतस्येति तद्गुणसंविज्ञानबहुव्रीहिः । इत्यादिसम्ब-न्धिन्यः अनिपुणफणितय इति पूर्ववत् । सन्तः—सत्सम्प्रदायसिद्धयथावस्थितपरतत्त्वज्ञानलब्धसत्ताका-स्संख्यावदग्रगण्याः । नाद्रियन्ते—न बहुमन्यन्ते । एककण्ठैस्त्रय्यन्तैः—श्रीपुरुषसूक्तोत्तरानुवाक-सहस्रशीर्षानुवाकसुवर्णघर्मानुवाकमहोपनिषन्नारायणोपनिषन्महानारायणोपनिषत्कठवल्लीसौबालब्रह्मबिन्दुनृसिंह-तापनीयरामतापनीयबृहदारण्यकच्छान्दोग्यादिभिस्तदैककण्ठ्यमपेक्ष्य लब्धसत्ताकैरन्यैश्च वेदान्तैरुपनिषद्भिः प्रमाणैः । तदनुगुणमनुव्यासमुख्योक्तिभिश्च—उदाहृतसर्वोपनिषदां तात्पर्यप्रकाशनेनानुकू-लाभिः सकलबुभुक्षुमुमुक्षुजनभेषजभूतस्ववाक्यस्य मनोः, नारायणावतारतया प्रसिद्धस्य पञ्चमवेद-प्रणेतुः व्यासस्य मुख्यानां पराशरश्रीशठमथननाथयामुनरामानुजात्रेयरामानुजादीनां उक्तिभिश्च मनुस्मृति-श्रीमन्महाभारतश्रीपुराणरत्नदिव्यप्रबन्धयोगतत्त्वपुरुषनिर्णयश्रीभाष्यादिरूपाभिस्सूक्तिभिश्च तदुपबृंहणभूता-भिः । श्रीमान्—सर्वावस्थास्वपि श्रिया समेतः । नारायणः—पुरुषोत्तम एव । नः पतिः अखिलतनु-र्मुक्तिदो मुक्तभोग्यः—अवगत इति शेषः । सर्वस्वामितया सर्वनियन्तृतया परमपुरुषार्थप्रदातृतया मुक्तिदशायां प्राप्यतया चाधिगत इत्यर्थः । अत्र केचिदाचार्याः 'त्रिकसमधिकता' इति पाठमवलम्ब्य त्रिमूर्त्युत्तीर्णपरत्वपक्षं प्रतिपादयन्ति । तथावर्णने श्रीमद्रहस्यत्रयसारे एतच्छ्लोकानन्तरमधिकारादौ साम्यै-क्योत्तीर्णव्यक्त्यन्तरपक्षाणां क्रमेणोपपादनं विरुध्यते । अत एव सारदीपिकाचार्यैः 'त्रिकसमधिगता तुल्यता' इति पाठमवलम्ब्य 'अन्यत्रैश्वर्यम्' इत्यनेनैवोत्तीर्णव्यक्त्यन्तरपक्षयोस्संग्रहः कृत इति दिक् ॥ ३७४ ॥

इति लिङ्गभूयस्त्वाधिकरणम् ॥ १०१ ॥

---

## पूर्वविकल्पाधिकरणम् ॥ १०२ ॥

सूत्रम्—पूर्वविकल्पः प्रकरणात्स्यात्क्रियामानसवत् ॥ ३९८ ॥

अङ्गं पूर्वप्रसक्तेष्टकचितसमुपस्थापितस्य क्रतोस्स्याद्
बुद्धयात्माग्निर्मनश्चित्प्रभृतिरपि यथा मानसं द्वादशाहे ।
तद्वीर्यस्यातिदेशादिति न सदुदितो ह्यत्र विद्यात्मकोऽङ्गी
श्रुत्याद्यैरेव तस्मिन्नुपकृतिसमताबोधनार्थोऽतिदेशः ॥ ३७५ ॥

चिन्ता०—प्रकरणाद्बलीयसा वाक्येन नारायणानुवाकस्य सर्वविद्यासाधारण्यमुक्तम् । इहतु प्रकरणस्य
बाधकाभावात् मनश्चितादयः क्रियामयक्रत्वनुप्रवेशिन इति शङ्कया सङ्गतिः । तदर्थविचारस्तु—वाजसनेयके
'मनश्चितो वाक्चितः प्राणचितश्चक्षुश्चितश्श्रोत्रचितः कर्मचितोऽग्निचितः' इति मनश्चितादयोऽग्नय आम्नायन्ते,
ते किं क्रियामयक्रत्वन्वयेन क्रियारूपाः, उत विद्यामयक्रत्वन्वयेन विद्यारूपा इति । तदर्थं विचार्यते—
किमिष्टकचिताग्निसन्निधानात् तद्द्वारा सन्निहिते क्रतौ क्रियामये विनियोगोऽस्ति तेषामुत नेति । किं
'विद्यया हैवैत एवंविदश्चिता भवन्ति' 'तान्हैतानेवंविदे सर्वदा सर्वाणि भूतानि विचिन्वन्ति' इति
श्रुतिलिङ्गवाक्यैर्विद्यारूपक्रतौ विनियोगोऽवगम्यते नेति । किं 'मनसैषु ग्रहा अगृह्यन्त मनसास्तुवन्त
मनसाशंसन्' इति स्तोत्रशस्त्राद्यनुबन्धान्वयात् 'तेषामेकैक एव तावान्यावानसौ पूर्वः' इत्यतिदेशात्
फलसम्बन्धसम्भवात् विद्याविधिः कल्प्यः, उत विधिप्रत्ययाश्रवणात् वेदनाश्रवणाच्च न कल्प्य इति ।
अस्मिन्नधिकरणे सूत्रकारोक्तस्यार्थजातस्य भाष्यकारैरेव सुव्यक्तं विवृतत्वात् पूर्वपक्षसिद्धान्तस्वरूपोपपादन-
मात्रेण स्वयमपि किञ्चिदाचष्टे । तेन भाष्य एवान्तेवासिभिरापादचूडमत्यन्तादरेणाधिकरणार्थश्चिन्तनीयः ।
अत्र हि मनश्चिताद्यग्नयः पूर्वमिष्टकचिताग्न्यन्वयेन पूर्वप्रसक्तक्रियामयक्रत्वनुप्रवेशेन क्रियारूपाः, किं वा
परिकल्पितविद्यामयक्रत्वनुप्रवेशेन विद्यारूपा इति चिन्ता । अत्र पूर्वपक्षाभिप्रायमनुवदति—अङ्गमिति ।
पूर्वप्रसक्तेष्टकचितसमुपस्थापितस्य क्रतोरेव मनश्चितादिरप्यङ्गं स्यात् । अयमर्थः—पूर्वमपि क्रिया-
मयक्रतुर्नश्रुतः अथाप्यव्यभिचरितक्रतुसम्बन्धीष्टकचिताग्निश्रवणबलात् परिकल्प्यत एव । तस्यैवात्र
प्रकरणात् सन्निहितस्यैव क्रतोर्मनश्चितादिरपि विकल्पादङ्गमस्तु । तदिदमाह—बुद्धीति । मनश्चित्प्रभृ-
तिः स्वयं बुद्ध्यात्मापि अङ्गिसाकाङ्क्षत्वात् पूर्वप्रसक्तस्य प्रकरणोपस्थापितस्य क्रियामयक्रतोरेवाङ्गं स्यादि-
त्यर्थः । ननु स्वयं ज्ञानात्मकं क्रियामयक्रतोः कथमङ्गं स्यादित्याशङ्क्य तत्र दृष्टान्तमाह—यथेति

यथा द्वादशाहे मानसग्रहस्य क्रियामयक्रत्वङ्गत्वं तथात्रापि स्वरूपतो विद्यारूपाणामपि मनश्चितादीनां क्रियामयक्रत्वङ्गत्वं स्यादित्यर्थः । तत्र हेत्वन्तरमप्यस्तीत्याह—तद्वीर्यस्येति । इष्टकचितादीनां वीर्यं मनश्चितादिष्वतिदिश्यते । तेनेष्टकचितादीनां यथा क्रियामयक्रतूपकारसामर्थ्यम्, एवं मनश्चितादीनामपि तत्सामर्थ्यान्वयस्य विद्यमानत्वात् क्रियामयक्रत्वनुप्रवेशेनइत्यर्थः । तदिदं निराकरोति—न सदिति । तदेतदुपपादयति—उदित इति । अयमर्थः—स्ववाक्ये विद्यामयक्रत्वभावे हि पूर्ववाक्यपरिकल्पितक्रियामयक्रत्वनुप्रवेशे मनश्चितादीनां सापेक्षत्वं स्यात् । स्ववाक्य एव श्रूयमाणानुबन्धादिपरिकल्पितो विद्यामयक्रतुरस्ति । तेन स्ववाक्यस्थं विद्यामयक्रतुं हित्वा पूर्ववाक्यपरिकल्पितेन क्रियामयक्रतुना मनश्चितादयस्सम्बध्यन्त इति न कल्पनीयमिति । श्रुत्याद्यैरिति—स्ववाक्ये विद्यामयक्रतुरस्तीति श्रुतिरेवोपपादयतीत्यर्थः । तर्हि क्रियामयक्रत्वनुप्रविष्टानामिष्टकचितानां सामर्थ्यातिदेशादत्रापि मनश्चितादीनां क्रियामयक्रत्वनुप्रवेशो ह्यवश्यमङ्गीकर्तव्य इति मयैवोक्तं तत्र किमुत्तरं दत्तमित्याशङ्क्याह—उपकृतीति । अयमर्थः—अतिदेशो हि साम्याद्भवति, तेनेष्टकचितादीनां स्वाङ्गिभूतक्रियामयक्रत्वनुप्रवेशेन यत्सामर्थ्यमस्ति, तत्सामर्थ्यं मनश्चितादीनां स्वाङ्गिभूतविद्यामयक्रत्वनुप्रवेशेनैवास्तीति नातिदेशविरोधः ॥ ३७५ ॥

पद०—अङ्गमित्यादि । वाजसनेयकेऽग्निरहस्ये 'मनश्चितो वाक्चितः प्राणचितश्चक्षुश्चितश्श्रोत्रचितः कर्मचितोऽग्निचितः' इति मनश्चिदादयोऽग्नय आम्नाताः, तत्र द्वादशाहे मानसं यथा—द्वादशाहसाध्ये क्रियारूपेऽपि क्रतुविशेषे दशमेऽहनि विशेषतो वचनाभावादविवाक्यसंज्ञे क्रियमाणस्य पृथिव्या पात्रेण समुद्रस्य सोमस्य प्रजापतये देवतायै गृह्यमाणस्य ग्रहणासादनहवनाहरणोपाह्वानभक्षणादिरूपग्रहकल्पस्य मनसैव क्रियमाणतया मानसस्य यथा अङ्गत्वेन सम्बन्धः । बुद्ध्यात्मा मनश्चित्प्रभृतिराग्निरपि पूर्वप्रसक्तेष्टकचितसमुपस्थापितस्य क्रतोरङ्गं स्यात्—तथा बुद्धिकल्पनारूपतया बुद्ध्यात्मको मनश्चिदादिरग्निरपि एतत्पूर्वप्रकरणस्थेष्टकचिताग्निना अव्यभिचरितक्रतुसम्बन्धितया समुपस्थापितस्य क्रतोरङ्गं स्यात् । तद्वीर्यस्यातिदेशात्—क्रियामयक्रत्वनुप्रविष्टानामिष्टकचिताग्नीनां सामर्थ्यस्य 'तेषामेकैक एव तावान् यावानसौ पूर्वः' इति वाक्येन मनश्चिदाद्यग्नावतिदेशात् । क्रतोरङ्गं स्यादिति पूर्वेणान्वयः । इति सन्न—इत्याशङ्कनं साधु न भवति । अत्रैव—अस्मिन्मनश्चिदाद्यग्निप्रकरण एव । श्रुत्याद्यैः—'विद्यया हैवैत एवंविदश्चिता भवन्ति' इति वाक्येन विवृतया 'ते हैते विद्याचित एव' इति श्रुत्या 'तान्हैतानेवंविदे सर्वदा सर्वाणि भूतानि विचिन्वन्त्यपि स्वपते' इति वाक्यप्रतिपन्नेन लिङ्गेनार्थसामर्थ्यरूपेण 'एवंविदे विचिन्वन्ति' इति वाक्येन च । विद्यात्मकोऽङ्गी उदितो हि—विद्यात्मकः क्रतुरूपोऽङ्गी प्रतिपन्नो हि । अतस्स्वप्रकरणलब्धं स्वसजातीयं विद्यामयं क्रतुं विसृज्य प्रकरणान्तरे कल्प्यं विसजातीयं क्रियामयं

क्रतुं मनश्चिदादयो नाङ्गत्वेन सम्बन्द्धुमर्हन्तीति भावः । तस्मिन्—मनश्चिदादावग्नौ । अतिदेशः—'तेषामेकैक एव' इत्यादिना इष्टकचिताग्निवीर्यतुल्यवीर्यातिदेशः । उपकृतिसमताबोधनार्थः—इष्टकचिताग्निस्स्वाङ्गिभूतक्रियामयक्रतोर्यावदुपकरोति तावदयं मनश्चिदाद्यग्निरपि स्वाङ्गिभूतविद्यामयक्रतोरुपकरोतीत्युपकारसाम्यमात्रबोधनार्थः । नतु क्रियामयक्रत्वनुप्रवेशकृतसाम्यबोधनार्थस्स इति भावः ॥ ३७५ ॥

कल्प्यो ह्यत्र क्रियात्मा क्रतुरपि तदपि प्रागुपात्ताङ्गशक्त्या
वाक्यस्थैश्चानुबन्धैरिह समुपनतो भाति विद्यामयस्तु ।
दूरस्थाकृष्टयोगात् स्ववचनपठिताकृष्टयोगो लघीयान्
अप्राप्तेऽर्थे विधित्वं ह्यनुवदनसमेऽप्याश्रितं तद्वदत्र ॥ ३७६ ॥

इति पूर्वविकल्पाधिकरणम् ॥ १०२ ॥

चिन्ता—नन्वत्र भवता कल्प्यविद्यामयक्रत्वनुप्रवेशो मनश्चितादीनामुच्यते ततो वरं पूर्वसिद्धक्रियामयक्रत्वनुप्रवेश इति चोदकस्य कस्यचिन्मन्दस्योत्तरमाह—कल्प्य इति । अत्र विद्यामयक्रतुरेव न कल्प्यते पूर्वं क्रियामयक्रतुरपि कल्प्य एव तेन पूर्वकल्पितक्रियामयक्रतुमाकृष्य तेन मनश्चितादीनामन्वयाद्वरमत्रैव परिकल्पितविद्यामयक्रत्वन्वय इत्यर्थः । अयमत्र शब्दान्वयः—क्रियात्मा क्रतुरपि कल्प्य एव तच्च कल्पनं प्रागुपात्ततदङ्गशक्त्यैव क्रियते । अत्र कल्प्यस्य विद्यामयक्रतोर्वैषम्यमाह—वाक्यस्थैरिति । वाक्यस्थैरेवानुबन्धैरिह समपनतो विद्यामयक्रतुर्भाति प्रकाशते । तेन परवाक्यस्थानुबन्धपरिकल्पितक्रियामयक्रतोश्श्रेयानेवासौ स्ववाक्यस्थानुबन्धपरिकल्पितो विद्यामयक्रतुरिति तदन्वय एव मनश्चितादीनामित्यर्थः । अस्मिन्नर्थे न्यायानुग्रहं विशदं दर्शयति—दूरस्थेति । दूरस्थैराकृष्टस्य च योगात् स्ववचनपठितैराकृष्टस्य च योगो लघीयानेव । लघुरक्षाश्रयणं हि न्यायप्राप्तम् । तर्हि विद्यामयक्रतोरत्र विधिप्रत्ययो नास्ति साक्षाद्वेदनशब्दश्च नास्तीत्याशङ्क्य विधिश्रवणाभावेऽपि विधिकल्पनं कर्मकाण्ड एव सम्मतमित्याह—अप्राप्तेऽर्थे इति । विद्यारूपक्रत्वनुप्रवेशे प्रमाणतःप्रतिपन्ने वेदनशब्दाभावोऽपि न दोषायेतिशेषः । शेषमशेषमपि भाष्य एव विशदं द्रष्टव्यम् ॥ ३७६ ॥

इति पूर्वविकल्पाधिकरणम् ॥ १०२ ॥

पद०—कल्प्यो ह्यत्रेत्यादि । अत्र क्रियात्मा क्रतुरपि कल्प्यो हि—अत्र प्रकरणे क्रियारूपः क्रतुरपि कल्पनीय एव हि । नतु श्रुत इत्यर्थः । तदपि—तथाकल्पनमपि । प्रागुपात्त ङ्ग-

शक्त्या—पूर्वोदाहृतेष्टकचितागिनरूपक्रत्वङ्गसामर्थ्येन । न तु श्रुत्येत्यर्थः । विद्यामयस्तु–विद्यारूपः क्रतु-स्तु । वाक्यस्थैश्चानुबन्धैः—स्ववाक्यस्थैरेव श्रुत्यादिभिरनुबन्धैः । इह—स्वप्रकरण एव । सम्मुपनतो भाति—एकजातीयत्वस्वप्रकरणस्थत्वादिभिस्सम्बद्ध एव भाति । दूरस्थाकृष्टयोगात्—प्रकरणान्तरस्थैः क्रत्वङ्गादिभिराकृष्टस्य योगात् अङ्गित्वेन सम्बन्धात् । स्ववचनपठिताकृष्टयोगः—स्ववचनपठितै-श्श्रुतिलिङ्गवाक्यैराकृष्टस्य विद्यामयक्रतोरङ्गित्वेन सम्बन्धः । लघीयान्–बुद्धिसौकर्यादिभिर्न्याय्यः । अर्थे अप्राप्ते विधित्वं अनुवदनसमेऽप्याश्रितं हि—प्रतीयमानेऽर्थे प्रमाणान्तराविषये सति वाक्यस्य विधि-रूपत्वं अनुवादसरूपेऽपि वाक्ये 'उपरि हि देवेभ्यो धारयति' इत्यादिरूपे तान्त्रिकैरङ्गीकृतं हि । तद्वदत्र–तथात्रापि विधिप्रत्ययाश्रवणेऽपि वाक्यस्य विधिरूपत्वमप्राप्तार्थसामर्थ्यात् कल्प्यत इत्यर्थः ॥ ३७६ ॥

इति पूर्वविकल्पाधिकरणम् ॥ १०२ ॥

---

## शरीरेभावाधिकरणम् ॥ १०३ ॥

सूत्रम्—एक आत्मनश्शरीरे भावात् ॥ ४०५ ॥

तत्कालाकारिणस्स्यादहमितिभजने कञ्चुकस्यात्मनो धीः
आसत्तेर्मामुपास्स्वेत्युदितवदिति चेन्नान्यथा सन्निकर्षात् ।
शुद्धो ह्यात्मात्र साध्यः फलमतिरविनाभाविनी वोढृकृत्ये
बुद्ध्यासन्नेऽन्तरङ्गे सति विधिनियता तत्क्रतुन्यायसिद्धिः ॥ ३७७ ॥

चिन्ता०—अत्र पूर्वाधिकरणं प्रसङ्गादायातम्, तत्पूर्वाधिकरणेन सङ्गतिर्भाष्यकारैरेवोक्ता "सर्वासु परविद्यासूपास्योपासनस्वरूपवदुपासकस्वरूपस्यापि ज्ञातव्यत्वमुक्तम् 'त्रयाणामेव चैवमुपन्यासः प्रश्नश्च' इति । वक्ष्यति चास्य प्रत्यगात्मनः परमात्मात्मकत्वेनानुसन्धानं 'आत्मेति तूपगच्छन्ति ग्राहयन्ति च' इति । किमयं प्रत्यगात्मा ज्ञाता कर्ता भोक्तेहामुत्र सञ्चारक्षमोऽनुसन्धेयः, उत प्रजापतिवाक्योदितापहत-पाप्मत्वादिस्वरूपः" इति । अयमत्र भावः—लिङ्गभूयस्त्वाधिकरणे सर्वविद्योपास्यस्य नारायणस्य-निरूपणं कृतम्, अधुना सर्वास्वपि विद्यासूपासकस्यच उपास्यविशेषणभूततया स्वयमप्यनुसन्धेयस्य जीवस्य स्वरूपं निरूप्यत इति । तदर्थविचारस्तु–'अहं ब्रह्मास्मि' इति परमात्मशरीरतया प्रत्यगात्मानुसन्धेयः, स किं ज्ञातृत्वकर्तृत्वभोक्तृत्वाद्याकारोऽनुसन्धेयः, उत प्रजापतिवाक्योक्तापहतपाप्मत्वाद्याकारेणानुसन्धेय

इति । तदर्थं विचार्यते—किं 'यथाक्रतुरस्मिँल्लोके' इति यथोपासनं प्राप्तिरितिवचनं परमात्ममात्रविषयम्, उत प्रत्यगात्मविषयमपीति । किं 'तं यथायथोपासते तथैव भवति' इति तच्छब्दनिर्देशो यथोपासनं प्राप्तिरितिवचनस्य परमात्मपरतामवगमयति नेति । किमत्र तच्छब्दो जीवशरीरपरमात्मपरः, उत परमात्ममात्रपर इति । अत्र पूर्वपक्षमारचयति—तत्कालाकारिण इति । 'त्वं वा अहमस्मि भगवो देवते' इत्यादिभिरहंग्रहेण भगवदुपासनमुक्तम्, अहमिति बुद्धिस्तु तत्कालाकारयुक्त एवात्मनि वर्तते । तेनाहमिति परमात्मभजने कञ्चुकभूतस्य जीवस्य धीस्तत्कालाकारेण युक्तस्य जीवस्य स्यात् । तेन कर्तृत्वभोक्तृत्वादियुक्तजीवात्मस्वरूपमेवोपासनदशायामनुसन्धेयमिति । तदिदमाह—आसत्तेरिति । सन्निहितत्वादुपासनदशायामित्यर्थः । तत्र दृष्टान्तमाह—मामुपास्स्वेत्युदितवदिति । यथा प्रतर्दनविद्यायामिन्द्रेण मामुपास्स्वेत्युक्ते तादात्विकसहस्राक्षत्वादियुक्त एवोपास्यः, न पुनरागामिमुक्ताकारयुक्तः, तद्वदत्रापीति । तदिदं निराकरोति—नेति । तत्र हेतुमाह—अन्यथेति । प्रकारान्तरेण सन्निकर्षस्य विद्यमानत्वादित्यर्थः । तदेव प्रकारान्तरमुपपादयति—शुद्ध इति । द्वे हि रूपे जीवस्य शुद्धमशुद्धञ्च । यत् शुद्धं तदेवोपादेयम् । यदेवोपादेयं तदेवोपासनदशायामनुसन्धेयम्; यथोपासनं फलस्यैव श्रुतिभिराम्नातत्वात् । तेन शुद्धमेव रूपं बुद्धिसन्निहितमित्युपपादयितुं शुद्धस्यैव रूपस्य फलत्वं तावदाह—शुद्धो ह्यात्मात्र साध्य इति । अस्तु शुद्धस्य फलत्वम्, अथापि कथं तस्य बुद्धिसन्निहितत्वमित्यत्राह—फलमतिरिति । 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यादौ स्वर्गफलानुसन्धानेन हि स्वर्गार्थिप्रवृत्तिः एवमत्रापि फलभूतशुद्धस्वरूपानुसन्धानसाहित्येनैवोपासनप्रवृत्तिरिति बुद्धिसन्निहितत्वसिद्धिश्शुद्धस्यैव रूपस्य । अत्र तत्क्रतुन्यायोऽप्यमुमेवार्थं विशदमुपपादयतीत्याह—शुद्ध्यासन्न इति । शुद्ध्यासन्नेऽन्तरङ्गे सति शुद्धस्वरूपे तत्क्रतुन्यायसिद्धिः प्रमाणेन नियमिता भवति । अतश्शुद्धमेव स्वरूपमनुसन्धेयमित्यर्थः ॥ ३७७ ॥

पद०—तत्कालाकारिण इत्यादि । अहमितिभजने—'त्वं वाहमस्मि भगवो देवते' इत्यादिवाक्यविहिते अहङ्ग्रहेण भगवदुपासने । कञ्चुकस्य आत्मनः—कञ्चुकवद्भगवच्छरीरभूतस्य जीवात्मनः । तत्कालाकारिणो धीस्स्यात्—उपासनकाले यदाकारः पुरुषस्तदाकारिण एवानुसन्धानं स्यात् । आसत्तेः—उपासनदशायां तावदाकारस्यैव सन्निहितत्वादित्यर्थः । मामुपास्स्वेत्युदितवत्—प्रतर्दनविद्यायामिन्द्रेण मामुपास्स्वेत्युक्तं तत्र यथा सन्निहितसहस्राक्षत्वाद्याकार एवेन्द्र उपास्यो न तु मुक्तिकालिकरूपविशिष्ट इन्द्रस्तद्वदित्यर्थः । इति चेन्न—इति शङ्क्यते चेन्नैतद्युक्तम् । अन्यथा सन्निकर्षात्—प्रकारान्तरेण सन्निकर्षस्य विद्यमानत्वादित्यर्थः । तदेवोपपादयति—शुद्ध इत्यादिना । अत्र—अत्र

मोक्षसाधनप्रकरणे । शुद्ध आत्मा हि—अपहतपाप्मत्वादिगुणाष्टकविशिष्टतया परिशुद्धरूपः खल्वात्मा। साध्यः—फलत्वेन बुद्धिसन्निहितः । बोद्धृकृत्ये—बोद्धुरुपासकस्य कृत्ये कर्तव्यतया विहिते उपासने। फलमतिः अविनाभाविनी—फलदशानुसन्धानं अविनाभूतम् । यथोपासनं फलस्याम्नातत्वादिति भावः। बुद्ध्यासन्ने—उक्तरीत्या फलतया बुद्धिसन्निहिते। अन्तरङ्गे—यावदात्मभावित्वादव्यवधानसिद्धत्वाच्चान्तरङ्गभूते। सति—श्रेष्ठभूते शुद्धस्वरूपे। तत्क्रतुन्यायसिद्धिः—'यथाक्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवति' इति श्रुत्युक्ता यथोपासनं फललाभ इति न्यायसिद्धिः । विधिनियता—उक्तश्रुतिसिद्धा भवति । न ह्यशुद्धरूपे तन्न्यायसिद्धिरिति भावः ॥ ३७७ ॥

कर्तुर्भोक्तृत्वमात्रं गणयितुमुचितं दृष्टभोगार्थयत्न
स्वर्गाद्यर्थेऽन्यदेहानुगतिरपि परं स्वाधिकारानुविद्धा ।
मुक्त्यर्थे प्राप्त्यवस्थाप्रणिधिकथनतस्तत्क्रतुन्यायवाचां
तद्युक्तोपास्यरूपं विषय इति कुतोऽतिप्रसङ्गादिशङ्का ॥ ३७८ ॥

चिन्ता०—ननु कर्तुर्यथावस्थितात्मस्वरूपमनुसन्धेयमित्युक्ते कर्मकाण्डे कर्मकर्तुरपि तादृशमेव रूपमनुसन्धेयं स्यात्, एवञ्च तत्रैव जीवस्वरूपयाथात्म्ये निरूपिते निरर्थक एव वेदान्तशास्त्रे जीवस्वरूपनिरूपणविस्तरस्स्यादित्याशङ्कापरिहारार्थं लौकिकवैदिकाद्यनुष्ठानकर्तृभूतजीवस्वरूपानुसन्धानविभागं विशदमेव दर्शयति—कर्तुरिति । त्रिविधो हि कर्ता, लौकिकं शयनासनभोजनकृष्यादिकं कर्म कश्चित् करोति, परस्तु यागदानहोमादिकं वैदिकं कर्म । तृतीयः पुनः परब्रह्मोपासनं परमपुरुषार्थप्राप्तिहेतुभूतम् । त्रिष्वप्यधिकारिषु कर्तृत्वानुसन्धानमस्त्येव । तत्र प्रथममाह—दृष्टेति। दृष्टभोगार्थयत्ने भोक्ता कश्चिदस्तीत्येतावन्मात्रमेव गणयितुमुचितम् । स पुनर्देहो वा देहातिरिक्तो वेति विशेषनिश्चयो नास्ति अनुपयोगात् । दृश्यन्ते हि देहातिरिक्तात्मस्थैर्यपरिज्ञानविधुराणामपि पामराणां स्वाभिमतप्राप्तिहेतवः प्रवृत्तयश्शतशस्सहस्रशोऽपि । अथ द्वितीयं प्रकटयति—स्वर्गादीति । अयमत्र शब्दार्थः—स्वर्गाद्यर्थे कर्मणि स्वाधिकारानुविद्धा ब्राह्मणत्वादिस्वाधिकारानुविद्धा कालान्तरसम्बन्धिफलसम्बन्धानुवि[illegible]व देहान्तरानुगतिरात्मनो गणयितुमुचिता । नैतावता वेदान्तवेद्यार्थसिद्धिः । तृतीयमपि पक्षमाह—मुक्त्यर्थ इति । मुक्त्यर्थे पुनरुपासने प्राप्त्यवस्थाप्रणिधिकथनतः उपासनदशायां चिन्तनीयत्वकथनेन तत्क्रतुन्यायवाचा यत् चिन्त्यं तदेव प्राप्यमित्यर्थो गमित इति ज्ञापित इति अतिप्रसङ्गादिशङ्का नास्त्येव । अयमत्र भावः—वेदान्त एव हि तत्क्रतुन्यायो विशेषतः ख्यापितः, न पुनः कर्मकाण्डे, तेनोपासनदशायां प्राप्त्यवस्थानुसन्धानं नियमेन

कर्तव्यम् । कर्मकाण्डे तु कालान्तरभाविस्वर्गादिफलभोक्तृत्वानुरूपस्थैर्यानुसन्धानमात्रं कर्मारम्भे कर्तव्यमिति ॥ ३७८ ॥

पद०—कर्तुरित्यादि । दृष्टभोगार्थयत्ने—दृष्टभोगा ऐहिकसुखानि तदर्थप्रयत्ने क्रियमाणे सति । कर्तुर्भोक्तृत्वमात्रं गणयितुमुचितम्—तदानीं तदनुष्ठातुर्जीवस्य फलभोक्तृत्वशक्तिमात्रं चिन्तयितुं युक्तम् । न त्वन्यत् उपयोगाभावात् , तावदाकारानुसन्धानेनैव साधनानुष्ठानप्रवृत्तिसिद्धेरिति भावः । स्वर्गाद्यर्थेऽन्यदेहानुगतिरपि परं स्वाधिकारानुविद्धा—लोकान्तरदेहान्तरसम्भावितस्वर्गादिफलसाधनानुष्ठानदशायां देहान्तरप्राप्तियोग्यतात्मकनित्यत्वादिधर्मानुसन्धानं परम् अतीव स्वाधिकारनियतम् । आत्मनित्यत्वज्ञानाभावे लोकान्तरदेहान्तरभाविफलसाधनानुष्ठानप्रवृत्त्यसम्भवादिति भावः । मुक्त्यर्थे प्राप्यवस्थाप्रणिधिकथनतः–मोक्षार्थसाधनानुष्ठानदशायां प्राप्यवस्थायाश्चिन्तनीयत्वस्य श्रुत्या कथनात् । तत्क्रतुन्यायवाचाम्—यथाक्रतुरित्यादिश्रुतीनाम् । तद्युक्तोपास्यरूपं विषयः—तादृशप्राप्तिदशासम्भाविताकारविशिष्टोपास्यस्वरूपं विषयः । इति कुतोऽतिप्रसङ्गादिशङ्का—एवं जीवात्मनस्तत्तत्फलसाधनानुष्ठानदशायामविनाभूतमुपयुक्तं प्रमाणसिद्धमनुसन्धेयं तत्तद्रूपं तदातदा व्यवस्थितम् , अतो नातिप्रसङ्गावकाशः । अयं भावः—वेदान्त एव हि तत्क्रतुन्यायो विशेषतः ख्यापितो नपुनः कर्मकाण्डे । तेनोपासनदशायां प्राप्यवस्थानुसन्धानं नियमेन कर्तव्यम् । कर्मकाण्डे तु कालान्तरभाविस्वर्गादिफलभोक्तृत्वानुरूपात्मस्थैर्यानुसन्धानमात्रमेव कर्मारम्भे कर्तव्यमिति ॥ ३७८ ॥

विद्याभेदेषु वेद्याकृतिविषमतया यावदुक्तेऽपि चिन्त्ये
प्राप्यं सर्वोपपन्नं खलु तदिह कथं प्राप्यचिन्तानिषेधः ।
तस्माद्बद्धस्य चिन्तास्त्विति न कलुषितो नह्यहंशब्दमुख्यः
प्राजापत्यात्तु वाक्यादकलुषदशया भावनीयत्वसिद्धिः ॥ ३७९ ॥

इति शरीरेभावाधिकरणम् ॥ १०३ ॥

चिन्ता०—अत्र कश्चिच्चोदयति–विद्याभेदेषु वेद्याकाराणां विषमत्वात् यावदुक्तमेव चिन्त्यम् , अन्यथा परस्परसङ्करप्रसङ्गात् । प्राप्यं पुनरुभयविभूतिविशिष्टम् , तेन बद्धरूपस्यापि सर्वान्तर्गतत्वेन ब्रह्मविशेषणत्वात् प्राप्यत्वमस्त्येव । तत् कथं तस्य रूपस्याप्राप्यत्वात् चिन्तनीयत्वं नास्तीति निषेधः क्रियते । तस्मात् सन्निहितस्य बद्धरूपस्य चिन्तास्त्विति । तदिदमाह—विद्येति । शब्दार्थस्तु—सद्विद्यादहरविद्यादिविद्याविशेषेषु वेद्याकाराणां भिन्नत्वात् यावदुक्तमेव चिन्त्यम् । तत्र ब्रह्मविशेषणतया ‘ अहं मनुर-

भवं सूर्यश्च ' इत्यहङ्ग्रहोपासनात् जीवस्यापि चिन्तनीयत्वमस्ति, प्राप्यं तु ब्रह्म सर्वविशेषणविशिष्टम्, सर्वशब्दार्थे बद्धस्यापि जीवस्यान्तर्गतत्वात् बद्धरूपमपि ब्रह्मविशेषणत्वादनुसन्धेयमस्तु सन्निहितपरित्यागायोगात् इति । तदेतद्दूषयति—नेति । प्रतिक्षेपमेव विवृणोति—कलुषित इति । अयमर्थः—अहंशब्दार्थो हि मुख्य एवाहङ्ग्रहोपासने ब्रह्मविशेषणतयानुसन्धेयः । तत्तु विशुद्धमेव रूपम् । तेनाहंशब्दश्रुतिविरोधात् कलुषितं रूपं नानुसन्धेयममुख्यत्वात् । किञ्च प्रजापतिवाक्ये हि ब्रह्मविद्याशेषतयानुसन्धेयं जीवात्मस्वरूपमभिधीयते । तत्तु विशुद्धमेव गुणाष्टकविशिष्टमभिहितम् । तस्मात् विशुद्धानुसन्धानमेव जीवस्यापि वेदान्तेषूपासनदशायां विहितमिति नाशुद्धरूपचिन्तनप्रसङ्गः । अत एव भगवता पराशरेण योगिध्येयार्थनिर्णये ' हिरण्यगर्भो भगवान् ' इत्युपक्रम्य ' अशुद्धास्ते समस्तास्तु देवाद्याः कर्मयोनयः ' इत्यशुद्धानामचिन्तनीयत्वमुक्तमिति । तदिदमाह—प्राजापत्यादिति ॥ ३७९ ॥

इति शरीरेऽभावाधिकरणम् ॥ १०३ ॥

पद०—विद्याभेदेष्वित्यादि । विद्याभेदेषु—सदक्षरदहरादिविद्याविशेषेषु । वेद्याकृतिविषमतया—वेद्याकाराणां गुणानां विषमतया न्यूनाधिकभावप्रयुक्तवैषम्येण । यावदुक्ते—तत्तद्विद्योक्तगुणादिक एव । चिन्त्येऽपि—चिन्तनीये सिद्धेऽपि । सर्वोपपन्नम्—चिन्तिताचिन्तितभेदं विना उभयविभूतिस्थसर्ववस्तुरूपविशेषणविशिष्टमेव ब्रह्म । प्राप्यमिति सिद्धं खलु । तदिह प्राप्यचिन्तानिषेधः कथम्—तस्मात्कारणादिह विषये प्राप्यचिन्तानिषेधः कथम् । उक्तरीत्या सर्ववस्तुविशिष्टब्रह्मरूपप्राप्यान्तर्गतस्य बद्धरूपस्य चिन्तानिषेधः कथं क्रियत इति भावः । तस्माद्बद्धस्य चिन्तास्तु—तस्माद्बद्धरूपस्यापि प्राप्यकोट्यन्तर्गतत्वात् बद्धरूपस्य उपास्यविशेषणतया चिन्तनमस्तु । इति न—इत्याशङ्कनं न युक्तम् । कलुषितः—बद्धः । अहंशब्दमुख्यो न हि—अहंशब्दस्य मुख्यार्थो नखलु । कलुषिताकारो हि न स्वाभाविकः, अतस्स्वाभाविकापहतपाप्मत्वाद्याकारविशिष्ट एवाहंशब्दमुख्यार्थः । अतस्स एवानुसन्धेयः । प्राजापत्याद्वाक्यात्तु—' अपहतपाप्मा विजरः ' इत्यादिकात् प्रजापत्युक्ताद्वाक्यात् । अकलुषदशया—मुक्तिकालिकगुणाष्टकविशिष्टाकारेण । भावनीयत्वसिद्धिः—जीवस्य चिन्तनीयत्वसिद्धिः । तथा च प्रजापतिवाक्यादेव जीवात्मनोऽनुसन्धेयत्वं सिध्यति, तत्र चापहतपाप्मत्वाद्याकार एव जीवात्मानुसन्धेयः प्रतिपन्न इति तादृशाकारस्यैवानुसन्धानं प्रामाणिकमिति भावः ॥ ३७९ ॥

इति शरीरेभावाधिकरणम् ॥ १०३ ॥

## अङ्गावबद्धाधिकरणम् ॥ १०४ ॥

सूत्रम्—अङ्गावबद्धास्तु शाखासु हि प्रतिवेदम् ॥ ४०७ ॥

उद्गीथादेर्विशेषे भजनविधिरसौ स्यात् स्वसान्निध्यगीते
मैवं सर्वाङ्गिभूतक्रतुमुखत इहाशेषसान्निध्यसिद्धेः ।
सामान्यं व्यक्त्यपेक्षक्रियमपि नियमादर्शने व्रीहितावत्
शब्दश्चोद्गीथमात्रं वदति नतु भिदां छागनीतिस्तु नात्र ॥ ३८० ॥

इत्यङ्गावबद्धाधिकरणम् ॥ १०४ ॥

चिन्ता०—पूर्वस्मिन्नधिकरणे यत्र यत्र ब्रह्मण उपास्यत्वं तत्रतत्र सर्वत्रापि शुद्धस्य जीवस्योपास्यत्वमुक्तम्, अधुना पुनर्यत्रयत्र शाखासूद्गीथानुप्रवेशस्तत्रतत्र सर्वत्राप्युद्गीथाद्युपासनानुप्रवेशोऽस्ति नेति शङ्कया सङ्गतिः । तदर्थविचारस्तु—'ओमित्येतदक्षरमुद्गीथमुपासीत' इति क्रत्वङ्गाश्रयोद्गीथाद्युपासनानि प्रतिशाखं व्यवतिष्ठेरन्, उत न व्यवतिष्ठेरन्निति । तदर्थं विचार्यते—किं 'उद्गीथमुपासीत' इत्युद्गीथशब्द उद्गीथमात्रे वर्तते, उत स्वरभेदभिन्नोद्गीथे इति । किं शाखाविशेषस्य स्वरभेदयोगात् स्वरभेदभिन्नोद्गीथव्यक्तेरेव सन्निधिः, उत शेषिभूतक्रतोस्सर्वशाखास्वेकत्वमुखेन सर्वोद्गीथव्यक्तीनां सन्निधिरिति । पूर्वमुद्गीथोपासनयोर्भेदाभेदचिन्ता कृता, समनन्तरं तस्यैवोद्गीथोपासनस्याश्रयिकर्मत्वेन कर्मफलात् पृथक्फलत्वेन पुरुषार्थत्वं प्रसङ्गाच्चिन्तितम्, अधुना पुनरेकत्राम्नातस्योद्गीथोपासनस्य सर्वत्राम्नातोद्गीथमात्रशेषत्वं प्रतिपाद्यत इत्यर्थविभागात् न पौनरुक्त्यम् । अत्र पूर्वपक्षमाह—उद्गीथादेरिति । असौ भजनविधिस्स्वसान्निध्यगीते उद्गीथविशेष एव स्यादिति । तमिमं पूर्वपक्षं प्रतिक्षिपति—मैवमिति । प्रतिक्षेपप्रकारं दर्शयति—सर्वाङ्गीति । सन्निधिवशादेव हि तत्रैवोपासनस्यान्वय इति भवतोच्यते सन्निधिस्सर्वेषामप्युद्गीथानां समान एव सर्वशाखाप्रत्ययन्यायेन सर्वाङ्गिभूतक्रतोस्सन्निधाने सिद्धे सर्वेषामप्युद्गीथानामत्रैव सन्निधाने सिद्धे सन्निधिविशेषाभावात् । अयमत्र शब्दार्थः—सर्वोद्गीथाङ्गिभूतक्रतुमुखेनाशेषोद्गीथानामत्रैव सान्निध्यसिद्धेरिति । ननु सामान्यं व्यक्तिविशेषमन्तरेणानुष्ठानयोग्यं न भवति । तेनोद्गीथमिति सामान्येनोक्तं तत्रत्योद्गीथविशेषरूपव्यक्तिमपेक्षते, ततश्च तस्मिन्नेवोद्गीथविशेषे उपासनान्वयः स्यात्; न स्यात्, यथा 'व्रीहिभिर्यजेत' इत्युक्ते व्रीहिमात्रेण यागोऽनुष्ठीयते, एवमत्राप्युद्गीथमात्रान्वयेनोपासनमनुष्ठीयतां नाम । शब्दार्थस्तु—सामान्यं व्यक्त्यपेक्षानुष्ठानमपि नियामकप्रमाणाभावे 'व्रीहिभिर्यजेत' इत्यत्र व्रीहितावत् यं कञ्चन व्यक्तिविशेषमुपादायावतिष्ठते । तर्हि 'पशुना यजेत' इत्यत्रच्छाग एव पर्यवसानं कथं स्यात्? इत्थं स्यात् । तत्र हि विशेषार्थमानमाकाङ्क्षायां पशुशब्दस्य विशेषोपस्थापकच्छाग-

शब्दो मन्त्रवर्णे श्रूयते। इह तु तादृशशब्दविशेषो नास्ति। तस्मादुद्गीथमात्रविषयमुपासनं न पुनस्सन्निहितोद्गीथविषयमिति सिद्धमित्याह—शब्दश्चेति । उद्गीथसामान्यं वदति नतु भिदां नपुनरुद्गीथविशेषमिति ॥ ३८० ॥

इत्यङ्गावबद्धाधिकरणम् ॥ १०४ ॥

पद०—उद्गीथादेरित्यादि । असौ भजनविधिः—'उद्गीथमुपासीत' इत्यादिरूपोऽसौ उपासनविधिरसौ। स्वसान्निध्यगीते—स्वसन्निधिगीते । उद्गीथादेर्विशेषे—शाखाविशेषपठितस्वरविशेषविशिष्टोद्गीथादिविशेष एव। स्यात्। मैवम्—एवं मा शङ्किष्ठाः । सर्वाङ्गिभूतक्रतुमुखत इह अशेषसान्निध्यसिद्धेः—उद्गीथोपस्थितिवेलायामेव सर्वशाखाविहितयावदुद्गीथाङ्गकस्य स्वाङ्गिनः क्रतोरुपस्थित्या सर्वेषामप्युद्गीथानामत्रैव सान्निध्यसिद्धेः । नोद्गीथविशेषस्य सन्निधिविशेषोऽस्ति। सामान्यं व्यक्त्यपेक्षक्रियमपि नियमादर्शने व्रीहितावत्—उद्गीथमिति सामान्योपस्थितावपि तत्सामान्यं व्यक्तिविशेषसापेक्षानुष्ठानकमेव, तथापि विशेषनियामकप्रमाणाभावे 'व्रीहिभिर्यजेत' इत्यत्र व्रीहितया यथा अविशेषेण सर्वव्रीहिव्यक्तय उपस्थाप्यन्ते तद्वत् सर्वा एवोद्गीथव्यक्तयस्सामान्येनोपस्थाप्यन्ते। अनुष्ठानं तु तैस्तैरधिकारिभिस्तत्तद्व्रीहिविशेषैरिव तत्तदुद्गीथविशेषैर्भविष्यति । शब्दश्चोद्गीथमात्रं वदति नतु भिदाम्—'उद्गीथमुपासीत' इत्युद्गीथशब्दश्च उद्गीथसामान्यं वदति नतु व्यक्तिविशेषम्। 'पशुना यजेत' इति सामान्येन विधानेऽपि 'छागस्य वपायाः' इति विशेषश्रवणात् व्यक्तिविशेषपरश्छागशब्दः, अत्र तु न तथा व्यक्तिविशेषसमर्पकं पदमस्तीत्याह—छागनीतिस्तु नात्रेति। अत्र—व्यक्तिविशेषवाचिपदरहिते सामान्योपस्थापकशब्दमात्रयुक्ते उद्गीथप्रकरणे । छागनीतिस्तु—'छागो वा मन्त्रवर्णात्' इत्यधिकरणोक्तन्यायः । न—न सम्भवतीत्यर्थः ॥ ३८० ॥

इत्यङ्गावबद्धाधिकरणम् ॥ १०४ ॥

---

## भूमज्यायस्त्वाधिकरणम् ॥ १०५ ॥

सूत्रम्—भूम्नः क्रतुवज्ज्यायस्त्वं तथाहि दर्शयति ॥ ४०९ ॥

व्यस्तो वैश्वानरात्मा प्रतिनियतफलोदाहृतेश्चिन्तनीयः
कृत्स्नोपास्तौ फलोक्तिस्स्तुतिरिह यदि वा कृत्स्नरूपोऽप्युपास्यः।
मैवं व्यस्तेषु दोषः पृथगनुकथितस्तत्फलोक्तिस्स्तुतिस्स्याद्
दृष्टं ह्यष्टाकपालप्रभृतिषु च तथा तेन चिन्त्यस्समस्तः ॥ ३८१ ॥

चिन्ता०—पूर्वाधिकरणे उद्गीथादिकं प्रस्तुतम्, तत्र सामावयवोद्गीथादेस्समस्तस्य व्यस्तस्य चोपासनं श्रुतिसिद्धमिति पूर्वमेवोक्तम्, एवं वैश्वानरविद्यायां किं समस्तस्योपासनं कार्यम् उत व्यस्तस्य उतोभयस्येति शङ्कया सङ्गतिः। तदर्थविचारस्तु—किं वैश्वानरविद्यायां पृथिव्याद्यवयवस्य वैश्वानरस्य व्यस्तस्यैवोपास्यत्वम्, उत व्यस्तस्य समस्तस्य च, अथवा समस्तस्यैवेति। किं 'उद्दालको हवै भगवन्तः' इत्यादिवाक्ये उपासनविधिर्व्यस्तस्यैव उत व्यस्तस्य समस्तस्य च, अथवा समस्तस्यैवेति। किं प्रत्यवयवं वैश्वानरव्यपदेशात् फलसम्बन्धश्रवणाच्चावयवेषूपासनविधिनानात्वे 'यस्त्वेतमेवं प्रादेशमात्रमभिविमानम्' इति समुदायानुवादः, उत 'अत्त्यन्नं पश्यति प्रियं भवति' इति व्यस्तोपासने फलश्रवणात् 'यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति' इति समस्ते फलश्रवणाच्च उभयत्र विधिर्न्याय्यः, उत एकवाक्यतानुरोधेन 'यस्त्वेतम्' इत्यत्र समस्तस्यैवोपासनविधिः, अवयवोपासनं तु अवयुत्यानुवाद इति। अत्र कश्चिदाह—वैश्वानरविद्यायां व्यस्तोपासने फलनिर्देशात् व्यस्त एव चिन्तनीयः। समस्तोपासने फलनिर्देशस्तु अर्थवाद एव। अथवा व्यस्तोपासनवत् समस्तोपासनेऽपि फलनिर्देशात् व्यस्तश्चिन्तनीयः, समस्तश्चापि तथा चिन्तनीय एवेति। तमिमं पक्षमनुवदति—व्यस्त इति। तदेतत् प्रतिक्षिपति—मैवमिति। तत्रोपपत्तिमाह—व्यस्तेष्विति। अत्र हि व्यस्तोपासनेषु दोषोऽभिधीयते, तेन व्यस्तोपासनेषु फलवचनमर्थवादमात्रमिति कल्पनीयम्। उक्तमेवार्थं वैश्वानरेष्टिवाक्यदृष्टान्तेन द्रढयति—दृष्टमिति। यथा "वैश्वानरं द्वादशकपालं निर्वपेत्' इत्यस्मिन् वाक्ये द्वादशकपालनिर्वापस्यैव विधेयत्वम्, 'पूत एव' इत्यादिना तस्यैव फलनिर्देश उच्यते। अष्टाकपालादीनां न विधिः तत्र फलनिर्देशश्चावयुत्यानुवादमात्रमिति तान्त्रिकगोष्ठीनिष्ठानां निर्णयः। तद्वदत्रापि समस्तस्यैवोपासनं विधीयते न पुनर्व्यस्तस्य। तत्र फलनिर्देशोऽप्यवयुत्यानुवादेन स्तुतिमात्रमेवेति ॥ ३८१ ॥

पद०—व्यस्तो वैश्वानरात्मेत्यादि। वैश्वानरात्मा—'प्राचीनशाल औपमन्यवः' इत्यादिच्छान्दोग्यप्रकरणादौ प्रतिपन्नो द्युमूर्धत्वादिविशिष्टो वैश्वानरात्मा। प्रतिनियतफलोदाहृतेः—'अत्त्यन्नं पश्यति प्रियम्' इत्यादिना तत्तदवयवोपासनस्य व्यवस्थितफलोदाहरणात्। व्यस्तः—द्युप्रभृत्येकैकावयवमात्रविशिष्टः। चिन्तनीयः—उपास्यः। इह—प्रकरणे। कृत्स्नोपास्तौ फलोक्तिः—'यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते स सर्वेषुलोकेषु सर्वेषुभूतेषु सर्वेष्वात्मस्वन्नमत्ति' इति समस्तोपासने फलकथनं तु। स्तुतिः—अर्थवाद एव। यदि वा कृत्स्नरूपोऽपि—समस्तोऽपि। उपास्यः—व्यस्तोपासने फलनिर्देशाद्व्यस्तश्चिन्तनीयः, एवं समस्तोपासने फलनिर्देशात् समस्तोऽपि चिन्तनीयः। मैवम्—एवं न शङ्क्यम्। व्यस्तेषु पृथक् दोषोऽनुकथितः—व्यस्तोपासनविषये विशिष्य 'मूर्धा ते

व्यपतिष्यत्' इति दोषः श्रुतः। तत्फलोक्तिस्स्तुतिस्स्यात् -उदाहृतं फलवचनमर्थवाद एवेति कल्पनोयम्। अष्टाकपालप्रभृतिषु च तथा दृष्टं हि—'वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जाते' इति वाक्ये द्वादशकपालस्यैव विधेयत्वम्, पुत्रगतं पूतत्वादिकं फलम्, अष्टाकपालादीनां विधिः पृथक्फलनिर्देशश्चावयुत्यानुवादमात्रमिति चात्रोक्तमिव पूर्वकाण्डे दृष्टं हि। तेन समस्तश्चिन्त्यः—तेन कारणेन समस्त एवोपास्यः ॥ ३८ ॥

सामस्त्यस्यैव योगे द्रढिमवति महावाक्यतात्पर्यवृत्त्या
व्यस्तेष्वंशाननूद्य स्तुतिनियतनयादान्यपर्यं फलोक्तेः।
नामादीनामुपास्तौ फलमवधितयापेक्षितं भूमवाक्ये
नाप्येवं प्रत्यवायश्श्रुत इति विषमोदाहृतिर्नार्थसिद्ध्यै ॥ ३८२ ॥

इति भूमज्यायस्त्वाधिकरणम् ॥ १०५ ॥

चिन्ता०—अत्र समस्तोपासनमिव व्यस्तोपासनमपि विहितमेव प्रतीयते फलनिर्देशश्चोभयत्रास्ति, इत्थं भूमविद्यायामपि पूर्वमल्पोपासनमुक्त्वा पश्चादुत्तरोत्तरमधिकोपासनमुच्यते तत्र पूर्वेषामुपासनानामल्पाल्पफलमङ्गीकृतम्, अवयुत्यानुवादत्वमपि न कल्पितम्, कथमिदं वैषम्यमुच्यत इति केनाप्यनुयुक्ते वैषम्यद्वयं दर्शयन् समाधातुमुपक्रमते—सामस्त्यस्येति। इत्थमत्र शब्दान्वयः—महावाक्यतात्पर्यवृत्त्या समस्तानुसन्धानस्यास्मिन् वाक्ये योगे समन्वये द्रढिमवति सति व्यस्तेपूपासनेषु वैश्वानरेष्ट्यादिवत् अंशानुवादेन स्तुतिनियतन्यायात् फलनिर्देशस्यान्यपर्यं स्तुतिपरत्वमेव भवति। भूमविद्यायां तु पूर्वस्मादुत्तरस्याधिकफलसाधनत्वेन भूमत्ववचने पूर्वोपासनानामल्पफलत्वमवश्यमङ्गीकार्यम्। नहि निष्फलात् सफलस्याधिकफलत्वं वक्तुं युज्यते अनन्वितत्वात्। अपि तु अल्पफलादधिकफलस्याधिक्येन भूमत्वं वाच्यम्। तेनावधित्वेन पूर्वेषामपि फलसम्बन्धो वाच्य इति वैषम्यसिद्धिः। अत्र हेत्वन्तरमप्याह—नाप्येवमिति। वैश्वानरविद्यायां व्यस्तोपासने प्रत्यवायश्श्रुतः। भूमविद्यायां तु पूर्वपूर्वोपासने प्रत्यवायो न श्रुतः। तेनेदमपि किञ्चिद्वैषम्यम्। तस्मात् विषमस्य दृष्टान्तस्योदाहरणं नार्थसिद्ध्यै उभयत्रैकरूपत्वरूपार्थसिद्ध्यै न भवत्येव ॥ ३८२ ॥

इति भूमज्यायस्त्वाधिकरणम् ॥ १०५ ॥

पद०—सामस्त्यस्यैवेत्यादि। महावाक्यतात्पर्यवृत्त्या—महावाक्यतात्पर्यपर्यालोचनया। सामस्त्यस्यैव—समस्तानुसन्धानस्यैव। योगे—समन्वये। द्रढिमवति—दार्ढ्ययुक्ते सति दृढतयावगते

सतीत्यर्थः । व्यस्तेषु—अवयवोपासनेषु । अंशाननूद्य—जातेष्टिवाक्ये 'यदष्टाकपालो भवति' 'गायत्रियैवैनं ब्रह्मवर्चसेन पुनाति' इत्यादिभिर्द्वादशकपालांशभूतानष्टाकपालनवकपालदशकपालैकादशकपालादीनंशाननूद्य । स्तुतिनियतनयात्—ब्रह्मवर्चसादिफलप्रतिपादकार्थवादन्यायात् । फलोक्तेः—'अत्त्यन्नं पश्यति' इत्यादिव्यस्तोपासनफलवचनस्य । आन्यपर्यम्—स्तुतिपरत्वमेव युक्तम् । भूमवाक्ये—भूमविद्यावाक्ये तु । नामादीनामुपास्तौ अवधितया—उत्तरोत्तरोपासनफलस्य पूर्वपूर्वोपासनफलादुत्कृष्टत्वात्तदुत्कर्षावधितया । फलमपेक्षितम्—पूर्वपूर्वोपासनेष्वपि फलवत्त्वमवश्यमपेक्षितम् । पूर्वोपासनस्य फलवत्त्वाभावे उत्तरोपासनफलस्याधिक्यप्रतिपादनायोगात् । नहि निष्फलात् सफलस्याधिकफलत्वं युज्यते । एवं प्रत्यवायोऽपि न श्रुतः—यथा वैश्वानरविद्यायां व्यस्तोपासने 'मूर्धा ते व्यपतिष्यत्' इत्यादिना अनर्थप्राप्तिरूपः प्रत्यवायः श्रुतः, तथा प्रत्यवायोऽपि न श्रुतः । इति—एवम् । विषमोदाहृतिः—विषमस्य भूमविद्यायामवान्तरफलस्य उदाहृतिर्निदर्शनायोपन्यासः । अर्थसिद्ध्यै न—अभिमतार्थसिद्ध्यै न भवति ॥ ३८२ ॥

इति भूमज्यायस्त्वाधिकरणम् ॥ १०५ ॥

---

## शब्दादिभेदाधिकरणम् ॥ १०६ ॥

सूत्रम्—नाना शब्दादिभेदात् ॥ ४१० ॥

सर्वासु ब्रह्म वेद्यं फलमपि खलु तद्ब्रह्मविद्येति चाख्या
ध्यानाद्युक्त्येकलक्ष्ये विधिरपि भजने सर्वविद्यैक्यमित्थम् ।
तन्नाख्यारूपभेदात् तदुपहितविधौ तेन वैशिष्ट्यसिद्धेः
मिश्रं मध्वादिविद्याफलमिह च पृथक्काम्यविद्यासु चैवम् ॥ ३८३ ॥

चिन्ता०—पूर्वस्मिन्नधिकरणे विद्याविशेषविषयचिन्ता कृता, इदानीं सर्वविद्याविषयचिन्ता क्रियत इति सङ्गतिः । अथवा वैश्वानरविद्यायां समस्तोपासनस्यैवोपपन्नत्वेन व्यस्तोपासनानामभावात् विद्यानानात्वं निराकृतम् , अधुना सद्विद्यादहरविद्योपकोसलविद्यादिषु नानात्वं भेदकप्रमाणानुरोधादुपपाद्यत इति सङ्गतिः । तदर्थविचारस्तु—वेदान्तविधेयानां सर्वासां विद्यानां किमैक्यमेव उत भेद इति । तदर्थं विचार्यते—किं प्रत्ययावृत्तिरूपविदिधात्वर्थोपासनस्य सर्वत्र ब्रह्मकर्मतया रूपाभेदात् अपुनरावृत्तिरूपफला-

भेदाच्चैक्यसमाश्रयणं न्याय्यम्, उतोपास्यब्रह्मण एकत्वेऽपि अपहतपाप्मत्वादिगुणविशिष्टस्योपास्यतयोपासनस्यापि भेदसम्भवात् तादृशोपासनप्रतिपादने निरपेक्षत्वात् वाक्यानां भेदसमाश्रयणं न्याय्यमिति। अत्र पूर्वपक्षी विद्यैक्यं सयुक्तिकमुपपादयति—सर्वास्विति। अत्र प्रथमाधिकरणे संयोगरूपचोदनाख्याविशेषात् विद्यैक्यमुक्तम्, तदत्रापि समानम्। सर्वास्वपि विद्यासु ब्रह्मैव वेद्यमिति रूपमविशिष्टम्। संयोगोऽप्यविशिष्ट इत्याह-फलमपीति। तथा आख्याप्यविशिष्टा ब्रह्मविद्येति। अस्तु त्रितयमिदमविशिष्टम् तथापि चोदना भिद्यते क्वचित् 'विद्यात्' इति, क्वचिच्च 'उपासीत' इति, क्वचिच्च 'निदिध्यासितव्यः' इति, क्वचिच्च 'निचाय्य तं मृत्युमुखात्प्रमुच्यते' इति दर्शनपर्यायेण धातुना मृत्युतरणोपाय-उच्यते। भगवद्गीतादिषु भक्तिशब्देनैव क्रियासमभिहारेणापवर्गसाधनं विधीयते। अतः कथं चोदनाभेदे सति विद्यैक्यशङ्का? मैवम्। भाष्य एव भगवता भाष्यकारेणैव सर्वेषामेवैषां विधीनां छागपशुन्यायेनैकार्थ्यमुपपादितम्। तेनैकार्थ्यं सिद्धम्। अपर्यायप्रायाणामेव हि शब्दानां प्रयोगे चोदनाभेदमाहुस्तान्त्रिकाः। यथा यजति ददाति जुहोतीति। अत्र पुनरेकत्रैव विश्रान्तेर्न चोदनाभेदः। तदिदं दर्शयति—ध्यानादीति। विधिरप्यविशिष्ट एवेत्यर्थः। तस्मात् विद्यैक्यमेवेति। तदेतन्निराकरोति—तन्नेति। अत्राख्यादिभेदरूपं हेतुचतुष्टयमाह—आख्येत्यादिना। आख्याभेदस्तावत् सद्विद्यादहरविद्याभूमविद्येत्यादिः। न च सामान्यनाममात्रैक्यं विशेषनामप्रयुक्तं विद्याभेदं निवारयति यथा 'अथैष ज्योतिरथैष विश्वज्योतिरथैष सर्वज्योतिः' इति विशेषनामप्रयुक्तं भेदं सर्वसाधारणयागादिशब्दमात्रं न निवारयति। तद्वदत्रापि ब्रह्मविद्येति समान्यनाममात्रं विद्याभेदं न निवारयितुं शक्नोति। रूपभेदश्च सर्वास्वपि विद्यासु स्फुटमेवोपलभ्यते। ब्रह्मेति रूपसामान्यं तु तत्तद्विद्यासु प्रतिनियतगुणविशेषप्रयुक्तरूपभेदस्य न परिपन्थितामश्नुते विशेषणभेदाद्विशिष्टभेदस्यापरिहार्यत्वात्। इत्थं हि कर्मकाण्डेऽप्यनुष्ठाननियमः। इत्थं रूपभेदमाख्याभेदञ्चोपपाद्य चोदनाभेदमप्युपपादयति—तदुपहितेति। तत्तद्विद्यासाधारणगुणविशेषितवेदनविधौ 'अर्थेनैव विशेषो हि निराकारतया धियाम्' इति न्यायेन तेनतेनार्थेनैव तत्तद्विद्याभेदसिद्धेश्चोदनानामपर्यायत्वमेवेति भाष्यकारैरेव सुव्यक्तमुपपादितम्। अत्र संयोगभेदोऽप्यस्तीत्याह—मिश्रमिति। मधुविद्यायां वसुपदप्राप्तिपूर्वकपरमात्मप्राप्तेः फलत्वात् क्वचित् मिश्रं फलम्, विद्यान्तरेषु केवलपरमात्मप्राप्तेः फलत्वादमिश्रमेव फलमिति संयोगभेदोऽप्यस्ति। इत्थं ब्रह्मविद्यासूक्तन्यायेन वेदान्तभागोक्तासु काम्यविद्यास्वपि भेदो निरूप्य इत्याह—काम्येति ॥ ३८३ ॥

पद०—सर्वास्वित्यादि। सर्वासु ब्रह्म वेद्यम्—सर्वासु वैश्वानरदहराक्षरोपकोसलशाण्डिल्यादिविद्यासु ब्रह्मैव वेद्यम्। तेन रूपमविशिष्टमित्यर्थः। फलमपि तत् खलु—सर्वब्रह्मविद्यासाध्यं फलमपि

तद्ब्रह्मैवेति सर्वमतसम्मतं खल्वित्यर्थः । आख्या च ब्रह्मविद्येति—संज्ञा च ब्रह्मविद्येति सर्वासामवि-शिष्टेत्यर्थः । विधिरपि ध्यानाद्युक्त्येकलक्ष्ये भजने—चोदना च ध्यानोपासनादिज्ञानविशेषवाचिपद-वाच्ये भक्तिरूपे विषये इत्यविशिष्टा । इत्थं सर्वविद्यैक्यम्—एवं संयोगरूपचोदनाख्यानामविशेषोपपा-दनात् सर्वासामपि ब्रह्मविद्यानामैक्यमस्त्विति । तन्न—तच्छङ्कनमयुक्तम् । आख्यारूपभेदात्—सद्विद्या-दहरविद्याभूमविद्येत्यादिरूपाणां आख्यानां अपहतपाप्मत्वादिरूपाणां रूपाणाञ्च भेदात् । नहि ब्रह्मविद्येति सामान्याख्याभेदो ब्रह्मरूपं सामान्यरूपञ्च दहराक्षरादिविशेषाख्याभेदं अपहतपाप्मत्वादितत्तद्विद्याप्रति-नियतगुणविशेषभेदञ्च वारयितुं शक्नुयादिति भावः । तदुपहितविधौ तेन वैशिष्ट्यसिद्धेः—उदाहृततत्तद्रूपविशेषविशिष्टज्ञानविशेषविधाने तैरेव रूपविशेषैर्विद्यानां परस्परविलक्षणचोदनाविशेष-सिद्धेः । मध्वादिविद्याफलं मिश्रम्—मध्वादिविद्यासु वस्वादिपदप्राप्तिपूर्वकब्रह्मप्राप्तेः फलतया फल-मितरफलमिलितम् । इह—तदितरब्रह्मविद्यासु । पृथक्—फलान्तरामिश्रं ब्रह्मप्राप्तिरूपमेव फलम् । काम्य-विद्यासुच एवम्—वेदान्तोक्तासु काम्यविद्यासु च एवमुक्तरीत्या संयोगरूपचोदनादिभेदैर्भेदो निरूप-णीयः ॥ ३८३ ॥

नानाशब्दादिभेदादिति कथमवदत् सूत्रकृच्छब्दसाम्ये
न ह्येते यागदानादय इव भिदुरा भक्तिविश्रान्तिसिद्धेः ।
सत्यं शब्दस्य भेदस्त्वयमुपचरितो रूपभेदद्रढिम्ने
ज्ञानं ये चाविधेयं करणमिति जगुस्तन्निरासेऽभिसन्धिः ॥ ३८४ ॥

चिन्ता०—अत्र खलु 'नाना शब्दादिभेदात्' इति विद्याभेदं वदन् सूत्रकारश्शब्दभेदमेव पुरस्करोति, शब्दभेदो नाम चोदनाभेदः, चोदनाभेदोऽपि यजतिददातिजुहोतीत्यपर्यायेण शब्देन भावार्थ-विधिः । अत्र पुनर्भाष्यकारैरेव वेदनोपासनादिशब्दानां पर्यायत्वमुपपादितम् । तेन शब्दसाम्ये सति कथं 'नाना शब्दादिभेदात्' इति सूत्रकारेणोच्यत इति कश्चिदाक्षिपति—नानाशब्देति । विद्यात्, उपासीत, ध्यायीत, इति धातुभेदादिति पराभिप्रायमाशङ्क्योत्तरमाह—नहीति । धातवो हि न स्वरूपभेद-मात्रेण शब्दभेदत्वमश्नुवते, अस्तिविद्यतेभवतीत्यादीनामपि शब्दभेदत्वप्रसङ्गात् । तेनापर्यायशब्दप्रयोग एव शब्दभेदो वाच्यः । विद्यादित्यादीनां पर्यायत्वं प्रागेव समर्थितमिति । सत्यमित्यर्धाङ्गीकारेण परिहरति । यद्यपि शब्दान्तराधिकरणोक्तमुख्यशब्दभेदो नास्ति, अथापि रूपभेदप्रयुक्तश्शब्दभेद उपचर्यते । तत् किमर्थ-मित्यत्राह—रूपभेदद्रढिम्न इति । अयमर्थः—रूपभेद एवात्र साक्षाद्भेदकः । स तु रूपभेदो धात्वर्थ-

विशेषकत्वेन धात्वर्थमपि भिनत्तीति भिन्नार्थवाचकत्वेन शब्दभेदोऽपि सिध्यतीत्यौपचारिकी शब्दभेदोक्तिः। अत्रोपचारोक्तौ प्रयोजनमाह—ज्ञानमिति। मृषावादिनः खल्वविधेयमेव ज्ञानं मोक्षसाधनमित्याहुः तन्निरासेन ज्ञानस्य विधेयत्वसिद्ध्यर्थं विद्याविषयचोदनाभेदोऽस्तीत्युच्यते। अयमभिसन्धिः—यदि वेदनध्यानोपासनादिशब्दानां तत्तत्प्रकरणस्थानां पर्यायत्वम्, यदि वा छागपशुन्यायेन विशेषपर्यवसानम्, यदि वा भाष्यकारोक्तक्रमेण भिन्नेषु प्रकरणेषु वेद्यभेदनिबन्धनवेदनभेदप्रतिपादकत्वेनापर्यायत्वम्, सर्वथापि विधेयमेव ज्ञानम्। विधेयादेव ज्ञानादपवर्गसिद्धिरितीममर्थं प्रतिपादयितुं चोदनाभेदकथनमिति ॥ ३८४ ॥

पद०—नानाशब्दादीत्यादि। सूत्रकृत् शब्दसाम्ये शब्दादिभेदात् नाना इतिकथमवदत्—सूत्रकारश्शब्दसाम्ये वेदनोपासनध्यानादीनां विद्यावाचिशब्दानां अर्थभेदाभावात् पर्यायत्वरूपे साम्ये अविशेषे तिष्ठति सति शब्दभेदान्नानेति कथमुक्तवान्। भक्तिविश्रान्तिसिद्धेः—'वेदनमुपासनं स्यात्' इत्यादिवाक्यकारभाष्यकारवाक्यैस्सर्वेषामपि मोक्षोपायभूतज्ञानवाचिशब्दानां भक्तिरूपापन्नज्ञानविशेषे पर्यवसानसिद्ध्या। एते—'विद्यात्' 'उपासीत' 'ध्यायीत' इत्यादयश्शब्दाः। यागदानादय इव—यागदानहोमवाचकाः यजतिददातिजुहोतीत्यादिशब्दा इव। भिदुरा नहि—अर्थभेदेनापर्याया न भवन्ति हि। चोदनाभेदो हि नाम यजतिजुहोतिददातीत्यपर्यायेण शब्देन भावार्थविधिः। सत्यम्—अर्धाङ्गीकारपरोऽयम्। उपचरितोऽयं शब्दस्य भेदस्तु रूपभेदद्रढिम्ने—उपात्तइति शेषः। शब्दान्तराधिकरणोक्तरीत्या मुख्यस्य शब्दभेदस्याभावात् रूपभेदप्रयुक्ततयोपचरितोऽयं शब्दस्य भेदो रूपभेदद्रढिम्ने रूपभेदस्य दार्ढ्याय आरोपितत्वनिरासेन तात्त्विकत्वस्थापनाय उपात्तः। ये अविधेयं ज्ञानं करणमिति जगुस्तन्निरासे चाभिसन्धिः—ये मायिप्रभृतयः अविधेयं विधेरविषयं ज्ञानं करणमिति मोक्षोपायभूतमित्युक्तवन्तः, तन्निरसने चाभिसन्धिः। अयमाशयः—यदि वेदनध्यानोपासनादिशब्दानां तत्तत्प्रकरणस्थानां पर्यायत्वम्, यदिवा छागपशुन्यायेन विशेषपर्यवसानम्, यदिवा भाष्यकारोक्तक्रमेण भिन्नेषु प्रकरणेषु वेद्यभेदनिबन्धनवेदनभेदप्रतिपादकत्वेनापर्यायत्वम्, सर्वथापि विधेयमेव ज्ञानम्, तथा विधेयादेव ज्ञानात् अपवर्गसिद्धिरितीममर्थमुपपादयितुं चोदनाभेदकथनमिति ॥ ३८४ ॥

**यद्वा शब्दादिभेदादिति तु कथयता सूत्रकारेण सम्यङ्-**
**न्यासोपासे विभक्ते यजनहवनवच्छब्दभेदादभाक्तात्।**
**आख्यारूपादिभेदश्श्रुत इतरसमः किन्न भिन्नोऽधिकारः**
**शीघ्रप्राप्त्यादिभिस्स्याज्जगुरिति च मधूपासनादौ व्यवस्थाम् ॥ ३८५ ॥**

इति शब्दादिभेदाधिकरणम् ॥ १०६ ॥

चिन्ता०—एवं भाष्यकारोक्तप्रकारेण शब्दभेदमुक्त्वा भाष्यकाराभिप्रायस्थं मुख्यमेव शब्दभेदं उपपादयति—यद्वेति । अयमर्थः—नानाशब्दादिभेदादिति सूत्रकारश्शब्दभेदमेव तावत् प्राह। स च शब्दभेदोऽपर्यायशब्दकथनम् । तच्च ब्रह्मविद्यायास्साक्षादेवास्ति । भक्तिप्रपत्त्योर्मोक्षोपायतया विहितयोर्विधिभेददर्शनात् । 'अनित्यमसुखं लोकमिमं प्राप्य भजस्व माम्' इति भक्तिविधिर्दृश्यते 'मामेकं शरणं व्रज' इति प्रपत्तिविधिः । प्रपत्तिरेव हि शरणागतिः । 'अनन्यसाध्ये' इत्यस्मिन् प्रपत्तिलक्षणवाक्ये 'प्रपत्तिश्शरणागतिः' इति पर्यायत्वेनोपदेशात् । तेन साक्षादेव भक्तिप्रपत्त्योर्विधिभेद उपलभ्यत इति मुख्य एवायं शब्दभेदो भाष्यकारभावस्थः । यजतिददातिजुहोतीत्यादिशब्दभेदवदस्यापि शब्दभेदस्य साक्षादेव शब्दभेदलक्षणोपेतत्वात् । अयमत्र शब्दान्वयः—यद्वेति पक्षान्तरोपन्यासमाह । शब्दादिभेदादिति वदता सूत्रकारेण सम्यगेव न्यासोपासे विभक्ते । तत्र दृष्टान्तमाह—यजनहवनवदिति । तत्र विभागहेतुं दर्शयति—शब्दभेदादिति । अभाक्तादिति मुख्यत्वमाह । तेन पूर्वोक्तप्रकारात् प्रकारान्तरसिद्धिः । एवं चोदनाभेदमुक्त्वा तद्वदेवाख्याभेदो रूपभेदस्संयोगभेदोऽप्यस्तीत्याह—आख्येति । भक्तौ हि सद्विद्यादहरविद्येत्यादिराख्या, प्रपत्तौ पुनर्निक्षेपोन्यासश्शरणागतिरित्यादिः । भक्तिरूपे दहरविद्यादौ अपहतपाप्मत्वादिकं रूपम् । इह पुनरुपायान्तरस्थानापत्तिर्भगवतो रूपम्, तदेव निरपेक्षोपायत्वमित्यध्यात्मविद्भिरभिधीयते । भक्तियोगनिष्ठानां हि सद्विद्यादहरविद्यादिसापेक्षः परमपुरुषः फलं ददाति। इह पुनरुपायान्तरस्थाने स्वयमेवावस्थितस्तदेव मुक्तिरूपं फलं ददाति । इदमेवोच्यते 'सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज' इति । अस्यार्थस्य विस्तरो न्यासविंशत्यादिष्वाचार्यप्रबन्धेष्वनुसन्धेयः । इतरसम इति—यथा सद्विद्यादीनामाख्याभेदाद्रूपभेदात् संयोगभेदाद्भेद उपपद्यते तथैव प्रपत्तेरपि भेद इत्यर्थः । यद्यपि सर्वासां ब्रह्मविद्यानां प्रधानफलं मोक्षः तथाप्यनुसन्धानवेलायां तत्तद्रूपविशिष्टभगवदनुभवरूपफलवैषम्यमस्तीति भावः । अधिकारभेदादपि रूपभेदमाह—किञ्च भिन्नोऽधिकारश्शीघ्रप्राप्त्यादिभिरिति । भक्तियोगनिष्ठस्य प्रारब्धकर्मावसाने हि मोक्षः । प्रपत्तिनिष्ठस्य तु प्रारब्धमपि कर्म प्रपत्तिरेव क्षपयितुं शक्नोति 'उपायभक्तिः प्रारब्धव्यतिरिक्ताघनाशिनी । साध्यभक्तिस्तु सा हन्त्री प्रारब्धस्यापि भूयसी ॥' इति वचनादेव प्रपत्तेश्शीघ्रफलप्रदत्वश्रवणात् । शब्दार्थस्तु—उपायरूपा भक्तिः प्रारब्धं न हन्यात् अपि तु तद्व्यतिरिक्तमेव हन्यात् । साध्यभक्तिः प्रपत्तिः प्रारब्धमपि हन्यात् । अत एव भक्तेः प्रपत्तिर्भूयसी फलाधिक्यात् । अत्र आदिशब्देन 'भक्त्यादौ शक्त्यभावः' इत्याचार्यग्रन्थोक्ताः पञ्चदशाप्यधिकारविशेषा उच्यन्ते । शक्तिर्ज्ञानं जन्म विलम्बाक्षमत्वमित्येतानि समस्तानि भक्त्यधिकारः । तत्रैकैकविरहे द्विकद्विकविरहे त्रिकत्रिकविरहे सर्वविरहे च सम्पद्यन्ते प्रपदनाधिकारा इति पञ्चदशत्वसिद्धिः । ननु ब्रह्मविद्यानां ब्रह्मप्राप्तिरेव फलम्, तच्चैकमेवेत्याशङ्कमानस्य बालबुद्धेरन्यत्र फलभेदं दृष्टान्ततया दर्श-

यति—जगुरिति। मधुविद्यायां हि वसुपदप्राप्तिपूर्वकपरमात्मप्राप्तिः फलम्। दहरविद्यादौ तु परमात्मप्राप्तिमेव फलतया निर्दिशति। अतस्संयोगभेदादपि न्यासोपासनयोस्सिद्धएव भेदः ॥ ३८५ ॥

इति शब्दादिभेदाधिकरणम् ॥ १०६ ॥

पद०—यद्वेत्यादि। यद्वा—पक्षान्तरे। शब्दादिभेदादिति तु कथयता—नानाशब्दादीतिसूत्रे शब्दादिभेदादितिपदं प्रयुक्तवता सूत्रकारेण। अभाक्तात्—मुख्यात्। शब्दभेदात्—'अनित्यमसुखं लोकमिमं प्राप्य भजस्व माम्' 'सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज' इति अपर्यायाच्चोदनाभेदात्। यजनहवनवत्—यजतिजुहोतीत्यादिचोदितयागहोमवत्। न्यासोपासे—न्यसनभजनात्मिके विद्ये। सम्यक्—स्पष्टतया, विभक्ते। आख्यारूपादिभेदः—सद्विद्यादहरविद्येत्यादिर्भक्तेराख्या निक्षेपोन्यासश्शरणागतिरित्यादिः प्रपत्तेराख्या, एवमाख्याभेदः, सद्विद्यादहरविद्यादीनामपहतपाप्मत्वादिगुणजातं रूपम्, भगवत उपायान्तरस्थानापत्तिरूपं निरपेक्षोपायत्वं प्रपत्तेरूपम्, एवं रूपभेदः। आदिशब्देन वर्णाश्रमधर्मशमदमादिकं भक्तिविद्यास्वङ्गं आनुकूल्यसङ्कल्पादिपञ्चकं प्रपत्तिविद्यायामङ्गमिति भेदः प्रत्याय्यः। इतरसमः—सद्विद्यादहरविद्यादितुल्यः। श्रुतः—श्रुतिस्मृत्यादिभिः प्रतिपन्नः। किञ्च—विद्याभेदकहेत्वन्तरञ्चास्तीत्यर्थः। शीघ्रप्राप्त्यादिभिः—'साध्यभक्तिस्तु सा हन्त्री प्रारब्धस्यापि भूयसी' इत्यादिप्रमाणसिद्धया एकजन्मावसानादिस्वापेक्षितकालावधिकया प्रपत्तौ शीघ्रप्राप्त्या भक्तेः प्रारब्धानाशकत्वेन प्रारब्धकर्मावसानसापेक्षतया विलम्बितया प्राप्त्या च। अधिकारः—तत्तत्फलाकाङ्क्षामूलकस्तत्तद्विद्यानुष्ठानयोग्यतारूपः। भिन्नस्स्यात्—भिन्नो भवेत्। मधूपासनादौ—मधुविद्यादौ। व्यवस्थाम्—अधिकारव्यवस्थाम्। इति च जगुः—एवमेव विलम्बितप्राप्तिशीघ्रप्राप्तिरूपफलभेदनिबन्धनाधिकारव्यवस्थामाचार्या उक्तवन्त इत्यर्थः ॥ ३८५ ॥

इति शब्दादिभेदाधिकरणम् ॥ १०६ ॥

---

## विकल्पाधिकरणम् ॥ १०७ ॥

सूत्रम्—विकल्पोऽविशिष्टफलत्वात् ॥ ४११ ॥

ज्योतिष्टोमाग्निहोत्रप्रभृतिवदधिकानन्दसिद्ध्यै समुच्चि-
त्यर्हास्स्युर्ब्रह्मविद्या नच भजनविधिः कश्चिदेकं प्रति स्यात्।
कर्तुं ताः कालभेदात् क्षममिति न मिथो वासनास्थैर्यबाधात्
सम्पूर्णब्रह्मलब्ध्यै पृथगिह च विधिः प्रायणान्ते समाधौ ॥ ३८६ ॥

चिन्ता०—अत्र भाष्य एव सङ्गतिर्व्यक्तमुच्यते 'ब्रह्मप्राप्तिफलानां सद्विद्यादहरविद्यादीनां नानात्वमुक्तम्। इदानीमासां विद्यानामेकस्मिन् पुरुषे प्रयोजनवत्त्वेन समुच्चयोऽपि सम्भवति उत प्रयोजनाभावात् विकल्प एवेति विशये' इति। तदर्थविचारस्तु–किमेकस्मिन् पुरुषे प्रयोजनसम्भवात् सर्वासां समुच्चयः उत विकल्पः। तदर्थं विचार्यते–किं सर्वासु विद्यासु फलरूपा ब्रह्मप्राप्तिरेकरूपा उत स्वर्गादिप्राप्तिवत् विलक्षणेति। अत्र पूर्वपक्षी मन्यते–लोके हि ज्योतिष्टोमाग्निहोत्रप्रभृतयस्स्वर्गाद्यर्थं विहिता एकेनैवाधिकारिणा फलाधिक्यार्थं समुच्चयेनैवानुष्ठीयन्ते, तत्तदनुष्ठानाधिक्येन फलस्याधिक्यमुपलभ्यते, एवमत्रापि ब्रह्मविद्याः परब्रह्मप्राप्त्यर्थं समुच्चयेनानुष्ठीयन्ताम्, फलमपि देशकालाधिक्येन तारतम्येन लभ्यतामिति। तदिदमाह–ज्योतिष्टोमेति। नचैकस्यैवाधिकारिण एकमुपासनमिति नियमोऽस्तीत्याह—न चेति। 'न चैकं प्रति शिष्यते' इति न्यायेन सर्वोऽपि भजनविधिस्सर्वान्प्रत्येव विधीयते। तेन समुच्चयस्सम्भवत्येवेति। नन्वेकस्योपासनस्य चिरकालानुष्ठेयत्वात् उपासनान्तरस्य कालो नास्तीत्याशङ्क्य परिहरति—कर्तुमिति। ज्योतिष्टोमाग्निहोत्रादिवत् अत्राप्यनुक्रमेणानुष्ठातुं शक्यत इत्यनुष्ठानकालाभावात् न समुच्चय इति न भ्रमितव्यमित्यर्थः। तमिमं पक्षं प्रतिक्षिपति- नेति। तत्र हेतुमाह–मिथ इति। अयमर्थः—'स खल्वेवं वर्तयन् यावदायुषम्' इति ब्रह्मविद्याया आशरीरपातमनुष्ठेयत्वं श्रूयते। तच्च सर्वासामपि ब्रह्मविद्यानां समानमेव। तेनैकयैव ब्रह्मविद्यया कृत्स्नस्यापि कालस्यावरुद्धत्वात् ब्रह्मविद्यान्तरानुष्ठानकालाभावात् समुच्चयो न भवत्येव। इत्थमुपपादितमर्थं निगमयति–सम्पूर्णेति। अत्रैकमेव फलं दृश्यते या सम्पूर्णब्रह्मलब्धिः, तत्सिद्ध्यै पृथगेवानुष्ठेयान्युपासनानि, तानि च पृथगेव विधीयन्ते। तत्र हेतुमाह–प्रायणान्ते समाधाविति। अयमर्थः–एकैकस्सद्विद्यादहरविद्यादिस्समाधिः प्रायणान्तो विधीयते। तेन विधेयानां सामस्त्येनानुष्ठानविरोधात् प्रत्येकानुष्ठानलाभाय पृथगेव साधनत्वमिति विकल्प एव स्वीकार्यः॥ ३८६॥

पद०—ज्योतिष्टोमेत्यादि। ज्योतिष्टोमाग्निहोत्रप्रभृतिवत्—एकस्मै स्वर्गादिफलाय विहिता ज्योतिष्टोमाग्निहोत्रादय एकेनैवाधिकारिणा फलाधिक्यार्थं यथा समुच्चयेनानुष्ठीयन्ते तद्वत्। अधिकानन्दसिद्ध्यै–एकद्वित्र्यादिविद्यासाध्यानन्दादधिकानन्दलाभाय। ब्रह्मविद्यास्समुच्चित्यर्हास्स्युः—सर्वा ब्रह्मविद्यास्समुच्चयेनानुष्ठानार्हास्स्युः। कश्चित्–एको भजनविधिः। एकं प्रति—एकं पुरुषं प्रति। नच स्यात्–इति न हि नियमस्स्यात्। 'नचैकं प्रति शिष्यते' इति न्यायादिति भावः। ताः—सर्वा अपि विद्याः। कालभेदात्। कर्तुम्—अनुष्ठातुम्। क्षमम्—युक्तम्। यथा ज्योतिष्टोमाग्निहोत्रदर्शपूर्णमासादयः कालभेदेनानुष्ठीयन्ते। इति न—इति शङ्कनं न युक्तम्। मिथोवासनास्थैर्यबाधात्—अनेकविद्यानामेकेनानुष्ठानेऽङ्गीक्रियमाणे तत्तद्विद्यानियतविलक्षणस्थानगुणरूपादिविशिष्टब्रह्म-

ध्यानजनितवासनास्थैर्यस्य तादृशविद्यान्तरवासनया एवं तद्वासनास्थैर्यस्य तादृशविद्यान्तरवासनावशेनेति च परस्परं बाधापत्तेः । 'तस्मात्सर्वेषु कालेषु मामनुस्मर' इति विधेस्सर्वविद्यातुल्यतया सदा तच्चिन्तनेन वासनास्थैर्यमावश्यकम्, नह्येवं कर्मानुष्ठाने विरोधः क्रियारूपत्वात् । इह च—मोक्षशास्त्रे च । सम्पूर्णब्रह्मलब्ध्यै—निखिलविभूतिगुणविग्रहविशिष्टब्रह्मलाभरूपमोक्षाय । प्रायणान्ते—देहन्यासावधिके । समाधौ-तैलधारावदविच्छिन्नस्मृतिसन्ततिरूपे समाधौ । पृथग्विधिः—सदक्षरदहरादिविद्याभेदेन प्रत्येकं विधिर्दृश्यते । यदविकलब्रह्मप्राप्तिरूपं फलं तस्मै प्रत्येकं प्रायणान्तानां विद्यानां नैरपेक्ष्येण विधिर्दृश्यते, अतस्सर्वस्यापि पुरुषायुषस्य एकविद्यावरुद्धत्वात् विद्यान्तरानुष्ठानकाल एव न सम्भाव्यते, अतो विद्यानां फलतौल्याद्विकल्प एवेति ॥ ३८६ ॥

रूपादीनां विशेषैर्ननु परभजनं नैकरूपं विभक्तं
सामग्रीभेदतस्तत्फलमपि विषमं सम्मतं न्यायतस्स्यात् ।
न स्यात् सर्वासु विद्यास्वपि हि फलतया वक्ष्यते भोगसाम्यं
प्राप्यैक्यञ्च प्रसिद्धं बहुसरणिजुषां लोकतो वेदतश्च ॥ ३८७ ॥

इति विकल्पाधिकरणम् ॥ १०७ ॥

चिन्ता०—ननु भवता ब्रह्मविद्यानां फलैक्यात् विकल्प एवेति प्रतिज्ञातम्, नहि प्रतिज्ञामात्रेणार्थसिद्धिः, फलैक्यमेव हि नाङ्गीकुर्महे कारणभेदे कार्यभेदस्यावश्यम्भावात्, कारणानि तु ब्रह्मोपासनानि भिन्नान्येव रूपादिभेदात्, तेन फलभेदोऽप्यवश्याश्रयणीयः, तस्मात् भिन्नफलत्वे कथं विकल्प इतीमं पूर्वपक्षमनुवदति—रूपादीनामिति । शब्दान्वयस्तु—रूपादीनां विशेषैः परभजनं नैकरूपं विभक्तम् । नैकरूपमिति नगनैकादिशब्दवन्नसमासः । कारणभेदमुपपाद्य फलभेदमप्याह—सामग्रीभेदत इति । सम्मतं न्यायत इति–कारणभेदात्कार्यभेदो लोकसम्मत एवेति । तदिदं प्रतिक्षिपति—न स्यादिति । तत्र हेतुमाह—सर्वास्विति । 'भोगमात्रसाम्यलिङ्गाच्च' इति 'निरञ्जनः परमं साम्यमुपैति' इतिश्रुतिप्रतिपन्नं भोगसाम्यमेव फलतयोच्यते तेन फलैक्यसिद्धिः । ननु सालोक्यादीनां चतुर्णामपि फलत्वेनाभिधानात् कथं फलैक्यमित्याशङ्क्याह—प्राप्यैक्यमिति । 'सायुज्यमन्ये स तु मोक्ष उक्तः' इत्यनेन ब्रह्मणस्सायुज्यमेव मोक्ष इति निर्णीतम् । सालोक्यादीनि तु तदन्तर्गततया फलत्वेनानूद्यन्त इति भावः । अनेन भिन्नानामुपायानां भिन्नमेव फलमिति शङ्कापि निरस्ता । लोकतो वेदतश्चोपायभेदेऽपि फलैक्यदर्शनात् । लोके हि बहुभिर्मार्गैरेकमेव ग्रामं प्राप्नुवन्ति वेदेऽपि यागदानहोमादिभि-

बहुभिरपि कर्मभिस्तत्र तत्र विहितैरेकमेव फलं प्राप्नुवन्ति कर्मठाः । तथा अध्यात्मविदोऽपि स्तुतिनमस्कारकीर्तनादिभिः परमपुरुषमाराध्य स्वाभिमतं फलं प्राप्नुवन्तीति भारतादिप्रसिद्धम् । एवं नानाविद्यानिष्ठाः स्वाधिकारानुरूपतत्तद्विद्यानुष्ठानेन परमपुरुषं प्राप्नुवन्तीति श्रुतिसिद्धत्वात् सुसङ्गतमेतत् ॥ ३८७ ॥

इति विकल्पाधिकरणम् ॥ १०७ ॥

पद०—रूपादीनामित्यादि । रूपादीनाम्—रूपसंयोगचोदनाख्यानाम् । विशेषैः—भेदैः । पर भजनम्—परमात्मोपासनम् । नैकरूपम्—एकरूपं न भवतीति नैकरूपम् । नगनैकादिशब्दवत् नसमासः । अनेकविधतया । विभक्तं ननु—परस्परभिन्नतया प्रतिपादितं खलु । सामग्रीभेदतः—एवं कारणभेदात् । तत्फलमपि—विद्यासाध्यं मोक्षरूपं फलमपि । न्यायतः—कारणभेदात्कार्यभेद-इति न्यायात् । विषमं सम्मतं स्यात्—विभिन्नतयाङ्गीकार्यं भवतु । न स्यात्—एवं न भवेत् । सर्वास्वपि विद्यासु—सदक्षरदहरादिषु सर्वास्वपि विद्यासु । भोगसाम्यम्—ब्रह्मणा सहानन्दसाम्यम् । फलतया वक्ष्यते हि—फलत्वेन 'भोगमात्रसाम्यलिङ्गाच्च' इति वक्ष्यते हि । बहुसरणिजुषाम्—नानामार्गगामिनाम्, नानाविधाग्निहोत्रदर्शपूर्णमासज्योतिष्टोमादिकर्मानुतिष्ठतां च । प्राप्यैक्यञ्च—एकग्रामरूपगम्यैक्यञ्च, एकस्वर्गरूपफलैक्यञ्च । लोकतो वेदतश्च प्रसिद्धम्—लोके वेदे च प्रसिद्धम् । अतो बहुभिर्मार्गैरेकग्रामप्राप्तिवत् अग्निहोत्रादिभिर्बहुभिः कर्मभिरेकस्वर्गफललाभवच्च बहुभिर्विद्याभिर्ब्रह्मप्राप्तिरूपमेकमेव फलं लब्धुं युज्यत इति फलभेदाद्विद्यानां विकल्प एवेति सिद्धम् ॥ ३८७ ॥

इति विकल्पाधिकरणम् ॥ १०७ ॥

---

## यथाश्रयभावाधिकरणम् ॥ १०८ ॥

सूत्रम्—अङ्गेषु यथाश्रयभावः ॥ ४१३ ॥

तत्तद्विद्यासु तादृक्फलतरतमतां वारयित्वा प्रसङ्गात्
प्रागुक्तोद्गीथविद्याफलमथ पुनराक्षिप्य गाढीकरोति ।
मा भूदुक्तं स्ववाक्ये फलमिह तु न सा पर्णमय्यादिनीतिः
स्पष्टा खल्वत्र विद्या फलकरणतया वर्तमानोक्तितोऽपि ॥ ३८८ ॥

चिन्ता०—पूर्वाधिकरणे तासुतासु ब्रह्मविद्यासु फलतारतम्यमाशङ्क्य तन्निवार्य फलप्रसङ्गात् पूर्वोक्तोद्गीथविद्यायाएव फलमत्र बहुभिर्हेतुभिराक्षिप्य समाधीयत इति सङ्गतिः । अथवा भाष्य एव 'यथा-

कामम्' इति पदेन सङ्गतिरुक्ता। यथाकामं विकल्पस्समुच्चयो वेति हि पूर्वत्रोक्तम्। तथोद्गीथादिविद्या यथाकाममुपादेया नवेति शङ्कया सङ्गतिः। तदर्थविचारस्तु—क्रत्वङ्गाश्रयाण्युद्गीथाद्युपासनानि क्रतुषु नियमेनोपादेयानि उत गोदोहनादिवदनियमेनेति। किं क्रत्वङ्गोद्गीथादिमुखेन पर्णतादिवत् क्रत्वर्थानि उत गोदोहनादिवत् क्रत्वङ्गाश्रिततया 'यदेव विद्यया करोति' इति फलश्रवणात् पुरुषार्थभूतानि। तदर्थं विचार्यते—किं गोदोहनादीनां पुरुषार्थत्वं स्ववाक्ये फलसम्बन्धश्रवणात् उत क्रतुफलात् पृथक्फलसंबन्धश्रवणादिति। अत्र सङ्गत्यभिधानपूर्वकं पूर्वपक्षमुक्त्वा पूर्वपक्ष्यभिप्रायस्थान् हेतूननुक्रमेण समाधातुमुपक्रमते—तत्तदिति। पूर्वाधिकरणे तासुतासु ब्रह्मविद्यासु फलतारतम्यं वारयित्वा समानफलसाधनत्वमुक्तम्। फलसाधनप्रसङ्गादनेनाधिकरणेन 'तन्निर्धारणानियमः' इत्यत्र प्रागेवोक्तमुद्गीथविद्याफलं बहुभिर्हेतुभिः पुनराक्षिप्य तत्तद्धेतुनिरासेन दृढीकरोति। अनेनोद्गीथविषययोरनयोः पौनरुक्त्यं परिहृतम्; पूर्वोक्ताक्षेपसमाधानतया एतस्याधिकरणस्याधिकप्रयोजनलाभादिति। एवं किल पूर्वपक्षी मन्यते—पूर्वं हि गोदोहनन्यायेनोद्गीथविद्यायाः पुरुषार्थत्वमुक्तम्, तन्नोपपद्यते गोदोहनवाक्ये स्ववाक्य एव फलनिर्देशो दृश्यते 'गोदोहनेन पशुकामस्य प्रणयेत्' इति। उद्गीथविद्यावाक्ये तु न फलनिर्देशः, केवलं 'उद्गीथमुपासीत' इत्युपासनस्योद्गीथविषयत्वमेव प्रतीयते। 'यदेव विद्यया करोति' इति वाक्यान्तर एव फलनिर्देशो दृश्यते। इदं तावदेकं वैषम्यम्। वैषम्यान्तरमपि—गोदोहनवाक्य एव 'पशुकामस्य प्रणयेत्' इति विधिश्रुतिरस्ति, 'यदेव विद्यया करोति' इति वाक्ये करोतीति वर्तमाननिर्देश एव, न तु विधिश्रुतिः। तेन 'यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति' इति वर्तमाननिर्देशोपेतपर्णमयत्ववाक्यवत् न पुरुषार्थसाधकत्वसिद्धिः। वीर्यवत्तरस्वरूपफलनिर्देशोऽप्यपापश्लोकश्रवणरूपफलनिर्देशवदर्थवाद एव। तेनाव्यभिचरितक्रतुसम्बन्धिजुहूमुखेन पर्णमयत्वं यथा क्रत्वङ्गम्, एवमुद्गीथोपासनमप्यव्यभिचरितक्रतुसम्बन्ध्युद्गीथमुखेन क्रत्वङ्गमिति। इदमपि वैषम्यं गोदोहनवाक्यादस्य वाक्यस्य। तृतीयमपि वैषम्यं सौत्रमेव दृश्यते। 'उद्गीथमुपासीत' इति द्वितीयाश्रुत्या साक्षादेवोद्गीथाङ्गभूतमुपासनं विधीयते। उद्गीथश्च कर्माङ्गम्। तेन तद्द्वारेणोपासनमपि कर्माङ्गम्; 'गोदोहनेन पशुकामस्य प्रणयेत्' इतिवत् विधिवाक्येऽधिकारान्तरश्रवणात् उद्गीथाङ्गभाव एव हि विधेय इति गम्यत इति। समाहारादिति हेत्वन्तरमपि दृश्यते 'होतृपदनाद्धैवापि दुरुद्गीथमनुसमाहरति' इत्युपासनस्य नियमेन समाहारोऽभिधीयते। तथा हि—वेदनहीनमुद्गीथं दुरुद्गीथम्। तस्य होतृपदनादनुसमाहाराभिधाने सति उद्गीथोपासनस्य नियमेन कर्तव्यत्वमुक्तं भवति। अवश्यकर्तव्यस्य ह्यपचारे समाधानं वक्तव्यम्। तेनोपासनस्यावश्यकर्तव्यत्वात् कर्माङ्गत्वमेव। अत्र गुणसाधारण्यश्रुतिरपि कर्माङ्गत्वे हेतुरस्ति। तदप्युक्तं भाष्य एव "उपासनगुणस्य उपासनाश्रयस्य प्रणवस्य सोपासनस्य 'तेनेयं त्रयीविद्यावर्तते ओमित्याश्रावयत्योमिति शंसत्योमित्युद्गायति'

इति साधारण्यश्रुतेश्चोपासनसमाहारो गम्यते " इति । एवमाक्षेपहेतूननुक्रमात् निराकरोति—मा भूदिति । स्ववाक्ये फलमुक्तं मा भूदेव । अथापीह पर्णमयत्वादिनोतिर्न स्यात् पुरुषार्थत्वप्रतिपादकस्य स्फुटतरस्य हेतोरत्र विद्यमानत्वात् । अस्ति पर्णमयीवाक्ये वर्तमाननिर्देशः । अस्ति च 'यदेव विद्यया करोति' इति वाक्ये वर्तमाननिर्देशः । तावता साम्येन उद्गीथोपासनस्य न पर्णतादिवदपुरुषार्थत्वसिद्धिः । 'यदेव विद्यया करोति, तदेव वीर्यवत्तरम्' इति तृतीयानिर्देशेन फलसाधनत्वस्य स्फुटतराभिधानात् उद्गीथोपासनस्य पुरुषार्थत्वमेव । पर्णतायास्तु फलसाधनत्वप्रतिपादकविभक्तिविशेषाभावात् क्रत्वङ्गत्वमेवेति विभागः । तदिदमाह—स्पष्टेति । अत्र 'यदेव विद्यया करोति' इति वाक्ये विद्या फलकरणतया स्पष्टैव दृश्यते । अतः पर्णमयीवाक्याद्वैषम्यमिति ॥ ३८८ ॥

पद०—तत्तद्विद्यास्वित्यादि । तत्तद्विद्यासु—सदक्षरदहरादिसर्वविद्यासु । तादृक्फलतरतमताम्—तादृक् विद्यातुल्यं विद्यानां चिन्तनीयगुणादितारतम्येन स्वरूपतारतम्यमस्ति हि, तत्तुल्यं फलस्य तारतम्यम् । वारयित्वा—अविशिष्टफलश्रवणादिहेतुभिर्निवार्य । अथ—ततः परमस्मिन्नधिकरणे । प्रसङ्गात्—फलविचारप्रसक्त्या । प्रागुक्तोद्गीथविद्याफलम्—'तन्निर्धारण' इत्याद्यधिकरणे प्रागुक्तमेवोद्गीथविद्यायाः फलम् । पुनराक्षिप्य—शिष्टिसमाहारगुणसाधारण्यश्रुतिरूपैराक्षेपहेतुभिराक्षिप्य । गाढीकरोति—पूर्वोपक्षिप्तैर्हेतुभिर्दृढीकरोति । स्ववाक्ये फलमुक्तं मा भूत्—'गोदोहनेन पशुकामस्य प्रणयेत्' इत्यादाविव स्ववाक्ये फलमुक्तं मा भूत् । इह—उद्गीथविद्याप्रकरणे । वर्तमानोक्तितोऽपि—'यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति' इतिवत् 'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति' इति वर्तमाननिर्देशादपि । सा—फलकरणताबोधकश्रुतिराहित्येन प्रकृतविलक्षणा । पर्णमय्यादिनीतिर्न तु—पर्णमय्यधिकरणनीतिर्न भवेत् । कुत इत्यत्राह अत्र विद्या फलकरणतया स्पष्टा खलु—अत्र वाक्ये विद्यया करोतीतितृतीयाश्रुत्या विद्या फलकरणतया स्पष्टमवगम्यते खलु । अतः पर्णमय्यधिकरणन्यायो न भवेदित्यर्थः ॥ ३८८ ॥

तादर्थ्यं नात्र कर्मश्रुतिरवगमयेदाश्रयालम्बमात्राद्
विद्याहानौ च युक्तं प्रतिविधिवचनं तत्फलार्थिप्रसङ्गे ।
तारे सोपासनेऽस्तु स्तवनमनुगमात् तावता सा तु नाङ्गं
प्राग्वक्तव्यस्य हित्वा वच इदमुपरि स्थापनीयप्रसक्त्यै ॥ ३८९ ॥

इति यथाश्रयभावाधिकरणम् ॥ १०८ ॥

चिन्ता०—पूर्वं 'उद्गीथमुपासीत' इति द्वितीयाश्रुत्योद्गीथाङ्गत्वमुपासनस्येत्युक्तम्, तत् परिह-

रति–तादर्थ्यमिति । अत्र कर्मश्रुतिः तादर्थ्यमङ्गत्वं नावगमयति । तत्र हेतुमाह–आश्रयालम्बमात्रादिति– अत्र कर्मश्रुतिः पुरुषार्थस्यैवोपासनस्याश्रयमेवोद्गीथमवलम्बते न ततोऽङ्गत्वं वदतीत्यर्थः । विद्याहानौ दुरुद्गीथत्वात् प्रतिविधानमुक्तमिति कर्माङ्गत्वे हेतुर्भवतोक्तः, सोऽपि हेतुरन्यथासिद्ध इत्याह— विद्याहानाविति । विद्याहानौ दुरुद्गीथत्वमुक्त्वा यत् प्रतिविधिवचनं तदपि तत्फलार्थि-प्रसङ्गे युक्तमेव । अयमर्थः—यस्त्वधिकारी कर्माङ्गभूतोद्गीथे वीर्यवत्तरत्वादिकं विद्याफलं कामयित्वा विद्यामारभ्य विद्यां यथावत् न करोति तस्याधिकारिण एव होतृपदनादनुसमाहारोऽभिधीयते, न पुनः कर्माङ्गभूतोद्गीथकर्तुस्सर्वस्याप्यधिकारिणः, अतो न कर्माङ्गत्वसिद्धिरुद्गीथोपासनस्य । अयमत्र शब्दान्वयः– उपासनफलभूतवीर्यवत्तरत्वाद्यर्थिप्रसङ्गे विद्याहानौ होतृपदनात् समाहारवचनं युक्तमेव । 'तेनेयं त्रयी विद्याव-र्ततइति तच्छब्देनोपासनसहितं प्रणवं निर्दिश्य त्रय्यामनुगमनवचनादुपासनस्य प्रणवाङ्गत्वमिति यदुक्तं तदपि नास्तीत्याह–तार इति । सोपासने तारे स्तवनमस्तु नाम अनुगमात् त्रिष्वपि वेदेष्वनुवृत्तत्वात् । तथाप्युपासनस्य नाङ्गत्वम् । उपासनस्य वीर्यवत्तरत्वादिफलसाधनत्वेन पुरुषार्थत्वेऽपि तस्य स्तोत्रत्वेन योजयितुं शक्यत्वादित्यर्थः । ननु पूर्वमेवोद्गीथविद्याप्रसङ्गे सर्वमिदमधुनोक्तमर्थजातं वक्तव्यमेव, किमर्थमिह स्थानं हित्वोच्यत इत्याशङ्क्याह—प्राग्वक्तव्यस्येति । अयमत्र भावः–ब्रह्मविद्याङ्गप्रतिपादनमुत्तरपादे करिष्यते तत्प्रसङ्गार्थं पादान्तेऽङ्गाङ्गित्वचिन्तनमधुना कृतमिति नास्थानपातित्वदोषः ॥ ३८९ ॥

इति यथाश्रयभावाधिकरणम् ॥ १०८ ॥

पद०—तादर्थ्यमित्यादि । अत्र—उद्गीथविद्याप्रकरणे । आश्रयालम्बमात्रात्–पुरुषार्थस्यैव उपासनस्याश्रयमात्रत्वेनोद्गीथावलम्बनात्, तावन्मात्रापेक्षणादित्यर्थः । कर्मश्रुतिः–'उद्गीथमुपासीत' इत्यत्रोद्गीथपदोत्तरं विद्यमाना कर्मत्वबोधिका द्वितीयाश्रुतिः । तादर्थ्यम्–अङ्गत्वम् । नावग-मयेत् । आश्रयमात्रलाभेन तृप्तत्वात् । विद्याहानौ—उपासनानुष्ठानाभावे । प्रतिविधिवचनञ्च— 'होतृपदनाद्धैवापि दुरुद्गीथमनुसमाहरति' इति वेदनरहिततया दुष्टमप्युद्गीथं होतृकर्तृकोद्गीथ-प्रणवैक्यज्ञानात् समादधातीतिप्रतिविधिवचनञ्च । तत्फलार्थिप्रसङ्गे युक्तम्—विद्याफलभूतवीर्यवत्तरत्वा-द्यर्थिनो विद्यामशक्त्यादिभिरननुतिष्ठतस्तत्समाधानप्रसक्तौ सत्यामवश्यकर्तव्यत्वेन युक्तमेव । सोपासने तारे अनुगमात् स्तवनमस्तु–'तेनेयं त्रयी विद्यावर्तते' इति वचने तेनेतिपदेन सोपासनं प्रणवं निर्दिश्य त्रय्यामनुगमात् स्तवनं कामं क्रियताम् । तावता, सा तु–उपासना तु । अङ्गं न—अङ्गमिति न सिध्येदित्यर्थः । उपासनस्य वीर्यवत्तरत्वादिफलसाधनत्वेन पुरुषार्थत्वेऽपि तस्य स्तवनस्य योजयितुं शक्य-त्वादिति भावः । प्राक्—'तन्निर्धारणानियमः' इत्याद्यधिकरणे । वक्तव्यस्य–अत्रोच्यमानस्य सर्वस्यार्थ-जातस्य तत्र वक्तव्यस्य । हित्वा–स्थानं विहाय । इदं वचः—अस्मिन्नधिकरणे इदं वचनम् । उपरि–अङ्गपादे । स्थापनीयप्रसक्त्यै—स्थापनीयस्य ब्रह्मविद्याङ्गस्य प्रसङ्गार्थम् । अस्मिन्नन्तिमाधिकरणेऽङ्गा-

ङ्गित्वचिन्तने कृते उपरितनपादे करिष्यमाणस्याङ्गविचारस्य प्रसङ्गरूपसङ्गतिर्लभ्येतेति हृदयेनात्र पुनर्वचनमित्यर्थः ॥ ३८९ ॥

इति यथाश्रयभावाधिकरणम् ॥ १०८ ॥

विद्यैक्योद्गीथविद्याद्वितयविभजनप्राणविद्यैकभावाः
सर्वास्वानन्दतादेर्गुणिवदनुगतिः प्राणवासस्त्वदृष्टिः ।
शाण्डिल्यैक्यं विभज्य स्थितिरहरहमोस्सम्भृतेस्स्थानसीमा
पुंविद्याया विभेदोऽध्ययननियतता शन्नइत्यादिकानाम् ॥ ३९० ॥

चिन्ता०—उक्तानामधिकरणानां प्रधानार्थभेदान् विभज्योद्गृणाति—विद्यैक्येति । प्रथमाधिकरणे विद्यैक्यम् । अतःपरम् उद्गीथविद्याद्वितयविभजनम् । इत्थमनुक्रमात् प्राणविद्यैकभावः । सर्वासु विद्यास्वानन्दतादेस्स्वरूपनिरूपकधर्मस्य स्वरूपवदनुगतत्वम् । प्राणवासस्त्वदर्शनम् । शाण्डिल्यविद्यैक्यम् । अहश्शब्दस्य अहंशब्दस्य च विभज्यावस्थानम् । सम्भृत्यादिगुणस्य स्थाननियमः । पुरुषविद्याभेदः । 'शन्नः' इत्यादिमन्त्राणामध्ययनशेषत्वम् ॥ ३९० ॥

पद०—विद्यैक्येत्यादि । विद्यैक्योद्गीथविद्याद्वितयविभजनप्राणविद्यैकभावाः—विद्यैक्यञ्च उद्गीथविद्याद्वितयविभजनञ्च प्राणविद्यैकभावश्च विद्यैक्योद्गीथविद्याद्वितयविभजनप्राणविद्यैकभावाः । विद्यैक्यं वैश्वानरविद्यादीनामनेकशाखासु श्रूयमाणानां संयोगरूपचोदनाख्याविशेषादैक्यम् । इदं 'सर्ववेदान्त' इत्यादिप्रथमाधिकरणार्थः । उद्गीथविद्याद्वितयविभजनम्—छान्दोग्यवाजसनेयकपठितयोरुद्गीथविद्ययोर्द्वितयस्य उद्गीथसामान्योद्गीथावयवप्रणवरूपरूपभेदादिभिर्विभागः । अयं 'अन्यथात्वं शब्दात्' इत्यादिद्वितीयाधिकरणार्थः । प्राणविद्यैकभावः—छान्दोग्यवाजसनेयककौषीतक्यादिपठितायाः प्राणविद्याया ज्यैष्ठ्यश्रैष्ठ्यादिगुणसाम्योपपादनेन एकविद्यात्वम् । इदं 'सर्वाभेदादन्यत्रेमे' इत्यादितृतीयाधिकरणार्थः । सर्वास्वानन्दतादेर्गुणिवदनुगतिः—सर्वासु परविद्यासु आनन्दत्वादिपञ्चकस्य गुणिभूतब्रह्मवदनुगतत्वम् । इदं 'आनन्दादयः प्रधानस्य' इत्यादिचतुर्थाधिकरणार्थः । प्राणवासस्त्वदृष्टिः—आचमनीयास्वप्सु प्राणवासस्त्वानुसन्धानम् । इदं 'कार्याख्यानात्' इत्यादिपञ्चमाधिकरणार्थः । शाण्डिल्यैक्यम्—वाजसनेयके अग्निरहस्ये बृहदारण्यके चाम्नातायाश्शाण्डिल्यविद्याया आरण्यकोक्तवशित्वादिगुणजातस्य अग्निरहस्यप्रतिपन्नसत्यसङ्कल्पत्वविततिरूपत्वादिभिर्गुणाविशेषप्रतिपादनेन एकविद्यात्वम् । शाण्डिल्येन दृष्टा विद्या शाण्डिली तस्या ऐक्यमिति वा शाण्डिल्याशब्देन लक्षणया विद्याप्रतिपादनमङ्गीकृत्य शाण्डिल्याया ऐक्यमिति वा समासः । अयं 'समान एवञ्च' इत्यादिषष्ठाधिकरणार्थः । अहरहमोर्विभज्य स्थितिः—

बृहदारण्यकपठिताक्ष्यादित्यमण्डलपुरुषोपासनयोस्स्थानभेदेन विद्याभेदात् तच्छेपभूतयोर्द्वयोरहरहमिति नाम्नोः क्रमेणादित्यमण्डलोपासननियततया अक्ष्युपासननियततया च विभज्य स्थितिः । अयं 'सम्बन्धा-देवम्' इत्यादिसप्तमाधिकरणार्थः । सम्भृतेस्स्थानसीमा—सम्भृतेः 'ब्रह्मज्येष्ठा वीर्या सम्भृतानि' इत्या-द्यनारभ्यवाक्यप्रतिपन्नज्येष्ठवीर्यसम्भृत्यादिगुणजातस्य सहपठिताल्पस्थानकविद्यास्वसम्भावितद्युव्याप्त्या-द्युचितस्थानव्यवस्थितिः । अयं 'सम्भृतिद्युव्याप्ति' इत्याद्यष्टमाधिकरणार्थः । पुंविद्याया विभेदः—छान्दोग्ये पठितायाः 'पुरुषो वाव यज्ञः' इत्यादिप्रतिपन्नायाः दीर्घायुःफलायाः पुरुषविद्यायाः 'तस्यैवं विदुषः' इत्यादितैत्तिरीयकोपनिषत्प्रतिपन्नायाः ब्रह्मविद्याङ्गभूतायाः पुरुषविद्यायाश्च परस्परं रूपादिभेदा-द्भेदः । अयं 'पुरुषविद्यायाम्' इत्यादिनवमाधिकरणार्थः । शन्न इत्यादिकानामध्ययननियतता—'शन्नो मित्रः' इत्यादिमन्त्राणां स्वाध्यायाध्ययनाङ्गता । अयं 'वेधाद्यर्थभेदात्' इत्यादिदशमाधि-करणार्थः ॥ ३९० ॥

हानाद्यन्योन्ययोगस्तदुचितसमयो देवयानादिसाम्यं
सर्वत्रास्थूलतादि व्यतिहरणमथानेकशिष्यश्रुतानाम् ।
दहोपास्त्यैकभावो गुणफलविधिरुद्गीथमाश्रित्य दृष्टौ
गुण्यावृत्तिर्गुणार्थं निखिलपरतरोपास्तिवेद्यावसायः ॥ ३९१ ॥

चिन्ता०—हानोपायनयोरन्योन्ययोगः तयोर्हानोपायनयोः प्राप्तकालः, तथा अर्चिरादेस्सर्व-विद्यासाधारणत्वम्, सर्वत्र विद्यासु अस्थूलतादिगुणसंगतिः, अनेकशिष्यश्रुतानामन्योन्यव्यतिहरणम् । दहरविद्यानामैक्यम् । उद्गीथमाश्रित्य दृष्टौ उपासने गुणफलविधिः । अपहतपाप्मत्वादिगुणोपासनेषु सर्वत्र गुणिन आवृत्तिः । सर्वपरविद्यावेद्यो नारायण इति निर्णयः ॥ ३९१ ॥

पद०—हानादीत्यादि । हानाद्यन्योन्ययोगः—हानादेः 'अश्व इव रोमाणि विधूय पापम्' 'तत्सुकृतदुष्कृते विधूनुते' 'सुहृदस्साधुकृत्यां द्विषन्तः पापकृत्याम्' इत्यादिप्रतिपन्नसुकृतदुष्कृतप्रहाण-तत्सुहृद्द्विषत्प्रवेशयोः पृथक् श्रुतयोरपि परस्परं सहानुसन्धेयत्वरूपस्सम्बन्धः । अयं 'हानौ तूपायन' इत्या-द्येकादशाधिकरणार्थः । तदुचितसमयः—तस्य सुकृतदुष्कृतप्रहाणस्य उचितो देहविश्लेषकालरूपस्समयः । अयं 'साम्पराये' इत्यादिद्वादशाधिकरणार्थः । देवयानादिसाम्यम्—देवयानादेः अर्चिरादेस्साम्यं सर्वब्रह्मविद्यानिष्ठसाधारण्यम् । इदं 'अनियमस्सर्वेषाम्' इत्यादित्रयोदशाधिकरणार्थः । अस्थूलतादि—अस्थूलत्वादिकं स्थूलादिप्रपञ्चवैलक्षण्यरूपम् । सर्वत्र—सर्वब्रह्मविद्यास्वनुसन्धेयमित्यर्थः । अयं 'अक्षर-

धियाम्' इत्यादिचतुर्दशाधिकरणार्थः । अथ अनेकशिष्यश्रुतानां व्यतिहरणम्—तदुपरितनाधिकरणे उषस्तकहोलाख्यानेकशिष्यश्रुतानां ब्रह्मसम्बन्धिनां प्राणादिव्यापारकर्तृत्वाशनायाद्यतीतत्वादीनां सर्वान्तरत्व-पर्यन्तानां गुणानां व्यतिहरणं मेलनेनानुसन्धानं कार्यमित्यर्थः । अयं 'व्यतिहारो विशिंषन्ति' इत्यादि-पञ्चदशाधिकरणार्थः । दहोपास्त्येकभावः—छन्दोगवाजिपठितयोर्दहरोपासनयोर्वशित्वादेस्सत्यसङ्कल्पता-प्रकारभेदत्वप्रतिपादनादिना एकरूपगुणकत्वादेकविद्यात्वम् । इदं 'कामादीतरत्र' इत्यादिषोडशाधिकर-णार्थः । उद्गीथमाश्रित्य दृष्टौ गुणफलविधिः—उद्गीथाश्रयोपासने 'गोदोहनेन पशुकामस्य प्रणयेत्' इत्यादाविव गुणफलार्थविधिः । अयं 'तन्निर्धारण' इत्यादिसप्तदशाधिकरणार्थः । गुणार्थं गुण्यावृत्तिः—अपहतपाप्मत्वादिगुणानुसन्धानार्थं गुणिनो दहराकाशस्य पुनःपुनरनुसन्धानावृत्तिः । अयं 'प्रदानवत्' इत्याद्यष्टादशाधिकरणार्थः । निखिलपरतरोपास्तिवेद्यावसायः—निखिलासु परतरोपास्तिषु परविद्यासु वेद्यस्य नारायणत्वेन निष्कर्षः । अयं 'लिङ्गभूयस्त्वात्' इत्याद्येकोनविंशाधिकरणार्थः ॥ ३९१ ॥

विद्यारूपा मनश्चित्प्रभृतय उचिता ज्ञानरूपक्रतुस्थाः
क्षेत्री शुद्धोऽनुचिन्त्यः क्रतुगुणसकलोद्गीथपूर्वेषु दृष्टिः ।
सामस्त्येनैव वैश्वानरभजनमथानेकविद्योपपत्तिः
मोक्षार्थानां विकल्पः पुनरनियतिरुद्गीथदृष्टेरिहोचे ॥ ३९२ ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु अधिकरणसारावल्यां
तृतीयस्याध्यायस्य तृतीयः पादः

चिन्ता०—मनश्चित्प्रभृतयो विद्यारूपा विद्यामयक्रत्वनुप्रवेशिनः । क्षेत्री तु शुद्ध एवानु-चिन्तनीयः । क्रियाङ्गभूतसर्वोद्गीथादिषु उपासनविधिः । वैश्वानरविद्यायां सामस्त्येनैव भजनम् । अथ विद्यानानात्वम् । मोक्षार्थानां विद्यानां विकल्पः । उद्गीथोपासनस्य पूर्वमुक्तस्यापि सुदृढमेव युक्ति-भिरनियतिरूचे ॥ ३९२ ॥

इति निखिलतार्किकचूडामणिना सर्वतन्त्रस्वतन्त्रेण
श्रीमद्वरदार्यापरनाम्ना कुमारवेदान्ताचार्येण
विरचिते शारीरकाधिकरणचिन्तामणौ
तृतीयस्याध्यायस्य तृतीयः पादः

पद०—विद्यारूपा इत्यादि । विद्यारूपा मनश्चित्प्रभृतयो ज्ञानरूपक्रतुस्था उचिताः—बुद्धिकल्पनारूपा मनश्चिदाद्यग्नयस्स्वप्रकरणे श्रुत्याद्युपस्थापितविद्यारूपक्रतोरङ्गभूता उचिता इत्यर्थः। अयं 'पूर्वविकल्पः' इत्यादिविंशाधिकरणार्थः । क्षेत्री शुद्धोऽनुचिन्त्यः—जीवः अहंग्रहाद्यनुसन्धानवेलायामपहतपाप्मत्वादिविशिष्टश्शुद्ध एवानुसन्धेय इत्यर्थः। अयं 'एक आत्मनः' इत्याद्येकविंशाधिकरणार्थः । क्रतुगुणसकलोद्गीथपूर्वेषु दृष्टिः—यज्ञाङ्गभूतसर्वोद्गीथादिषु उपासनविधिः । अयं 'अङ्गावबद्धाः' इत्यादिद्वाविंशाधिकरणार्थः । वैश्वानरभजनं सामस्त्येनैव—वैश्वानरोपासनं सर्वावयववैशिष्ट्येनैव कार्यमित्यर्थः । अयं 'भूम्नः क्रतुवत्' इत्यादित्रयोविंशाधिकरणार्थः । अथ अनेकविद्योपपत्तिः-तदुपर्यधिकरणे अनेका विद्या इत्यस्योपपत्तिर्युक्तिरित्यर्थः । विद्यानानात्वमिति यावत् । इदं 'नानाशब्दादि' इत्यादिचतुर्विंशाधिकरणार्थः । मोक्षार्थानां विकल्पः—मोक्षफलानां परविद्यानां फलतौल्याद्विकल्पः । अयं 'विकल्पोऽविशिष्टफलत्वात्' इति पञ्चविंशाधिकरणार्थः । पुनः—पूर्वमुक्तस्यापि पुनः । उद्गीथदृष्टेः—उद्गीथोपासनस्य । अनियतिः—पुरुषार्थत्वेन गोदोहनादिवदनैयत्यमित्यर्थः । अयं 'अङ्गेषु यथाश्रय' इत्यादिषड्विंशाधिकरणार्थः । इह—पादे । ऊचे—क्रमादुक्तम् । क्रियापदस्यैकवचनान्तत्वात् प्रथमश्लोके विद्यैक्येत्यादीनां प्रत्येकान्वयासम्भवाच्च इत्यादिकमर्थजातमित्यध्याहारः कार्यः । इह गुणोपसंहारपादे विद्यैक्येत्यादिकमर्थजातमूचे इत्यन्वयः ॥ ३९२ ॥

इति श्रीमद्रङ्गनाथशठमथनयतिराजकटाक्षलब्धोभयवेदान्तहृदयस्य भारद्वाजस्य श्रीनिवासराघवदासस्य
(श्रीमदहोबिलमठमहास्थाननिर्वहणधुरन्धर श्रीमद्वेदमार्गप्रतिष्ठापनाचार्य परमहंसपरिव्राजकाचार्य
सर्वतन्त्रस्वतन्त्रोभयवेदान्ताचार्य श्रीभगवद्रामानुजसिद्धान्तनिर्धारणसार्वभौम श्रीलक्ष्मी-
नृसिंहदिव्यपादुकासेवकश्रीवण्शठकोपश्रीशठकोपरामानुजमहादेशिकस्य)
कृतौ अधिकरणसारावलीव्याख्यायां पदयोजनाख्यायां

तृतीयस्याध्यायस्य तृतीयः पादः

## तृतीयाध्यायस्य चतुर्थः पादः

### पुरुषार्थाधिकरणम् ॥ १०९ ॥

सूत्रम्—पुरुषार्थोऽतश्शब्दादिति बादरायणः ॥ ४१९ ॥

कर्म प्राक् चिन्तयित्वा ननु परममथ ब्रह्म जिज्ञास्यमुक्तं
पादे विद्याङ्गतोक्तिः पुनरिह वितथानेकधात्याज्यतोक्तेः ।
मैवं कर्मैव तत्तद्गुणयुतविनियुक्त्यन्यभावेन भिन्नं
विद्यानिष्पत्तिहेतुः किमपि च सुकृतं स्यान्निवृत्त्येकसंज्ञम् ॥ ३९२ ॥

चिन्ता०—गुणोपसंहारपादे मोक्षसाधनभूतब्रह्मविद्यानिरूपणं कृतम्, अथ ब्रह्मविद्याङ्गभूतकर्मनिरूपणं क्रियत इति संगतिः । ननु पूर्वस्मिन्काण्डे कर्माणि निरूपितानि स्वर्गस्वाराज्यादिसांसारिकफलसाधनानीति तेषां कथं ब्रह्मविद्याङ्गत्वम् कथं वा तत्प्रतिपादनेन विद्याङ्गपादस्य वेदान्ते समन्वय इत्याशङ्क्य परिहरति—कर्मेति । अयमत्र शब्दान्वयः—कर्म प्रागेव चिन्तयित्वा कर्मजिज्ञासानन्तरमेव ब्रह्मणो जिज्ञास्यत्वमुक्तम् ‘ अथातो ब्रह्मजिज्ञासा ’ इति । अस्मिन्पादे कर्मणां विद्याङ्गतोक्तिर्वितथा पौनरुक्त्यात् । किञ्च कर्मणां विरोधिफलसाधनत्वेन विरुद्धत्वाच्च । तदिदमाह—अनेकधा त्याज्यतोक्तेरिति । ‘ न कर्मणा न प्रजया ’ ‘ प्लवा ह्येते अदृढा यज्ञरूपाः ’ इति त्याज्यत्वमेव कर्मणामुच्यते । इत्थमाशङ्कितमर्थं प्रतिक्षिपति—मैवमिति । प्रतिक्षेपप्रकारं द्वेधा विभज्य दर्शयति—कर्मैवेति । कर्माणि खलु फलान्तरे यानि विनियुक्तानि तान्येव विनियोगभेदेन विद्याङ्गत्वेन विनियुज्यन्ते । अतस्तेषामङ्गत्वसिद्धिः । तथा स्वर्गादिष्वविनियुक्तान्यपि परमपुरुषचरणयुगलध्यानार्चनप्रणामादीनि बहूनि कर्माणि श्रुतिस्मृतीतिहासपुराणसत्त्वोत्तरागमसदाचारप्रमाणकानि विद्यन्ते तेषां विद्याङ्गत्वप्रकारपरिशोधनं क्रियत इति पादारम्भस्य सार्थकत्वसिद्धिः । अत्राप्ययमन्वयः—कर्मैव यज्ञादिकं कर्मैव फलसङ्गकर्तृत्वत्यागादिगुणसमन्वितं भगवद्गीतादिप्रमाणकविनियोगपृथक्त्वेन भिन्नं काम्यकर्मणो विभक्तं विद्यानिष्पत्तिहेतुर्भवतीति तन्निवृत्तिधर्म इति नामान्तरेण कथ्यमानं सुकृतमेव स्यात् । तथा विद्यानिष्पत्तिहेतुतयेतिहासपुराणादिप्रसिद्धं नमस्कारादिकमपि निवृत्तिधर्म इति तदुभयप्रकारविशेषोपपादनेन विद्याङ्गपादन्यायकलापः प्रतायत इति सुसंगतमेतत् ॥ ३९२ ॥

पद०—कर्म प्रागित्यादि । प्राक्—कर्मकाण्डे । कर्म—अग्निहोत्रादिकं सर्वमपि कर्म । चिन्तयित्वा ननु—प्रमाणाद्युपकरणैस्सह तत्तत्पूर्वपक्षनिरासपूर्वकं विचार्य खलु । अथ—अनन्तरम् । परमम्—स्वापेक्षयोत्कृष्टशून्यम् । ब्रह्म—स्वरूपतो गुणतश्च परिबृढं निखिलजगदेककारणं वस्तु । जिज्ञास्यमुक्तम्—विचार्य निर्धारणीयमिति 'अथातो ब्रह्मजिज्ञासा' इति सूत्रे प्रतिपादितम् । इह पादे—अस्मिन् पुरुषार्थपादे । पुनर्विद्याङ्गतोक्तिः—पुनरपि तेषामेव कर्मणां विद्याङ्गत्वकथनम् । अनेकधा त्याज्यतोक्तेः—'न कर्मणा न प्रजया' 'प्लवा ह्येते अदृढा यज्ञरूपाः' इत्यादिभिरनेकधा त्याज्यत्वकथनेन । वितथा—व्यर्थं विरुद्धञ्च । मैवम्—एवं मा शङ्किष्ठाः । कर्मैव—पूर्वकाण्डविचारितं फलतस्त्याज्यमग्निहोत्रादिकर्मैव । तत्तद्गुणयुतविनियुक्त्यन्यभावेन भिन्नम्—फलसङ्गकर्तृत्वत्यागादिगुणसमन्वितभगवद्गीतादिप्रमाणकविनियोगपृथक्त्वेन काम्यकर्मणो विभक्तम् । विद्यानिष्पत्तिहेतुः—विद्याविरोधिरजस्तमोनिबर्हणसत्त्वविवृद्ध्यादिद्वारा विद्यानिष्पत्तिसाधनभूतम् । निवृत्त्येकसंज्ञम्—फलसङ्गादिनिवृत्तियुक्ततया निवृत्तिमुख्याभिधानम् । किमपि च सुकृतं स्यात्—अमोघं सुकृतं भवेत् । तस्माद्विनियोगपृथक्त्वेनाङ्गभूतकर्मविचारोऽस्मिन्पादे सुसङ्गतस्सफलश्चेति भावः ॥ ३९३ ॥

त्यागः काम्यक्रियाणां क्वचन परविदः क्वाप्यनर्हक्रियाणां
स्वैकाधीनत्वबुद्धेः क्वचिदनुपधिकस्वार्थबुद्धेश्च गतिः ।
अत्राहिंसादिकानां त्वघविहतिकृतां सर्वसाधारणानां
ब्रूते वर्णाश्रमादिप्रतिनियतिमतामप्युपास्त्यङ्गभावम् ॥ ३९४ ॥

चिन्ता०—अत्र केषां परित्यागः कार्यः केषां वा परिग्रह इत्यजानानस्य शिष्यस्य त्याज्योपादेयप्रकारविशेषोपपादनेन विभागमाह—त्याग इति । काम्यक्रियाणां परित्यागः कर्तव्य एव ब्रह्मविद्यानिष्ठस्य । क्वाप्यनर्हक्रियाणां पापरूपाणामित्यर्थः । निषिद्धकाम्ययोस्स्वरूपेण परित्यागमुक्त्वा नित्यनैमित्तिकयोरपि फलसङ्गकर्तृत्वत्यागमाह—स्वैकाधीनत्वबुद्धेरिति । अयं कर्तृत्वत्यागः; ईश्वरनिरपेक्षकर्तृत्वबुद्धेस्स्वात्मनि परित्यागात् । फलत्यागमप्याह—अनुपधिकेति । परमात्मशेषभूतस्वार्थबुद्धिर्न विरुद्धा, स्वतन्त्रस्वार्थबुद्धिर्विरुद्धेत्यनुपधिकशब्देन विशेषयति । राजभृत्यादिपरिपोषणं राजार्थम्, न स्वार्थम्, एवमध्यात्मविदां तत्त्वज्ञानादिसम्पादनमपि न स्वार्थम्, अपितु स्वशेषिभूतपरमात्मातिशयार्थमेवेति भावः । पतिव्रतालङ्कारो हि पत्यर्थो ननु स्वार्थ इति हि तत्त्वविदामालापः । तेन 'पतिं विश्वस्यात्मेश्वरम्' इत्युक्तपरमात्मशेषत्वेनैव स्वातिशयमपि कुर्वते तत्त्वविदः । अत्र गीतंइति भगवद्गीताप्रति-

पाद्यत्वमुच्यते । एवं त्याज्यत्वमुक्त्वा विदुषामुपादेयमपि विभज्य दर्शयति—अत्रेति । अहिंसासत्यास्तेयादीनां नियमरूपाणां पापक्षयहेतूनां सर्वजातिसाधारणानां तथा वर्णाश्रमादिप्रतिनियतिमतामुपास्त्यङ्गभावमत्रास्मिन्पादे ब्रूते ॥ ३९४ ॥

पद०—कर्मणां त्याज्योपादेयविभागं दर्शयति—त्याग इत्यादिना । क्वचन परविदः काम्यक्रियाणां त्यागो गीतः—क्वापि भागे परविदः काम्यक्रियाणां फलार्थमेव विहितानां कर्मणां त्यागस्स्वरूपेण त्यागो गीतायामुक्तः । क्वाप्यनर्हक्रियाणाम्—क्वापि अनर्हक्रियाणां पापरूपाणां त्यागः पूर्ववत् स्वरूपत्यागो गीतः । क्वचित् स्वैकाधीनत्वबुद्धेः—ईश्वरनिरपेक्षकर्तृत्वबुद्धेस्त्यागो गीतः । क्वाचिदनुपधिकस्वार्थबुद्धेश्च —क्वचित् परमात्मशेषभूतस्वार्थबुद्धेरविरुद्धत्वात् तादृशपरमात्मशेषभूतत्वाद्युपाधिरहितस्वार्थबुद्धेस्त्यागो गीतः । अत्र तु—शारीरकतार्तीयीकलक्षणचतुर्थपादे तु । अघविहंतिकृताम्—पापक्षयकृताम् । सर्वसाधारणानाम्—सर्ववर्णाश्रमसाधारणानाम् । अहिंसादिकानाम्—अहिंसासत्यास्तेयादीनाम् । वर्णाश्रमादिप्रतिनियतिमतामपि—वर्णाश्रमादिसम्बन्धिनां धर्माणामपि । उपास्त्यङ्गभावं ब्रूत—उपासनाङ्गत्वं प्रतिपादयतीत्यर्थः ॥ ६९४ ॥

कर्तात्मा कर्मणां यस्तदधिकमिह न ब्रह्म तस्मान्मखादौ
तद्बुद्ध्यैवोपयुक्तास्स्युरुपनिषद इत्यङ्गमीमांसकोक्तौ ।
जीवान्यब्रह्मचिन्तात्मकभजनविधौ कर्मणामङ्गभावं
प्राह क्षिप्तान्यलिङ्गः कलुषशमनतस्सत्त्वसंवर्धकानाम् ॥ ३९५ ॥

चिन्ता०—अत्र पादसङ्गतिर्भाष्ये 'गुणोपसंहारानुपसंहारफला विद्यैकत्वनानात्वचिन्ता कृता । इदानीं विद्यातः पुरुषार्थ उत विद्याङ्गात्कर्मण इति चिन्त्यते' इति । अनेन पूर्वपादे विद्याचिन्ता, अस्मिन्पादे विद्याङ्गचिन्तेति विभागः प्रदर्शितः । अत्र प्रथमाधिकरणे कर्मणामङ्गत्वसिद्ध्यर्थं विद्याया अङ्गित्वं प्रसाध्यत इति प्रथमाधिकरणस्यास्मिन्पादे प्राथम्यसिद्धिः । किञ्च गुणोपसंहारान्तिमाधिकरणे उद्गीथविद्यायाः पृथक्फलत्वेन पुरुषार्थसाधकत्वमुक्तम्, अधुना ब्रह्मविद्यायाः फलवत्त्वेन पुरुषार्थसाधकत्वं साध्यत इति च सङ्गतिरधिकरणस्य । तदर्थविचारस्तु—किं विद्यातः पुरुषार्थ उत विद्याङ्गात् कर्मण इति । तदर्थं विचार्यते—किं विद्या क्रतुकर्तृभूतात्मसंस्कारमुखेन क्रत्वर्थभूता आहोस्विदपुनरावृत्तिसाधनतया पुरुषार्थेति । किं 'ब्रह्मविदाप्नोति परम्' 'तमेवं विदित्वातिमृत्युमेति' इत्यादिवेदान्ताः फलविधय उत फलार्थवादाः । किं परविद्यासु कर्मतया प्रतीयमान आत्मा जीवात्मा, उत तदतिरिक्तः परमा-

त्मेति । किं 'यक्ष्यमाणो हवै भगवन्तोऽहमस्मि' इत्याचारदर्शनादिलिङ्गानुगृहीतं तत्त्वमस्यादिसामानाधिकरण्यमुपास्यस्य जीवात्मत्वमवगमयति नेति । किमिदं लिङ्गमनैकान्तिकं नेति । अत्र पूर्वपक्षमनुवदति—कर्तेति । यः कर्मणां कर्ता जीवः, तस्मादधिकं ब्रह्म नास्त्येव । तस्मान्मखादौ यज्ञादौ उपनिषदस्तद्बुद्ध्यैवोपयुक्ताः जीवस्वरूपपरिज्ञानेनैवोपकुर्वन्ति । इत्यज्ञमीमांसकोक्ताविति पूर्वपक्षमनूद्य सिद्धान्तमाह—जीवान्येति । जीवव्यतिरिक्तब्रह्मचिन्तात्मकभजनविधौ कर्मणामङ्गभावं प्राह । ननु जीवपरत्वे सप्रमाणे कथं ब्रह्मपरत्वमुपनिषदामित्यत्राह- क्षिप्तान्यलिङ्ग इति । प्रतिक्षिप्तजीवलिङ्ग इत्यर्थः । यानि जीवलिङ्गानि प्रतिभान्ति तानि प्रतिभासमात्रसिद्धत्वान्न तत्त्वानीत्यर्थः । कीदृशानां कर्मणां ब्रह्मविद्यायामङ्गभाव इत्याशङ्क्याह—सत्त्वसंवर्धकानामिति । केन प्रकारेणेत्यत्राह—कलुषशमनत इति । अयमत्रान्वयः—सत्त्वसंवर्धकानां फलसङ्गकर्तृत्वादिविधुराणां कलुषशमनतोऽन्तःकरणनैर्मल्यापादनद्वारेण सत्त्वसंवर्धनेन ब्रह्मविद्यायामङ्गत्वं भवति विमलकर्मानुष्ठानेन निर्मलीकृतमनसां ब्रह्मविद्ययैवापवर्गप्राप्तिरिति विद्यायाः पुरुषार्थत्वमेवेति ॥ ३९५ ॥

पद०—कर्तात्मेत्यादि । य आत्मा कर्मणां कर्ता—यो जीवात्मा कर्मणां कर्तृत्वेन प्रसिद्धः । तदधिकं ब्रह्म—तस्मादधिकं ब्रह्म । इह न—वेदान्ते नास्ति । तस्मात्, मखादौ—यज्ञादौ । तद्बुद्ध्यैव—कर्मकर्तृभूतजीवस्वरूपज्ञानेनैव । उपनिषदः—वेदान्तभागास्सर्वे । उपयुक्तास्स्युरिति—उपकुर्वन्तीति । अज्ञमीमांसकोक्तौ—वेदहृदयानभिज्ञमीमांसकोक्तौ सत्याम् । क्षिप्तान्यलिङ्गः—प्रतिक्षिप्तजीवलिङ्गः । जीवान्यब्रह्मचिन्तात्मकभजनविधौ—'पृथगात्मानं प्रेरितारञ्च मत्वा' इत्यादिश्रुत्यनुसारेण जीवभिन्नब्रह्मविषयकनिरन्तरध्यानात्मकभक्त्यनुष्ठाने । कलुषशमनतः—अन्तःकरणनैर्मल्यापादनद्वारेण । सत्त्वसंवर्धकानाम्—सत्त्वगुणवृद्धिहेतुभूतानाम् । कर्मणाम्—पूर्वश्लोकोत्तरार्धेन प्रतिपादितानां नित्यनैमित्तिकादिवर्णाश्रमधर्माणाम् । अङ्गभावं प्राह—प्रतिपादयामास । सूत्रकार इति शेषः ॥ ३९५ ॥

पादैरत्रैवमेकादशभिरपि परं ब्रह्म वेद्यं निरूढं
भूयः किं क्षुद्रलिङ्गैर्गगनलिपिसमैः क्षोभ्यते ब्रह्मविद्या ।
सत्यं तत्तादृगल्पश्रुतमतिकलहत्रासितच्छात्रडिम्भ-
स्तोमक्षेमाय जैमिन्यहृदयकथितं पक्षमुत्क्षिप्य हन्ति ॥ ३९६ ॥

चिन्ता०—अत्र कश्चिच्चोदयति—एवमेकादशभिः पादैः परं ब्रह्मैव परतत्त्वमिति प्रसाधितं कथमस्मिन्नधिकरणे जीवस्यैवोपनिषत्प्रतिपाद्यत्वशङ्केति । तदिदमाह—पादैरिति । अयमत्रान्वयः—अत्रैका-

दशभिः पादैः परं ब्रह्मैव वेद्यतया निरूढं प्रसिद्धम् । भूयः कथं गगनलिपिसमैः आकाशाक्षरसन्निभैः क्षुद्रलिङ्गैराभासहेतुभिर्ब्रह्मविद्या क्षोभ्यत इति । तत्रार्धाङ्गीकारेणोत्तरमाह—सत्यमिति । उक्तार्थस्य सत्यत्वेनाङ्गीकारः, अथापि बालबुद्धीनां विकटविद्वत्क्षोभितानां सङ्क्षोभणप्रशमनेन संरक्षणार्थं वक्तव्यशेषोऽस्तीत्यर्धांशेनानङ्गीकारः । अयमर्थः—धूर्तोक्तीनां तावन्निश्शेषनिराकरणं कर्तव्यमेव, किञ्च बादरायणशिष्यतल्लजस्य जैमिनेर्ब्रह्मनिराकरणमत्यन्तानिष्टमित्युक्तं भवति ॥ ३९६ ॥

पद०—पादैरित्यादि । अत्र—शारीरकशास्त्रे । एवम्—उपपादितक्रमेण । एकादशभिरपि पादैः—समुच्चितैरेकादशभिः पादैः । परं ब्रह्म—सर्वोत्कृष्टं ब्रह्म । वेद्यं निरूढम्—वेदान्तवेद्यतया सम्प्रतिष्ठापितम् । भूयः—पुनरपि । गगनलिपिसमैः—आकाशाक्षरतुल्यैः, असत्स्वरूपैरित्यर्थः । क्षुद्रलिङ्गैः—फल्गुहेतुभिः । ब्रह्मविद्या किं क्षोभ्यते—कुतः क्षोभ्यते । ब्रह्मप्रतिष्ठापनस्य च बहुमुखेन कृतत्वात् हेतूनाञ्चात्यन्तफल्गुरूपत्वात् पुनर्विचारणं विफलमिति भावः । सत्यम्—अर्धमङ्गीकृतम् । तत्तादृगल्पश्रुतमतिकलहत्रासितच्छात्रडिम्भस्तोमक्षेमाय—तत्तादृशां त एव तादृशो येषां त इति वा ते च तादृशश्चेति वा समासः । उभयथा निरुपमस्वभावा इत्यर्थः । अन्यादृशदुष्टस्वभावानां अल्पश्रुतानां किञ्चिज्ज्ञानां मतिकलहैर्बुद्धिकृतैर्विवादैस्त्रासिता ये छात्रडिम्भा बालान्तेवासिनस्तेषां स्तोमो वर्गस्तस्य क्षेमाय शङ्कालेशशून्यस्थिरप्रतिष्ठिततत्त्वज्ञानलाभाय । जैमिन्यहृदयकथितम्—'परं जैमिनिर्मुख्यत्वात्' इत्यादिभिर्जीवभिन्नपरब्रह्मवादित्वेन प्रसिद्धेन जैमिनिना अहृदयेन प्रतीयमानार्थतात्पर्यं विनैव कर्मश्रद्धासंवर्धनरूपतात्पर्यान्तरेण जल्पितम् । पक्षम्—अनीश्वरपक्षम् । उत्क्षिप्य—पूर्वपक्षीकृत्य । हन्ति—निरस्यतीत्यर्थः ॥ ३९६ ॥

कुर्वन्नेवेतिवाक्यं परविदि नियताचारतोक्तिस्सहैवा-
न्वारम्भो धीक्रियाभ्यामपि न नियमयेदङ्गतामङ्गितां वा ।
विद्यापूर्वं क्रियाणां करणमनुवदद्वाक्यमन्यार्थमुक्तं
न ह्येतद् ब्रह्मविद्यामनुवदति नचोद्गीथविद्या क्रियाङ्गम् ॥ ३९७ ॥

चिन्ता०—अत्र विद्यायाः कर्माङ्गत्वे पूर्वपक्ष्यभिप्रेतानि लिङ्गान्यनुक्रमेणानूद्य निराकरोति—कुर्वन्नेवेत्यादिना । अयमर्थः—'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः' इति कर्मणः प्राधान्यं वदति तेन ब्रह्मविद्या कर्माङ्गमिति तावदेकं चोद्यमन्यथासिद्धम् । तद्वाक्यं ब्रह्मविदः कर्म कर्तव्यमेवेत्याह नपुनर्विद्यायाः कर्माङ्गत्वं तत्साधकविशेषलिङ्गाभावात् तेनेदं वाक्यं ब्रह्मविदि नियताचारतोक्तिरेव । हेत्वन्तरमप्यनूद्य निराकरोति—अन्वारम्भ इति । 'तं विद्याकर्मणी समन्वारभेते' इति विद्याकर्मणो ब्रह्मविदि निय-

तान्वयवचनात् ब्रह्मविद्या कर्माङ्गमिति। तदपि न—तत्र विद्याकर्मणोस्साहित्यमेवोच्यते, नपुनर्विद्याया अङ्गत्वम्, नापि च कर्मणोऽङ्गित्वम्, साहित्ये सति यथाप्रमाणं विद्या वा कर्म वा अङ्गित्वमश्नुवीत, अत्र पुनः 'यज्ञेन दानेन' 'कर्मणैव हि संसिद्धिम्' 'इयाज सोऽपि सुबहून्' इति प्रमाणकोटिसहस्रानुसारेण कर्मैव विद्याङ्गम्, न पुनर्विद्या कर्माङ्गमिति। धीक्रियाभ्यां सहैवान्वारम्भो ज्ञानकर्मणोरङ्गतां वा अङ्गितां वा न नियमयेदिति शब्दान्वयः। परवाद्यभिमतं तृतीयमपि हेतुं निराकरोति—विद्यापूर्वमिति। 'यो वा एतदक्षरं गार्ग्यविदित्वा' इति विद्यारहितं कर्म निराकृत्य 'यो विदित्वा' इति विद्यापूर्वं कर्मानूद्य 'स ब्राह्मणः' इति ब्राह्मणत्वप्राप्तिरूपफलोपदेशाद् विद्या कर्माङ्गमिति। एतच्च वाक्यं ब्रह्मविद्याङ्गकर्म ब्रह्मज्ञानपूर्वकमेव कर्तव्यमिति वदति, न पुनर्ब्रह्मविद्यायाः कर्माङ्गत्वं वदतीति तत्रतत्रोक्तम्। तदेव विवृणोति—न ह्येतदिति। 'योवा एतदक्षरं गार्गि विदित्वा' इत्यत्रानुष्ठानोपयुक्तं वेदान्तजन्यं ज्ञानमेवोच्यते तेनैतद्वाक्यं न ब्रह्मोपासनरूपां विद्यामनुवदतीत्यर्थः। अतो न ब्रह्मविद्यायाः कर्माङ्गत्वम्। अथवा 'आचार्यकुलाद्वेदमधीत्य' इति विद्यायाः कर्माङ्गत्वमाशङ्क्य तस्यापि वेदाध्ययनमात्रपरत्वं न पुनर्ब्रह्मविद्यापरत्वमुच्यते—नह्येतदिति। मा भूदेतैर्हेतुभिर्ब्रह्मविद्यायाः कर्माङ्गत्वम्, अथाप्युद्गीथविद्यायाः कर्माङ्गत्वविधानादस्तु विद्याकर्माङ्गमित्याशङ्क्य तदपि प्रागेव प्रतिक्षिप्तमित्याह—नचेति। एवं पराभिप्रेतहेतुसमुदायनिरासात् कर्मैव विद्याङ्गमित्यर्थः॥ ३९७॥

पद०—कुर्वन्नेवेतीत्यादि। कुर्वन्नेवेतिवाक्यम्—ईशावास्योपनिषदि 'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः' इत्यादिवाक्यम्। परविदि—ब्रह्मविदि। नियताचारतोक्तेः—'कर्मणैव हि संसिद्धिमास्थिता जनकादयः' इत्यादिरीत्या नियतवर्णाश्रमाचारत्वप्रतिपादनाद्धेतोर्भवति। ब्रह्मविदां विद्याविवृद्ध्यर्थसत्त्ववर्धकनित्यनैमित्तिकाद्याचारनियमावश्यकत्वप्रतिपादनार्थं तथोक्तिः, नतु विद्यायाः कर्माङ्गत्वप्रतिपादनार्थमित्यर्थः। धीक्रियाभ्याम्—विद्याकर्मभ्याम्। सहैव—एकदैव। अन्वारम्भोऽपि—'तं विद्याकर्मणी समन्वारभेते' इत्यादिप्रतिपन्नस्सम्बन्धोऽपि। अङ्गताम्—विद्यायाः कर्माङ्गताम्। अङ्गितां वा—कर्माङ्गितां वा। न नियमयेत्—नोपपादयेत्। शक्त्यभावादिति भावः। अङ्गत्वमङ्गित्वं वा प्रमाणान्तरावसेयमेव तथा च 'कर्मणैव हि संसिद्धिम्' इत्याद्यनेकप्रमाणेन कर्मण एव विद्याङ्गत्वं सिध्यतीति हृदयम्। विद्यापूर्वम्—विद्याग्रहणपूर्वकम्। क्रियाणाम्—गार्हस्थ्यधर्माणाम्। करणम्—आचरणम्। अनुवदत्—प्रतिपादयत्। वाक्यम्—'आचार्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाभिसमावृत्य कुटुम्बे शुचौ देशे' इत्यादिवाक्यम्। अन्यार्थमुक्तम्—उक्तवाक्यघटकस्य कर्माङ्गत्वेन विद्यासमर्पकतया भवदभिमतस्य अधीत्येतिपदस्य 'अध्ययनमात्रवतः' इति सूत्रेण केवलाक्षरराशिग्रहणमात्रपरत्वमुक्तम्। एतत्—पूर्वोदाहृतवाक्यघटकं वेदमधीत्येतिपदम्। ब्रह्मविद्यां नानुवदति हि—अध्ययनस्यार्थज्ञानपर्यन्त-

त्वेऽपि विद्याया अर्थज्ञानातिरिक्तत्वेन ब्रह्मविद्यामनुवदितुं क्षमं न भवति हि। उद्गीथविद्या च क्रियाङ्गं न—'तन्निर्धारण' इत्याद्यधिकरणेन 'अङ्गेषु' इत्याद्यधिकरणेन च उद्गीथोपासनस्य पुरुषार्थत्वस्थापनेनाङ्गत्वनिरासात् उद्गीथोपासनं क्रियाङ्गं न भवति ॥ ३९७ ॥

स्वाध्यायप्राप्तये ह्यध्ययनमुदितमाधानवन्नोत्तराङ्गं
विद्याङ्गं त्वर्थबोधो भवतु यदधिका सा स्वरूपैः फलैश्च।
नित्यात्मज्ञानमात्रं क्रतुषु नियमतोऽपेक्षितं नान्यविद्या
काम्यत्यागस्सविद्ये कथमिह भविता सापि यद्यङ्गमेषाम् ॥ ३९८ ॥

चिन्ता०—विद्या कर्माङ्गमिति वदतः पूर्वपक्षिणो भावं विकल्प्य दूषयति—स्वाध्यायेति। किं वेदाध्ययनमेव विद्येति भवताभिधीयते किं वा अध्ययनजनितमक्षरराशिग्रहणम् अथवा तज्जन्यं शारीरकमीमांसाश्रवणम् अथवा तदुपबृंहितवेदान्तवाक्यार्थपरिज्ञानम् उत मननसन्तानमुखेन तज्जन्यं ब्रह्मोपासनम् इति विकल्पः। तत्र प्रथमपक्षस्य दूषणं दर्शयति—स्वाध्यायेति। 'स्वाध्यायोऽध्येतव्यः' इत्यध्ययनमक्षरराशिग्रहणप्राप्त्यर्थमेव विधीयते। नोत्तराङ्गम्—उत्तरकर्मानुष्ठानार्थं न विधीयते। अत्र कर्मकाण्डानुमतं दृष्टान्तमाह—आधानवदिति। आधानं ह्यग्निसिद्धये विधीयते, नपुनरुत्तरकर्मानुष्ठानार्थम्। अक्षरराशिग्रहणमिति द्वितीयपक्षेऽपि तस्य श्रवणशेषत्वेन सुप्रसिद्धत्वात् तत्रापि नोत्तराङ्गमित्यनुपज्यते एवं श्रवणस्यापि तुल्यन्यायेन दत्तोत्तरत्वात् तत्रापि वक्तव्यं नावशिष्यते। वेदान्तवाक्यजन्यज्ञानमिति चतुर्थः पक्षः परिशिष्यते, तत्रोत्तरमाह—विद्याङ्गमिति। वेदान्तवाक्यार्थपरिज्ञानं ब्रह्मोपासनाङ्गमेव भवतु, एकविषयत्वात् सापेक्षत्वाच्च। न पुनः कर्माङ्गं परस्परापेक्षाभावात्। ननु वाक्यजन्यं ज्ञानमेव ब्रह्मविद्या, ब्रह्मज्ञानाद् ब्रह्मविद्याप्राप्तिरित्यसङ्गतमात्माश्रयादित्याशङ्क्य परिहरति—यदधिकेति। वाक्यजन्यज्ञानादुपासनात्मकं ज्ञानमधिकमेव। वाक्यजन्यज्ञानं हि परोक्षं सकृच्च मननहेतुर्भवति। उपासनात्मकं त्वहरहरभ्यासाधेयातिशयमाप्रायणादनुवर्तमानमपरोक्षज्ञानशिरस्कं साक्षाद्ब्रह्मप्राप्त्यर्थञ्च भवति। तदिदमुच्यते—स्वरूपैः फलैश्चाधिका ब्रह्मोपासनात्मिका सा विद्येति। ननु ज्ञानमन्तरेण कथं कर्मानुष्ठानं सेत्स्यति तेन ब्रह्मज्ञानं कर्मणोऽप्यङ्गं स्यात्; नेत्याह—नित्यात्मज्ञानमात्रमिति। प्रवृत्तिधर्मनिष्णातैः क्रियमाणेषु कर्मसु। देहातिरिक्तनित्यात्मज्ञानमेव ह्यपेक्ष्यते॥ तच्च कर्मकाण्ड एव सिद्धम्। ब्रह्मकाण्डसाध्यं तु ब्रह्मज्ञानं प्रवृत्तिधर्मनिष्ठानां विरुद्धमेव तत्परित्यागहेतुत्वात्। तेन पञ्चमः पक्षः परिशिष्यते सोऽपि न—वीतरागमात्रानुष्ठेयस्य परब्रह्मोपासनस्य स्वर्गादि-

प्रापककर्माङ्गत्वप्रसङ्गाभावात् । तेन न विद्यायाः कर्माङ्गत्वसिद्धिः । अथापि परब्रह्मविद्या काम्यकर्माङ्गमिति मोहाद् यदि वदसि तदुन्मत्तप्रलपितमेव । यदि ब्रह्मविद्या काम्यकर्माङ्गम् , कथं तर्हि ब्रह्मविद्यानिष्ठस्य काम्यकर्मपरित्यागस्सर्वत्राप्यध्यात्मवित्सु श्रूयते ? विद्यां प्रति अङ्गित्वेनानुष्ठेयस्य कर्मणस्त्यागे प्रधानलोपः, अत्यागे पुनस्त्याज्यताप्रतिपादकप्रमाणविरोध इति । अयमत्र शब्दान्वयः—सा परब्रह्मविद्यापि यद्येषां पूर्वकाण्डप्रतिपाद्यकाम्यकर्मणामङ्गं तदा सविधे ब्रह्मविद्यानिष्णातेऽधिकारिणि काम्यकर्मत्यागः कथं स्यादिति ॥ ३९८ ॥

पद०—स्वाध्यायप्राप्त्य इत्यादि । हि—यस्मात्कारणात् । अध्ययनं स्वाध्यायप्राप्तये उदितम्—अध्ययनं वेदाख्याक्षरराशिलाभाय विहितम् । अतः आधानवत् उत्तराङ्गं न—अग्निसिद्ध्यै विहितमाधानं यथोत्तरक्रत्वङ्गं न भवति तथा उत्तराङ्गं न भवति । उत्तरस्य पश्चादनुष्ठास्यमानस्य क्रतोरङ्गं न भवति । सा—ब्रह्मविद्या । स्वरूपैः—अहरहरभ्यासाधेयातिशयत्वाप्रायणानुवर्तनीयत्वापरोक्षतुल्यत्वादिस्वासाधारणधर्मैः । फलैश्च—निश्शेषाविद्यानिवृत्तिब्रह्मप्राप्तितत्कैङ्कर्यरूपैः फलैश्च । यदधिका—वाक्यजन्यत्वमननादिहेतुत्वपरोक्षत्वादिस्वरूपफलकात् यस्मात् विलक्षणा । सः अर्थबोधो विद्याङ्गं तु भवतु—तथा विद्यातो विलक्षणं वेदान्तवाक्यार्थज्ञानं समानविषयत्वेन स्वसापेक्षाया विद्याया अङ्गं भवतु । तुरेवार्थः । विद्याया एवाङ्गं भवितुमर्हति नतु कर्मणः ; अनपेक्षत्वात् कर्मत्यागहेतुत्वाच्च । नित्यात्मज्ञानमात्रं क्रतुषु नियमतोऽपेक्षितम्—देहान्तरानुभाव्यफलसाधनानुष्ठानाय नित्यात्मज्ञानमात्रं यागादिषु नियमेनापेक्षितम् । नान्यविद्या—नतु पृथक्फला जीवभिन्नपरमात्मभक्तिः । अपेक्षितेति शेषः । सापि—एवंविलक्षणा विरोधितया अनपेक्षणीया विद्यापि । एषाम्—तद्विरुद्धगतीनां काम्यकर्मणाम् । यद्यङ्गम्—अङ्गमिति यद्यङ्गीक्रियते तर्हि । सविधे इह—ब्रह्मविद्यानिष्णातेऽस्मिन्नधिकारिणि । काम्यत्यागः कथं भविता—काम्यानां कर्मणां श्रुतिस्मृत्यादिप्रतिपन्नस्त्यागः कथं भविता । अङ्गत्वे विद्यावतः काम्यकर्मत्यागविधानं न सम्भवेदित्यर्थः ॥ ३९८ ॥

नाङ्गं विद्या मखादेर्न हि तदधिकृतेष्वेव तामामनामः
स्यात्तत्कर्मणां सेत्यपि न बहुविधाद् वैपरीत्योपदेशात् ।
जाबालैरूर्ध्वरेतोविधिरपि पठितोऽनूद्यतेऽन्यैश्च तस्मात्
प्राप्तिर्ग्राह्यान्यथापि स्वयमिह तु विधिस्तन्निषेधस्सरागे ॥ ३९९ ॥

इति पुरुषार्थाधिकरणम् ॥ १०९ ॥

चिन्ता०—विद्यायाः कर्माङ्गत्वे दूषणमाह—नाङ्गमिति । अयमर्थः—किं विद्यायाः कर्माङ्गत्वं

श्रुतिलिङ्गादिष्वन्यतमेन प्रमाणेन? यदि वा मानमन्तरेण? उत्तरत्र सर्वं सर्वाङ्गं स्यात्। पूर्वत्रापि श्रुत्या नैतदस्ति। विद्यायाः कर्माङ्गत्वप्रतिपादकश्रुतेरदर्शनात्। न च लिङ्गेन, तस्याप्यदर्शनात्। नापि वाक्यस्थानसमाख्याभिः, तासामप्यनुपलम्भात्। प्रकरणमेकमवशिष्यते तदपि नास्तीत्याह—न हीति। कर्माधिकृताधिकारिणमधिकृत्य यदि ब्रह्मविद्या विधीयते तदा तस्याः कर्मशेषत्वमङ्गीकार्यम्, न च तद् विद्यते ततः कर्माङ्गत्वं कथमिव विद्यायाः। ननु ब्रह्मविद्यानिष्ठानामेव तपस्तीर्थदनादिविधानाद् विद्यायास्तत्तद्धर्मशेषत्वमित्याशङ्क्य सा च विपरीतकल्पनेत्याह—स्यादिति। तत्तत्कर्मणां विद्या अङ्गम् स्यादिति न वक्तव्यम् कल्पनाया विपरीतत्वात्। तपस्तीर्थादिनिष्ठानां व्यासपराशरादीनां विद्यैव प्रधानं कर्म गुण इति सर्वेऽपि निर्वहन्ति। तथा च श्रूयते 'यज्ञेन दानेन तपसा नाशकेन ब्राह्मणा विविदिषन्ति' 'क्रियावानेष ब्रह्मविदां वरिष्ठः' 'कर्मणैव हि संसिद्धिमास्थिता जनकादयः' 'कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते' इति सहस्रशोऽपि वचनजातम्, तस्मात्कर्मैव विद्याङ्गमिति विदुषां निर्णयः। यदि च विद्या यज्ञादिकर्माङ्गम्, तदोर्ध्वरेतसां यज्ञादिकर्माभावाद् विद्या विनश्येदेव। अङ्ग्यभावे सति किमनेनाङ्गेन निष्फलेन सफलत्वे वा कथमङ्गत्वं परिकल्प्यते। तर्हि ऊर्ध्वरेतसामाश्रममेव परित्यजामः, तदाश्रमनिष्ठानां विद्यामप्यविद्यापरिकल्पितामामनाम इत्याशङ्क्योत्तरमाह—जाबालैरिति। जैबालरूर्ध्वरेतोविधिः पठ्यते। तथान्यैरपि श्रुतीतिहासपुराणपाठकैरूर्ध्वरेतसामाश्रमस्तत्रतत्रानूद्यते। अतस्सोऽप्याश्रमस्स्वीकर्तव्यः। तेषां ब्रह्मविद्या च यथाप्रमाणमङ्गीकर्तव्या। यज्ञादिकर्माभावाद् विद्यायाः कर्मशेषत्वमपि परिहर्तव्यमिति। ननु सर्वमप्येतदनुवादमात्रम्, न पुनर्विधिः। तेनोर्ध्वरेतसामाश्रमस्य प्रमाणमूलत्वं नास्तीत्याशङ्क्य परिहरति—तस्मात्प्राप्तिरिति। अयमर्थः—परिदृश्यमानस्य प्रमाणजातस्यानुवादत्वे पुरोवादमन्तरेणानुपपत्तेः पुरोवादश्श्रुतार्थापत्त्या परिकल्प्यत इति तस्याप्याश्रमस्य प्रामाणिकत्वसिद्धिः। अन्यथापि एषामनुवादत्वाभावेऽपि अप्राप्तविषयत्वादेतदेव प्रमाणम्। अयमत्र शब्दार्थः—एतेषामनुवादत्वे प्राप्तिः पुरोवादोक्तिः परिग्राह्या एतेषामप्राप्तविषयत्वे स्वयमेवैतानि वाक्यानि प्रमाणानीति। ननु बाधकप्रमाणाभावे हि प्राप्तिः परिकल्प्या, विद्यते हि बाधकप्रमाणम् 'वीरहा वा एष देवानां योऽग्निमुद्वासयते' इति, तेनोर्ध्वरेतसामाश्रमो नास्तीत्याशङ्क्य परिहारमाह—तन्निषेध इति। सरागस्यैवाग्निपरित्यागनिषेधः। वीतरागस्य तु ब्रह्मचर्याद्याश्रमपरित्यागेन चरमाश्रमपरिग्रहस्य सर्वेष्वपि स्मृतीतिहासपुराणेषु सुप्रसिद्धत्वात्। श्रुतिषु च जाबालादिपठितासु निर्बाधमेव दृष्टत्वादिति ॥ ३९९ ॥

इति पुरुषार्थाधिकरणम् ॥ १०९ ॥

पद०—नाङ्गमित्यादि। विद्या मखादेरङ्गं न—ब्रह्मविद्या यज्ञादिकर्मणोऽङ्गं न भवति। हि—यस्मात् कारणात्। तदधिकृतेष्वेव तां नामनामः—कर्माधिकृतेष्वेव प्रकरणेषु विद्यां नामनामः। दर्श-

पूर्णमासप्रकरणे प्रयाजादीनामिव यज्ञादिकर्मप्रकरणे विद्याया अनाम्नानात् श्रुतिलिङ्गवाक्यस्थानसमाख्यानाञ्चाभावात् न विद्या कर्माङ्गमिति भावः । तत्तत्कर्मणां सा अङ्गं स्यादित्यपि न—ब्रह्मविद्यानिष्ठानामेव तपस्तीर्थदानादिविधानात् तत्तत्कर्मणां विद्या अङ्गं भवत्वित्यपि न युक्तम् । बहुविधाद्वैपरीत्योपदेशात्—'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन' 'क्रियावानेष ब्रह्मविदां वरिष्ठः' 'कर्मणैव हि संसिद्धिम्' इत्यादिबहुविधविद्याङ्गित्वकर्माङ्गत्वरूपविपरीतोपदेशात् । जाबालैरूर्ध्वरेतोविधिः पठितः अन्यैरपि चानूद्यते—जाबालैश्शाखिविशेषैः ऊर्ध्वरेतोविधिः 'ब्रह्मचर्यं समाप्य गृही भवेद् गृहाद्वनी भूत्वा प्रव्रजेद्यदिवेतरथा ब्रह्मचर्यादेव प्रव्रजेत्' इत्यूर्ध्वरेतआश्रमविधिः पठितः, अन्यैरपि शाखान्तरस्थैरपि चानूद्यते 'त्रयो धर्मस्कन्धाः' इत्यादिना ऊर्ध्वरेतआश्रमोऽनूद्यते । तस्मात् प्राप्तिर्ग्राह्या—एवं प्रमाणदर्शनाद्विधिरङ्गीकार्यः । ऊर्ध्वरेतआश्रमविधिरङ्गीकार्यइत्यर्थः । अन्यथापि—'त्रयो धर्मस्कन्धाः' इत्यादिवाक्यस्याप्राप्तविषयत्वात् अनुवादत्वाभावेऽपि । इह तु—अस्मिन् 'त्रयो धर्मस्कन्धाः' इति वाक्य एव । स्वयं विधिः—साक्षाद्विधिः । धारणादिवाक्य इव विधिप्रत्ययः कल्पनीय इत्यर्थः । 'त्रयो धर्मस्कन्धाः' इत्यादिवाक्यस्यानुवादरूपत्वे तस्य पुरोवादसापेक्षत्वात् तस्मादेव पुरोवादादूर्ध्वरेतआश्रमविधिरस्तु । यद्वा अस्य वाक्यस्याप्राप्तार्थविषयत्वेनानुवादत्वाभावे इदं वाक्यमेव ऊर्ध्वरेतआश्रमविधायकमित्याश्रमान्तरस्य प्रामाणिकत्वात् तन्निष्ठेषु यज्ञाद्यभावेऽपि विद्यादर्शनात् न विद्या कर्माङ्गमिति भावः । तन्निषेधः—'वीरहा वा एष देवानां योऽग्निमुद्वासयते' इत्यादिनिषेधस्तु । सरागे—अविरक्ताधिकारिविषये । सावकाश इति शेषः ॥ ३९९ ॥

इति पुरुषार्थाधिकरणम् ॥ १०९ ॥

---

## स्तुतिमात्राधिकरणम् ॥ ११० ॥

सूत्रम्—स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ॥ ४३९ ॥

**जुह्वादिस्तोत्रनीत्या भजतु रसतमाद्युक्तिरङ्गस्तुतित्वं**
**मैवं तत्तद्विधानप्रकरणरहितापूर्वनिर्देशयुक्तेः ।**
**तत्तद्दृष्टेर्विधानं विविधमिह समालक्षि चैतत्समीपे**
**तेनानन्यार्थशिष्टे फलवति च विधिर्युज्यते कल्प्यमानः ॥ ४०० ॥**

चिन्ता०—पूर्वं हि ब्रह्मसंस्थस्य स्तुत्यर्थमनूदितत्वं पूर्वपक्षीकृत्याश्रमद्वयस्य विधिरेव प्रत्यपादि । एव-

मधुना पुनस्स्तुतिप्रसङ्गात् रसतमत्वप्रतिपादकवाक्यानि स्तुतिपराणि अथवा नेति शङ्कया पूर्वपक्षोत्थानमिति अस्याधिकरणस्य प्रासङ्गिकी सङ्गतिः । ननु पूर्वमेवायमुद्गीथप्रसङ्गः कृतः किमर्थं पुनरुच्यते इत्याशङ्क्य भाष्यकारैरेवोद्गीथविषयाधिकरणयोः प्रयोजनभेदेन वैषम्यमुक्तम् 'अत्र प्रतिपादितमुपासनपरत्वमङ्गीकृत्योपासनस्य पुरुषार्थत्वेन क्रतुपूपादानानियम उक्तः' इति । अयमर्थः—अत्रोपासनपरत्वे तात्पर्यं पूर्वत्र क्रतुपूपादानानियमे तात्पर्यमिति । तदर्थविचारस्तु—'स एष रसानां रसतमः परमः परार्ध्योऽष्टमो य उद्गीथः' इत्येवञ्जातीयकानि वाक्यानि किं सामावयवभूतोद्गीथादिस्तुतिमात्रपराणि उतोद्गीथादिषु रसतमत्वदृष्टिविधिपराणीति । तदर्थं विचार्यते—किं पदानामेषामर्थवादत्वसमाश्रयणं न्याय्यम् उत विधिपरत्वम् । अत्रापूर्वत्वं किं विधित्वमवगमयति नेति । अत्र पूर्वपक्षमाह—जुह्वादीति । 'इयमेव जुहूस्स्वर्गो लोक आहवनीयः' इति जुह्वादिस्तोत्रवद् रसतमाद्युक्तिरपि यज्ञाङ्गभूतोद्गीथादिस्तुतित्वमेव भजतु । पूर्वपक्षं निराकरोति—नैवमिति । निराकरणमेव विवृणोति—तत्तदिति । यद्युद्गीथादिविधानप्रकरण एवेदं वाक्यं स्यात् तदानीं विहितार्थप्रशंसारूपार्थवादत्वं भजेत । तेन तत्प्रकरणरहितत्वेनार्थवादत्वं न भजेत । किञ्चात्रापूर्वार्थकथनमस्ति तस्मात् 'अप्राप्ते शास्त्रमर्थवत्' इति न्यायेनोपासनविधित्वमङ्गीकार्यमित्यर्थः । किञ्चैतद्वाक्यसमीप एव तत्तद्दृष्टेर्विधानञ्च दृश्यते, नैवं जुह्वादिवाक्ये अनारभ्याधीतत्वात् । तस्मादनन्यार्थशिष्टेऽन्यस्याङ्गतया विधानरहिते 'यदेव विद्यया करोति, तदेव वीर्यवत्तरम्' इति फलवत्युद्गीथोपासने कल्प्यमानो विधिरेव युज्यते न पुनरर्थवादत्वम् । पर्णमयत्वादिकं त्वन्यार्थशिष्टं फलसाधनत्वप्रतिपादकविभक्त्यभावाच्च फलशून्यं तस्मात्तत्र न विधिरिति प्रागेवोक्तमिति भावः ॥ ४०० ॥

पद०—जुह्वादीत्यादि । रसतमाद्युक्तिः—छान्दोग्ये 'स एष रसानां रसतमः परमः परार्ध्योऽष्टमो य उद्गीथः' इत्यादिषु रसतमाद्युक्तिः । जुह्वादिस्तोत्रनीत्या—'इयमेव जुहूः स्वर्गो लोक आहवनीयः' इत्यादिषु जुह्वादिस्तोत्ररूपत्वकल्पनन्यायेन । अङ्गस्तुतित्वं भजतु—क्रत्वङ्गभूतोद्गीथस्तुतिरूपत्वमेव भजतु । नैवम्—एवं मा शङ्किष्ठाः । तत्तद्विधानप्रकरणरहितापूर्वनिर्देशयुक्तेः—उद्गीथादितत्तत्क्रत्वङ्गविधानप्रकरणरहितस्य अपूर्वनिर्देशस्याप्राप्तार्थनिर्देशस्य युक्तेर्योगात् । यद्युद्गीथादिविधानप्रकरण एवेदं वाक्यं स्यात् तदानीं विहितार्थप्रशंसारूपार्थवादत्वं भजेत । तेन तत्प्रकरणरहितत्वेनापूर्वार्थयोगेन च नार्थवादरूपत्वं युक्तिमदिति भावः । किञ्च इह विविधं तत्तद्दृष्टेर्विधानं एतत्समीपे समालक्षि च—युक्त्यन्तरं चास्ति, एतत्प्रकरणे नानाविधं तत्तद्दृष्टेर्विधानं तत्तद्रूपेण दृष्टिविधानं एतत्समीपे रसतमत्वदृष्टिविधिसमीपे समुपलभ्यते च । तेन—एवमुपपादितेन हेतुना । अनन्यार्थशिष्टे—अन्यस्याङ्गतया विधानरहिते । फलवति च—'यदेव विद्यया करोति, तदेव वीर्यवत्तरं भवति' इति

फलवति उद्गीथोपासने। कल्प्यमानो विधिर्युज्यते—विधिरेव युक्तः, न पुनरर्थवादत्वम्। पर्णमयत्वादिकं त्वन्यार्थशिष्टं फलसाधनताप्रतिपादकविभक्त्यभावात् फलशून्यञ्च तस्मात् तत्र न विधिः किन्त्वर्थवादत्वमेवेति प्रागेवोक्तमिति भावः ॥ ४०० ॥

किञ्च प्राप्तेरभावान्न तदनुवदनं नाधिरोप्यस्तुतिर्वा
युक्ता विध्येकवाक्ये गतिरियमगतेस्सात्र नासक्तिहानेः।
उत्कर्षः कल्प्यते चेदगतिकविषये तत्प्रसह्य प्रसह्यं
मध्ये विद्याविधीनां वचनमिदमिति स्याच्च विद्यार्थमेतत् ॥ ४०१ ॥

चिन्ता०—उक्तमेव विधिपरत्वं विशदप्रतिपत्त्यर्थं युक्तिभिः प्रतिष्ठापयति—किञ्चेति। अयमर्थः—विधिपरत्वं नास्तीति वदता किमत्रानुवादत्वमेवोच्यते उत विधेयस्तुतिपरत्वम् उभयमपि नास्ति—प्राप्तेरभावात्। पूर्वमेव रसतमत्वादिविशिष्टविधाने सत्येव ह्यत्रानुवादत्वं कल्पयितुं शक्येत। तथैव स्तुतिमात्रत्वमपि कल्पयितुं शक्येत अत्र तु प्राप्तेरभावादुभयमपि कल्पयितुं न शक्यते। नाधिरोप्यस्तुतिर्वा अन्यत्राधिरोप्यस्य रसतमत्वादेस्स्तुतिश्च न भवतीति। ननु तत्रतत्रोभयपरिकल्पनमपि दृश्यते तत्किमत्र नाश्रीयत इत्याशङ्क्याह—युक्तेति। 'विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः' इति न्यायानुसारेण विध्येकवाक्यत्वे प्रतिपन्ने सत्येवागत्या गतिरियं युक्ता। सा गतिरत्र रसतमत्वादिदृष्टिविधायकवाक्ये नास्ति आसक्तिहानेः विध्यासक्तिहानेः विध्येकवाक्यत्वप्रसङ्गाभावादित्यर्थः। नन्वत्र विध्यासत्त्यभावेऽपि यत्र विधिरस्त्यन्यत्र तत्रेदं वाक्यमुत्कृष्य स्तुतिपरत्वेन नेयमिति चेत् तदपि नेत्याह—अगतिकाविषये तत्प्रसह्य प्रसह्यमिति। उत्कर्षकल्पनं हि गतिशून्यविषय एव बलादङ्गीकरणीयम् अत्र पुनरस्ति गतिः अपूर्वार्थविषयस्य रसतमत्वादिदृष्टिविधानस्योपपादनादित्यर्थः। किञ्च बहूनां विधीनां मध्य एव रसतमत्वादिदृष्टिप्रतिपादनपरमिदं वाक्यं पठ्यते तेन समभिव्याहारसामर्थ्यादस्य वाक्यस्य विधिपरत्वमेव न्याय्यमित्याह—मध्य इति ॥ ४०१ ॥

पद०—किञ्चेत्यादि। किञ्च—पुनर्युक्त्यन्तरमुच्यते। प्राप्तेरभावात् तदनुवदनं न—युक्तेत्युपरितनस्य पदस्य लिङ्गविपरिणामेनानुकर्षः। रसतमत्वादीनामन्यत्र विधानाभावात् तदनुवादत्वं न युक्तम्। अन्यत्र विहितस्य ह्यन्यत्रानुवाद इत्यर्थः। अधिरोप्यस्तुतिर्वा न युक्ता—अन्यत्राधिरोप्यस्य रसतमत्वादेः स्तुतिर्वा न युक्ता। अन्यत्र विधानाभावादेव। अन्यत्र विहितस्य हि स्तुतिर्वा भवति तदभावात् स्तुतिरपि न युक्तेत्यर्थः। विध्येकवाक्ये अगतेरियं गतिः—विधिना एकत्वेन प्रतिपन्न एव वाक्ये

अगत्या इयं तत्प्रशंसारूपत्वरूपार्थवादत्वगतिर्युक्ता । आसक्तिहानेः—विध्यासक्त्यभावात् । सा—अर्थवादरूपता । अत्र—रसतमत्वादिदृष्टिविधाने । न—न सम्भवति । उत्कर्षः कल्प्यते चेत्—अत्र विध्यभावेऽपि यत्र विधिरस्त्यन्यत्र तत्रेदं वाक्यमुत्कृष्य स्तुतिपरत्वेन नेयमिति चेत् । तत्—उत्कर्षकल्पनम् । अगतिकविषये—गत्यन्तरशून्यविषये । प्रसह्य—बलात्कारेण । प्रसह्यम्—सोढव्यम् । अत्र पुनरसतमत्वाद्यपूर्वार्थदृष्टिविधानेन गत्यन्तरसद्भावान्नोत्कर्षसम्भव इति भावः । किञ्च विद्याविधीनां मध्ये—अधश्चोपरिच विद्याविधीनां मध्ये । इदं वचनम्—रसतमत्वादिदृष्टिविधिवचनम् । इति—एवं पूर्वोत्तरः प्रकरणस्यापि विद्यापरत्वाद्धेतोः । एतत्—रसतमत्वादिवाक्यमपि । विद्यार्थं तु स्यात्—तथा उपासनार्थमेभवेत् ॥ ४०१ ॥

विद्यार्थत्वेऽपि युक्ता स्तुतिरियमसतः कीर्तनादित्ययुक्तं
दृष्ट्युद्देशेऽतिचारादथ च विशयनं स्यादितिं त्वर्भकोक्तिः ।
नित्येऽस्मिन्ह्यप्रमाणं प्रसजति निगमो युक्तिवार्यत्वपक्षे
त्वित्थम्भावे बुभुत्स्ये वच इह फलवद् दृष्टिविध्यर्थमेव ॥ ४०२ ॥

इति स्तुतिमात्राधिकरणम् ॥ ११० ॥

चिन्ता०—अत्र पूर्वपक्ष्यभिप्रेतामाभासयुक्तिमनूद्य प्रतिक्षिपति—विद्यार्थत्व इति । 'स एष रसानां रसतमः' इत्यादिवाक्यस्य विद्यार्थत्वमेव नपुनस्स्तुतित्वमिति हि भवतोक्तम् । तन्न युज्यते विद्यार्थत्वेऽपि स्तुतिपरत्वं युक्तमेव अविद्यमानस्यैव रसतमत्वादेर्दृष्ट्यर्थमत्राभिधानात् । अतस्स्तुतिपरमेवेदं वाक्यमविद्यमानार्थकथनादिति पूर्वपक्षिणोऽभिप्रायः । तदिदमयुक्तमित्याह—अयुक्तमिति । तत्र हेतुमाह—दृष्ट्युद्देशेऽतिचारादिति । दृष्टिविधिषु व्यभिचारादित्यर्थः । गरुडमात्मानं जानीयादित्यादिषु दृष्टिविधिष्वसतः कीर्तनमस्त्येव अथापि विधिपरत्वमङ्गीक्रियते तेन यदसतः कीर्तनं तद्विधिपरं न भवतीतिनियमाभावाद् व्यभिचरितमेवेदमिति । नन्वसतः कीर्तनादिति युक्तेर्व्यभिचारेऽपि सन्देह एव स्यात् व्यभिचारो हि विवक्षितार्थासाधकत्वेन सन्देहमेवावहति तेन रसतमत्वादिवाक्यं विधिर्वा स्तुतिर्वा भवत्विति सन्देह एव स्यादिति पूर्वपक्षिवाक्यं बालभाषितमेवेत्याह—अथ चेति । बालभाषितत्वं प्रकटयति—नित्य इति । अत्रायं विकल्पः—किं नित्यमेव संशयस्स्यादिति भवतोच्यते किं वा यावन्नियामकविशेषादर्शनमिति । पूर्वत्र वेदाप्रामाण्यमेव स्यादित्याह—नित्य इति । नियामकदर्शनेऽपि नित्यस्य संशयस्य सर्वदा सुलभत्वात् । अस्तु संशयः, स च संशय।

विशेषदर्शनादियुक्तिवार्यं इति द्वितीयपक्षेऽपि दोषमाह—युक्तीति । इत्थम्भावे बुभुत्स्ये—प्रमाणवाक्यस्येत्थम्भावो न्यायपर्यालोचनमेव 'इतिकर्तव्यताभागं मीमांसा पूरयिष्यति' इतिवचनात्, अत्र वाक्यानुग्राहकन्याये निरूपयितुमभिलषिते सति वच इह फलवत् 'यदेव विद्यया' इति फलवत्त्वेन प्रतिपन्नं रसतमत्वादिवचो रसतमत्वादिदृष्टिविध्यर्थमेव भवति न पुनस्स्तुतिमात्रम् । अयमर्थः—न्यायानुगृहीतवाक्यपर्यालोचनाक्षमाणां नोत्तरमेव देयम् । तत्पर्यालोचनक्षमाणां तु रसतमत्वादिवाक्यं रसतमत्वादिदृष्टिविधानार्थमेवेति सिद्धं भवति । अयमत्र शब्दान्वयः—विद्यार्थत्वेऽपि अविद्यमानार्थकीर्तनात् स्तुतिरेव युक्तेत्ययुक्तम् । असतः कीर्तनादिति हेतोर्गरुडमात्मानं जानीयादित्यादिदृष्टिविधौ स्तुतिमात्रत्वव्यभिचारात् । तर्हि स्तुतिर्वा विधिर्वेति संशयस्स्यादिति बालभाषितं वैदिकार्थे नित्यसंशयाङ्गीकारे वेदाप्रामाण्यमेव स्यात् । विशेषदर्शनात् संशयनिवृत्त्यङ्गीकारे त्वत्रापि विशेषदर्शनमस्ति । विधित्वनियामकयुक्तीनां बह्वीनां वाक्यार्थनिर्णयेतिकर्तव्यतारूपाणामत्र विद्यमानत्वादिति । तेन विधित्वमेव न पुनस्स्तुतिमात्रत्वमित्यर्थः ॥ ४०२ ॥

इति स्तुतिमात्राधिकरणम् ॥ ११० ॥

पद०—विद्यार्थत्वेऽपीत्यादि । विद्यार्थत्वेऽपि असतः कीर्तनादियं स्तुतिर्युक्ता—भवदुक्तरीत्या विद्यार्थत्वेऽपि अविद्यमानार्थकथनात् इयं स्तुतिरित्युचिता । अविद्यमानार्थकथनं हि स्तुतिरित्युच्यत इति भावः । इत्ययुक्तम्—इति शङ्कनमयुक्तम् । दृष्टयुद्देशेऽतिचारात्—'गरुडमात्मानं ध्यायेत्' इत्यादिदृष्टिविधौ अविद्यमानार्थकथनरूपत्वसत्त्वेऽपि स्तुतिरूपत्वाभावेन व्यभिचारात् । अथ च विशयनं स्यादिति त्वर्भकोक्तिः—अविद्यमानकीर्तनरूपत्वयुक्तेर्व्यभिचारेऽपि सन्देह एव स्यात्, व्यभिचारो हि विवक्षितार्थासाधकत्वेन सन्देहमेवावहति तेन रसतमादिवाक्यं विधिर्वा स्तुतिर्वेति सन्देह एव स्यात्, इति पूर्वपक्षिवाक्यं बालभाषितमित्यर्थः । अस्मिन् नित्ये निगमः अप्रमाणं हि प्रसजति—अस्मिन् संशये नित्ये नियामकविशेषदर्शनानन्तरमपि सर्वदासम्भावितत्वेनाङ्गीकृते वेदः अप्रमाणं भवेत् । नित्यस्य संशयस्य सर्वत्रापि सुलभत्वादिति भावः । युक्तिवार्यत्वपक्षे तु—संशयस्य विशेषदर्शनादियुक्तिवार्यत्वरूपद्वितीयपक्षे तु । इत्थम्भावे बुभुत्स्ये—'इतिकर्तव्यताभागं मीमांसा पूरयिष्यति' इति वचनात् प्रमाणवाक्यस्य न्यायपर्यालोचनारूपेतिकर्तव्यतायामपेक्षितायाम् । इह—उदाहृतप्रकरणे । फलवद्वचः—'यदेव विद्यया करोति तदेव वीर्यवत्तरं भवति' इति फलयुक्तविषयकमिदं रसतमादिदृष्टिवचनम् । दृष्टिविध्यर्थमेव—रसतमत्वादिदृष्टिविध्यर्थमेव भवेत् । फलवदप्राप्तार्थवचनस्य विध्यर्थत्वमेव हि न्यायवित्सम्मतमिति भावः ॥ ४०२ ॥

इति स्तुतिमात्राधिकरणम् ॥ ११० ॥

## पारिप्लवाधिकरणम् ॥ १११ ॥

सूत्रम्—पारिप्लवार्था इति चेन्न विशेषितत्वात् ॥ ४४१ ॥

विद्यास्वाख्यानभेदा विधिमहिमहतास्सन्तु पारिप्लवार्थाः
न स्युर्विद्याविधानैः प्रकरणपठितैरेकवाक्यत्वदृष्टेः ।
मन्वाद्याख्यानमात्रं भवति च कथितं तत्र पारिप्लवार्थं
तेनाकाङ्क्षानिवृत्तौ न तदधिकपराख्यानतादर्थ्यक्लृप्तिः ॥ ४०३ ॥

इति पारिप्लवाधिकरणम् ॥ ४०३ ॥

चिन्ता०—अत्रापि प्रासङ्गिको सङ्गतिः । पूर्वस्मिन्नधिकरणे हि रसतमत्वादिवाक्यानां स्तुत्यर्थत्वं पूर्वपक्षीकृत्योपासनपरत्वं स्थापितम् । एवं प्रतर्दनाद्याख्यानानि किं स्तुत्यर्थत्वेन नेयानि उत पारिप्लवार्थत्वेनेति शङ्कयोत्थानात् । तदर्थविचारस्तु ' प्रतर्दनो हवै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम ' ' श्वेतकेतुर्हारुणेय आस ' इत्याद्याख्यानानि वेदान्तवाक्यस्थानि किं पारिप्लवप्रयोगार्थानि उत विद्याविधानार्थानीति । तदर्थं विचार्यते—किं पारिप्लवे सर्वाख्यानानां विनियोग उत मन्वाद्याख्यानानामेवेति । किं ' आख्यानानि शंसन्ति ' इति पारिप्लवाख्यानशब्दः सर्वाख्यानपरः उत मन्वाद्याख्यानपर इति । किं ' मनुर्वैवस्वतो राजा ' इति तत्रैवाख्यानविशेषस्याम्नानमाख्यानशब्दस्य विशेषपरतामवगमयति नेति । अत्र सर्वेषामप्याख्यानानां ' आख्यानानि शंसन्ति ' इति विधिबलात् पारिप्लवार्थत्वमिति पूर्वपक्षमाशङ्कते—विद्यास्विति । सर्वास्वपि विद्यास्वाख्यानभेदाः ' प्रतर्दनो हवै ' इत्यादय आख्यानविशेषाः—' आख्यानानि शंसन्ति ' इति विधिमहिम्ना परिगृहीताः पारिप्लवार्थास्सन्त्वेवेति । तदिदं प्रतिक्षिपति—न स्युरिति । तत्र हेतुमाह—विद्याविधानैरिति । तत्तदाख्यानप्रकरणपठितैस्तत्तद्विद्याविधानैस्तेषां सर्वेषामाख्यानानामेकवाक्यत्वदृष्टेः पारिप्लवार्थत्वं नास्तीत्यर्थः । नह्यत्र ' उद्गीथमुपासीत ' इत्युद्गीथसामान्यस्योपासनसम्बन्धप्रतिपादकद्वितीयाश्रुतिवत् सर्वाख्यानानां पारिप्लवसम्बन्धप्रतिपादिका काचित् श्रुतिरस्ति । केवलं प्रकरणमेव विद्यते । तत्पुनः प्रकरणं प्रकृतमाख्यानं पारिप्लवार्थत्वेन नियमयति । तर्हि पारिप्लवार्थमाख्यानशंसनविधानस्य को विषय इत्याशङ्क्याह—मन्वादीति । तत्र कथितं मन्वाद्याख्यानमात्रमेव पारिप्लवार्थं भवत्विति न नैरर्थक्येन विधिभङ्गप्रसङ्गः । ननु प्रकरणान्मन्वाद्याख्यानमस्त्वङ्गम्, अथाप्याख्यानान्तराण्यपि पारिप्लवाङ्गं भवन्त्वित्याशङ्क्य परिहरति—तेनेति । अयमर्थः—पारिप्लवस्य स्वप्रकरणपठितेन मन्वाद्याख्यानेन नैराकाङ्क्ष्यात् प्रतर्दनाद्याख्यानानाञ्च स्ववाक्यपठिततत्तद्ब्रह्मविद्यासमन्व-

येन नैराकाङ्क्ष्याच्च सर्वेषामाख्यानानां पारिप्लवे समन्वयक्लृप्तिर्निष्प्रमाणिकेति । शब्दार्थस्तु—उक्तेनानेन हेतुना आकाङ्क्षानिवृत्तौ मन्वाद्याख्यानाधिकप्रतर्दनाद्याख्यानानां पारिप्लवार्थत्वक्लृप्तिर्न स्यादिति ॥ ४०३ ॥

इति पारिप्लवाधिकरणम् ॥ ४०३ ॥

पद०—विद्यास्वित्यादि । विद्यासु—कौषीतकिच्छान्दोग्यसद्विद्यादिषु ब्रह्मविद्याप्रकरणेषु । आख्यानभेदाः—'प्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम' 'श्वेतकेतुर्हारुणेय आस' इत्यादयः कथाभागविशेषाः। विधिमहिमहृताः—'आख्यानानि शंसन्ति' इति सामान्यशब्दघटितविधिबलेन तादर्थ्यं नीतास्सन्तः । पारिप्लवार्थास्सन्तु—आख्यानशंसनरूपपारिप्लवप्रयोगशेषभूता भवन्तु । न स्युः—तथा न भवेयुः । कुत इति चेत्, प्रकरणपठितैर्विद्याविधानैरेकवाक्यत्वदृष्टेः—तत्तदाख्यानप्रकरणपठितैर्विद्याविशेषविधिवाक्यैरेकार्थाभिधायित्वरूपैकवाक्यत्वदर्शनात् । तत्तत्प्रकरणगतविद्याविध्येकवाक्यत्वेन विद्याविध्यर्थत्वदर्शनान्न पारिप्लवार्थत्वमित्यर्थः । तर्हि पारिप्लवप्रयोगस्य को विषय इत्यत्राह—मन्वाद्याख्यानमात्रमिति । तत्र च—पारिप्लवशंसनविधिप्रकरणे । कथितम्—'मनुर्वैवस्वतो राजा' इत्यादिनोदाहृतम् । मन्वाद्याख्यानमात्रम्—मन्वाद्याख्यानविशेषमात्रम् । पारिप्लवार्थं भवति—पारिप्लवशंसनार्थं भवति, मन्वाद्याख्यानवदितराण्यपि स्युरित्यत्राह—तेनेत्यादि । तेन—मन्वाद्याख्यानेन । आकाङ्क्षानिवृत्तौ—'शंसन्ति' इति विधेर्विषयसिद्ध्या आकाङ्क्षायां निवृत्तायां सत्याम् । तदधिकपराख्यानतादर्थ्यक्लृप्तिर्न—तदधिकानां पराख्यानानां तादर्थ्यक्लृप्तिः पारिप्लवार्थत्वकल्पनं न युक्तमित्यर्थः ॥ ४०३ ॥

इति पारिप्लवाधिकरणम् ॥ ४०३ ॥

---

## अग्नीन्धनाधिकरणम् ॥ ११२ ॥

सूत्रम्—अत एवचाग्नीन्धनाद्यनपेक्षा ॥ ४४३ ॥

यज्ञादेरङ्गभावान्न तदनधिकृतेष्वङ्गिनोऽधिक्रिया स्यात्
विद्यैवं नोर्ध्वरेतस्स्विति न बहुविधस्वाश्रमार्हाङ्गतोक्तेः ।
विद्यायोगश्चतुर्णां विधिरपि हि समश्श्रूयते स्मर्यते च
प्रायेणौचित्यभूम्ना मुनिभिरभिहितं क्वापि मोक्षाश्रमत्वम् ॥ ४०४ ॥

इत्यग्नीन्धनाधिकरणम् ॥ ११२ ॥

चिन्ता०—अत्र व्याख्यातयोरधिकरणयोः प्रासङ्गिकत्वं भाष्य एव व्यक्तमुक्तं ‘स्तुतिप्रसङ्गादवान्तरसङ्गतिविशेषेणार्थद्वयं चिन्तितम्’ इति। एतस्य पुनरधिकरणस्य प्रथमाधिकरणेन सङ्गतिरपि भाष्योपात्ता “विद्यावन्त ऊर्ध्वरेतस आश्रमिणस्सन्तीत्युक्तम् ‘ऊर्ध्वरेतस्सु च शब्दे हि’ इत्यादिभिस्सूत्रैः। इदानीमूर्ध्वरेतसो यज्ञाद्यभावात् तदङ्गिका विद्या न सम्भवतीत्याशङ्क्याह” इति। तदर्थविचारस्तु–किं परिव्राजकानां ब्रह्मविद्यायामधिकारोऽस्ति नेति। किं ‘विविदिषन्ति’ इत्यादिना यज्ञाद्यङ्गिकैव विद्या उताश्रमप्रयुक्तधर्माङ्गिकेति। तदर्थं विचार्यते—किं ‘ब्रह्मसंस्थोऽमृतत्वमेति’ ‘ये चेमेऽरण्ये श्रद्धा तप इत्युपासते’ ‘एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति’ इत्येवमादीनि वाक्यान्यूर्ध्वरेतसो विद्यासम्बन्धं प्रतिपादयन्त्याश्रमप्रयुक्तधर्माङ्गिका विद्येत्यवगमयन्ति नेति। किं कर्मणो विद्योत्पादकत्वं सम्भवति नेति। अत्र पूर्वपक्षशङ्कामनुवदति—यज्ञादेरिति। ‘यज्ञेन दानेन तपसा नाशकेन’ इति यज्ञादेर्ब्रह्मविद्याङ्गत्वेनोपदेशाद् यज्ञाद्यनधिकृतेषु ऊर्ध्वरेतस्सु अङ्गिनः उपासनस्याधिकारो न स्यात्। अङ्गवैकल्येऽङ्गिनस्साद्गुण्याभावेन फलसाधनत्वभङ्गादिति। इमं पक्षं प्रतिक्षिपति–नेति। तत्र हेतुमाह–बहुविधेति। अयमर्थः—बहुविधानां सत्यवचनादीनां सामान्यधर्माणां स्वाश्रममात्रनियतानां विशेषधर्माणाञ्चाङ्गत्वोक्तेः। किञ्च चतुर्णामाश्रमाणां विद्यायोगस्तत्प्रतिपादको विधिश्च श्रूयते श्रुत्यैव प्रतिपाद्यत इत्यर्थः। न केवलं श्रुतिः, स्मृतिरप्यस्तीत्याह–स्मर्यते चेति। चतुर्णामाश्रमाणां धर्मविधानं हि प्रायेण स्मृतीनां प्रवृत्तिप्रयोजनम्। तेन चतुर्णामप्याश्रमाणां स्वोचितकर्मानुष्ठानेन ब्रह्मविद्यायामधिकारोऽस्ति। ननु तर्हि मोक्षाश्रम इति सन्न्यासाश्रमस्य विशेषतः प्रसिद्धिः कथमुपपद्यत इत्याशङ्क्य परिहरति–प्रायेणेति। अयमर्थः–पुत्रपौत्रादिबहूपप्लवोपप्लुतानां गृहस्थानां तावद् ब्रह्मविद्यायामैकाग्र्यं भज्यते। केषांचित्तु भागधेयवशात् सिध्यत्यैकाग्र्यम्। एवं ब्रह्मचारिवानप्रस्थानामपि सन्न्यासिवदत्यन्तैकाग्र्याभावात् भज्येत वा नवा ब्रह्मविद्याधिकारः। सन्न्यासिनस्तु परित्यक्तपरिग्रहत्वेन प्रायेण ब्रह्मविद्याधिकारः परिपूर्णस्सम्पत्स्यत इति तस्मिन्नेव मोक्षाश्रमत्वप्रसिद्धिर्युज्यते॥ ४०४॥

इत्यग्नीन्धनाधिकरणम्॥ ११२॥

पद०—यज्ञादेरित्यादि। यज्ञादेरङ्गभावात् तदनाधिकृतेषु अङ्गिनोऽधिक्रिया न स्यात्—‘यज्ञेन दानेन’ इत्यादिना यज्ञादेर्ब्रह्मविद्याङ्गत्वेनोपदेशात् यज्ञाद्यनधिकृतेषु यज्ञाद्यनर्हेषु अङ्गिनो विद्याया अधिक्रिया अधिकारो न भवेत्। एवं ऊर्ध्वरेतस्सु विद्या न—उक्तक्रमेण यज्ञाद्यनर्हेषु ऊर्ध्वरेतआश्रमिषु ब्रह्मविद्या न सिध्यतीत्यर्थः। अङ्गवैकल्येऽप्यङ्गिनस्साद्गुण्याभावेन फलसाधनत्वभङ्गादिति भावः। इति न–एवं शङ्कापि न युक्ता। बहुविधस्वाश्रमार्हाङ्गतोक्तेः–बहुविधानां बहूनां साधारणानां सत्यवचनादीनां स्वाश्रममात्रनियतानां जपोपवासभगवदाराधनादीनाञ्च विद्याङ्गत्ववचनात्। तैर्विद्याया अङ्गापेक्षा

शाम्यतीति भावः । चतुर्णां विद्यायोगो विधिरपि हि समश्श्रूयते—चतुर्विधानामाश्रमाणां ब्रह्मविद्याधिकारो विधानञ्च तुल्यतया श्रूयते 'ब्रह्मसंस्थोऽमृतत्वमेति' 'ब्रह्मचर्यं समाप्य गृहीभवेद्गृहाद्वनी भूत्वा प्रव्रजेद्यदि वेतेरथा ब्रह्मचर्यादेव प्रव्रजेत् गृहाद्वा वनाद्वा यदहरेव विरजेत्तदहरेव प्रव्रजेत्' इत्यादिश्रुत्या प्रतीयते । स्मर्यते च—पराशरादिभिः 'प्राजापत्यं गृहस्थानां ब्राह्मं सन्न्यासिनां स्मृतम्' इत्यादिस्मृत्या प्रतिपाद्यते च । प्रायेण औचित्यभूम्ना मुनिभिः क्वापि मोक्षाश्रमत्वमभिहितम्—बहुशः पुत्रकलत्रादिविरोध्यसंवासादिरूपनिवृत्तिमार्गौचित्यातिशयेन सर्वज्ञैर्मुनिभिः चतुर्ष्वाश्रमेषु मोक्षार्हेषु सत्स्वपि सन्न्यासरूपे कुत्रचिदेकस्मिन्नाश्रमे मोक्षाश्रमत्वमभ्यधायि । तथावचनस्यौचित्यमेव हेतुः नत्वाश्रमान्तरे मोक्षाभावप्रतिपादनमिति भावः ॥ ४०४ ॥

इत्यग्नीन्धनाधिकरणम् ॥ ११२ ॥

---

## सर्वापेक्षाधिकरणम् ॥ ११३ ॥

सूत्रम्—सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॥ ४४४ ॥

त्यक्ते यज्ञादिधर्मे परभजनविधेरूर्ध्वरेतस्सु दृष्टया
विद्या तेनानपेक्षा गृहवति च भवेदित्यनालोचितोक्तिः ।
यज्ञेनेत्यादिकाभिश्श्रुतिभिरवगता ह्यस्य सा तत्प्रसाध्या
जिज्ञासार्थत्ववादो जिगमिषतिपदेत्यादिनीत्या निवर्त्यः ॥ ४०५ ॥

चिन्ता०—पूर्वमूर्ध्वरेतस्स्वग्नीन्धनाद्यनपेक्षोक्ता, अधुना पुनः गृहस्थेषु यज्ञादिकर्मापेक्षोच्यत इति सङ्गतेस्स्फुटत्वात् भाष्ये तदनुक्तिः । तदर्थविचारस्तु—किं गृहस्थस्य यज्ञादिकर्मवतो ब्रह्मविद्यायामधिकार उत तद्रहितस्येति । तदर्थं विचार्यते—किं यज्ञादिकर्म विद्याङ्गं नेति । किं 'यज्ञेन' इति श्रुतिर्विद्याङ्गतया यज्ञादिकर्म विनियुङ्क्ते नेति । किं कर्मणो विद्योत्पादकत्वं सम्भवति नेति । अत्र पूर्वपक्षमारचयति—त्यक्त इति । ऊर्ध्वरेतस्सु यज्ञादिधर्मे परित्यक्तेऽपि परभजनविधेर्दृष्टत्वाद् गृहस्थेऽपि विद्या यज्ञादिकर्मानपेक्षा भवेदिति । तदिदमपाकरोति—अनालोचितोक्तिरिति । अपाकरणप्रकारं दर्शयति—यज्ञेनेति । अस्य गृहस्थस्य । यज्ञेनेत्यादिकाभिश्श्रुतिभिः सा विद्या तत्प्रसाध्या यज्ञादिप्रसाध्यैव अवगता । ननु यज्ञेनेत्यादिभिः 'विविदिषन्ति' इति विविदिषासाधनत्वमेवोच्यते यज्ञादीनाम्, न पुनर्विद्यासाधनत्वम्, तत्कथमुच्यते कर्मणां वेदनसाधनत्वमित्यत्रोत्तरमाह—जिज्ञासेति ।

यथा अश्वेन जिगमिषतीत्यत्र जिगमिषां प्रति प्रधानभूतगमनसाधनत्वमेवाश्वस्य तथा जिज्ञासां प्रति प्रधानभूतज्ञानसाधनत्वमेव यज्ञादीनामिति न्यायसिद्धोऽयमर्थः । तेन जिज्ञासार्थत्ववादो निवर्त्य एवेत्यर्थः । अयमत्र भावः 'धातोः कर्मणस्समानकर्तृकादिच्छायां वा' इति सूत्रे धात्वर्थप्राधान्येनैवेच्छायां सन् विधीयते, तेन सन्प्रत्यय एव धात्वर्थप्राधान्यं स्वयमेव वदतीति यज्ञादिभिर्वेदनस्यैव साध्यत्वाङ्गीकारे न सन्प्रयोगविरोध इति । एवमसिना जिघांसतीति दृष्टान्तान्तरमुदाहर्तव्यम् । श्लोके तावत् पदा जिगमिषतीति पाददृष्टान्त उक्तः ॥ ४०५ ॥

पद०—त्यक्त इत्यादि । ऊर्ध्वरेतस्सु—परिव्राजकप्रभृतिषु । यज्ञादिधर्मे त्यक्ते परभजनविधेर्दृष्टया—यज्ञादिधर्मे त्यक्तेऽपि परमात्मोपासनानुष्ठानदर्शनात् । गृहयति च विद्या तेनानपेक्षा भवेत्—गृहस्थेऽपि ब्रह्मविद्या यज्ञादिधर्मनिरपेक्षैव भवेत् । इति अनालोचितोक्तिः—इति जल्पनमनालोचितवचनम् । अस्य—गृहस्थस्य । यज्ञेनेत्यादिकाभिश्श्रुतिभिः—'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन' इत्यादिभिश्श्रुतिभिः । सा—ब्रह्मविद्या । तत्प्रसाध्या ह्यवगता—यज्ञादिकर्मानुष्ठानसाध्या ह्यवगता । जिज्ञासार्थत्ववादः पदाजिगमिषतीत्यादिनीत्या निवर्त्यः—'यज्ञेन, विविदिषन्ति' इति यज्ञादेर्ज्ञानेच्छासाधनत्ववचनं पदाजिगमिषतीत्यादौ पदो गमनसाधनत्ववत् इच्छासाधनत्वबाधात् इच्छाविषयज्ञानसाधनत्वपरताङ्गीकारेण परिहरणीयम् ॥ ४०५ ॥

नन्विच्छार्थत्वहानिर्जिगमिषतिपदेत्यादिके गत्यभावात्
श्रुत्युक्तेऽस्मिंस्तथा नेत्यसदिह च यतो गत्यभावस्समानः ।
इच्छा स्याद्धीविशेषात्तदनुपजनने कर्मभिस्सा न साध्या
जिज्ञासां प्राप्तुमिच्छोर्नच न भवति तज्ज्ञानमिष्टं पुरैव ॥ ४०६ ॥

चिन्ता०—ननु पादेन जिगमिषतीत्यादौ गत्यभावात् सन्प्रयोगस्य धात्वर्थमात्रपरत्वम्, गत्यभावश्चोपलम्भविरोधात् नहि पादो जिगमिषासाधनम् अपि तु गमनसाधनमेव अतोऽर्थविरोधात् दृष्टान्ते प्रयोगवैपरीत्यं भवतु नाम यज्ञादिभिर्विविदिषन्तीत्यादौ तादृशो न कश्चिदर्थविरोधोऽस्तीति पूर्वपक्ष्यभिप्रायमाशङ्क्य निराकरोति–नन्वित्यादिना असदित्यन्तेन । पूर्वपक्षिणोक्तस्य दृष्टान्ते गत्यभावस्य पक्षेऽपि साम्यं प्रदर्शयति—गत्यभाव इति । साम्यमेव प्रकटयति–इच्छेति । तथा हि ब्रह्मजिज्ञासां प्राप्तुमिच्छोः कर्मानुष्ठानं भवतीच्यते । तत्र विषयवैलक्षण्यज्ञानमन्तरेण कर्मभिरिच्छाया असाध्यत्वात् । विषयवैलक्षण्यज्ञानार्थं कर्मेति चेत् तर्हि ज्ञानार्थमेव कर्मेत्युक्तं स्यात् । तथाचापसिद्धान्तः, स्ववचनविरो-

धश्च। कर्मणो जिज्ञासाहेतुत्वस्य स्वोक्तस्यैवोपघातात्। अथवा कर्मानुष्ठानादिच्छा, इच्छया कर्मानुष्ठानमिति वैघट्यम्। वैघट्यमेव विवृणोति—जिज्ञासामिति। जिज्ञासां प्राप्तुमिच्छोः कर्मानुष्ठातुः पुरुषस्य पूर्वमेव ज्ञानमिष्टं न न भवति—इष्टमेव भवतीत्यर्थः। अतो ज्ञानेच्छैव जिज्ञासा सा पूर्वमेव सिद्धा। तां प्राप्तुकामः कर्मानुष्ठाय तां पुनः प्राप्नोतीत्यसङ्गतमेतत्। अयमत्र शब्दान्वयः—जिज्ञासां प्राप्तुमिच्छोः पुरुषस्य ज्ञानं पुरैवेष्टं न न भवति, ज्ञानार्थमेव हि जिज्ञासा प्रार्थ्यते, ज्ञानार्थमित्युक्ते ज्ञानस्याभिलषितत्वं प्रागेव सिद्धम्। ज्ञानाभिलाष एव हि जिज्ञासा। सा पूर्वमेव सिद्धा॥ ४०६॥

पद०—नन्वित्यादि। ननु—आक्षिप्यते। जिगमिषतिपदेत्यादिके इच्छार्थत्वहानिः गत्यभावात्—जिगमिषतिपदेत्यादिस्थले इच्छार्थत्वत्यागः पदो गमनेच्छासाधनत्वबाधात् अगत्या आश्रितः। श्रुत्युक्ते अस्मिन् तथा न—अतीन्द्रियार्थे प्रमाणभूतया श्रुत्या प्रतिपन्ने वेदनेच्छां प्रति यज्ञादीनां साधनत्वे तु तथा प्रमाणान्तरेण बाधो नास्ति। श्रुतिर्यथा वदति तथा हि प्रतिपत्तव्यम्। इत्यसत्—इति शङ्कनमसाधु। इह च यतो गत्यभावस्समानः-इह च श्रुत्युक्तेऽपि यज्ञादीनां विविदिषासाधनत्वे यतः इच्छार्थत्वबाधप्रयुक्तो गत्यभावस्तुल्यः। श्रुतिरपि प्रमाणान्तरविरुद्धं न प्रतिपादयति 'आदित्यो यूपः' इत्यादावान्यपर्यस्थापनादिति भावः। गत्यभावसाम्यमेव प्रकटयति—इच्छा स्यादित्यादिना। धीविशेषात् इच्छा स्यात्—विषयवैलक्षण्यज्ञानात् इच्छा उत्पद्येत। तदनुपजनने—विषयवैलक्षण्यज्ञानस्यानुत्पत्तौ। सा—इच्छा। कर्मभिः—यज्ञादिभिः। न साध्या—विषयवैलक्षण्यज्ञानमन्तरा कर्मभिर्वेदनेच्छा नोत्पादयितुं शक्येत्यर्थः। किञ्च जिज्ञासां प्राप्तुमिच्छोस्तज्ज्ञानं पुरैव इष्टं नन भवति—जिज्ञासाप्राप्त्यर्थं कर्मानुतिष्ठतः पुरुषस्य कर्मानुष्ठानसाध्येच्छाविषयभूतं ज्ञानं कर्मानुष्ठानात्पूर्वमेव इष्टं नभवतीति न। इष्टमेव भवति। फलेच्छाभावे साधनाप्रवृत्त्या ज्ञानेच्छाविषयकेच्छायासिद्धत्वात् तदैवेच्छाविषयभूतं ज्ञानमपि इच्छाविषयभूतमिति कर्मानुष्ठानात्पूर्वमेव ज्ञानेच्छावश्यकीति न तदर्थं कर्मानुष्ठेयमित्यर्थः॥ ४०६॥

नन्वत्रेच्छानुवृत्तिं प्रति विहितमिदं कर्म योज्यं ततः किं
नेच्छार्थं धीविशेषप्रजननमुदितं तावता वारितं स्यात्।
ज्ञानार्थं कर्मविध्यन्तरमपि विविधं नापलापक्षमं ते
निध्यानन्यायतोऽतस्त्वनुवदति विधेयेष्टतां सन्प्रयोगः॥ ४०७॥

इति सर्वापेक्षाधिकरणम्॥ ११३॥

चिन्ता०---ननु पूर्वमेव जिज्ञासायां सत्यां कर्मानुष्ठानम्, कर्मानुष्ठाने सति जिज्ञासेत्यन्योन्याश्रयणादिकमुक्तम्, तन्न सम्भवति विषयविशेषेण ज्ञानभेदात् तथाहि पूर्वं सामान्यतो ज्ञानम्, तेनेच्छा, इच्छातः कर्मानुष्ठानम्, कर्मानुष्ठानात् पुनरिच्छाविशेषः, तस्मादुत्तरोत्तरमिच्छाज्ञानानुवृत्तिरिति न कश्चिद्दोष इति पूर्वपक्ष्यभिप्रायमनूद्य परिहरति—नन्विति । अयमत्र शब्दार्थः—इच्छानुवृत्तिं प्रति कर्म विहितं योज्यम् । न पुनः पूर्वेच्छां प्रति । ततः किमित्याह सिद्धान्ती । अयमभिप्रायः—यावज्जीवमिच्छानुवृत्तिं प्रति कर्मानुष्ठानं प्रयोज्यं चेत् तर्हि विविदिषार्थस्य कर्मणो नित्यानुवृत्तत्वादनुष्ठेयस्य स्वरूपप्रतिपत्त्यर्थं कर्मविचारस्यैव पूर्ववृत्तत्वं सिद्धं भवतीति स्वसिद्धान्तविरोधः । किंचोत्तरोत्तरमिच्छासिद्ध्यर्थं पूर्वमेव धीविशेषप्रजननमुदितं तावता न वारितं स्यादित्याह—नेच्छार्थमिति । अयमर्थः—इच्छातः पूर्वमेव ब्रह्मज्ञानविशेषसद्भावोऽङ्गीकार्य इति तस्य ज्ञानस्य सद्भावः कर्मणेति कर्मविचारस्य पूर्ववृत्तत्वसिद्धिः । अस्तु वा अयं विधिर्विविदिषार्थः, वेदनार्थमपि कर्मविधिरस्तीत्याह—ज्ञानार्थमिति । अस्तु विविदिषार्थमपि कर्मानुष्ठानम्, अथापि 'क्रियावानेष ब्रह्मविदां वरिष्ठः' 'कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते' 'कर्मणैव हि संसिद्धिमास्थिता जनकादयः' 'इयाज सोऽपि सुबहून्' इत्यादिभिर्ज्ञानार्थमपि कर्म नापलपितुं शक्यते । ततोऽपि कर्मविचारपूर्ववृत्तत्वं सिद्धं शास्त्रस्य । तर्हि 'विविदिषन्ति' इत्यस्य सन्प्रयोगस्य का गतिरित्याशङ्क्य 'निदिध्यासितव्यः' इति न्यायमतिदिशति—निध्यानन्यायत इति । अयमर्थः---यथा 'निदिध्यासितव्यः' इति ध्याने सन्प्रयोगो विधेयस्य ध्यानस्येष्टतामाह, न पुनरिच्छाया विधेयत्वम् तद्वदत्रापि 'विविदिषन्ति' इतीच्छाया न विधेयत्वम् इच्छाविषयत्वेन ज्ञानस्य प्राप्यत्वमुच्यत इति सुसङ्गतमेतत् ॥ ४०७ ॥

इति सर्वापेक्षाधिकरणम् ॥ ११२ ॥

पद०—नन्वित्यादि । ननु—पुनराक्षिप्यते । अत्र—'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन' इत्यादिवाक्ये । इच्छानुवृत्तिं प्रति—यज्ञेन विविदिषन्तीत्यनेन इच्छानुवृत्तिंप्रति पुनःपुनर्वेदनेच्छानुवृत्तिसिद्ध्यर्थम् । इदं कर्म विहितं योज्यम्—इदं यज्ञादिकर्म विहितमिति योज्यम् । अयमाशयः—पूर्वं सामान्यतो ज्ञानं तेनेच्छा इच्छातः कर्मानुष्ठानं कर्मानुष्ठानात् पुनर्विशेषत इच्छा तस्मादुत्तरोत्तरमिच्छाज्ञानानुवृत्तिरित्येवमिच्छानुवृत्त्यर्थं कर्मविधानं न पुनः पूर्वेच्छां प्रतीति । ततः किम्—तावता किमभिमतं लभ्यते । प्रत्युत सिद्धान्तविरोध एवेत्यर्थः । इदं हृदयम्—यावज्जीवमिच्छानुवृत्तिं प्रति कर्मानुष्ठानमपि योज्यञ्चेत् तर्हि विविदिषार्थस्य कर्मणो नित्यानुवृत्तत्वात् अनुष्ठेयस्य कर्मणस्स्वरूपप्रतिपत्त्यर्थं कर्मविचारस्यैव पूर्ववृत्तत्वं सिद्धं भवतीति स्वसिद्धान्तविरोध इति । इच्छार्थमुदितं धीविशेषप्रजननं तावता

वारितं न स्यात्–किञ्च इच्छायां विषयवैलक्षण्यज्ञानायत्तत्वात् इच्छार्थमुक्तं ज्ञानविशेषजननं तावता इच्छानुवृत्तिं प्रति कर्मेति कल्पनामात्रेण वारितं न भवेत्। इच्छार्थं तादृशज्ञानपरम्परैव सिध्यति नतु पुनः कर्मैवाव्यवधानेनेच्छाहेतुरिति सिध्यतीति भावः। ज्ञानार्थं विविधं कर्म विध्यन्तरं तेऽपि नापलाप्यम्—ज्ञानोत्पत्त्यर्थं नानाविधं 'क्रियावानेष ब्रह्मविदां वरिष्ठः' 'कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते' 'कर्मणैव हि संसिद्धिमास्थिता जनकादयः' 'इयाज सोऽपि सुबहून् यज्ञान् ज्ञानव्यपाश्रयः' इत्यादिरूपं कर्मणो ज्ञानार्थविध्यन्तरं जगदपलापसमर्थस्य तेऽपि न दुरर्थकल्पनया अपलपितुं योग्यम्। अतस्तु— उक्तोपपादनात्। निध्यानन्यायतः–यथा 'निदिध्यासितव्यः' इति ध्याने सन्प्रयोगो विधेयस्य ज्ञानस्येष्टतामाह नपुनरिच्छाया विधेयत्वं तद्वदित्यर्थः। सन्प्रयोगः—'विविदिषन्ति' इतीच्छार्थक-सन्प्रत्ययप्रयोगः। विधेयेष्टतामनुवदति—विधेयस्य वेदनस्येष्टतां आनन्दरूपब्रह्मविषयकत्वेन स्वस्यापि सुखरूपत्वादेष्टव्यतां प्रतिपाद्य सार्थक्यमनुभवति। नपुनरिच्छाया विधेयत्वं वदति तस्या ज्ञानविशेषं विना कर्मासाध्यत्वादिति भावः॥ ४०७॥

इति सर्वापेक्षाधिकरणम्॥ ११३॥

---

## शमदमाद्यधिकरणम्॥ ११४॥

सूत्रम्—शमदमाद्युपेतस्स्यात्तथाऽपि तु तद्विधेस्तदङ्गतया तेषामप्यवश्यानुष्ठेयत्वात्॥ ४४५॥

यज्ञादिव्यापृतत्वादनिभृतकरणे सर्वकालं गृहस्थे
शान्त्यादीनामयोगात्तदितरविषयास्ते गुणा इत्ययुक्तम्।
प्रव्रज्यादिस्थितानामपि तदुपधिकानेकधर्मप्रवृत्तेः
तत्सर्वं सह्यते चेत्सह तदपि फलाद्युज्झनश्चात्र तुल्यम्॥ ४०८॥

चिन्ता०—अत्र सङ्गतिर्भाष्य एव सुव्यक्तमुच्यते 'गृहस्थस्य शमदमादीन्यप्यनुष्ठेयानि उत नेति चिन्तायाम्' इति। तदर्थविचारस्तु—किं विद्यानिष्ठस्य गृहस्थस्य शमदमादीन्युपादेयानि उत नेति। किं यज्ञादीनां शमदमादीनाञ्च विरोधोऽस्त्युत नेति। किमत्र विधीयमाना करणव्यापारोपरमरूपा शान्ति-र्यज्ञादिव्यतिरिक्तव्यापारशान्तिरुत सर्वव्यापारशान्तिः। अत्र पूर्वपक्षमुपन्यस्य निराकरोति—यज्ञादीति। अयं किल पूर्वपक्षसिद्धान्तसंग्रहः। यज्ञादिकर्मणां करणव्यापाररूपत्वात् शमादीनां तदुपरमत्वाच्च गृह-स्थे शमदमादीनामभाव इति पूर्वः पक्षः। तर्हि प्रव्रज्यादिनिष्ठेष्वपि तत्तदाश्रमनियततत्तद्व्यापारभूयस्त्वात् तत्रापि शमदमादिर्न स्यात् तत्र विहितव्यतिरिक्तविषयत्वे शमदमादिरूपस्योपरमस्योक्ते गृहस्थेऽपि

शमदमादिर्विहितव्यतिरिक्तविषयव्यापारोपरम इति समस्समाधिरिति सिद्धान्तः । शब्दान्वयस्तु— यज्ञादिव्यापृतत्वात् सर्वकालमनिभृतकरणे गृहस्थे शान्त्यादीनामयुक्तत्वाद् गृहस्थव्यावृत्तविषयास्ते शान्त्यादयो गुणा इत्ययुक्तम् । सन्न्यासाश्रमस्थितानामपि तत्तदाश्रमोचितानेकधर्मप्रवृत्तेः । विधिवलात् तत्सर्वं करणव्यापाररूपमपि सह्यते चेत् सह तदपि गृहस्थाश्रमादिप्रयुक्तं कर्मापि तुल्यन्यायेन सहस्व । तैः प्रव्रज्यादिनिष्ठैः फलसङ्गकर्तृत्वत्यागेनैव कर्मानुष्ठीयत इति चेत् तद् गृहस्थेऽपि समानमिति न वैषम्यसिद्धिः ॥ ४०८ ॥

पद०—यज्ञादीत्यादि । यज्ञादिव्यापृतत्वात्—यज्ञादीनां गृहस्थधर्मतया तेषु प्रवृत्तिरूपेषु सर्वदा गृहस्थस्य प्रवृत्तकरणत्वात् । सर्वकालम्—सर्वस्मिन्नपि काले । अनिभृतकरणे—अनिश्चलेन्द्रिये । गृहस्थे—गार्हस्थ्यधर्मानुष्ठातर्यधिकारिणि । शान्त्यादीनामयोगात्—निखिलकरणव्यापारोपरमरूपाणां शमदमादीनामशक्यानुष्ठानत्वात् । ते—शमादयो गुणाः । तदितरविषयाः—गृहस्थेतरयत्यादिविषयतया नेयाः । इत्ययुक्तम्—इति शङ्कनमसाधु । प्रव्रज्यादिस्थितानामपि—प्रव्रज्या सन्यासः आदिशब्देन वानप्रस्थ्यमुच्यते । तन्निष्ठानां यतिवनिप्रमुखानामपि । तदुपधिकानेकधर्मप्रवृत्तेः—तत्तदाश्रमोचितेषु सन्ध्यावन्दन दण्डपात्रशिक्यकषायकन्थादिमात्राधारणभैक्षाचरणप्रमुखेषु बहुषु स्वस्वाश्रमधर्मेषु शमादिविरोधिषु प्रवृत्तेर्दर्शनात् । तत्सर्वं सह्यते चेत्—तत्सर्वं प्रवृत्तिरूपतया शमादिविरोधिभूतमपि विहितत्वाच्छमादीन् तद्व्यतिरिक्तविषयतया व्यवस्थाप्य सह्यते चेदङ्गीक्रियते यदि । तदपि—गृहस्थाश्रमकर्मापि । सह—विहितत्वादत्याज्यत्वाच्च शमादीन् तदतिरिक्तविषयतयापि व्यवस्थाप्य सहस्व अङ्गीकुर्वित्यर्थः । अत्र फलायुञ्जनञ्च तुल्यम्—अत्र गृहस्थाश्रमे फलसङ्गकर्तृत्वादित्यागपूर्वककर्मानुष्ठानादिकं यत्याश्रमतुल्यमेव । फलसङ्गकर्तृत्वादित्यागस्य सर्वमुमुक्षुजनसाधारणत्वात् न तस्य यत्याश्रमे विशेषोऽस्तीति शमादीनां विहितव्यतिरिक्तविषयतया व्यवस्थापनेन न यतिषु विशेषइति भावः । अत्र सहेति परस्मैपदित्वमनुदात्तेत्त्वप्रयुक्तस्यात्मनेपदस्यानित्यत्वात् । चक्षिङ इकारस्यानुदात्तत्वेऽपि ङित्करणादनुदात्तेत्त्वप्रयुक्तमात्मनेपदमनित्यमिति ज्ञाप्यते ॥ ४०८ ॥

प्रज्ञातस्वापराधाः प्रभुमनुतपने लोकसिद्धैरुपायैः
आत्मार्हैरर्चयन्तः क्रमशमितरुषस्तस्य सेवां लभन्ते ।
इत्थं नश्शास्त्रसिद्धैरिदमनिदमिति स्वाधिकारैर्विभक्तै-
र्निष्प्रत्यूहः प्रसादो निरुपधिसुहृदश्श्रीधरस्याधिगम्यः ॥ ४०९ ॥

इति शमदमाद्यधिकरणम् ॥ ११४ ॥

चिन्ता०—पूर्वं भगवदपराधादिप्रसक्तानामधिकारिणां तदनुरूपप्रायश्चित्तरूपकर्मानुष्ठानेन भगवन्तं प्रसाद्य फलप्राप्तौ लोकदृष्टप्रक्रियया शिष्याणां विश्वासमातनोति—प्रज्ञातेति । लोके हि प्रज्ञातस्वापराधास्सेवकाः पश्चादनुतापे सति लोकसिद्धैरेव उपायैस्स्वाधिकारानुरूपैरर्चयन्तः क्रमेण शमितरुषस्तस्य सेवाफलं लभन्ते। इत्थमस्माकमपि इदं कर्तव्यमिदमकर्तव्यमिति स्वाधिकारैः विभक्तैः कर्मभिर्निरुपधिसुहृदश्श्रीधरस्य निष्प्रत्यूहः प्रसादस्तत्परैरध्यात्मविद्भिरधिगम्य इत्यन्वयः ॥ ४०९ ॥

इति शमदमाद्यधिकरणम् ॥ ११४ ॥

पद०—प्रज्ञातस्वापराधा इत्यादि। प्रज्ञातस्वापराधाः—प्रज्ञातास्स्वकृतापराधा यैस्ते प्रज्ञातस्वापराधास्सेवकाः । अनुतपने—पश्चात्तापे जाते सति । लोकसिद्धैः—एतैरेतैः प्रभुस्सन्तुष्यतीति लोकतस्सिद्धैरवगतैः । आत्मार्हैः उपायैः—तदिष्टपुष्पफलादिसमर्पणस्तुतिकरणाद्युपायैः । प्रभुम्—अनुग्रहे निग्रहे च समर्थं दयालुं स्वामिनम् । अर्चयन्तः—आराधयन्तस्सन्तः । क्रमशमितरुषः—क्रमेण किञ्चित्कालसेवाक्रमेण शमितकोपास्सन्तः । तस्य—प्रभोः । सेवाम्—कैङ्कर्यम् । लभन्ते । इत्थम्—उक्तराजसेवकन्यायेन । नः—चेतनानामस्माकम् । शास्त्रसिद्धैः—'तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ' इत्यादिवचनेन शास्त्रैकसमधिगतैः । इदम्—कर्तव्यम् । अनिदम्—अकर्तव्यम् । इति—एवङ्क्रमेण । स्वाधिकारैः—स्वस्वयोग्यताभिः । विभक्तैः—इमे धर्मा ब्राह्मणस्य इमे धर्माः क्षत्रियस्य इमे ब्रह्मचारिणः इमे गृहस्थस्य इत्यादिरीत्या प्रतिवर्णं प्रत्याश्रमञ्च व्यवस्थापितैः कर्मभिः । निष्प्रत्यूहः—निवृत्तस्वविरोधिभूतहृदयकालुष्यः । निरुपधिसुहृदश्श्रीधरस्य प्रसादः—'सुहृदं सर्वभूतानाम्' इति सर्वभूतसुहृदः कारुण्यादिसन्धुक्षणविचक्षणां निखिललोकमातरं सदा वक्षसि वहतः पुरुषोत्तमस्य प्रसादः । अधिगम्यः—प्रथमं सम्पादनीयः । तस्मिन् सिद्धे 'किमलभ्यं भगवति प्रसन्ने श्रीनिकेतने' इत्युक्तरीत्या सर्वं सिध्यतीति भावः ॥ ४०९ ॥

इति शमदमाद्यधिकरणम् ॥ ११४ ॥

---

## सर्वान्नानुमत्यधिकरणम् ॥ ११५ ॥

सूत्रम्—सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॥ ४४६ ॥

आहारस्य व्यवस्था न भवति वचनात्प्राणविद्याधिकर्तुः
सामान्यस्थो निषेधो वलवति हि विधौ संकुचेदित्ययुक्तम् ।
अङ्गत्वेनाविधेस्स्यादनुमतिवचनं प्राणभङ्गप्रसङ्गे
पश्यैतत्प्राणनिष्ठादधिकमहिमनि ब्रह्मनिष्ठे ह्युपस्तौ ॥ ४१० ॥

इति सर्वान्नानुमत्यधिकरणम् ॥ ११५ ॥

चिन्ता०—ब्रह्मविदां शमदमादयोऽनुष्ठेया इत्युक्तम् । तत्र भोजननियतिरूपशमविशेषोऽस्ति नेतिचिन्त्यत इति सङ्गतिः । तदर्थविचारस्तु—किं प्राणविदस्सर्वान्नानुमतिस्सर्वदा उत प्राण-संशयापत्तौ । किं ब्रह्मविद उपस्तेः प्राणसंशये सति उच्छिष्टान्नभक्षणदर्शनं प्राणविदस्सर्वान्नानुमतेरापद्विषय-त्वमवगमयति नेति । अत्राह पूर्वपक्षी—वचनात् प्रवृत्तिर्वचनान्निवृत्तिरिति हि लोकसिद्धोऽयं न्यायस्सर्वै-रप्यनतिलङ्घनीय एव । प्राणविद्यानिष्ठे हि सर्वान्नयोग्यत्वमुच्यते । तेन निषिद्धभक्षणनिषेधः प्राणविद्या-निष्ठव्यतिरिक्तविषय एव, यथा न हिंस्यादित्यादौ सामान्यनिषेध आलभेतेति विहितव्यतिरिक्तविषय इति निर्णीयते तद्वदत्रेति। इमं पूर्वपक्षमाह—आहारस्येत्यादिना । अनूद्य प्रतिक्षिपति—अयुक्तमिति । अयुक्तत्वमेवोपपादयति—अङ्गत्वेनेति । प्राणविद्यायां सर्वान्नभक्षणवचनं विद्याङ्गत्वेन विधानाभावात् प्राणात्ययप्रसङ्गेष्वनुमतिवचनमात्रमेव । तदिदं सूत्रकार एव साक्षात्प्राह—'सर्वान्नानुमतिश्च' इति । एतस्य प्राणविद्यानिष्ठस्य सर्वान्नानुमतिवचनं प्राणात्ययविषय इत्युपपादयितुं प्राणनिष्ठादधिकमहिमनि ब्रह्मनिष्ठेऽप्युपस्तौ प्राणात्ययविषयत्वेनैव दर्शनात् कैमुत्यन्यायेनोपपादयति—पश्येति । शब्दान्वयस्तु—प्राणविद्याधिकर्तुर्वचनादाहारस्य व्यवस्था न भवति । सामान्यमात्रेण प्रवृत्तः पुनरभोज्यभोजन-निषेधो बलवद्विधिदर्शनेन संकुचेदेवेत्ययुक्तम्—प्राणविद्याङ्गत्वेन विधानाभावात् । प्राणविदोऽधिक-माहात्म्यवत्युपस्तावपि 'नवाजीविष्यम्' इति प्राणभङ्गप्रसङ्गे प्राणात्ययप्रसङ्गे निषिद्धभक्षणदर्शनात् प्राणविद्यायां केवलसर्वान्नभक्षणानुमतिवचनमापद्विषयमिति कैमुत्यन्यायसिद्धम् ॥ ४१० ॥

इति सर्वान्नानुमत्यधिकरणम् ॥ ११५ ॥

पद०—आहारस्येत्यादि । प्राणविद्याधिकर्तुः—प्राणविद्यानिष्ठस्य । वचनात्—'न ह वा

एवंविदि किञ्चनानन्नं भवति' इति सर्वान्नानुमतिवचनात्। आहारस्य व्यवस्था—श्रोत्रियान्नस्य भक्षणीयत्वं शूद्राभिशस्ताद्यन्नस्यानदनीयत्वमित्यादिरूपो जात्याश्रयनिमित्तादिदुष्टादुष्टान्नाभक्षणभक्षणव्यवस्था न भवति। कुत इति चेत् सामान्यस्थो निषेधः—सामान्यधर्मसम्बद्धो 'न हिंस्यात्सर्वा भूतानि' इत्येवमादिरूपो निषेधः। बलवति विधौ—अनन्यथासिद्धे 'अग्नीषोमीयं पशुमालभेत' इत्यादिविशेषविधौ सति। संकुचेद्धि—विशेषविधिविषयमपहाय तदन्यविषयमात्र एव व्यवतिष्ठेत हि। तथाच 'आहारशुद्धौ सत्त्वशुद्धिः' इत्यादिसामान्यनिषेध उदाहृतप्राणविद्यानिष्ठविषयसर्वान्नानुमतिवचनात् तद्विषयमपहाय अन्यविषय एव सङ्कुचितस्तिष्ठतु, प्राणविद्यानिष्ठः सर्वान्नीनोऽपि न दुष्यतु। इति अयुक्तम्—इति यत् शङ्कनं तन्न युक्तम्। अनुमतिवचनं अङ्गत्वेनाविधेः प्राणभङ्गप्रसङ्गे स्यात्—प्राणविद्यायां सर्वान्नभक्षणानुमतिवचनं विद्याङ्गत्वेन विधानाभावात् प्राणात्ययप्रसङ्गदशाविषयमेव स्यात्। प्राणनिष्ठात् अधिकमहिमनि ब्रह्मनिष्ठे—प्राणविद्यानिष्ठपुरुषापेक्षया अधिकमाहात्म्यशालिनि ब्रह्मविद्यानिष्ठे। उषस्तौ। हि—प्रसिद्धम्। एतत्—प्राणात्ययप्रसङ्गदशायामेव अनन्नभक्षणम्। पश्य—'मटचीहतेषु' इत्यादिच्छान्दोग्यस्थोषस्त्युपाख्यानपर्यालोचनयावगच्छेत्यर्थः॥ ४१०॥

इति सर्वान्नानुमत्यधिकरणम्॥ ११५॥

---

## विहितत्वाधिकरणम्॥ ११६॥

सूत्रम्—विहितत्वाच्चाश्रमकर्मापि॥ ४५०॥

वर्णादेः कर्मणां हि श्रुतिभिरभिदधे ब्रह्मविद्याङ्गभावः
तस्माद्ब्रह्मनिष्ठे तदननुसरणात्स्वैरितैवास्तु मैवम्।
नित्यत्वस्यापि सिद्धेस्तदुचितविनियुक्त्यन्यभावानुसारात्
तन्त्रं काम्याग्निहोत्रादिवदिह परविन्नित्यवर्गेऽपि योज्यम्॥ ४११॥

इति विहितत्वाधिकरणम्॥ ११६॥

चिन्ता०—अत्र सङ्गतिर्भाष्ये 'यज्ञादिकर्माङ्गिका ब्रह्मविद्येत्युक्तम्। तानि च यज्ञादीनि कर्माण्यमुमुक्षुणा केवलाश्रमिणाप्यनुष्ठेयानि उत नेति चिन्तायाम्' इति। तदर्थविचारस्तु—किं विद्याङ्गभूतान्याश्रमकर्माणि केवलाश्रमिणाप्यनुष्ठेयानि उत नेति। किमेषां विद्याङ्गत्वे केवलाश्रमाङ्गत्वं सम्भवति नेति। किं केवलाश्रमाङ्गत्वे नित्यानित्यसंयोगविरोधः प्रसज्यते नेति। अत्र पूर्वपक्षमनुवदति—वर्णादे-

रिति । 'यज्ञेन' इत्यादिवाक्येन वर्णादेः कर्मणो ब्रह्मविद्याङ्गभावोऽभिदधे । तस्माद् अब्रह्मनिष्ठे ब्रह्मविद्याऽभावेन ब्रह्मविद्याङ्गकर्माननुसरणात्स्वैरित्वमेवास्तु । अत्रोत्तरम्—मैवमिति । तत्र हेतुमाह—नित्यत्वस्येति । इत्थं किल तान्त्रिकमर्यादा—यानि कर्माण्येकत्र विनियुज्यन्ते तान्यन्यत्रापि विधिना विनियुक्तानि चेद् विनियोगपृथक्त्वादेवोभयत्रान्वयसिद्धिरिति । विनियुक्त्यन्यभावानुसारात् विनियुक्त्यन्तरादित्यर्थः । अत्र चानुष्ठानं तन्त्रमेव भवति । यत्र हि देशकालाद्यैक्येन पृथगनुष्ठानं कर्तुं न शक्यते तत्र तन्त्रेणानुष्ठानमिति तान्त्रिकप्रक्रिया । उक्तार्थे सम्प्रतिपन्नदृष्टान्तमाह—काम्येति । काम्याग्निहोत्रमनुष्ठीयमानं नित्यसिद्धिमपि करोतीति हि मर्यादा । एतच्च परविदां नित्यवर्गेऽपि योज्यमित्याह—इहेति । अध्यात्मविदां नित्यानुष्ठानं हि ब्रह्मविद्याङ्गभावेन तत्सिद्धिमपि तन्त्रेण करोतीत्यर्थः ॥ ४११ ॥

इति विहितत्वाधिकरणम् ॥ ११६ ॥

पद०—वर्णादेरित्यादि । वर्णादेः कर्मणाम्—वर्णाश्रमसम्बन्धिनां सन्ध्यावन्दनाग्निहोत्रादिकर्मणाम् । ब्रह्मविद्याङ्गभावः—ब्रह्मविद्याङ्गत्वम् । श्रुतिभिरभिदधे हि—'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन' इत्यादिश्रुतिभिरुक्तं हि । तस्मात्—कारणात् । अब्रह्मनिष्ठे—ब्रह्मविद्याशून्ये केवलाधिकारिणि । तदननुसरणात्—ब्रह्मविद्याङ्गभूतकर्माननुसरणात् । स्वैरितैवास्तु—कर्मविधिपारतन्त्र्याभावेन यथेच्छवर्तनमेव भवतु । तथावर्तनेऽपि तस्य प्रायश्चित्तमनुष्ठेयं मा भूदिति भावः । मैवम्—एवं मा शङ्किष्ठाः । तदुचितविनियुक्त्यन्यभावानुसारात् नित्यत्वस्यापि सिद्धेः—एवं हि तान्त्रिकमर्यादा, यानि कर्माण्येकत्र विनियुज्यन्ते तान्यन्यत्रापि विनियुक्तानि चेत् विनियोगपृथक्त्वादेवोभयत्रान्वयसिद्धिरिति । अतस्तत्तत्कर्मोचितविनियोगान्तरानुसारात् तेषां कर्मणां विद्याङ्गत्वं विनापि नित्यानुष्ठेयत्वसिद्धेः । इह परविन्नित्यवर्गेऽपि—अस्मिन् ब्रह्मवित्सम्बन्धिनित्यकर्मवर्गेऽपि । काम्याग्निहोत्रादिवत्—काम्याग्निहोत्रादिभिस्तुल्यम् । यथा स्वर्गादिफलसाधनं वर्णाश्रमशेषभूतत्वाग्निहोत्रदर्शपूर्णमासादिकं देशकालाद्यैक्येन पृथगनुष्ठानानर्हतया फलार्थमनुष्ठीयमानमपि नित्यानुष्ठानसिद्धिमपि करोति तथेत्यर्थः । तन्त्रं योज्यम्—एकवारानुष्ठानेनैव उभयानुष्ठानसिद्धिहेतुत्वं पर्यालोचनीयम् । तथाचाचार्यकारिका—

'नित्यकाम्यस्वरूपैक्ये विनियोगपृथक्त्वतः ।
फलार्थं क्रियमाणेऽपि नित्यं भवति तन्त्रतः ॥' इति ।

इति विहितत्वाधिकरणम् ॥ ११६ ॥

## विधुराधिकरणम् ॥ ११७ ॥

सूत्रम्—अन्तरा चापि तु तद्दृष्टेः ॥ ४५४ ॥

दारालाभे विरक्तेर्म्रदिमनि च भवेदन्तरेणाश्रमान् यः
तस्मिन्निश्शेषधर्मत्यजि भवतु कथं ब्रह्मविद्येति चेन्न ।
सामान्यैर्वर्णधर्मैर्गुणनियतियुतैस्सा हि तत्रापि साङ्गा
भीष्मादौ दृष्टमेतद् भवति तु वृषले गत्यभावादभावः ॥ ४१२ ॥

इति विधुराधिकरणम् ॥ ४१२ ॥

चिन्ता०—अत्र भाष्ये सङ्गतिरुक्ता 'चतुर्णामाश्रमिणां ब्रह्मविद्यायामधिकारोऽस्ति, विद्यासहकारिण आश्रमधर्मा इति चोक्तम् । ये पुनराश्रमानन्तरा वर्तन्ते विधुरादयस्तेषां ब्रह्मविद्यायामधिकारोऽस्तिनवेति विशये' इति । तदर्थविचारस्तु—किं विधुरादीनां ब्रह्मविद्यायामधिकारोऽस्ति नेति । किं तेषां साङ्गब्रह्मविद्योपसंहारसामर्थ्यमस्ति नेति । किमाश्रमसाधारणधर्माङ्गिकापि विद्या सम्भवति नेति । 'तपसा ब्रह्मचर्येण' इत्यादिविनियोगोपबृंहितं रैक्वादीनां विद्यानिष्ठत्वदर्शनं विद्यायास्साधारणधर्माङ्गकत्वमवगमयति नेति । अत्र पूर्वपक्षमाह—दारालाभ इति । दारलाभाभावे परिव्राजकाश्रमप्राप्त्यनुरूपविरक्त्यभावे च मध्ये तिष्ठन्नन्तरेणाश्रमान् यो भवति—आश्रमशून्यो भवति य इत्यर्थः । तस्मिन्नधिकाराभावान्निश्शेषकर्मानुष्ठानशून्ये कथं भवति ब्रह्मविद्याधिकार इत्याशङ्का । तां निराकरोति—नेति । मा भूदाश्रमधर्मः, सामान्यैरेव वर्णधर्मैः फलसङ्गकर्तृत्वादिपरित्यागात्मकगुणनियतियुतैः सा ब्रह्मविद्या तस्मिन्नधिकारिणि साङ्गा भवत्येव । न केवलमस्माभिः परिकल्प्यते, किंतु गाङ्गेयादिषु दृष्टमेतदित्याह—भीष्मादाविति । तर्हि शूद्रेऽप्यधिकारः किं न स्यादित्याशङ्क्यापशूद्राधिकरणे शूद्राधिकारनिषेधस्य दृष्टत्वात्तस्य ब्रह्मविद्यायामनधिकार एव । विधुरादीनां वेदाध्ययनादिविद्यानुष्ठानौपयिकबहुधर्मदर्शनाच्चाधिकारोऽस्तीति न शूद्रस्य तादृशं कर्म बहुप्रमाणनिषेधादिति भावः ॥ ४१२ ॥

इति विधुराधिकरणम् ॥ ४१२ ॥

पद०—दारालाभ इत्यादि । दारालाभे विरक्तेर्म्रदिमनि च—पाणिगृहीतदाराणां मरणे धनाद्यभावाद्दारान्तरालाभे विरक्तेः प्रव्रज्याधिकारभूतवैराग्यस्य म्रदिमनि च दार्ढ्याभावे च सति । आश्रमानन्तरेण यो भवेत्—आश्रमशून्यतया यो वर्तेत । निश्शेषधर्मत्यजि तस्मिन्—साकल्येन धर्मान् अग्निहोत्रयज्ञादिकान् त्यक्तवति तस्मिन् विधुरे । ब्रह्मविद्या कथं भवतु—'सर्वापेक्षा च' इत्यादिना यज्ञाद्यङ्गिका

ब्रह्मविद्या कथं सम्भवेत्। इति चेन्न—इति शङ्क्यते चेत्तन्नयुक्तम्। गुणनियतियुतैः—फलसङ्गस्यत-न्त्रकर्तृत्वादित्यागरूपगुणनियतियुक्तैः। सामान्यैः—साधारणैः। वर्णधर्मैः—सत्यवचनजपोपवासदेव-तापूजनादिभिर्विधुरस्यापि सम्भावितैर्वर्णधर्मैः। सा—ब्रह्मविद्या। तत्रापि—विधुरेऽपि। साङ्गा हि—अङ्गयुक्ततया प्रसिद्धा। न तु लुप्ताङ्गेत्यर्थः। एतत्—आश्रमशून्यत्वेऽपि सम्भावितवर्णधर्माङ्गकं ब्रह्मविद्यानु-ष्ठानम्। भीष्मादौ—भीष्मसंवर्तरैक्वप्रभृतिब्रह्मविज्जने। दृष्टम्—भारतादिप्रमाणैरवगतम्। वृषले तु गत्यभावादभावो भवति—शूद्राधिकारिविषये तु गत्यभावात् वेदाध्ययनादिनिषेधेन विद्यासम्भवकल्प-कप्रमाणाभावेन च ब्रह्मविद्याया अभावो भवति। अनुष्ठानाभावोऽङ्गीकृतो भवतीत्यर्थः॥ ४१२॥

इति विधुराधिकरणम्॥ ४१२॥

---

## तद्भूताधिकरणम्॥ ११८॥

सूत्रम्—तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमात्तद्रूपाभावेभ्यः॥ ४५८॥

आरूढो नैष्ठिकादित्रयमथ पतितस्तत्परावर्तनाद्यः
तत्रापि ब्रह्मविद्या भवतु सहकृता तद्दशार्हैस्स्वधर्मैः।
मैवं यद्यप्यभीच्छन्त्युपपतनमिदं शोधकञ्चास्त्यनेकं
सर्वार्हं कीर्तनाद्यं तदपि तदुचितो नैष ताद्दृङ्निषेधात्॥ ४१३॥

चिन्ता०—अत्र भाष्य एव पूर्वपक्षोत्थानक्रमेण सङ्गतिर्दर्शिता 'नैष्ठिकवैखानसपरिव्राजकाश्रमेभ्यः प्रच्युतानामपि ब्रह्मविद्यायामधिकारोऽस्ति नेति चिन्तायां विधुरादिवदाश्रमैकान्तैर्दानादिभिर्विद्यानुग्रहसम्भ-वादस्त्यधिकार इति प्राप्त उच्यते' इति। तदर्थविचारस्तु—किं नैष्ठिकाद्याश्रमभ्रष्टानां ब्रह्मविद्याधिकारो-ऽस्ति नेति। किमेषां साङ्गविद्योपसंहारसामर्थ्यमस्ति नेति। किमेषां प्रायश्चित्तात् शुद्धिमत्त्वं सम्भवति नेति। किं 'यो ब्रह्मचारी स्त्रियमुपेयात्' इति विहितं प्रायश्चित्तं सर्वब्रह्मचारिविषयमुत नैष्ठिकभिन्नब्रह्मचारि-विषयमिति। किं 'प्रायश्चित्तं न पश्यामि' इति वचनं प्रायश्चित्तवचनस्य नैष्ठिकव्यतिरिक्तब्रह्मचारिवि-षयतामवगमयति नेति। अत्र पूर्वपक्षमाह—आरूढ इति। नैष्ठिकादित्रयमारूढः समनन्तरं तत्परावर्त-नात्पतितो यस्तस्मिन्नपि ब्रह्मविद्या भवत्येव। तद्दशार्हैस्स्वधर्मैस्सहकृता सहकृतस्यादित्यर्थः। पूर्व-पक्षं निराकरोति—मैवमिति। निराकरणहेतुमुपपादयति—यद्यपीत्यादिना। यद्यपि नैष्ठिकस्य भ्रष्टत्व-

मुपपातकान्तर्गतम् , न पुनर्महापातकम् । लोके च महापातकपर्यन्तसकलपापक्षयहेतुभूतं हरिकीर्तनस्तुतिनमस्कारादिकमितिहासपुराणादिप्रसिद्धम् । अथापि नैष्ठिकादिभ्रष्टो ब्रह्मविद्यायां नाधिकरोति 'प्रायश्चित्तं न पश्यामि' इति साक्षादेव प्रायश्चित्तनिषेधवचनस्य स्फुटतरमुपलभ्यमानत्वात् । नहि वचनविरोधे न्यायः प्रभवति । तेनेदमुपपातकं वा महापातकं वा यत्किञ्चिदेव भवतु । अथापि न ब्रह्मविद्यायामधिकारः । तदिदमाह—तदपीति । तत्र हेतुमाह—तादृङ्निषेधादिति । अनधिकारित्वप्रतिपादकनिषेधवचनसामर्थ्यादित्यर्थः । यद्यपि हरिकीर्तनादिकं शोधकमस्ति तदपि तस्य सम्भाषणाद्यर्हतामेवापादयति नपुनर्ब्रह्मविद्याधिकारमिति भावः ॥ ४१३ ॥

पद०—आरूढ इत्यादि । यः—पुरुषः । नैष्ठिकादित्रयम्—नैष्ठिक्यवानप्रस्थ्यपारिव्रज्याश्रमेष्वन्यतमम् । आरूढः—आश्रितः । अथ-तत्तदाश्रमपरिग्रहानन्तरम् । तत्परावर्तनात्—तेषामाश्रमाणां परावर्तनात् विसर्जनात् । पतितः—वैदिकमार्गात् प्रच्युतः । तत्रापि—तस्मिन्नधिकारिण्यपि । तदृशार्हैः—तादृशदशायोग्यैः । स्वधर्मैः—उपवासहरिकीर्तनादिभिस्तदनुगुणधर्मैः । सहकृता—कृतोपकारा अङ्गवतीत्यर्थः । ब्रह्मविद्या भवतु—अनुष्ठीयतामित्यर्थः । मैवम्—एवं मा शङ्किष्ठाः । यद्यपि इदमुपपतनमभीच्छन्ति—पक्षभेदेन इदं नैष्ठिक्याद्याश्रमपरावर्तनं उपपातकं केचिदभीच्छन्ति । नतु महापातकम् । अनेकं सर्वार्हं कीर्तनाद्यं शोधकञ्चास्ति—अनेकविधं सर्वार्हं आचण्डालमखिलार्तजनयोग्यं हरिकीर्तनस्मरणनमस्करणादिकं पापनिवर्तकञ्चास्ति । तदपि—तथापि । तादृङ्निषेधात्—

'आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते द्विजः ।
प्रायश्चित्तं न पश्यामि येन शुध्येत्स आत्महा ॥'

इति प्रायश्चित्तनिषेधात् । एषः—नैष्ठिक्यादिभ्रष्टः । तदुचितो न—ब्रह्मविद्यानुष्ठानयोग्यो न भवतीत्यर्थः ॥ ४१३ ॥

प्रायश्चित्तं वदन्ति ह्युपपतनमहापातयो र्ब्रह्मयोगं
प्राप्ते पाते प्रमादाद् विदधति मुनयो योगिनां योगमेव ।
तस्मादारूढपातेऽप्यधिकृतिरिति नाचोदनीयं हि शास्त्रं
यावज्जीवं तु तन्निष्कृतिरिति नियमस्सूत्रकाराद्यभीष्टः ॥ ४१४ ॥

चिन्ता०—ननु 'आपीठान्मौलिपर्यन्तं पश्यतः पुरुषोत्तमम्। पातकान्याशु नश्यन्ति किं पुनस्तूपपातकम् ॥' इति भगवदवलोकनानुवृत्तिरेव महापातकोपपातकयोर्विनाशिकेत्युच्यते एवं योग एव योगभ्रष्टस्य पापनिरासकत्वेन तत्रतत्र शास्त्रेषूपदिश्यते तस्मात्कथं प्रायश्चित्ताभाव इत्याशङ्क्याह—प्रायश्चित्तमिति। अयमत्र शब्दान्वयः—उपपातकमहापातकयोर्ब्रह्मानुसन्धानमेव प्रायश्चित्तं वदन्ति। किञ्च योगिनां प्रमादात् प्राप्ते पाते योगमेव पुनः प्रायश्चित्तं वदन्ति मुनयः। तस्मादारूढपाते सत्यपि प्रायश्चित्तात् ब्रह्मविद्यायामधिकारोऽस्तीति न वक्तव्यम्। तत्र हेतुः—अचोदनीयं हि शास्त्रमिति। अपर्यनुयोज्या खलु शास्त्रगतिः। यत् यथा शास्त्रोक्तं तत्तथैवाङ्गीकर्तव्यम्। ननु भगवदनुसन्धानस्य सर्वपापहरत्वकथनमपि शास्त्रमेव, न ह्येकस्य शास्त्रस्य शास्त्रान्तरं परतन्त्रम्। दृष्टा ह्यजामिलादेर्बहुपापवृत्तस्यापि मुक्तिप्राप्तिः। तत्कथमुच्यते प्रायश्चित्तं नास्तीत्याशङ्क्याह—यावज्जीवमिति। अजामिलादिवत् यावज्जीवं भगवदनुसन्धानमेव तादृशस्यापि पापस्य निष्कृतिरिति सूत्रकाराद्यभिप्रायः। उच्यते हि—

'शुचिर्भवति संस्मृत्या स्नातो भवति कीर्तनात्।
प्रणिपातेन पूतात्मा कृष्णस्यैते महागुणाः ॥' इति।

अतो भगवदनुसन्धानमामरणान्तिकं प्रायश्चित्तं तादृशानां पापानामित्यर्थः ॥ ४१४ ॥

पद०—प्रायश्चित्तमित्यादि। उपपतनमहापातयोर्ब्रह्मयोगं प्रायश्चित्तं वदन्ति हि—उपपातकमहापातकयोर्ब्रह्मध्यानमेव प्रायश्चित्तं स्मर्तारो वदन्ति। योगिनां प्रमादात् पाते प्राप्ते मुनयो योगमेव प्रायश्चित्तं विदधति—किञ्च योगिनामनवधानेन पातकसम्भवे मुनयो योगमेव प्रायश्चित्तं वदन्ति। तस्मात् आरूढपातेऽपि अधिकृतिरिति न—तस्मात् कारणात् नैष्ठिक्याद्यारूढस्य तत्परावर्तनजनितपातेऽपि प्रायश्चित्तात् ब्रह्मविद्यायामधिकारोऽस्त्वितीदं शङ्कनं न युक्तम्। शास्त्रं अचोदनीयं हि—शास्त्रगतिरपर्यनुयोज्या खलु। तथा च यथा शास्त्रेणोच्यते तत्तथैवाङ्गीकार्यम्। यावज्जीवं तु तन्निष्कृतिरिति नियमस्सूत्रकाराद्यभीष्टः—यावज्जीवं तन्निष्कृतिर्भगवदनुसन्धानादिरूपा कर्तव्येति नियमः आश्रमच्युतानां निर्बन्धः सूत्रकारस्मृतिकाराणामभिमतः ॥ ४१४ ॥

यो बालं हन्ति यस्स्त्रीं शरणमुपगतं यश्च यो वा कृतघ्नः
प्रायश्चित्तैर्विशुद्धानपि जगदुरिमान्साधुसंसृष्ट्यनर्हान्।
स्मृत्याचारानुसारादिह च गतिरियं दर्शिता सूत्रकारैः
शास्त्रं नश्शासनीयं यदि भवति तदा सम्प्लुतो धर्मसेतुः ॥ ४१५ ॥

चिन्ता०—उक्तमेवार्थं दृष्टान्तान्तरेणाप्युपपादयति—यो बालमित्यादिना । यो बालं हन्ति यस्तु स्त्रियं हन्ति यश्च वा शरणागतं हन्ति यश्च कृतघ्नः प्रायश्चित्तैर्विशुद्धानपि तानेतान् साधुसंसृष्ट्यनर्हाञ्जगदुः । स्मर्यते हि—

'शास्त्रेषु निष्कृतिर्दृष्टा महापातकिनामपि ।
शरणागतहन्तुस्तु न दृष्टा निष्कृतिः क्वचित् ॥' इति ।

तथा 'कृतघ्ने नास्ति निष्कृतिः' इति । एवं बालस्त्रीनिधननिन्दावचनानि पाठ्यानि । इत्थं वचनबलाल्लोकेच तादृशामुत्पथवृत्तीनामध्यात्मविद्भिरपरिग्रहाच्च सूत्रकारैर्दर्शितम् । किमर्थमिदं शास्त्रमेतादृशं निष्कृत्यभावप्रतिपादकं निष्ठुरवचनं वक्तीत्याशङ्कयाह—शास्त्रमिति । यदि शास्त्रं शासनीयं भवति तर्हि पापप्रवणेषु शास्त्रस्य पारतन्त्र्यं स्यादेव तथाच सम्प्लुतो धर्मसेतुरिति । कृत्याकृत्यनियमाभावस्स्यादिति कृतं विस्तरेण ॥ ४१५ ॥

पद०—यो बालमित्यादि । यो बालं हन्ति—यश्शिशुं मारयति । यस्स्त्रीं हन्ति । यश्च शरणमुपगतं शरणागतं च हन्ति । यो वा कृतघ्नः—कृतमुपकारं विस्मरति । इमान्—बालघ्नादीन् । प्रायश्चित्तैः—तत्तत्पापानुगुणप्रतिपदोक्तप्रायश्चित्तैः । विशुद्धानपि—विशोधितपापानपि । साधुसंसृष्ट्यनर्हान्—साधूनां संवासभाषणश्राद्धनिमन्त्रणार्त्विज्यदानप्रतिग्रहविद्यादानादिसंसर्गानर्हान् । मुनयो जगदुः । तस्मात्, स्मृत्याचारानुसारात्—स्मृत्याचारयोरनुसारात् । इह च—आश्रमच्युतविषये च । सूत्रकारैः । इयं गतिः—प्रायश्चित्ताभावः, प्रायश्चित्तकरणेऽपि विद्याधिकाराभाव इत्येषा गतिः । दर्शिता—प्रतिपादिता । नः—शास्त्रपरतन्त्राणामस्माकम् । शास्त्रम्—इदं कुरु इदं मा कुरु इत्यादिविधिनिषेधरूपं शास्त्रम् । शासनीयं भवति यदि—अस्मदिच्छानुसारेण शिक्षणीयं भवेद्यदि । तदा धर्मसेतुस्सम्प्लुतः—धर्ममर्यादा विध्वंसितैव भवेदिति । तस्माद्यथाशास्त्रमवस्थेयं शास्त्रपरतन्त्रैरिति भावः ॥ ४१५ ॥

ब्रह्मांशत्वे समाने गुणविषमतया शुद्ध्यशुद्धिस्वभावैः
देहैर्योगादनुज्ञापरिहरणमपि प्रेक्षणस्पर्शनादेः ।
इत्येवं सूत्रितं प्राक् पुनरिह विविधालेपकक्षोभशान्त्यै
सम्यग्ज्ञातात्मनोऽपि स्वतनुसमुचिताचारतः प्रत्यबोधि ॥ ४१६ ॥

इति तद्भूताधिकरणम् ॥ ११८ ॥

चिन्ता०—पूर्वमेव शास्त्रमर्यादानुल्लङ्घनेन वर्ज्यावर्ज्यविभागः प्रतिपादितः किमर्थमिदं पुनः सूत्रकारेण प्रतिपाद्यत इत्याशङ्क्य प्रयोजनविशेषप्रतिपादनेन परिहरति—ब्रह्मांशत्व इति। अयमत्र शब्दान्वयः—'भोक्ता भोग्यं प्रेरितारञ्च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत्' इति श्रुत्यनुसारेण चेतनाचेतनयोर्ब्रह्मांशत्वे समानेऽपि गुणविषमतया शुद्ध्यशुद्धिस्वभावैः ब्राह्मणचण्डालादिदेहैर्योगात् प्रेक्षणस्पर्शनादेरनुज्ञा परिहरणञ्च भवतीतिप्रागेव सूत्रकारैरुक्तम्। तथापि पुनरिह विविधालेपकक्षोभशान्त्यै अलेपका मृषावादिपक्षमेवाश्रित्यानाश्रमित्वेन वर्तमानाः कृत्याकृत्यनियमाभावेन वर्तमाना ब्रह्मविन्नाममात्रधारिणो ऽकृत्यकरणकृत्याकरणकारिणः। अत्र विविधेतिवचनं प्रच्छन्नताद्दग्विधवृत्तीनां परिग्रहार्थम्। अपरे पुनर्विष्णुभक्तिनाटकमाश्रित्यालेपकवृत्त्यैव वर्तन्ते। एवं विविधालेपकक्षोभशान्त्यै सम्यग्ज्ञातात्मनोऽपि प्रेक्षणस्पर्शनादेरनुज्ञापरिहरणं प्रत्यबोधि। अयमर्थः—भगवच्छेषत्वेन सम्यग्ज्ञातात्मना तदाज्ञानुवर्तनमेव कर्तव्यम्। भगवदाज्ञा च श्रुतिस्मृती 'श्रुतिस्स्मृतिर्ममैवाज्ञा' इति भगवतैवोक्तत्वात्। तेन तत्त्वविदामेव विशेषतः स्वाधिकारानुरूपं कर्मानुष्ठानं कर्तव्यमिति ॥ ४१६ ॥

इति तद्भूताधिकरणम् ॥ ११८ ॥

पद०—ब्रह्मांशत्व इत्यादि। ब्रह्मांशत्वे समाने—ब्रह्मविशेषणत्वे तुल्येऽपि। गुणविषमतया—सत्त्वरजस्तमोगुणवैषम्येण। शुद्ध्यशुद्धिस्वभावैः—शुद्धिस्वभावैरशुद्धिस्वभावैश्च। सत्त्वगुणातिशयप्रयुक्तः प्रेक्षणादिस्वरूपयोग्यताविशेषश्शुद्धिः तमोगुणातिशयप्रयुक्तः प्रेक्षणाद्ययोग्यताविशेषोऽशुद्धिः। तद्धर्मकैरित्यर्थः। वस्तुतस्तु सत्त्वगुणातिशयश्शुद्धिः तमोगुणातिशयोऽशुद्धिः। तथाच स्मृतिः—'तमश्शूद्रे रजः क्षत्रे ब्राह्मणे सत्त्वमुत्तमम्' इति। उत्तमं अधिकभागविशिष्टं तमश्शूद्रे तथा उत्तमं रजः क्षत्रे क्षत्रिये तथैवाधिकभागविशिष्टं सत्त्वं ब्राह्मण इत्यर्थः। तत्तच्छरीर इतिफलितम्। देहैः—ब्राह्मणचण्डालादिशरीरैः। योगात्—सम्बन्धात्। प्रेक्षणस्पर्शनादेः—आदिशब्देन सम्भाषणसहवासादिकं ग्राह्यम्। तादृशकार्यवर्गस्य। अनुज्ञा—करणे दोषाभावपर्यन्तो ऽङ्गीकारः। परिहरणमपि—करणे दोषतत्परिहारकस्नानादिविधिपर्यन्तो निषेधः। भवतीति शेषः। शास्त्रप्रतिपादितं भवतीत्यर्थः। इत्येवं प्राक् सूत्रितम्—'अनुज्ञापरिहारौ देहसम्बन्धाज्ज्योतिरादिवत्' इति सूत्रेण प्रत्यपादि। इह—अस्मिन्पादे। पुनः, विविधालेपकक्षोभशान्त्यै—विविधाः मृषावादिमतनटनविष्णुभक्तिनटनादिवेषभेदेन वैविध्यभाजो ये अलेपकाः वैदिकधर्मसम्बन्धशून्याः तत्कर्तृकक्षोभः ज्ञानिनां वर्णाश्रमधर्मत्याग एव कार्यः अज्ञानामेव तदाचरणम्' इत्यादिप्रलापैस्साधुजनमनस्सन्देहापादनम्, तस्य शान्त्यै निवर्तनाय। सम्यक्—यथावस्थितस्वभावेन। ज्ञातात्मनोऽपि—स्वात्मपरमात्मज्ञानपूर्वकं

स्वाधिकारानुरूपविद्यानिष्ठस्याप्यधिकारिणः । प्रेक्षणस्पर्शनादेरनुज्ञापरिहरणमपि—प्रेक्षणस्पर्शनाद्यनुज्ञातत्परिहरणञ्चोक्तरूपम् । स्वतनुसमुचिताचारतः—स्वस्वशरीरगतब्राह्मणत्वक्षत्रियत्ववैश्यत्वब्रह्मचारित्वगृहित्ववनित्वयतित्वरूपवर्णाश्रमानुगुणाचारकर्तव्यताप्रतिपादनेन । प्रत्यबोधि—प्रत्यभ्यज्ञाप्यतेत्यर्थः । प्रत्यभिज्ञापयामासेति वार्थः । प्रथमपक्षे सूत्रकारेणेत्यध्याहारः । अस्मिन्पक्षे सूत्रकार इति शेषः । बुधधातोर्लुङि कर्तर्यपि चिणन्तादबोधीति रूपमुपपद्यते ॥ ४१६ ॥

इति तद्भूताधिकरणम् ॥ ११८ ॥

---

## स्वाम्यधिकरणम् ॥ ११९ ॥

सूत्रम्—स्वामिनः फलश्रुतेरित्यात्रेयः ॥ ४६२ ॥

उद्गीथादावुपास्तिर्भवति हि फलिना यज्वनैवात्र शक्या
तस्मात्तत्कर्तृकासाविति यदि न परिक्रीतकर्माश्रयत्वात् ।
ऋत्विक्साध्या यथान्ये गुणफलविधयोऽनूद्यते चैवमेषा
शक्यत्वं न्ह्युपाधिर्विधिबलनियतेस्स्वामिभृत्यक्रमेण ॥ ४१७ ॥

इति स्वाम्यधिकरणम् ॥ ११९ ॥

चिन्ता—इदमधिकरणं प्रासङ्गिकम् । उपासनानुष्ठात्रनुष्ठातृविभागप्रसङ्गेनोद्गीथोपासनादेरनुष्ठात्रनुष्ठातृविभागचिन्ता क्रियत इति सङ्गतिः । तदर्थविचारस्तु—क्रत्वङ्गाश्रयाण्युद्गीथाद्युपासनानि किं यजमानकर्तृकाणि उत ऋत्विक्कर्तृकाणीति । किं दहराद्युपासनानामिव फलिकर्तृकत्वं न्याय्यमुत गोदोहनादेरिवर्त्विक्कर्तृकत्वमिति । अत्र पूर्वपक्षी मन्यते—'शास्त्रफलं प्रयोक्तरि' इति न्यायेन यः फली स एव कर्तेत्यङ्गीकरणीयम् । तथा चोद्गीथोपासनेऽपि फलिन एव यजमानस्य कर्तृत्वमङ्गीकार्यम् यथा दहराद्युपासनेषु फलिन एवोपासनकर्तृत्वमिति । तदिदमाह—उद्गीथादाविति । उद्गीथोपास्तिः फलिना यज्वनैव भवति । ननु गोदोहनादौ फलित्वे सत्यपि यजमानेन न क्रियते तत् कथमित्याशङ्क्याह—शक्येति । गोदोहनादौ ऋत्विक्कर्तृके प्रणयने यजमानेन गोदोहनं प्रयोक्तुमेव न शक्यते । तेन तत्र ऋत्विक्कर्तृकत्वसिद्धिः । अत्र पुनरुद्गीथोपासने बुद्धिरूपत्वादुपासनस्यर्त्विक्कर्तृकेऽप्युद्गीथे ह्युपासनं कर्तुं शक्यत इति विषमो दृष्टान्तः । एवं फलिकर्तृत्वौचित्याद् दृष्टान्तवैषम्याच्च यजमानकर्तृत्वमेवेत्याह—

तस्मादिति । उक्तमर्थं निराकरोति—नेति । तत्र हेतुमाह—परिक्रीतकर्माश्रयत्वादिति । दक्षिणाप्रदानेन परिक्रीत एवर्त्विक् तत्कर्म चोद्गीथप्रयोगः तदाश्रयश्चोपासनम् । अयमर्थः—साङ्गस्य यज्ञस्य निर्विघ्नानुष्ठानेन फलहेतुत्वसिद्ध्यर्थं परिक्रीत एवर्त्विक् तत्र प्रतिबन्धनिवृत्तिर्येनोपासनेन भवति तदनुष्ठानमन्तरेण निर्विघ्नमेव कर्मफलं न सेत्स्यति । अतस्तत्र विघ्नोपशमनार्थमनुष्ठीयमानोपासनेऽपि ऋत्विक्कर्तृकत्वमेव स्यादिति । प्रतिज्ञातार्थे दृष्टान्तमाह—यथान्यइति । यथा 'गोदोहनेन पशुकामस्य प्रणयेत्' इत्यनुष्ठानेन तादात्विकसकलकर्मानुष्ठातृत्वमृत्विज एव । न चास्माभिरुपपत्तिमात्रेणैतत्कल्प्यते अपि तु श्रुतिमवलम्ब्य ब्रूमहे । एवमेव ह्येषा विद्यानूद्यते 'यदेव विद्यया करोति' इति । उद्गीथे कर्तृत्वमृत्विज एव । तत्र विद्ययेति सहपठितविद्याकर्तृत्वमपि तस्यैव प्रतीयते । नहि चक्षुषा पश्यति देवदत्त इत्युक्ते चक्षुःप्रेरणं देवदत्तादन्यस्य भवति । एवं विद्याकर्तृत्वमृत्विज एव । ननु गोदोहनप्रयोगे ऋत्विजा कर्तुं शक्ये यजमानस्य कर्तुं शक्त्यभावादकर्तृत्वम् । अत्र पुनर्यजमानस्योपासने शक्तिरस्तीति चेन्नेत्याह—शक्यत्वमिति । नहि यस्य यत्र कर्तुं शक्तिरस्ति तेन तत्प्रयोक्तव्यमिति नियमोऽस्ति । सर्वेषामपि ऋत्विजां सर्वानुष्ठाने शक्तिरस्तीत्यनुष्ठानसङ्करप्रसङ्गात् । अपि तु श्रुतिरेव कर्तारं नियमयति । यस्य हि श्रुतिर्यत्र कर्तृत्वमाह स एव तत्कर्तुमर्हतीति न्यायमार्गः । अत्र पुनः 'यदेव विद्यया करोति' इत्युद्गीथप्रयोगे तदुपासने च कर्तृत्वमृत्विज एव श्रुतिर्दर्शयति । ऋत्विक्कर्तृत्वेनैव फलिकर्तृत्वमपि सेत्स्यति । यजमानेनैव स्वकार्यकरणार्थं दक्षिणाप्रदानेन ऋत्विजां क्रीतत्वात् । अत्र लोकसिद्धमपि दृष्टान्तमाह—स्वामिभृत्यक्रमेणेति । राजभृत्याः खलु राज्ञा पोषिता राजकार्यं राज्ञो नियमनेन कुर्वन्ति । तत्रान्तरङ्गतया बहिरङ्गतया वा यानि कर्माणि कर्तव्यानि तानि कर्माणि त एव कुर्वन्तीति घण्टापथोऽयं मार्गः । तेनोद्गीथाद्युपासनानामृत्विक्कर्तृकत्वमेवेति सिद्धम् ॥ ४१७ ॥

इति स्वाम्यधिकरणम् ॥ ११९ ॥

पद०—उद्गीथादावित्यादि । अत्र उद्गीथादौ । उपास्तिः—रसतमत्वाद्युपासना । फलिना—फलभाजा । यज्वनैव—यजमानेनैव । शक्या—कर्तुं शक्या । भवति हि । तस्मात् असौ—उद्गीथोपासना । तत्कर्तृका—यजमानकर्तृका भवतु । गोदोहनेनापां प्रणयनं तु ऋत्विक्कर्तृकतया यजमानेन न कर्तुं शक्यम्, उद्गातृकर्तृकस्याप्युद्गीथस्योपासनं यजमानेन कर्तुं शक्यत इति 'शास्त्रफलं प्रयोक्तरि' इतिन्यायस्य नात्रापवाद इति भावः । इति यदि न—एवं शङ्क्यते चेत् तन्न युक्तम् । परिक्रीततकर्माश्रयत्वात्—परिक्रीतो दक्षिणादानेन क्रीतो यः ऋत्विक् तस्य यत्कर्म उद्गीथप्रयोगरूपं तदाश्रयत्वात् तद्विषयकत्वादुपासनस्य । अन्ये गुणफलविधयः—गोदोहनप्रयोगादीनि पश्वादिफलान्तरार्थानि कार्या-

णि । यथा—यथा ऋत्विक्कर्तृकाणि तथा । ऋत्विक्साध्या—ऋत्विक्कर्तृकैवेत्यर्थः । एवम्—ऋत्विक्कर्तृकतया । एषा—उद्गीथोपासना । अनूद्यते च—'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति' इति श्रुत्या 'विद्यया करोति' इति सहपठितविद्याकर्तृत्वमपि विद्याश्रयोद्गीथकर्तुरेवेति प्रतिपाद्यते च। शक्यत्वमुपाधिर्न हि—शक्यत्वमात्रस्य न नियामकत्वमित्यर्थः । तथा सति सर्वस्यापि यज्ञीयकर्मणस्सर्वऋत्विक्कर्तृकत्वप्रसङ्गात् । अतो यथाविधानमनुष्ठेयमित्यर्थः । स्वामिभृत्यक्रमेण—स्वामिना कर्तव्यं सर्वं कार्यं यथा भृत्यः करोति तन्न्यायेन । विधिबलनियतेः—उदाहृतविधिचोदनाबलेन ऋत्विक्कर्तृकत्वनियमात् । ऋत्विक्साध्येति पूर्वेणान्वयः ॥ ४१७ ॥

इति स्वाम्यधिकरणम् ॥ ११९ ॥

---

## सहकार्यन्तरविध्यधिकरणम् ॥ १२० ॥

सूत्रम्—सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ॥ ४६४ ॥

मन्तव्यत्वे श्रुते सत्यथ मुनिरिति वागस्तु तस्यानुवादः
कश्चिन्न ह्यत्र दृष्टो विधिरिति न पुरः पण्डितत्वस्य लब्धेः ।
ऊहापोहार्हता हि श्रवणमननतोऽनन्तरं पण्डितत्वं
मौनख्यातिः प्रकृष्टे मनन इति विभौ धारणाद्युक्तिरेषा ॥ ४१८ ॥

इति सहकार्यन्तरविध्यधिकरणम् ॥ १२० ॥

चिन्ता०—पूर्वं यज्ञादीनां शमादीनाञ्च विद्यासहकारित्वमुक्तम् । अधुना पुनस्सहकार्यन्तरं चिन्त्यत इति सङ्गतिः । अत्रोद्गीथादिप्रसङ्गस्तु सङ्गतिविशेषप्राप्त इति न विरोधः । इह तु मननस्य ध्यानालम्बनशुभाश्रयगोचरत्वेनातद्गोचरेभ्यो यज्ञादिभ्यश्शमादिभ्यश्च विलक्षणत्वादतद्गोचरत्वसाधर्म्येण यज्ञादींश्च शमादींश्च निरूप्य पश्चान्मननं निरूप्यते । तदर्थविचारस्तु—किमस्मिन्वाक्ये मौनं विधीयते उतानूद्यत इति । किं पाण्डित्यमेव मौनमुतार्थान्तरं मननरूपमिति । किं मननं विधातुं योग्यमुत नेति । किं मननस्य यज्ञादिश्रुतिविरोधोऽस्ति उत नेति । किं मननं कर्मानुष्ठानप्रतिक्षेपकमुत नेति । स्वप्रकरणे प्रकरणान्तरे च कतिपयाश्रमधर्मानुक्तिर्मननस्य कर्मानुष्ठानप्रतिक्षेपकत्वमुपोद्बलयत्युत नेति । किं कतिपयोक्तिरनुक्तानादरमूलैव स्यादुतानुक्तप्रदर्शनार्था च स्यादिति । अत्र पूर्वपक्षमनुवदति—मन्तव्यत्व

इति। इयं किल तत्त्वविदामनुष्ठानप्रक्रिया—यज्ञादिकर्मानुष्ठानं 'यज्ञेन' इत्यादिना विद्याङ्गत्वेन विधीयते। 'शान्तो दान्तः' इत्यादिना तु शमदमादिकञ्च तथैव विधीयते। तेन तदुभयं विद्याङ्गमेव। यद्यपि 'श्रोतव्यो मन्तव्यः' इति वाक्येन श्रवणं मननञ्च रागतःप्राप्तत्वादनूद्यते, तथापि श्रवणमननाभ्यां विना विद्यानिष्पत्त्ययोगात् तदुभयमपि तदङ्गमेव। 'एवं तस्माद् ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेद् बाल्यञ्च पाण्डित्यञ्च निर्विद्याथ मुनिः' इति पाण्डित्यादित्रितयमपि ब्रह्मविद्याङ्गमेव विधीयते। तेन मौनपर्यन्तैरेतैरङ्गैर्ब्रह्मविद्या प्राप्यत इति। 'स ब्राह्मणः' इति ब्रह्मविद्यानिष्ठो भवेदिति श्रुत्याभिधीयत इति। अत्र कश्चिदाह—अथ मुनिरित्यत्रापूर्वं मननं न विधीयते पूर्वमेव मननस्य प्राप्तत्वात्। श्रवणप्रतिष्ठार्थं मननं तावदेकम्। अनन्तरं पाण्डित्यरूपमन्यत्। ऊहापोहक्षमा धीः खलु पण्डा तादृग्विधां धियं प्राप्तः पण्डित इति सर्वलोकप्रसिद्धिः। तेन मननस्य प्राप्तत्वादथ मुनिरित्यत्र विधिश्रवणाभावाच्च मौनं न विधीयत इति। अयमत्र शब्दार्थः—पूर्वमेव मन्तव्यत्वे श्रुते सत्यथ मुनिरिति वचनं पूर्वसिद्धस्य मननस्यानुवादोऽस्तु। तस्यानुवादः—अत्यन्तप्रसिद्धस्यानुवाद इत्यर्थः। तस्यानुवादत्वे हेतुमाह—कश्चिदिति। न ह्यत्र मुनिस्स्यादिति कश्चिद्विधिर्दिष्ट इत्यर्थः। विधिशब्दाभावे कथं विधित्वमङ्गीक्रियत इत्यर्थः। एवं पूर्वपक्षमनूद्य निराकरोति—नेति। प्रतिक्षेपे हेतुमाह—पुर इति। मुनित्वकथनात् पूर्वं पण्डितत्वस्य लाभात्। अयमर्थः—मननं नाम श्रवणप्रतिष्ठापनार्थं युक्तिभिश्चिन्तनामात्रमेव। तच्च पण्डितत्वात् प्रागेव निष्पन्नम्। तद्व्यतिरेकेणात्यन्तातिशयितोहापोहक्षमप्रतिभावत्त्वं पण्डितत्वम्। तच्च मौनात्पूर्वमिहोच्यते। तत उपरि कथ्यमानमिदं मौनमनेकसहकारिविशेषलभ्यमन्यदेवान्तरङ्गं विद्याङ्गं विधीयत इत्यङ्गीकर्तव्यमिति। पण्डितत्वस्य श्रवणमननाभ्यामन्यत्वं विशदमेव प्रकाशयति—ऊहेति। मौनस्यान्यत्वे हेत्वन्तरमप्याह—मौनख्यातिरिति। अध्यात्मशास्त्रे मौनप्रसिद्धिः श्रवणप्रतिष्ठार्थे मनने नास्ति। अपितु पाण्डित्यानन्तरभाविनि प्रकृष्टे मनने निरन्तरचिन्तन इत्यर्थः। तर्हि किमिदं मौनमित्याशङ्क्य मौनस्वरूपं प्रकटमेव प्रदर्शयति—विभौ धारणेति। अयमर्थः—अष्टाङ्गयोगे समाधिरेव साक्षाद् ब्रह्मविद्या। तत्पूर्वभाविधारणादिकं मौनमित्युच्यत इति ॥ ४१८ ॥

इति सहकार्यन्तरविध्यधिकरणम् ॥ १२० ॥

पद०—मन्तव्यत्व इत्यादि। मन्तव्यत्वे श्रुते सति—मननसम्पादनस्य 'श्रोतव्यो मन्तव्यः' इत्यादिश्रुतिसिद्धत्वेऽपि। अथ मुनिरिति वाक् तस्य अनुवादोऽस्तु—'तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत् बाल्यं च पाण्डित्यञ्च निर्विद्याथ मुनिः' इत्यत्र 'अथ मुनिः' इति वचनं तस्य मन्तव्य इत्युक्तस्य मननस्य अनुवादरूपं भवतु। पूर्वं विहितस्य पुनर्विधानायोगादिति भावः। अत्र—

अस्मिन्वाक्ये । कश्चिद्विधि र्न दृष्टो हि—मुनिस्स्यात् इति कश्चिद्विधिर्न दृश्यते हि इत्यर्थः । इति न—इति शङ्कनं न युक्तम् । पुरः—मुनित्वकथनात्पूर्वम् । पण्डितत्वस्य—ऊहापोहार्हप्रतिभावत्त्वरूपस्य पण्डितत्वस्य । लब्धेः—लाभात् । श्रवणप्रतिष्ठार्थयुक्तिचिन्तनरूपमननात् समधिकस्य ऊहापोहक्षमप्रतिभावत्त्वरूपपण्डितत्वस्य 'अथ मुनिः' इत्यतः पूर्वं कथनात् तत उपरि कथ्यमानमिदं मौनं श्रवणप्रतिष्ठापकमननादन्यदेव सहकारिविशेषलभ्यं सहकार्यन्तरमित्यवगन्तव्यमिति भावः । श्रवणमननतोऽनन्तरं पण्डितत्वं ऊहापोहार्हता हि—श्रवणमननानन्तरं श्रूयमाणं पण्डितत्वं 'ऊहापोहक्षमा बुद्धिः पण्डा तद्वान् हि पण्डितः' इत्यादिप्रसिद्धयोहापोहक्षमप्रतिभाविशेषरूपमेव हि । मानख्यातिः प्रकृष्टे मनने—मौनत्वप्रसिद्धिः श्रवणप्रतिष्ठापकमननाद्विलक्षणे पाण्डित्यानन्तरभाविनि निरतिशयमनने । इति—हेतोः । एषा । विभौ-परमात्मनि विषये । धारणाद्युक्तिः—धारणाध्यानाख्यं समाधिपूर्वाङ्गद्वयमेव 'अथ मुनिः' इति विधीयत इत्यर्थः ॥ ४१८ ॥

इति सहकार्यन्तरविध्यधिकरणम् ॥ १२० ॥

---

## अनाविष्काराधिकरणम् ॥ १२१ ॥

सूत्रम्—अनाविष्कुर्वन्नन्वयात् ॥ ४६७ ॥

शिष्टं बाल्येन तिष्ठासनमपि विदुषो बालकृत्यं तदस्तु
भर्तुं बालस्य भावो नतु सुशक इति स्वैरितास्येति चेन्न ।
दुश्चारित्रादमुं नाविरत इति वचस्सन्निरुन्धे ह्यतोऽसौ
माहात्म्यं स्वं निगूहेदितिमुनिविहिते बाल्यविध्याशयस्स्यात् ॥ ४१९ ॥

इत्यनाविष्काराधिकरणम् ॥ १२१ ॥

चिन्ता०—'तस्माद् ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्' इत्यत्र विदुषा बाल्यमुपादेयतया श्रुतम् । बालस्य भावः कर्म बाल्यम् । बालभावस्य वयोऽवस्थाविशेषस्यानुपादेयत्वात् कर्मैवेह गृह्यते । तत्र किं बालस्य कर्म कामचारादिकं सर्वं विदुषोपादेयम्, उत दम्भादिरहितत्वमेवेति विशये' इति सङ्गतिर्भाष्ये व्यक्ता । तदर्थविचारस्तु—बाल्योपादाने किं कामचारादिकमप्युपादेयम् उत माहात्म्यानाविष्करणमेव किं बाल्यशब्दस्सर्वबालकर्मपरः उत माहात्म्यानाविष्करणरूपबालस्वभावविशेषपरः। 'नाविरतः' इत्यादिश्रुतिः किं बाल्यशब्दस्यानाविष्कारपरतामवगमयति नेति । अत्र पूर्वपक्षी मन्यते—'बाल्येन तिष्ठासेत्' इति विदुषः श्रुतौ शिष्टं बाल्यं बालकृत्यं कामचारवादभक्षत्वमेवास्तु न

पुनर्बालस्यभावः । न ह्यन्यस्य भावोऽन्येन भर्तुं सुशकः व्यवस्थितत्वात् बाल्यादीनां धर्माणाम् । तेन स्वैरितैव बाल्यमित्यस्तु । तदिदमनुवदति–शिष्टमिति । अनूदितमर्थं प्रतिक्षिपति–नेति । प्रतिक्षेपप्रकारं प्रकटयति—दुश्चारित्रादिति । 'नाविरतो दुश्चरितात्' इति वचस्त्वदुक्तममुमर्थं सन्निरुन्धे । अथवा स्वैरिणममुमधिकारिणं सन्निरुन्धे । तर्हि बाल्यस्य को निर्णय इत्याशङ्क्य बाल्यशब्दार्थं निर्णयेन कथयति—अत इति । अध्यात्मविदां स्वमाहात्म्यगोपनं हि मुनिभिर्विधीयते तेन विहिते स्वमाहात्म्य-गोपने बाल्यशब्दस्य तात्पर्यं स्यात् । अत एव सदाचारनिष्ठस्यापि भरतस्य 'सतां मार्गमदूषयन्' इति सन्मार्गादूषणेन प्रख्यातस्योद्भ्रान्तवन्नटनमुच्यते । एवमत्रापि बालवत् स्वमाहात्म्यगोपनमेवोच्यते । इदञ्च स्वमाहात्म्यगोपनं लोकसंमानादिव्यावृत्त्यर्थम् । संमानादिकञ्च त्याज्यमेवाध्यात्मविदाम्—

'असंमानात्तपोवृद्धिस्संमानात्तु तपःक्षयः ।
अर्चितः पूजितो विप्रो दुग्धा गौरिव गच्छति ॥'

इति लोकसंमानस्य परित्याज्यत्वस्मरणात् ॥ ४१९ ॥

इत्यनाविष्काराधिकरणम् ॥ १२१ ॥

पद०—शिष्टमित्यादि–विदुषो बाल्येन तिष्ठासनमपि शिष्टम्—ब्रह्मविदः 'पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्' इति श्रुत्या बाल्येनावस्थानं विहितम् । तत्र बालस्य भावस्तु भर्तुं न सुशक इति–बालत्वं नान्येन भर्तुं सुशकम् , अन्यधर्माणामन्येन धर्तुमशक्यत्वादिति हेतोः । तत् बालकृत्यमस्तु–बाल्यं कामचारवादभक्षणरूपं बालकृत्यमस्तु । ततः किमिति चेत् अस्य स्वैरिता—अस्य ब्रह्म-विदः स्वच्छन्दता विधिपारतन्त्र्यं विना यथेच्छं वर्तनं स्यात् । इति चेन्न—इति शङ्क्यते चेत्तन्न युक्तम् । नाविरत इति वचः—'नाविरतो दुश्चरितात्' इति श्रुतिवाक्यम् । अमुम्—ब्रह्मविदम् । दुश्चारित्रात्—अकृत्यकरणकृत्याकरणरूपात् दुश्चरित्रात् । सन्निरुन्धे हि—निवर्तयति किल । 'नाविरतः' इत्यादिश्रुत्या ब्रह्मविदस्स्वच्छन्दवर्तनस्य निषिद्धत्वादित्यर्थः । अतः । असौ स्वं माहात्म्यं निगूहेत्—अतोऽसौ ब्रह्मवित् स्वकीयं माहात्म्यं ब्रह्मनिष्ठाप्रयुक्तं महान्तमनुभावं गोपायेत् बहिर्न प्रकाशयेत् । इति मुनिविहिते बाल्यविध्याशयस्स्यात्—एवंरीत्या 'जडोन्मत्तादिवच्चिष्ठेत्' इत्यादिमहर्षिविहिते ब्रह्मविदो जडोन्मत्तादिरीत्या वर्तनेन स्वमाहात्म्याप्रकाशने 'बाल्येन तिष्ठासेत्' इति बाल्यविधेस्तात्पर्यं भवेत् । तथा च बालस्य यत् स्वमाहात्म्यानाविष्करणं तदुपाददानो विद्वांस्तिष्ठेदिति बाल्यविधेर्हृदयमिति भावः ॥ ४१९ ॥

इत्यनाविष्काराधिकरणम् ॥ १२१ ॥

## ऐहिकाधिकरणम् ॥ १२२ ॥

सूत्रम्—ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॥ ४६८ ॥

भोगार्थोपासनानां स्वजनकसुकृतैस्तत्क्षणादुद्भवस्स्यात्
स्वर्गादिस्त्वत्र देहे न घटत इह तु स्वान्तशुद्ध्योपपत्तिः ।
स्नानप्रायत्यनीतिस्तत इति न पुरो विघ्नसम्भावनोक्तेः
कारीर्यादौ तदैहैस्सगुणविरचितेऽप्यस्ति विघ्नः कदाचित् ॥ ४२० ॥

इत्यैहिकाधिकरणम् ॥ १२२ ॥

चिन्ता०—इत्थमङ्गचिन्ता कृता, इदानीमङ्गिनिष्पत्तिसमयचिन्ता क्रियत इति सङ्गतिः । तदर्थ-विचारस्तु—किमैहिकफलसाधनमुपासनं स्वसाधनपुण्यकर्मानन्तरमेवोत्पद्यते उतानन्तरं कालान्तरे वेत्य-नियमः । किं तदुत्पत्तेः प्रतिबन्धस्सम्भवति नेति । इत्थमिह पूर्वपक्षी मन्यते—भोगार्थोपासनानामैहिक-फलानामुपासनानां स्वजनकसुकृतैस्स्वोत्पादकसुकृतैस्तत्क्षणादेवोद्भवस्स्यात् । ननु स्वर्गादिवद् विद्यान्तरो-त्पत्तिः कर्मफलत्वात् कालान्तरे स्यादित्याशङ्क्य स्वर्गादीनां देहान्तरानुभाव्यत्वेनास्मिन्देहे नोत्पत्तिः स्यात्, सम्भवत्येवास्मिन्देहे हृदयशुद्ध्यादिमुखेन विद्याया उत्पत्तिः । तेनात्र स्नानप्रायत्यनीतिरेव स्यात् । यथा स्नातस्य पुरुषस्य प्रायत्यं प्रयतत्वं तदानीमेव भवति नपुनर्देहान्तरे तथा स्वकर्मभिर्विद्याप्राप्तिस्तदानीमेव नियमेन स्यादिति । तदिदमनुवदति—भोगार्थेति । अनूदितमर्थं प्रतिक्षिपति—नेति । उत्पत्तिः कदाचित् तदानीमेव स्यात् कदाचित् कालान्तर इत्यनियम एव । ननु सगुणविरचिते कथं कालान्तरे फलसिद्धिस्स्यात्? तत्राप्याह—तदैहैरिति । सगुणविरचितेऽपि कर्मण्यत्यन्तप्रबलैः कर्मभिस्तत्प्रतिबन्धार्हैः कदाचित् विघ्नस्स्यादेव ॥ ४२० ॥

इत्यैहिकाधिकरणम् ॥ १२२ ॥

पद०—भोगार्थेत्यादि । भोगार्थोपासनानाम्—ऐहिकफलार्थोपासनानाम् । स्वजनकसुकृतैः स्वोत्पादकसुकृतविशेषैः । तत्क्षणादेव । उद्भवः—उत्पत्तिः स्यात् । स्वर्गादिस्तु—अग्निहोत्र-दर्शपूर्णमासादिफलभूतस्स्वर्गादिस्तु । अत्र देहे न घटते—अस्मिन्देहे नानुभोक्तुं शक्यते । अतस्तस्या-धुना लाभो मा भूत् । इह तु—ऐहिकफलोपासनोत्पत्तिविषये तु । स्वान्तशुद्ध्या उपपत्तिः—चित्तशुद्धि-मात्रेणोपासनोत्पत्तेरुपपत्तिः । ततः—चित्तशुद्धिमात्रेण तदुत्पत्तेरुपपत्तेः । स्नानप्रायत्यनीतिः—स्नानानन्त-

रमेव यथा प्रायत्यं प्रयतभावश्शुद्धिरुत्पद्यते तद्वत् उत्पादककर्मानन्तरक्षण एवैहिकफलोपासनोत्पत्तिर्भवतु । इति न—इति शङ्कनं न युक्तम् । पुरो विघ्नसम्भावनोक्तेः—निष्पत्तेः पूर्वं विघ्नसम्भावनायाः 'श्रेयांसि बहुविघ्नानि' इत्यादिभिरुक्तत्वात् । सगुणविरचितेऽपि—सगुणतया अविकलाङ्गतया विरचितेऽपि अनुष्ठितेऽपि । कारीर्यादौ—वंशाङ्कुरहोम्यद्रव्यके वृष्टिफलके इष्टिविशेषे । तदर्हैः—अत्यन्तप्रबलैस्तत्प्रतिबन्धार्हैः कर्मभिः । कदाचित् विघ्नोऽस्ति—फलविलम्बो दृश्यते । अतस्तत्क्षण एवेति नियमो न । प्रतिबन्धकाभावे तत्क्षणएव तत्सत्त्वे तु तन्निवृत्त्यनन्तरमेवेत्यनियम इति भावः ॥ ४२० ॥

इत्यैहिकाधिकरणम् ॥ १२२ ॥

---

## मुक्तिफलाधिकरणम् ॥ १२३ ॥

सूत्रम्—एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः ॥ ४६९ ॥

अस्त्वन्यत्रान्तरायः प्रबलतममिदं सात्त्विकत्यागयुक्तं
कर्म प्रोक्तं निवृत्त्याह्वयमिति सपदि ब्रह्मविद्यां विदध्यात् ।
मैवं तस्माद् बलीयान् यदि भवति परब्रह्मभक्तापराधः
तच्छान्तौ तत्प्रसूतिस्स न यदि झटिति स्यात्परोपास्तिलाभः ४२१ ॥

चिन्ता०—पूर्वमैहिकफलानां विद्यानां निष्पत्तिकालानियम उक्तः, एवं ब्रह्मप्राप्तिहेतूनामपि विद्यानामनियम एवातिदिश्यत इत्यातिदेशिकी सङ्गतिः । तदर्थविचारस्तु—किं मुक्तिफलमुपासनं स्वसाधनकर्मानन्तरमुत्पद्यते उतानन्तरं कालान्तरे वेत्यनियमः । किं परविद्यासाधनात् कर्मणः प्रबलंकर्मान्तरं सम्भवति नेति । अत्र पूर्वपक्षी विशेषाभिधानेन प्रत्यवतिष्ठते—अस्त्विति । अब्रह्मविदां विद्यानिष्पत्तिकर्मसु प्रत्यवायोऽस्तु नाम; अब्रह्मवित्कर्मणां दुर्बलत्वात् । फलसङ्गकर्तृत्वत्यागयुक्तं निवृत्त्याहयं कर्म प्रबलतममिति प्रोक्तम् । तत इदं कर्म सर्वतःप्रबलत्वात् स्वविरोधिवर्गं सर्वमपि निराकृत्य सपद्येव ब्रह्मविद्यां विदध्यात् कुर्यात् । तदिदं प्रतिक्षिपति—मैवमिति । अयमत्र भावः—

'अस्ति मत्स्यस्तिमिर्नाम शतयोजनमायतः ।
तिमिङ्गिलगिलोऽप्यस्ति तद्गिलोऽप्यस्ति सागरे ॥'

इति न्यायेन संसारसागरे वर्तमानानां मात्स्यन्यायेनोत्तरोत्तरं कर्मणामाधिक्यमुपलभ्यते। तथा च ब्रह्मवित्कर्मणामपि ततोऽप्यधिकं कर्मान्तरमस्ति योऽयं ब्रह्मविदपचारः, तैर्ब्रह्मविदपचारादिभिर्महत्तरैः पापैर्ब्रह्मविद्योत्पादकस्यापि निवृत्त्याख्यधर्मस्य निराकरणसम्भवात् तादृग्विधमहत्तरदुरिताभावे निवृत्तिधर्मो ब्रह्मविद्यां सद्य एव जनयति। तत्सद्भावे कालान्तरे जनयतीति ब्रह्मविद्यानामप्यनियतैव निष्पत्तिरिति सिद्धम्। अयमत्र शब्दान्वयः—तस्मान्निवृत्तिधर्मादपि बलीयान् परब्रह्मभक्तापराधो यदि भवति तदा तच्छान्तौ तत्प्रसूतिस्तादृग्विधापराधशान्तौ ब्रह्मविद्याप्रसूतिः स यदि न तादृग्विधापराधाभावे झटिति ब्रह्मविद्यालाभस्स्यादिति ॥ ४२१ ॥

पद०—अस्त्वन्यत्रेत्यादि। अन्यत्र अन्तरायोऽस्तु—अब्रह्मविदां विद्यानिष्पत्तिहेतुकर्मसु प्रतिबन्धस्स्यान्नाम अब्रह्मवित्कर्मणां दुर्बलत्वात्। सात्त्विकत्यागयुक्तम्—फलसङ्गकर्तृत्वादित्याग-युक्तम्। निवृत्त्याह्वयम्—निवृत्तिसंज्ञकम्। कर्म प्रबलतमं प्रोक्तम्—गीतादिषु। इति—एवं प्रबलत्वात्। इदं कर्म। सपदि—तत्क्षण एव। ब्रह्मविद्यां विदध्यात्—निष्पादयेत्। मैवम्—एवं मा शङ्किष्ठाः। तस्मात्—विद्यानिष्पादकान्निवृत्तिधर्मादपि। बलीयान्—तदपि प्रतिबन्धुं शक्तः। परब्रह्मभक्तापराधो भवति यदि—परब्रह्मणः परमपुरुषस्य भक्तानां विषये योऽपराधस्स सम्भवति चेत्। तच्छान्तौ—तादृशपरब्रह्मभक्तापराधस्य क्षापणादिना निवृत्तौ सत्याम्। तत्प्रसूतिः—विद्यानिष्पत्तिः। स नयदि—परब्रह्मभक्तापराधो न सम्भवेच्चेत्। परोपास्तिलाभो झटिति स्यात्—ब्रह्मविद्यानिष्पत्तिश्शीघ्रमेव स्यात् ॥ ४२१ ॥

विद्यार्थत्वं क्रियाणां व्यभिचरणवशान्नेति शङ्कापनुत्त्यै
प्रत्यूहानाञ्चतुर्णां प्रशमनमुचितं सर्वदेति प्रसिद्ध्यै।
निष्प्रत्यूहस्य सद्यःफलमिति च सतां तोषहेतोरमुष्मिन्
पादान्ते न्यासिषातामनियमविषयौ शास्त्रकर्त्राधिकारौ ॥ ४२२ ॥

चिन्ता०—अत्र विद्याङ्गपादसमाप्तिगतयोर्द्वयोरधिकरणयोरनियमविषययोः विशेषप्रयोजनं विशद-मेव दर्शयति—विद्यार्थत्वमिति। एतस्मिन्नधिकरणद्वये क्रियाणां विद्यार्थत्वं व्यभिचरणवशान्नेति वदतश्शङ्काऽपनुत्तिः क्रियते। तथा प्रत्यूहानाञ्चतुर्णां प्रशमनमुचितं सर्वदेति प्रसिद्धिश्च क्रियते। निष्प्रत्यूहस्य निवृत्त्याख्यस्य धर्मस्य सद्यःफलमिति च सतां सन्तोष आदीयते। तेनामुष्मिन् पादान्ते अनियमविषयावधिकारौ अधिकरणे शास्त्रकर्त्रा न्यासिषातां अकारिषातामित्यर्थः ॥ ४२२ ॥

पद०—विद्यार्थत्वमित्यादि । क्रियाणाम्—कर्मणाम् । विद्यार्थत्वम्—विद्यानिष्पादकत्वम् । विद्याङ्गत्वमिति यावत् । व्यभिचरणवशात्—विद्यानिष्पादकक्रियानुष्ठानेऽपि विद्यानिष्पत्तिरूपकार्यादर्शनात् यो व्यतिरेकव्यभिचारस्तद्बलादित्यर्थः । न—न सम्भवति । इति शङ्कापनुत्त्यै—एवंरूपशङ्कानिरासाय । सर्वदा चतुर्णाम्—चतुराश्रमिणामपि । प्रत्यूहानाम्—विघ्नानाम् । प्रशमनम्—निवारणम् । उचितम्—अवश्यमनुष्ठेयम् । इति प्रसिद्ध्यै—एवं निश्चयजननाय च । निष्प्रत्यूहस्य—भागवतापचारादिप्रतिबन्धकशून्यस्य निवृत्त्याख्यधर्मस्य । सद्यः—तत्क्षण एव । फलम्—विद्यानिष्पत्तिरूपं फलम् । इति च सतां तोषहेतोः—सन्तोषसम्पादनाय च । अमुष्मिन् पादान्ते—तृतीयाध्यायचतुर्थपादान्ते । अनियमविषयौ—विद्यानिष्पत्त्यनियमविषयकौ । अधिकारौ—द्वे अधिकरणे 'ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात्' 'एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः' इत्यधिकरणे इत्यर्थः । शास्त्रकर्त्रा—सूत्रकारेण । न्यासिपाताम्—विरचितावित्यर्थः ॥ ४२२ ॥

प्रत्यूहस्य प्रसङ्गः क्षम इह परवित्कर्मणां तद्विधूत्यै
भोगार्थोपास्तिहेतुष्वयमनुकथितः किं मुधात्रेति चेन्न ।
काम्ये निर्विघ्नबुद्ध्या पतति मतिरतस्तत्र वैराग्यभूम्ने
तत्प्रत्यूहप्रसक्तिर्भवति फलवती स्याच्च विद्यार्थकाम्यम् ॥ ४२३ ॥

चिन्ता०—अत्र कश्चिच्चोदयति—प्रत्यूहस्येति । अत्र परवित्कर्मणामध्यात्मवित्कर्मणां प्रत्यूहस्य प्रसङ्गस्तद्विधूत्यै प्रत्यूहस्य विधूननाय क्षमः योग्य एव भोगार्थोपास्तिहेतुषु कर्मसु प्रत्यूहस्य प्रसङ्गः किं मुधानुकथित इति । तदिदं प्रतिक्षिपति—नेति । प्रतिक्षेपप्रकारं दर्शयति—काम्य इति । काम्ये खलु कर्मणि कस्यचिन्मन्दबुद्धेर्निर्विघ्नत्वबुद्धिर्भवति । तया बुद्ध्या तत्रैव मतिः पतति । तेन तत्र काम्ये कर्मणि वैराग्यभूम्ने वैराग्यातिशयसिद्धये तत्प्रत्यूहप्रसक्तिः फलवती भवत्येव । अयमर्थः—काम्यं निष्प्रत्यूहमिति बुद्धिरप्रामाणिकी, अपितु काम्यमपि सप्रत्यूहमेव, तेन तत् त्याज्यकोटिनिविष्टमेवेतीममर्थमुपपादयितुं काम्येऽपि प्रत्यूहप्रसङ्ग इति । अथवा विद्यार्थकाम्यमत्र विवक्षितं स्यात्—अयमर्थः—काम्यमपि कर्म विद्यार्थत्वेन विनियोगपृथक्त्वेन विनियुज्यते । तदत्र चिन्त्यत इति तच्चिन्तनं योग्यमेवेति ॥ ४२३ ॥

पद०—प्रत्यूहस्येत्यादि । इह—प्रकरणे । परवित्कर्मणाम्—परविद्यानिष्ठसम्बन्धिनां कर्मणाम् । प्रत्यूहस्य—प्रतिबन्धकस्य । प्रसङ्गः—प्रसक्तिः, विचारः । तद्विधूत्यै—प्रत्यूहविधूननाय । क्षमः

युक्त एव । प्रत्यूहज्ञानं विना तद्विघ्ननोपायमार्गणासम्भवादिति भावः । भोगार्थोपास्तिहेतुषु—भोगार्थोपासननिर्वर्तकेषु कर्मसु । अयम्—प्रत्यूहप्रसङ्गः । अत्र—प्रकरणे । मुधा—निरर्थकमेव । किमनुकथितः—कुतः प्रतिपादितः । इति चेन्न—इति शङ्क्यते चेत्तन्न युक्तम् । काम्ये—काम्यकर्मणि । निर्विघ्नबुद्ध्या—निर्विघ्नत्वज्ञानेन । मतिः—अनुष्ठेयत्वबुद्धिः । पतति—कस्यचिन्मन्दबुद्धेः प्रसरति । अतः—कारणात् । तत्र—काम्यकर्मणि । वैराग्यभूम्ने—विघ्नबुद्ध्या वैराग्यातिशयाय । प्रथमतः काम्यकर्माणि नश्वरक्षुद्रफलानि विघ्नाश्च सन्तीति ज्ञानेन वैराग्यातिशयलाभः । तत्प्रत्यूहप्रसक्तिः—तेषां काम्यकर्मणां प्रत्यूहविचारणा । फलवती—प्रयोजनवती भवति । विद्यार्थकाम्यं स्याच्च—यद्वा विद्यार्थं यत्काम्यं कर्म तदत्र विवक्षितं स्यात् । तत्प्रत्यूहविचारस्तु परविद्यार्थ एव भवेदिति नासङ्गत्यमिति भावः ॥ ४२३ ॥

तृतीयाध्याय चतुर्थपादप्रधानार्थं प्रतिपादनम् ।

विद्या कर्माङ्गिका स्याद्रसतममुखधीश्चोदिता प्राप्त्यभावात्
आख्यानानाञ्च विद्याविधिसविधजुषां तद्विधानार्थतैव ।
विद्या साङ्गोर्ध्वरेतस्स्वपि गृहवति सा यज्ञदानाद्यपेक्षा
शान्त्याद्यर्हो गृहस्थोऽप्यविपदि विदुषोऽप्यन्नशुद्ध्यैव सिद्धिः ॥४२४॥

चिन्ता—अस्मिन्पादे प्रतिपादितानां पञ्चदशानामधिकरणानां प्रधानार्थान्परिगणयति—विद्येत्यादिना श्लोकद्वयेन । प्रथमाधिकरणे विद्या कर्माङ्गिकेति प्रतीतिराधीयते । द्वितीये तु रसतमत्वादिधीरप्राप्तत्वाच्चोदितैव । तृतीये पुनर्विद्याप्रकरणपठितानामाख्यानानां विद्याविधिशेषत्वमेव । एवमुत्तरत्राप्यधिकरणेषु तत्तदाश्रमनियतादेव धर्मादूर्ध्वरेतस्स्वपि साङ्गा विद्या । गृहस्थे पुनस्सा विद्या यज्ञदानाद्यपेक्षा । गृहस्थोऽपि शान्त्याद्यर्ह एव स्यात् । अनापदि विदुषोऽप्यन्नशुद्ध्यैव योगसिद्धिस्स्यात् ॥ ४२४ ॥

पद०—विद्या कर्माङ्गिकेत्यादि । विद्या कर्माङ्गिका स्यात्—ब्रह्मविद्या कर्मात्मकाङ्गशालिनी भवेत् । नतु विद्या कर्माङ्गं भवेत् । अयं 'पुरुषार्थोऽतः' इत्यादिप्रथमाधिकरणार्थः । रसतममुखधीः प्राप्त्यभावाच्चोदिता—रसतमत्वाद्युपासना प्रमाणान्तरेणाप्राप्तत्वात् चोदितैव नतु रसतमादिवाक्यं स्तुतिरूपमिति । अयं 'स्तुतिमात्रम्' इत्यादिद्वितीयाधिकरणार्थः । विद्याविधिसविधजुषामाख्यानानां तद्विधानार्थतैव च—विद्याविधिप्रकरणपठितानां 'श्वेतकेतुर्हारुणेय आस' इत्याद्याख्यानानां विद्याविधा-

नार्थतैव नतु पारिप्लवशंसनशेषत्वमिति । अयं 'पारिप्लवार्थाः' इत्यादितृतीयाधिकरणार्थः । ऊर्ध्व-रेतस्स्वपि विद्या साङ्गा—ऊर्ध्वरेतस्स्वाश्रमेष्वपि ब्रह्मविद्या तदाश्रमनियतधर्मैस्साङ्गैवेति । अयं 'अत एवाचाग्नीन्धन' इत्यादिचतुर्थाधिकरणार्थः । गृहवति सा यज्ञदानाद्यपेक्षा—गृहस्थेऽधिकारिणि तु सा विद्या यज्ञदानादिसापेक्षैव नतूर्ध्वरेतस्स्विव यज्ञादिनिरपेक्षेति । अयं 'सर्वापेक्षा' इत्यादिपञ्चमाधि-करणार्थः । गृहस्थोऽपि शान्त्याद्यर्हः—प्रवृत्तिरूपानेकक्रियानुष्ठानव्यापृतो गृहस्थोऽपि शान्त्यादीनां विहि-तव्यतिरिक्तव्यापारनिवृत्तिरूपत्वेन शान्त्याद्यनुष्ठानार्ह एवेति । अयं 'शमदमाद्युपेतस्स्यात्' इत्यादिषष्ठा-धिकरणार्थः । अविपादि विदुषोऽपि अन्नशुद्धयैव सिद्धिः—अनापदि ब्रह्मविद्यानिष्ठस्यापि अन्नशुद्धयैव शुद्धान्नभक्षणेनैव योगसिद्धिर्भवेदिति । अयं 'सर्वान्न' इत्यादिसप्तमाधिकरणार्थः ॥ ४२४ ॥

**एकं विद्याश्रमार्थं विधुरमवियुतं विद्ययाहुश्च्युतं न**
**क्रत्वङ्गे दृष्टिरृत्विक्कृतिरथ मुनिता चोदिता ध्यानसिद्धयै ।**
**बाल्यं शक्त्यादिगुप्तिर्बलवदभिहतैः कर्मभिर्नान्यविद्या**
**तद्वन्मुक्त्यर्थविद्या स्वजनकसुकृतैरित्युवाचात्र पादे ॥ ४२५ ॥**

चिन्ता—एकमेव कर्म विद्यार्थमाश्रमार्थञ्च । विधुरमवियुतं विद्यया संयुतमाहुरित्यर्थः । अथवा विधुरमपि युतमितिपाठः । विधुरमपि विद्यया सम्बद्धमित्यर्थः । च्युतं न—नैष्ठिकयाद्याश्रमभ्रष्टं विद्यया युतं नाहुरित्यन्वयः । क्रत्वङ्गे रसतमत्वादिदर्शनमृत्विक्कार्यम् । अथ मुनिता—मौनम् । चोदिता-ध्यानसिद्धयै—विहितब्रह्मोपासनसिद्ध्यर्थमित्यर्थः । ध्यानसिद्धयै चोदितेति वा पदच्छेदः । बाल्यं स्वसामर्थ्यादिगोपनम् । बलवदभिहतैर्बलवत्प्रतिबन्धकप्रतिबद्धैः कर्मभिर्नान्यविद्या—अब्रह्मविद्या न भवतीत्यर्थः । तद्वन्मुक्त्यर्थविद्या ब्रह्मविद्यापि ब्रह्मविदपचारादिप्रबलप्रतिबन्धकप्रतिबद्धैस्स्वोत्पादककर्म-भिर्नोत्पद्यत इत्यस्मिन्पादे सूत्रकारः प्राहेत्यन्वयः ॥ ४२५ ॥

पद०—एकं विद्येत्यादि । एकं विद्याश्रमार्थम्—एकमेव कर्म विद्यार्थमाश्रमार्थञ्चेति । अयं 'विहितत्वाच्च' इत्याद्यष्टमाधिकरणार्थः । विधुरमवियुतं विद्ययाहुः—विधुरमपि युतं विद्ययाहुरिति पाठद्वयम् । प्रथमे विधुरं दाररहितमपि विद्यया अवियुतं संयुतमाहुरित्यर्थः । द्वितीये विधुरमपि मृत-भार्यतया यज्ञाद्यनर्हमप्यधिकारिणं विद्यया युतं युक्तमाहुरित्यर्थः । वेदान्तिन इति शेषः । अयं 'अन्तरा चापि' इत्यादिनवमाधिकरणार्थः । च्युतं न—नैष्ठिकयाद्याश्रमभ्रष्टं विद्यया युतं नाहुरिति । अयं 'तद्भू-तस्य' इत्यादिदशमाधिकरणार्थः । क्रत्वङ्गे दृष्टिः ऋत्विक्कृतिः—क्रत्वङ्गेषूद्गीथतदवयवप्रणवादिषु रस-

तमस्त्वादिदृष्टिः ऋत्विक्कार्यं नतु यजमानकार्यमिति । अयं 'स्वामिनः' इत्याद्येकादशाधिकरणार्थः । अथ ध्यानसिद्ध्यै मुनिता चोदिता—अनन्तरं ध्यानसिद्ध्यै विहितब्रह्मोपासनरूपसमाधिसिद्ध्यर्थं मुनिता धारणारूपप्रकृष्टमनननिष्ठा विहितेति । अयं 'सहकार्यन्तर–' इत्यादिद्वादशाधिकरणार्थः । बाल्यं शक्त्यादिगुप्तिः—'बाल्येन तिष्ठासेत्' इति ब्रह्मविदो विहितं बाल्यं स्वशक्त्यनुभावगोपनं न तु स्वाच्छन्द्यमिति । अयं 'अनाविष्कुर्वन्' इत्यादित्रयोदशाधिकरणार्थः । अन्यविद्या बलवदभिहतैः कर्मभिर्न—अब्रह्मविद्या बलवत्प्रतिबन्धकविहतैः कर्मभिर्न निष्पद्यत इति । अयं 'ऐहिकम्' इत्यादिचतुर्दशाधिकरणार्थः । तद्वत् मुक्त्यर्थविद्या स्वजनकसुकृतैः—अब्रह्मविद्यावदेव मोक्षार्था ब्रह्मविद्यापि प्रबलतमभागवतापचारादिप्रतिबन्धकरहितैः स्वजनककर्मभिर्निष्पद्यते अपचारसम्भवे तन्निवृत्त्यनन्तरमित्यनियम इति । अयं 'एवं मुक्तिफल' इत्यादिपञ्चदशाधिकरणार्थः । अत्र पादे—अस्मिन् 'पुरुषार्थः' इत्यादितृतीयाध्यायचतुर्थपादे । इति—उक्तमर्थजातम् । उवाच—प्रत्यपादयत् । सूत्रकार इति शेषः ॥ ४२५ ॥

अत्र पादे परपक्षचतुष्कनिरासप्रतिपादनम् ।

वाक्यार्थज्ञानमात्रं कतिचन कुदृशो मुक्त्युपायं गृणन्ति
ज्ञानं कर्मेति युग्मं करणमिति समुच्चित्य मन्यन्त एके ।
कर्मप्राधान्यमन्ये निजगदुरपरे मुक्तिमिच्छन्त्यसाध्यां
सर्वे तेऽप्यत्र कर्माङ्गकभजनविधिस्थापनोक्त्या निरस्ताः ॥ ४२६ ॥

चिन्ता०—एतस्मिन्पादे चतुर्णां परपक्षाणां निरासः प्राधान्येनाभिमत इत्याह—वाक्यार्थेति । अत्र मृषावादिनो वाक्यार्थज्ञानमात्रं मुक्त्युपायं प्रवदन्ति । यादवप्रकाशमतस्था ज्ञानं कर्मेति च युग्मं मुक्तेः करणमिति समुच्चित्यापवर्गहेतुत्वं मन्यन्ते । अन्ये पुनर्निरीश्वरमीमांसका ज्ञानं कर्माङ्गं कर्मैव पुरुषार्थसाधनहेतुरिति निजगदुः । अपरे सांख्यादयो जीवस्य नित्यमुक्तत्वादसाध्यामेव मुक्तिमिच्छन्ति वदन्तीत्यर्थः । सर्वेऽपि ते वादिनः अत्र एतस्मिन्पादे कर्माङ्गकमोक्षसाधनभजनविधिस्थापनोक्त्या निरस्ताः ॥ ४२६ ॥

पद०—वाक्यार्थज्ञानेत्यादि । कतिचन कुदृशो वाक्यार्थज्ञानमात्रं मुक्त्युपायं गृणन्ति—कतिचन मृषावादिप्रभृतयः कुदृशः कुदृष्टयः वाक्यार्थज्ञानमात्रं प्रमाणतन्त्रमपुरुषतन्त्रं केवलवाक्यार्थज्ञानं मोक्षोपायं वदन्ति । एके ज्ञानं कर्म इति युग्मं करणमिति समुच्चित्य मन्यन्ते—एके यादवप्रकाश-

मतस्थाः ज्ञानं कर्मेत्येवंरूपं युग्मं द्वन्द्वं करणं मुक्तिसाधनमिति समुच्चित्य परस्परमेकीकृत्य मन्यन्ते। अन्ये कर्मप्राधान्यं निजगदुः—अन्ये निरीश्वरमीमांसकाः कर्मप्राधान्यं विद्याङ्गकं कर्मैव पुरुषार्थसाधनमिति कर्मप्राधान्यं मन्यन्ते। अपरे मुक्तिमसाध्यामिच्छन्ति—अपरे सांख्यादयो मुक्तिं असाध्यां पुरुषस्य नित्यमुक्तत्वात्सिद्धां इच्छन्ति अङ्गीकुर्वन्ति। ते सर्वेऽपि अत्र कर्माङ्गकभजनविधिस्थापनोक्त्या निरस्ताः—ते सर्वेऽपि वादिनोऽस्मिन्पादे कर्माङ्गकस्य भजनस्य उपासनस्य विधिर्मुमुक्षुभिरनुष्ठानं तत्स्थापन्या उक्त्या सूत्रात्मिकया सूत्रकारवाचा निरस्ताः पराभूता इत्यर्थः ॥ ४२६ ॥

दुःखनिवृत्तिर्नैवविद्यासाध्येति चोद्यप्रतिक्षेपः।

**यद् दुःखं वर्तते तत्क्षणभिदुरतया न स्वयत्नोपरोध्यं**
**नातीतार्थश्च यत्नो नच सुपरिहरं भावि हेतौ समग्रे।**
**दुःखात्यन्तोपरोधे करणविधिरतो व्यर्थ इत्यर्धरम्यं**
**प्रायश्चित्त्या कृतानां परमकरणतो दुःखसामग्र्यपोहात् ॥ ४२७ ॥**

चिन्ता०—अत्र कश्चिदचूचुदत् 'सांसारिकसकलदुःखनिवृत्तिर्हि मोक्ष इत्यध्यात्मविद्भिरभिधीयते स च मोक्षः कर्माङ्गिकया विद्यया सिध्यतीति च, तदेतदयुक्तमेव किं विद्यमानसकलदुःखनिवृत्तिरुतातीतसकलदुःखनिवृत्तिरथवा भाविदुःखनिवृत्तिर्मोक्ष इत्युच्यते? त्रितयमपि न सम्भवति। वर्तमानस्य क्षणिकत्वादेव स्वत एव निवृत्तिरिति न कारणापेक्षा। तथा द्वितीयोऽपि पक्षोऽसम्बद्ध एवातीतानां दुःखानां प्रागेव निरस्तत्वेन तन्निरसनहेतुभूतोपासनप्रवृत्त्यपेक्षाभावात्। भाविदुःखनिरासोऽपि न सम्भवत्येव तस्य भाविनस्स्वरूपाभावेन निरासस्य कर्तुमशक्यत्वात्। विद्यमानस्य हि घटादेर्मुसलप्रहारेण विध्वंसः क्रियते। न पुनरविद्यमानस्य नरविषाणादेः। तेन निरसनीयदुःखाभावात् तन्निरासोपायभूतोपासनोपार्जनमनर्थकमेव' इति। तदिदमनूद्य निराचष्टे—यद्दुःखमिति। अयमत्र शब्दान्वयः—यद्दुःखमिह वर्तते तत् क्षणिकत्वान्न स्वयत्नोपरोध्यम्। अतीतदुःखनिवृत्तिश्चेत् सापि प्रागेव निष्पन्नेति तदर्थमपि यत्नो न कर्तव्यः। तेन भाविदुःखमवशिष्यते तच्च न सुपरिहरम्। तच्च न परिहर्तुं शक्यते। कुत इत्यत्राह—हेतौ समग्र इति। अनादिकालसिद्धेषु बहुषु पापेषु विद्यमानेषु कथं भावि तद्दुःखं सुपरिहरं भविष्यतीति। किञ्च भावीतिपदं दुःखस्योत्तरकालसम्बन्धमेवाह। तस्य निरासः कर्तुमेव न शक्यते। नहि स्वकालसम्बन्धिनो वस्तुनस्तत्कालसम्बन्धित्वमीश्वरेणापि निवारयितुं शक्यते। तथात्वे सर्वं सर्वत्र सर्वदा मिथ्यैव स्यात्। तेन सर्वदुःखात्यन्तोपरोधे करणविधिर्ब्रह्मोपासनविधिरिति व्यर्थमेवेदं वचन-

मिति । तदेतत्प्रतिक्षिपति—अर्धरम्यमिति । अयमर्थः—वर्तमानदुःखोपरोध इत्यस्माभिर्नोच्यते, नचातीतदुःखोपरोध इत्युच्यते, नापि भाविदुःखस्य प्रध्वंसोत्पादनमिति कथ्यते । अपितु कारणसद्भावे भावित्वेन प्रसक्तस्य दुःखस्य सामग्रीनिरोधः क्रियते, भाविदुःखे कारणत्वेनावस्थितानां कर्मणां विनाशः क्रियत इति । शक्यते हि विद्यमानानि दुःखकारणानि विनाशयितुं दुरितापनोदनप्रायश्चित्तरूपेण ब्रह्मोपासनेन । न सर्वलोकविदितमिदं कुदृष्टिपरिकल्पितेन दुर्विवादेन निवारयितुं शक्यते । लोके हि वातपित्तश्लेष्मादिकारणप्रकोपेन प्रस्तुतं मरणादिदुःखं वैद्योपदेशसिद्धौषधप्रयोगेण कारणप्रतिबन्धरूपेण निवार्यते । तद्वदत्रापि पूर्वकृतानां दुरितानां ब्रह्मज्ञानेन विध्वंसात् तेनैव ब्रह्मज्ञानेनोत्तरेषां दुरितानामनारम्भात् सामग्र्युपरोधेन संसारानुवृत्तिर्निरुध्यत इति सर्वं समाहितम् । तदिदं दर्शयति—प्रायश्चित्त्येति । कृतानां प्रायश्चित्त्या परमपि दुरितानामकरणाद् दुःखसामग्रीनिरोधेन दुःखोत्पत्तिर्न भविष्यति कारणाभावात्कार्याभाव इत्याबालगोपालं लिखितपठितोऽयमर्थः ॥ ४२७ ॥

पद०—यद्दुःखमित्यादि । यत् दुःखं वर्तते—यत् दुःखमिदानीमनुभूयमानतया वर्तते । तत् क्षणभिदुरतया स्वयत्नोपरोध्यं न—तत् स्वयं क्षणिकतया स्वप्रयत्नेन विनाश्यं न भवति । अतीतार्थं च यत्नो न—अतीतदुःखनिवृत्त्यर्थश्च यत्नो न कार्यः । स्वयमेव विनष्टत्वादिति भावः । हेतौ समग्रे—भाविदुःखहेतौ समग्रे अविकले तिष्ठति सति । भावि च न सुपरिहरम्—भाविदुःखं न सुपरिहरम् । भावित्वादिदानीमलब्धस्वरूपत्वादेव भाविदुःखपरिहरणं न युक्तमिति च भावः । अनादिकालसिद्धेषु बहुषु पापेषु विद्यमानेषु कथमिदानीमलब्धस्वरूपं वा भाविदुःखं सुपरिहरमिति भावः । अतः—सम्भावितत्रिविधदुःखनिवर्तनस्यासम्भवात् । दुःखात्यन्तोपरोधे—दुःखसामान्यनिवृत्तिरूपेमोक्षे । करणविधिः—उपायविधिः । व्यर्थः—निष्फलः । इति अर्धरम्यम्—अर्धं श्रोत्रसुखं अर्धं तु न रम्यम् । कृतानां प्रायश्चित्त्या परम् अकरणतो दुःखसामग्र्यपोहात्—विद्यारम्भात्पूर्वं कृतानां पापानां प्रायश्चित्तरूपया ब्रह्मविद्यया नाशात् विद्यात उत्तरं दुरितानां अकरणादनारम्भाच्च दुःखसामग्र्या भाविदुःखकारणस्य अपोहात् निवर्तनात् । संसारानुवृत्तिर्निरुध्यत इति ॥ ४२७ ॥

राजद्विष्टादि सर्पाद्यपि परिहरसि च्छत्रपूर्वं बिभर्षि
प्रायश्चित्ताप्रवृत्तौ फलति दुरितमित्येवमीहामिहेच्छ ।
उत्प्रेक्षारूढभाव्यापजयशमनतस्स्वोक्तिसाफल्यमिच्छन्
पश्यंश्चाबालतिर्यग्भयचकितगतिं जोपमित्थं जुषस्व ॥ ४२८ ॥

चिन्ता०—भाव्यनर्थपरिहाराय प्रवृत्तिर्लोके बहुधोपलभ्यत इत्यत्राप्याशङ्कितभाव्यनर्थकारणनिराकरणाय

ब्रह्मोपासने प्रवृत्तिर्योयुज्यत इति दर्शयति—राजद्विष्टादीति । राजशासनातिलङ्घनं सर्पाद्यनिष्टहेतुं परिहरसि स च परिहारो भाविदुःखोपरोधायैव । छत्रपूर्वं बिभर्षि भाविवर्षाद्यावनादिनिराकरणायैव हि च्छत्रादिकं बिभर्षि । तद्वदत्रापि कृत्स्नपापप्रायश्चित्तरूपभगवदुपासनाभावे सांसारिकं सकलमपि दुःखं भविष्यति । तत्करणे पुनस्सामग्रीविच्छेदादुत्तरकाले प्रसक्तं दुःखं न भविष्यतीति ब्रह्मोपासने प्रवृत्तिं भजस्व । किञ्च किमनेनान्यकालिकेन दृष्टान्तेन । अधुना भवान् भाव्यनर्थपरिहारायैव प्रयतते । तथाहि यद्यहं तूष्णीमेव स्यां तदा मम पराजय एव भविष्यतीत्युत्प्रेक्षारूढभाव्यापजयशमनाय स्वोक्तेस्साफल्यमिच्छंस्त्वं बालतिर्यक्पर्यन्तं भयचकितगतिं पश्यंश्च जोषमित्थं जुषस्व जोषमास्स्वेत्यर्थः । बालास्तिर्यञ्चोऽपि भयचकिता एव गच्छन्ति । भयञ्च भाव्यनर्थाशङ्कया । तस्यैवानर्थस्य परिहरणाय पलायन्ते च । तेनाबालगोपालं प्रसिद्धार्थे न विवदितव्यमिति ॥ ४२८ ॥

पद०—राजद्विष्टादीत्यादि । राजद्विष्टादि—राजद्वेषादिकम् । सर्पाद्यपि—सर्पवृश्चिकादिसंसर्गमपि । परिहरसि—विसृजसि खलु । भाव्यनर्थपरिहाराय खल्विदमित्यर्थः । छत्रपूर्वम्—छत्रादिकम् । बिभर्षि—भाविवर्षादिपरिहाराय धारयसि । प्रायश्चित्ताप्रवृत्तौ—सर्वदुःखमूलपापप्रायश्चित्तभूतब्रह्मोपासनप्रवृत्त्यभावे । दुरितम्—मत्कृतं सकलमपि पापम् । फलति—भाविदुःखमुत्पादयति । इति—एवं निश्चित्य । इह—सकलभाविदुःखहेतुपापप्रायश्चित्तरूपब्रह्मोपासने । एवमीहाम्—तृतीयचतुर्थपादोक्तक्रमेण एवमङ्गकैवंस्वरूपविद्यानुष्ठानोद्योगमपि । इच्छ—अङ्गीकुरु । उत्प्रेक्षारूढभाव्यापजयशमनतः—यद्यहं तूष्णीमेव स्यां तदा मम पराजयो भविष्यतीति उत्प्रेक्षया आरूढो हृदयलग्नो भाव्यः उत्तरकालानुभाव्यश्च योऽपजयस्तच्छमनेन । स्वोक्तिसाफल्यमिच्छन्—इदानीन्तनस्ववचनफलवत्तामङ्गीकुर्वन् । आबालतिर्यक्—बालांस्तिरश्चश्चाभिव्याप्यबालतिर्यक्पर्यन्तं सुलभाम् । भयचकितगतिश्च—भयेन सर्पवृश्चिकमृगशुनकादिनिमित्तभाव्यनर्थचिन्तनरूपेण चकितां स्खलनसंकोचनादिवैक्लव्ययुक्तां गतिं सञ्चरणं च । पश्यन्—भाव्यनर्थपरिहारायैव इदं सर्वमेवमेभिः क्रियत इति निश्चिन्वन् । इत्थम्—उक्तार्थाङ्गीकारेण प्रत्युक्तिशून्यतया वर्तितव्यमिति मत्वा । जोषं जुषस्व–तूष्णीमास्स्व । अयुक्तमसन्दर्भञ्च वचो मा वदेत्यर्थः ॥४२८॥

साध्यसाधनतादुर्वचत्वेन मुक्त्यहेतुर्विद्येतिचोद्यनिरासः ।

साध्यं वा साधनं वा स्वविहितविपथैर्दुर्निरूपं वदन्तः
तद्वादे किं प्रवृत्ताः किमिति च विदधत्यन्वहं भोजनादीन् ।
मुक्तेर्नित्यत्वसिद्धया भजनमफलमित्यप्यसत् प्रागसिद्धेः
सांख्यास्त्वत्रानुयोज्यास्सकरणदशया नित्यमुक्तिं गृणन्तः ॥ ४२९ ॥

चिन्ता०—इत्थं कर्माङ्गकब्रह्मविद्यया कृत्स्नदुःखनिवृत्तिपूर्वकब्रह्मप्राप्तिरित्युक्तम्। अत्र कश्चिच्चोदयति—'कार्यकारणभावस्यैव दुर्निरूपत्वान्न साधनत्वं विद्यायाः, नापि विद्योपकारकत्वं कर्मणः, नापि च कर्मानुगृहीतब्रह्मोपासनसाध्यत्वमपवर्गस्य, सर्वस्यापि विकल्पासहत्वात्। किं कारणाद् भिन्नमभिन्नं वा कार्यम्? भिन्नश्चेत् तस्य तत्कार्यत्वं न स्यात्। नहि घटस्य पटः कार्यम्। अभिन्नश्चेत्तथापि न कार्यम्—नहि घटस्य घट एव कार्यम्। भिन्नाभिन्नत्वमवाच्यमेव व्याघातात्। तथा कुर्वत् कारणमुताकुर्वत्? उभयथापि कारणं न भवत्येव। यथाहुः—

'कुर्वत्कार्यमकुर्वद्वा यत्किञ्चित्कारणं भवेत्।
कुर्वच्चेदनवस्थानमकुर्वत्त्वव्यवस्थितिः॥'

इति। एवं किं प्राप्य कार्यं करोति कारणम्, उताप्राप्य, उभयथाऽपि कारणत्वं न सम्भवति। प्राप्त्यप्राप्तिसमोत्थानेन दूषणमपि वाच्यम्। किञ्च कारणशब्दार्थ एव निरूपयितुं न शक्यते। नियतपूर्वभाविकारणमिति निरुच्यते चेत्, किं सर्वापेक्षया नियतपूर्वभावि—तन्न; अतिप्रसङ्गात्। कार्यापेक्षया चेत् तच्च न—कार्यशब्दार्थस्यैव दुर्निरूपत्वात्। नियतपश्चाद्भाविकार्यमिति चेत् तच्च सर्वापेक्षया चेदतिप्रसङ्गः, स्वकारणापेक्षया चेत् परस्पराश्रयदोषः कार्यकारणयोरन्योन्यनिरूपकत्वात्। एवमनेकविधदोषदूषितत्वात् कार्यकारणभाव एव न सङ्गच्छते। कुतस्तेन ब्रह्मोपासनस्यापवर्गं प्रति करणत्वेन विधिः कारणविशेषत्वात् करणस्य इति इत्थं दुर्निरूपत्वात् कार्यकारणभावे कण्ठगतजीवे करणत्वाभिधायिनामुपासनविधीनां मरणमेव शरणम् इति। एवं वदन्तं परपक्षवादिनं प्रतिक्षिपति—साध्यं वेति। कार्यं वा कारणं वा स्वव्याघातोपहतदुर्मार्गैर्दुर्निरूपमिति वदन्तो भवन्तस्तस्मिन्वादे किम्प्रवृत्ताः? अयमर्थः—आधुनिकी भवदीयवादप्रवृत्तिर्निरर्थिका सार्थिका वा निरर्थिका चेत् प्रवृत्तिरेव न घटते। नहि प्रयोजनमनुद्दिश्य मन्दोऽपि प्रवर्तते। सार्थिका चेन् स एव कार्यकारणभावः। एतस्या एव वादप्रवृत्तेः कारणत्वात् परवादिपराजयस्य तत्फलस्य कार्यत्वात्। तर्हि परवादिपराजयः सिद्ध इति विजयामह इति चेदिदं स्वप्नलब्धसुवर्णेन कटकनिर्माणमित्याह—स्वविहितविपर्ययैरिति। साध्यं वा साधनं वा दुर्निरूपमिति भवान्प्रलपत्येव। नैतावता परवादिपराजयसिद्धिस्स्वव्याघातोपहतत्वादेतस्य वाक्यस्य। तेन कार्यकारणभावाङ्गीकारे न परवादिपराजयः। तदनङ्गीकारे परवादिपराजयहेत्वभावान्न परवादिपराजयः। तेन प्रलाप एवायं भवत्परिकल्पितो दुर्मार्ग इत्यर्थः। तद्वादे किं प्रवृत्ता इत्यनेनास्माभिरुदितं स्वव्याघातजातमिदमुक्तं भवति। एवं वादप्रवृत्तिमेवोपरुध्य लोकप्रवृत्तिमप्युपरुणद्धि किमिति चेति। वादप्रवृत्त्यभावे परिभूयेत भवान्, लोकप्रवृत्त्यभावे भवतस्स्वजीवनभोजनाद्यभावेन

स्वरूपस्यैवाभावात् नानुभूयेत पुत्रादिभिरित्यर्थः। भोजनमपि हि स्वजीवनकारणमेव कार्यकारणभावाभावे सर्वोऽपि व्यापारो लोलुप्येतेति। अन्यमपि परब्रह्मभजनस्य निराकरणहेतुं स्वयमपि निराकरोति—मुक्तेरिति। मोक्षस्य नित्यत्वात् परभजनमफलमिति यदुच्यते तत् सिद्धमसिद्धेन साधयतीति न्यायस्य विषयः;. मोक्षस्य सकलसांसारिकदुःखोच्छेदरूपत्वेनागन्तुकत्वात्। तमेव हेतुमाह—प्रागसिद्धेरिति। नेदमागामिमोक्षवादिनामस्माकं दूषणम् अपितु सांख्यानामेवेत्याह—सांख्या इति। कथं तेषां दूषणमित्यत्र तन्मतेन दूषणं दर्शयति—सकरणदशयेति। करणकलेबरसहभावेनैव नित्यमुक्तिं वदन्ति साङ्ख्याः। करणकलेबरसहभाव एव संसारः, तद्विरहो मुक्तिरिति मिथोव्याघातः। इममर्थं व्याहतमेव व्याहरन्तस्सांख्या निराकार्या इत्यर्थः॥ ४२९॥

पद०—साध्यं वेत्यादि। साध्यं वा साधनं वा—कार्यं वा कारणं वा। स्वविहितविपथैः—स्वालोचितदुर्मार्गैः। अयं तेषां दुर्मार्गः—किं कारणभिन्नमभिन्नं वा कार्यम्। भिन्नं चेत् तस्य तत् कार्यं न स्यात्, नहि घटस्य पटः कार्यम्। अभिन्नं चेत् तथापि न कार्यम्, नहि घटस्य घट एव कार्यम्। भिन्नाभिन्नत्वं त्ववाच्यमेव। तथा कुर्वत्कारणमकुर्वद्वा उभयथापि न सम्भवति। यथाहुः—'कुर्वत्कार्यमकुर्वद्वा यत्किञ्चित्कारणं भवेत्। कुर्वच्चेदनवस्थानमकुर्वत्त्वव्यवस्थितिः॥' इति। किञ्च कारणशब्दार्थ एव निरूपयितुं न शक्यते। नियतपूर्वभावि कारणमिति निरुच्यते चेत् तत्किं सर्वापेक्षया नियतपूर्वभावित्वम्—तन्न अतिप्रसङ्गात्। कार्यापेक्षया चेत् परस्पराश्रयदोषः; कार्यकारणयोरन्योन्यनिरूपकत्वादित्यादिः। दुर्निरूपं वदन्तः—निरूपयितुमशक्यमिति वदन्तो बौद्धादयः। तद्वादे—कार्यकारणभावभङ्गवादे। किं प्रवृत्ताः—किंफलमुद्दिश्य प्रवृत्ताः। परवादिजयमुद्दिश्य प्रवृत्ताश्चेत् वादपरवादिविजययोः कार्यकारणभावस्तत एव सिद्ध इति न कार्यकारणभावविभित्सा युक्ता। न किमपि फलमुद्दिश्येति चेत् नहि प्रयोजनमनुद्दिश्यानुन्मत्तः किञ्चित्कार्यं प्रति प्रवर्तते। किञ्च अन्वहम्—प्रतिदिनम्। भोजनादींश्च—भोजनसलिलपानादींश्च। किमिति विदधति—किं फलं भविष्यतीति मन्वानाः कुर्वन्तीत्यर्थः। क्षुत्तृष्णानिवृत्तितृप्त्यादिफलमुद्दिश्येति चेत् सिद्धस्तर्हि कार्यकारणभावः। फलमनुद्दिश्य तावत् कष्टसाध्यान्नसम्पादनतद्भोजनादिकरणं तु अनुन्मत्तकृत्यं न भवति। मुक्तेर्नित्यत्वसिद्ध्या भजनमफलमित्यप्यसत्—जीवो हि नित्यमुक्तः, अतस्तस्य मुक्तेर्नित्यत्वसिद्धया तथा नित्यसिद्धमुक्त्यर्थं परमात्मभजनं विफलमिति यत् शङ्कनं तदप्यसाधु। प्रागसिद्धेः—सकलसांसारिकदुःखोच्छेदरूपाया मुक्तेस्साधननिष्पत्तेः पूर्वमसिद्धत्वात्। आगामिमोक्षवादिनामस्माकं नेदं दूषणम्। न वयं जीवं नित्यमुक्तं भणामः। सकरणदशया नित्यमुक्तिं गृणन्तस्सांख्यास्तु—करणकलेबरसहभाव-

दशया सह जीवस्य नित्यमुक्तिं विरुद्धां वदन्तो निरीश्वरसाङ्ख्या एव। अत्र—विषये। अनुयोज्याः—प्रष्टव्याः। अतो नास्माभिस्तद्दूषणपरिहाराय प्रयतितव्यमिति भावः॥ ४२९॥

मतान्तरदूषणेन स्वसिद्धान्ते मुक्तिस्वरूपविशदीकारः

मोक्षाभावे मुधा स्यात्सपरिकरमिदं साधनं चिन्त्यमानं
मुक्तिश्चेद् भ्रान्तिसिद्धा भ्रम इह भविता यावदात्मस्वरूपम्।
क्षेत्रज्ञं नित्यमुक्तं कथयितुरफलस्साधनाध्याय इत्थं
प्रध्वंसात्मा हि मुक्तिर्नयविदभिमता सा तु भावात्मिका नः॥४३०॥

चिन्ता०—पूर्वं साङ्ख्यस्य नित्यमुक्तिं वदतः कथितं दूषणं मृषावादिनोऽप्यविशिष्टमित्युक्त्वा स्वपक्षे मोक्षं स्वरूपतो विशदमेव दर्शयति—मोक्षेति। अत्रायं विकल्पः—नित्यमुक्तत्ववादी मृषावादी किमागामिमोक्ष एव नास्तीति ब्रूते किंवा भ्रान्तिसिद्धो मोक्ष इति। उभयथाऽपि न युज्यते। तथा हि—मोक्षो यदि न स्यात् तदा सपरिकरमिदं चिन्त्यमानं साधनं मुधा स्यात्। आगामिनो मोक्षरूपफलस्याभावात्। तर्हि मुक्तिर्भ्रान्तिसिद्धेति पक्षं परिगृह्णीम इति चेत् तत्रापि विकल्पः—किमाधुनिकभ्रान्तिसिद्धो मोक्षः, उत मोक्षदशायामुत्पन्नया भ्रान्त्या सिद्धः। न तावदाद्यः—अधुना संसारभ्रान्तेर्विद्यमानत्वेन मोक्षभ्रान्तेरनुदयात्। नापि परः—तथा सति मुक्तिदशायामारोपितमोक्षविषयभ्रान्त्यनुवृत्तेर्यावदात्मस्वरूपं भ्रान्तिरेव स्यात्। किञ्च क्षेत्रज्ञस्य नित्यमुक्तत्वं कथयितुस्तव साधनाध्यायोऽफल एव स्यात्; नित्यमुक्तत्वेन साध्याभावात्। भ्रान्त्युपशमनार्थं साधनाध्याय इति चेत् तर्हि निवर्त्यसद्भावान्न नित्यमुक्तत्वसिद्धिः। निवर्त्याभावे तु तदेव नैष्फल्यमनुवर्तेत। तर्हि सकलसांसारिकदुःखनिवृत्तिर्ब्रह्मज्ञानकार्येति चेत् कार्यस्यानित्यत्वात्तन्नाशे संसारोन्मज्जनप्रसङ्ग इत्याशङ्क्याह—प्रध्वंसेति। न्यायविदां पक्षे प्रध्वंसरूपिणी मुक्तिः। प्रध्वंसस्य कार्यत्वेऽपि नित्यत्वमिति हि तेषां पक्षः। अतो नानित्यत्वप्रसङ्गः। तर्हि युष्मत्पक्षे भावरूपत्वमस्तीति चेत्—अस्त्येव। तेषामभाव एवास्माकं भावः। यथा अभावरूपत्वान्मुक्तेः कार्यत्वेऽपि नित्यत्वमिति न्यायवादिनो वदन्ति एवं भावान्तराभाववादिनामस्माकमपि 'नच पुनरावर्तते' इति न्यायानुगृहीतश्रुतिसामर्थ्यादपहतपाप्मत्वादिगुणाष्टकाविर्भावरूपमुक्तेर्भावरूपत्वेऽपि नित्यत्वसिद्धिरिति कृतं विस्तरेण॥ ४३०॥

पद०—मोक्षाभाव इत्यादि। मोक्षाभावे सपरिकरं चिन्त्यमानमिदं साधनं मुधा स्यात्—जीवस्य नित्यमुक्तत्ववादिनां मृषावादिनां पक्षे मोक्षाभावे कर्मशमदमादिपरिकरविशिष्टतया पादद्वये विचार्य-

माणमिदं साधनमुपासनरूपं व्यर्थं भवेत् । मुक्तिर्भ्रान्तिसिद्धा चेत्—वस्तुतो मुक्त्यभावेऽपि भ्रान्तिसिद्धामुक्तिः फलमिति चेत् । इह—पक्षे । यावदात्मस्वरूपं भ्रमो भविता—आत्मस्वरूपं यावन्तं कालं वर्तते तावन्तं कालं मुक्तिभ्रमो भविता । अयमाशयः—संसारभ्रान्तिदशायां मुक्तिभ्रान्त्यसम्भवात् मुक्तिदशाकालिकमुक्तिभ्रान्तिपक्षे आरोपितमोक्षविषयभ्रान्त्यनुवृत्तेर्यावदात्मस्वरूपं भ्रान्तिरेव स्यादिति । इत्थम्—एवम् । क्षेत्रज्ञं नित्यमुक्तं कथयितुस्साधनाध्यायः अफलः—जीवं बन्धदशायामपि मुक्तं कथयतो मोक्षसाधनविद्याविचारपरः साधनाध्याय एव निष्प्रयोजनः । मुक्तिः प्रध्वंसात्मा हि नयविदभिमता—मुक्तिः प्रध्वंसाभावरूपा न्यायविदां तार्किकाणामभिमता । दुःखध्वंसो मोक्ष इति खलु नैयायिकसिद्धान्त इति भावः । सा तु—मुक्तिरेव । नः—अस्माकम् । भावात्मिका—अपहतपाप्मत्वादिगुणाष्टकाविर्भावरूपत्वेन भावरूपापि 'न च पुनरावर्तते' इत्यादिश्रुतिबलान्नित्यैव ॥ ४३० ॥

सन्तत्यात्मा कपालप्रभृतिबहुविधावस्थयान्यत्र नाशो
धीसङ्कोचप्रणाशो विकसनमतथाभूतमत्रागमात्स्यात् ।
मन्यन्तेऽन्ये तु धारावहनमतिनयात् सन्ततिं मुक्तबुद्धेः
सामग्री चेश्वरेच्छाप्रभृतिसमुदयस्स्यादनावृत्तिरेवम् ॥ ४३१ ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु अधिकरणसारावल्यां
तृतीयस्याध्यायस्य चतुर्थः पादः
अध्यायश्च समाप्तः

चिन्ता०—उक्तं भावान्तराभावपक्षं लोकदृष्टप्रक्रियया पुराणानुसारेण च स्थापयन् मोक्षस्य नित्यत्वं पक्षद्वयेन दर्शयति—सन्तत्यात्मेति । 'मही घटत्वं घटतः कपालिका' इति पराशरादिवचनबलादुत्तरोत्तरावस्थान्तरमात्रस्य सन्तन्यमानस्यैव विनाशत्वेन च लोके उपलम्भात् धीसङ्कोचप्रणाश एव विकसनम् । अतथाभूतं नित्यसिद्धस्वरूपमत्र पुनरागमात्स्यात् । आगमस्तु 'नच पुनरावर्तते' इत्यादिकः । अपुनरावृत्तिर्नाम विकसितज्ञानस्य पुनस्सङ्कोचाभावः । 'यथा न क्रियते ज्योत्स्ना मलप्रक्षालनान्मणेः' इति शौनकवचनमप्यत्रैव संवदते । अत्र पक्षान्तरमप्याह—मन्यन्त इति । विकसनं स्वरूपतो नित्यमित्येकः पक्षः, सन्तानात्मकमित्यपरः । अयमर्थः—धीसङ्कोचप्रणाशाद् विकासस्यार्थान्तरत्वेऽपि नास्माकं दोषः । नित्यानुवृत्तज्ञानपारम्पर्यस्य 'नच पुनरावर्तते' इत्यादिप्रमाणानुसारेण

भावित्वेऽपि नित्यत्वाविरोधादिति । अयमत्र शब्दार्थः—अन्ये त्वाचार्या धारावहनबुद्धिन्यायेन मुक्तबुद्धेर्नित्यां सन्ततिं मन्यन्ते । तर्हि मुक्तबुद्धेर्नित्यानुवृत्तौ नित्यमेव तत्सामग्री च स्यात् सा तु नास्ति कथं नित्यानुवृत्तिरित्याशङ्क्याह—सामग्री चेति । प्रमाणान्मुक्तबुद्धिसन्तानस्य नित्यानुवृत्तौ सत्यां श्रुतार्थापत्त्या तत्सामग्रीसन्तानस्यापि नित्यानुवृत्तत्वं सेत्स्यत्येव । नहि सामग्र्यनुवृत्त्यभावे कार्यानुवृत्तिरिति वक्तुमेव शक्यते । अत ईश्वरबुद्ध्यादिकं यदेव तत्कारणं युज्यते तदेव तत्र स्यादिति । एतदुक्तं भवति—यद्यपि विकासस्य भावरूपत्वं नित्यत्वञ्च तथापि भूषणपक्षे नित्यज्ञानानन्दयोर्विषयविषयिभाववद् युक्तमेव नित्यत्वम् । अभावरूपत्वे पुनर्वैशेषिकोक्तनिखिलवैशेषिकगुणोच्छेदस्येव सुतरामपि नित्यत्वं सङ्घटते । ज्ञानसन्तानपक्षेऽपि ज्ञानकारणसन्तानानुवृत्त्या ज्ञानसन्ताननित्यत्वं सङ्घटते । ननु सन्ततिरत्यन्तमुच्छिद्यते सन्ततित्वात् प्रदीपसन्ततिवदिति न्यायवादिभिरुच्यत इति चेत् तदागमापरामर्शात् सम्यङ्न्यायापरामर्शाच्च, यथा प्रदीपस्य पूर्वोत्तरावधिद्वयसद्भावेऽपि सन्ततित्वे सत्यपि कर्मप्रवाहस्यान्त्यावधिरेवास्ति न पुनः पूर्वावधिः प्रमाणानुसारात् एवं प्रदीपस्योभयावधिसद्भावेऽपि 'नच पुनरावर्तते' इत्यबाधितप्रमाणानुसारादापवर्गिकज्ञानसन्तानस्य पूर्वावधिसद्भावेऽप्युत्तरावधिर्नास्तीति यथाप्रमाणं यथान्यायञ्च कल्पनीयम् । किञ्च मृषावादिनो भावरूपाज्ञानस्योत्तरावधिसद्भावेऽपि पूर्वावधिं प्रतिक्षिपन्ति, एवं वयमस्यासङ्कुचितब्रह्मानुभवरूपज्ञानस्य भावरूपस्यापि पूर्वावधिसद्भावेऽप्युत्तरावधिर्नास्तीति कल्पयाम इत्यलमतिप्रसङ्गेन । विस्तरस्तु शतदूषण्यामेव द्रष्टव्यः ॥ ४३१ ॥

इति निखिलतार्किकचूडामणिना सर्वतन्त्रस्वतन्त्रेण
श्रीमद्वरदार्यापरनाम्ना कुमारवेदान्ताचार्येण
विरचिते शारीरकाधिकरणचिन्तामणौ

तृतीयस्याध्यायस्य चतुर्थः पादः
अध्यायश्च समाप्तः

पद०—सन्तत्यात्मेत्यादि । अन्यत्र—मृत्पिण्डघटादिवस्तुजाते । नाशः । कपालप्रभृतिबहुविधावस्थया—कपालशकलरेणुप्रमुखनानाविधावस्थारूपतया । सन्तत्यात्मा—अवस्थासन्तानस्वरूपो दृश्यते । धीसङ्कोचप्रणाशः—धर्मभूतज्ञानसङ्कोचनाश एव । विकसनम्—पूर्वसङ्कुचितज्ञानविकसनम् । अतथाभूतम्—नित्यसिद्धम् । अत्र—अस्मत्पक्षे पुनः । आगमात्—'नच पुनरावर्तते' इत्यादिश्रुतिवचनात् । स्यात्—सिध्येत् । अन्ये तु—अन्ये त्वाचार्याः । धारावहनमतिनयात्—धारावाहिकबुद्धिन्यायेन । मुक्तबुद्धेः—मुक्तसम्बन्धिज्ञानस्य । सन्ततिम्—समानाकारज्ञानधारापरम्पराम् । मन्यन्ते—नित्यसिद्धां अङ्गीकुर्वन्ति । सामग्री च—तादृशनित्यसिद्धमुक्तज्ञानधाराकारणञ्च । ईश्वरे-

च्छाप्रभृतिसमुदयः—मुक्तज्ञानमितः परं नित्यमनुवर्ततामित्याकारकपरमात्मेच्छातन्मूलसहजत्वात्सल्य-कारुण्यगुणादिसमुदाय एव । अतस्तादृशनित्यसामग्र्या मुक्तज्ञानधाराया नित्यानुवृत्तिरिति भावः । एवम्—धर्मभूतज्ञानविकसनं स्वरूपतो नित्यमिति पक्षे वा धारावाहिकज्ञानवत् मुक्तज्ञानसन्ततेर्नित्यमनुवृत्तिरिति पक्षे वा । अनावृत्तिः स्यात्—आवृत्तिरनित्यत्वं तदभावोऽनावृत्तिः उभयथापि मुक्तेर्नित्यत्वं सिध्यतीति ॥ ४३१ ॥

इति श्रीमद्रङ्गनाथशठमथनयतिराजकटाक्षलब्धोभयवेदान्तहृदयस्य भारद्वाजस्य श्रीनिवासराघवदासस्य (श्रीमदहोबिलमठमहास्थाननिर्वहणधुरन्धर श्रीमद्वेदमार्गप्रतिष्ठापनाचार्य परमहंसपरिव्राजकाचार्य सर्वतन्त्रस्वतन्त्रोभयवेदान्ताचार्य श्रीभगवद्रामानुजसिद्धान्तनिर्धारणसार्वभौम श्रीलक्ष्मी-नृसिंहदिव्यपादुकासेवकश्रीवण्शठकोपश्रीशठकोपरामानुजमहादेशिकस्य)

कृतौ अधिकरणसारावलीव्याख्यायां पदयोजनाख्यायां

तृतीयस्याध्यायस्य चतुर्थः पादः
अध्यायश्च समाप्तः

---

## चतुर्थस्याध्यायस्य प्रथमः पादः ।

तृतीयचतुर्थाध्याययोः चतुर्थे च पादद्विकयोस्संगति प्रदर्शनम् ।

**इत्युत्पत्तिक्रमेण प्रथममभिहितो मुक्त्युपायस्सहाङ्गैः**
**तत्साध्यं सूत्रकारः फलमथ विदुषः पर्वभेदैर्व्यनक्ति ।**
**स्थूले देहेऽस्य सिध्येद्यदिह वदति तत्पादयुग्मेन पूर्वं**
**निष्क्रान्तस्याथ यत्स्यात्परिगणयति तत्पादयुग्मान्तरेण ॥ ४३२ ॥**

चिन्ता०—अत्र पूर्वोत्तराध्याययोरेकार्धेन सङ्गतिमुक्त्वा द्वितीयेनार्धेन चतुर्थाध्याये पूर्वोत्तरपाद-द्विकयोः पौर्वापर्यमाह—इत्युत्पत्तिक्रमेणेति । 'स्वर्गकामो यजेत' इत्यत्र साध्यावमर्शपूर्वकसाधनाव-मर्शस्य दृष्टत्वात् सोऽयमवमर्शक्रमः । अत्र पुनर्ब्रह्मविद्याया उत्पत्तिक्रमानुसारेण पूर्वचिन्तनम् , ब्रह्मप्राप्तेः पुनः पश्चाच्चिन्तनमित्युत्पत्तिक्रमः । एवं प्रकारेणोत्पत्तिक्रमेण मुक्त्युपायस्सहाङ्गैः प्रथममभिहित इति तृतीयाध्यायार्थः । अथ चतुर्थाध्यायार्थमाह—तत्साध्यमिति । उपायसाध्यं ब्रह्मप्राप्तिरूपं फलं सूत्रकारः पर्वभेदैर्व्यनक्ति । उत्तरपूर्वाघाश्लेषविनाशोत्क्रमणार्चिरादिगमनब्रह्मप्राप्तिरूपफलपर्वभेदैर्व्यन-क्तीत्यर्थः । एवं पादार्थभेदमुक्त्वा पादद्वयार्थमपि विभज्य दर्शयति । तत्र तावत्स्थूलदेहादनुत्क्रान्तस्य

यत्फलं तत्पादद्वयेन वदतीत्याह—स्थूल इति। स्थूलदेहादुत्क्रान्तस्य यत्फलं तदुत्तरपादद्वयेन वदतीति दर्शयति—निष्क्रान्तस्येति। अयमर्थः—अश्लेषविनाशादिकमुत्क्रमणञ्च स्थूलदेहे वर्तमानस्यैव भवति अर्चिरादिमार्गेण गमनं परब्रह्मप्राप्तिश्च स्थूलदेहादुत्क्रान्तस्येति विभाग इति॥ ४३२॥

पद०—इत्युत्पत्तीत्यादि। इति—उक्तक्रमेण। मुक्त्युपायः—मोक्षोपायो वैश्वानरादिनानाविद्यारूपः। अङ्गैस्सह—स्वस्ववर्णाश्रमोचितैः कर्मभिश्शमदमादिभिर्मननपर्यन्तैश्चाङ्गैस्सह। उत्पत्तिक्रमेण—विमर्शक्रमे हि फलं विमृश्य साधनप्रवृत्तेः फलं प्रथममनन्तरं साधनम्। उत्पत्तिक्रमे तु साधनानन्तरं हि फलं निष्पद्यते। अतः प्रथमं साधनमुत्पद्यते, पश्चात्फलमिति साधनफलोत्पत्तिपौर्वापर्यानुसारेण। प्रथमम्—पुरतः। अभिहितः—उक्तः। अथ—अनन्तरम्। सूत्रकारः। विदुषः—एवमुक्तासु साङ्गविद्यासु यां काञ्चिदनुतिष्ठतो निरपराधस्याधिकारिणः। तत्साध्यम्—साङ्गविद्यासम्पाद्यम्। फलम्—मुक्तिरूपं फलम्। पर्वभेदैः—उत्तरपूर्वाघाश्लेषविनाशोत्क्रमणार्चिरादिगमनब्रह्मप्राप्तिरूपफलपर्वभेदैः। व्यनक्ति—प्रतिपादयति। अस्य—अधिकारिणः। इह—लोके। स्थूले देहे—विद्यानिष्पत्त्यवच्छेदकब्राह्मण्यादियुक्तशरीरे। यत्—उत्तरपूर्वाघाश्लेषविनाशोत्क्रमणरूपं यत्फलम्। सिध्येत्—लभ्येत। तत्—फलम्। पूर्वम्—प्रथमतः। पादयुग्मेन—'आवृत्तिरसकृदुपदेशात्' इत्यादिना 'वाङ्मनसि दर्शनाच्छब्दाच्च' इत्यादिना च प्रथमद्वितीयपादद्विकेन। वदति—प्रतिपादयति। अथ—अनन्तरम्। निष्क्रान्तस्य—स्थूलदेहान्निष्क्रान्तस्य। यत् स्यात्—यत्फलमर्चिरादिगमनब्रह्मप्राप्तिरूपं भवेत्। तत् पादयुग्मान्तरेण परिगणयति—'अर्चिरादिना तत्प्रथितेः' इत्यादिना 'सम्पद्याविर्भावस्स्वेनशब्दात्' इत्यादिनाचोत्तरपादद्विकान्तरेण प्रतिपादयति॥ ४३२॥

फलाध्याये विद्याभिधाने प्रयोजनविशेषप्रदर्शनम्।

सूक्ता प्रागेव विद्या किमिति पुनरिमां वक्ति यद्यस्ति शेषं
ब्रूतामेतच्च पूर्वं नहि तदिह फले संघटेतेति चेन्न।
मुक्तेरन्यैरसिद्धिं प्रकृततदविनाभावमासन्नसिद्धिं
मुक्तावस्थासमञ्च स्थिरभजनरसं व्यङ्क्तुमत्रानुबन्धात्॥ ४३३॥

चिन्ता०—अत्र फलाध्याये विद्यायाः पुनरभिधानमसङ्गतिदोषोपहतमित्याशङ्क्य प्रयोजनविशेषाभिधानेन संगतिं दर्शयति—सूक्तेति। अयमत्राक्षेपः—प्रागेव ब्रह्मविद्या सूक्ता। किमर्थं पुनरिमां ब्रह्मविद्यामत्रास्थाने वक्ति सूत्रकारः। ननु ब्रह्मविद्यायां वक्तव्यावशेषोऽस्तीत्याशङ्क्य तदपि सूत्रकारः पूर्वमेव तृतीयाध्याये ब्रूतां स्वस्थानत्वात्। अथाप्यत्राभिधाने को दोष इत्याशङ्क्याह—नहीति। अयमर्थः—

फलत्वादत्रोच्यते चेद् ब्रह्मविद्या न फलम्, अफलत्वेऽप्यत्रोच्यते चेदसङ्गतत्वात्प्रतिपत्तिवैरस्यमेव जायेतेति। तदिदं प्रतिक्षिपति—नेति। तत्प्रतिक्षेपप्रकारमाह—मुक्तेरिति। अत्र चत्वारोऽर्था विशेषतो व्यञ्जनीयाः। ते च फलान्तर्गता एव। तदभिधानार्थं तत्प्रतिसम्बन्धितया ब्रह्मविद्यात्राप्यभिधीयते। मुक्तेरनन्यैरसिद्धिरित्येकोऽर्थः। 'नान्यः पन्था अयनाय विद्यते' इति मोक्षस्यान्यैरसिद्धिः प्रसिद्धा। प्रकृततदविनाभाव इत्यपरोऽर्थः। प्रकृतस्य ब्रह्मोपासनस्य तदविनाभावो मोक्षाविनाभावः 'ते ह नाकं महिमानस्सचन्ते' इत्युच्यते। आसन्नसिद्धिरित्यन्यः। 'तमेवं विद्वानमृत इह भवति' इति भगवज्ज्ञानानन्तरमविलम्बेन मुक्तावस्थातुल्यावस्थाप्राप्तिश्श्रूयते। मुक्तावस्थासमश्च स्थिरभजनरस इतीतरः। भगवदुपासनस्य मोक्षावस्थातुल्यरसरूपत्वं, स्वर्गादिसाधनेषु साधनं दुःखात्मकं फलं दुःखव्यामिश्रं एकदेशसुखात्मकम् ब्रह्मोपासने फलतुल्यसुखात्मकमेव स्वरूपम्। एतानर्थान् प्रकाशयितुं साधनस्यापि ब्रह्मोपासनस्य फलाध्यायोपक्रमे निर्देश इति। व्यङ्क्तुमत्रानुबन्धात् इति—फलतुल्यत्वेन फलकोटिनिवेशमुपपादयितुमत्र ब्रह्मविद्यानुबन्ध इत्यर्थः॥ ४३३॥

पद०—सूक्तेत्यादि। विद्या—उपासनरूपा विद्या। प्रागेव—तृतीयपाद एव। सूक्ता—सम्यगुपपादिता। इमां पुनः किमिति वक्ति—तामिमां विद्यामस्मिंश्चतुर्थाध्याये पुनश्च कुतः प्रतिपादयति। शेषं यद्यस्ति एतच्च पूर्वं ब्रूताम्—विद्याविषये वक्तव्यशेषमस्ति चेत् एतच्छेषञ्च पूर्वं स्वस्थाने एव प्रतिपादयतु। अत्राप्युच्यतामिति चेदसङ्गतं स्यादित्याह तत्—मोक्षसाधनज्ञानम्। इह फले—अस्मिन् चतुर्थाध्यायप्रतिपाद्ये मुक्तिरूपफले। नहि संघटेत—सङ्गतं न भवति। साधनकथा साधनाध्याये वक्तव्या फलाध्याये साधनकथनमसङ्गतमिति भावः। इति चेन्न—इति शङ्क्यते चेत्तन्न युक्तम्। मुक्तेः—मोक्षस्य। अन्यैरसिद्धिम्—भक्तिभिन्नैरसिद्ध्यभावम्। 'नान्यः पन्था अयनाय' इत्युक्तरीत्या मोक्षस्यान्यैरसाध्यत्वम्। प्रकृततदविनाभावम्—प्रकृतस्य ब्रह्मोपासनस्य मुक्त्यविनाभावम्। ब्रह्मोपासने कृते तस्य मुक्तिस्सिद्धैवेत्ययमर्थम्। आसन्नसिद्धिम्—अविलम्बेन मुक्तिसिद्धिम्। मुक्तावस्थासमं स्थिरभजनरसञ्च—मुक्तस्य या परिपूर्णब्रह्मानुभवरूपमहानन्दावस्था तत्समं स्थिरं वैषयिकसुखवत् अनश्वरं भक्तिनिष्ठमास्वाद्यत्वञ्च इमान् चतुरोऽर्थान्। व्यङ्क्तुम्—प्रकाशयितुं, सूचयितुम्। अत्र चतुर्थाध्याये। अनुबन्धात्—विद्याविषयवक्तव्यशेषस्य सन्दर्भौचित्यात्। अतो नासन्दर्भ इति भावः। तथा च फलानुबन्धिनां चतुर्णामर्थानां व्यञ्जनार्थं तत्प्रतिसम्बन्धितया ब्रह्मविद्यात्राप्यभिधीयते फलतुल्यत्वेन फलकोटिनिवेशमुपपादयितुं ब्रह्मविद्याया अत्रानुबन्ध इति भावः॥ ४३३॥

---

## आवृत्त्यधिकरणम् ॥ १२४ ॥

सूत्रम्—आवृत्तिरसकृदुपदेशात् ॥ ४७० ॥

शुद्धैरुत्कृष्टधर्मैस्सदनपचरणे ब्रह्मविद्या भवित्री-
त्युक्तं पूर्वाधिकारे विमृशति तु परं तत्स्वरूपं यथावत् ।
प्रत्यक्षं वा स्मृतिर्वा सकृदिदमसकृद्वेति नोक्तं पुरस्तात्
यावज्जीवानुवृत्तिप्रभृति च तदिहापौनरुक्त्यं सुबोधम् ॥ ४३४ ॥

चिन्ता०—अत्राधिकरणसंगतिर्भाष्ये 'तृतीयेऽध्याये साधनैस्सह विद्या चिन्तिता' इत्युपक्रम्य 'वेदान्तवाक्येषु ब्रह्मप्राप्तिसाधनतया विहितं वेदनं किं सकृत्कृतमेव शास्त्रार्थः उतासकृदावृत्तमिति संशयः' इत्यभिधानात् । तदर्थविचारस्तु—किं वेदान्तविहितं वेदनं सकृत्कृतं शास्त्रार्थः, उतासकृदावृत्तमिति । किं 'ब्रह्मविदाप्नोति परम्' इत्यादिभिर्वेदनमात्रं विधीयते उत निदिध्यासनम् । किमत्र विदिशब्दो ज्ञानमात्रपरः उतोपासनपरः । उपक्रमोपसंहाराभ्यां वाक्यान्तराच्चोपासनपरत्वं विदिशब्दस्यावगम्यते नेति । अत्र तृतीयाध्यायचरमाधिकरणेनास्याधिकरणस्य संगतिं वदन्प्रतिपाद्यविशेषार्थानप्याह—शुद्धैरिति । फलसङ्गकर्तृत्वादिदोषरहितैरुत्कृष्टधर्मैश्शमादिभिश्च सदनपचरणे ब्रह्मविदपचाराभावे ब्रह्मविद्या भवित्रीति पूर्वाधिकरण उक्तम् । एतस्मिन्नधिकरणे ब्रह्मविद्यास्वरूपं विमृशति । पूर्वमपि ब्रह्मविद्यास्वरूपं तत्रतत्र निरूपितम् , तेन पौनरुक्त्यं किं न स्यादित्याशङ्क्य पूर्वं निरूपिताकारादधिकस्याकारविशेषस्य ब्रह्मविद्यायां विद्यमानत्वात् तदाकारविशेषोपपादनेनापौनरुक्त्यमुपपादयति—प्रत्यक्षमित्यादिना । अयमत्र शब्दान्वयः—किं मोक्षोपायभूतं ब्रह्मोपासनं प्रत्यक्षरूपं स्मृतिरूपं वा सकृत्कृतश्शास्त्रार्थ इति न्यायेन सकृद्वा ध्रुवानुस्मृतिरिति प्रमाणानुसारेणासकृद्वेति पूर्वं नोक्तम् । नैतावदेव 'स खल्वेवंवर्तयन्यावदायुषम्' इत्याद्युक्तं यावज्जीवानुवृत्त्यादिकञ्च पूर्वं नोक्तमिति न पौनरुक्त्यगन्धप्रसङ्ग इति ॥ ४३४ ॥

पद०—शुद्धैरित्यादि । पूर्वाधिकारे—पूर्वाधिकरणे । शुद्धैः—फलसङ्गकर्तृत्वाभिसन्ध्यादिदोषरहितैः । उत्कृष्टधर्मैः—मोक्षसाधनविद्याङ्गतयोत्कृष्टैर्वर्णाश्रमधर्मैश्शमादिभिश्च । सदनपचरणे—सत्सु विषये ऽपचाराभावे, ब्रह्मविदपचाराभावे इत्यर्थः । ब्रह्मविद्या—ब्रह्मोपासना । भवित्री—निष्पत्स्यते । इत्युक्तम् । परं तु—उपर्यस्मिन्नधिकरणे तु । तत्स्वरूपम्—विद्यास्वरूपम् । यथावत्—याथातथ्येन । विमृशति—विचारयति । स्वरूपस्य कथं विचारणीयत्वमित्यत्रोच्यते—प्रत्यक्षमित्यादि ।

इदम्—ब्रह्मोपासनम् । प्रत्यक्षं वा—प्रत्यक्षरूपमिति वा । स्मृतिर्वा—स्मृतिरूपमिति वा । सकृत्—सकृत्कृतश्शास्त्रार्थ इति न्यायेन सकृदावृत्तमिति वा । असकृदितिवा—विशेषशास्त्रबलेनासकृदावृत्तमिति वा । पुरस्तात्—पूर्वम् । नोक्तम्—नोपपादितम् । किञ्च यावज्जीवानुवृत्तिप्रभृति च—'स खल्वेवं वर्तयन् यावदायुषम्' इति शास्त्रेण यावज्जीवमनुवर्तनीयमित्यादि चार्थजातं पूर्वं नोक्तम् । तत्—तस्मात् कारणात् । इह—अत्रापि विद्यास्वरूपकथने । अपौनरुक्त्यम्—पुनरुक्त्यभावः । सुबोधम्—अनुक्तार्थानां बहूनामिह वचनात् अपुनरुक्तिस्सुगमेति भावः ॥ ४३४ ॥

ज्ञानं मुक्तेरुपायश्श्रुतिभिरभिहितस्तस्य संख्या तु नोक्ता
सौकर्यं स्यात्सकृत्त्वे तत इह तु भवेच्चारितार्थ्यं विधीनाम् ।
सम्यक्त्वात्तद्ध्रुवत्वं न पुनरनुगमात्प्रोक्तमित्यप्यसारं
सामान्योक्तेर्विशेषे सति पशुनयतस्तत्र विश्रान्तिसिद्धेः ॥ ४३५ ॥

चिन्ता०—अत्र सकृत्त्वेन पूर्वपक्षं कृत्वा भाष्यादावुक्तामसकृत्त्वोपपादनप्रक्रियां स्मारयन् सिद्धान्तं प्रदर्शयति—ज्ञानमिति । अत्रायं पूर्वपक्षः—'ब्रह्मविदाप्नोति परम्' ब्रह्म वेद ब्रह्मैव' इत्यादौ केवलं ब्रह्मवेदनमेव मोक्षोपाय इत्युक्तम् । तस्य वेदनस्यैकत्वं वा अनेकत्वं वेति संख्या नोक्ता आवृत्तत्वं वा अनावृत्तत्वं वा नोक्तमित्यर्थः । किञ्च सकृत्त्वे सौकर्यमेव स्यात् लघुपक्षाङ्गीकारे हि न्यायानुसारस्स्यादित्यर्थः । तथा सकृत्कृतः शास्त्रार्थ इति न्यायेन विधीनां चरितार्थत्वं च स्यात् । ननु ध्रुवानुस्मृतिरिति ब्रह्मोपासनस्य ध्रुवत्वमुच्यत इत्याशङ्क्य तदप्यन्यथासिद्धमित्याह—सम्यक्त्वादिति । अत्र ध्रुवत्वं सम्यक्त्वमेव ज्ञानान्तरेणाबाधितत्वमित्यर्थः । नपुनश्चिरकालानुवृत्तत्वं प्रोक्तमिति । तमिमं पूर्वपक्षं प्रतिक्षिपति—असारमिति । असारत्वमेव न्यायतो दर्शयति—सामान्येति । सामान्यव्यवहारस्य साकाङ्क्षस्य विशेषोपस्थापकप्रमाणान्तरे सति च्छागपशुन्यायेन विशेषे एव विश्रान्तिसिद्धिः । एतस्यार्थस्य वेदनध्यानोपासनध्रुवानुस्मृतिदर्शनशब्दानां भक्तिविश्रान्तिप्रतिपादके भाष्योपक्रमग्रन्थे विस्तरेणोक्तत्वादत्र सङ्ग्रहेणामुमर्थं प्राचीकशत् ॥ ४३५ ॥

पद०—ज्ञानमित्यादि । श्रुतिभिः—'ब्रह्मविदाप्नोति परम्' इत्यादिश्रुतिभिः । मुक्तेरुपायः, ज्ञानम्—ज्ञानमिति । अभिहितः—उक्तः । तस्य—मोक्षोपायभूतज्ञानस्य । संख्या तु—एकत्वं वा अनेकत्वं वा आवृत्तत्वं वा अनावृत्तत्वं वेत्यर्थः । नोक्ता—नाभ्यधायि । सकृत्त्वे—सकृदनुष्ठितस्यैव ज्ञानस्य शास्त्रार्थत्वे । सौकर्यं स्यात्—अनुष्ठानसुकरता लभ्येतेत्यर्थः । इह—विषये । ततस्तु—

तावन्मात्रेणैव सकृदनुष्ठानेनैव । विधीनाम्—मोक्षोपायविधीनाम् । चारितार्थ्यं भवेत्—सकृत्कृतश्शास्त्रार्थ इति न्यायेन कार्तार्थ्यं सिध्येदित्यर्थः । सम्यक्त्वात्—ज्ञानान्तरेणाबाधितत्वात् । तद्ध्रुवत्वम्—'सत्त्वशुद्धौ ध्रुवा स्मृतिः' इत्यादिप्रमाणसिद्धं तस्य ज्ञानस्य ध्रुवत्वम् । अनुगमात् पुनः—चिरकालानुवृत्तत्वाचु । न प्रोक्तम्—न ध्रुवत्वं प्रोक्तम् । इत्यपि असारम्—एवं शङ्कनमप्यसारम् । सामान्योक्तेः—साकाङ्क्षस्य सामान्यव्यवहारस्य । विशेषे सति—विशेषोपस्थापकप्रमाणान्तरे सति । पशुनयतः—छागपशुन्यायेन । तत्र—विशेष एव । विश्रान्तिसिद्धेः—पर्यवसानस्य सिद्धत्वात् । तथा च 'अग्नीषोमीयं पशुमालभेत' इत्यादिविधिवाक्यघटकस्य सामान्यस्य पशुशब्दस्य 'छागस्य वपायाः' इत्यादिमन्त्रवर्णस्थच्छागरूपविशेष इव वेदनध्यानोपासनध्रुवानुस्मृतिदर्शनशब्दानां भक्तिरूपज्ञानविशेषे विश्रान्तिसिद्धेर्न केवलवाक्यार्थज्ञानादीनां मुक्तिहेतुत्वमिति भावः ॥ ४३५ ॥

किञ्चाग्नेयादिनीत्या विदिरिह वदति ध्यानशब्दार्थमेव
ध्याने चोपासनोक्तिः परभजनतया वक्ति सेवात्मकत्वम् ।
ऐकार्थ्ये विद्युपास्योर्व्यतिकरिततया श्रूयते च प्रयोगः
कार्ये हेतौ च भक्तेः क्वचिदुपचरितो भक्तिभेदत्ववादः ॥ ४३६ ॥

चिन्ता०—वेदनस्य ध्यानत्वे न्यायान्तरमपि पुरस्कृत्य तस्यैव वेदनस्य सेवारूपत्वेनोपासनत्वमप्युपपादयन् भाष्यादावुक्तं विद्युपास्योर्व्यतिकरेणोपक्रमोपसंहारमपि दर्शयित्वा भक्तिमेव मोक्षोपायतया निगमयन् ध्रुवानुस्मृतेरन्यत्र भक्तिशब्दप्रयोग औपचारिक इति चाह—किञ्चेति । अयमत्र शब्दान्वयः—'आग्नेय्याग्नीध्रमुपतिष्ठते' इत्यत्राग्नेयीशब्दः प्रकृताग्नेयीमेवोपादत्ते । एवं 'ब्रह्म वेद ब्रह्मैव' इत्यादौ वेदनशब्दस्समानप्रकरणोपात्तं ध्यानमेव दर्शयति । ननूपासनं मोक्षोपाय इत्यध्यात्मविद्भिरुच्यते तत्कथं ध्यानं मोक्षोपाय इत्याशङ्क्योपासनशब्दस्य ध्यान एव पर्यवसानं दर्शयति—ध्यान इति । ध्यान एवोपासनोक्तिः परभजनरूपत्वेन सेवात्मकत्वं गुणविशेषमाहेत्यर्थः । ध्यानमिति चिन्तनमात्रम् । तत्र चोरसर्पादिविषयमपि ध्यानमेव । अतस्तद्व्यावृत्त्यर्थमनुकूलविषयानुसन्धानमत्रोपासनशब्देन प्रतिपाद्यत इति भावः । विद्युपास्योरैकार्थ्ये 'अथ योऽन्यां देवतामुपास्ते अन्योऽसावन्योऽहमस्मीति न स वेद अकृत्स्नो ह्येष आत्मेत्येवोपासीत' इति व्यतिकरिततया श्रूयमाणः प्रयोग एव प्रमाणम् । ननु 'श्रवणं कीर्तनम्' इत्यादौ नवविधा भक्तिरुच्यते उपासनञ्च तन्मध्येऽभिधीयते तत्कथं ध्रुवानुस्मृतेरेव भक्तिरूपत्वमित्याशङ्क्य भक्तेः पूर्वोत्तरभाविनोरपि भक्तिशब्दप्रयोग औपचारिक इति निगमयति—

कार्य इति । क्वचित्कार्ये कारणवदुपचारः कचिच्च कारणे कार्यवदुपचार इति न सङ्कटं किञ्चित् । भक्तिभेदत्ववादः—भक्तिविशेषत्ववाद इत्यर्थः ॥ ४३६ ॥

पद०—किञ्चेत्यादि । किञ्च । इह—मोक्षोपायविषये । विदिः—'ब्रह्म वेद ब्रह्मैव' इत्यादिविदिः । आग्नेयादिनीत्या—'आग्नेयं चतुर्धा करोति, पुरोडाशं चतुर्धा करोति' इत्यत्र पुरोडाशशब्दः प्रकृताग्नेयपुरोडाशपर इति कर्मकाण्डे निर्णीतम्, एवं 'आग्नेय्याग्नीध्रमुपतिष्ठते' इत्यत्राग्नेयीशब्दः प्रकृताग्नेयीमेव ऋचमभिदधातीति च निर्णीतम्, तन्न्यायेनेत्यर्थः । ध्यानशब्दार्थमेव वदति—समानप्रकरणस्थध्यानशब्दार्थं ज्ञानविशेषमेवाभिधत्ते । ध्याने उपासनोक्तिश्च परभजनतया सेवात्मकत्वं वक्ति—ध्यानविषये 'आत्मेत्येवोपासीत' इत्यादावुपासनशब्दः उत्कृष्टविषयकभक्तिरूपतया भृत्यस्य स्वामिचिन्तनन्यायेन 'दासभूतास्स्वतस्सर्वे' इत्युक्तरीत्या दासभूतस्य चेतनस्य स्वामिचिन्तनरूपत्वादुत्कृष्टचिन्तनात्मकत्वमभिदधाति । अत्र चिन्तामणिपङ्क्तिः 'ननु उपासनं मोक्षोपाय इत्यध्यात्मविद्भिरुच्यते तत्कथं ध्यानं मोक्षोपाय इत्याशङ्क्योपासनशब्दस्य ध्यान एव पर्यवसानं दर्शयति—ध्यान इति । ध्यान एवोपासनोक्तिः परभजनरूपत्वेन सेवात्मकत्वं गुणविशेषमाहेत्यर्थः । ध्यानमिति चिन्तनमात्रम् । तत्र चोरसर्पादिविषयमपि ध्यानमेव । अतस्तद्व्यावृत्त्यर्थमनुकूलविषयानुसन्धानमत्रोपासनशब्देन प्रतिपाद्यत इति भावः' इति । विद्युपास्योरैकार्थ्ये—मोक्षसाधनविधिषु श्रुतयोर्विद्युपास्योर्वेदोपासीतेतिशब्दयोरैकार्थ्ये एकार्थबोधकत्वे । साधक इति शेषः । व्यतिकरिततया प्रयोगः श्रूयतेच—विद्युपास्योरितिपदस्य काकाक्षिन्यायेनोभयत्रान्वयः । विदधातोरुपेत्युपसर्गयुक्तस्यासधातोश्च व्यतिकरिततया विदधातुनोपक्रान्तस्योपासधातुना निगमनम्, उपासधातुनोपक्रान्तस्य विदधातुना निगमनम्, उपासधातुनोपक्रम्य मध्ये तमर्थं विदधातुनानूद्य उपासधातुना निगमनमित्येवं परस्परविनिमयेन प्रयोगः श्रूयते । 'भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद, अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद, अकृत्स्नो ह्येष आत्मेत्येवोपासीत' इत्यादौ तथाविधः प्रयोगश्श्रूयते । भक्तेः—उपासनस्य । कार्ये—फलभूते कीर्तनादौ । हेतौ च—कारणभूते भगवद्विग्रहगुणस्मरणादौ च । क्वचित्—पुराणवाक्ये । भक्तिभेदत्ववादः—'स्मरणं कीर्तनम्' 'मद्भक्तजनवात्सल्यम्' इत्यादौ नवविधा अष्टविधा भक्तिरिति स्मरणकीर्तनादीनां भक्तिप्रकारभेदत्वप्रवादः । उपचरितः—औपचारिकः । आयुर्घृतं पापं दुःखमित्यादौ आयुर्हेतौ घृते आयुश्शब्दवत् पापफले दुःखे पापशब्दवच्च भक्तिकार्यत्वात् भक्तिकारणत्वाच्च कीर्तनस्मरणादौ भक्तिशब्दप्रयोग उपचारमूल इत्यर्थः । उपचारः पूजा । कीर्तनादीनां बहुमन्तव्यत्वार्थं भक्तिशब्दप्रयोग इत्यर्थः । यद्वा उपचारः सामीप्यं शक्यार्थसम्बन्धस्तन्मूलो लाक्षणिक इत्यर्थः ॥ ४३६ ॥

योगोद्युक्तेषु यस्स्यात्स्ववरणविषयस्तेन लभ्यः परात्मा
ग्राह्यत्वञ्च प्रियत्वात्तदपि हि गुणतो भक्तिरेव श्रुतैवम् ।
साच प्रीत्यात्मिका धीः क्वचिदतिशयिते स्मृत्यबाधोऽप्यतस्स्यात्
प्रोक्ता चैषा ध्रुवानुस्मृतिरनुवहनात्तैलधाराक्रमेण ॥ ४३७ ॥

चिन्ता०—ननु 'भक्त्या त्वनन्यया शक्यः' इति भक्तिरेव परब्रह्मप्राप्तिरूपमोक्षसाधनतया स्मर्यते सा तु 'यमेवैष वृणुते तेन लभ्यः' इत्यादिश्रुत्या बाध्यते तेन श्रुतिस्मृत्योर्विरोधान्नार्थविशेषप्रतिपत्तिरित्याशङ्कां वारयन् श्रुतिस्मृत्योरन्योन्यानुकूल्यमेव दर्शयति—योगोद्युक्तेष्विति । इयमत्र शब्दान्वयप्रक्रिया—योगोद्युक्तेष्वधिकारिषु यः स्याद् भगवद्वरणविषयभूतः, तेनैव लभ्यः परमात्मा । तस्य च परमात्मना वरणीयत्वं परमात्मप्रियत्वादेव । तदपि प्रियत्वं तन्निष्ठाद्भक्तिरूपाद् गुणादेव । एवञ्च सति भक्तिरेव साक्षाच्छ्रूयते । तन्निष्ठा हि गुणत्वेनाभिहितेयं भक्तिः क्वचिदतिशयिते प्रीत्यात्मिका धीरिति । अत एव भक्तिप्रतिपादकस्मृत्यबाधस्स्यात् । श्रुतिस्मृत्योः परस्परसंवादात् । स्मृतिर्हि भक्तिरित्याह । श्रुतिरपि तामेव भक्तिं भगवद्विषयप्रीतिरूपां 'यमेवैष वृणुते तेन लभ्यः' इति फलतो दर्शयति स्म । तर्हि भक्तिरित्युच्यते भवता ध्रुवानुस्मृतिरिति श्रुतिराह तत्र कथमविरोध इत्याशङ्क्येयमेव भक्तिस्तैलधारावदविच्छिन्नत्वाद् ध्रुवानुस्मृतिरित्युच्यत इति दर्शयति—प्रोक्तेति । अनुवहनात्—अनुस्यूतत्वादित्यर्थः ॥ ४३७ ॥

पद०—योगोद्युक्तेष्वित्यादि । योगोद्युक्तेषु—मोक्षोपायप्रवृत्तेष्वधिकारिषु । यः—पुरुषः । स्ववरणविषयस्स्यात्—स्वस्य परमात्मनो वरणम् अयमस्मदीयस्तस्मान्मां निरन्तरायोऽनुभवतु इत्याकाराकानुग्रहात्मकं ज्ञानं तस्य विषयभूतो भवेत् । तेन—अधिकारिविशेषेण । परात्मा—परमात्मा । लभ्यः—प्राप्यः । 'यमेवैष वृणुते तेन लभ्यः' इति श्रुतेरिति भावः । ग्राह्यत्वञ्च—पुरुषोत्तमेन वरणीयत्वञ्च । प्रियत्वात्—परमपुरुषप्रियत्वाद्भवति । प्रियतम एव हि वरणीयो भवतीति भावः । तदपि—प्रियत्वमपि, गुणतो हि—वरणीयाधिकारिनिष्ठगुणविशेषादेव भवति । निर्हेतुकत्वे प्रियत्ववरणयोस्सर्वे एव वृतास्तेन स्युः । एवं भक्तिरेव श्रुता—एवञ्च सति भक्तिरेव वरणीयताहेतुगुणविशेषत्वेन श्रुता भवति । सा च—भगवन्निष्ठात्मिकेयं भक्तिश्च । अतिशयिते—स्वरूपरूपगुणविभूत्यादिभिस्सर्वातिशयिते । क्वचित्—क्वापि वस्तुनि, प्रवृत्ता सती । प्रीत्यात्मिका धीः—प्रीतिरूपज्ञानात्मिका भवति । यद्वा अतिशयिते—भगवन्निष्ठया अतिशयभाजि भगवन्निष्ठातिशयभाजीति यावत् । क्वचित्—क्वाप्यधिकारिविशेषे । प्रीत्यात्मिका

धीः—भगवद्विषयकात्यर्थप्रीतिरूपज्ञानात्मिका भवति। अतः—श्रुतावपि भक्तेरेव विवक्षितत्वात्। स्मृत्यबाधोऽपि स्यात्—'प्रीतिपूर्वमनुध्यानं भक्तिरित्यभिधीयते' 'भक्त्या त्वनन्यया शक्यः' इत्यादिरूपायाः प्रीतिपूर्वानुध्यानात्मकभक्तेर्मोक्षसाधनत्वं वदन्त्याः स्मृतेश्श्रुत्या अबाधोऽपि भवेत्। अविरोधेन नयने शक्ये विरुद्धार्थकल्पनामूलकान्यतरबाधस्यान्याय्यत्वादिति भावः। एषा च—इयं भक्तिरेव। तैलधाराक्रमेण अनुवहनात्—तैलधारावदविच्छिन्नानुगतसन्ततिकतया। ध्रुवानुस्मृतिः प्रोक्ता—ध्रुवानुस्मृतिरिति श्रुतावुच्यते। स्मृतिसन्तत्यविच्छेदविवक्षया भक्तिरेव ध्रुवा स्मृतिरित्युच्यते नान्या सेति मन्तव्यमिति भावः ॥ ४३७ ॥

रागादादौ प्रवृत्तिश्श्रवणमननयोर्ध्यानमेकं विधेयं
तत्र द्रष्टव्यशब्दो विशदतमतया वक्ति वैशिष्ट्यमात्रम्।
शब्दोत्थं दर्शनं ये विषयमकथयन् वेदनोक्तेरमीषां
व्याघातादिप्रपञ्चस्स्वयमिह निपुणैस्सूक्ष्ममन्वेषणीयः ॥ ४३८ ॥

चिन्ता०—ननु भवता 'निदिध्यासितव्यः' इति ध्यानस्यैकस्यैव मोक्षोपायतया विधेयत्वमुच्यते विधिश्रवणं तु 'द्रष्टव्यश्श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इति चतुर्ष्वर्थेषु दृश्यते तत्कथमित्याशङ्क्य विषयभेदेन विधित्वानुवादत्वविभागं दर्शयति—रागादिति। अयमर्थः—श्रवणमननयोस्तावत्प्राप्तविषयत्वाद् रागादेव प्रवृत्तिः। अप्राप्तत्वान्निदिध्यासनमेकमेव विधेयम्। ननु कथं द्रष्टव्यइतिशब्दे जाग्रति ध्यानमेकं विधेयमित्याशङ्क्य परिहरति—तत्रेति। द्रष्टव्यइतिशब्दस्तस्यैव ध्यानस्य गुणभूतं दर्शनसमानाकारत्वमेव दर्शयति। नपुनर्ध्यानादन्यस्य दर्शनशब्दवाच्यस्य कस्यचिन्मोक्षोपायत्वं दर्शयतीत्यर्थः। अयमत्र भावः—क्वचित् 'ध्रुवा स्मृतिः। स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः' इति ध्रुवानुस्मृतेर्ग्रन्थिविमोक्षोपायत्वमुक्तम्। अपरत्र 'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे॥' इति दर्शनस्य ग्रन्थिविमोक्षोपायत्वमुक्तम्। नात्र स्मरणदर्शनयोर्निरपेक्षमोक्षोपायतया पृथगेव विहितयोस्समुच्चयस्संभवति; नैरपेक्ष्यश्रवणादेव। नापि विकल्पः—गुरुलघ्वोर्विकल्पानुपपत्तेः। तेन स्मरणस्य दर्शने पर्यवसानं कृत्वा द्वयोरप्येकत्वेन ग्रन्थिविमोक्षोपायत्वं वक्तव्यम्। अत्र दर्शनमिति दर्शनसमानाकारत्वमेवोच्यते। तत्तु स्मृतिवैशद्यं न पुनस्साक्षाद्दर्शनत्वम्। स्मृतित्वदर्शनत्वयोर्विरुद्धजातित्वेनैकत्रैव समन्वयायोगात्। एवं निर्णीते शास्त्रार्थे 'द्रष्टव्यो निदिध्यासितव्यः' इत्यत्रापि निदिध्यासनस्य वैशद्यातिशयाद्दर्शनत्वमुपचर्यते। अपकृष्टे ह्युत्कृष्टशब्द औपचारिकः। यथा राजभृत्ये राजशब्दः। एवमत्राप्य-

साक्षात्काररूपे स्वयं स्मृत्यात्मनि निदिध्यासने दर्शनशब्देन साक्षात्कारत्वमुपचर्यते। एकत्र निर्णीतस्य शास्त्रार्थस्येतरत्रापि ग्राह्यत्वात्। अत्र वेदनशब्दस्य द्रष्टव्यपदानुसारेण शब्दजन्यप्रत्यक्षविषयत्वं दशमस्त्वमसीत्यादिवदिति वदन्तिताननूद्य दूषयति—शब्दोत्थमिति। व्याघातादिप्रपञ्च इति—अत्र स्वव्याघातस्सर्वलोकविरोधः प्रमाणलक्षणविभागविरोध इत्यादिशब्देन गृह्यते। प्रत्यक्षं शब्दजन्यमिति वचनमेव विरुध्यते। एवमन्यदपि द्रष्टव्यम्। तर्हि दशमस्त्वमसीत्यत्र प्रत्यक्षोत्पत्तिः कथम्? तत्र न प्रत्यक्षोत्पत्तिः। अपि तु वाक्यात्परोक्षज्ञाने सञ्जाते स्वयमेव परामर्शात्मकं प्रत्यक्षसामग्र्युत्थापनमेव भवति ततस्त्वात्मनि दशमत्वविषयं मानसं प्रत्यक्षं जायत इति न परस्परं प्रमाणसङ्करप्रसङ्ग इति। तमिममर्थं दर्शयति—अमीषामिति। निपुणैरन्तेवासिभिस्सूक्ष्मं विचारणीय इत्याह—निपुणैरिति। अत्र निपुणत्वं प्रमाणविभागदर्शनकुशलत्वम्॥ ४३८॥

पद०—रागादादावित्यादि। आदौ-प्रथमतः, अधीतसाङ्गसशिरस्कवेदस्याधिकारिणोऽध्ययनक्रमेण पूर्वमीमांसया कर्म विचार्य तेनाधिगताल्पास्थिरफलकेवलकर्मज्ञानस्य सञ्जातमोक्षाभिलाषस्य वेदान्तशुश्रूषया प्रवृत्तिकाले। श्रवणमननयोः—'श्रोतव्यो मन्तव्यः' इत्युक्तयोश्श्रवणमननयोः। प्रवृत्तिः। रागात्—आपातप्रतीतोपनिषदर्थनिर्णयरागादेव, श्रवणप्रतिष्ठार्थत्वान्मननस्य मननेऽपि श्रुतार्थप्रतिष्ठापनरागादेव। तर्हि किं विधेयमिति चेत्—ध्यानमेकं विधेयम्। अनेकविधौ वाक्यभेदस्स्यादिति भावः। तर्हि 'द्रष्टव्यः' इत्यस्य का गतिरिति चेत् द्रष्टव्यशब्दः—'द्रष्टव्यः' इत्ययं शब्दः। तत्र—ध्याने। विशदतमतया—स्वशक्यार्थप्रत्यक्षनिष्ठवैशद्यातिशयरूपगुणविशेषेण सह। वैशिष्ट्यमात्रं वक्ति—सम्बन्धमात्रं प्रतिपादयति। तथा च द्रष्टव्यो निदिध्यासितव्यइति दर्शनसमानवैशद्यातिशयविशिष्टध्यानविधिः अतो न वाक्यभेदप्रसक्तिरिति भावः। ये—मृषावादिप्रभृतयः। वेदनोक्तेः—'ब्रह्म वेद ब्रह्मैव' इत्यादिश्रुतवेदनशब्दस्य। शब्दोत्थं दर्शनम्—शब्दजन्यप्रत्यक्षम्। विषयम्—अभिधेयम्। अकथयन्—अभ्यधुः। वेदनशब्दस्य द्रष्टव्यपदानुसारेण दशमस्त्वमसीत्यादिवाक्यजन्यप्रत्यक्षवत् प्रत्यक्षात्मकं 'तत्त्वमसि' इत्यादिवाक्यजन्यं ज्ञानमर्थ इति येऽवदन्नित्यर्थः। अमीषाम्—उक्तरीत्या शब्देन प्रत्यक्षोत्पत्तिमङ्गीकुर्वताम्। व्याघातादिप्रपञ्चः—प्रत्यक्षं शब्दजन्यमिति स्ववचनविरोधः, सर्वलोकविरोधः, प्रमाणलक्षणविभागविरोध इत्यादिविरोधविस्तारः। इह—अस्मत्सम्प्रदाये। निपुणैः—श्रुतार्थाविरुद्धापूर्वार्थधाराकल्पनाकल्पकमेधाशालिभिरस्मदन्तेवासिभिः। स्वयम्—अस्मत्कण्ठोक्तिं विनापि स्वातन्त्र्येण। सूक्ष्मम्—सावधानमित्यर्थः। अन्वेषणीयः—विचारणीयः॥ ४३८॥

ध्याने वैशद्यमात्रादुपचरणवती दृष्टिशब्दप्रवृत्तिः
स्यात्तुल्यं तत्तवापि ह्यभिलपति धियं चाक्षुषीं दृष्टिशब्दः ।
घ्रातास्प्रष्टेतिशब्दः करणविरहिते मुख्यवृत्तो नहि स्यात्
तद्ग्राह्यस्त्वस्मदीयो बहुनयगुणवांस्त्याज्य एव त्वदीयः ॥ ४३९ ॥

चिन्ता०—ननु भवत्पक्षे दर्शनसमानाकारमात्रकथनाद् द्रष्टव्यइतिशब्द औपचारिकस्स्यादिति परपक्षिणोक्ते तदङ्गीकृत्य त्वत्पक्षेऽप्यौपचारिक एवेति प्रतिबन्द्या परिहरति—ध्यान इति । अयमर्थः— ध्याने वैशद्यमात्राद् दृष्टिशब्दप्रवृत्तिरुपचरणवतीतीममर्थमङ्गीकुर्महे । तदूपचरणं भवत्पक्षेऽपि तुल्यमित्याह— तुल्यमिति । तदेव विवृणोति—अभिलपतीति । दृष्टिशब्दो हि चाक्षुषीमेव धियं ब्रूते । ब्रह्मणि तु न चाक्षुषी दृष्टिः, अपितु मानसी । तस्यामौपचारिकदृष्टौ दृष्टिशब्दो न मुख्य इति तवापि तुल्यमित्यर्थः । तुल्यत्वमेव सदृष्टान्तं दर्शयति—घ्रातेति । यथा घ्राता स्प्रष्टेत्यादिशब्दो ब्रह्मविषये तत्तदिन्द्रियजन्या- घ्राणादिकार्यविधुरे न प्रयोक्तुं शक्यते एवं चक्षुर्जन्यज्ञानाविषयभूतब्रह्मज्ञानवति द्रष्टृशब्दोऽपि मुख्यतया प्रयोक्तुमेव न शक्यते तथा च द्रष्टव्यइतिपदस्य गौणत्वं तवापि समानम् । तर्हि यत्रोभयोस्समो दोष- इति न्यायेन द्वयोः पक्षयोस्तुल्यत्वे युष्मत्पक्ष एव परिग्राह्यो न पुनरस्मत्पक्ष इति विनिगमनायां को हेतु- रित्याशङ्क्य विशेषमाह—तदिति । तयोस्त्वत्पक्षास्मत्पक्षयोस्तुल्यभावे सति । अथवा तदिति हेतुनिर्देशः । तस्मात् एवमुपपादनादित्यर्थः । बहुनयगणवानस्मत्पक्षो बहुन्यायोपेतः । युष्मत्पक्षस्त्वल्पन्यायमूल इत्यर्थः । तु शब्दो विशेषमेव दर्शयति ॥ ४३९ ॥

पद०—ध्यान इत्यादि । ध्याने—'निदिध्यासितव्यः' इति विहिते ध्याने । वैशद्यमात्रात्— वैशद्यरूपगुणमात्रेण नतु साक्षात्कारित्वेन । दृष्टिशब्दप्रवृत्तिः—प्रत्यक्षवाचकदृष्टिशब्दस्य बोधकतया सम्बन्धः । उपचरणवती—भृत्ये राजशब्दवदौपचारिकी लाक्षणिकीति यावत् । स्यात्—अस्तु । तत्— दृष्टिशब्दस्यौपचारिकत्वम् । तवापि—शब्देन प्रत्यक्षोत्पत्तिमङ्गीकुर्वतस्तवापीत्यर्थः । तुल्यम्—समानम् । दृष्टिशब्दः । चाक्षुषीम्—चक्षुर्जन्याम् । धियं हि अभिलपति—वदति । तथा च चक्षुर्जन्यज्ञानं ब्रह्म- विषये त्वत्पक्षेऽपि नास्तीति मानसे ज्ञानविशेषे दृष्टिशब्दस्यौपचारिक्येव प्रवृत्तिस्तवापीति भावः । घ्राता- स्प्रष्टेतिशब्दः—घ्राणादीन्द्रियजन्यज्ञानाश्रयवाची घ्रातेत्यादिशब्दः । करणविरहिते—ब्रह्मविषयकतत्तदि- न्द्रियजन्यघ्राणस्पर्शनादिकार्यविधुरे । मुख्यवृत्तो न स्याद्धि—मुख्यं शक्तिद्वारकं वृत्तं बोधनं यस्य स मुख्यवृत्तस्तादृशो न भवेद्धि । ब्रह्मघ्राता ब्रह्मस्प्रष्टेत्यादिशब्दा यथा मुख्यार्था न सम्भवन्ति तथैव ब्रह्म-

द्रष्टेत्यत्रापि मुख्यवृत्तिर्न सम्भवतीतीदमावयोरुभयोस्तुल्यमिति भावः। द्वयोः पक्षयोस्तुल्यत्वे युष्मत्पक्षस्यैव ग्राह्यत्वे को हेतुरित्यत्राह—तदित्यादि। तत्—एवमुपपादनात्। बहुनयगुणवान्—बहुभिर्न्यायैर्गुणवानुत्कर्षवान्। बहुनयगणवानिति पाठो दृश्यते बहवो न्यायगणास्तद्वानिति तदर्थः। अस्मदीयस्तु—पक्ष इति अत्रोपरि च शेषः। दर्शनसमानाकारत्वविशिष्टध्यानविधिपक्ष एव। ग्राह्यः—त्वयापीति शेषः। त्वदीयः पक्षस्तु, त्याज्य एव—व्याघातादिप्रपञ्चयुक्ततया त्वयापि त्याज्य एव। गुणे हि पक्षपातस्सर्वैरपि कार्य इति हृदयम्॥ ४३९॥

न द्वारद्वारिक्लृप्तिः कथमपि घटते विश्रमश्चेद्विशेषे
सामान्यात्मा विशेषैर्लघु च न गुरुभिः कर्तुरैक्ये विकल्प्यम्।
अर्थैक्ये दर्शनोक्त्या स्मृतिरुपचरिता युज्यते स्पाष्ट्यसिद्ध्यै
स्मृत्युक्त्या दर्शनस्योपचरणमसदित्यन्यदेतत्फलान्नः॥ ४४०॥

चिन्ता०—नन्वत्र वेदनात् ध्यानं ध्यानाद् ध्रुवानुस्मृतिः ध्रुवानुस्मृतेर्दर्शनं दर्शनाद् भक्तिरिति द्वारद्वारिभावएवास्त्वित्याशङ्क्यैकत्र विश्रान्तौ सम्भवन्त्यां तत्परिकल्पनं गौरवादन्याय्यमित्याह—नद्वारेति। अयमत्र शब्दान्वयः—विशेषे विश्रमश्चेन्न द्वारद्वारिक्लृप्तिः कथमपि घटते। तर्हि वेदनादीनां भक्तिपर्यन्तानां विकल्पस्स्यादित्याशङ्क्य तदपि नेत्याह—सामान्यात्मेति। नहि सामान्यविशेषयोर्विकल्पः परिगृह्यते न्यायविद्भिः। यथा पशुच्छागयोः। अपित्वेकस्यान्यत्र पर्यवसानमेव स्वीक्रियते। किञ्च गुरुलघ्वोर्विकल्प एव न संभवतीत्याह—लघ्विति। नहि स्नानप्रोक्षणयोरेकस्मिन्नधिकारिणि विकल्पस्स्वीक्रियते न्यायविद्भिः। तर्हि शक्ताशक्तभेदेन तत्र विकल्पवदत्रापि विकल्पः कल्प्यतामिति चेत्तदपि न; विकल्पे तावदष्टदोषदुष्टत्वं दोषः। अधुना पुनर्व्यवस्थितविकल्पत्वपरिग्रहेऽधिकारिव्यवस्थापरिकल्पनमधिकदोषः। सर्वेष्वपि वाक्येषु मुमुक्षुत्वमेवाधिकारिविशेषणत्वेन श्रूयते। नपुनरेकैकं विशेषणमन्यदन्यदेवाकर्ण्यत इत्यर्थः। नचात्र शक्ताशक्तभेदेन विकल्पः—अश्रवणात्। अश्रुतमपि कल्प्यत इति चेत् कल्पनैव दोषः। तदिदमाह–कर्तुरैक्य इति। भिन्नाधिकारित्वे निर्णीते व्यवस्थितविकल्पत्वं युज्येतापि। नपुनरत्र भिन्नाधिकारित्वं निर्णीतमित्यर्थः। तर्हि ध्रुवानुस्मृतौ दर्शनत्वमुपचरितमिति भवतोक्तम्, दर्शने ध्रुवानुस्मृतित्वमुपचरितमिति विपरीतं किं न स्यादित्याशङ्क्याह—अर्थैक्य इति। उपचारो ह्यन्यत्रातिशयितार्थाभिधानेन गुणीकरणम्। तत्तु ध्याने तदधिकार्थाभिधाने युज्यते सिंहो देवदत्त इत्यादिवत्, तेन स्मरणे साक्षात्कारत्ववचनमुपचारस्स्यात्। साक्षात्कारे स्मरणत्वाभिधानं त्वपचार एव स्यात्। राजनि

भृत्यत्वकथनवत्। तेन ध्याने साक्षात्कारत्वमुपचर्येत इत्ययमेव न्याय्यो मार्गः। अयमत्र शब्दान्वयः—अर्थैक्ये सति दर्शनोक्त्या स्पाष्ट्यसिद्ध्यै स्मृतिरुपचरिता युज्यते। स्मृत्युक्त्या दर्शनस्योपचरणं तु असत् अन्याय्यम्। ननु द्रष्टव्य इति फलमेव ब्रह्मसाक्षात्कार उच्यते न पुनरुपाय इत्याशङ्क्याह—अन्यदिति। स पुनः परेषामेव सिद्धान्तः, अस्माकं तु 'द्रष्टव्यः' इति विधिश्रवणाद् विधेयमेवोपासनं दर्शनसमानाकारत्वेनोच्यत इति सिद्धान्त इत्यर्थः॥ ४४०॥

पद०—न द्वारद्वारिक्लृप्तिरित्यादि। विशेषे—पशुशब्दस्य च्छागरूपविशेष इव वेदनादिशब्दस्य भक्तिरूपे विशेषधर्मविशिष्टे। विश्रमश्चेत्—पर्यवसानं संभवति चेत्। द्वारद्वारिक्लृप्तिः—वेदनध्यानध्रुवानुस्मृतिदर्शनभक्तीनां द्वारद्वारिभावकल्पना। कथमपि—केनापि प्रयासेन। न घटते—न सम्भवति। एकत्र विश्रान्तौ सम्भवन्त्यां द्वारद्वारिभावकल्पनागौरवस्य हेयत्वादिति भावः। सामान्यात्मा—पश्वादिपदार्थवत् सामान्यधर्मविशिष्टो वेदनादिपदार्थः। विशेषैः—छागादिपदार्थवत् विशेषधर्मविशिष्टैर्ध्यानादिपदार्थैस्सह। न विकल्प्यः—न विकल्पार्हः। नहि पशुच्छागयोर्विकल्पस्स्वीकृत इति भावः। कर्तुरैक्ये—अधिकारिभेदस्य प्रमाणाभावेनाधिकार्यैक्ये सिद्धे सति। गुरुभिः—स्नानादिवद्गुरुभूतैर्ध्यानादिभिस्सह। लघु च न विकल्प्यम्—प्रोक्षणादिवल्लघुभूतं वेदनादिकञ्च न विकल्पार्हम्। नहि स्नानप्रोक्षणयोरेकस्मिन्नधिकारिणि विकल्पः। न च शक्ताशक्तादिभेदेन विकल्पोपपत्तिः; तथाविधाधिकारिभेदाश्रवणात्। सर्वत्रैकरूप्येण मुमुक्षुत्वमेव हि अधिकारिविशेषणं श्रूयते नान्यदिति भावः। अर्थैक्ये—उदाहृतसामान्यविशेषन्यायेन वेदनादिशब्दानामर्थैकत्वे सति। स्पाष्ट्यसिद्ध्यै—वैशद्यातिशयरूपगुणविशेषलाभाय। दर्शनोक्त्या—दर्शनवाचकद्रष्टव्यशब्देन। स्मृतिः—'निदिध्यासितव्यः' 'स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः' इत्यादिसिद्धा तैलधारावदविच्छिन्नानुस्यूतसन्ततिका स्मृतिः। उपचरिता—गौण्या लक्षणया प्रतिपादिता। युज्यते—युक्ता। स्मृत्युक्त्या—स्मृतिशब्देन। दर्शनस्य, उपचरणम्—गुणलक्षणया प्रतिपादनं तु। असत्—असाधु। उपचारो ह्यन्यत्रातिशयितार्थाभिधानेन गुणीकरणं यथा सिंहो देवदत्त इत्यादौ, तथा च साक्षात्कारे स्मरणत्वाभिधानमपचार एव स्यात् तेन ध्याने साक्षात्कारत्वमेवोपचर्येत-इत्ययमेव न्याय्य इत्याशयः। ननु द्रष्टव्य इति फलमेव ब्रह्मसाक्षात्कार उच्यते नपुनरुपाय इत्याशङ्क्याह—अन्यदिति। नः—अस्माकम्। अस्मत्सिद्धान्त इत्यर्थः। एतत्—दर्शनम्। फलादन्यत्—उपायभूतमेव। स पुनः परेषामेव सिद्धान्तः, अस्माकं तु विधिश्रवणात् विधेयमेवोपासनं दर्शनसमानाकारत्वेनोच्यत इति सिद्धान्त इत्यर्थः॥ ४४०॥

कृच्छ्रादौ शक्तिहीनो दृढपरितपनस्संयमार्हश्च कुर्यात्
सर्वार्थां केशवानुस्मृतिमिति घटते तद्विकल्पो यथार्हम् ।
सामान्यात्सर्वदोषेष्वियमुपकुरुते सर्वनैमित्तिकानां
मुक्तेरप्यत्र मूलं मुनिरनुमनुते तादृशध्यानरूपाम् ॥ ४४१ ॥

चिन्ता०—एवंभूतस्य भगवदनुस्मरणयोगस्य 'प्रायश्चित्तान्यशेषाणि' इति प्रमाणोक्तस्य द्वयी हि गतिरध्यात्मविद्भिरभिधीयते । तत्तत्प्रायश्चित्तरूपकृच्छ्राशक्तौ तत्तत्स्थाने विकल्पेनावतिष्ठते सोऽयं योग इत्येका गतिः । अपरा पुनस्सर्वेषामपि प्रायश्चित्तानां साद्गुण्यापादकत्वेन भगवदनुसन्धानं तेभ्यस्सर्वेभ्यः प्रायश्चित्तेभ्यः परमुत्कृष्टमिति । अत्र पुनरनादिकालप्रवृत्तस्य कृत्स्नस्यापि पापस्य सर्वप्रायश्चित्तत्वेनेदमेकमेवाभिधीयते । तदिदमाह—कृच्छ्रादाविति । तत्तत्पापप्रायश्चित्ततया विहिते कृच्छ्रादौ शक्तिहीनो दृढपरितपनो दृढानुतापयुक्तस्संयमार्हश्च योगानुष्ठानार्हश्च स्वयं सर्वप्रायश्चित्तस्थानीयां केशवानुस्मृतिं कुर्यादिति 'प्रायश्चित्तान्यशेषाणि' इति श्लोकस्यैकोऽर्थः । अत्र परत्वमेकस्यैव सर्वेष्वपि प्रायश्चित्तेषु विकल्पेनावस्थितत्वम् । यथार्हं तद्विकल्पः—यानि यानि बहूनि प्रायश्चित्तानि दृश्यन्ते तेषामेकैकस्य स्थाने यावत्केशवानुस्मरणं फलप्रदानसमर्थं तावत् तत्रतत्र कर्तव्यमिति । अर्थान्तरं पुनराह—सामान्यादिति । सामान्यात् सर्वेष्वपि दोषेषु प्रसक्तेषु तत्तन्नैमित्तिकानां सर्वेषामपि केशवानुस्मरणं प्रधानसहकारित्वेनोपकुरुते । अस्मिन्पक्षे परत्वमेकस्य सर्वोपकारकत्वं सर्वस्मादप्युत्कृष्टत्वञ्च । एवं 'प्रायश्चित्तानि' इति श्लोकस्यार्थद्वयमुक्त्वा सूत्रकाराभिप्रेतं सर्वप्रधानभूतमर्थान्तरमाह—मुक्तेरिति । केशवानुस्मरणं न केवलमेकैकस्य प्रायश्चित्तस्य स्थानेऽवतिष्ठते, नापि सर्वेषामपि प्रायश्चित्तानां सहकारित्वेनापि केवलं वावतिष्ठते, अपितु स्वयमेकमेवानादिसिद्धानामनन्तानां दुष्कृतानां प्रायश्चित्तत्वेनावतिष्ठत इति सूत्रकाराभिप्रायः । मुक्तेरप्यत्र मूलं न केवलमनिष्टनिवृत्तेः, अनिष्टनिवृत्तिपूर्वकेष्टप्राप्तिरूपमुक्तेरपीदमेव मूलमित्यर्थः ॥ ४४१ ॥

पद०—कृच्छ्रादावित्यादि । कृच्छ्रादौ—तत्तत्पापप्रायश्चित्ततया विहिते कृच्छ्रादौ । शक्तिहीनः—अनुष्ठानशक्तिहीनः । दृढपरितपनः—दृढानुतापयुक्तः । संयमार्हश्च—योगानुष्ठानार्हश्चाधिकारी । सर्वार्थाम्—सर्वप्रायश्चित्तस्थानीयाम् । केशवानुस्मृतिम्—भगवद्ध्यानम् । कुर्यात्—अनुतिष्ठेत् । इति—एवम्प्रकारेण । यथार्हं तद्विकल्पो घटते—कृतबहुविधपापस्याधिकारिणो यानि बहूनि प्रायश्चित्तानि दृश्यन्ते तेषामेकैकस्य स्थाने यावत्केशवानुस्मरणं फलप्रदानसमर्थं तावत् तत्रतत्र कर्तव्यमिति यथोचितं विकल्पो

युज्यते । सामान्यात्—पापसामान्यात् प्रसक्तेषु सर्वदोषेष्वपि । सर्वनैमित्तिकानाम्—तत्तन्नैमित्तिकानां सर्वेषामपि । इयम्—केशवानुस्मृतिः । उपकुरुते—प्रधानसहकारित्वेनोपकरोति । अत्र—सर्वोपनिषद्व्याख्यानरूपे शारीरकशास्त्रे । मुनिः—सर्वोपनिषदर्थसारमननशीलस्सूत्रकारः । तादृशध्यानरूपाम्—आप्रायणानुवृत्तदर्शनसमानवैशद्यातिशययुक्ततैलधारावदविच्छिन्नसन्तानात्यर्थप्रीतिरूपव्यवस्थिततत्तद्भगवद्गुणविषयकध्यानात्मिकां स्मृतिम् । मुक्तेरपि—न केवलं सर्वानिष्टनिवृत्तेः किंतु परमानन्दप्राप्तिलक्षणमुक्तेरपि । मूलम्—प्रधानकारणम् । अनुमनुते—निश्चिनोति स्म । श्रीविष्णुपुराणे 'प्रायश्चित्तान्यशेषाणि तपःकर्मात्मकानि वै । यानि तेषामशेषाणां कृष्णानुस्मरणं परम् ॥' इति सूत्रकारस्य पित्रा भगवदनुस्मृतेरुक्तविशेषं द्वैधानुग्य तत्पुत्रेण सूत्रकारेण भगवदनुस्मरणस्योक्तविशेषणविशिष्टरूपत्वे सकलसंसारनिवृत्तिपूर्वकमोक्षरूपफलहेतुत्वं निश्चितमिति पित्रपेक्षया पुत्रस्य निश्चयस्सर्वातिशयितस्सर्ववेदान्तसारभूत इति हृदयम् ॥ ४४१ ॥

नन्वेवं ये मुकुन्दं शरणमुपगता वर्जिता ध्यानयोगैः
तेचातिक्रम्य मृत्युं यमिन इव परं धाम यन्तीत्युशन्ति ।
सत्यं तेऽपीतिशब्दान्नियतविषययोर्गौरवे लाघवेऽपि
प्राप्तार्थं ध्यानशास्त्रं प्रणिधिसहदशायोगिभिर्योगविद्भिः ॥ ४४२ ॥

चिन्ता०—अत्र 'शरणं त्वां प्रपन्ना ये' इति श्लोके शरणागतेरेव सर्वप्रायश्चित्तत्वेन परमपदप्राप्तिहेतुत्वेन च विधानादुपासनात्मकस्य योगस्य कथं सर्वप्रायश्चित्तत्वमित्याशङ्क्य शक्ताशक्तरूपाधिकारिभेदेन द्वयोरपि सर्वप्रायश्चित्तत्वं द्रढयति—नन्वेवमिति । अयमर्थः—ये मुकुन्दं शरणमुपगता ध्यानयोगैर्वर्जितास्तेऽपि मृत्युमतिक्रम्य यमिनइव योगिन इव परंधाम यन्तीति 'शरणं त्वां प्रपन्ना ये ध्यानयोगविवर्जिताः । तेपिमृत्युमतिक्रम्य यान्ति तद्वैष्णवं पदम्' इत्युच्यते तत्कथं ध्यानयोगस्येदमुपायत्वमिति । अत्रार्धाङ्गीकारेणोत्तरमाह—सत्यमिति । अस्तु शरणागतेर्मोक्षोपायत्वं तथापि योगस्यापि मोक्षोपायत्वमत्रैवोच्यते 'तेऽपि मृत्युमति क्रम्य' इत्यपिशब्दसामर्थ्यात् । नहि त एव मृत्युमतिक्रम्येति सावधारणमुच्यते । अपितु तेऽपीत्यपिशब्दान्वयेन । ततश्च शरणागताश्च वैष्णवं पदं यान्ति तथा योगनिष्ठाश्चेति वाक्याभिप्रायस्स्यात् । तस्मादिदमेव वाक्यं योगनिष्ठानां प्रथमं वैष्णवपदगमनमुक्त्वा तद्वत् शरणागतानामपि वैष्णवपदगमनं वक्तीति न योगनिष्ठानामपवर्गफलप्राप्तिं प्रतिक्षिपतीति न कश्चिदपि विरोधः । नियतविषययोरित्यादि—शक्तस्यगुर्वनुष्ठानमशक्तस्य लघ्वनुष्ठानमिति गौरवे लाघवेऽपि

शक्ताशक्तविषयतया नियतविषययोस्सतोः प्रणिधिसहृदशायोगिभिर्योगविद्भिर्ध्यानशास्त्रं प्राप्तार्थम्—अर्थवदित्यर्थः । शक्तैरेव गुरुतरध्यानशास्त्रमनुष्ठेयमित्युक्तं भवति ॥ ४४२ ॥

पद०—नन्वेवमित्यादि । ननु—किञ्चिदाक्षिप्यत इत्यर्थः । एवम्—एवञ्चेत्, भगवद्भक्तिरेव सर्वप्रायश्चित्तमित्यङ्गीक्रियते चेत् । ये । ध्यानयोगैः—भगवद्ध्यानेन यमनियमादिभिर्योगैश्च । वर्जिताः—रहिताः । मुकुन्दम्—मोक्षदायिनं पुरुषोत्तमम् । शरणमुपगताः—शरणागताः । ते च—भक्तिहीनाश्शरणागतिमात्रावलम्बिनस्ते चाधिकारिणः । यमिन इव—भक्तिनिष्ठा योगिन इव । मृत्युम्—संसारम् । अतिक्रम्य—निरस्येत्यर्थः । परम्—सर्वोत्कृष्टं मुक्तैकसेव्यम् । धाम—वैकुण्ठाख्यं दिव्यलोकम् । यद्वा परन्धामेति परमात्मैवोच्यते प्रमाणश्लोके 'वैष्णवं पदम्' इति भगवत्स्वरूपपरम् । यन्ति—प्राप्नुवन्ति अनुभवन्ति । इति—एवम् । उशन्ति—प्रतिपादयन्ति । मुनय इति शेषः । अयमत्र प्रमाणश्लोको विवक्षितः—'शरणं त्वां प्रपन्ना ये ध्यानयोगविवर्जिताः । तेऽपि मृत्युमतिक्रम्य यान्ति तद्वैष्णवं पदम् ॥' इति । तथा चानेन श्लोकेन शरणागतेर्हि मुक्तिहेतुत्वेन सर्वसांसारिकदोषप्रायश्चित्तत्वमुच्यते तत्कथं ध्यानयोगस्येति शङ्का । सत्यम्—शरणागतेस्तादृशत्वमिष्टमेव नैतावता भक्तेस्तन्निषेधः यतस्तस्मिन्नपि श्लोके भक्तेरतादृशत्वमुच्यते । कथमितिचेत्—तेऽपीति शब्दात् । 'तेऽपि मृत्युमतिक्रम्य' इत्यत्र भक्तिनिष्ठसमुच्चयपरात् तेऽपीतिशब्दात् । नहि ते एव मृत्युमतिक्रम्य यान्तीत्युक्तं किंतु तेऽपीत्यपिशब्दान्वयेन तथा च शरणागताश्च वैष्णवं पदंयान्ति तथा योगनिष्ठाश्चेति खलु वाक्यार्थस्स्पष्टमवगम्यते । गौरवे—आप्रायणानुवर्तनीयत्वकृतानुष्ठानगौरवे । लाघवेऽपि—सकृत्कर्तव्यत्वकृतेऽनुष्ठानलघुत्वेऽपि । नियतविषययोः—शक्तस्य गुर्वनुष्ठानमशक्तस्य लघ्वनुष्ठानमिति व्यवस्थितविषययोर्भक्तिशरणागत्योः । प्रणिधिसहृदशायोगिभिः—विलम्बितफलयोगानुष्ठानसहनयोग्यविलम्बक्षमस्वरूपावस्थायुक्तैः । योगविद्भिः—योगनिष्ठैः । ध्यानशास्त्रम्—भक्तिविधायकशास्त्रम् । प्राप्तार्थम्—अर्थवत् । तथा च शक्ताशक्ताधिकारिभेदेन भक्तिप्रपत्त्योस्सर्वपापप्रायश्चित्तरूपत्वात् नान्यतरकथनेनान्यतरपर्युदास इति भावः ॥ ४४२ ॥

धर्मो वर्णादियोग्यः कलुषशमनतस्सत्त्ववृद्ध्योपकारी
भक्तेस्तद्वत्प्रपत्तिस्त्वगतिकसमयेष्वन्तरायापहन्त्री ।
सानुक्रोशे हि शक्ते शरणवरणतस्सर्वसाध्यं सुसाधं
मोक्षाकाङ्क्षी प्रपद्ये शरणमहमिति क्वापि मन्त्रे श्रुतञ्च ॥ ४४३ ॥

इत्याद्यावृत्त्यधिकरणम् ॥ १२४ ॥

चिन्ता०—वर्णाश्रमधर्माणां यथान्तःकरणनैर्मल्यनिर्वृत्तिद्वारेणोपासनहेतुत्वम् , तथाङ्गप्रपत्तेरपि तेनैव द्वारेणोपासनहेतुत्वमस्तीति सप्रमाणकमाह—धर्म इति । शब्दान्वयस्तु—वर्णादियोग्यो धर्मो हृदयकालुष्यशमनेन सत्त्वाभिवृद्ध्या यथा भक्त्युपकारी तद्वत् प्रपत्तिरप्यगतिकसमयेष्वनन्यसाध्यत्वसमयेष्वन्तरायापहन्त्री भवति । अयं किल प्रपत्तेस्स्वभावः—सानुक्रोशे कृपायुक्ते शक्ते पुरुषे शरणवरणतस्सर्वसाध्यं सर्वमप्यभीष्टं सुसाधमिति । ततश्च मोक्षसाधनभूतोपासनाशक्तौ प्रपत्तिस्तत्स्थाने स्थित्वा मोक्षमेव साधयति । उपासनाङ्गभूतकर्मयोगाद्यशक्तौ तु कर्मयोगादिस्थाने स्थित्वोपासनमेव साधयति ।' तदिदमुभयमपि श्रुतेरभिप्रेतमित्यभिप्रायेण वदति—मोक्षाकाङ्क्षीति । 'मुमुक्षुर्वै शरणमहं प्रपद्ये' इति क्वचिन्मन्त्रे श्रूयते । इदमङ्गप्रपत्तिविषयतया वा स्वतन्त्रप्रपत्तिविषयतया वा यथायोगं योजयितुं शक्यमित्यर्थः ॥ ४४३ ॥

इत्यावृत्त्यधिकरणम् ॥ १२४ ॥

पद०—धर्मो वर्णादीत्यादि । वर्णादियोग्यः—वर्णाश्रमादिसम्बन्धी । धर्मः—सन्ध्योपासनादिर्धर्मः । कलुषशमनतः—हृदयकालुष्यशमनेन । सत्त्ववृद्ध्या—सत्त्वगुणवर्धनेन च । भक्तेरुपकारी—यथा भक्तेर्निर्वर्तकः । तद्वत्—तत्तुल्यम् । प्रपत्तिस्तु—प्रपत्तिश्च । अगतिकसमयेषु—अनन्यसाध्यत्वसमयेषु । अन्तरायापहन्त्री—भक्तिविरोधिनिवर्तनी भवति । कथमेवमित्यत्राह—सानुक्रोश इत्यादि । सानुक्रोशे-कृपायुक्ते । शक्ते—अभिमतार्थसाधनशक्ते । शरणवरणतः—शरणागत्या । सर्वसाध्यम्—सर्वमपि फलम् । सुसाधं हि—सुखेन साधयितुं योग्यं हि । हीत्यनेन प्रमाणप्रसिद्धिरुच्यते । तथा च वचनम्—'यद्येन कामकामेन न साध्यं साधनान्तरैः । मुमुक्षुणा यत्सांख्येन योगेन न च भक्तितः ॥ प्राप्यते परमं धाम यतो नावर्तते पुनः ॥ तेन तेनाप्यते तत्तन्न्यासेनैव महामुने । परमात्मा च तेनैव साध्यते पुरुषोत्तमः ॥' इत्यादि । तथा च धर्मिग्राहकमानेन प्रपत्तेस्सकलफलसाधनत्वं स्वभाव इति भावः । मोक्षाकाङ्क्षी—मुमुक्षुः । अहं शरणं प्रपद्ये—उपायमध्यवस्यामि । इति—एवमाकारतया । क्वापि मन्त्रे—

'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै ।
तं ह देवमात्मबुद्धिप्रसादं मुमुक्षुर्वै शरणमहं प्रपद्ये ॥'

इति क्वचिन्मन्त्रे । श्रुतश्च—तथा चाप्राप्तार्थत्वात् मोक्षार्थी भगवन्तं शरणं प्रपद्येतेति विधिरयमित्यर्थः ॥४४३॥

इत्यावृत्त्यधिकरणम् ॥ १२४ ॥

# आत्मत्वोपासनाधिकरणम् ॥ १२५ ॥

सूत्रम्—आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॥ ४७२ ॥

जीवादत्यन्तभिन्नस्स विभुरभिदधे लक्षणैस्साधनान्तैः
मुक्त्यर्थोपासनेऽस्मिन्मुषिततमसि न ब्रह्मदृष्ट्यादियुक्तिः ।
तत्त्वज्ञे वीतरागे तदिह न घटते सोऽहमस्मीत्युपास्तिः
तन्न स्वात्मान्तरात्मन्यहमितिवचसोऽप्यत्र मुख्यप्रवृत्तेः ॥ ४४४ ॥

चिन्ता०—पूर्वं परब्रह्मोपासनमसकृदावृत्तं कर्तव्यमित्युक्तम् । इदं पुनरिदानीं चिन्त्यते—किमुपास्यं ब्रह्म उपासितुरन्यत्वेनोपास्यमुतोपासितुरात्मत्वेनेति शङ्कया सङ्गतिः । अयमेव विचारस्तदर्थविचारोपक्रमः—किमात्मत्वेनोपासने ' पृथगात्मानम् ' इति विहितपृथक्त्वानुसन्धानविरोधः प्रसज्यते नेति । तत्र पूर्वपक्षमाह—जीवादिति । साधनान्तैस्साधनपर्यवसानैर्लक्षणैरध्यायैर्जीवादत्यन्तभिन्नस्स च विभुरित्यभिदधे स परमपुरुषः । तस्मादस्मिन्नणुरूपजीवबुद्धिस्तत्त्वतः कर्तुमेव न शक्यत इत्यर्थः । ननु गरुडमात्मानं जानीयादिति न्यायेन स्वात्मनि परमात्मदृष्टिस्स्यादित्याशङ्क्य तदपि नेत्याह—मुक्त्यर्थेति । अयमर्थः—क्षुद्रफलप्राप्तौ हि दृष्टिविधीनामुपयोगः, अत्र तु मुक्त्यर्थोपासने मुषिततमसि सर्वाज्ञाननिवृत्तियुक्ते विपरीतज्ञानरूपान्यत्रान्यदृष्टिर्न स्यादिति । तेन स्वाभिप्रेतं निगमयति—तत्त्वज्ञ इति । तत्त्वज्ञे—यथार्थज्ञानवति वीतरागे फलान्तरप्राप्तिरागविधुरे सोऽहमस्मीत्युपास्तिर्न स्यादेव । तदिदं प्रतिक्षिपति—तन्नेति । अयमर्थः—यदि स्वात्मपरमात्मनोस्स्वरूपैक्यमत्रोपदिश्येत तदा भ्रान्तित्वान्न मुक्तिहेतुः । यदि च स्वात्मनि परमात्मदृष्टिरुपदिश्येत, तदोद्गीथोपासनादिवद् दृष्टिविधित्वादपवर्गसाधनं न स्यात् । नेदमुभयमप्यत्रोपदिश्यते अपि तु स्वान्तर्यामित्वेन भगवदनुसन्धानम् , तच्च परमार्थविषयत्वान्मुक्तिसाधनमेवेति न कश्चिदत्र विरोध इति । तदिदमाह—स्वात्मेति । तर्ह्यहंशब्दस्यान्तरात्मवाचित्वे मुख्यवृत्तिर्न स्यादित्याशङ्क्य प्रतिक्षिपति—मुख्यप्रवृत्तेरिति । अयमर्थः--यथा देहवाची देवमनुष्यादिशब्दो देहाधिष्ठातरि जीवेऽपि मुख्य एव प्रवर्तते, एवं जीववाच्यहंशब्दो जीवान्तर्यामिणि परमात्मनि मुख्यतया प्रवर्तत इति । यदि ब्राह्मणक्षत्रियादिशब्दो जीवेऽपि न मुख्यस्स्यात् तदा ब्राह्मणत्वक्षत्रियत्वाद्युपहिताधिकारिविशेषोपादानेन प्रवृत्तानां विधीनाममुख्यत्वं स्यात् तथा चार्थवादमन्त्रयोरपि तत्तदौपाधिकाकारविशिष्टपुरुषविषयतया प्रवृत्तयोरमुख्यत्वं स्यादिति सर्ववेदवाक्येषु मुख्यत्वपरित्याग इति साहसमेतत् ॥ ४४४ ॥

पद०—जीवादित्यादि । साधनान्तैः—साधनपर्यवसानैः । यद्वा साधनशब्दस्साधनपरतृतीयाध्यायवाची । सः अन्तः, अन्ते वा येषां तैस्साधनान्तैः । तद्गुणसंविज्ञानः । लक्षणैः—अध्यायैः । तथा च त्रिभिरध्यायैरित्यर्थः । सः—प्रसिद्धः । जिज्ञास्यत्वेन कारणत्वेन दुर्धर्षप्रमाणगम्यत्वेन सकलपरविद्योपास्यत्वेन च प्रकृतः । विभुः—परमात्मा । जीवादत्यन्तभिन्नोऽभिदधे—संसारभयार्तात् तच्छान्त्यर्थं ब्रह्मजिज्ञासोर्ब्रह्मसृज्यात् जाग्रत्स्वप्नसुषुप्तिमुग्धिप्रभृतिदुरवस्थापन्नादुपासकात् स्वशरीरभूतात् जीवात्मनः अत्यन्तभिन्नः तिमिरात्तेज इव छायाया आतप इव पापात्पुण्यमिव शरीराच्छरीरीव कान्तेः रत्नमिव घटत्वादिजातेर्घटादिरिव सर्वदावैजात्यं प्राप्त इति वेदान्तवाक्यैस्सर्वैरपि सूत्रैः कण्ठोक्त्या तात्पर्येण चाभ्यधायि । क्षपिततमसि—निश्शेषविध्वस्तनिखिलाज्ञाने । अस्मिन्—प्रकृते । मुक्त्यर्थोपासने—क्षुद्रफलकनामाद्युपासनेभ्योऽत्यन्तविलक्षणे मोक्षार्थोपासने । ब्रह्मदृष्ट्यादियुक्तिर्न—अब्रह्मणि नामादाविव अब्रह्मण्यपि जीवे ब्रह्मदृष्ट्यादियोगो न सम्भवति । क्षुद्रफलविषये दृष्टिविधेरुपयोगेऽपि मुक्त्यर्थोपासने दृष्टिविधिर्हि सर्वथा न सम्भवति तथा सति अयथाभूता मुक्तिस्स्यादिति भावः । तत्—तस्मात् कारणात् । तत्त्वज्ञे—सकलक्षुद्रफलसाधनवैलक्षण्यज्ञानशालिनि । वीतरागे—अत एव दोषसप्तकयुक्तेषु त्रैवर्गिकेषु फलेषु तृष्णारहिते । इह—मुमुक्षावधिकारिविशेषे । सोऽहमस्मीत्युपास्तिः—अहं परमात्मास्मीत्युपासनम् । न घटते—न युज्यते । तन्न—उक्तं शङ्कनं न युक्तम् । स्वात्मान्तरात्मनि—स्वात्मनोऽन्तरात्मनि परमात्मनि । अत्र—उपासने । अहमिति वचसोऽपि—उपासनसमयेऽनुसन्धीयमानस्याहमितिशब्दस्यापि । मुख्यप्रवृत्तेः—शक्त्यैव बोधनात् । तथा चाहमित्यादिशब्दस्यापि जीवान्तरात्मभूतपरमात्मनि मुख्यत्वात् स्वान्तर्यामित्वेन भगवदनुसन्धानमेवेदमिति नाब्रह्मणि ब्रह्मदृष्टेर्वा जीवब्रह्मणोस्स्वरूपैक्यस्य वा प्रसङ्ग इति भावः ॥ ४४४ ॥

वस्विन्द्रादेरुपास्तौ प्रकृतिशबलितस्वान्वितेक्षा पुरोक्ता
शुद्धस्स्वात्मा च चिन्त्यः क्वचिदिह तु विभुस्तादृशा स्वेन युक्तः ।
व्यक्तिर्जीवेशभेदे व्यधिकरणपदैर्भावने स्यात्तथापि
ब्रह्माधीनस्वरूपप्रमितिसुदृढतासिद्धयेऽहङ्ग्रहोक्तिः ॥ ४४५ ॥

चिन्ता०—अत्राहङ्ग्रहोपासनस्य प्रयोजनाभावं वदतः कस्यचित् तत्प्रयोजनविशेषं दर्शयति—वस्विन्द्रादेरिति । अयमत्र चोदकस्याभिप्रायः—'किमत्राहङ्ग्रहोपासनाभिधाने विशेषप्रयोजनम्? अचिद्विशिष्टस्वात्मविशिष्टपरमात्मोपासनञ्चेत् तद् वस्विन्द्रादेरुपास्तिप्रसङ्गे प्रागेवोक्तम् । शुद्धश्च स्वात्मा

क्वचिच्चिन्त्यः—प्रकृतिसंसर्गरहितश्शुद्धोऽप्यात्मा क्वचिच्चिन्तनीय एव । इह तु शुद्धेन स्वेन युक्तो विभुः परमात्मा चिन्त्य एव । तादृशा—शुद्धेनेत्यर्थः । तदिदं जीवपरयोर्भेदचिन्तनमेव—अहम् त्वम्, इति तयोर्भेदेन व्यपदेशात् । जीवेशभेदे च व्यक्तिरभिव्यक्तिर्व्यधिकरणपदैश्चिन्तने स्यात् न पुनस्समानाधिकरणपदैश्चिन्तने । तथाचाहङ्ग्रहोपासने किं फलम् ?' इति । अत्रोत्तरम्—तथापीति । यद्यपि त्वदुक्तं युक्तमेव तथापि ब्रह्मपरतन्त्रस्वरूपप्रमितेस्सुदृढता अहङ्ग्रहोपासनादेव भवति तदर्थमहङ्ग्रहोक्तिस्सफलैवेति ॥ ४४५ ॥

पद०—वस्विन्द्रादेरित्यादि । प्रकृतिशबलितस्वान्वितेक्षा—अचिद्विशिष्टस्वात्मविशिष्टपरमात्मोपासना । वस्विन्द्रादेरुपास्तौ—मधुविद्यायामिन्द्रप्राणविद्यायाञ्च 'मध्वादिष्वसम्भवात्' इत्याद्यधिकरणे 'प्राणस्तथानुगमात्' इत्यधिकरणे च वस्विन्द्राद्युपास्तिप्रसङ्गे । पुरा—प्रागेव । उक्ता । अतस्तदर्थं नाहङ्ग्रहोक्तिरित्यभिधातुं शक्यमिति भावः । शुद्धः—प्रकृतिसंसर्गरहितः । स्वात्मा च—जीवात्मा च । क्वचित्—पञ्चाग्निविद्यादिभेदे । चिन्त्यः—उपास्यः । इह तु—पञ्चाग्निविद्याभिन्नमोक्षोपायविद्यासमुदाये । तादृशा—तादृशेन शुद्धेनेत्यर्थः । स्वेन—जीवात्मना । युक्तः—विशिष्टः । विभुः-परमात्मा । चिन्त्यः—उपास्यः । जीवेशभेदे—जीवेश्वरभेदे । व्यक्तिः—सम्यगवभासनञ्च । व्यधिकरणपदैर्भावने स्यात्—अहं तव दास इत्यादिरीत्या व्यधिकरणपदैर्भावने स्वात्मपरमात्मनोश्चिन्तने भवेत् । तथा च जीवेश्वरभेदाभिव्यक्तिश्चेदहङ्ग्रहोक्तेः फलं तदा व्यधिकरणपदैर्भावन एव तयोर्भेदोऽभिव्यज्येत, नतु त्वमहमिति समानाधिकरणपदैर्भावने, अतो न भेदाभिव्यक्तिश्च फलम् । तथापि—उक्तं सम्यगेव तथापि । ब्रह्माधीनस्वरूपप्रमितिसुदृढतासिद्ध्येऽहङ्ग्रहोक्तिः—ब्रह्मपरतन्त्रं जीवस्वरूपमिति या प्रमितिस्तस्यास्सुदृढतासिद्धये अहङ्ग्रहोपासनस्याभिधानम् । व्यधिकरणपदैर्भावने भेदाभिव्यक्तिसिद्धावपि जातिगुणादेरिव परमात्मपारतन्त्र्यप्रमितिदार्ढ्यं न सिध्येत् अतस्तत्सिद्ध्यर्थं स्वशरीरकपरमात्मवाच्यहंशब्दघटितोपासनकथनमिति भावः ॥ ४४५ ॥

ऐक्योपास्तावहंत्वंत्वमहमितिमतिर्निर्विशेषे कथं स्याद्
भेदाभेदाभिलापः करकमणिकतद्व्योमनीत्या न मुख्यः ।
मत्तुल्यस्त्वं त्वयाहं सम इति वदतां नोपचारोऽपि युक्तः
तस्मात्सर्वान्तरात्मन्ययमहमितिधीराकृतिन्यायसिद्धा ॥ ४४६ ॥

चिन्ता०—परपक्षेष्वहङ्ग्रहोपासनस्य न्यायविरुद्धत्वमुक्त्वा स्वपक्षे पुनर्न्यायोपेतत्वं दर्शयति—

ऐक्योपास्ताविति । तत्र तावन्मृषावादिपक्षे दूषणमाह—निर्विशेष इति । निर्विशेषे वस्तुनि 'त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि' इति त्वमहंशब्दार्थाभावेन त्वमहमितिसमानाधिकरणबुद्धिः कथं स्यात् । तर्हि भेदाभेदमेव भास्करमतानुसारेण वदाम इति चेत् सोऽपि न मुख्य एव करकमणिकयोर्भेद एवाकाशे त्वभेद एव एकत्र भेदश्चाभेदश्च नास्तीति भेदाभेदाभिलापो न मुख्य एव । तर्हि साम्यमेवाहंशब्देनाभिधीयत इत्यपर आह तत्पक्षेऽप्यहंव्यवहारो न मुख्य एवेत्याह—मत्तुल्य इति । 'त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि' इत्यत्र तुल्यत्वं शब्दार्थइति वदतामुपचार एव परिगृहीतस्स्यात् स तु न युक्त एव । एवं परपक्षं दूषयित्वा स्वपक्षमेव सोपपत्तिकं निगमयति—तस्मादिति । सर्वान्तरात्मनीति सामानाधिकरण्यबीजमुच्यते । शरीरात्मभाव एव हि सामानाधिकरण्यनिदानम् । यथा देहिनि देहवाची मनुष्यादिशब्दस्सामानाधिकरण्येन प्रयुज्यते एवमन्तर्यामिणि जीवशब्दस्सामानाधिकरण्येन प्रयुज्यत इति सर्वं सुघटितमेवेति ॥ ४४६ ॥

पद०—ऐक्योपास्तावित्यादि । निर्विशेषे–निर्विशेषे ब्रह्मण्यङ्गीकृते । ऐक्योपास्तौ—'त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि भगवो देवते' इत्युक्तैक्योपास्तौ । अहं त्वं त्वमहमितिमतिः कथं स्यात्–त्वमहंशब्दार्थाभावेन त्वमहमितिसामानाधिकरण्यबुद्धिः कथं स्यात् । करकमणिकतद्वयोमनीत्या भेदाभेदाभिलापो मुख्यो न–करकमणिकगताकाशयोर्यथा भेदोऽभेदश्च तद्वत् त्वमहंपदार्थयोर्भेदाभेदव्यवहारश्चेत् तर्हि मुख्यो न भवति । करकमणिकयोर्भेद एव आकाशे त्वभेद एव न त्वेकत्र भेदोऽभेदश्चेत्यमुख्य एव स्यात् । त्वं मत्तुल्यः, अहं त्वया सम इति वदताम्—तुल्यत्वमहंत्वंशब्दार्थं इति वदताम् । उपचारः—केवललक्षणैव, सोऽपि । न युक्तः—सर्वनिकृष्टस्य सर्वोत्कृष्टस्य च कथं परस्परसाम्यसम्भवः । अतोऽयुक्त एव । तस्मात्–उक्तरीत्या पक्षान्तरेष्वनुपपत्तेः । सर्वान्तरात्मनि–सर्वशरीरके त्वमहमित्यादिजीववाचिशब्दार्थभूतजीवान्तर्यामिणि । अयमहमितिधीः—अयमहमितिसामानाधिकरण्यबुद्धिः । आकृतिन्यायसिद्धा–आकृत्यधिकरणन्यायेन शरीरवाचिशब्दानां शरीरिपर्यन्तत्वाश्रयणेनैव सिध्यति । अभिन्नविशेष्यकत्वभिन्नविशेषणकत्वाङ्गीकारेण सामानाधिकरण्यलक्षणाविरोधात् भेदश्रुत्यविरोधात् शरीरश्रुतिसिद्धजीवगतपरमात्मपारतन्त्र्याभिव्यञ्जनात् तत एव जीवपरयोर्भेदावभासनात् आकृतिवाचिशब्दानां व्यक्तिपर्यन्तत्व इव शरीरवाचिशब्दानां शरीरिपर्यन्तत्वस्य मुख्यत्वात् अयुक्तसाम्यादिकल्पनाभावाच्च साक्षात्परमात्मवाचकस्य शब्दस्य जीवशरीरकपरमात्मवाचिशब्देन सामानाधिकरण्यकल्पनमेव समञ्जसतममिति भावः ॥ ४४६ ॥

अद्वैतं द्वैतहानौ न भवति सुवचं तत्प्रतिद्वन्द्विकत्वात्
द्वैतश्चाद्वैतगर्भं द्वितयमिह हि तत्स्वस्वरूपादभिन्नम् ।
द्वैताद्वैतञ्च तादृक्तदुभयनियमानुज्झनादेव सिध्येत्
सर्वं स्थाने स्थितं स्यात् प्रमितिपरवतां नेतरेषांतु किञ्चित् ॥ ४४७ ॥

चिन्ता०—अत्र 'त्वं वा अहमस्मि भगवो देवते' इत्यस्मिन्वाक्ये द्वैतप्रसङ्गएव नास्ति द्वैतस्य स्वरूपशून्यत्वात् केवलमद्वैतमेव प्रतिपाद्यत इति वदन्तं मृषावादिनं प्रतिक्षिपति—अद्वैतमिति । अयमत्र विकल्पः—अद्वैतशब्देन द्वैतविरोधो वा द्वैतान्यो वा द्वैताभावो वा अभिधीयते अथवा न किञ्चिदभिधीयते तत्र त्रिष्वपि विकल्पेषु प्रतियोग्यभावेन त्रयाणामप्यर्थानामसिद्धिः प्रतियोगिसद्भावे तस्यापि सिद्धिः न किञ्चिदिति पक्षे निरर्थकमेव वचनं स्यात् तेनाद्वैतमितिवदतस्तवावश्यमेव द्वैतमङ्गीकर्तव्यम् । अयमत्र शब्दार्थः—द्वैतहानावद्वैतमितिवचनं न सुवचं द्वैतप्रतिद्वन्द्विकत्वात् । एवमद्वैतहानौ द्वैतमपि न सुवचमिति प्रसङ्गादाह—द्वैतश्चाद्वैतगर्भमिति । अद्वैताभावे द्वैतमपि न स्यात् । एकयोरेव हि द्वित्वं वर्तते तयोरेकत्वमेव ह्यद्वैतमिति भावः । तदेव विवृणोति—द्वितयमिति । द्वित्वाश्रयभूतमेकैकं वस्तु स्वस्वरूपादभिन्नम् । तेन तत्राद्वैतसिद्धिरित्यर्थः । अपर आह द्वैतं मा भूत् अद्वैतं च माभूत् द्वैताद्वैतमेवाङ्गीकरोमीति, तदपि नेत्याह—द्वैताद्वैतमिति । किं द्वैताद्वैतशब्देन द्वैताद्वैतयोस्समाहार उच्यते अथवान्यो यः कश्चिदर्थाभासः तत्र तत्समाहारवचने द्वैतलक्षणमद्वैतलक्षणञ्चाङ्गीकृत्य वक्तव्यम् । तथा च तदुभयनियमानुज्झनात् तद्वचने द्वैतञ्च सिध्यत्यद्वैतञ्च सिध्यति । तदुज्झने तद्वचनमेव तन्न स्यात् । अयमत्र विशेषः—एकत्रैव तद्वचने व्याघातः । विषयभेदेन तद्वचने सुस्थमेवोभयमपि । यस्य कस्यचिदर्थाभासस्योक्तौ शृण्वतां न काचित्क्षतिः । तर्हि द्वैतादिकं सर्वं साधयतां भवतां किं तत्त्वमङ्गीकृतं स्यादित्याशङ्क्य प्रमाणानुसारिणां विषयभेदेन सर्वमपि तत्त्वं प्रमाणाननुसारिणां तु सर्वमप्यतत्त्वमिति निगमयति—सर्वमिति ॥ ४४७ ॥

पद०—अद्वैतमित्यादि । द्वैतहानौ—द्वैताभावे । तत्प्रतिद्वन्द्विकत्वात्—द्वैतप्रतिद्वन्द्विकत्वात् द्वैतप्रतिकोटिकत्वादित्यर्थः । अद्वैतम्—अद्वैतमितिवचनम् । सुवचं न भवति—प्रतिकोटिभूतद्वैताभावे तदभावतदन्यादिरूपाद्वैतपदार्थनिरूपणं दुश्शकमिति भावः । द्वैतश्च—द्वैतपदवाच्यञ्च । अद्वैतगर्भम्—अद्वैतघटितम् । तथाचाद्वैताभावे द्वैतमितिवचनमपि न सुवचमिति भावः । एकयोरेव हि द्वित्वं वर्तते तयोरेकत्वमेव ह्यद्वैतमिति भावः । इह—द्वैताश्रये समुदाये । तद्वितयम्—द्वित्वाश्रयभूतमेकैकं वस्तु ।

स्वस्वरूपादभिन्नं हि—प्रत्येकं स्वस्वरूपाद्वैताश्रयभूतं हि। तेन तत्राद्वैतसिद्धिरित्यर्थः। द्वैताद्वैतञ्च—द्वैताद्वैतपदवाच्यम्। तादृक्—परस्परापेक्षायुक्तार्थद्वयात्मकतया द्वैताद्वैततुल्यम्। अतः, तदुभयनियमानुज्झनादेव सिध्येत्—तयोर्द्वैताद्वैतयोरुभयस्य यौ द्वैतसापेक्षत्वाद्वैतसापेक्षत्वनियमौ तदपरित्यागादेव सिध्येत्। परस्परसापेक्षार्थद्वयसमाहारवचनेऽपि न नैरपेक्ष्यलाभः। अपि त्वर्थद्वयासाधारणस्वस्वप्रतिकोटिसापेक्षलक्षणद्वयसम्पात एवेत्यर्थः। ततश्च द्वैतञ्चाद्वैतञ्च सिध्यति। तादृशनियमोज्झने तद्वचनमेव न स्यात्। अयमत्र विशेषः—एकत्रैव तद्वचने व्याघातः, विषयभेदेन तद्वचने सुस्थमेवोभयमपि। तर्हि द्वैतादिकं साधयतो भवतः किं तत्त्वमिति चेत् प्रमाणानुसारिणां विषयभेदेन सर्वमपि तत्त्वम्, प्रमाणाननुसारिणां तु सर्वमप्यतत्त्वमेवेति निगमयति—सर्वमित्यादिना। प्रमितिपरवताम्—प्रमाणपरतन्त्राणाम्। सर्वम्—द्वैतमद्वैतञ्च। स्थाने—स्वस्वस्थाने, न त्वेकत्र विरुद्धत्वात्। स्थितं स्यात्—स्थितं सत् तत्त्वं भवेत्। इतरेषां तु—प्रमाणाननुसारिणां तु। किञ्चित्—किमपि। न—न तत्त्वं भवेत्। प्रमाणाननुसरणे मानाधीना मेयसिद्धिरिति न्यायेन न किमपि प्रमेयं सिध्येदिति भावः॥ ४४७॥

नन्वद्वैते निषेध्यो गगनकुसुमवद् भ्रान्तिसिद्धोऽस्तु भेदो
मैवं सत्यादभिन्नस्स यदि न खलु तद्भ्रान्तिसिद्धत्वसिद्धिः।
भिन्नत्वञ्चास्य तस्माद्यदि भवति मृषा विद्धि दत्तोत्तरं तत्
सत्यञ्चेत् सत्यभेदोपगतिरिति मुधा दूरतो धावनं वः॥ ४४८॥

इति आत्मत्वोपासनाधिकरणम्॥ १२५॥

चिन्ता०—पूर्वस्मिञ्छ्लोके ह्यद्वैतशब्दे द्वैतस्य निषेध्यत्वेन सत्यत्वमित्युक्तम्। तत्प्रतिक्षिपति पूर्वपक्षी—नन्विति। अयमत्र भावः—यथा गगनकुसुमं नास्तीत्यत्र भ्रान्तिसिद्धमेव गगनकुसुमं निषेध्यम्, तद्वदत्रापि भ्रान्तिसिद्धमेव द्वैतं निषेध्यं स्यात् तथा च द्वैतस्य पारमार्थ्यं न सिध्यति तेनाद्वैतमेव परमार्थ इति। तदेतत्प्रतिक्षिपति—मैवमिति। अत्र विकल्प्य दूषयति—सत्यादिति। स भेदः किं ब्रह्मणस्सत्यादभिन्न उत भिन्नः, भिन्नत्वे तद्भेदः किं परमार्थ उतापरमार्थ इति विकल्पः। प्रथमपक्षे दूषणमाह—न खल्विति। अयमर्थः—सत्यादभिन्नस्य तस्य भेदस्य भ्रान्तिसिद्धत्वे सत्यस्यापि भ्रान्तिसिद्धत्वं स्यात्। तस्याभ्रान्तिसिद्धत्वे भेदस्याप्यभ्रान्तिसिद्धत्वं स्यादिति। एवं सत्यादभिन्नत्वपक्षे दूषणमुक्त्वा भिन्नत्वपक्षेऽप्युभयथा दूषणमाह—भिन्नत्वञ्चेति। स भेदोऽत्र मृषा चेत् सत्यादसत्यभूतस्य भेदात्मकस्य प्रपञ्चस्य भेदो मृषाचेत् तर्हि प्रपञ्चस्य सत्यत्वं ब्रह्मणोऽसत्यत्वं वा स्यात्। तदिदमाह—

दत्तोत्तरमिति । सत्याद् ब्रह्मणोऽसत्यभूतस्य प्रपञ्चस्य तद्भेदस्य सत्यत्वे सत्यभेदाङ्गीकारप्रसङ्ग इति दूरतोधावतस्तव धावनं निरर्थकमेव स्यादित्याह—सत्यश्चेदिति । प्रपञ्चस्य ब्रह्मणो भेदो मिथ्या, अथापि प्रपञ्चे भेदो भवतीति चेन्न व्याघातात्; भेदो मिथ्या भेदोऽस्तीति स्वयमेव भाषणात् । तर्हि शशविषाणस्य सत्याद् भेदस्सत्योऽसत्यवेति वयमप्यनुयुञ्ज्महे इति चेत् सत्य एवेति वयमुत्तरं दास्यामः । नन्वसत्ये शशविषाणे सत्यभेदः कथं निवसिष्यति? न तत्र निवसिष्यति । तर्हि कुत्र? इति चेत्, अवधानेन शृणु । शशविषाणमिथ्यात्वं नाम शशविषाणात्यन्ताभावः । स तु प्रमितप्रतियोगिकाभाववादिनां शशनिष्ठः । अप्रमितप्रतियोगिकाभाववादिनां विश्वनिष्ठः । शशविषाणं मिथ्येति विश्वनिष्ठस्यात्यन्ताभावस्य प्रतियोगिभूतशशविषाणविशेषणत्वं प्रध्वस्तो घट इत्यादिवदिति सन्तोष्टव्यमायुष्मतेति ॥ ४४८ ॥

इति आत्मत्वोपासनाधिकरणम् ॥ १२५ ॥

पद०—नन्वद्वैत इत्यादि । ननु—आक्षेपार्थः । अद्वैते—अद्वैतोक्तौ । गगनकुसुमवत् भ्रान्तिसिद्धो भेदो निषेध्योऽस्तु—गगनकुसुमं नास्तीत्यत्र यथा भ्रान्तिसिद्धमेव गगनकुसुमं निषिध्यते तद्वत् निषेधस्य प्रतियोगिमात्रापेक्षणात् तत्सत्यत्वानपेक्षणाच्च भ्रान्तिसिद्धो भेद एवाद्वैतमित्यत्र निषेध्यो निषेधप्रतियोग्यस्तु । मैवम्—एवं मा शङ्किष्ठाः । सः—भेदः । सत्यात्—सत्यभूताद्ब्रह्मणः । अभिन्नो यदि—अभिन्न इत्यङ्गीकृतो यदीत्यर्थः । तद्भ्रान्तिसिद्धत्वसिद्धिर्न खलु—तस्य भेदस्य भ्रान्तिसिद्धत्वं न सिध्यति । सत्यादभिन्नस्य तस्य भेदस्य भ्रान्तिसिद्धत्वे सत्यस्यापि भ्रान्तिसिद्धत्वं स्यात् तस्याभ्रान्तिसिद्धत्वे तस्याप्यभ्रान्तिसिद्धत्वं स्यादिति भावः । अस्य—भेदस्य । तस्मात्—सत्याद्ब्रह्मणः । भिन्नत्वम्—भेदः । मृषा यदि च भवति—मिथ्याभूतो यदि भवति । तत्—विकल्पशिरः । दत्तोत्तरं विद्धि—सत्याद्भिन्नस्य भेदात्मकस्य प्रपञ्चस्य भेदो मृषा चेत् तर्हि प्रपञ्चस्य सत्यत्वं ब्रह्मणोऽसत्यत्वं वा स्यादित्युत्तरं स्पष्टत्वात् दत्तप्रायमितिभावय । सत्यश्चेत्—भेदस्य सत्यब्रह्मणश्च यो भेदस्स सत्यश्चेत् । सत्यभेदोपगतिरिति—सत्यभूतं ब्रह्म च सत्यभूततयाधुनाङ्गीकृतो भेदभेदश्चेति सत्यवस्तुद्वैधापत्तिरिति ब्रह्मणस्सद्वितीयत्वापत्तिरिति । वः—युष्माकम् । दूरतोधावनं मुधा—परिप्लवकक्ष्योपकक्ष्याक्रमेण बहुदूरं धावनेऽपि स्वपक्षस्थापनाभावात् अनिष्टसंपाताच्च भवत्कल्पनं व्यर्थमनर्थसम्पादकञ्चेति भावः ॥ ४४८ ॥

इति आत्मत्वोपासनाधिकरणम् ॥ १२५ ॥

## प्रतीकाधिकरणम् ॥ १२६ ॥

सूत्रम्—न प्रतीकेन हि सः ॥ ४६२ ॥

नामादिब्रह्मदृष्टावपि तदहमितिप्रत्ययः पूर्ववत्स्यात्
ब्रह्मध्यानत्वसाम्यादिति यदि न नखल्वन्तरात्मा प्रतीकः ।
न ब्रह्मण्यन्यदृष्टिः कथमपि घटते तस्य सर्वाधिकत्वात्
अन्यस्मिन्ब्रह्मदृष्टौ परमिह नियतैर्लक्षणैस्तद्ग्रहोऽर्थ्यः ॥ ४४९ ॥

चिन्ता०—एवं ब्रह्मोपासने स्वात्मतयोपासनं कर्तव्यमित्युक्तम् । एवं 'मनो ब्रह्मेत्युपासीत' इत्यादिषु प्रतीकोपासनेष्वपि ब्रह्मोपासनत्वाविशेषात् स्वात्मतयोपासनं कर्तव्यमित्याशङ्कया सङ्गतिः । तदर्थविचारस्तु—किं 'मनो ब्रह्मेत्युपासीत' इत्यादिषु प्रतीकोपासनेष्वात्मत्वेनानुसन्धानं कर्तव्यमुत नेति । तेषूपास्यं किमुपासितुरात्मा नेति । किं ब्रह्मणः प्रतीको दृष्टिविशेषणमुत प्रतीकस्य ब्रह्मदृष्टिर्विशेषणमिति । अत्र पूर्वपक्षमाह—नामेति । 'नाम ब्रह्मेत्युपासीत' इत्यादिषु ब्रह्मदृष्टौ नामाहमस्मीति प्रत्ययः पूर्ववत् स्यात् 'ब्रह्माहमस्मि' इति प्रत्ययवत् स्यात् । तत्र हेतुमाह—ब्रह्मध्यानत्वसाम्यादिति । तदिदं प्रतिक्षिपति—नेति । प्रतिक्षेपहेतुमाह—न खल्विति । अयमर्थः—साक्षाद्ब्रह्मोपासनेषु ब्रह्मणोऽन्तर्यामित्वाद् ब्रह्मात्मकत्वानुसन्धानं युक्तमेव नामाद्युपासनेषु नामादीनामन्तर्यामित्वाभावान्न नामाद्यात्मकत्वानुसन्धानं युक्तमिति । ननु ब्रह्मण्येवान्यदृष्टिस्स्यात् तथा च ब्रह्मणः प्रधानत्वेन दृष्टिविधावपि ब्रह्मात्मकत्वानुसन्धानं स्यादित्याशङ्क्य परिहरति—न ब्रह्मणीति । ब्रह्मण्यन्यदृष्ट्यभावे हेतुमाह—तस्येति । अयं भावः—'मनो ब्रह्मेत्युपासीत' इत्यादिष्वपकृष्टेपूत्कृष्टदृष्टिरेव हि दृष्टिविधिरित्युच्यते तथा च ब्रह्मण्यन्यदृष्टावुत्कृष्टे स्यादपकृष्टदृष्टिरितिदृष्टिविधिलक्षणं न स्यादिति । अन्यस्मिन्ब्रह्मदृष्टौ दृष्टिविधिलक्षणं स्यादेवेत्याह—अन्यस्मिन्निति । नामादिष्वन्येषु ब्रह्मदृष्टौ केवलं जगत्कारणत्वादिभिर्नियतैर्ब्रह्मलक्षणैस्तत्तत्पदार्थग्रहोऽर्थ्योऽर्थादनपेतो भवतीत्यर्थः । यथा राजभृत्ये राजदृष्टिरपकृष्टविषयोत्कृष्टदृष्टिरूपत्वात् फलहेतुर्भवति, एवमपकृष्टेपूत्कृष्टब्रह्मदृष्टिस्तत्रतत्राभिमतफलहेतुर्भवतीत्यर्थः ॥ ४४९ ॥

पद०—नामादीत्यादि । नामादिब्रह्मदृष्टावपि—'नाम ब्रह्मेत्युपासीत' इत्यादिविहिता या नामादौ नाममनःप्रभृतौ ब्रह्मदृष्टिर्ब्रह्मत्वेनोपासना तस्यामपि । तत्—नामादिकम् । अहमिति, प्रत्ययः—अनुसन्धानम् । पूर्ववत् स्यात्—ब्रह्माहमस्मीतिवत् स्यात् । कुत इति चेत् ब्रह्मध्यानत्वसाम्यात्—

उभयोरपि ब्रह्मध्यानत्वाविशेषात्। इति यदि—एवं शङ्क्यते चेत्। न—तन्न युक्तम्। प्रतीकः—नामादिः। अन्तरात्मा न खलु—स्वस्यान्तरात्मा न भवति खलु। अन्तरात्मा चेत् अहंशब्दस्तत्पर्यन्तस्स्यात् ततश्च तदहमितिसामानाधिकरण्यसम्भवात् अहमित्यनुसन्धीयेत प्रतीकस्यान्तरात्मत्वाभावात् न तस्मिन्नहमित्यनुसन्धानमिति भावः। ननु नामादौ ब्रह्मदृष्टयङ्गीकारे हि विशेष्यस्य नामादेर्नान्तरात्मत्वमित्यहंशब्दायोग- उच्यते ब्रह्मण्येव नामादिदृष्टयङ्गीकारे ब्रह्मणो विशेष्यस्यान्तरात्मत्वादहंग्रहोपपत्तिरित्यत्राह—न ब्रह्मणीत्यादि। तस्य—ब्रह्मणः। सर्वाधिकत्वात्—सर्वोत्कृष्टत्वात्। ब्रह्मणि—तादृशे ब्रह्मणि। अन्यदृष्टिः—निकृष्टनामादिदृष्टिः। कथमपि—केनापि प्रकारेण। न घटते—न युज्यते। अन्यस्मिन्—ब्रह्मणोऽन्यस्मिन्नामादौ। ब्रह्मदृष्टौ—ब्रह्मदृष्टयङ्गीकारे। इह—ब्रह्मणि। नियतैः—असाधारणतया नित्यसिद्धैः। लक्षणैः—जगत्कारणत्वादिव्यावर्तकधर्मैः। तद्ग्रहः—तत्तत्पदार्थग्रहणम्। परम्—अतिशयेन। अर्थ्यः—अर्थात्फलादनपेतः फलहेतुर्भवति। यथा राजभृत्ये राजदृष्टिरपकृष्टविषयोत्कृष्टदृष्टिरूपत्वात् फलहेतुर्भवति एवमपकृष्टेषु नामादिषूत्कृष्टब्रह्मदृष्टिरभिमतफलहेतुर्भवतीति भावः॥ ४४९॥

आत्मन्यब्रह्मभूते भवतु फलवती कुत्रचिद् ब्रह्मदृष्टिः
नैषा वस्तुव्यवस्थां शिथिलयति नरे वैनतेयत्वधीवत्।
एतावन्मात्रमोहादिदमहमिति तु स्थापयन् क्षिप्रमृच्छेत्
इन्द्रत्वारोपदर्पोद्धतनहुषमहाभोगिसंस्थामवस्थाम्॥ ४५०॥

इति प्रतीकाधिकरणम्॥ १२६॥

चिन्ता०—अत्र मृषावादी मन्यते यथा दृष्टिविधौ स्वाभिमतं फलं दृश्यते एवं ब्रह्मैक्यानुसन्धानमिच्छतामस्माकमपवर्गस्स्यादिति। तदिदमाशङ्क्य प्रतिक्षिपति—आत्मनीत्यादिना। अयमर्थः—अब्रह्मभूतेऽप्यात्मनि ब्रह्मदृष्टिः फलवती भवतु नाम तथापि वस्तुव्यवस्था नापलपितुं शक्यते यथा 'गरुडमात्मानं जानीयात्' इत्यत्र न गरुडत्वं प्राप्यते अपि त्वपर्यनुयोज्यत्वाद् विधिशक्तेर्गरुडानुध्यानेन सर्पादिविषनिवृत्तिस्स्येत्स्यतीत्येतावन्मात्रमेव। एतद्दृष्टान्तमात्रदर्शनेन मोहाद् 'ब्रह्माहमस्मि' इतीममर्थं स्वरूपैक्यावलम्बनेन परमार्थत्वेन स्थापयन्मृषावादी नमुचिसूदनभावनोद्धतनहुषन्यायेन प्रभ्रष्टपदो निकृष्टावस्थां नियतमेव भजत इत्याह—एतावन्मात्रेति। अपवर्गार्थं प्रवृत्तः कुटिलगतीनां भोगिनां साम्यं भजतीति पारिहासिकोऽयं प्रवादः॥ ४५०॥

इति प्रतीकाधिकरणम्॥ १२६॥

पद०—आत्मनीत्यादि । अब्रह्मभूते आत्मनि—ब्रह्मभिन्ने जीवात्मनि । ब्रह्मदृष्टिः—ब्रह्मत्व मारोप्योपासना । कुत्रचित् फलवती भवतु—क्वचित् फलयुक्ता स्यान्नाम । नरे वैनतेयत्वधीवत्—यथा गरुडमात्मानं जानीयादिति वचनेन मनुष्ये गरुडत्वभावना विषनिवृत्त्यादिफलसाधनभूतापि न मनुष्यगरुडयोर्भेदं निवर्तयति तथा । एषा—ब्रह्मभिन्ने जीवे ब्रह्मदृष्टिरपि । वस्तुव्यवस्थाम्—वस्तुनोः परस्परभेदम् । न शिथिलयति—न निराकरोति । विधिशक्तेरपर्यनुयोज्यस्वभावत्वात् गरुडध्यानेन सर्पादिविषनिवृत्तिस्सेत्स्यति । एतावन्मात्रमोहात्—एवमर्थस्थितावपि दृष्टिविधिमात्रस्य फलवत्त्वदर्शनकृतमोहात् । इदम्—ब्रह्म । अहम्—मदभिन्नम् । इति तु स्थापयन्—एवमुपपादयन् पुरुषः । इन्द्रत्वारोपदर्पोद्धतनहुषमहाभोगिसंस्थामवस्थां क्षिप्रमृच्छेत्—स्वात्मनीन्द्रत्वाध्यासेन यो दर्पस्तेन उद्धतः उद्वृत्तः अगस्त्यादिमहत्तरान्प्रति त्वरितवहनचोदनाय प्रवृत्तो यो नहुषाख्यो राजा तस्यागस्त्यशापप्राप्तमहासर्पाकृतिस्वरूपामवस्थां शीघ्रं प्राप्नुयादित्यर्थः । शास्त्रविधिबलेनैवान्यस्मिन्नन्यदृष्टिरपि फलाय भवति, नतु स्वेच्छया क्वचिदन्यत्वाध्यासः फलवान्भवेत् । तथा सति आत्मानं सार्वभौमं मन्यमानो भिक्षुस्सार्वभौमपदं लभेत । अत एव नहुषस्य स्वस्मिन्निन्द्रत्वभावना विपरीतप्रवृत्तिद्वारा घोरतरानर्थसाधनं बभूव । ततश्चाध्यासोऽपि दोषहेतुरेवेति न तावता जीवब्रह्मैक्यवादप्रवृत्तिर्युक्तेति भावः ॥ ४५० ॥

इति प्रतीकाधिकरणम् ॥ १२६ ॥

---

## आदित्यादिमत्यधिकरणम् ॥ १२७ ॥

सूत्रम्—आदित्यादिमतयश्चाङ्ग उपपत्तेः ॥ ४७५ ॥

तादर्थ्याद् देवतानां फलकरणतया कर्मणश्चोदितत्वात्
आदित्यादौ निकृष्टात्मनि भवतु समुत्कृष्टकर्माङ्गदृष्टिः ।
मैवं कर्म प्रधानं विहितमपि यतस्तत्समाराधनं तत्
तत्प्रीता देवतैव प्रदिशति फलमित्यर्थतस्सा प्रधानम् ॥ ४५१ ॥

चिन्ता०—पूर्वाधिकरणे खल्वपकृष्टेपूत्कृष्टदृष्टिर्न्याय्येत्युक्तम् । तर्हि फलसाधनतयोत्कृष्टस्योद्गीथादेरादित्यादौ दृष्टिः कर्तव्येति शङ्कया सङ्गतिः । तदर्थविचारस्तु—क्रत्वङ्गाश्रयोपासनेषु किमादित्यादावुद्गीथदृष्टिः, उतोद्गीथादावादित्यदृष्टिः । फलसाधनतयोत्कर्षः किमादित्यादेः, उतोद्गीथादेरिति । अत्र पूर्वपक्षी प्राह—तादर्थ्यादिति । देवतानां कर्मशेषत्वात् कर्मणश्च फलसाधनत्वेन चोदितत्वान्निकृष्टात्म-

न्यादित्यादौ फलसाधनत्वेनोत्कृष्टकर्माङ्गदृष्टिरित्यर्थः । अनूदितमर्थं निराकरोति—मैवमिति । प्रतिक्षेप-प्रकारं विवृणोति—कर्मेति । अयमर्थः—यद्यपि कर्म प्रधानतया विहितमेव तेन शाब्दप्राधान्यं कर्मण्येव वर्तते तथाप्यार्थप्राधान्यं देवतानामेवेति । तत्र हेतुमाह—यतस्तत्समाराधनं तदिति । यज देवपूजायामित्यादिषु सर्वत्र कर्म देवतासमाराधनरूपत्वाद् देवतां प्रत्यप्रधानमेव, अत्रापि तद्वदेव प्रधान-भूतादित्यादीन्प्रति यज्ञाङ्गदृष्टेरप्रधानत्वादप्रधानेपूद्गीथादिषूत्कृष्टरूपादित्यादिदृष्टिर्न्याय्येति देवतायाः प्राधान्य-मेवोपपादयति—तत्प्रीतेति । सर्वमप्यनुष्ठानं फलार्थमेव । कर्मभिराराधिता देवतैव फलं ददाति । अतो देवतैव प्रधानम् । तस्माद्देवतादृष्टिरेवान्यत्र कार्या ॥ ४५१ ॥

पद०—तादर्थ्यादित्यादि । देवतानाम्—अग्नीन्द्रादित्यादीनाम् । तादर्थ्यात्—कर्मशेषभूतत्वात् । कर्मणः—साङ्गस्य यज्ञादिरूपकर्मणः । फलकरणतया चोदितत्वात्—फलसाधनत्वेन विहितत्वात् । निकृष्टात्मनि—निकृष्टः फलसाधनभूतकर्मापेक्षया तच्छेषत्वकृतं फलसाधनत्वाभावकृतञ्चापकर्षं प्राप्त आत्मा यस्य तादृशे । आदित्यादौ—आदित्यादिदेवतायाम् । समुत्कृष्टकर्माङ्गदृष्टिर्भवतु—फलसाधनत्वलब्धोत्कर्षकर्माङ्गदृष्टिः कर्तव्या भवतु । मैवम्—एवं मा शङ्किष्ठाः । कर्म—यज्ञादिकर्म । प्रधानं विहितमपि—शाब्दक्रमेण प्रधानतया विहितमपि । यतः—कारणात् । तत्समाराधनम्—यजदेवपूजायामित्यनुशासनाद्देवताराधनात्मकम् । यतश्च तत्प्रीता देवतैव फलं प्रदिशति—यस्माच्च कारणात् तादृशकर्मानुष्ठानेन प्रसन्ना इन्द्रादित्यादिदेवतैव तत्तत्कर्मफलभूतं स्वर्गादिकं प्रददाति । इत्यर्थतस्सा प्रधानम्—एवमर्थस्वभावेनाराधनगताराध्यप्रधानकत्वदेवताद्वारकफलहेतुत्वरूपेण सा देवता प्रधानभूता । तत्—तस्मात् । मैवमित्यन्वयः । अतो देवतादृष्टिरेव यज्ञाङ्गभूतोद्गीथादौ कर्तव्येति भावः । यद्वा तच्छब्दः कर्मविशेषणम् । तत्कर्म प्रधानं विहितमपीत्यन्वयः ॥ ४५१ ॥

अन्यस्मिन्नन्यदृष्टेर्विधिरिह घटतामन्यथाख्यातिपक्षे
याथार्थ्यं सर्वबोधानुगतमितिमते युज्यते नान्यदृष्टिः ।
तन्नात्राद्ये हि न स्याद् विमतिरविमता भ्रान्तिनीतिः परस्मिन्
तादृग्भेदाग्रहोपप्लुतमतियुगलस्थापनायां नियोगात् ॥ ४५२ ॥

चिन्ता०—अत्र कश्चिच्चोदयति—अन्यस्मिन्निति । युष्माकं सिद्धान्ते भ्रान्तिरस्तीति केषाञ्चिन्मर्यादा । भेदाग्रहमात्रमेव ग्रहणस्मरणयोरस्ति न भ्रान्तिरस्तीत्यपरेषां मर्यादा । यथार्थख्यातिवादिनश्च यूयम् । तथा च सति भ्रान्त्यभावं वदतां भावत्कानां कथं दृष्टिविध्यङ्गीकारोऽन्यत्रान्यदृष्टेर्भ्रान्तिरूपत्वा-

दिति । अयमत्र शब्दान्वयः—अन्यथाख्यातिपक्षाङ्गीकारे तावदन्यस्मिन्नन्यदृष्टेर्विधिर्घटतामेव । 'यथार्थं सर्वविज्ञानमिति वेदविदां मतम्' इत्यस्मिन्पक्षे नान्यदृष्टिर्युज्यते न दृष्टिविधिर्युज्यत इत्यर्थः । तदेतत्प्रतिक्षिपति—तन्नेति । प्रतिक्षेपप्रकारं विभज्य दर्शयति—आद्य इति । अन्यथाख्यातिपक्षे न विप्रतिपत्तिस्स्यात् ; त्वयैव तस्मिन्पक्षे दृष्टिविधेर्युक्तत्वाङ्गीकारात् । अन्यथाख्यात्यनङ्गीकारेण यथार्थख्यातिपक्षेऽपि निर्वाहोऽस्तीत्याह—अविमतेति । अयमर्थः—ये हि यथार्थख्यातिवादिनस्तेषामपि लोकदृष्ट्याया भ्रान्तबुद्धेः केनापि प्रकारेण निर्वाहः कार्यः, स निर्वाहोऽत्रापि दृष्टिविधौ वाच्य इति । अत्र निर्वाहप्रकारं दर्शयति—तादृगिति । अयं भावः—शुक्तीरजतमित्यादौ शुक्तिरजतयोस्तादात्म्यग्रहं वदन्त्यन्यथाख्यातिवादिनः । अख्यातिवादिनस्तु प्राभाकरास्शुक्तिरजतयोरतादात्म्याग्रहं शुक्तिरजतत्वयोरसंसर्गाग्रहं शुक्तिग्रहणरजतस्मरणयोर्भेदाग्रहञ्च भ्रान्तिस्थानीयं वदन्ति । 'यथार्थं सर्वविज्ञानम्' इति वादिनस्तु शुक्तिरजतयोर्द्वयोरपि सद्भावं पञ्चीकरणन्यायेन पुरोवर्तिनि वस्तुनि वदन्ति । तत्र शुक्तिभूयस्त्वाग्रहणसहकृतरजतग्रहणं वदन्ति तेनात्र प्रवृत्तिर्बाध्यते सामानाधिकरण्याभावात् । गृह्यमाणस्मर्यमाणवस्तुद्वयभेदाग्रहोपप्लुतगरुडस्वात्मविषयमतियुगलस्थापनायां नियोगाद् विधानादित्यर्थः । अयमत्र निर्णयः—भ्रान्तिर्यद्यस्ति तदा दृष्टिविधेर्नानुपपत्तिः यदि नास्ति तदापि भेदाग्रहसहकृतज्ञानद्वयाङ्गीकारेण प्राभाकरमतस्थानामिवास्माकमपि दृष्टिविधिविधानस्याविरोध इति ॥ ४५२ ॥

पद०—अन्यस्मिन्नन्यदृष्टेरित्यादि । अन्यस्मिन्—उद्गीथादौ । अन्यदृष्टेः—तद्भिन्नादित्यादिरूपेण भावनायाः । विधिः—'य एवासौ तपति तमुद्गीथमुपासीत' इत्येवमादिषु विधानम् । इहान्यथाख्यातिपक्षे—शुक्त्यादौ रजतत्वादिभ्रममङ्गीकुर्वतां सिद्धान्ते । घटताम्—उपपद्यताम् । तदभाववद्विशेष्यकतत्प्रकारकज्ञानत्वरूपान्यथाख्यातिलक्षणस्य गरुडत्वाभाववन्नरविशेष्यकगरुडत्वप्रकारकज्ञानात्मकगरुडध्याने आदित्यत्वाभाववदुद्गीथविशेष्यकादित्यत्वप्रकारकज्ञानात्मकोद्गीथोपासने च सत्त्वात् अन्यस्मिन्नन्यदृष्टिविधिरुपपन्न इति भावः । याथार्थ्यम्—तद्वद्विशेष्यकतत्प्रकारकज्ञानत्वरूपं याथार्थ्यम् । सर्वबोधानुगतम्—प्रमात्वेन लोकसिद्धेषु घटपटादिज्ञानेषु भ्रमत्वेन लोकसिद्धेषु शुक्तिरजतरज्जुसर्पादिज्ञानेषु च तुल्यतयानुगतम् । शुक्तिरज्ज्वोरपि रजतसर्पावयवसद्भावात् तद्वद्विशेष्यकतत्प्रकारकज्ञानत्वरूपयाथार्थ्यस्य शुक्तिरजतरज्जुसर्पज्ञानादावपि सत्त्वात् सर्वं ज्ञानं यथार्थमिति भावः । इति मते—एवमङ्गीकुर्वतां भवतां सिद्धान्ते । अन्यदृष्टिः न युज्यते—मनुष्यादौ उद्गीथादौ च गरुडत्वादित्यत्वादिदृष्टिविधिः नोपपन्नो भवति । कथमिति चेत् दृष्टिविशेषणभूतयोर्गरुडादित्ययोर्निरवयवत्वेन दृष्टिविशेष्ये मनुष्ये उद्गीथादौ च तदवयवसद्भाववार्ताया अप्ययुक्तत्वात् गरुडत्ववद्विशेष्यकत्वमादित्यत्ववद्विशेष्यकत्वञ्च तद्दृष्ट्योरसम्भवीति कथं तयोर्याथार्थ्यम्, अतस्सर्वं ज्ञानं यथार्थमिति

पक्षेऽन्यदृष्टिविधिर्विरुध्यत इति । तन्न—तच्छङ्कनं न युक्तम् । अत्र—शङ्कितविषये । आद्ये विमतिर्न स्याद्धि—अन्यथाख्यातिपक्षे विप्रतिपत्तिर्न भवति खलु । पूर्वमुपपादितरीत्या युक्तियुक्तत्वात् अन्यथाख्यातिपक्षे दृष्टिविधेर्युक्तत्वायुक्तत्ववैमत्यं न किलेति भावः । तदस्तु सत्ख्यातिपक्षे का कथेति चेत् तदुच्यते—अविमतेत्यादि । परस्मिन्—द्वितीयपक्षेऽपि । तादृग्भेदाग्रहोपप्लुतमतियुगलस्थापनायाम्—तादृक् अन्यथाख्यातिवत् व्यवहारान्यथाभावसम्पादनसमर्थो यो गरुडमनुष्ययोरादित्योद्गीथयोश्च भेदाग्रहस्तेन उपप्लुतं अयथावस्थितव्यवहारजनकतारूपं कालुष्यमापन्नं यत् गरुडमनुष्यविषयकं उद्गीथादित्यविषयकं वा मतियुगलं ज्ञानद्वयं तस्य स्थापनायाम् अनुवर्तनौपयिकमनोव्यापारे । नियोगात्—चोदनात् । भ्रान्तिनीतिः—भ्रान्तित्वयुक्तिः । अविमता—अविप्रतिपन्ना सर्वसम्मन्तव्येत्यर्थः । अयं भावः—अस्मत्सिद्धान्तेऽन्यथाख्यात्यङ्गीकारो नास्तीति न भ्रमितव्यम् । श्रीभाष्यकारैरेव भाष्ये बहुषु स्थलेषु अन्यथाख्यात्यङ्गीकारप्रकटनात् । तैरुपन्यस्ते नाथमुनिमिश्रादिवेदवित्सम्मते यथार्थख्यातिपक्षेऽपि न सर्वत्रावयवसद्भावेन सत्ख्यातिनिर्वाहस्तदभिमतः, अपितु यत्रावयवसद्भावसम्भवस्तत्रैव तथानिर्वाहः, अन्यत्र तु भेदाग्रहसहकृतज्ञानद्वयात्मकत्वेन प्राभाकरादीनामिव निर्वाहः, तथाचाहं गरुड इति ध्यानम् उद्गीथ आदित्य इत्यादिध्यानञ्चाहन्त्वप्रकारकस्वात्मविशेष्यकगरुडत्वप्रकारकगरुडविशेष्यकज्ञानद्वयात्मकं तथोद्गीथत्वप्रकारकोद्गीथविशेष्यकादित्यत्वादिप्रकारकादित्यादिविशेष्यकज्ञानद्वयात्मकञ्च गरुडस्वात्मभेदाग्रहसहितमुद्गीथादित्यादिभेदाग्रहसहितमपिच तदीदृशं ज्ञानद्वयं यथार्थमेव विहितमिति नास्मत्सिद्धान्तैकदेशविरोध इति । नन्वेवं सर्वेषामपि ज्ञानानां तद्वति तत्प्रकारकत्वेन प्रमात्वे लोकसिद्धभ्रमप्रमाभेदोपपादनं कथमिति चेत् तत्सावधानो निशमय । यथावस्थितव्यवहारानुगुणं ज्ञानं प्रमेति प्रमालक्षणम् । अतो विपरीतं ज्ञानं भ्रम इति सुगमम् । शुक्तिदर्शनानन्तरभाविशुक्तिरजतभेदाग्रहसहितशुक्तिरजतज्ञानद्वयेन इदं रजतमित्याकारवता जायमान इदंरजतमितिव्यवहारो न यथावस्थितः ; पुरोवर्तिवस्तुपरस्येदमादिशब्दस्य तदुत्तररजतादिपदेन सामानाधिकरण्याभावात् यथावस्थितेषु अयं घटोऽयं पट इदं पुष्पमिदं फलमित्यादिव्यवहारेषु तथादर्शनात् ज्ञाने व्यवहारे चायथावस्थितिः परपक्षसिद्धा । व्यवहारमात्रस्यायथावस्थितिरस्मत्सिद्धान्तसिद्धा । तथा च शुक्तिरजतादिज्ञानवदयथावस्थितव्यवहारानुगुणत्वात् निरुक्तं गरुडादिज्ञानद्वयं भ्रान्तिशब्दवाच्याज्ञानविशेषगतायथावस्थितव्यवहारानुगुणत्वरूपभ्रान्तिलक्षणलक्षितमेव । अत एव लोकसिद्धभ्रमप्रमाव्यवहारभेदस्योपपत्तिरिति न किञ्चित्सङ्कटमिति । तथा च न्यायपरिशुद्धावाचार्यपादश्रीसूक्तिः—'वयं तु ब्रूमः । यथावस्थितव्यवहारानुगुणं ज्ञानं प्रमेति । यथार्थख्यातिमख्यातिमन्यथाख्यातिमेव वा । इच्छद्भिर्न विमन्तव्यमिदं लोकानुसारतः ॥' इत्यारभ्य

'ततश्च प्रतिपत्तौ वा व्यवहारोदयेऽपि वा । तथाभावान्यथात्वाभ्यां प्रमाभ्रान्तिव्यवस्थितिः ॥ विपर्ययादेर्व्यावृत्तिरेवमेव हि सिध्यति । यत्किञ्चिदन्यथात्वं हि वैपरीत्यमितीष्यते ॥ आत्मख्यात्यादिवादेष्वप्यन्यथात्वमवारितम् । भ्रमप्रवृत्तिबाधादेरन्यथा न हि सम्भवः । एवं सत्यन्यथाधीस्तत्सामग्री वापि लाघवात् ॥ अयथाव्यवहारस्य हेतुरित्यवशिष्यते । सर्वैरप्यन्यथाख्यातिर्दुस्त्यजत्वाल्लघीयसी ॥ तद्वादिनाप्यवर्ज्यत्वात् ततोऽप्यख्यातिलाघवम् । स्वारस्यमन्यथाख्यातावख्यातौ लाघवं स्थितम् ॥ इति दर्शयितुं भाष्ये द्वितयं तदनुज्झितम् ॥' इत्यादिः ॥ ४५२ ॥

**द्रष्टव्यापह्नवे न भ्रमदनुविहिता दृष्टिरद्वैतमोहः**
**स्यादुत्कृष्टापराधस्तत इह विहिता तादृशत्वस्य दृष्टिः ।**
**तादृग्दृष्टौ न दोषस्तत इति कतिचित्तार्क्ष्यदृष्ट्यादिनीत्या**
**द्वेधान्यत्रान्यदृष्टिर्न किमनधिगता व्यक्तितो जातितश्च ॥ ४५३ ॥**

चिन्ता०—अत्र दृष्टिविधौ परोक्तप्रकारं दूषयित्वा स्वाभिमतं प्रकारद्वयेन निगमयति—द्रष्टव्येति । अत्र केचिदाहुः—चोरस्थाणुरित्यत्र यथा चोरत्वं बाध्यते सामानाधिकरण्येन, तच्च मिथ्या एवं ब्रह्माहमित्यत्रापि द्रष्टव्यापह्नव इति । द्वितयमिह द्रष्टव्यं जीवो ब्रह्म च जीवापह्नवे दोषमाह—नेति । भ्रमता जीवेन संघटिता दृष्टिरेव न स्यात् । ब्रह्मापह्नवेऽपि दोषमाह—अद्वैतमोह इति । अत्राद्वैतशब्देन ब्रह्माभिधीयते । मोहशब्देन ब्रह्मविपर्ययिणी दृष्टिः । अत्र द्रष्टव्यापह्नवोक्तौ द्रष्टव्यस्य ब्रह्मण एवापह्नव उक्तस्स्यात् । स तु उत्कृष्टस्य ब्रह्मणोऽपराध एव । अथवोत्कृष्ट एवापराधस्स्यादिति सामानाधिकरण्यम् । ब्रह्मणो मिथ्यात्वापराधात् कोऽयमुत्कृष्टोऽपराधः । तेन 'ब्रह्माहमस्मि' इत्यादिषु विहिता ब्रह्मसमानत्वबुद्धिरित्याह—तत इति । अस्मिन्पक्षे पूर्वत्रोक्तो दोषो नास्तीति केचिन्मन्यन्ते तदिदमाह—कतिचिदिति । अत्रान्यत्रान्यदृष्टिं पक्षान्तरेण द्वेधा दर्शयति—द्वेधेति । गरुडमात्मानं जानीयादित्यादौ द्वेधा दृष्टिर्न किमनधिगता अधिगतेत्यर्थः । द्वैविध्यमेव दर्शयति—व्यक्तितो जातितश्चेति । गरुड एवाहमिति यदि प्रतिपद्येत तदा व्यक्तितः, यदि च गरुडजातीयोऽहमिति प्रतिपद्येत तदा जातितः, तेन द्वावप्येतौ पक्षावङ्गीकार्यौ चकारात् समनन्तरोक्तसादृश्यप्रतिपत्तिरप्यङ्गीक्रियते प्रागुक्तस्तु पक्षः प्रमाणविरुद्धत्वान्नाङ्गीकार्य इत्यर्थः ॥ ४५३ ॥

पद०—द्रष्टव्यापह्नव इत्यादि । द्रष्टव्यापह्नवे—चोरस्स्थाणुरित्यत्र सामानाधिकरण्येन चोरत्वं यथा बाध्यते एवं ब्रह्माहमित्यत्रापि जीवत्वबाध इति केचित् तथा च तैर्द्रष्टव्यापह्नवोऽङ्गीकृतः । तन्मतरीत्या द्रष्टव्यापह्नवे तत्र च द्रष्टव्यस्य जीवस्यापह्नवे विवक्षिते । भ्रमदनुविहिता—भ्रमता जीवेनानुविहिता

कृता। दृष्टिः—अन्यस्यान्यत्वेनानुसन्धानम्। न—न सम्भवति। अध्यस्यत एव बाधो यदि कथमध्याससिद्धिः, नहि कर्तुरभावे क्रिया सिध्यतीति भावः। अद्वैतमोह उत्कृष्टापराधस्स्यात्—'अत्राद्वैतशब्देन ब्रह्माभिधीयते। मोहशब्देन ब्रह्मविपयिणी दृष्टिः' इति चिन्तामणिः। तद्रूपः उत्कृष्टापराधः सर्वोत्कृष्टब्रह्मविपयकापराधः। यद्वा उत्कृष्टश्चासावपराधश्चेति सामानाधिकरण्यं वा। ब्रह्ममिथ्यात्वापादनात् कोऽन्य उत्कृष्टापराधः। द्रष्टव्यापह्नवशब्देन ब्रह्मापह्नवे विवक्षिते ब्रह्माहमिति ब्रह्मदृष्टिरूपो मोहो ब्रह्ममिथ्यात्वापादनरूपत्वात् महानपराधस्स्यादिति भावः। ततः—उक्तदोषात्। इह—ब्रह्माहमित्यनुसन्धाने। तादृशत्वस्य—ब्रह्मसादृश्यस्य। दृष्टिः—भावना। विहिता—विधिविवक्षिता। 'आदित्यो यूपः' इत्यादिषु प्रत्यक्षविरुद्धयूपादित्यैक्यत्यागेन आदित्यसादृश्यविवक्षावत् जीवब्रह्मणोस्स्वरूपैक्यस्य प्रत्यक्षविरुद्धत्वात् अन्यतरबाधस्य चानुपपन्नत्वात् ब्रह्मसादृश्यानुसन्धानमेव विवक्षितमिति केषाञ्चिन्मतमिति भावः। ततः—तत्र जीवे। इत एहि इतस्ततो वर्तत इत्यादाविव सप्तम्यर्थे तसिः। तादृग्दृष्टौ—ब्रह्मसदृशतया भावनायाम्। न दोषः—पक्षान्तरोक्तदोषो नास्ति। इति कतिचित्—एवं केचिद्वदन्तीत्यर्थः। अन्यत्रान्यदृष्टिं पक्षान्तरेण द्वेधा दर्शयति–तार्क्ष्येत्यादिना। व्यक्तितो जातितश्च द्वेधा—गरुड एवाहमिति भावनायां व्यक्तितः गरुडजातीयोऽहमिति भावनायां जातितः, एवमन्यत्रापि भावनाभेदेन व्यक्तितो जातितश्चेति द्वेधा प्रकारद्वयेन। अन्यत्र—दृष्टिविशेष्ये। अन्यदृष्टिः—दृष्टिविशेषणीभूतवस्तुत्वभावना। तार्क्ष्यदृष्ट्यादिनीत्या—गरुडमात्मानं जानीयादित्यादि विहितपूर्वोक्तद्विविधगरुडभावनादिन्यायेन। अनधिगता न किम्—अधिगतेत्यर्थः। वस्तुद्वयभेदाग्रहसहितवस्तुद्वितयविपयकविभिन्नज्ञानद्वयरूपा या पूर्वमुपपादिता अन्यस्मिन्नन्यदृष्टिस्सैवात्र द्वेधा प्रत्यपादि तेन द्वावप्येतौ पक्षावङ्गीकार्यौ। चकारात् समनन्तरोक्तसादृश्यप्रतिपत्तिरप्यङ्गीक्रियते। प्रागुक्तस्तु पक्षः प्रमाणविरुद्धत्वान्नाङ्गीकार्य इत्यर्थः॥ ४५३॥

मुख्यं ब्रह्मैकमेवेत्यवहितमनसां ब्रह्मदृष्टिः कथं स्यात्
एकत्वेनेति केचिन्नहि बलिनि विधौ शङ्कनीयोऽपराधः।
स्वेच्छापूर्वद्विचन्द्रभ्रमवदिह भिदाकल्पनामाहुरन्ये
बम्भ्रम्यन्ते यथा च श्रुतिषु बहुविधं ब्रह्म भातीति बालाः॥ ४५४॥

इति आदित्यादिमत्यधिकरणम्॥ १२८॥

चिन्ता०—अत्र ब्रह्मैकमेवेति यथावस्थितप्रतिपत्तिमतामितरत्र ब्रह्मदृष्टिः कथं स्यादित्यनुयोगे सति

परेषां पक्षेण प्रतिवचनमाह—मुख्यमित्यादिना। अयमत्र शब्दान्वयः—मुख्यं ब्रह्मैकमेवेत्यवहितमनसामितरत्र ब्रह्मदृष्टिः कथं स्यादित्यनुयोगः। अत्र भास्करमतानुसारिणः केचित्प्राहुः—एकत्वेनेति। भोक्तृभोग्यादिभावेन विभक्तं सकलमेकत्वाद् ब्रह्मैव, अतो ब्रह्मदृष्टिः कर्तुं शक्यत इति। विरुद्धत्वात्कथमिदं वक्तुं शक्यत इत्याशङ्क्याह—बलिनीति। विधिर्हि सर्वप्रमाणानां बलवत्तरः। तेन 'मनो ब्रह्मेत्युपासीत' 'नाम ब्रह्मेत्युपासीत' इति विधिबलाद् ब्रह्मनैकत्वमेव सर्वात्मना संग्राह्यम्। न हि श्रुतिप्रतिपन्नेऽर्थे कश्चिदपराधो दोषश्शङ्कनीय इति केषाञ्चित्परेषां पक्षः। अन्ये त्वाहुः—अङ्गुल्युपष्टम्भादिभिश्चन्द्रैकत्वेऽपि द्वित्वादिपरिकल्पनवद् ब्रह्मैकत्वे परिज्ञातेऽपि ब्रह्मनानात्वं परिकल्प्यते। अमुष्यार्थस्य लोकदृष्टप्रक्रियया दृष्टान्तमाह—बम्भ्रम्यन्त इति। तत्त्वतो ब्रह्मण एकत्वेऽपि बाला बालप्रायाश्श्रुतिस्मृत्यादिष्वापाततः प्रतीत्या त्रिमूर्त्यादिषु तत्रतत्र नानात्वेन ब्रह्मभावं प्रतिपद्यन्ते। एतत्सर्वं परपक्षानुवादमात्रमेव तत्त्वतस्तु तत्रतत्र नामादिषु ब्रह्मसदृशत्वं तज्जातीयत्वं तदेकत्वं वा दृष्टिमात्रेण परिकल्प्यत इति दृष्टिविधिप्रक्रिया इदमेव लौकिकवैदिकसकलोदाहरणाविरुद्धत्वादित्थमेव स्वीकार्यम् ॥ ४५४ ॥

इति आदित्यादिमत्यधिकरणम् ॥ १२८ ॥

पद०—मुख्यमित्यादि। मुख्यं ब्रह्मैकमेवेति, अवहितमनसाम्—अवधानयुक्तमनस्कानामधिकारिविशेषाणाम्। इतरत्र ब्रह्मदृष्टिः कथं स्यादिति। एकत्वेनेति—भोक्तृभोग्यादिभावेन विभक्तं सकलमेकत्वात् ब्रह्मैव, अतो ब्रह्मदृष्टिः कर्तुं शक्यत इति। केचित्—भास्करमतानुसारिणः। ऊचुरिति शेषः। विरुद्धत्वात् कथमिदं वक्तुं शक्यत इत्याशङ्क्याह—न हीति। बलिनि विधौ नह्यपराधश्शङ्कनीयः—'मनो ब्रह्मेत्युपासीत' 'नाम ब्रह्मेत्युपासीत' इति बलवति विधौ जाग्रति नहि कश्चिदपराधश्शङ्कनीयः। विधिबलाद्ब्रह्मण्यनेकत्वमेव सर्वात्मना संग्राह्यम्। नहि श्रुतिप्रतिपन्नेऽर्थे कश्चिदपराधो दोषश्शङ्कनीय इति भावः। अन्ये—केचित्। इह स्वेच्छापूर्वद्विचन्द्रभ्रमवत् भिदाकल्पनामाहुः—अङ्गुल्युपष्टम्भादिभिस्स्वेच्छापूर्वचन्द्रद्वित्वादिपरिकल्पनवत् ब्रह्मैकत्वे परिज्ञातेऽपि ब्रह्मनानात्वं परिकल्प्यत इत्याहुः। यथा च—येन प्रकारेण। बालाः—बालप्रायाः, अल्पज्ञा इत्यर्थः। श्रुतिषु—वेदान्तेषु। ब्रह्म। बहुविधम्—ब्रह्मविष्णुशिवरूपबहुप्रकारम्। भाति—प्रकाशते प्रतीयते। इति बम्भ्रम्यन्ते—आपाततप्रतीत्या त्रिमूर्त्यादिषु तत्रतत्र नानात्वेन ब्रह्मभावं प्रतिपद्यन्ते। तथा भिदाकल्पनामाहुरित्यन्वयः। अत्र चिन्तामणिः 'एतत्सर्वं परपक्षानुवादमात्रमेव तत्त्वतस्तु तत्रतत्र नामादिषु ब्रह्मसदृशत्वं तज्जातीयत्वं तदेकत्वं वा दृष्टिमात्रेण परिकल्प्यत इति दृष्टिविधिप्रक्रिया इदमेव लौकिकवैदिकसकलोदाहरणाविरुद्धत्वादित्थमेव स्वीकार्यम्' इति ॥ ४५४ ॥

इति आदित्यादिमत्यधिकरणम् ॥ १२८ ॥

# आसीनाधिकरणम् ॥ १२८ ॥

सूत्रम्—आसीनस्सम्भवात् ॥ ४७६ ॥

आसीनस्यैव योगश्श्रुतिषु न ददृशे ध्यानमाहुस्सदेति
न्यासश्चेलाजिनादेर्नियमविधिकृतिः पाक्षिकासीनतायाम् ।
तस्मादेतद्धटेत स्थितिगतिशयनेष्वप्रकम्प्येन्द्रियस्ये-
त्यप्राप्तं यत्ननिद्रान्वयिनि कथमविच्छिन्नधीसन्ततिस्स्यात् ॥ ४५५ ॥

चिन्ता०—अत्र सङ्गतिर्भाष्य एव सुव्यक्ता 'मोक्षसाधनतया वेदान्तशास्त्रैर्विहितं ज्ञानं ध्यानोपासनादिशब्दवाच्यमसकृदावृत्तं सन्ततस्मृतिरूपमित्युक्तम् । तदनुतिष्ठन्नासीनश्शयानस्तिष्ठन्गच्छंश्च विशेषाभावादनियमेनानुतिष्ठेत्' इति शङ्कया । समनन्तराधिकरणयोः प्रासङ्गिकत्वात्प्रधानसङ्गतिरेव वाच्येत्यर्थः । तदर्थविचारस्तु—किमासीनश्चिन्तयेदुतासीनश्शयानस्तिष्ठन् गच्छन्वेति । किं गमनादिषु ध्यानं सम्भवति नेति । अत्र पूर्वपक्षमाह—आसीनस्येति । अयमत्र शब्दार्थः—आसीनस्यैव योग- इति श्रुतिवाक्यं तावन्नास्ति नापि श्रुत्यर्थापत्तिः काचित् 'स खल्वेवं वर्तयन्यावदायुषम्' 'तद्रूपप्रत्यये चैका सन्ततिश्चान्यनिस्स्पृहा' इत्यादिभिस्सदात्वमपि प्रतिपद्यामहे ध्यानस्य । ननु चेलाजिनकुशोत्तरमित्यासनपरिकल्पनञ्च योगिनामनुश्रूयत इत्याशङ्क्य परिहरति—न्यास इति । अयमर्थः—आसनपरिकल्पनं न नियतम्, अपित्वासीनत्वावस्थायां कादाचित्कमेव भवति तत्र 'चेलाजिनकुशोत्तरम्' इति नियमविधिः क्रियते तेन गच्छन्नासीनश्शयानो वा ध्यानं कुर्यादिति । तदिदमाह—तस्मादिति । अत्राप्रकम्प्येन्द्रियस्य पुरुषस्य स्थितौ वा गतौ वा शयने वा ध्यानं सम्भवेदिति । तदेतद्दूषयति—अप्राप्तमिति । अप्राप्तत्वमेव प्रकटयति—यत्नेति । गमने हि यत्न एव शयने निद्रान्वयादप्रबोधो भूयानुपजायते तस्मादौचित्यादासीनस्यैव ब्रह्मध्यानं प्रकल्पनीयमित्यर्थः ॥ ४५५ ॥

पद०—आसीनस्यैवेत्यादि । श्रुतिषु आसीनस्यैव । योगः—ध्यानम् । न ददृशे—कार्यमिति न दृष्टम् । सदा ध्यानमित्याहुः—सर्वावस्थास्वपि ध्यानं कार्यमिति 'स खल्वेवं वर्तयन् यावदायुषम्' 'सदा तद्भावभावितः' 'तस्मात्सर्वेषु कालेषु मामनुस्मर' इत्यादिश्रुतिस्मृतयः प्रतिपादयन्तीत्यर्थः । चेलाजिनादेर्न्यासः पाक्षिकासीनतायां नियमविधिकृतिः—'शुचौ देशे' इत्यारभ्य 'चेलाजिनकुशोत्तरम्' इत्यादिवचनै श्चेलाजिनादेर्विन्यासविधिर्न नियतः, अपितु पाक्षिकासीनत्वावस्थायां चेलाजिनकुशोत्तरत्वनियमविधिकरणम् । तस्मात्—उक्तोपपादनात् । अप्रकम्प्येन्द्रियस्य—विषयाप-

धृष्येन्द्रियस्य योगिनः । स्थितिगतिशयनेषु—आसनगमनशयनावस्थासु सर्वास्वपि । एतत्—ध्यानम् । घटेत—सम्भवेत् । इत्ययमाप्तम्—इति शङ्कनमनुचितार्थकम् । यत्ननिद्रान्वयिनि—गमनदशायां गत्युपयोगिप्रयत्नयोगिनि शयनदशायां निद्रायोगिनि च पुरुषे । अविच्छिन्नधीसन्ततिः—तैलधारावदविच्छिन्नधीसन्तानात्मकं ध्यानम् । कथं स्यात्—कथं सम्भाव्येत । अत आसीनस्यैव तत्सम्भव इति आसीनेनैव ध्यानं कार्यमिति भावः ॥ ४५५ ॥

चित्तैकाग्र्योपपत्त्यै विदधति नियतिं देशकालासनादेः
सच्छिद्रं त्वन्यदापि क्षममिति सततं चिन्तनं संस्मरन्ति ।
प्रत्यक्संस्कारभूम्ना परनिहितधियस्तादधीन्यादिबुद्धया
जुष्टं व्यासक्तनीत्या भवति हि समये योगिनः कर्म सर्वम् ॥ ४५६ ॥

चिन्ता०—अत्र ध्यानस्य नित्यानुष्ठानमेव विहितम्, अथाप्यवर्जनीयकर्मान्तरसद्भावे सच्छिद्रमपि चिन्तनं क्रियमाणं विहितस्य नित्यचिन्तनस्य न विरोधमापादयतीत्याह—चित्तैकाग्र्येत्यादिना । अयमत्र शब्दान्वयः—योगदशायां चित्तैकाग्र्योपपत्त्यै देशकालासनादेर्नियतिं विदधति महर्षयः । सच्छिद्रं चिन्तनं देशकालादिवैगुण्येऽपि कर्तुं शक्यत इति देशकालादिसाद्गुण्ये सततमेव चिन्तनमव्याक्षेपेण कर्तव्यमिति ते संस्मरन्ति । तर्हि निरन्तरध्यानतत्परस्य कर्मान्तराणि न कर्तव्यानीत्याशङ्क्यावश्यकर्तव्यानां कर्मणां परित्यागायोगात् प्रमाणानुसारेण भगवत्प्रेरितत्वानुसन्धानपूर्वकं सर्वमपि देहसंरक्षणादिशेषभूतं कर्म योगसिद्ध्यर्थत्वात्कर्तव्यमेव । यानि तु प्रतिषिद्धानि तानि न कर्तव्यान्येव । यानि पुनः काम्यानि तान्यपि तथा न कर्तव्यान्येव । तान्येव पापापाकरणद्वारेण विनियोगपृथक्त्वेन योगसिद्ध्यर्थतया विहितानि चेत् न परित्याज्यान्येव । नैतावता योगसिद्धेर्विरोधः । यथाकालं योगार्थानां कर्मणामनुष्ठानस्य विहितत्वादित्याह—व्यासक्तनीत्येति । यथा लोके प्रधानभूते कस्मिंश्चित् कर्मणि वर्तमानाएव मध्ये तदनुबन्धिषु कार्येष्वपि परस्पराविरोधेन वर्तन्ते तद्वदत्रापीत्यर्थः ॥ ४५६ ॥

पद०—चित्तैकाग्र्योपपत्त्या इत्यादि । चित्तैकाग्र्योपपत्त्यै—योगदशायां चित्तैकाग्र्यसम्पत्तये । देशकालासनादेः—शुद्धदेशविहितकालचेलाद्यासनापाश्रययोगपट्टादीनाम् । नियतिम्—आवश्यकत्वम् । विदधति—महर्षय इति शेषः । सच्छिद्रं तु अन्यदापि क्षममिति सततं चिन्तनं संस्मरन्ति—सच्छिद्रं चिन्तनं देशकालवैगुण्येऽपि कर्तुं शक्यमिति वाचोयुक्त्या देशकालवैगुण्याभावे सततमेव चिन्तनमव्याक्षेपेण कर्तव्यमिति च संस्मरन्ति । पूर्ववत् महर्षय इति शेषः । प्रत्यक्सं-

स्कारभूम्ना—दृढतरात्मचिन्तनजनितसंस्कारपाटवातिशयेन । परनिहितधियो योगिनः—'सदातद्भावभावितः' इत्युक्तरीत्या आत्मन्येव समर्पितबुद्धेरधिकारिणः । व्यासक्तनीत्या—एकस्मिन्कार्ये व्यासक्तहृदयस्य तदुपयोगीन्यन्यान्यपि कार्याण्यविरुद्धानि कुर्वतः पुरुषस्य न्यायेन । तादधीन्यादिबुद्ध्या जुष्टम्—कर्तरि स्वस्मिन् अनुष्ठीयमाने कर्मणि तत्परिकरे देहादौ कर्मफले च भगवत्पारतन्त्र्यतादर्थ्यादिबुद्ध्या युक्तम् । सर्वं कर्म—नित्यनैमित्तिकानिषिद्धकाम्यविशेषरूपं सकलमपि कर्मजातम् । समये—तत्तत्समये । भवति हि—अनुष्ठातुं सम्भावितं भवति । प्रसिद्धमेतदिति भावः ॥ ४५६ ॥

कर्मोपास्त्यङ्गभूतं यदिह निगदितं तत्परे पूर्वपादे
योगेन ब्रह्मदृष्टिर्यदपि च परमो धर्म इत्युक्तमाप्तैः ।
तेन प्राधान्यसिद्धावितरदनुगुणं तस्य नेयं तथा च
प्रायः प्रक्रान्तयोगे पटिमलघुतया कल्पितः कालयोगः ॥ ४५७ ॥

चिन्ता०—उक्तस्यैवार्थस्य द्रढिम्ने योगस्य प्राधान्यमनूद्य प्रधानानुसारेणैव तदङ्गस्य कालयोगः कल्पनीय इति प्रदर्शयन् प्रधानभूतयोगस्वरूपनिष्पत्त्यर्थत्वात् सर्वकर्मणोऽपि काले कर्तव्यत्वं निगमयति—कर्मेति । अयमत्र शब्दान्वयः—कर्मोपास्त्यङ्गभूतमिति विद्याङ्गपादे निगदितमिति यत् 'अयं तु परमो धर्मो यद्योगेनात्मदर्शनम्' इत्याप्तैर्महर्षिभिरुक्तमिति यत् तेन योगस्य प्राधान्यसिद्धावितरत् कर्म तदनुगुणतया योज्यम् । अयमर्थः—अङ्गाङ्गिनोर्विरोधे सत्यङ्ग्यनुष्ठानाविरोधेनैवेतरानुष्ठानं कर्तव्यमिति । एवञ्च सति प्रक्रान्तयोगे पुरुषे पटिमलघुतया योगपटुत्वाभावेन तत्पाटवसिद्ध्यर्थं कर्मणां कालयोगस्स्वीकर्तव्यः । अनुक्रमात् पाटवे जायमाने तदानीमपि यथायोगं कर्म कर्तव्यमित्याशयः । अयमर्थः—'स खल्वेवं वर्तयन्यावदायुषम्' इति वचनमङ्गिभूताया विद्यायास्तदङ्गत्वेनावस्थितानां कर्मणाञ्च तुल्यमिति ॥ ४५७ ॥

पद०—कर्मेत्यादि । इह—शारीरकशास्त्रे । तत्परे—विद्याङ्गतत्परे । पूर्वपादे—पुरुषार्थपादे । कर्म—नित्यनैमित्तिकादिकं कर्म । उपास्त्यङ्गभूतम्—उपासनाङ्गभूतमिति । यत्—यस्मात्कारणात् । निगदितम्—प्रतिपादितम् । अपिच योगेन—यमनियमाद्यङ्गकेन समाधिना । ब्रह्मदृष्टिः—ब्रह्मसाक्षात्कारः । परमो धर्म इति—उत्तमधर्म इति । आप्तैः—महर्षिभिः । यत्—यस्मात्कारणात् । उक्तम्—'अयं तु परमो धर्मो यद्योगेनात्मदर्शनम्' इत्युक्तम् । तेन—कारणेन । प्राधान्यसिद्धौ—उपासनस्य प्राधान्यसिद्धौ सत्याम् । इतरत्—कर्म । तस्य—प्रधानस्योपासनस्य । अनुगुणम्—अनुगुणतया अविरोधेन । नेयम्—

अनुष्ठेयम् । तथा च—एवञ्च सति । प्रायः—बाहुल्येन । प्रक्रान्तयोगे—उपक्रान्तयोगानुष्ठाने युञ्जाने पुरुष इत्यर्थः । पटिमलघुतया—योगानुष्ठानपाटवाल्पत्वेन तत्पाटवातिशयसिद्ध्यर्थम् । कालयोगः—कर्मणामनुष्ठानकालनियमः । कल्पितः—स्वीकर्तव्यः । 'अनुक्रमात्पाटवे जायमाने तदानीमपि यथायोगं कर्म कर्तव्यमित्याशयः' इति चिन्तामणिः ॥ ४५७ ॥

विद्याङ्गं पूर्वमुक्तं किमिह पुनरसावासनाद्यङ्गचिन्ता
दृष्टार्थांशं विभज्य प्रथयितुमपि न प्राक्शमाद्यङ्गवादात् ।
सत्यं ध्यानाख्यधारावहनमतिदशा त्वन्वहं साधनीया
चित्तैकाग्र्येण सर्वप्रयतनविरहे स्यादितीदं प्रकाश्यम् ॥ ४५८ ॥

इत्यासीनाधिकरणम् ॥ १२९ ॥

चिन्ता० —अत्र कश्चित्पौनरुक्त्याशङ्कया विद्याङ्गचिन्तनमत्र न कर्तव्यमिति ब्रूते—विद्याङ्गमिति । अयमत्र शब्दार्थः—विद्याङ्गं पूर्वपाद एवोक्तं किमिह पुनरसावासनाद्यङ्गचिन्ता क्रियत इति । अत्र पूर्वपक्षी पराभिप्रायमाशङ्क्य निराकरोति—दृष्टेति । तत्राऽदृष्टार्थाङ्गचिन्ता कृता इह पुनर्दृष्टार्थासनाद्यङ्गचिन्ता क्रियत इति विभागो न वक्तव्यः । तत्र हेतुमाह—प्रागिति । पूर्वमपि दृष्टार्थानां शमादीनामुक्तत्वादयं विभागो न घटत इति भावः । उक्तमर्थमर्धाङ्गीकारेण प्रतिक्षिपति—सत्यमिति । अयमर्थः—दृष्टार्थमदृष्टार्थमुभयमङ्गजातं विद्याङ्गपादोक्तमित्यनुमन्यामहे तथापि ध्यानाख्यधारावहनमतिदशा तूपासकैरन्वहं साधनीया यावदायुरुत्तरोत्तरमवधानेन प्रसाधनीयेत्यर्थः, सा च दशा चित्तैकाग्र्येणेतरविषयसर्वप्रयतनविरहे सत्येव सेत्स्यतीतीममर्थं विशेषतः प्रकाशयितुमनुग्रहविशेषात् सूत्रकारः पुनःपुनः शिष्याणां प्रकाशयतीति ॥ ४५८ ॥

इत्यासीनाधिकरणम् ॥ १२९ ॥

पद०—विद्याङ्गमित्यादि । पूर्वम्—पूर्वपादे । विद्याङ्गम्—उपासनाङ्गं सकलमपि । उक्तम्—प्रतिपादितम् । इह—अस्मिन्पादेऽपि । पुनः—पुनश्च । असौ आसनाद्यङ्गचिन्ता—आसनाद्युपासनाङ्गविचारः । किम्—किमिति क्रियते । उक्तस्य पुनरुक्तिरयुक्तेति भावः । दृष्टार्थांशं विभज्य प्रथयितुमपि न—उपासनाङ्गं द्विविधं दृष्टार्थमदृष्टार्थञ्च तत्र दृष्टार्थाङ्गरूपमंशं प्रथयितुं प्रकाशयितुमत्रोक्तिः अदृष्टार्थाङ्गरूपमंशं प्रकाशयितुं पूर्वमुक्तिरित्यपि न युक्तम् । प्राक्—पूर्वपादेऽपि । शमाद्यङ्गवादात्—दृष्टार्थानां शमाद्यङ्गानां वादात् प्रतिपादनात् । सत्यम्—दृष्टादृष्टार्थमुभयविधमप्यङ्गजातं पूर्वपादोक्त-

मित्यनुमन्यामहे तथापि । अन्वहम्—अनुदिनम् । साधनीया—यावदायुरुत्तरोत्तरमवधानेन प्रसाधनीयेत्यर्थः । ध्यानाख्यधारावहनमतिदशा तु—ध्यानाख्या या धारावाहिकबुद्धिस्तद्दशा तु । चित्तैकाग्र्येण—चित्तस्य मनस ऐकाग्र्येण विषयान्तरव्यासङ्गनिश्शेषत्यागसंवलितध्येयैकप्रावण्येन । सर्वप्रयतनविरहे—प्रयत्नसामान्याभाव एव । स्यात्—सम्भवेत् । इति—एवमाकारम् । इदम्—शिष्येभ्यो ज्ञापनीयं तत्त्वम् । प्रकाश्यम्—सूत्रकारस्य प्रकाशनीयत्वेनाभिमतम् । अतः फलभेदान्न पुनरुक्तिरिति भावः ॥ ४५८ ॥

इत्यासीनाधिकरणम् ॥ १२९ ॥

---

## आप्रायणाधिकरणम् ॥ १२९ ॥

सूत्रम्—आप्रायणात्तत्रापि हि दृष्टम् ॥ ४८१ ॥

एकस्मिन्नेव घस्रे यदि भवति परध्यानरूपा तु भक्तिः
तद्विश्रान्तो विधिस्स्यादुपरि तु विफला ब्रह्मचिन्तेत्ययुक्तम् ।
छान्दोग्ये यावदायुस्सुचरितमुदितं ब्रह्मलोकाप्तिहेतोः
तद्धि ध्यानस्य वृद्ध्यै तदपिच विहितं कुत्रचित्प्रायणान्तम् ॥ ४५९ ॥

इत्याप्रायणाधिकरणम् ॥ १३० ॥

चिन्ता०—अत्र सङ्गतिर्भाष्ये 'तदिदमपवर्गसाधनमुक्तलक्षणमुपासनमेकाह एव सम्पाद्यम्, उताप्रायणात् प्रत्यहमनुवर्तनीयमिति विशये' इति । तदर्थविचारस्तु—उक्तलक्षणमुपासनं किमेकस्मिन्नहनि कर्तव्यमुताप्रायणादिति । किमेकदिनानुष्ठानेन शास्त्रार्थस्य कृतत्वं नेति । अत्र पूर्वपक्षानुवादपूर्वकं सिद्धान्तमाचष्टे—एकस्मिन्निति । अयमत्र शब्दान्वयः—एकस्मिन्नेव दिवसे परध्यानरूपा तु भक्तिर्यदि भवति तत्रैव विधिर्विश्रान्तस्स्यात् उपरि तु ब्रह्मचिन्ता विफलेति पूर्वः पक्षः । तमिमं निराकरोति—अयुक्तमिति । तत्र हेतुमाह—छान्दोग्य इति । छान्दोग्ये हि 'स खल्वेवं वर्तयन्यावदायुषम्' इत्यादिना यावदायुस्सुचरितमुदितम् । ब्रह्मलोकप्राप्तिहेतोस्सुचरितस्य ध्याने सन्निपत्योपकारकतया स्वरूपोत्पत्तिहेतोस्सुचरितस्य यावदायुरनुष्ठेयत्वकथनं ब्रह्मविद्याया यावदायुरनुष्ठेयत्वमन्तरेणानुपपद्यमानं

श्रुतार्थापत्त्या ब्रह्मविद्याया आप्रायणादनुवर्तनीयत्वमवबोधयति न केवलं श्रुतार्थापत्त्या तत्सिद्धिः, अपि तु तदपि ब्रह्मोपासनं कुत्रापि श्रुतौ प्रायणान्तं विहितं 'प्रायणान्तमोङ्कारमभिध्यायीत' इति ॥ ४५९ ॥

इत्याप्रायणाधिकरणम् ॥ १२० ॥

पद०—एकस्मिन्नेवेत्यादि । एकस्मिन्घस्र एव—एकस्मिन् दिन एव । परध्यानरूपा—परमात्मध्यानात्मिका । भक्तिः—उपासना । यदि तु भवति—यदि निष्पन्ना भवति । विधिः—भक्तिविधिः । तद्विश्रान्तस्स्यात्—तावदंश एव पर्यवसितस्स्यात् । उपरि तु—तदुपरितनकालेतु । ब्रह्मचिन्ता—ब्रह्मध्यानरूपा भक्तिः । विफला—फलहेतुर्नेत्यर्थः । यावानंशो विहितस्तावानेव हि फलहेतुः । इत्ययुक्तम्—इति शङ्कनमयुक्तम् । छान्दोग्ये—सामगानामुपनिषदि । ब्रह्मलोकाप्तिहेतोः—ब्रह्मलोकशब्दवाच्यब्रह्मप्राप्तिरूपफलनिमित्ततया । यावदायुः—आयुरवसानपर्यन्तम् । सुचरितम्—सत्कर्मानुष्ठानम् । उदितम्—'स खल्वेवं वर्तयन्यावदायुषं ब्रह्मलोकमभिसम्पद्यते नच पुनरावर्तते नच पुनरावर्तते' इति वाक्येन प्रतिपादितम् । तत्—सन्निपत्योपकारकतया ध्यानस्वरूपोत्पत्तिहेतोस्सुचरितस्य यावदायुरनुष्ठेयत्वकथनम् । ध्यानस्य वृद्ध्यै हि—ध्यानस्वरूपविवृद्ध्यर्थमेव हि । ध्यानस्वरूपोत्पादककर्मानुष्ठानस्य यावदायुरनुष्ठानकथनं ब्रह्मविद्याया यावदायुरनुष्ठेयत्वमन्तरानुपपद्यमानं श्रुतार्थापत्त्या ब्रह्मविद्याया आप्रायणादनुवर्तनीयत्वमवबोधयतीति भावः । अपि च—न केवलं श्रुतार्थापत्त्यास्यार्थस्य क्लृप्तिः, श्रुतिरप्यस्तीत्यर्थः । तत्—ब्रह्मोपासनम् । कुत्रचित्—शाखाभेदे । प्रायणान्तं विहितम्—'स यो हवै तद्भगवन्मनुष्येषु प्रायणान्तमोङ्कारमभिध्यायीत' इत्यादिवाक्ये प्रायणान्तमनुष्ठेयतया विहितम् । अतो विधिदारिद्र्यमपि नेत्यर्थः ॥ ४५९ ॥

इत्याप्रायणाधिकरणम् ॥ १२० ॥

---

## तदधिगमाधिकरणम् ॥ १२० ॥

सूत्रम्—तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॥ ४८२ ॥

नाभुक्तं कल्पबृन्दैरपि सुपरिहरं कर्म गीतं मुनीन्द्रैः
पापाश्लेषप्रणाशश्रुतिरपि परविद्वैभवोक्तिस्ततस्स्यात् ।
मैवं नाभुक्तमित्याद्यपि फलजनने कर्मणो दार्ढ्यमाह
प्रायश्चित्तक्रमेण त्विह परभजनं चोदितं कर्मशान्त्यै ॥ ४६० ॥

चिन्ता०—'एवं विद्यास्वरूपं विशोध्य विद्याफलं चिन्तयितुमारभते' इति भाष्यम् । इयं

तु पेटिकासङ्गतिः । अयमाशयः—ब्रह्मविद्यास्वरूपस्य निरतिशयानन्दरूपत्वेन फलपक्षनिक्षेपार्हत्वात् तत्स्वरूपशोधनमपि फलाध्याये सङ्गतमिति । तदर्थविचारस्तु—किमश्लेषविनाशौ विद्याफलतया उपपद्येते नेति । किमश्लेषविनाशशास्त्रयोरभुक्तकर्मापरिक्षयशास्त्रस्य च विरोध एव उताविरोधस्सम्भवतीति । किमश्लेषविनाशशास्त्रं मोक्षसाधनभूतविद्याभिधायिवाक्यशेषगतं विद्यास्तुतिवादपरत्वेन नेतुं शक्यते नेति । अत्र पूर्वपक्षोक्तिपूर्वकं सिद्धान्तमाचष्टे—नाभुक्तमिति । 'नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि' इति फलभोगात् विना कर्म न सुपरिहरमिति मुनीन्द्रैर्गीतम् । तेन पापाश्लेषश्रुतिस्तद्विनाशश्रुतिश्च तत एव हेतोर्ब्रह्मविदां वैभवोक्तिस्स्यात् । उक्तं पक्षं दूषयति—मैवमिति । तदेवोपपादयति—नाभुक्तमिति । नाभुक्तमित्यादिकमकृतप्रायश्चित्तानां कर्मणां फलजननावश्यम्भावमाह, न पुनः कृतप्रायश्चित्तानामपि । तर्हि ब्रह्मविदामकृतप्रायश्चित्तत्वात् कर्माणि फलिष्यन्तीत्याशङ्क्य परिहरति—प्रायश्चित्तक्रमेणेति । अयमर्थः—द्विविधं खलु प्रायश्चित्तं प्रतिपदोक्तं सर्वप्रायश्चित्तञ्चेति । विशेषतस्तत्तन्निमित्तपरिज्ञाने प्रतिपदोक्तं प्रायश्चित्तं कर्तव्यम् । सामान्यतः परिज्ञाने तु सर्वप्रायश्चित्तमेव प्रमाणैर्विहितं कर्तव्यम् । 'कृष्णानुस्मरणं परम्' इति कृत्स्नप्रायश्चित्तस्थानीयतया कृष्णानुस्मरणमेव विहितम् । तत्र 'शुचिर्भवति संस्मृत्या' इत्यादिकं सहस्रमप्यैतिहासिकं पौराणिकमागमिकं स्मार्तञ्च वचनजातं पाठ्यम् । नहि बहूनां सन्निपाते नाभुक्तमित्येकं वाक्यं सोपबृंहणश्रुतिविरुद्धं स्वयमवतिष्ठते । न खलु मार्जारो भवति मातङ्गशतस्य परिस्पर्धीति ॥ ४६० ॥

पद०—नाभुक्तमित्यादि । अभुक्तम्—अननुभूतफलकम् । कर्म—पुण्यपापरूपम् । कल्पबृन्दैरपि—ब्रह्मकल्पसमूहैरपि । सुपरिहरं न—सुपरिहरं न भवतीति । मुनीन्द्रैः—महर्षिभिः । गीतम्—'नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि' इत्यादिवचनैः प्रतिपादितम् । पापाश्लेषप्रणाशश्रुतिरपि—'एवंविदि पापं कर्म न श्लिष्यते' 'एवं हास्य सर्वे पाप्मानः प्रदूयन्ते' इत्यादिरूपा पापाश्लेषविनाशश्रुति-रपि । ततः—तत एव हेतोः । परविद्वैभवोक्तिस्स्यात्—ब्रह्मविदां माहात्म्यप्रशंसनरूपा भवतु । मैवम्—एवं मा शङ्किष्ठाः । नाभुक्तमित्याद्यपि—'नाभुक्तं क्षीयते' इत्यादिपूर्वोदाहृतवचनजातमपि । कर्मणः—अकृतप्रायश्चित्तस्य कर्मणः । फलजनने—सुखदुःखरूपफलजनने । दार्ढ्यम्—अवश्यम्भा-वित्वम् । आह—अभिदधाति । नतु कृतप्रायश्चित्तस्यापि फलजननावश्यम्भावित्वमिति भावः । तर्हि ब्रह्मविदामकृतप्रायश्चित्तत्वात् कर्माणि फलिष्यन्तीत्यत्राह—प्रायश्चित्तेत्यादि । इह—वेदान्ते । परभजनम्—परमात्मोपासनम् । प्रायश्चित्तक्रमेण तु—प्रायश्चित्तन्यायेनैव । कर्मशान्त्यै—निखिलकर्मक्षयाय । चोदितम्—विहितम् । अयमर्थः—द्विविधं खलु प्रायश्चित्तं प्रतिपदोक्तं सर्वप्रायश्चित्तञ्चेति, विशेषतस्तत्तन्निमित्तपरिज्ञाने प्रतिपदोक्तं कर्तव्यं सामान्यतः परिज्ञाने तु सर्वप्रायश्चित्तमेव प्रमाणैर्विहितं कर्तव्यं 'कृष्णानुस्मरणं

परम्' इति कृत्स्नप्रायश्चित्तस्थानीयतया कृष्णानुस्मरणमेव विहितम्। अत्र 'शुचिर्भवति संस्मृत्या' इत्यादिकं सहस्रमैतिहासिकं पौराणिकमागमिकञ्च वचनजातं जागर्ति नहि बहूनां सन्निपाते सोपबृंहणश्रुतिविरोधे च सति 'नाभुक्तम्' इत्यकृतप्रायश्चित्तकर्मफलदार्ढ्यप्रतिपादनलब्धावकाशवचनमेकं स्पर्धितुं शक्नुयादिति ॥ ४६० ॥

निष्कृत्यात्मत्वमस्योदितदुरितसमुन्मूलनस्योपपन्नं
नात्र स्वर्गादिनीतिः प्रतिहतिविगमे धीविकासस्स्वतो हि।
पापालेपः प्रमादोदितसहनमिति स्थाप्यमाज्ञानुवृत्त्यै
नोचेन्न स्याद्गतिर्नाविरत इति गिरो योगिनाञ्च प्रवृत्तेः ॥ ४६१ ॥

चिन्ता०—परब्रह्मोपासनस्य सर्वपापप्रायश्चित्तात्मकत्वमुक्तं लक्षणतोऽपि प्रदर्शयन् पापालेपविषयमपि परिशोधयति—निष्कृतीति। अस्य ब्रह्मोपासनस्य प्रायश्चित्तात्मकत्वमुत्पन्नदुरितसमुन्मूलनात्मकत्वादुपपन्नमेव। इदमेव हि प्रायश्चित्तस्य लक्षणमित्यर्थः। नन्वस्तु ब्रह्मोपासनं प्रायश्चित्तम्, अथापि स्वर्गादिपुरुषार्थसाधनानुष्ठानवदसङ्कुचितब्रह्मानुभवरूपज्ञानविकासार्थं साधनान्तरमनुष्ठेयं स्यादित्याशङ्क्य प्रतिक्षिपति—नात्रेति। तदेव स्थापयति—प्रतिहतिविगम इति। अयं भावः—स्वर्गाद्यनुभवो हि कर्मरूपोपाधिप्रयुक्तत्वादस्वाभाविकः। तेन साधनानुष्ठानमपेक्षते। ब्रह्मप्राप्तिस्तु सर्वेषामप्यात्मनां स्वाभाविकी। अथापि केषाञ्चिदनादिपापप्रवाहवशादनादिप्रतिबन्धवती। प्रतिबन्धाभावे स्वयमेवाविर्भवति। अत एवोच्यते—'यथा न क्रियते ज्योत्स्ना मलप्रक्षालनान्मणेः। दोषप्रहाणान्न ज्ञानमात्मनः क्रियते तथा॥' एवञ्च स्वर्गादिभ्यो वैषम्यं परब्रह्मप्राप्तेः, नहि प्रमाणप्रतिपन्नेऽर्थे न विश्वसनीयं किञ्चिदस्ति। युक्त्याभासास्तु प्रमाणविरुद्धत्वादेवानादरणीयाः। अत्र हिशब्दः प्रसिद्धिं दर्शयति। यथा दीपादेरावारकघटाद्यपगमने प्रकाशविकासस्स्वत एव, एवमात्मनोऽपि प्रतिबन्धकाभावे धर्मभूतज्ञानविकास इत्यर्थः। अत्र कश्चिच्चोदयति—यदि ब्रह्मविदां पापालेपस्तर्हि तेषामुत्पथप्रवृत्तिरेव स्यादिति, अत्राह—पापालेप इति। प्रामादिकपापालेप एव ब्रह्मविदामस्माभिरुच्यते न पुनर्बुद्धिपूर्वकपापालेपः। तत् किमर्थमित्यत्राह—आज्ञानुवृत्त्या इति। 'श्रुतिस्मृती ममैवाज्ञा' इत्यध्यात्मविदामपि भगवदाज्ञारूपश्रुतिस्मृत्यनुलङ्घनस्य भगवतैवोक्तत्वादित्यर्थः। एवमनङ्गीकारे 'नाविरतो दुश्चरितात्' इति वचनस्य गतिर्न स्यात्। योगिनाञ्च नियमेन स्वाधिकारानुरूपानुष्ठानप्रवृत्तेश्च गतिर्न स्यात्। चकारस्समुच्चयार्थः। भ्रान्तत्वं नाटयन्भरतोऽपि 'सतां मार्गमदूषयन्' इति सन्मार्गवर्तित्वेन ह्युच्यते ॥ ४६१ ॥

पद०—निष्कृत्यात्मत्वमित्यादि । अस्य—ब्रह्मोपासनस्य । निष्कृत्यात्मत्वम्—सर्वपापप्रायश्चित्तरूपत्वम् । उदितदुरितसमुन्मूलनस्य—हेत्वर्थं विशेषणम् । उत्पन्नदुरितसमुन्मूलनात्मकत्वात् । उपपन्नम्—युक्तम् । अस्तु ब्रह्मोपासनं प्रायश्चित्तम्, अथापि स्वर्गादिसाधनयागानुष्ठानवत् परमानन्दलक्षणज्ञानविकासाय साधनान्तरमनुष्ठेयमापततीत्यत्राह—नात्रेति । हि—यस्मात् कारणात् । प्रतिहतिविगमे—प्रतिबन्धकनिवृत्तौ सत्याम् । धीविकासः—धर्मभूतज्ञानविकासः । स्वतः—स्वयमेव प्रयत्नान्तरनिरपेक्षस्सम्पद्यते । अतः कारणात् । अत्र—स्वाभाविकज्ञानविकासविषये । स्वर्गादिनीतिः—कर्मोपाधिमूलकस्वर्गादिन्यायः । न—न प्रसरीसरीति । यदि ब्रह्मविदां पापालेपस्तर्हि तेषामुत्पथवर्तित्वं स्यादित्यत्राह—पापालेप इत्यादि । आज्ञानुवृत्त्यै—कलञ्जभक्षणादिनिवर्तकनित्यादिसत्कर्मप्रवर्तकभगवन्निग्राह्यतापादकस्वोल्लङ्घनकश्रुतिस्मृत्यात्मकभगवदाज्ञानुवृत्तिसिद्ध्यै, तदुल्लङ्घनजनितभगवन्निग्रहानापत्त्यैच । पापालेपः—पापकर्मफलासम्बन्धः । प्रमादोदितसहनमिति—प्रमादजनिताकृत्यकरणकृत्याकरणरूपस्वल्पापराधसहनरूपमिति । स्थाप्यम्—व्यवस्थापनीयम् । नो चेत्—एवं प्रामादिकविषयत्वं विना बुद्धिपूर्वकपापस्याप्यश्लेपविषयत्वे । नाविरत इति गिरो गतिर्न स्यात्—

'नाविरतो दुश्चरितान्नाशान्तो नासमाहितः ।
नाशान्तमानसो वापि प्रज्ञानेनैनमाप्नुयात् ॥'

इत्यादेर्ब्रह्मविदामपि दुश्चरितान्निवृत्तिं प्रतिपादयतश्श्रुतिवाक्यस्य गतिः फलं न स्यात् । आनर्थक्यमेव स्यादिति भावः । योगिनां प्रवृत्तेश्च—युक्तानामपि पापाचरणभयेन सावधानं विहितमाचरतां निषिद्धं त्यजताञ्च प्रवृत्तेराचारस्यापि गतिः फलं न स्यात् । बुद्धिपूर्वकस्य पापस्याप्यश्लेपे योगिनामपि 'कामो म उदपानं पाप्मना नोऽसंसृजे' इत्यादिरीत्या दुश्चरितभयात् सावधानवर्तनस्य वैफल्यमेव भवेदिति भावः ॥ ४६१ ॥

**अश्लेषः कर्मशक्तेरनुदय उदये तन्निवृत्तिर्विनाशः**
**शक्तिस्सा च प्रणेतुस्तदुचितफलकृन्निग्रहानुग्रहात्मा ।**
**प्रायश्चित्तं निमित्ते कथमनुदित इत्यत्र नैवानुयोज्यं**
**नाधर्मस्तस्य तत्स्यादिति खलु हृदयं ग्राह्यमश्लेषवाचः ॥ ४६२ ॥**

चिन्ता०—अत्राश्लेषविनाशशब्दयोरर्थविशेषं दर्शयित्वा ब्रह्मविद्यायामुत्तराघं प्रत्यपि प्रायश्चित्तत्वमाक्षिप्य समाधत्ते—अश्लेष इति । अत्र कर्मशक्तेरनुदयोऽश्लेषः उदये तन्निवृत्तिर्विनाशः इह कर्मशक्तिरपि प्रणेतुस्सर्वनेतुर्भगवतस्तत्तत्कर्मोचितफलकृन्निग्रहानुग्रहावेव तेन न सिद्धान्तविरोधः ।

तदिदमाह—शक्तिरित्यादिना । अत्र केनचिदुक्तां शङ्कां निवारयति—प्रायश्चित्तमिति । अबुद्धिपूर्वकस्योत्तराघस्योपायानुष्ठानदशायामुत्पत्तिरेव नास्ति अनुत्पन्नस्य पापस्य कथमियं ब्रह्मविद्या प्रायश्चित्तमिति चोदकाभिप्रायः । इमां प्रतिक्षिपति—नैवानुयोज्यमिति । अननुयोज्यत्वमेव दर्शयति—नाधर्म इति । ब्रह्मविद्यानिष्ठस्य तस्याबुद्धिपूर्वोत्तराघं पापमेव न स्यादिति ब्रह्मविद्यायास्सर्वपापप्रायश्चित्तत्वं वदतां हृदयमित्यर्थः ॥ ४६२ ॥

पद०—अश्लेष इत्यादि । कर्मशक्तेरनुदयोऽश्लेषः—कर्मणां या फलजननद्वारभूता शक्तिस्तस्या अनुत्पत्तिरेवाश्लेषशब्दवाच्यः । उदये तन्निवृत्तिर्विनाशः—तादृशकर्मशक्त्युत्पत्त्यनन्तरं तस्याश्शक्तेर्नाश एव कर्मविनाशशब्दार्थः । सा शक्तिश्च । तदुचितफलकृत् प्रणेतुर्निग्रहानुग्रहात्मा—तत्तत्कर्मानुगुणफलजनकमीश्वरस्य निग्रहानुग्रहस्वरूपमेव । अत्र—विषये । निमित्तेऽनुदिते—उत्तराघरूपे निमित्तेऽनुत्पन्नेऽपि । कथं प्रायश्चित्तमिति नैवानुयोज्यम्—कथं तत्प्रायश्चित्तरूपत्वं विद्यायाः, निमित्तोदयानन्तरं हि नैमित्तिकमिति खलु तान्त्रिकप्रवाद इति नैव प्रष्टव्यम् । तस्य—ब्रह्मविदः । तत्—उत्तराघम् । अधर्मो न स्यात्—पापमेव न स्यात् । इति खलु । अश्लेषवाचः—ब्रह्मविदुत्तराघाश्लेषं वदन्त्याः श्रुतेः । हृदयम्—तात्पर्यम् । ग्राह्यम्—तथाच पूर्वोक्तानुपपत्तिरेव न लगतीत्यर्थः ॥ ४६२ ॥

धीपूर्वं तूत्तराघं न सृजति परवित्सर्वदा सावधानो
जातं नैमित्तिकैश्च क्षिपति समुचितैराशु भुञ्जीत वा तत् ।
वृत्रादौ दृष्टमेतन्नियतिविभवतश्चेदिराजादिसिद्धिः
युक्त्याद्यैवान्यदा वा मुनिरिह मनुते ब्रह्मनिष्ठस्य मुक्तिम् ॥ ४६३ ॥

इति तदधिगमाधिकरणम् ॥ १३० ॥

चिन्ता०—एवमबुद्धिपूर्वोत्तराघमुक्त्वा बुद्धिपूर्वोत्तराघस्याध्यात्मविस्तु केषुचिदनुत्पत्तिमपरेषूत्पन्नस्य प्रायश्चित्तमन्येषु केषुचिदप्रायश्चित्तेऽप्याशूपभोगमुपपादयन् सर्वथापि भागवतस्य सापराधस्यापि क्रमशो मुक्तिं दर्शयति—धीपूर्वमिति । सर्वदा सावधानो ब्रह्मवित् बुद्धिपूर्वमुत्तराघं न सृजत्येव । मध्यमस्तु ब्रह्मवित् जातं पापं प्रायश्चित्तेन क्षिपतीत्याह—जातमिति । अपरोऽपि ब्रह्मवित् 'न खलु भागवता यमविषयं गच्छन्ति । इहैवैषां केचिदुपप्लवा भवन्ति काणा भवन्ति खञ्जा भवन्ति' इत्यादिश्रुत्युक्तप्रकारेण प्रतिपदप्रायश्चित्ताकरणे लघुदण्डमुपभुञ्जीत । इदं तु वृत्रासुरप्रभृतिषु दृष्टमेव । वृत्रः खलु भागवतः, अथापि केनाप्यपचारेणासुरं देहं प्राप्तस्तत्रापि जातिस्वभावाद्देवप्रकृतीनामपराधं कुर्वन्नपराधानु-

रूपोपभोगमप्यन्ते प्राप्य भगवन्तमेव ध्याय न्वभिमतफलं प्राप्तवानिति पौराणिकी प्रसिद्धिः। नन्वथाप्यप-राधशतमनुतिष्ठतश्चेदिराजस्याकृतप्रायश्चित्तस्य कथमिव ब्रह्मप्राप्तिरभूदित्याशङ्क्य तत्रापि प्राचीनसुकृतवशादन्ते परब्रह्मकृष्णाकारावलोकनादेव सर्वप्रायश्चित्तादपवर्गं प्राप्तवानिति सुसङ्गतमेतत्। उक्तमिदमाचार्यैरेव कृष्णा-वतारकाव्ये—

'सुकृतेन पुराकृतेन चद्यः प्रतिपन्नप्रकृतिर्विलीनवैरः।
क्षणमद्भुतकृष्णरूपदर्शी शिथिलाकृष्टशिलीमुखोऽवतस्थे॥'

इति। तदिदमाह—नियतिविभवत इति। अस्तु सिद्धिः, अथाप्यद्यैव वा कालान्तरे वा सिद्धिरित्याशङ्क्य प्राचीनकर्मानुरूपभगवत्संकल्पानुविधानेनानियमेन फलसिद्धिंकिल भगवान्बादरायणो मन्यत इत्याह— अद्येवेति॥ ४६३॥

इति तदधिगमाधिकरणम्॥ १३०॥

पद०—धीपूर्वं त्वित्यादि। सर्वदा—सर्वावस्थास्वपि। सावधानः—किमेनो भविष्यतीत्यव-धानयुक्तः। परवित्—परमात्मोपासनपरः। धीपूर्वम्—बुद्धिपूर्वकम्। उत्तराघम्—विद्यारम्भोत्तरकालिकं पापम्। न सृजति तु—न कुर्यादेव। सदा पापपरिहारजागरूकत्वादिति भावः। जातम्—कदाचित् देशकालवैगुण्यादिनिमित्तविशेषैर्बुद्धिपूर्वकतया जातञ्च पापम्। समुचितैर्नैमित्तिकैश्च—तत्तत्पापानुगुणैःरह-स्यपापे रहस्यरूपैः परिषद्वरणादिरहितैः प्रायश्चित्तैः बहिर्व्यक्तपापविषये यथाशास्त्रं परिषद्वरणादिशास्त्रीयक्रम-युक्तैः प्रायश्चित्तैस्तत्र च प्रतिपदोक्तप्रायश्चित्तानुष्ठानाशक्तौ भगवच्छरणागतिरूपैश्च प्रायश्चित्तैः। आशु—स्वल्पकाल एव। क्षिपति—निवर्तयेदित्यर्थः। तत् भुञ्जीत वा—आश्विति पदमत्राप्यन्वेतुं युज्यते। अकृत-प्रायश्चित्तश्चेत् तत् बुद्धिपूर्वमुत्तराघमब्रह्मविदां कल्पादिचिरकालानुभाव्यमपि शीघ्रमेवानुभवेद्वा। 'लघुर्दण्डः प्रपन्नस्य राजपुत्रापराधवत्' 'न खलु भागवता यमविषयं गच्छन्ति' इत्यादिप्रमाणैर्लघुदण्डो हि ब्रह्मवि-दामवगम्यत इति भावः। एतत्—ब्रह्मविदो लघुदण्डेन महापापापनोदनपूर्वकं यथावस्थितमुक्तिलाभ—इत्येतत्। वृत्रादौ—वृत्राख्येऽसुरे क्षत्रबन्ध्वाख्ये क्षुद्रक्षत्रिये च। दृष्टम्—पुराणादिभिरवगतम्। वृत्रो हि पूर्वं भागवतोऽपचारविशेषेणासुरं देहं लब्ध्वा तज्जात्यानुगुण्येन देवानामपराधं कुर्वाण इन्द्रेण हतो यथापूर्वं भगवन्निष्ठयैव मुक्तिमाप। क्षत्रबन्धुनामा च क्षत्रियो नानाग्रहारग्रामाद्यवलुम्पनादिनिरतोऽपि महर्षिकटाक्ष-विशेषजनितपरमार्तिपूर्वकभगवन्नामोच्चारणमाहात्म्येन विध्वस्ताखिलपापपञ्जरस्तत्क्षणएव भगवन्तमापेति विष्णुधर्मोत्तरादिप्रसिद्धम्। चेदिराजादिसिद्धिः—चेदिर्नाम देशविशेषस्तद्राजश्शिशुपालः। आदिशब्देन दन्तवक्त्रादीनां ग्रहणम्। तेषां सिद्धिस्तत्तच्छरीरावसान एव भगवत्प्राप्तिरूपमुक्तिसिद्धिः। नियति-विभवतः—पूर्वमेव जन्मत्रयमात्रानुवृत्तशात्रवाचरणरूपभगवदाज्ञानुपालनमाहात्म्यात्। यद्वा अन्ते कृष्ण-

दिव्यमङ्गलविग्रहदर्शनरूपसर्वपापप्रायश्चित्तवैभवादित्यर्थः । एवमेव चिन्तामणौ दृश्यते । युक्ता–उपपन्नैव । इह–विषये । मुनिः—व्यासः । ब्रह्मनिष्ठस्य मुक्तिमद्यैवान्यदा वा मनुते—ब्रह्मविदां स्वस्वप्राचीन-सुकृतविशेषमूलकविद्यानिष्पत्त्यानुगुण्येन कालनियमाभावादनियतकालेन मोक्षसिद्धिरिति निश्चितवा-नित्यर्थः ॥ ४६३ ॥

इति तदधिगमाधिकरणम् ॥ १३० ॥

---

## इतराधिकरणम् ॥ १३१ ॥

सूत्रम्—इतरस्याप्येवमसंश्लेषः पाते तु ॥ ४८३ ॥

धर्मस्याश्लेषनाशौ न हि परभजनानुग्रहेणोपपन्नौ
तस्याघत्वप्रसङ्गाच्छ्रुतिरपि च परं पापनिर्मुक्तिमाह ।
भोगैस्तत्पुण्यनाशोऽस्त्विति यदि न यतः काम्यमप्यस्य पापं
तस्मिंस्तल्लक्ष्मसिद्धेर्न सुकृतामिति च श्रूयते पाप्मतास्य ॥ ४६४ ॥

चिन्ता०— पूर्वं पापस्याश्लेषविनाशावुक्तौ अधुना सुकृतस्याप्यश्लेषविनाशावुच्येते इत्या-तिदेशिकी सङ्गतिः । तदर्थविचारस्तु—उत्तरपूर्वसुकृतयोरश्लेषविनाशौ किं सम्भवतो नेति । किं 'पापं कर्म न श्लिष्यते' 'सर्वे पाप्मानः प्रदूयन्ते' इति वाक्यद्वयं सुकृतदुष्कृताश्लेषविना-शपरमुत दुष्कृतमात्राश्लेषविनाशपरम् । किमत्र पापकर्मशब्दो निषिद्धपर उत विद्याविरोधिफलकर्मपरः । 'सर्वे पाप्मानः' इति वाक्यं किं पाप्मशब्दस्य विद्याविरोधिफलकर्मपरतामवगमयति नेति । अत्र पूर्व-पक्षमाह—धर्मस्येति । परभजनानुग्रहेणानुकूलस्य धर्मस्याश्लेषनाशौ नैवोपपन्नौ । अनुपपत्तौ हेतुमाह—तस्येति । नहि सर्वलोकविदितस्य धर्मस्य पापत्वमुपपद्यते । तदा पुण्यपापव्यवस्थानुपपत्ति-प्रसङ्गात् । किञ्च श्रुतिरप्याह—अध्यात्मवित् पुण्यफलं सकलमप्यनुभूय पश्चादपवर्गं प्राप्स्यतीति । तदिदमाह–भोगैरिति । तदेतत प्रतिक्षिपति–नेति । तत्र हेतुमाह–यत इति । अस्याध्यात्मविदः काम्यमपि पापमेव । ननु काम्यस्य सुकृतस्य पापत्ववचनं साहसमेव नहि काम्यं कर्माचरतोऽपि कर्म-ठान् पापिन इति वदन्ति प्राज्ञाः तेन काम्यस्य कर्मणः पापत्वमतिसाहसमेवेत्याशङ्क्यं परिहरति—तस्मिन्निति । लोके हि सर्वत्र यस्मिन् यल्लक्षणं दृश्यते तदेव तच्छब्देन व्यवह्रियते । गवादिशब्दा घटा-दिशब्दाश्च तत्तल्लक्षणानुरोधेन व्यवह्रियन्ते विद्वद्भिः । अत्रापि काम्येषु कर्मस्वधिकारिभेदेन कालभेदेना-वस्थाभेदेन पापमेव पुण्यं पुण्यमेव पापमितिनियमस्य सर्वलोकप्रसिद्धत्वात् काम्यं कर्माध्यात्मविदां पापमेव ।

अपवर्ग एव खल्वध्यात्मविदामभिमतः । तद्विरोधी हि स्वर्गाद्युपभोगः । अत एव स्वर्गादिर्नरकतयोच्यते नारायणपराणाम् । 'एते वै निरयास्तात स्थानस्य परमात्मनः' 'अर्थकामपरा यूयं नारायणपरा वयम्' इत्यादीनि वचनान्यत्र प्रमाणम् । न केवलं लक्षणादेव काम्यकर्मणां पापत्वमस्माभिरुच्यते 'न सुकृतं न दुष्कृतं सर्वे पाप्मानोऽतो निवर्तन्ते' इत्यादिश्रुतिरपि काम्यकर्मणः पापत्वं कण्ठोक्त्या प्रकटयतीति दर्शयति—न सुकृतमिति ॥ ४६४ ॥

पद०—धर्मस्येत्यादि । परभजनानुग्रहेण—परमात्मोपासनसंसिद्धसामर्थ्येन । धर्मस्य—श्रेयस्साधनतयानुष्ठितस्य पुण्यस्य । अश्लेषनाशौ—फलाश्लेषकर्मशक्तिनाशौ । उपपन्नौ नहि—युक्तियुक्तौ न भवतः । तस्य—धर्मस्य । अघत्वप्रसङ्गात्—पापत्वप्रसङ्गात् । निवर्तनीयं हि पापमेव भवति पुण्यञ्चेन्न निवर्तनीयं भवेत् तथा च पुण्यपापव्यवस्थानुपपत्तिरिति भावः । श्रुतिरपि च—प्रत्यक्षादिवत्स्वार्थे प्रमाणतमा श्रुतिरपि च । परं पापनिर्मुक्तिमाह—'पाप्मानोऽतो निवर्तन्ते' इति केवलं पापनिर्मुक्तिमेव वदति । न तु पुण्यस्य च निवृत्तिं वदति । तत्—तस्मात् । भोगैः—फलानुभवैरेव । पुण्यनाशोऽस्तु—पुण्यकर्मणां निवृत्तिर्भवतु । इति यदि न—इति यच्छङ्कनं तन्न युक्तम् । यतः—यस्मात् कारणात् । अस्य—ब्रह्मप्राप्त्येकाभिलाषिणोऽधिकारिणः । काम्यमपि—ब्रह्मप्राप्तिविरोधिभूत-स्वर्गादिक्षुद्रफलसाधनभूतं काम्यकर्मापि । पापम्—पापशब्दवाच्यमेव । तस्मिन्—काम्यकर्मणि । तल्लक्ष्मसिद्धेः—विरोधिफलकत्वरूपपापलक्षणस्य सिद्धत्वात् । यद्धि यल्लक्षणयुक्तं तत् तच्छब्दवाच्य-मेव यथागोमहिषादि, नहि पुण्यपापयोर्गोत्वादिवत् काचिज्जातिरस्ति अपि त्वनुकूलप्रतिकूलफलकशास्त्री-यकर्मत्वमेव पुण्यपापशब्दप्रवृत्तिनिमित्तम् । तादृशत्वञ्चाधिकारिभेदेन देशभेदेन कालभेदेन च भिद्यते । अतो मुमुक्षूणामभिमतमोक्षविरोधिफलकतया काम्यकर्माणि पापशब्दवाच्यान्येवेति भावः । अस्य—काम्यकर्मणः । पाप्मता—पाप्मशब्दवाच्यता । नसुकृतमितिश्रूयते च—'न सुकृतं न दुष्कृतं सर्वे पाप्मानोऽतो निवर्तन्ते' इति श्रुतौ निवर्तनीयसर्वपाप्मशब्दार्थतया दुष्कृतमिव सुकृतमपि समर्थितं श्रूयते । अतश्च कण्ठोक्त्या सिद्धं काम्यकर्मणां पापशब्दवाच्यत्वमिति भावः ॥ ४६४ ॥

पुण्यं विद्यानुकूलं यदिह सफलता तस्य विद्याप्रदत्वात्
तस्यां यन्नोपयुक्तं तदपि दुरितवद् बन्धकत्वेन वार्यम् ।
कारागारोपरुद्धे निगलयुगलतस्सार्वभौमस्य भृत्ये
हैमं कार्ष्णायसञ्च प्रसदनसमये भञ्जनीयं सहैव ॥ ४६५ ॥

चिन्ता०—अत्र पापवत् पुण्यस्यापि विरोधिफलसाधनत्वेन निरसनीयत्वाद् राजभृत्यनिरोधकसौवर्णायसनिगलद्वयन्यायेन पुरुषार्थप्राप्तिदशायां सर्वस्यापि भञ्जनीयत्वमेवेत्याह—पुण्यमिति। द्विविधं हि पुण्यं विद्यानुकूलं केवलोपभोगार्थञ्चेति। तत्र विद्यानुकूलं कर्म विद्याप्रदानेन चरितार्थं भवति। विद्यायामनुपयुक्तं यत्कर्म काम्यं तत् दुरितवत् वारणीयमित्याह—तस्यामिति। दुरितं हि दुःखहेतुः कदाचिद्वैराग्यहेतुरपि भवति। काम्यं कर्म सुखहेतुत्वात् तदाशाभिवृद्धिमुखेन संसाराभिवृद्धिमेव करोतीति पापादपि काम्यं कर्म विशेषेण परित्याज्यमिति भावः। पुण्यपापयोः परिहरणीयत्वं लोकदृष्टान्तन्यायेनोपपादयति—कारागारेति। इदं तु पामराणामपि प्रतीत्यर्थम्॥ ४६५॥

पद०—पुण्यमित्यादि। इह—ब्रह्मविदि। यत् पुण्यं विद्यानुकूलम्—यत् पुण्यकर्म विद्यानिष्पत्त्यौपयिकशरीरहृषीकवर्धकान्नपानारोग्यादिफलद्वारा विद्यानिष्पत्तिसहकारि भवति। तस्य—कर्मणः। विद्याप्रदत्वात् सफलता—पूर्वोक्तरीत्या विद्यानिष्पादकतया साफल्यं सिद्धम्। यत्—काम्यकर्म। तस्याम्—विद्यायाम्। उपयुक्तं न—फलद्वारोपयुक्तं न भवति। तदपि—तादृशं कर्मापि। बन्धकत्वेन—स्वफलभूतक्षुद्रसुखतृष्णाजननद्वारा मुक्तिविरोधित्वेन बन्धकत्वात्। दुरितवद्वार्यम्—पापमिव निवर्तनीयमेव। तत्र लोकसिद्धदृष्टान्तः प्रदर्श्यते उत्तरार्धेन। निगलयुगलतः—हैमकार्ष्णायसनिगलद्वयेन गतिविरोधिभूतेन। कारागारोपरुद्धे—बन्दीगृहे स्वप्राप्तगतिशून्ये कृते। भृत्ये—दासे विषये। सार्वभौमस्य—स्वशासित्रन्तरशून्यस्य भृत्यं शिक्षितुं रक्षितुं वा स्वतन्त्रस्य महाराजस्य। प्रसदनसमये—अन्तरङ्गजनान्तरकृतनिगलितभृत्यापराधक्षमापणादिक्रमेणानुग्रहसम्पत्तिसमये। हैमं कार्ष्णायसञ्च—निगलमिति शेषः। हेम्ना सुवर्णेन निर्मितं कृष्णायसेन निर्मितञ्च निगलं गतिनिरोधि। सहैव—युगपदेव कार्ष्णायसनिगलभञ्जनसमय एव। नतु हैममिति कालान्तरं प्रतीक्ष्यते बन्दीकृतेन, नवा हैममिति विशेषेण कश्चित्कालं सह्यत इति भावः। भञ्जनीयम्—भेदनीयं हि। तद्वदभिमतविरोधित्वात् काम्यकर्म निवर्तनीयमिति भावः॥ ४६५॥

काम्यं नेच्छेद्विरक्तो यदि किल कुरुते रागयोगात् फले तत्
नाधीपूर्वञ्च काम्यं किमपि नच दिशेद्वन्धमज्ञातधर्मैः।
विद्यार्थैर्लुप्यतेऽतः किमितरदिति चेन्नाधिकैस्सान्तरायैः
अन्यार्थैर्मोहजैः क्वाप्यनुतपनवतो बन्धुजैश्चास्त्वलेपः॥ ४६६॥

इति इतराधिकरणम्॥ १३१॥

चिन्ता०—अत्राध्यात्मविदामलेपविषयं सुकृतं न सम्भवतीत्याक्षिप्य प्रकारभेदेन सम्भवतीत्युपपादयति—काम्यमिति। अयमत्राक्षेपकस्य भावः—अध्यात्मविद् विरक्तत्वात् काम्यं कर्म नेच्छेत्। अत एव तन्न करोति। तस्मादकृतेन कर्मणा तावदलेपो न वाच्यः। ननु विरक्तोऽपि वासनावशात् कदाचित् काम्यं कर्म कुर्यादित्याशङ्क्य यदि कुर्यात् तत्कर्म फलं प्रयच्छेदेव, तेन फलेन विनष्टत्वात् तेनापि कर्मणा अलेपो न वाच्य इत्याह—यदि किलेति। तर्ह्यबुद्धिपूर्वकं काम्यमस्ति तेनालेप उच्यत इत्याशङ्क्य तदपि निराकरोति—नाधीपूर्वमिति। काम्यं चेद् बुद्धिपूर्वकमेव कामनाया बुद्धिविशेषजन्यत्वात्, तेनाबुद्धिपूर्वकत्वे काम्यत्वं न स्यादित्यर्थः। तर्हि ज्ञातान्यज्ञातानि च सुकृतानि सन्ति तत्राज्ञातसुकृतैरेवालेप उच्यत इत्याशङ्क्य तदपि परिहरति—न चेति। अज्ञातधर्मो हि काम्यं फलं न दिशति फलोद्देशेनानुष्ठानाभावात्। तर्हि विद्यार्थैर्धर्मैरेवालेप उच्यत इति चेत् तदपि नेत्याह—विद्यार्थैरिति। विद्यानिष्पत्त्या लुप्तत्वात् विद्यार्थानि कर्माणि विद्यानिष्पत्त्यैव दत्तफलान्येव। अत इतरत्कर्म नास्ति, केनालेपः कथ्यत इत्याह—अत इति। अत्रोत्तरमाह—नेति। अयमर्थः—विद्यार्थमनुष्ठितानि कर्माणि विद्याफलमदत्त्वाधिकान्यवतिष्ठन्ते वीतरागत्वेऽपि वासनावशादन्यार्थतया मोहतोऽनुष्ठितानि सान्तरायत्वाददत्तफलानि कर्माण्यपि कानिचिदवतिष्ठन्ते अध्यात्मविदि स्नेहाद् बन्धुभिरनुष्ठितानि सुकृतानि बहून्यवतिष्ठन्ते तानि सुकृतान्यपि तस्य दुष्कृतान्येव तस्मादनुतापवतस्तस्याध्यात्मविदस्तैरलेप उच्यत इत्यलेपवचनस्यावकाशोऽस्तीति ॥ ४६६ ॥

इति इतराधिकरणम् ॥ १३१ ॥

पद०—काम्यमित्यादि। विरक्तः—निरतिशयानन्दरूपब्रह्मप्राप्तिकामतया क्षुद्रफले विरक्तोऽधिकारी। काम्यम्—कर्म। नेच्छेत्—अत एव तन्न कुर्यादित्यर्थः। यदि किल कुरुते—विरक्तोऽपि वासनावशात् कदाचित्काम्यं कर्म यदि च कुर्वीत। फले रागयोगात् तत् कुरुते—तर्हि तत्फले रागवशादेव तादृशं कर्म कुर्यात्। तथा च तत्कर्म फलं प्रयच्छेदेव तेन फलेन विनष्टत्वात् न तदलेपविषयभूतं कर्मेति भावः। किमपि च काम्यमधीपूर्वं न—यत् किञ्चिदपि फलसाधनं कर्म अबुद्धिपूर्वं न भवति फलकामनाया ज्ञानमूलकत्वात्। तेनाबुद्धिपूर्वकत्वे काम्यत्वमेव न स्यादिति भावः। अज्ञातधर्मश्च बन्धं न दिशेत्—अबुद्धिपूर्वको धर्मः फलद्वारा बन्धं न दातुं प्रभवति फलोद्देशेनानुष्ठानाभावात्। विद्यार्थैर्लुप्यते—पूर्वोक्तरीत्या विद्यानिष्पत्त्यौपयिकफलैः कर्मभिस्तु लुप्यते दत्तफलतया स्वयमेवानाशीत्यर्थः। अत इतरत् किम्—उक्ताद्भिन्नं किमस्ति काम्यम्? यत् फलाश्लेषवचनास्पदं भवेत्। इति चेन्न—इति शङ्क्यते चेत्तन्न युक्तम्। अधिकैः—यानि विद्यार्थमनुष्ठितानि किमपि फलमदत्त्वाधिकानि स्युस्तैः कर्मभिः।

सान्तरायैः—कर्मान्तरप्रतिबन्धाददत्तफलैः कर्मभिः । अन्यार्थैः—लोकसङ्ग्रहाद्यर्थमनुष्ठितैः कर्मभिः । क्वापि मोहजैः—कदाचिन्मोहवशेनाकृतफलत्यागैरनुष्ठितैः कर्मभिः । बन्धुजैश्च—स्नेहवशेन बन्धुजनानुष्ठितैश्च बन्धकफलैः कर्मभिः । अनुतपनवतः—सुकृतेष्वपि स्वकृतेषु दुष्कृतेष्विव विरोधिफलकत्वमनुचिन्त्यानुतप्यमानस्याधिकारिणः । अलेपोऽस्तु—फलाश्लेषो भवतु । एवमलेपस्यावकाशोऽस्तीत्यर्थः ॥ ४६६ ॥

इति इतराधिकरणम् ॥ १३१ ॥

---

## अनारब्धकार्याधिकरणम् ॥ १३२ ॥

सूत्रम्—अनारब्धकार्ये एव तु पूर्वे तदवधेः ॥ ४८२ ॥

नश्यत्वारब्धकार्यं परविदि दुरितं नह्यधीतो विशेषः
सर्वे पाप्मान इत्यप्यभिहितमिति चेन्नोपलम्भादिबाधात् ।
सद्विद्या तस्य तावच्चिरमिति च वदत्यस्मरंश्चागमज्ञाः
जीवन्मुक्त्यादिशब्दोऽप्युपचरणपरो मोहितास्तेन मन्दाः ॥ ४६७ ॥

चिन्ता०—अत्र सङ्गतिर्भाष्ये 'ब्रह्मविद्योत्पत्तेः पूर्वोत्तरभाविनोस्सुकृतदुष्कृतयोरश्लेषविनाशावुक्तौ । ततः पूर्वभाविनोस्सुकृतदुष्कृतयोः किमविशेषेण विनाशः, उतानारब्धकार्ययोरेवेति विशये' इति । तदर्थविचारस्तु—किं पूर्वे सुकृतदुष्कृते अविशेषेण नश्यत उतानारब्धफले । किं 'सर्वे पाप्मानः' इति सर्वशब्दस्यानुरोधो न्याय्य उत 'तस्य तावत्' इतिविलम्बश्रुत्यनुरोधः । किं कुलालचक्रभ्रमणवत् कर्मविनाशेऽपि संस्कारेण शरीरधारणमुपपद्यते नेति । किमीश्वरप्रीत्यप्रीतिव्यतिरेकेण संस्कारकल्पनायां प्रमाणमस्ति नेति । अत्र पूर्वपक्षमनुवदति—नश्यत्विति । अनारब्धकार्यवदारब्धकार्यमपि दुरितं नश्यत्येव । तत्र विशेषाभावादिति हेतुमाह—नहीति । अनारब्धकार्यमेव नश्यति आरब्धकार्यं तु न नश्यतीति विशेषो न ह्यधीत इत्यर्थः । कथमनधीत इत्याशङ्क्य साधारण्येनाध्ययनमाह—सर्व इति । पाप्मानस्सर्वे इति हि साधारण्येनोक्तत्वादुभयमपि नश्यतीति वक्तव्यमिति । तमिमं पूर्वपक्षं प्रतिक्षिपति—नेति । तत्र हेतुमाह—उपलम्भादीति । प्रत्यक्षबाधादनुमानबाधादागमबाधाच्चेत्यर्थः । उपलभ्यते हि ब्रह्म विदामपि सुखदुःखानुवृत्तिः । अन्यथा तदनुकूलप्रवृत्तिविनिवृत्त्यादिकं न स्यादित्यनुमानबाधः । आगमबाधोऽपि 'तस्य तावदेव चिरम्' 'स खल्वेवं वर्तयन्' इत्यादिवचनबाधः । आगमबाधमेव विशेषतः

प्रकटयति—सद्विद्येति । अस्मरंश्चागमज्ञा इति—पराशरपाराशर्यादयः ' स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ' इति वचनसहस्रैर्ब्रह्मविदामपि भगवदाराधनरूपेण विद्याङ्गकर्मणामवश्यकर्तव्यतामस्मरन् । तर्हि ' तमेवं विद्वानमृत इह भवति ' इति जीवन्मुक्तिवचनं कथं स्यादित्याशङ्क्याह—जीवन्मुक्तीति । इहामृतत्ववचनममृतप्रायत्वादौपचारिकमित्यर्थः । तर्हि मृषावादिनो जीवन्मुक्तिमेवात्यादरेण प्रतिष्ठापयन्ति, तत्कथमिति वदतस्तु शिष्यस्य कस्यचित् गतानुगतिकस्योत्तरमाह—मोहिता इति । श्रुतिवाक्यस्याभिप्रायमजानाना मन्दा जीवन्मुक्तिवादं मौढ्यादेव प्रलपन्तीत्यर्थः ॥ ४६७ ॥

पद०—नश्यत्वित्यादि । परविदि—परमात्मोपासके । आरब्धकार्यं दुरितम्—फलप्रदानाय प्रवृत्तं दुरितमपि । नश्यतु—अनारब्धकार्यमिवारब्धकार्यमपि दुरितं नश्यत्वित्यर्थः । विशेषोऽधीतो नहि—अनारब्धकार्यमेव नश्यति आरब्धकार्यन्तु न नश्यतीति विशेषो वेदे नाधीतो हि । सर्वे पाप्मान इत्यप्यभिहितम्—' सर्वे पाप्मानोऽतो निवर्तन्ते ' इति वाक्ये सर्वे पाप्मानो नश्यन्तीत्यविशेषेण सर्वेषामपि पाप्मनां निवर्तनमभिहितम् । इति चेन्न—इति शङ्क्यते चेत् नैतद्युक्तम् । उपलम्भादिबाधात्—प्रत्यक्षबाधादनुमानबाधादागमबाधाच्चेत्यर्थः । उपलभ्यते हि ब्रह्मविदामपि सुखदुःखानुवृत्तिः । अन्यथा तदनुकूलप्रवृत्तिनिवृत्त्यादिकं न स्यादित्यनुमानबाधः । ' तस्य तावदेव चिरम् ' ' स खल्वेवं वर्तयन्यावदायुषम् ' इत्यादिश्रुतिबाधः । आगमबाधमेव विशेषतः प्रकटयति—सद्विद्येत्यादि । सद्विद्या—छान्दोग्यषष्ठप्रपाठकः । तस्य तावच्चिरमिति वदति च—' तस्य ' ब्रह्मविदः ' तावदेव ' शरीरावसानपर्यन्तमेव ' चिरम् ' विलम्बः, इति वदति । तथा च विद्यारम्भसमय एवारब्धकार्यकर्मनाशेऽङ्गीकृते तस्याश्श्रुतेर्बाधो भवेदिति भावः । आगमज्ञाः—पराशरादयः । अस्मरंश्च—पुराणसंहितावचनै स्स्वयोगमहिमसाक्षात्कृतश्रुत्यर्थमस्मार्षुः । यथा श्रीविष्णुपुराणे षष्ठेंऽशे परमयोगिनः केशिध्वजस्याख्याने ' केशिध्वजो विमुक्त्यर्थं स्वकर्मक्षपणोन्मुखः । बुभुजे विषयान् कर्म चक्रे चानभिसंहितम् ॥ अकल्याणोपभोगैश्च क्षीणपापमलस्तथा । अवाप सिद्धिमत्यन्ततापक्षयफलां द्विज ॥ ' इति । जीवन्मुक्त्यादिशब्दोऽपि—' तमेवं विद्वानमृत इह भवति ' इत्यादौ जीवन्मुक्त्यादिप्रतिपादकशब्दोऽपि । उपचरणपरः—' विगतेच्छाभयक्रोधो यस्सदा मुक्त एव सः ' इत्यादिवदासन्नसिद्धितात्पर्याद्युपचारपरः । तेन—एवमौपचारिकार्थपरेणापाततोऽन्यार्थप्रत्यायकेन ' अमृत इह भवति ' इत्यादिशब्देन । मन्दाः—पूर्वापराविरुद्धार्थ निर्धारणापटुधियः परे । मोहिताः—मोहं प्रापिताः । विरुद्धार्थे सदर्थत्वबुद्धिं प्रापिताः ॥ ४६७ ॥

रोगाद्यारम्भकाणां प्रशमनविधयस्सन्ति दानार्चनाद्याः
प्रत्येतुस्स्वावताराद्यपि विभुरपुनर्जन्मतामप्यगायत् ।
तस्मादारब्धकार्ये फलनियतिवचो दुर्घटं भाति मैवं
प्रायश्चित्तोज्झितानां ननु फलनियतिस्सूत्रकाराद्यभीष्टा ॥ ४६८ ॥

इत्यनारब्धकार्याधिकरणम् ॥ १३२ ॥

चिन्ता०—अत्र कश्चिच्चोदयति—' ननु प्रारब्धकार्ययोः पुण्यपापयोर्भोगेन विनाश इति भवद्भिरुच्यते, तन्नोपपद्यते कृतप्रायश्चित्तानां भोगाभावात् ' इति । तदिदमाह—रोगादीति । लोके हि प्रारब्धानामपि पापानां भोगमन्तरेण विनाशो दृश्यते ' जन्मान्तरकृतं पापं व्याधिरूपेण बाधते । तच्छान्तिरौषधैर्दानैर्जपहोमार्चनादिभिः ॥ ' इति । किंच ' जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः । त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन ॥ ' इत्यवताररहस्यवेदिनां प्रारब्धशेषानुभवाभावेनापवर्गप्राप्तिरुच्यते तत् कथं प्रारब्धस्योपभोग इति । तदप्याह—प्रत्येतुरिति । स्वावतारादि प्रत्येतुरित्यन्वयः । तस्मादारब्धकार्ये कर्मणि फलनियतिवचो दुर्घटं भातीति शब्दान्वयः । तत्रोत्तरमाह—मैवमिति । तदेव विवृणोति—प्रायश्चित्तोज्झितानामिति । अकृतप्रायश्चित्तानां कर्मणां फलावश्यम्भावस्सूत्रकाराभिप्रेतो नपुनः कृतप्रायश्चित्तानामपि, तेन न कश्चिदपि विरोधः ॥ ४६८ ॥

इत्यनारब्धकार्याधिकरणम् ॥ १३२ ॥

पद०—रोगाद्यारम्भकाणामित्यादि । रोगाद्यारम्भकाणाम्—रोगा ज्वरातिसारादयः, आदिशब्देन कलत्रपुत्रादिमरणपरिभवधनभूमिहानिप्रभृतिविपत्परम्परा ग्राह्या एवमाद्यारम्भकाणां पापानाम् । दानार्चनाद्याः—गोभूतिलहिरण्यादिदानानि भगवदर्चना आद्यशब्देन सहस्रनामजपादिर्ग्राह्यः एतद्रूपाः । प्रशमनविधयः—निवर्तनोपायाः । सन्ति—' जन्मान्तरकृतं पापं व्याधिरूपेण बाधते । तच्छान्तिरौषधैर्दानैर्जपहोमार्चनादिभिः ॥ ' इत्यादिषु प्रतिपादितास्सन्ति । स्वावताराद्यपि—स्वावतारसत्यत्वम्, अजहत्स्वस्वभावत्वं शुद्धसत्त्वमयत्वं स्वेच्छामात्रनिदानत्वं धर्मग्लानिकालिकत्वं साधुसंरक्षणार्थत्वमित्येवंरूपमवताररहस्यमवतारादिशब्दार्थः । तत् । प्रत्येतुः—विदितवतोऽधिकारिणः । अपुनर्जन्मतामपि—पुनर्जन्माभावमपि । विभुः—श्रीकृष्णरूपपुरुषोत्तमः । अगायत्—' अजोऽपि सन्नव्ययात्मा ' इत्यारभ्य ' जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः । त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन ॥ ' इति श्रीगीतावचनेन प्रतिपादितवान् । तस्मात्—आरब्धकार्यस्य कर्मणो भोगभिन्नैरप्युपायैर्नाशदर्शनादित्यर्थः । आरब्धकार्ये—प्रदीयमानफले कर्मणि विषये । फलनियतिवचः—फलानुभवनि-

यमवचनम् । दुर्घटं भाति—अशक्यघटनतया प्रतीयते । मैवम्—एवं मा शङ्किष्ठाः । प्रायश्चित्तोज्झितानां ननु—अकृतप्रायश्चित्तानां कर्मणामेव । फलनियतिः—फलानुभवनियतता । सूत्रकाराद्यभीष्टा—सूत्रकारस्य स्मृतिपुराणकाराणामन्येषाञ्च महर्षीणामभिमता । न पुनः कृतप्रायश्चित्तानामपि । तेन न कश्चिदपि विरोध इति भावः ॥ ४६८ ॥

इत्यनारब्धकार्याधिकरणम् ॥ १३२ ॥

---

## अग्निहोत्राद्यधिकरणम् ॥ १३३ ॥

सूत्रम्—अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॥ ४८५ ॥

श्लेषश्चेदस्य पुण्यैस्स तु भवति तदा बन्ध इत्यभ्युपेतं
यद्यश्लेषो भवेत्तैः परविदि विफला पुण्यनिष्ठा परस्तात् ।
तस्माद्धर्मोऽप्यधर्मक्रमत इह परित्याज्य एवेत्ययुक्तं
न स्याद्बन्धाय विद्याङ्कुरमुपचिनुते ह्यग्निहोत्रादिधर्मः ॥ ४६९ ॥

चिन्ता०—अत्र भाष्ये "इतरस्याप्येवमसंश्लेषः' इति विद्याबलात् सुकृतस्याप्यसंश्लेष उक्तः । अग्निहोत्रादीनां नित्यनैमित्तिकानां स्वाश्रमधर्माणामपि सुकृतत्वसामान्येन तत्फलस्याश्लेषादनिच्छतोऽननुष्ठाने" इति शङ्कया सङ्गतिरुक्ता । तदर्थविचारस्तु—किमग्निहोत्राद्याश्रमधर्मो विदुषः कार्याश्लेषादननुष्ठेय उतानुष्ठेयः । किमश्लेषवचनं सर्वसुकृतविषयमुत विद्याङ्गाश्रमधर्मव्यतिरिक्तसुकृतविषयम् । किं विद्वत्सम्बन्ध्याश्रमधर्मस्यापि फलं विद्याव्यतिरिक्तमुत विद्यैवेति । अत्र पूर्वपक्षमारचयति—श्लेषइति । अस्याध्यात्मविदः पुण्यैरग्निहोत्रादिभिः श्लेषश्चेत् स तु श्लेषो बन्ध एव भवतीत्यङ्गीकार्यम् । यद्यश्लेषस्तदा परविद्यग्निहोत्रादिपुण्यनिष्ठा निष्फला स्यात् । अतः कारणाद्धर्मोऽप्यधर्मक्रमेणैव परित्याज्यः स्यादिति । तदिदं दूषयति—अयुक्तमिति । तत्र हेतुमाह—न स्यादिति । यद्यग्निहोत्रादिर्बन्धाय स्यात् तदा ह्ययुक्तः, स तु बन्धाय न स्यात् अपि तु मोक्षस्योपकुरुत इत्याह—विद्याङ्कुरमिति । ब्रह्मविद्याङ्कुरमन्तःकरणशुद्धिमुपचिनुते ह्यग्निहोत्रादिधर्म इति । उपकारके प्रतिकूलत्वबुद्धिर्भवतः पापमूलेत्यर्थः ॥ ४६९ ॥

पद०—श्लेषश्चेदित्यादि । अस्य—ब्रह्मविदः । पुण्यैः—अग्निहोत्रादिधर्मैः । श्लेषश्चेत्—फलानुभवयोग्यतारूपस्सम्बन्धोऽङ्गीकृतश्चेत् । स तु—स एव सम्बन्धः । तदा—तदैव । बन्धो भवति—

मोक्षविरोधी भवति । इत्यभ्युपेतम्—इति भवद्भिरितःपूर्वमङ्गीकृतं हि । परविदि–परमात्मोपासके । तैर्यद्यश्लेषो भवेत्–अग्निहोत्रादिभिस्साकं फलानुभवयोग्यताभावरूपोऽसम्बन्धो यदि भवेत् । परस्तात् पुण्यनिष्ठा विफला–उत्तरकालेऽग्निहोत्रादिधर्मानुष्ठानं विफलमेव । तस्मात्—उक्तोपपादनात् । धर्मोऽपि—अग्निहोत्रादिधर्मोऽपि । अधर्मक्रमतः–अधर्मतुल्यतया । इह—ब्रह्मविदि विषये । परित्याज्य एव—अननुष्ठेय एव । इत्ययुक्तम्—इति शङ्कनमयुक्तम् । बन्धाय न स्यात्—अग्निहोत्रादिधर्मो बन्धहेतुर्न भवेत् । अग्निहोत्रादिधर्मो विद्याङ्कुरमुपचिनुते हि—अग्निहोत्रादिवर्णाश्रमधर्मो विद्याया अङ्कुरस्थानीयामन्तःकरणशुद्धिमभिवर्धयति हि । विद्यानिष्पत्त्यर्थमेव तेषामनुष्ठानम्, विद्यानिष्पत्तिरूपं फलं न बन्धकम्, अपितु साक्षान्मोक्षहेतुरिति न पूर्वोक्तानुपपत्तिरिति भावः ॥ ४६९ ॥

सर्वापेक्षेत्यवोचन्ननु परभजने कर्मणामङ्गभावं
भूयो वक्त्यग्निहोत्रेत्यपि तदिति मुधा ह्येकमत्रेति चेन्न ।
विद्याया नैरपेक्ष्यात्तदपरिकरता शङ्किता प्रागपास्ता
श्लेषाभावप्रसक्त्या त्विह पुनरिति तन्नीतिवैषम्यसिद्धेः ॥ ४७० ॥

इत्यग्निहोत्राद्यधिकरणम् ॥ १३३ ॥

चिन्ता०—अत्र पौनरुक्त्यमाशङ्क्य परिहरति—सर्वेति । 'सर्वापेक्षा' इत्यस्मिन्सूत्रे कर्मणामङ्गभावं परभजने ह्यकथयत् अधुनापि 'अग्निहोत्रादि' इत्यनेन तदेवाभिधीयते तेनोभयोरेकं निरर्थकमिति । तदेतद्दूषयति—नेति । अत्रोभयोः प्रयोजनविशेषाभिधानेन पौनरुक्त्यं परिहरति—विद्याया इति । तत्र हि विद्याया नैरपेक्ष्याभिधानेन सापेक्षत्वमुक्तम् । तदपरिकरता विद्याया निरङ्गत्वाभिधानं सामान्येन प्रागपास्ता । अधुना पुनस्सुकृताश्लेषप्रसङ्गे सुकृतत्वाविशेषादग्निहोत्रादीनां परित्याज्यत्वमाशङ्क्य तदेव पुनः प्रतिषिध्यत इति न पौनरुक्त्यप्रसङ्गः । नीतिवैषम्यसिद्धेः—न्यायप्रवृत्तिप्रकारवैषम्यसिद्धेरित्यर्थः ॥ ४७० ॥

इत्यग्निहोत्राद्यधिकरणम् ॥ १३३ ॥

पद०—सर्वापेक्षेत्यादि । ननु—प्रश्ने । परभजने—परमात्मोपासने । कर्मणाम्—अग्निहोत्रादिवर्णाश्रमधर्माणाम् । अङ्गभावम्—अङ्गत्वम् । सर्वापेक्षेत्यवोचत्—'सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्' इति सूत्रेण पूर्वमुक्तवान् । तत्—उक्तमेव धर्माणां विद्याङ्गत्वम् । अग्निहोत्रेति—'अग्निहोत्रादितु तत्कार्यायैव तद्दर्शनात्' इति प्रकृतसूत्रेण । भूयोऽपि वक्ति—पुनश्चाभिदधाति । इति अत्र–एवंरूपे

सूत्रद्वये । एकं मुधा हि—अन्यतरेण पर्याप्तेरितरद्विफलं हि । इति चेन्न—इति शङ्क्यते चेन्नैतद्युक्तम् । विद्यायाः—उपासनायाः । नैरपेक्ष्यात्—अङ्गनिरपेक्षत्वात् । शङ्किता—पूर्वपक्षिता । तदपरिकरता—अग्निहोत्राद्यङ्गकत्वाभावः । प्रागपास्ता—'सर्वापेक्षा' इति सूत्रेण पर्यहारि । इह पुनस्तु—'अग्निहोत्रादि' इत्यस्मिन् सूत्रे तु । श्लेषाभावप्रसक्ता—फलसम्बन्धासम्भवप्रसङ्गापतिता तदपरिकरता अपास्ता । इति तन्नीतिवैषम्यसिद्धेः—एवं न्यायप्रवृत्तिप्रकारवैषम्यसिद्धेरित्यर्थः ॥ ४७० ॥

इत्यग्निहोत्राद्यधिकरणम् ॥ १३३ ॥

---

## इतरक्षपणाधिकरणम् ॥ १३४ ॥

सूत्रम्—भोगेन त्वितरे क्षपयित्वाथ सम्पद्यते ॥ ४८७ ॥

निर्दिष्टस्माच्छरीरादिति नियतिरतो यावदित्यादिशब्दः
कर्म प्रारब्धकार्यं कथयति विदुषस्तच्छरीरान्तमेव ।
मैवं प्रारब्धवैचित्र्यान्न तदवधिविधौ व्याप्रियेतान्यपर्याद्
भूयोदेहस्मृतेश्चान्तिमवपुषि दृढोद्यतसमाधेस्तु मोक्षः ॥ ४७१ ॥

चिन्ता०—'आरब्धकार्ये पुण्यपापे किं विद्यायोनिशरीरावसाने, उत तच्छरीरावसाने शरीरान्तरावसाने चेत्यनियमः' इति चिन्तनात् भाष्ये सङ्गतिर्व्यक्ता । तदर्थविचारस्तु—उक्तैव प्रथमचिन्ता । तदर्थमपि विचार्यते—किं 'तस्य तावत्' इति वाक्यं विद्यायोनिशरीरावसानत्वमवगमयति उत तच्छरीरमतन्त्रीकृत्य प्रारब्धकर्मफलभोगावसानत्वमवगमयतीति । अत्र पूर्वपक्षं सोपपत्तिकमभिधाय तदन्यथासिद्ध्या प्रतिक्षिपति—निर्दिष्टेति । इत्थं किल पूर्वपक्षी मन्यते—'एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परञ्ज्योतिरुपसम्पद्य' इत्यस्मिन्वाक्ये खल्वस्माच्छरीरादित्युच्यते तेन विद्यारम्भशरीरावसान एव ब्रह्मप्राप्तिः । तेन 'यावन्न विमोक्ष्ये' इत्यादिवाक्यं प्रारब्धकार्यं कर्म कथयत्येव अथापि विदुषस्तच्छरीरान्तमेव तत्कर्म भवति तस्मात् तस्यापि वाक्यस्य न विरोध इति । तदिदं दूषयति—मैवमिति । तत्र हेतुमाह—प्रारब्धेति । 'यावन्न विमोक्ष्ये' इत्यादिवाक्यात् प्रारब्धानां कर्मणां वैचित्र्यान्न तच्छरीरावसाने मोक्षः । अस्माच्छरीरादिति वचनं बुद्धिस्थचरमशरीरावसानपरमिति मन्तव्यम् । नन्वस्माच्छरीरादिति श्रुतिस्वारस्यं विहाय तत्रवा अन्यत्रवेत्यस्वरसार्थः किमर्थं कल्प्यत इत्याशङ्क्याह—भूयइति ।

ब्रह्मविद्यानिष्ठानामेव महर्षीणामनुक्रमादनेकजन्मसम्बन्धवचनस्य महाभारतादिषु महर्षिभिः प्रतिपादितत्वात्। विदुरोहि धर्मदेवता। गाङ्गेयोऽपि वस्वादिष्वन्यतमः। एवं पूर्वमेव ब्रह्मविद्यानिष्ठानां चरमशरीरपर्यन्तं प्रारब्धकर्मानुभूय तदवसाने मोक्षः ॥ ४७१ ॥

पद०—निर्दिष्टेत्यादि। अस्माच्छरीरादिति नियतिर्निर्दिष्टा—'एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परञ्ज्योतिरुपसम्पद्य' इति वाक्ये अस्माच्छरीरादिति विद्यारम्भशरीरपरामर्शात् तदवसान एव ब्रह्मप्राप्तिनियतिर्निर्दिष्टा। अतः—अस्मात् कारणात्। यावदित्यादिशब्दः—'तस्य तावदेव चिरं यावन्न विमोक्ष्ये' इत्यत्र विलम्बवाचकोऽपि यावन्नविमोक्ष्य इत्यादिशब्दः। विदुषः—ब्रह्मविदः। प्रारब्धकार्यं कर्म—आरब्धफलकं कर्म। तच्छरीरान्तमेव कथयति—विद्यारम्भशरीरावसानान्तमित्येव प्रतिपादयति। 'अस्माच्छरीरात्' इति श्रुत्यन्तरबलादिति भावः। मैवम्—एवं मा शङ्किष्ठाः। प्रारब्धचैत्र्यात्—'यावन्न विमोक्ष्ये' इत्यादिवाक्यं कर्तृप्रारब्धकर्मणां तत्तत्पुरुषभेदेन एकद्वित्रिचतुरादिशरीरानुभाव्यफलकत्वेन विचित्ररूपत्वात्। आन्यपर्यात्—प्रारब्धकर्मावसानभाविमोक्षविधौ स्वस्य तत्परत्वात्। भूयोदेहस्मृतेश्च—भारतभागवतादिषु जडभरतविदुरगाङ्गेयादीनामनेकदेहसम्बन्धस्य महर्षिभिस्स्मृतत्वाच्च। तदवधिविधौ—विद्यारम्भशरीरावसान एव मोक्ष इति विधाने न व्याप्रियेत—न प्रवर्तेत। अतश्च प्रारब्धकार्यं कर्म तत्तत्पुरुषभेदकृततारतम्यादिस्वस्वरूपानुरूपफलानुभवनिवर्त्यतया नेयच्छरीरावसानमिति निश्चेतुं शक्यम्। अन्तिमवपुषि—तत्र प्रारब्धफलकर्मानुभवावसानदेहे। दृढोद्यतसमाधेस्तु—दृढतरसमुन्मिषत्परभक्तिरूपसमाधेः पुरुषस्य। मोक्षः—तदवसाने सिध्यतीति शेषः ॥ ४७१ ॥

नन्वत्रास्मादितीदं वितथमिह पदं स्याच्छरीरे न तु स्यात्
कारागारौपमित्यप्रथनपरतया तस्य साफल्यसिद्धेः।
त्याज्यत्वव्यक्तये हि प्रभुरसुखमिमंलोकमित्यप्यगायद्
भूतावासं विशिंषन्निममिति च मनुर्हेयभावं व्यनक्ति ॥ ४७२ ॥

चिन्ता०—नन्वत्रास्माच्छरीरादिति पदस्य साफल्यं सम्यगेव भवता नोक्तमित्याशङ्क्य तस्य पदस्यात्यन्तसाफल्यमस्तीति समाधातुमारभते—नन्विति। शरीरे विशेषणतया प्रयुक्तमस्मादिति पदं वितथमित्याशङ्का। इदमवितथमित्याह—नत्विति। शरीरविशेषणस्यास्मादिति पदस्य तादात्विकदुरवस्थाप्रकाशनपरत्वेन साफल्यमस्त्येव। अनन्तगरुडविष्वक्सेनादिवदनवरतभगवदनुभवयोग्यस्य कारागारनिवास इव कश्मले पुनरस्मिन्देहे निवासः। तमिममर्थं भगवानेव साक्षात्प्राहेति दर्शयति—त्याज्यत्वेति। 'अनित्यमसुखं

लोकमिमम्' इति ह्युच्यते भगवतैव। देहस्य त्याज्यत्वं नकेवलं भगवता गीतम्, महर्षयोऽप्याहुरित्याह— भूतावासमिति। 'अस्थिस्थूणं स्नायुबन्धं मांसशोणितलेपनम्। चर्मावनद्धं दुर्गन्धि पूर्णं मूत्रपुरीषयोः॥ जराशोकसमाविष्टं रोगायतनमातुरम्। रजस्वलमनित्यञ्च भूतावासमिमं त्यजेत्॥' इति भगवता मनुनोक्तम्॥ ४७२॥

पद०—नन्वत्रेत्यादि। इह—'अस्माच्छरीरात्समुत्थाय परञ्ज्योतिरुपसम्पद्य' इत्यस्मिन्वाक्ये। अत्र शरीरे—विषये। अस्मादितीदं पदम्—विशेषणतया प्रयुक्तमस्मादित्येतत्पदम्। वितथं स्यान्नतु—वितथमेव। नन्वित्याक्षेपार्थो वा। नतु स्यात्—इदन्तु शङ्कनं न युक्तं स्यात्। कारागारौपमित्यप्रथनपरतया—शरीरस्य कारागारतौल्यप्रकाशनार्थत्वेन। तस्य—अस्मादितिपदस्य। साफल्यसिद्धेः—सप्रयोजनत्वलाभात्। प्रभुः—श्रीकृष्णः। त्याज्यत्वव्यक्तये—हेयत्वप्रकाशनाय। असुखमिमं लोकमित्यप्यगायद्धि—'अनित्यमसुखं लोकमिमं प्राप्य भजस्व माम्' इत्यत्र अनित्यमसुखमिति विशेष्याप्यतृप्त्या अङ्गुलीनिर्देशपूर्वकमिममिति विष्ठामूत्राद्यात्मकत्वादिशरीरदोषप्रदर्शनं गीतायामकरोद्धि। मनुः भूतावासमिममिति च विशिंषन् हेयभावं व्यनक्ति—स्वायम्भुवमनुश्च स्वस्मृतौ 'अस्थिस्थूणं स्नायुबन्धं मांसशोणितलेपनम्। चर्मावनद्धं दुर्गन्धि पूर्णं मूत्रपुरीषयोः॥ जराशोकसमाविष्टं रोगायतनमातुरम्। रजस्वलमनित्यञ्च भूतावासमिमं त्यजेत्॥' इत्यत्र भूतावासशब्दवाच्यं शरीरमस्थिस्थूणत्वादिभिर्विशेष्याप्यतृप्त्या उक्तानुक्तदोषप्रदर्शकेन इममित्यङ्गुलिनिर्देशकेन पदेन पुनरपि विशिंषन् तस्यात्यन्तहेयत्वं प्रकटयति खलु। तथाचात्राप्यस्मादितिपदस्य प्राप्यविशेषणीभूतपरज्योतीरूपत्वप्रतिकोटिभूतानन्तदोषास्पदत्वप्रदर्शनेन कारागारसाम्यप्रकटनार्थत्वात् साफल्यं सिद्धमिति वैफल्यशङ्कानवकाश इति भावः॥ ४७२॥

सर्वे जीवास्समानास्स्वत इह विविधं कर्म चानादितुल्यं
वैषम्यादिश्च दोषो न भवति भगवत्यन्यथा शास्त्रभङ्गः।
मुक्तौ नातो विलम्बप्रभृति घटत इत्यल्पसारोऽनुयोगः
चित्रे कर्मप्रवाहे फलसमयभिदा ह्याश्रिता सर्वतन्त्रैः॥ ४७३॥

इतीतरक्षपणाधिकरणम्॥ १३४॥

चिन्ता०—अत्र कश्चिदनुयुङ्क्ते—नन्वेतन्नोपपद्यते भगवति सर्वसमत्वेन वर्तमाने परमकारुणिके सति कथमेकस्याधुनामुक्तिरितरस्य श्वो वा परश्वो वेति तथा च सति सर्वेषामेकदैव मुक्तिस्स्यात् अथवा कदाचिदपि न

मुक्तिस्स्यादिति। तदिदमाह—सर्वे इति। सर्वेऽपि जीवास्समानाः, विविधमपि कर्मानादित्वेन तुल्यम्। कर्मणस्तुल्यत्वेऽपि भगवतो वैषम्यादिदोषोऽस्तीति वक्तुमपि न शक्यते। यदि वैषम्यमुच्यते तदा वैषम्यनैर्घृण्यादिनिवारकशास्त्रभङ्गस्स्यात्। अतो मुक्तौ कस्यचित्पूर्वं कस्यचिदुपरिष्टादिति वैषम्यं न स्यादेवेति। अयमनुयोगोऽत्यन्तमल्पसार एव। एतावन्तं कालमनेकविधन्यायश्रवणपरिपक्त्रिमचेतसस्तु भवतः कोऽयमनुयोग इत्यपहासेनाह—अल्पसार इति। अल्पसारत्वमेव प्रकटयति—चित्र इति। कर्मप्रवाहे विचित्रे सति फलकालविभागस्सर्वैरपि तान्त्रिकैराश्रीयते। कश्चिदधुना चतुर्मुखपदं प्राप्नोति, पूर्वमेव कश्चित्, कश्चित्पुनश्चिरकालानन्तरं प्राप्स्यतीति सोऽयं विभागः केन कारणेन। एवं स्वर्गनरकादिप्राप्तावप्यनुयोज्यम्। अननुयोज्यैवेयमनादिकर्मप्रवाहवैचित्री प्रमाणप्रतिपन्नेति चेत् तर्हि कालभेदेन मुमुक्षुत्वसिद्धावपि तदेवाननुयोज्यत्वमुत्तरत्वेन प्रयोज्यमिति मूकीभवन्तु भवन्त इति ॥ ४७३ ॥

इतीतरक्षपणाधिकरणम् ॥ १३४ ॥

पद०—सर्वे जीवा इत्यादि। सर्वे जीवाः—सर्वे जीवात्मानः। स्वतः—स्वरूपेण। समानाः—तुल्याः। इह—लोके। विविधं कर्मच—तेषां पुण्यपापरूपं कर्म च। अनादि—अनादित्वेन। तुल्यम्—समम्। भगवति—सर्वेषामप्युपास्ये फलप्रदे च भगवति पुरुषोत्तमे। वैषम्यादिदोषश्च न भवति—वैषम्यनैर्घृण्यदोषश्च भगवतस्सर्वसमत्वेन न सम्भवति। अन्यथा शास्त्रभङ्गः—यदि भगवतो वैषम्यमुच्यते तर्हि वैषम्यवारकशास्त्रस्य भङ्गस्स्यात्। अतः—उक्तकारणात्। मुक्तौ—मुक्तिविषये। विलम्बप्रभृति—जन्मान्तरादिविलम्बस्तज्जन्मन्येव केषांचिन्मुक्तिः केषाञ्चिज्जन्मान्तरे केषाञ्चित्कल्पावसान इति वैषम्यमित्यर्थः। न घटते—न युज्यते। इत्यनुयोगः—एवं प्रश्नः। अल्पसारः—असार इत्यर्थः। कर्मप्रवाहे चित्रे फलसमयभिदा सर्वतन्त्रैराश्रिता हि—जीवकर्मप्रवाहे विचित्रे सति फलानां नरकस्वर्गमोक्षादिरूपाणां कालभेदव्यवस्था सर्वतन्त्रैस्सर्वतान्त्रिकैरप्यङ्गीकृता खलु। अद्य कश्चिज्जीवश्चतुर्मुखपदं प्राप्नोति पूर्वमेव कश्चित्तत्पदं प्राप ततःपूर्वमेव च कश्चित्तत्पदं प्राप एवं नरकस्वर्गादिविषयेऽपि अनुयोज्यम्। तद्वदेव कालभेदेन मुमुक्षा तत्साधनानुष्ठानं फलावाप्तिश्चेति न कोऽपि मुक्तिमात्रे विशेषः। अनादिकर्मप्रवाहवैचित्र्यादिति तु तत्र चात्र च तुल्यमिति भावः ॥ ४७३ ॥

इतीतरक्षपणाधिकरणम् ॥ १३४ ॥

---

चतुर्थाध्यायप्रथमपादाधिकरणप्रधानार्थपरिगणनम् ।

आवर्त्या ब्रह्मविद्या त्वसकृदहमिति स्याच्च न स्यात्प्रतीके
कर्माङ्गे ऽर्कादिदृष्टिः प्रणिधिरपि भवेत्सासनः प्रत्यहञ्च ।
पापे पुण्ये च नाशादिकमथ तु तयोर्भोग्यतारब्धकार्ये
कार्यत्वं स्वार्हवृत्तेरिति कथितमिहारब्धशान्तौ च मोक्षः ॥ ४७४ ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु अधिकरणसारावल्यां
चतुर्थस्याध्यायस्य प्रथमः पादः

चिन्ता०—चतुर्थाद्यपादाधिकरणानां प्रधानार्थभेदान् परिगणयति—आवर्त्येति । असकृदावर्त्या ब्रह्मविद्येत्याद्याधिकरणार्थः । अहमित्यनुसन्धानं कर्तव्यमित्यनन्तराधिकरणे निर्णीतम् । तृतीये पुनः प्रतीकोपासने नाहमितिबुद्धिः कर्तव्येत्यभिहितम् । चतुर्थे कर्माङ्गेष्वादित्यादिमतिः कर्तव्येति । पञ्चमे त्वासनसहितस्य प्रणिधिः । षष्ठे प्रत्यहमनुसन्धानम् । सप्तमाष्टमयोः पुनरुत्तरपूर्वपुण्यपापयोरश्लेषविनाशौ । नवमे तु तयोः पुण्यपापयोरारब्धकार्ये एव भोग्यत्वम् । दशमे वर्णाश्रमधर्मयोरवश्यानुष्ठेयत्वम् । चरमाधिकरणे प्रारब्धकर्मावसाने मोक्ष इति कथितमिदमर्थजातम् ॥ ४७४ ॥

इति निखिलतार्किकचूडामणिना सर्वतन्त्रस्वतन्त्रेण
श्रीमद्वरदार्यापरनाम्ना कुमारवेदान्ताचार्येण
विरचिते शारीरकाधिकरणचिन्तामणौ
चतुर्थस्याध्यायस्य प्रथमः पादः

पद०—आवर्त्येत्यादि । ब्रह्मविद्या तु—ब्रह्मविषयिणी तत्प्राप्तिहेतुभूता च विद्या साधारणासाधारणगुणस्थानादिविषयिणी स्मृतिः । असकृदावर्त्या—असकृदावर्तनीयेति । अयम् 'आवृत्तिरसकृदुपदेशात्' इत्यादेः प्रथमाधिकरणस्यार्थः । अहमितिच आवर्त्या स्यात्—अहमित्यहङ्ग्रहेणानुसन्धानं कार्यमिति । अयम् 'आत्मेति तूपगच्छन्ति' इत्यादेर्द्वितीयाधिकरणस्यार्थः । प्रतीकेऽहमिति न स्यात्—प्रतीकोपासनेऽहमिति बुद्धिर्न कार्येति । अयं 'न प्रतीके' इत्यादेस्तृतीयाधिकरणस्यार्थः । कर्माङ्गेऽर्कादिदृष्टिः—यज्ञाङ्गभूतोद्गीथादौ आदित्यादिभावनैव कार्या न त्वादित्यादावुद्गीथादिभावनेति ।

अयम् 'आदित्यादिमतयश्चाङ्ग उपपत्तेः' इत्यस्य चतुर्थाधिकरणस्यार्थः। प्रणिधिरपि सासनो भवेत्—उपासनमासनसहितमेव कार्यमिति। अयम् 'आसीनस्सम्भवात्' इत्यादेः पञ्चमाधिकरणस्यार्थः। प्रणिधिः प्रत्यहञ्च भवेत्—तदेतदुपासनं प्रत्यहं प्रायणान्तं कार्यमिति। अयम् 'आप्रायणात्तत्रापि हि दृष्टम्' इत्यादेष्षष्ठाधिकरणस्यार्थः। पापे पुण्ये च नाशादिकम्—विद्यायाः पूर्वमुत्तरञ्चानुष्ठिते पापे नाशोऽश्लेषश्च, एवं विद्यायाः पूर्वमुत्तरञ्चानुष्ठिते पुण्ये च नाशोऽश्लेषश्च। इदमर्थद्वयं क्रमात् 'तदधिगम उत्तर-पूर्वाघयोः' इत्यादेस्सप्तमाधिकरणस्य 'इतरस्याप्येवम्' इत्यादेरष्टमाधिकरणस्य चावगन्तव्यम्। अथ तु—तदुपरितने 'अनारब्धकार्ये एव तु' इत्यादिके नवमाधिकरणे तु। तयोः—पुण्यपापयोः। आरब्धकार्ये—फलप्रदानप्रवृत्ते कर्मणि विषये। भोग्यता—फलानुभवेनैव नाश्यता। स्वार्हवृत्तेः कार्यत्वम्—स्वस्ववर्णाश्रमाद्यनुरूपधर्मस्य विद्यावृद्ध्यर्थत्वेनानुष्ठेयत्वमिति। अयम् 'अग्निहोत्रादि तु' इत्यादेर्दशमाधिकरणस्यार्थः। आरब्धशान्तौ मोक्षश्च—तत्तत्पुरुषभेदाधीनतारतम्ययुक्तप्रारब्धकर्मनिवृत्तौ मोक्षलाभ इति च। अयं 'भोगेन त्वितरे' इत्यादेरेकादशाधिकरणस्यार्थः। इति—एवं क्रमेणोक्तमर्थजातम्। इह—अस्मिंश्चतुर्थाध्याये प्रथमपादे। कथितम्—प्रतिपादितम्। सूत्रकारैरिति शेषः॥ ४७४॥

इति श्रीमद्रङ्गनाथशठमथनयतिराजकटाक्षलब्धोभयवेदान्तहृदयस्य भारद्वाजस्य श्रीनिवासराघवदासस्य (श्रीमदहोबिलमठमहास्थाननिर्वहणधुरन्धर श्रीमद्वेदमार्गप्रतिष्ठापनाचार्य परमहंसपरिव्राजकाचार्य सर्वतन्त्रस्वतन्त्रोभयवेदान्ताचार्य श्रीभगवद्रामानुजसिद्धान्तनिर्धारणसार्वभौम श्रीलक्ष्मी-नृसिंहदिव्यपादुकासेवकश्रीवण्शठकोपश्रीशठकोपरामानुजमहादेशिकस्य) कृतौ अधिकरणसारावलीव्याख्यायां पदयोजनाख्यायां

चतुर्थस्याध्यायस्य प्रथमः पादः

---

## चतुर्थस्याध्यायस्य द्वितीयः पादः

द्वितीयतृतीयाध्याययोश्चतुर्थाध्यायद्वितीयपादेन सङ्गतिप्रदर्शनम्।

नित्यत्वज्ञत्वपूर्वैर्निपुणमभिहितं जीवतत्त्वं द्वितीये
जागर्यादौ च खेदो जगदटविमहाजाङ्घिकस्याथ गीतः।
विद्यारम्भावसानावधि यदपि परं ध्यातुरर्थ्यं तदुक्तं
प्रारब्धस्यावसाने वपुरिह जहतो गत्युपक्रान्तिमाह॥ ४७५॥

चिन्ता०—पूर्वोक्ताध्यायद्वयार्थानुवादपूर्वकं चतुर्थाध्यायद्वितीयपादारम्भे सङ्गतिमाह—नित्यत्वेति। प्रथमाध्याये परतत्त्वप्रतिपादनं कृतम्। नित्यत्वज्ञत्वपूर्वैर्जीवतत्त्वमपि द्वितीयाध्याये निपुणमभिहितम्। तृतीयाध्याये वैराग्यपादे जगदटविमहाजाङ्घिकस्य जीवस्य दुःखमपि प्रोक्तम्। शिष्टे च शास्त्रांशे पूर्वं प्रवृत्ते विद्यारम्भमुपक्रम्य विद्यावसानपर्यन्तं मध्ये यद्वक्तव्यं तदपि चोक्तम्। अतः परं प्रारब्धावसाने स्थूलशरीरं जहतो जीवस्य गत्युपक्रान्तिप्रकारमाहेत्युत्क्रान्तिपादमवतारयति—प्रारब्धस्येति ॥ ४७५ ॥

पद०—नित्यत्वज्ञत्वपूर्वैरित्यादि। नित्यत्वज्ञत्वपूर्वैः—नित्यत्वज्ञातृत्वप्रमुखैर्गुणैः। जीवतत्त्वम्—जीवात्मवस्तु। द्वितीयेऽध्याये। निपुणमभिहितम्—स्पष्टतया प्रतिपादितम्। जगदटविमहाजाङ्घिकस्य—साधनानुष्ठानफलानुभवौपयिकभूस्वर्गादिलोकात्मकमहारण्यगमनैकशीलस्य जीवात्मनः। जागर्यादौ—जाग्रत्स्वप्नसुषुप्तिमुग्ध्यवस्थासु। खेदश्च—दुःखानुभवश्च। अथ—तृतीयाध्याये प्रथमद्वितीयपादयोः। गीतः—उक्तः। परम्—तदुपरितनशास्त्रांशे च। ध्यातुः—उपासकस्य। अर्थ्यम्—अपेक्षितम्। यत् विद्यारम्भावसानावधि तदप्युक्तम्—विद्यारम्भमुपक्रम्य विद्यावसानपर्यन्तं मध्ये यद्वक्तव्यं तदपि चोक्तम्। प्रारब्धस्य—आरब्धफलस्य कर्मणः। अवसाने—समाप्तौ। इह वपुर्जहतः—अस्मिन् लोके कर्मशरीरं परित्यजतो जीवात्मनः। गत्युपक्रान्तिम्—गमनोपक्रमम्। आह—अतः परं प्रतिपादयति ॥ ४७५ ॥

अत्र पादे मृतिचिन्तनस्य औचित्यफलकथनम्।

**वर्ण्यो वैराग्यपादे तनुकरणगणक्षोभ ईदृक् तथापि**
**ब्रह्मज्ञस्यापि काले भवति मृतिरिति ज्ञप्तयेऽत्रानुबन्धः।**
**तस्योत्क्रान्तौ विशेषं कथयितुमुचिता चात्र साधारणोक्तिः**
**मध्ये विद्याफलानां मरणमपि वदंस्तत्प्रियं चिन्त्यमाह ॥ ४७६ ॥**

चिन्ता०—ननु जाग्रत्स्वप्नसुषुप्तिमूर्छाप्रसङ्गेन वैराग्यपाद एव मरणमपि चिन्तनीयम्, किमर्थमत्र मरणमस्थाने चिन्त्यत इत्याशङ्क्येदमपि स्थानचिन्तनमित्युपपादयति—वर्ण्य इत्यादिना। अयमत्रशब्दान्वयः—यद्यपि वैराग्यपाद एवेदृङ्मरणरूपस्तनुकरणगणक्षोभोऽपि वाच्यः। तथापि ब्रह्मज्ञस्यापि प्राप्तकाले मरणं भवतीति ज्ञप्तये फलाध्यायेऽनुबन्धः। कश्चिन्मनुते बालबुद्धिः—ब्रह्मज्ञस्य महानुभावत्वान्मरणमेव नास्तीति, तत्प्रतीतिं निवारयितुमत्रानुबन्ध इति। किञ्चात्र सम्बन्धे कारणान्तरमस्तीत्याह—तस्येति। ब्रह्मज्ञस्योत्क्रान्तौ मूर्धन्यनाड्या गमनविशेषं कथयितुं सर्वसाधारणोत्क्रमण-

कथनम् । ननु फलपादे दुःखात्मकं मरणं वक्तव्यमेव न भवतीत्याशङ्कमानस्य ब्रह्मविदां तस्य मरणस्य सुखात्मकत्वमेवेत्याह—मध्य इति । विद्याफलानामुत्तरपूर्वाघाश्लेषविनाशार्चिरादिगमनब्रह्मप्राप्तीनां मध्ये मरणमपि वदन् सूत्रकारो ब्रह्मविन्मरणस्य फलकोटिनिवेशात् सुखात्मकत्वमेव तस्याहेत्यर्थः ॥ ४७६ ॥

पद०—वर्ण्य इत्यादि । ईदृक् तनुकरणगणक्षोभो वैराग्यपादे वर्ण्यः—अत्यन्तदुःखरूपशरीरस्य भूतसूक्ष्मग्रहणार्थः इन्द्रियगणानां तत्तद्गोलकविश्लेषणपृथक्कृतसूक्ष्मपुञ्जावस्थापनार्थश्च भवति यः क्षोभः उद्धरणव्यापारस्सः 'तदन्तरप्रतिपत्तौ' इत्यादितृतीयाध्यायप्रथमपादादावेव वर्ण्यः प्रतिपादनीयः । तथापि–एवं युक्तत्वेऽपि । ब्रह्मज्ञस्यापि काले मृतिर्भवतीति ज्ञप्त्यै—ब्रह्मोपासकस्य महानुभावत्वात् मरणमेव नास्तीति कस्यचिन्मन्दमतेर्मतिनिवर्तनाय ब्रह्मोपासकस्यापि प्राप्तकाले मरणं भवतीत्येतदर्थस्य शिष्येभ्यो ज्ञापनाय । अत्रानुबन्धः—मरणस्यास्मिन् चतुर्थाध्यायद्वितीयपादेऽनुबन्धनं कृतम् । तस्य—ब्रह्मोपासकस्य । उत्क्रान्तौ—उत्क्रमणे । विशेषम्—मूर्धन्यनाडीनिर्गमनादिरूपमधिकांशम् । कथयितुम्—प्रतिपादयितुम् । अत्र—प्रकरणे । साधारणोक्तिश्च उचिता—विद्वदविद्वत्साधारणस्य मरणस्योक्तिश्च युक्ता । विशेषकथनस्य साधारणसापेक्षत्वादिति भावः । विद्याफलानां मध्ये मरणमपि वदन् तत्प्रियं चिन्त्यमाह—उत्तरपूर्वाघाश्लेषविनाशार्चिरादिगमनब्रह्मप्राप्तिरूपाणां विद्याफलानां मध्ये द्वितीयपादे मरणमपि प्रतिपादयन् सूत्रकारः 'प्रायेणाकृतकृत्यत्वात् मृत्योरुद्विजते जनः । कृतकृत्याः प्रतीक्षन्ते मृत्युं प्रियमिवातिथिम् ॥' इत्युक्तरीत्या मरणमपि विद्यानिष्ठानां प्रियत्वात् फलकोटिनिवेश्यं तत एव वटोर्विवाहचिन्तनवत् कदाकदेतिप्रतीक्षणीयं चेत्याह ॥ ४७६ ॥

उत्क्रमणादि चिन्ताया नैरर्थक्यमिति चोद्यनिरासः

**वृत्तिर्वागादिकं वा क्वचन भजतु सम्पत्तिमन्यक्रमां वा**
**श्रुत्यैवोक्तक्रमां वा नहि फलमिह तच्चिन्तनस्येति चेन्न ।**
**सम्पत्त्याम्नानमीदृक्क्रमनियतियुतं युज्यते न ह्यपार्थं**
**तस्मात्तच्चिन्तनं क्वाप्युपकुरुत इति स्थाप्यमेतद्यथार्हम् ॥ ४७७ ॥**

चिन्ता०—अस्मिन्पादे "मनसि करणग्रामं प्राणे मनः पुरुषे च तं झटिति घटयन्भूतेष्वेनं परे च तमात्मनि । स्वविदविदुषोरित्थं साधारणे सरणेर्मुखे नयति परतो नाडीभेदैर्यथोचितमीश्वरः ॥" इति नियतोत्क्रमणं भवद्भिरेवान्यत्रोक्तम्, किमनेन नियमनेन तच्चिन्तनेन वा ? यथाकथञ्चिदुत्क्रान्तस्यापि ब्रह्मविद्यामाहात्म्यान्नाडीविशेषप्राप्तिरर्चिरादिमार्गेण गमनञ्च स्यादित्याशङ्क्य तन्नेत्याह–वृत्तिरिति । अयमर्थः—वागादिवृत्तिरिति पूर्वपक्षिणोक्तम्, वागादिरितिसिद्धान्तिना, तथा क्रमान्तरेण सम्पत्तिरिति पूर्वपक्षिणोक्तम् । 'मनसि कर-

णग्रामम्' इत्युक्तप्रकारेण नियमेनैव सम्पत्तिरिति सिद्धान्तिना। किमनेन प्रकारविशेषनियमनेन येनकेनापि प्रकारेणोत्क्रान्तिस्स्यात्। ननूत्क्रान्तिविशेषचिन्तनेन फलविशेषसिद्धिस्स्यादिति सिद्धान्त्यभिप्रायमाशङ्क्य तदपि नेत्याह—नहीति। तमिमं पूर्वपक्षं प्रतिक्षिपति—नेति। प्रतिक्षेपमेवोपपादयति—सम्पत्तीति। श्रुतिरेव ह्यस्माकमर्थतत्त्वे प्रमाणम्। अनुसन्धेयविशेषे च तदेव तथा प्रमाणम्। आम्नातश्च नियमेनानुक्रमः। नच तस्य नैरर्थक्यं वक्तुं युज्यते। तेन श्रुतिप्रतिपन्नस्य नैरर्थक्यपरिहारार्थं यथाश्रुतमेव सर्वं ग्राह्यम्। तथैव तच्चिन्तनीयमिति गतिचिन्तनादिकं कर्तव्यमिति 'नैते सृती पार्थ जानन्' इति भगवतैवोक्तम्। तद्गतिचिन्तनकथनमुत्क्रान्तिचिन्तनस्याप्युपलक्षणं गत्युपक्रमत्वादुत्क्रान्तेः। ईदृक्क्रमनियतियुतं सम्पत्त्याम्नानमपार्थमिति वक्तुं न युज्यत इत्यन्वयः। उक्तमर्थं निगमयति—तस्मादिति। तच्चिन्तनम् उत्क्रान्तिचिन्तनम्। विद्याया उपकुरुत इति यथार्हं यथाप्रमाणञ्च स्थाप्यत इति॥ ४७७॥

पद०—वृत्तिर्वागादिकं वेत्यादि। वृत्तिः—वागादिवृत्तिः। वागादिकं वा—वागादीन्द्रियभूतादितत्त्वजातं वा। क्वचन—क्वापि वस्तुनि। न त्वस्मिन्नेवेति नियन्तव्यमिति भावः। अन्यक्रमां वा—श्रुत्यनुक्तक्रमान्तरयुक्तां वा। श्रुत्यैवोक्तक्रमां वा—श्रुत्युक्तक्रमयुक्तामेव वा। सम्पत्तिं भजतु—लघु प्रतिपद्यताम्। इह तच्चिन्तनस्य फलं नहि—अत्रपादे तद्विचारस्य प्रयोजनं नास्ति खलु। यद्वा इह—विद्यानुष्ठानदशायाम्। तच्चिन्तनस्य—उत्क्रान्त्यादिचिन्तनस्य। फलं नहि। न ह्युत्क्रमणगमनादिचिन्तने किञ्चित्फलं सम्भविष्यतीति भावः। इति चेन्न—इति शङ्क्यते चेन्नैतद्युक्तम्। ईदृक्क्रमनियतियुतम्—एतादृशक्रमनियमयुक्तम्। सम्पत्त्याम्नानम्—'अस्य प्रयतो वाङ्मनसि सम्पद्यते प्राणस्तेजसि तेजः परस्यां देवतायाम्' इत्यादिना वागादीनां सम्पत्तिप्रतिपादनम्। अपार्थं न युज्यते हि—निरर्थकं भवितुं नार्हति हि। तस्मात्—उक्तकारणात्। एतत् तच्चिन्तनम्—श्रुत्युक्तमुत्क्रान्त्यादिचिन्तनम्। यथार्हम्—यथायोग्यम्। क्वाप्युपकुरुत इति स्थाप्यम्—विद्यानिष्पत्त्यादौ यत्र क्वचिदुपकरोतीति स्थापनीयम्॥ ४७७॥

उत्क्रमणादिवचनस्य प्रयोजन विशेष प्रदर्शनम्।

जीवं ये नित्यमुक्तं निजगदुरथवा जीवतो मुक्तिमाहुः
तत्तज्जल्पोपजापप्रचलितनिगमग्रामसंक्षोभशान्त्यै।
उक्त्वा प्रारब्धकार्यं विदुषि च फलवत्प्रायणञ्चात्र तुल्यं
नाडीभेदप्रवेशप्रभृति समधिकं वक्ष्यति ब्रह्मगत्यै॥ ४७८॥

चिन्ता०—एवमुत्क्रमणादिवचनस्य मृषावादिप्रवृत्तिनिराकरणं विशेषप्रयोजनमिति दर्शयति—

जीवमिति । जीवो नित्यमुक्त इति साङ्ख्या मृषावादिनश्च प्राहुः । तत्र मृषावादिनो जीवन्मुक्तिमपि चाहुः । तत्त्वज्ञाने सम्पन्ने जीवत एव मुक्तिरिति । अनयोर्द्वयोरपि पक्षयोर्निराकरणार्थं तत्तज्जल्पसङ्घातोपजापप्रचलितनिगमग्रामस्य सङ्क्षोभशान्त्यै च प्रारब्धकार्यं कर्म विदुपिच फलवत् प्रायणमुत्क्रमणञ्च द्वयोर्विदब्रह्मविदोरपि तुल्यमित्युक्त्वा ब्रह्मगत्यै ब्रह्मप्राप्त्यै ब्रह्मनाडीप्रवेशप्रभृति ब्रह्मविदस्समधिकमिति सूत्रकारो वक्ष्यति इत्यन्वयः ॥ ४७८ ॥

पद०—जीवमित्यादि । ये—सांख्या मृषावादिनश्च । जीवं नित्यमुक्तं निजगदुः—जीवात्मानं बद्धदशायामपि सदा बन्धरहितमभ्यधुः । अथवा जीवतो मुक्तिमाहुः—तत्त्वज्ञाने सम्पन्ने जीवत एव मुक्तिरिति वा वदन्ति । तत्तज्जल्पोपजापप्रचलितनिगमग्रामसंक्षोभशान्त्यै—तेषांतेषां सांख्यमृषावादिप्रभृतीनां जल्पा एव उपजापाः ऐकमत्यभेदकव्यापारास्तैः प्रचलिता विरुद्धगतिं प्राप्ता निगमा वेदा एव ग्रामास्तेषां संक्षोभः कलहस्तच्छान्त्यै तन्निवर्तनाय । विदुषि च प्रारब्धकार्यं फलवत्—ब्रह्मोपासकेऽपि प्रारब्धकार्यं कर्म फलवत् फलप्रदमेव नतु तूष्णीं नश्यतीतीममर्थम् । अत्र--विदुषि । प्रायणञ्च तुल्यम्—उत्क्रमणादिकञ्च समानमित्यमुमर्थञ्च । उक्त्वा—प्रतिपाद्य । ब्रह्मगत्यै—ब्रह्मप्राप्त्यै । नाडीभेदप्रवेशप्रभृति—मूर्धन्यनाडीविशेषप्रवेशादिकम् । समधिकम्—ब्रह्मविदोऽधिकमिति । वक्ष्यति—उपरि प्रतिपादयिष्यति । सूत्रकार इति शेषः ॥ ४७८ ॥

योगिनो भाविचिन्त्यविशेषस्य प्रतिपादनम् ।

आयुस्सीमामनिष्टैरिह बहुभिरसावात्मनः प्रेक्ष्य योगी
यत्कुर्याद्यच्च पुत्रप्रभृतिषु नहि तत्तर्क्यमत्रेत्यनुक्तिः ।
गीतादिष्वन्त्यकाले यदगणि तदपि प्राच्ययोगप्रकारे
तत्तत्प्राप्त्यानुरूपे नियतमिति यथापूर्वधीरत्र भाव्या ॥ ४७९ ॥

चिन्ता०—योगिनो भाविचिन्ता कर्तव्या चेत् पुत्रादिषु नियमनादिकमपि भावित्वाच्चिन्तनीयमित्याशङ्क्य सर्वं भावि न चिन्त्यम्, यावन्मात्रं चिन्त्यत्वेन भगवद्गीतादिषूक्तं तावदेव चिन्त्यमित्याह—आयुरिति । अयमर्थः—बहुभिरनिष्टैर्निमित्तविशेषैरात्मन आयुस्सीमां मरणं प्रेक्ष्य योगी यत् कर्म तदुचितं मध्ये कुर्यात् यच्च पुत्रप्रभृतिषु भावि कृत्याकृत्यनियमनं कुर्यात् तन्न तर्क्यम्—नहि तच्चिन्तनीयम् । इति तस्यात्रानुक्तिरेव । नहि योगिनो भावि सर्वं कार्यं दृष्टमदृष्टं वा चिन्तनीयमिति प्रमाणमस्ति । किं तर्हि चिन्तनीयमित्याशङ्क्य चिन्त्यविशेषमाह—गीतादिष्विति । भगवद्गीतादिष्वन्त्यकाले कर्तव्यतया यत् चिन्तनमगणि तदपि पूर्वसिद्धयोगप्रकारे तत्तत्प्राप्त्यानुरूपे नियतमेव भवतीति

यथापूर्वधीरत्र भाव्या उपक्रान्तयोगस्याविच्छेदेनानुसन्धानमत्र भाव्यमित्यर्थः । अन्त्यकाले चिन्त्यं सर्वं भगवद्गीतादिष्वेव विस्तरेण द्रष्टव्यम् ॥ ४७९ ॥

पद०—आयुस्सीमामित्यादि । असौ योगी—बुद्धिस्थः उपासकः । इह—शरीरे । बहुभिरनिष्टैः—नानाविधैरनिष्टैः । शारीरदिव्यभौमादिभेदभिन्नैर्देहविश्लेषसूचकैः । आत्मनः—स्वस्य । आयुस्सीमाम्—शरीरिसम्बन्धनिवृत्तिसमयम् । प्रेक्ष्य—सम्यगवधार्य । यत्—प्रायश्चित्तदानादिकं यत् कर्तव्यम् । कुर्यात्—आचरेत् । पुत्रप्रभृतिषु च यत् कुर्यात्—पुत्रकलत्रबन्ध्वादिषु विषये यत् दायविभागादिकं अभिमतदानहितानुशासनादिकं च कुर्यात् । तन्न हि तर्क्यम्—तन्न चिन्तनीयं हि । इति—हेतोः । अत्रानुक्तिः—अस्मिन्प्रकरणे तेषामप्रतिपादनमित्यर्थः । यदुपासकस्याहरहश्चिन्तनीयं तदेवात्रोच्यते अन्यदन्त्यकाले वक्तव्यमप्यचिन्त्यमित्यत्रानुक्तमिति भावः । गीतादिषु अन्त्यकाले यदगणि—गीतादिग्रन्थेषु देहावसानसमये कर्तव्यतया यच्चिन्तनमगणि । गीतायामष्टमाध्याये ऐश्वर्याक्षरयाथात्म्यभगवच्चरणार्थिनां वेद्योपादेयप्रतिपादनपरे 'कविं पुराणम्' इत्यादिभिश्श्लोकैः ऐश्वर्यार्थिप्रभृत्युपासकानां व्यवस्थिततत्तद्गुणविशिष्टतया यच्चिन्तनं प्रत्यपादि । तदपि तत्तत्प्राप्यानुरूपे प्राच्ययोगप्रकारे नियतम्—तदपि नष्टैश्वर्यापूर्वैश्वर्यकैवल्यात्मकतत्तत्प्राप्यफलानुरूपे तत्पूर्वोक्तयोगविशेषे प्रतिनियतम् । इति—हेतोः । अत्र—मुमुक्षुविषये तु । यथापूर्वधीर्भाव्या—उपक्रान्तयोगस्याविच्छेदेनानुसन्धानं सम्पादनीयमित्यर्थः ॥ ४७९ ॥

---

## वागधिकरणम् ॥ १३५ ॥

सूत्रम्—वाङ्मनसि दर्शनाच्छब्दाच्च ॥ ४८९ ॥

कर्मज्ञानाक्षवर्गो मनसि न विलयं यात्यतत्संभवत्वात्
तद्वृत्तेस्तादधीन्यात्तदुपरतिमिह प्राह सम्पत्तिशब्दः ।
इत्येतन्नोपपन्नं तदुभयविलये चोद्यनिस्तारसाम्यात्
सम्पत्तिश्श्लेषमात्रं करणविषयवाक्शब्दमुख्यत्वसिद्ध्यै ॥ ४८० ॥

इति वागधिकरणम् ॥ १३५ ॥

चिन्ता०—स्थूलशरीरस्थितिसमये यद्विद्याफलं तदुक्तम् अधुना तद्विनश्यदवस्थायां गत्युपक्रमे यत्फलं तच्चिन्त्यत इति पादसङ्गतिः । अत्रोत्क्रान्त्युपक्रमकथनात्प्रथमाधिकरणसङ्गतिश्च भवति । तदर्थ-

विचारस्तु—किमियं सम्पत्तिर्वाग्वृत्तिविषया उत वाक्स्वरूपविषयेति प्रथमो विचारः। तदर्थं विचार्यते—किं वाक्शब्दस्य मुख्यार्थपरिग्रह उपपन्नो नेति। किमियं सम्पत्तिर्लयरूपा उत व्यापारनिवृत्तिपूर्वकसंयोगरूपेति। इन्द्रियान्तरसम्पत्तिवचनं किं लयपरत्वेऽप्युपपद्यते उत संयोगपरत्व इति। अत्र पूर्वपक्ष्यभिप्रायमनुवदति—कर्मेति। अयमर्थः—कर्मेन्द्रियवर्गो ज्ञानेन्द्रियवर्गश्च मनइन्द्रिये विलयं न याति। तत्र हेतुमाह—अतत्सम्भवत्वादिति। नहीन्द्रियाणि मनसस्सम्भवन्ति येन विलयो मनसि वक्तुं शक्यते। तर्हि कस्य सम्पत्तिरुच्यत इत्याशङ्क्येन्द्रियवृत्तेरेव, तस्या मनोऽधीनत्वान्मनसि विलयो वक्तुं शक्यत इति वदति—तद्वृत्तेरिति। तेन सम्पत्तिशब्दो वाग्वृत्तेरुपरतिमेवाहेति मन्तव्यम्। एतत्प्रतिक्षिपति—इत्येतदिति। अत्र हेतुमाह—तदुभयेति। वाग्वृत्तिविलये वागिन्द्रियविलयेच चोद्यं समानम्, परिहारोऽपि समान एव। तथा च यत्रोभयोस्समो दोष इति न्यायविषय इत्यर्थः। यथा वाचो मनःप्रकृतित्वाभावात् सम्पत्तिर्वक्तुं न शक्यते, तथा वाग्वृत्तेरपि मनःप्रकृतित्वाभावात् सम्पत्तिवचनं न घटते यथाकथंचित् समाधानमुभयत्रापि समानम्। तर्हि पक्षद्वयेऽपि गुणदोषसाम्ये किमेकः पक्षः परिगृह्यते कथं वा तस्मिन्पक्षे सम्पत्तिशब्दस्यौचित्यमित्याशङ्क्याह—सम्पत्तिरिति। सम्पत्तिशब्दो धातूपसर्गाभ्यां सम्बन्धमेवाह। सम्बन्धश्च वागिन्द्रियस्य मनइन्द्रियेण सम्भवत्येव। अस्मिन्पक्षे विशेषहेतुमाह—करणेति। वाक्शब्दो वागिन्द्रिये मुख्य एव तद्वृत्तौ तद्धर्मत्वादौपचारिकः। तेन वाक्शब्दमुख्यत्वसिद्ध्यर्थमस्मत्पक्ष एव संग्राह्य इति भावः॥ ४८०॥

इति वागधिकरणम्॥ १३५॥

पद०—कर्मज्ञानाक्षवर्ग इत्यादि। कर्मज्ञानाक्षवर्गः—कर्मेन्द्रियज्ञानेन्द्रियसङ्घातः। मनसि न विलयं याति। कुतः अतत्सम्भवत्वात्—इन्द्रियाणां मनोजन्यत्वाभावात्। मनोजन्यत्वे खलु मनसीन्द्रियाणां लयो वक्तुं शक्यत इति भावः। तद्वृत्तेः—इन्द्रियवृत्तेः। तादधीन्यात्—मनोऽधीनत्वात्। तदुपरतिम्—इन्द्रियवृत्त्युपरतिम्। इह—अस्मिन्वाक्ये। सम्पत्तिशब्दः—सम्पद्यत इति सम्पत्तिशब्दः प्राह—प्रतिपादयति। इत्येतन्नोपपन्नम्—एवमाशङ्कनमुपपन्नं न भवति। तदुभयविलये चोद्यनिस्तारसाम्यात्—मनसीन्द्रियाणां विलये इन्द्रियवृत्तीनां विलयेऽपि कार्यत्वाभावाद्विलयो न सम्भवतीत्याक्षेपस्य यथाकथञ्चिदौपचारिकसम्पत्तिकल्पनरूपस्य परिहारस्य च तुल्यत्वात्। करणविषयवाक्शब्दमुख्यत्वसिद्ध्यै—इन्द्रियपरस्य वाक्शब्दस्य मुख्यार्थत्वसिद्ध्यर्थम्। सम्पत्तिः श्लेषमात्रम्—सम्पत्तिशब्दार्थस्संयोगरूपसंश्लेषएव वक्तव्यः॥ ४८०॥

इति वागधिकरणम्॥ १३५॥

---

# मनोऽधिकरणम् ॥ १३६ ॥

सूत्रम्—तन्मनः प्राण उत्तरात् ॥ ४९१ ॥

अन्नस्योक्तं विकारो मन इति मनसः प्राणसम्पत्तिवाक्ये
प्राणस्याम्भोमयत्वात् प्रकृतिविकृतितासम्भवात्तल्लयोऽस्तु ।
मैवं तत्तन्मयत्वश्रुतिरभिमनुते तत्तदाप्यायनं तैः
प्राग्वत्संश्लेषमात्रं तत इह हि मनः प्राण इत्यामनन्ति ॥ ४८१ ॥

इति मनोऽधिकरणम् ॥ १३६ ॥

चिन्ता०—'वाङ्मनसि सम्पद्यते मनः प्राणे' इति श्रुत्यनुक्रमेण चिन्तनात् सङ्गतिर्विशदा । तदर्थविचारस्तु—किमत्र मनसो लय उच्यत उत संयोगः । किमत्र 'प्राणः' इत्यपां निर्देश उत प्राणस्यैव । 'आपोमयः' इति वाक्यं किं प्रकृतिविकृतिभावपरमुताप्यायनपरम् । अत्र पूर्वपक्षी मन्यते—अन्नस्येति । 'आपोमयः प्राणः' इति वाक्येऽप्प्राणयोः प्रकृतिविकृतिभावसम्भवात् प्राणप्रकृतिभूते जले मनसो लयोऽस्तु जलं तस्य प्रकृतिः, अन्नञ्च मनसः प्रकृतिः ; 'अन्नमयं हि सोम्य मनः' इति वचनात् तस्मान्मनसो 'मनः प्राणे' इति प्राणप्रकृतौ जले लय उच्यत इति । तमिमं पक्षं प्रतिक्षिपति—मैवमिति । तत्र हेतुमाह—तत्तदिति । 'अन्नमयं हि सोम्य मनः' इति न मनसोऽन्नप्रकृतित्वमुच्यते किन्त्वन्नाप्यायितत्वम् । तेन प्रकृतिविकृतिभावप्रसङ्गाभावात् सम्पत्तिशब्देन न प्रलयाभिधानम् । तदिदमाह—तत्तदिति । तर्हि किमुच्यत इत्याशङ्क्याह—प्राग्वदिति । पूर्वं 'वाङ्मनसि सम्पद्यते' इति सप्तम्या संश्लेषमात्रमुक्तं तद्वदत्रापि । तत्कथमित्यत्राह—तत इह हीति । पूर्वं यथा 'वाङ्मनसि' इति सप्तम्या संश्लेषनिर्देशस्तथा इह हि मनः प्राण इति सप्तम्या संश्लेष एव निर्दिश्यते उपक्रमभङ्गस्यान्याय्यत्वादिति ॥ ४८१ ॥

इति मनोऽधिकरणम् ॥ १३६ ॥

पद०—अन्नस्योक्तमित्यादि । मनः । अन्नस्य—पृथिव्याः । विकारः—विकारभूतं कार्यभूतम् । इति उक्तम्—'अन्नमयं हि सोम्य मनः' इति विकारार्थकमयट्प्रत्ययान्तपृथिवीवाचकान्नशब्देन मनश्शब्दसमानाधिकरणेन प्रतिपादितम् । प्राणस्याम्भोमयत्वात्—'आपोमयः प्राणः' इति श्रुत्या प्राणस्याम्भोविकारत्वात् । प्रकृतिविकृतितासम्भवात्—कार्यकारणभावसम्भवात् । मनसः प्राणसम्पत्तिवाक्ये—'मनः प्राणे' इति प्राणे मनस्सम्पत्तिवाक्ये । तल्लयोऽस्तु—'ता अन्नमसृजन्त' इत्यन्नशब्दार्थस्य

पृथिव्या जलकार्यत्वात् अन्नकार्यस्य मनसस्स्वकारणभूतान्नद्वारा प्राणशब्दार्थभूते प्राणकारणे जले लयोऽस्तु साक्षाल्लय एवास्तु । मैवम्—एवं मा शङ्किष्ठाः । तत्तन्मयत्वश्रुतिः—अन्नमयत्वापोमयत्वतेजोमयत्वश्रुतिः 'अन्नमयं हि सोम्य मनः, आपोमयः प्राणः, तेजोमयी वाक्' इत्याकारिका । तैः—अन्नाप्तेजोभिः । तत्तदाप्यायनम्—मनःप्राणवाचां स्वस्वकार्यनिर्वर्तनौपयिकपुष्टिसम्पादनम् । अभिमनुते—अभिप्रैति । 'अन्नमयं हि' इत्यादिश्रुतिरन्नाप्तेजोभिर्मनःप्राणवाचामाप्यायनमेवाह नतु कार्यकारणभावम् इन्द्रियाणामाहङ्कारिकत्वात् प्राणस्य वायुरूपत्वेनाकाशकार्यत्वाच्चेति भावः । ततः—तस्मात् कारणात् । इह हि—प्रकरणे । मनः प्राण इति—'मनःप्राणे' इति वाक्येऽपि । प्राग्वत्—'वाङ्मनसि' इति पूर्ववाक्य इव । संश्लेषमात्रमामनन्ति—संयोगरूपसम्बन्धमात्रं प्रत्याय्यं नतु लय इति प्रतिपादयन्ति । सूत्रकारादय इति शेषः । यद्वा—प्राग्वत्संश्लेषमात्रं प्रत्याय्यम् । ततो हि—संश्लेषमात्राभिप्रायेण हि । इह—लयप्रकरणे । मनः प्राण इत्यामनन्ति—छन्दोगाः 'मनः प्राणे' इति पठन्तीत्यर्थः ॥ ४८१ ॥

इति मनोऽधिकरणम् ॥ १३६ ॥

---

## अध्यक्षाधिकरणम् ॥ १३७ ॥

सूत्रम्—सोऽध्यक्षे तदुपगमादिभ्यः ॥ ४९२ ॥

प्राणस्सैकादशाक्षस्तदनु निविशते तेजसीत्थं श्रुतत्वात्
मध्येऽन्यप्राप्तिक्लृप्तौ श्रुतिहतिरिति चेन्नात्मयोगस्य चोक्तेः ।
प्राणस्य स्वासजीवे मिलति निजतनोरुद्धृतैर्भूतसूक्ष्मैः
तेजःप्राप्तिश्च गङ्गानिपतितयमुनासागरप्राप्तिवत्स्यात् ॥ ४८२ ॥

इत्यध्यक्षाधिकरणम् ॥ १३७ ॥

चिन्ता०—'मनः प्राणे प्राणस्तेजसि' इत्यनुक्रमवचनात् श्रुतिक्रमानुसारेण सङ्गतिस्स्फुटा । तदर्थविचारस्तु—किं प्राणस्तेजसि सम्पद्यते उत जीवे । किं 'प्राणस्तेजसि' इति वाक्यं जीवसम्पत्तिपूर्वकतेजस्सम्पत्तिपरमुत केवलतेजःसम्पत्तिपरम् । जीवसम्पत्तिपूर्वकतेजस्सम्पत्तिपरत्वे 'प्राणस्तेजसि' इति वाक्यस्वारस्यं किं हीयते नेति । अत्रैवं पूर्वपक्षी मन्यते—एकादशाक्षसहितस्य प्राणस्य तेजसि संश्लेषस्य साक्षाच्छ्रुतत्वात् मध्ये नात्मनि सम्पत्तिरिति । तदिदमाह—प्राण इति । सैकादशाक्षः प्राणस्तदनु तेज-

स्यैव निविशते। तत्र हेतुमाह—इत्थं श्रुतत्वादिति। यथैव श्रूयते तथैव स्वीकर्तव्यमिति हि नीतिविदां मर्यादा। मध्ये पुनरात्मप्राप्तिक्लृप्तौ श्रुतहानं स्यादित्याह—मध्य इति। अत्रोत्तरम्—नेति। तत्र हेतुमाह—आत्मयोगस्य चोक्तेरिति। यदि तेजस्येव योगश्श्रूयेत तदा भवदुक्ता प्रक्रिया स्वीक्रियेत मध्ये पुनरात्मयोगोऽपि 'एवमेवेममात्मानमन्तकाले सर्वे प्राणा अभिसमायन्ति' इति श्रुत्यैव साक्षादभिधीयते। तेन द्वयोरपि कार्ययोश्श्रवणस्य श्रुतत्वेनाविशेषादविरोधेन निर्वाहः कर्तव्य इति। कथमविरोध इत्यत्राह—प्राणस्येति। स्वाप्तजीवे स्वसम्बद्धजीवे निजतनोरुद्धृतैर्भूतसूक्ष्मैस्सह मिलति संति प्राणस्य तेजःप्राप्तिश्च गङ्गानिपतितयमुनासागरप्राप्तिन्यायेन परम्परया स्यात् नपुनर्गङ्गासागरप्राप्तिन्यायेन साक्षात्प्राप्तिः। अयमर्थः—सर्वेन्द्रियसहितः प्राणो जीवं प्राप्य जीवेन सह तेजसि सम्पद्यत इति प्रमाणद्वयाविरोधाय संग्राह्यमिति ॥ ४८२ ॥

इत्यध्यक्षाधिकरणम् ॥ १३७॥

पद०—प्राणस्सैकादशाक्ष इत्यादि। सैकादशाक्षः—ज्ञानेन्द्रियपञ्चककर्मेन्द्रियपञ्चकमनोरूपैकादशेन्द्रियसंयुक्तः। प्राणः। तदनु—मनसस्स्वसम्पत्त्यनन्तरम्। तेजसि निविशते—तेजसि सम्पद्यते। इत्थं श्रुतत्वात्—'प्राणस्तेजसि' इति प्राणस्य तेजस्सम्पत्तेरेव श्रुतत्वात्। मध्ये—मनःप्राणसम्पत्तेः पश्चात् प्राणतेजस्सम्पत्तेः पूर्वं मध्ये। अन्यप्राप्तिक्लृप्तौ—जीवात्मप्राप्तिकल्पने। श्रुतिहतिः—'प्राणस्तेजसि' इति प्राणस्य तेजसि सम्पत्तिं वदन्त्याश्श्रुतेर्व्याहतिः स्यात्। इति चेन्न—इति शङ्क्यते चेत् तन्न सम्भवति। आत्मयोगस्य चोक्तेः—'एवमेवेममात्मानमन्तकाले सर्वे प्राणा अभिसमायन्ति' इति श्रुत्या प्राणस्य जीवात्मयोगस्य प्रतिपादनात्। प्राणस्य स्वाप्तजीवे निजतनोरुद्धृतैर्भूतसूक्ष्मैर्मिलति तेजःप्राप्तिश्च—प्राणस्य स्वसम्बद्धजीवे निजस्थूलशरीरादुद्धृतैः पञ्चभूतसूक्ष्मांशैस्सह मिलति संयुज्यमाने सति तेजस्सम्पत्तिश्च। गङ्गानिपतितयमुनासागरप्राप्तिवत्स्यात्—गङ्गासंयुक्ताया यमुनाया गङ्गाद्वारा यथा सागरगमनं तद्वत् सद्वारकं स्यात्। नतु गङ्गायास्सागरप्राप्तिवत् साक्षात्सम्भवेदित्यर्थः ॥ ४८२ ॥

इत्यध्यक्षाधिकरणम् ॥ १३७ ॥

---

## भूताधिकरणम् ॥ १३८ ॥

सूत्रम्—भूतेषु तच्छ्रुतेः ॥ ४९२ ॥

तेजस्येवास्तु युक्तश्श्रिततनुभृदनस्तेजसीत्याद्यबाधात्
छत्रिन्यायोऽपि नास्मिन्निति यदि न तथान्यत्र भूतान्तरोक्तेः।
विश्वारम्भाय देवस्त्रिवृतमकृत च प्रागिमं भूतवर्गं
प्राचुर्यात्तत्तदेकव्यवहृतिरिति चासूत्रयत्पूर्वमेव ॥ ४८२ ॥

इति भूताधिकरणम् ॥ १३१ ॥

चिन्ता०—'प्राणस्तेजसि' इति प्राणस्य तेजसि सम्पत्तिरुक्ता सा सम्पत्तिः किं तेजोमात्रे उत सर्वेष्वपि भूतेष्विति चिन्त्यत इति सङ्गतिः। तदर्थविचारस्तु—किं भूतान्तरसंसृष्टतेजस्संयोग उत तेजोमात्रसंयोग इति। किं तेजश्शब्दस्तेजोमात्रपर उत संसृष्टपर इति। किं पृथिवीमय आपोमय-इत्यादिवाक्यं युगपदनेकभूतसंसर्गं दर्शयति नेति। किं त्रिवृत्करणश्रुतिः पञ्चीकरणस्मृतिश्च संहतानामेव कार्यसामर्थ्यं दर्शयतो नेति। अत्र पूर्वपक्षी 'तेजसि सम्पद्यते' इति प्रत्येकं तेजस एवोपादानात् तेजस्येव सम्पत्तिरस्त्वित्याह—तेजसीति। युक्तश्श्रिततनुभृत् अन इति पदविभागः। अन इति प्राण उच्यते उपसर्गाणां धातुलीनार्थद्योतकत्वात्। आश्रितजीवः प्राणः तेजस्येव सम्बद्धोऽस्त्वित्यर्थः। अत्र हेतुमाह—तेजसीति। छत्रिन्यायेन तेजोऽव्यतिरिक्तानामप्युपादानं स्यादित्याशङ्क्य नेत्याह—छत्रिन्याय इति। तत्र ह्यच्छत्रिणामपि गमनस्य प्रत्यक्षोपलम्भाल्लक्षणया सर्वेषामप्युपादानम्। अत्र पुनस्तेजोऽव्यतिरिक्तसद्भावे प्रमाणाभावात् कथं तन्न्याय इति। इमं पक्षं प्रतिक्षिपति—नेति। तत्र हेतुमाह—तथान्यत्रेति। 'पृथिवीमय आपोमयस्तेजोमयः' इति जीवस्य संचरतस्सर्वभूतमयत्वश्रुतेरित्यर्थः। अत्र 'तासां त्रिवृतं त्रिवृतमेकैकां करवाणि' इति त्रिवृत्करणश्रुतिमपि प्रमाणयति—विश्वारम्भायेति। सूत्रकारोऽपीममर्थं प्राहेति दर्शयति—प्राचुर्यादिति। 'त्र्यात्मकत्वात्तु भूयस्त्वात्' इति सूत्रेणेत्यर्थः। तेनैकस्य भूतस्य कार्यकरत्वाभावाद् भूतान्तरसंसृष्टे तेजसि प्राणस्सम्पद्यत इत्यवगन्तव्यमिति। अत्र पञ्चीकरणोपादानं पञ्ची-कृतपञ्चभूतानामप्युपलक्षणम्। लोके हि देहाद्यारम्भो न पञ्चीकृतपञ्चभूतमात्रेण अपितु पञ्चीकृतपञ्चभूतो-पादानेनेति स्फुटतरमुपलभ्यते ॥ ४८६ ॥

इति भूताधिकरणम् ॥ १३१ ॥

पद०—तेजस्येवेत्यादि । श्रिततनुभृत्—आश्रितजीवात्मा । अनः—प्राणः । तेजस्येव युक्तोऽस्तु—तेजोमात्रे सम्पद्यत इत्यर्थोऽस्तु प्राणस्तेजसीति वाक्यस्येत्यर्थः । तेजसीत्याद्यबाधात्—तेजसि सम्पद्यत-इति या श्रुतिस्तस्या अबाधायेत्यर्थः । अन्यथा बाधस्स्यादिति भावः । अस्मिन्—तेजश्शब्दे । छत्रिन्यायोऽपि न—छत्रिणो गच्छन्तीत्यत्र यथा छत्रिशब्दस्यच्छत्र्यच्छत्रिलक्षकत्वं तद्वत् तेजस्तदितरभूतलक्षकत्वमपि न सम्भवति । तत्राच्छत्रिणां गमनस्य प्रत्यक्षेणोपलम्भात् तत्संग्रहाय लक्षणा युक्ता, अत्र तु तेजोव्यतिरिक्तभूतान्तरसद्भावे प्रमाणभावादिति भावः । इति यदि न—इति यच्छङ्कनं तदसत । अन्यत्र—श्रुत्यन्तरे । तथा—तेजस्तुल्यतया । भूतान्तरोक्तेः—'पृथिवीमय आपोमयस्तेजोमयः' इति भूतान्तरयोरपि सञ्चरता जीवेन सह संयोगवचनात् । देवः—परमात्मा । प्राक्—सृष्टिकाले । इमं भूतवर्गम्—एनं तेजोऽबन्नादिभूतवर्गम् । विश्वारम्भाय—अण्डादिसृष्टये । त्रिवृतमकृत च—एकैकं भूतं त्र्यात्मकमकरोच्च । तत्तदेकव्यवहृतिः प्राचुर्यादिति च पूर्वमेवासूत्रयत्—सर्वस्यापि भूतस्य त्रिवृत्करणादिभिः पञ्चभूतात्मकत्वेऽपि तेषांतेषां पृथिव्याद्येकभूतवाचकशब्दैर्व्यवहारश्च प्राचुर्येण यद्भूतांशवत् यद्वस्तु तस्य तद्भूतवाचकशब्देन व्यवहार इति तृतीयाध्यायारम्भ एव 'त्र्यात्मकत्वात्तु भूयस्त्वात्' इति सूत्रतः प्रत्यपादयत् । सूत्रकार इति शेषः । तथा च सर्वेषामपि भूतानां पञ्चभूतात्मकत्वादत्र तेजश्शब्द इतरभूतचतुष्टयलक्षक इति पञ्चभूतसूक्ष्मेष्वेव पुञ्जीकृतेषु सजीवस्य सेन्द्रियस्य प्राणस्य संयोगरूपा सम्पत्तिरिति भावः ॥ ४८३ ॥

इति भूताधिकरणम् ॥ १३१ ॥

---

## आसृत्युपक्रमाधिकरणम् ॥ १३९ ॥

सूत्रम्—समाना चासृत्युपक्रमादमृतत्वञ्चानुपोष्य ॥ ४९५ ॥

अत्रैव ब्रह्म विन्दत्यमृत इह भवत्यागमाद् ब्रह्मनिष्ठो
नोत्क्रान्तिस्तस्य युक्तेत्यसदुपनिषदो ह्यस्य गत्याद्युशन्ति ।
नान्यप्राप्त्यर्थमेतत् सगुणसमाधिके कुत्रचिन्मानहानेः
तस्मादत्रामृतत्वप्रमृतिवचनतस्तादृशी तद्दशोक्ता ॥ ४८४ ॥

चिन्ता०—इयमुत्क्रान्तिः किं विद्वदविदुषोस्समाना उताविदुष एवेति चिन्त्यत इति सङ्गतिः । तदर्थविचारस्तु—'तयोर्ध्वमायन्' इति श्रुतिः किं विदुष उत्क्रान्तिमवगमयति नेति । किमेषा

श्रुतिरिहामृतत्वश्रुत्युत्क्रान्तिनिषेधश्रुतिभ्यां व्याहन्यते नेति। अमृतत्वं किमुत्तरपूर्वाघाश्लेषविनाशरूपमुत सर्वबन्धमोक्षरूपम्। निषिध्यमानाचोत्क्रान्तिश्शरीरापादाना, उतात्मापादाना। अत्र पूर्वपक्षमारचयति—अत्रेति। 'अत्र ब्रह्म समश्नुते' 'तमेवं विद्वानमृत इह भवति' इत्यागमात् ब्रह्मनिष्ठ इहामृतो भवतीति तस्य नोत्क्रान्तिर्युक्ता। तदेतत्प्रतिक्षिपति—असदिति। असत्त्वे हेतुमाह—उपनिषद इति। अस्य ब्रह्मविद एवौपनिषदानि वाक्यानि गत्यादिकं प्रवदन्ति। अत्र द्वेधा खलु मुक्तिः सगुणब्रह्मप्राप्तिर्निर्गुणब्रह्मप्राप्तिश्चेति। तत्र सगुणब्रह्मप्राप्तौ सार्थकं गत्यादिवाक्यं न निर्गुणब्रह्मप्राप्तावित्याशङ्क्य मुक्तौ विभागमेव प्रतिक्षिपति—नान्येति। प्रतिक्षेपे हेतुमाह—सगुणेति। अयमर्थः—मोक्षस्य द्वैविध्ये सति हि गत्यादिवाक्यमन्यार्थकमिति वक्तुं शक्यते। नपुनर्द्वैविध्यम्; सगुणब्रह्मव्यतिरिक्ते ब्रह्मणि तत्प्राप्तौ च प्रमाणाभावात्। तेन मुक्तिश्चेत्सगुणैव। निर्गुणा मुक्तिरिति निर्गुणानामेव प्रवादः। 'सत्यं ज्ञानमनन्तं ब्रह्म इत्यनृतजडपरिच्छिन्नव्यावृत्तब्रह्मस्वरूपपरिज्ञानफलत्वेन 'सोऽश्नुते सर्वान्कामान्सह' इति प्राप्यतया निर्दिश्यते। निर्गुणं तु न श्रूयते नानुसन्धीयते नापि प्राप्यत इति निर्गुणमुक्तिपरिक्लृप्तिरप्रामाणिकत्वादपहास्येत्यभिधीयते। तदिदमाह—सगुणेति। उपपादितमर्थं निगमयति—तस्मादिति। इहामृतो भवतीत्यनेन तादृशी तद्दशोक्ता साक्षान्मुक्तिसदृशी काचिन्मुक्तिर्दशोक्ता। उत्तरपूर्वाघाश्लेषविनाशरूपावस्थोक्तेत्यर्थः॥ ४८१॥

पद०—अत्रैवेत्यादि। अत्रैव ब्रह्म विन्दतीत्यागमात् ब्रह्मनिष्ठः इहामृतो भवति—'अत्र ब्रह्म समश्नुते' 'तमेवं विद्वानमृत इह भवति' इत्यादिश्रुतेः ब्रह्मोपासक इहैव मुक्तो भवति। तस्य—इहैव मुक्तत्वेनावगतस्य। उत्क्रान्तिः—देहादुत्क्रमणम्। न युक्ता—मुक्तस्य मुक्त्यर्थगमनासम्भवादिति भावः। इत्यसत्—इति शङ्कनमयुक्तम्। हि—यस्मात् कारणात्। उपनिषदः—छान्दोग्यबृहदारण्यकादयः। अस्य—ब्रह्मोपासकस्य। गत्यादि उशन्ति—उत्क्रान्तिगतिविरजातरणदेशविशेषप्राप्तिपरब्रह्मावाप्तिप्रभृति प्रतिपादयन्ति। एतत्—उत्क्रान्तिगत्यादिकम्। अन्यप्राप्त्यर्थं न—सगुणब्रह्मप्राप्त्यर्थमिति कल्पनं न सम्भवति। सगुणसमधिके—सगुणब्रह्मव्यतिरिक्ततया कल्पिते निर्गुणब्रह्मणि विषये। कुत्रचित्—क्वापि वेदे। मानहानेः—प्रतिपादकप्रमाणवाक्यादर्शनात्। तस्मात्—कारणात्। अत्रामृतत्वप्रभृतिवचनतः—'अत्र ब्रह्म समश्नुते' 'अमृत इह भवति' इत्यादिवचनेन। तादृशी—मुक्तिशब्दोपचारार्हा। तद्दशा—उत्तरपूर्वाघाश्लेषविनाशरूपा उपासकस्यावस्था। उक्ता—प्रतिपादिता। न त्वत्रैवायं साक्षान्मुक्तिमवाप्नोत्युक्तं प्रत्यक्षादिविरोधादिति भावः॥ ४८१॥

निश्शेषं भोगहेतौ गलति परविदः कर्मणि प्रायणेऽथो
गत्यर्थं सूक्ष्मदेहानुगतिरणुतया निश्चितस्याफलं स्यात् ।
मार्गे संवादवादस्तदुचितवपुषा त्वस्त्वितीवानुयोगे
कृत्स्नाविद्यानिवृत्तिः परपदगमनापेक्षिणीत्यादि वाच्यम् ॥ ४८५ ॥

चिन्ता०—अत्र कश्चिच्चोदयति—निश्शेषमिति । अयमत्राभिप्रायः—भोगहेतुः कर्म निश्शेषमपि स्थूलदेहावसाने गलितमेव तस्माद्भोगाभावाद् भूतसूक्ष्मपरिष्वङ्गेण गमनमनर्थकमेव । ननु देहाभावे कथं गमनं स्यादिति न चोदनीयम् अणुस्वरूपस्य जीवस्य देहाभावेऽपि गमनं युज्यत एवेत्याह—अणुतया निश्चितस्येति । अणोर्जीवस्य स्वभावतः क्रियावत्त्वात् सूक्ष्मदेहानुवृत्तिमन्तरेणापि गतिस्सम्भवत्येव । तर्हि मार्गे चन्द्रसंवादश्श्रूयते तत्कथं शरीरविधुरस्येत्याशङ्क्य तत्राप्यन्यथासिद्धिमाह—मार्ग इति । अयं भावः—चन्द्रलोकपर्यन्तं स्वरूपेण गत्वा तत्र कश्चिद्देहमपूर्वं परिगृह्य चन्द्रेण संवदेत इति एवमनुयोगे तत्रोत्तरत्वेन कृत्स्नाविद्यानिवृत्तिः परञ्ज्योतिरुपसम्पद्य समनन्तरमुत्पद्यत इत्यादि वाच्यम् । अयमर्थः—देहादुत्क्रान्तस्य परञ्ज्योतिरुपसम्पन्नस्य पश्चादेव कृत्स्नाविद्यानिवृत्तिः । तेन गमनमपेक्षितम् । तच्च गमनं मार्गविशेषेण मध्ये संवादादिकं कृत्वेति श्रुत्यैव स्पष्टमभिधानाद्विग्रहवत एवेति स्पष्टमवलोक्यते । न च मध्ये विग्रहं परिगृह्य संवादान् करोतीति वाच्यम्—तत्रतत्रापूर्वविग्रहपरिकल्पनायां कल्पनागौरवमापद्येत । अतः पूर्वशरीरावयवैस्सानुबन्धैरेव विग्रहवान् देशविशेषप्राप्तिपर्यन्तं गच्छतीति वक्तुमेव युक्तम् । तस्माद् भूतसूक्ष्मैः परिष्वक्त एव गच्छति, भूतसूक्ष्मपरिष्वङ्गस्यैव देहत्वात् तेनैव देहेनार्चिरादिमार्गगमनम्, अन्तरा व्यवहारः, तत्तदर्चिरादिदेवताविषयगमनम्, तैरतिवहनमित्यादिकं सर्वं सशरीरस्यैव युज्यते । न पुनरत्र परिस्पन्दमात्रं गमनमित्युच्यते अपितु क्रियाविशेषः । मार्गविशेषेण सशरीरस्यैव देशविशेषप्राप्तेरभिधानात् ॥ ४८५ ॥

पद०—निश्शेषमित्यादि । परविदः—ब्रह्मोपासकस्य । प्रायणे—मरणसमये । भोगहेतौ कर्मणि—सुखदुःखानुभवहेतुभूते पुण्यपापरूपे कर्मणि । निश्शेषं गलति—निरवशेषतया निवृत्ते सति । अथो—तदनन्तरम् । गत्यर्थम्—अर्चिरादिमार्गेण गमनाय । सूक्ष्मदेहानुगतिः—सूक्ष्मदेहस्यानुवर्तनकल्पना । अणुतया निश्चितस्य अफला स्यात्—अणुपरिमाणतया निश्चितस्य ततएव शरीरं विनैव क्रियावत्त्वेन गमनयोग्यस्य विफलैव भवेत् । मार्गे—अर्चिरादिमार्गमध्ये । संवादवादः—चन्द्रसंवादप्रतिपादकवचनम् । तदुचितवपुषा तु अस्तु—तावत्पर्यन्तं स्वरूपेण तत्र चन्द्रलोके परिगृहीतेन चन्द्रसंवादयोग्येन केनचिच्छरीरेण सार्थकमस्तु । तथा च भोगासम्भवात्

स्वरूपेणैव गतिसम्भवाच्चन्द्रसंवादस्य तदातनदेहविशेषसाध्यत्वाच्च पूर्वशरीरगृहीतभूतसूक्ष्मगमनकल्पनमनुपपन्नमिति भावः। इतीवानुयोगे—एवंप्रकारेणाक्षेपे। कृत्स्नाविद्यानिवृत्तिः परपदगमनापेक्षिणी—निश्शेषाविद्यानिवृत्तिः स्थानविशेषगमनसापेक्षा। इत्यादि वाच्यम्—इत्यादिकं प्रत्युत्तरतयाभिधेयमित्यर्थः। अयं भावः—देहादुत्क्रान्तस्य परंज्योतिरुपसम्पन्नस्य पश्चादेव कृत्स्नाविद्यानिवृत्तिः, तेन गमनमपेक्षितम् तच्च गमनं मार्गविशेषेण मध्ये संवादादिकं कृत्वेति श्रुत्यैव स्पष्टमभिधानात् विग्रहवत एवेति स्पष्टमवगम्यते। नच मध्ये विग्रहविशेषपरिग्रहेण संवादादिकमस्त्विति वाच्यम् तत्रतत्रापूर्वविग्रहपरिग्रहकल्पनायां कल्पनागौरवम्। तेन पूर्वशरीरावयवैस्सानुबन्धैरेव विग्रहवान् देशविशेषप्राप्तिपर्यन्तं गच्छतीत्येव वक्तुं युक्तम्। तस्माद् भूतसूक्ष्मैस्सम्परिष्वक्त एव गच्छतीति युक्तमिति ॥ ४८५ ॥

कल्पादौ भूतसूक्ष्मप्रभृतिभिरुदितं वर्ष्म कल्पान्तनाश्यं
प्रत्येकं प्राणिभेदे नियतमनियतस्थूलदेहानुयायि।
लिङ्गाख्यं भस्त्रिकान्तःपरुवकवदवस्थायि साङ्ख्यैः प्रगीतं
सूक्ष्मांशः पूर्वमूर्तेरुपरितनतनोर्बीजमत्रेष्यते तत् ॥ ४८६ ॥

चिन्ता०—अत्र किं सूक्ष्मशरीरमित्युच्यत इति शिष्यानुयोगे साङ्ख्योक्तप्रक्रियामनूद्य तस्याः प्रमाणमूलत्वाभावात् स्वाभिमतमर्थं ततः प्रकटयति—कल्पादाविति। इयं किल साङ्ख्यप्रक्रिया—कल्पादौ भूतसूक्ष्मप्रभृतिभिरुदितं शरीरं कल्पान्तविनाश्यम्। तच्च प्रत्येकं प्राणिभेदे नियतम्, अनियतस्थूलदेहानुयायि। स्थूलानि शरीराणि देवतिर्यङ्मनुष्यादीनां कर्मानुरूपमनियतानि। सूक्ष्मशरीरं तु कल्पादिमारभ्य कल्पावसानपर्यन्तं सर्वेष्वपि स्थूलशरीरेष्वेकमेवावतिष्ठते अनुवर्तते तदिदमनुयायीत्युच्यते। तच्च लिङ्गशरीरमिति चोच्यते। तत्स्वरूपं दृष्टान्तेन दर्शयति—भस्त्रिकेति। भस्त्रिकान्तर्निहितकृत्रिमपुत्रिकावदवतिष्ठत इति हि साङ्ख्यैः प्रगीतम्। अयं तु साङ्ख्यपक्षः प्रमाणविशेषादर्शनात् परिकल्पनामात्रेण परिगृहीतः। सर्वप्रमाणानुकूलं स्वाभिमतं प्रकारान्तरमाह—सूक्ष्मांश इति। उत्तरदेहपरिग्रहार्थं पूर्वदेहान्निष्क्रान्तः पञ्चभूतसूक्ष्मांशसमुदायविशेष एव सूक्ष्मशरीरमित्युच्यत इति ॥ ४८६ ॥

पद०—कल्पादावित्यादि। कल्पादौ—आदिसृष्टौ। भूतसूक्ष्मप्रभृतिभिः—भूतसूक्ष्मैकादशेन्द्रियप्राणदशकादिभिः। उदितम्—उत्पन्नम्। कल्पान्तनाश्यम्—कल्पावसानविनाशि। आप्रलयावस्थायीत्यर्थः। प्राणिभेदे—सर्वप्राणिविशेषे। प्रत्येकं नियतम्—प्रतिजीवमेकैकशो व्यवस्थितम्। अनियतस्थूलदेहानुयायि—अनियता आगन्तुका विसजातीया नश्वराश्च ये स्थूलदेहास्तेषु सर्वेष्वनु-

वर्तनशीलम् । भस्त्रिकान्तःपरुवकवदवस्थायि—भस्त्रिकान्तर्निहितकृत्रिमपुत्रिकादिवदवस्थितम् । लिङ्गाख्यम्—लिङ्गशब्दाभिधेयम् । वर्ष्म—सूक्ष्मशरीरम् । सांख्यैः प्रगीतम्—निरीश्वरसांख्यसिद्धान्तनिष्ठैः प्रतिपादितम् । अत्र—अस्मत्सिद्धान्ते तु । तत्—लिङ्गशरीरम् । उपरितनतनोर्बीजम्—भाविशरीरोपादानभूतः । पूर्वमूर्तेस्सूक्ष्मांश इष्यते—पूर्वशरीरसूक्ष्मांश इत्यस्माभिरङ्गीकृतः । सांख्योक्तरीत्याङ्गीकारे प्रमाणाभावात् केवलकल्पनाया अयुक्तत्वात् रंहत्यधिकरणादौ गीतादौ च सेन्द्रियप्राणभूतसूक्ष्मांशानामेव पूर्वपूर्वशरीरगृहीतानां जीवेन सह गमनादिश्रवणादिति भावः ॥ ४८६ ॥

तत्त्वज्ञानेन बन्धः किल गलति पुरा नोत्क्रमेणेत्यसारं
माता वन्ध्येतिवद्धि स्ववचनविहतिर्जीवतो मुक्तिवादे ।
मुक्तश्चेत्तत्त्वबोधात्तनुभृदिह तदा तत्त्वविन्नैष दुःख्येत्
मिथ्या दुःखं तदा चेत्कथय तव कदा तस्य सत्यत्वमिष्टम् ॥ ४८७ ॥

चिन्ता०—अत्र जीवन्मुक्तिवादी पुनरुत्क्रमणवार्तामसहमानः प्रत्यवतिष्ठते—तत्त्वज्ञानेनेति । तत्त्वमस्यादिवाक्यजन्यतत्त्वज्ञानेन पूर्वमेव संसारो गलत्येव न पुनरुत्क्रमणेन संसारो गलति तेन तत्त्वविदामुत्क्रान्तिवचनमनर्थकमेवेति । तदिदमसारमित्याह—असारमिति । असारत्वमेवोपपादयति—मातेति । जीवत इति संसारसम्बन्ध उच्यते मुक्तिरिति तदसम्बन्धः उभयस्याप्येकदैकनिष्ठत्ववचनं मम माता वन्ध्येति वचनवदसम्बद्धमेव । व्याहतिमेवानिष्टप्रसङ्गपूर्वकं दर्शयति—मुक्तश्चेदिति । जीवन्मुक्त इति भवता कथ्यमानो मुक्तश्चेत्तत्त्वबोधमात्रेण तदा तत्परं नैष दुःख्येत् तत उत्तरस्मिन्काले स पुरुषो न दुःख्येत् । दृश्यते हि जीवन्मुक्तत्वेन भवता व्यवह्रियमाणानां भावत्कानां देहानुबन्धिक्षुत्पिपासाक्रोधादिमूलं दुःखम् । तर्हि तदा तेषां दुःखं मिथ्येति वदाम इति चेत् तन्न पूर्वमपि तेषां दुःखस्य मिथ्यात्वात् । तेन पूर्वोत्तरकालयोर्न वैषम्यमित्यर्थः । तदिदमाह—कथयेति । सर्वदापि दुःखं मिथ्येति हि भवतां सिद्धान्तः । मिथ्याभूतं तदेव दुःखं संसार इति च भवतोच्यते । तेन संसरतो न मुक्तिरिति ॥ ४८७ ॥

पद०—तत्त्वज्ञानेनेत्यादि । तत्त्वज्ञानेन—तत्त्वमस्यादिवाक्यजन्यतत्त्वज्ञानेन । बन्धः—अविद्यादिरूपो बन्धः । पुरा—उत्क्रमणात्पूर्वं शरीरावस्थानवेलायामेव । गलति किल—निवर्तते खलु । 'ज्ञात्वा देवं मुच्यते सर्वपाशैः' 'तमेव विदित्वाति मृत्युमेति' 'तमेवं विद्वानमृत इह भवति' इत्यादिषु त्वाप्रत्ययेहशब्दादिभिस्तत्त्वज्ञानोत्तरमेव बन्धनिवृत्त्यवगमादिति भावः । नोत्क्रमेणेतिवाक्ये बन्धो गलति इति पदयोरनुषङ्गः । उत्क्रमेण बन्धो न गलति । अनाद्यनुवृत्तो बन्धो निवर्तते चेत् ज्ञानेनैव

तदुत्पत्त्युत्तरक्षण एव निवर्तेत ज्ञाने उत्पन्नेऽपि न निवर्तते चेत् उत्क्रमणादिभिर्न निवर्तेत पूर्वमनन्तशरीरेभ्य-उत्क्रमणागत्यादिभिरनिवृत्तमेतदुत्क्रमणादिमात्रेण निवर्तेतेत्यत्र किं प्रमाणमिति भावः । इत्यसारम्—इति वचनं तुच्छम् । जीवतो मुक्तिवादे माता वन्ध्येतिवत् स्ववचनविहतिर्हि—जीवतोऽविद्याकर्मकार्य-भूतदेहात्मभ्रममूलकक्षुत्पिपासादिदुःखतन्निवृत्त्यादिजनितसुखाश्रयभूतस्य जीवस्य मुक्तिवादे समूलसकार्या-विद्यादिनिश्शेषविध्वंसरूपमुक्तिर्भवतीति वचने मे माता अपत्यरहितेति वाक्य इव स्ववचनव्याहतिर्भवति हि । मे मातेत्यनेन स्वमातुस्सापत्यत्वावगमात् तद्विरुद्धतया वन्ध्येत्यनपत्यताकथनमिव जीवत इत्यनेन बन्धवत्त्वा-वगमात् तद्विरुद्धतया मुक्तिरिति तस्य तदैव बन्धाभावकथने वाक्यैकदेशयोरेव परस्परव्याघात इत्यर्थः । तनुभृत्—बन्धात्मकं शरीरं बिभ्राणो जीवः । तत्त्वबोधात्—तत्त्वज्ञानात् । इह—देहवत्त्वदशाया-मस्मिन्नेव लोके । मुक्तश्चेत्—मुक्तिं प्राप्त इति यद्यङ्गीक्रियते । तर्हि एष तत्त्ववित् तदा न दुःख्येत्—यो जीवन्मुक्तत्वेनाभिमत एष तत्त्वज्ञानी यदा जीवन्मुक्त इत्युच्यते तदा दुःखं नानुभवेत् । दृश्यते हि जीवन्मुक्तत्वेन व्यवह्रियमाणानां भावुकानां देहानुबन्धिक्षुत्पिपासाक्रो-धादिमूलं दुःखम् । तदा दुःखं मिथ्या चेत्—जीवन्मुक्तिदशायां तस्यात्मनो दुःखं मिथ्येति वदाम इति चेत् । तव कदा तस्य सत्यत्वमिष्टं कथय—ब्रह्मव्यतिरिक्तं सर्वं सर्वदा मिथ्येति वदतस्तव कस्मिन्काले दुःखानुभवस्य सत्यत्वमङ्गीकृतं ब्रूहि तेन पूर्वोत्तरकालयोर्न वैषम्यमित्यर्थः । सर्वदापि दुःखं मिथ्येति हि भवतां सिद्धान्तः । मिथ्याभूतं तदेव दुःखं संसार इति च भवतोच्यते अतस्संसरतो मुक्ति-रिति विरुद्धमिति भावः ॥ ४८७ ॥

यं यं भावं स्मरन्तो जहति वपुरिदं देहिनो यान्ति तं तं
तस्मादुत्क्रान्तिसाम्यं न घटत इति चेत्तन्न तन्मात्रसाम्यात् ।
विद्याभेदादिनीत्या भवति विषमता ह्यन्तिमप्रत्ययादौ
किञ्चित्साधर्म्यवादे न च नियतिमती सर्वथासाम्यसिद्धिः ॥ ४८८ ॥

इति आसृत्युपक्रमाधिकरणम् ॥ १३९ ॥

चिन्ता०—ननु यदुत्क्रान्तिसाम्यमुक्तं तन्नास्ति विद्वदविदुषोरुत्क्रान्तिविशेषस्यैव भगवता-भिधानात् 'यं यं वापि स्मरन्भावं त्यजत्यन्ते कलेवरम्' इति तस्मात्कथमुत्क्रान्तिस्समानेत्युच्यते । तदिदमाह—यं यमिति । अयमन्वयः—यं यं भावं स्मरन्तो देहिन इदं वपुर्जहति तं तं भावं यान्तीति विषमस्वभावैवोत्क्रान्तिरुच्यते तस्मादुत्क्रान्तिसाम्यं न घटते । तदिदं प्रतिक्षिपति—तन्ने-

ति। तत्र हेतुमाह–तन्मात्रसाम्यादिति। अयमर्थः—कर्मानुरूपमुत्क्रान्तिविशेषोऽस्तु नाम अथापि देहादुत्क्रमणमित्येतावन्मात्रं तुल्यमित्युक्तमस्माभिरिति। तर्ह्यन्तिमप्रत्यये वैषम्यमङ्गीकृतं भवता तत्कथमित्याशङ्क्य प्रतिबन्द्या परिहरति—विद्येति। सद्विद्यादहरविद्यादौ वेद्याकारभेदाद्भेदोऽस्ति। अथापि ब्रह्मविद्येति सामान्याद् विद्यैक्यमप्यस्ति। एवमत्राप्युत्क्रमणमेकमेव। अथापि तत्तद्भावनाविशेषाद् भेदोऽस्तीति न कश्चिद्विरोधः। उक्तमर्थं लोकदृष्टप्रक्रियया स्थापयति—किञ्चिदिति। एकदेशसाधर्म्यवादे सर्वथासाम्यसिद्धिर्न च नियतिमती न सिध्यतीत्यर्थः। साधर्म्यवैधर्म्ययोः प्रमाणानुसारेण लोकवेदयोः प्रसिद्धत्वादिति। अयमाशयः—वाजसनेयके ‘न तस्य प्राणा उत्क्रामन्ति’ इत्यध्यात्मविदि प्राणोत्क्रमणनिषेधादुत्क्रमणमविद्वद्विषयमिति यदुक्तं तत्तत्रैव स्थलान्तरे ‘न तस्मात्प्राणा उत्क्रामन्ति’ इति जीवात्प्राणोत्क्रान्तिनिषेधेन दत्तोत्तरमिति भाष्य एव सुव्यक्तमुपपादितम्। तस्मादस्माभिर्नात्र वक्तव्यं किञ्चिदवशिष्यते। अन्तेवासिभिरधिकरणचिन्तनमेव नियमेन कर्तव्यम्। तेन प्राणसहितो विद्वानपि मूर्धन्यनाड्योत्क्रम्यार्चिरादिना मार्गेण गच्छतीत्ययमेव शारीरकशास्त्रनिर्णयः॥ ४८८॥

इति आसृत्युपक्रमाधिकरणम्॥ १३९॥

पद०—यं यमिति। देहिनः—प्राणिनः। यं यं भावं स्मरन्त इदं वपुर्जहति तं तं यान्ति—देवत्वमनुष्यत्वादिकं यं यं भावं स्मरन्तस्सन्त इदं शरीरं विसृजन्ति तं तं भावं प्राप्नुवन्ति। तस्मात्—कारणात्। उत्क्रान्तिसाम्यं न घटते—विद्वदविदुषोरुत्क्रान्तिसाम्यं भवदुक्तं न युज्यते। इति चेत्—एवं शङ्क्यते यदि। तन्न–तन्न सम्भवति। तन्मात्रसाम्यात्–कर्मानुरूपमुत्क्रान्तिविशेषोऽस्तु नाम, अथापि देहादुत्क्रमणमात्रसाम्यस्यास्मदुक्तस्यानपायात्। अन्तिमप्रत्ययादौ विषमता विद्याभेदादिनीत्या भवति हि–अन्तिमप्रत्ययादिवैषम्यं सद्विद्यादहरविद्यादीनां वेद्याकारभेदकृतभेदवत् ब्रह्मविद्यात्वसामान्यकृताभेदवच्च सम्भवति। सद्विद्यादहरविद्यादौ वेद्याकारभेदात् भेदोऽस्ति अथापि ब्रह्मविद्येति सामान्यादैक्यमप्यस्ति एवमत्राप्युत्क्रमणमेकमेव, अथापि तत्तद्भावनाविशेषात् भेदोऽप्यस्तीति न कश्चिद्विरोध इति भावः। किञ्चित्साधर्म्यवादे सर्वथासाम्यसिद्धिश्च न नियतिमती—एकदेशसाधर्म्यवादे सर्वथासाम्यं न सिध्यतीत्यर्थः॥ ४८८॥

इति आसृत्युपक्रमाधिकरणम्॥ १३९॥

---

## परसम्पत्त्यधिकरणम् ॥ १४० ॥

सूत्रम्—तानि परे तथा ह्याह ॥ ५०२ ॥

जीवोत्क्रान्त्युक्तिकाले विदुषि तु घटते तत्प्रतिक्षेपभङ्गो
भूतोत्क्रान्तेस्तु पश्चात्तदुपनिपतने सङ्गतिस्स्यात्कथंचित् ।
तस्मात्साधारणोऽपि ह्ययमुपरि ततस्स्थाप्यते हार्दयोगः
तुल्येऽप्यस्मिन्नतुल्यास्सरणिमुखतया प्राप्यभेदेन नाड्यः ॥ ४८९ ॥

चिन्ता०—अत्रावान्तरसङ्गतिर्भाष्ये सुव्यक्ता 'सकरणग्रामः सप्राणः करणाध्यक्षः प्रत्यगात्मा उत्क्रान्तिवेलायां तेजःप्रभृतिभूतसूक्ष्मेषु सम्पद्यत इत्युक्तम् । सैषा सम्पत्तिर्विदुषो न विद्यत इत्याशङ्क्य परिहृतम् । तानि पुनर्जीवपरिष्वक्तानि भूतसूक्ष्माणि किं यथाकर्म यथाविद्यञ्च स्वकार्याय गच्छन्ति उत परमात्मनि सम्पद्यन्त इति विशये' इति । तदर्थविचारस्तु—किं तेजश्शब्दनिर्दिष्टानि भूतानि यथाकर्म यथाविद्यञ्च गच्छन्ति उत परमात्मनि सम्पद्यन्ते । किमत्र परदेवताशब्दो गन्तव्यस्थानावस्थपरमात्मपरः उतातदवस्थपरमात्मपर इति । किमत्र सम्पत्तौ प्रयोजनं सम्भवति नेति । ननु पूर्वं जीवोत्क्रान्तिमुक्त्वा तदनन्तरं भूतोत्क्रान्तिमुक्त्वा पश्चाद्विदुष उत्क्रान्तिनिषेधपरिहारः किमिति नोच्यत इत्यत्राह—जीवेति । अयमर्थः—सामान्येन जीवोत्क्रान्तिमुक्त्वा जीवविशेषभूतविदुषामुत्क्रान्तिर्नास्तीत्याशङ्क्य तेषामप्युत्क्रान्तिरस्तीति कथने सङ्गत्यौचित्यातिशयोऽस्ति । जीवोत्क्रान्तिसमनन्तरं भूतोत्क्रान्तिमुक्त्वा पश्चाद्विदुष उत्क्रान्तिनिषेधपरिहारकथने सङ्गतिः कथञ्चिदेव स्यात् । तस्मात्कारणादयं विद्वदविद्वत्साधारणोऽपि हार्दयोगस्तत उपरि स्थाप्यते विदुष उत्क्रान्तिस्थापनादुपरि स्थाप्यत इति । साधारणोऽपीति—'वाङ्मनसि सम्पद्यते' इत्यादिवद् हार्दयोगोऽपि विद्वदविद्वत्साधारणोऽपीति सङ्गतिविशेषेण विदुष उत्क्रान्तिस्थापनानन्तरं कथ्यत इतीममर्थं प्रकाशयितुमपिशब्दः । तर्हि हार्दयोगे तुल्ये नाड्योऽपि तुल्याः स्युरित्याशङ्क्य नेत्याह—अतुल्या इति । अतुल्यत्वे कारणमाह—प्राप्येति । हार्दयोगस्य तुल्यत्वे कारणमाह—सरणिमुखतयेति । अयमर्थः—हार्दयोगस्सरणिमुखं तद्विद्वदविद्वत्तुल्यमेव । तत उपरि सरणयो नाड्यस्ता विभक्ताः । यथैकेन द्वारेण निष्क्रान्तानां बहूनां मार्गभेदेन नानादेशगमनम्, एवमेकस्माद् हार्दस्थानान्नानानाडीमार्गेण स्वकर्मानुरूपं तत्तन्नानादेशगमनं जायत इति ॥ ४८९ ॥

पद०—जीवोत्क्रान्तीत्यादि । जीवोत्क्रान्त्युक्तिकाले—सामान्येन जीवोत्क्रान्तिप्रतिपादन-

प्रकरणे । विदुषि—विद्वज्जीवविषये । तत्प्रतिक्षेपभङ्गः—उत्क्रान्तिर्नास्तीत्याशङ्क्य तेषामप्युत्क्रान्तिरस्तीति कथनम् । घटते—सङ्गत्यौचित्यातिशयेन युज्यते । भूतोत्क्रान्तेः पश्चात् तदुपनिपतने तु सङ्गतिः कथञ्चित् स्यात्—भूतोत्क्रान्तिमुक्त्वा तदनन्तरं विदुष उत्क्रान्तिनिषेधपरिहारकथने किञ्चित्स्वारस्येन सङ्गतिर्भवेत् । तस्मात्—कारणात् । साधारणोऽपि—विद्वदविद्वज्जीवसाधारणभूतोऽपि । अयं हार्दयोगः—'तानि परे तथा ह्याह' इत्युच्यमानो हार्दनामकान्तर्यामिसंश्लेषः । तत उपरि स्थाप्यते हि—विद्वदुत्क्रान्तिस्थापनानन्तरं सूत्रकारैः प्रतिष्ठापितः । सरणिमुखतया—विषूचीननाड्यात्मकमार्गविभागपूर्वदेशतया । अस्मिन्नपि—हार्दसंश्लेषेऽपि । तुल्ये—विद्वदविद्वत्साधारणे सति । प्राप्यभेदेन—गन्तव्यदेशानां परस्परं भिन्नत्वेन । नाड्यः—तद्गमनसाधनभूता नाड्यश्च । अतुल्याः परस्परविभक्ता इत्यर्थः । यथैकद्वारेण निष्क्रान्तानां बहूनां पुरुषाणां मार्गभेदेन नानादेशगमनं एवमेकस्माद्धार्दस्थानान्निर्गतानां जीवानां नानानाडीमार्गैस्स्वकर्मानुरूपं तत्तन्नानादेशगमनमुपपन्नमिति ॥ ४८९ ॥

प्राप्तुं भोगापवर्गौ प्रयति तनुभृति प्राप्तसूक्ष्मस्वदेहे
सम्पत्त्या किं परस्यां श्रितहृदयसुषौ लभ्यते देवतायाम् ।
आतस्तेजः परस्यामिति चिरघटितेऽप्यस्तु सिद्धानुवादो
मैवं मानानुसारात्फलमिति परमे संक्रमश्रान्तिशान्त्यै ॥ ४९० ॥

इति परसम्पत्त्यधिकरणम् ॥ १४० ॥

चिन्ता०—अत्र हार्दप्राप्तौ प्रयोजनाभावाद् यथाकर्म यथाविधं गमनमेवास्तु किमनया निरर्थिकया हार्दप्राप्त्येत्याशङ्क्य तत्प्राप्तौ प्रयोजनविशेषमाह—प्राप्तुमिति । अयमन्वयः—भोगापवर्गौ प्राप्तुं प्राप्तसूक्ष्मस्वदेहे तनुभृति जीवे प्रयाति सति श्रितहृदयसुषौ श्रितहृदयाकाशायां परस्यां देवतायां सम्पत्त्या किं फलं स्यात् अतस्सम्पत्तिरेव नास्ति । आतः—एतस्मात्कारणात् । तेजः परस्यां देवतायामिति वचनं चिरघटिते सर्वदासंघटिते परमात्मनि सिद्धानुवाद एव । नपुनरपूर्वं संघटनं किञ्चिदत्रास्ति निष्फलत्वादिति । तदिदं प्रतिक्षिपति—मैवमिति । प्रतिक्षेपमेवोपपादयति—मानानुसारादिति । प्रमाणसिद्धेऽर्थे हि प्रमाणानुसारात् प्रयोजनमेव परिकल्प्यम् । नपुनरापाततः प्रयोजनादर्शनात् प्रमाणसिद्धोऽर्थः परित्याज्य इति नीतिविदां मर्यादा । किमत्र तर्हि प्रयोजनमित्याशङ्क्याह—परम इति । परमात्मनि संक्रमश्रान्तिशान्त्यै देहादुत्क्रान्तिसमये जायते श्रान्तिः तच्छ्रान्तिशान्तिः परमात्मनि संक्रमादुत्पद्यते तेनोत्क्रान्तिजनितश्रान्तिशान्त्यर्थं हार्दे विश्रम्य स्वाभिमतफलप्राप्त्यर्थं तत्तन्मार्गेण गच्छतीत्यर्थः ॥ ४९० ॥

इति परसम्पत्त्यधिकरणम् ॥ १३० ॥

पद०—प्राप्तुमित्यादि । भोगापवर्गौ प्राप्तुम्—भोगापवर्गात्मकफललाभाय । प्राप्तसूक्ष्मस्वदेहे—प्राप्तः पूर्वशरीरस्थभूतसूक्ष्मात्मकस्स्वदेहो येन तादृशे । तनुभृति—जीवे । प्रयति—उत्क्रामति सति । श्रितहृदयसुपौ परस्यां देवतायां संपरया किं लभ्यते—संश्रितहृदयाकाशायां हार्दरूपिण्यां परस्यां देवतायां संश्लेषविशेषेण किं प्रयोजनं लभ्यते । आतः—अतः । तेजः परस्यामिति—'तेजः परस्यां देवतायाम्' इति वचनम् । चिरघटितेऽपि—सदातनेऽपि परमात्मसंश्लेषे । सिद्धानुवादोऽस्तु—पूर्वमेव सिद्धस्यानुवादः नत्विदानीमपूर्वसंश्लेषपरम् अस्तु । मैवम्—एवं मा शङ्किष्ठाः । मानानुसारात् फलमिति—नतु प्रयोजनानुसारिणी प्रमाणप्रवृत्तिः प्रमाणानुसारेण प्रयोजनं कल्पनीयमिति न्यायेन । परमे संक्रमः—परमात्मनीदानीमपूर्व एवैष संश्लेषः । श्रान्तिशान्त्यै—करणकलेवरक्षोभजनितश्रमपरिहारायेति योजनीयम् ॥ ४९० ॥

इति परसम्पत्त्यधिकरणम् ॥ १४० ॥

---

## अविभागाधिकरणम् ॥ १४१ ॥

सूत्रम्—अविभागो वचनात् ॥ ५०२ ॥

सम्पत्तिर्दैवतायां भवतु लय इयं सा हि सर्वस्य योनिः
भूयस्स्रष्टुं क्षमा चेत्यसदनुषजतो वाच्यवैरूप्यदोषात् ।
विश्लेषो भूतसूक्ष्मैरिह न च घटते सृष्टिक्लृप्तिस्तु गुर्वी
प्रोक्ता धूमादिमार्गे गतिरपि भविनस्तत्परिष्वञ्जनेन ॥ ४९१ ॥

इत्यविभागाधिकरणम् ॥ १४१ ॥

चिन्ता०—"सेयं परमात्मनि सम्पत्तिः किं प्राकृतलयवत्कारणापत्तिरूपा । उत 'वाङ्मनसि' इत्यादिवदविभागरूपेति चिन्तायाम्" इति भाष्ये सङ्गतिः । तदर्थविचारस्तु—किमियं सम्पत्तिर्लयरूपा, उताविभागरूपा । किं 'तेजः परस्याम्' इतिवचनस्य कारणापत्तिपरत्वं न्याय्यमुताविभागमात्रपरत्वमिति । इत्थं किल पूर्वपक्षी मन्यते—अत्र देवतायां सम्पत्तिरभिधीयमाना लय एव भवत्विति । तदिदमाह—सम्पत्तिरिति । अत्र हेतुमाह—साहीति । तस्या देवतायास्सर्वकारणत्वाल्लय एव वक्तुं युज्यतइत्यर्थः । तर्हि देवतायां लयश्चेदुत्तरं गमनादिकं न स्यादित्याशङ्क्याह—भूय इति । सैव देवता सर्वशक्तिमत्त्वाद् भूयो देहादिकं स्रष्टुं क्षमा, तद्युतेन देहेन गच्छत्वित्यर्थः । तदिदमयुक्तमित्याह—असदिति । तदेवोपपादयति—

अनुपजत इति । अत्र हि 'वाङ्मनसि सम्पद्यते' इति प्रथमोपात्तस्सम्पद्यत इति शब्दस्सर्वत्रानुषज्यते । अनुपक्तस्यैकस्य सम्पत्तिशब्दस्य पूर्वं संश्लेषमात्रमर्थः इह पुनः परमात्मनि लय इत्यर्थान्तराभिधाने अर्थवैरूप्यं प्रसज्येत । अवैरूप्येण निर्वाहे सम्भवति वैरूप्यं पुनरन्याय्यमेव । किञ्च विनाशो नाम भूतसूक्ष्मैर्विश्लेष एव स्यात् । स च न घटते भूतसूक्ष्मैर्विश्लेषे तदुत्तरं गमनादिव्यापारान्वयायोगात् । ननु सर्वशक्तिः परदेवतैव विनष्टशरीरस्य तस्य शरीरान्तरमारभेतेत्याशङ्क्य कल्पनागौरवात्तदपि न सम्भवतीत्याह—सृष्टीति । विद्यमानं शरीरं परित्यज्य पुनश्शरीरान्तरारम्भकल्पनायां गौरवदोषस्स्यादित्यर्थः । किञ्चार्चिरादिमार्गेण गच्छतो ब्रह्मविदो गमनं भूतसूक्ष्मपरिष्वङ्गमन्तरेण न सम्भवत्येव । धूमादिमार्गेण गच्छतो जीवस्य गमनं भूतसूक्ष्मपरिष्वङ्गेण पञ्चाग्निविद्यादिषु स्पष्टमेवोक्तम् । तद्वदत्रापि भूतसूक्ष्मपरिष्वङ्गेणैव भवति नपुनस्स्वरूपेण । अत एवाणुत्वात्स्वरूपेण गमनमित्यादिकमपास्तं बहुप्रमाणविरुद्धत्वात् ॥ ४९१ ॥

इत्यविभागाधिकरणम् ॥ १४१ ॥

पद०—सम्पत्तिरित्यादि । देवतायामियं सम्पत्तिर्लयो भवतु—परस्यां देवतायामुच्यमाना सम्पत्तिस्साक्षाल्लय एव भवतु । सा–परा देवता । सर्वस्य योनिर्हि—सर्वस्य वस्तुनः कारणं हि । तथा च कारणे कार्यस्य सम्पत्तिर्लय एव, नतु केवलसंश्लेषरूपा । भयः–पुनश्शरीरापेक्षायां सत्याम् । स्रष्टुम्–शरीरमुत्पादयितुम् । क्षमा च–समर्था च । इत्यसत्–इति शङ्कनमसाधु । अनुपजतो वाच्यवैरूप्यदोषात्—'वाङ्मनसि सम्पद्यते' इति वाक्यादनुषज्यमानस्य संश्लेषमात्रपरतया प्रतिवाक्यमन्वीयमानस्य सम्पद्यत इतिशब्दस्यात्र लयपरत्वकल्पने अर्थवैरूप्यरूपदोषापत्तेः । किञ्च–इह भूतसूक्ष्मैर्विश्लेषश्च न घटते–विनाशो हि नाम भूतसूक्ष्मैर्विश्लेष एव स च न घटते भूतसूक्ष्मैर्विश्लेषे तदुत्तरं गमनादिव्यापारायोगात् । सृष्टिक्लृप्तिस्तु गुर्वी–विद्यमानं शरीरं परित्यक्तवतश्शरीरान्तरापेक्षायां तच्छरीरं परदेवतैव सृजतीति शरीरान्तरसृष्टिकल्पना च गौरवयुक्ता । स्वरूपेणैवाणुरूपस्य जीवस्य गमनमस्त्वित्याशङ्कायाश्शङ्काया धूमादिमार्गगमनेऽपि तुल्यत्वात् तत्र प्रमाणबलात् भूतसूक्ष्मपरिष्वक्तस्यैव गमनाङ्गीकारेऽत्रापि-प्रमाणबलादेव भूतसूक्ष्मसम्परिष्वक्तस्यैव गमनमित्यङ्गीकार्यमिति तात्पर्येणाह—प्रोक्तेत्यादि । भविनः—संसरतो जीवस्य । धूमादिमार्गेऽपि—'अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते ते धूममभिसम्भवन्ति' इत्याद्याम्नाते धूमादिमार्गेऽपि । गतिः—गमनम् । तत्परिष्वङ्गनेन प्रोक्ता—भूतसूक्ष्मपरिष्वङ्गनेनैव भवतीति पञ्चाग्निविद्यायामभ्यधायि ॥ ४९१ ॥

इत्यविभागाधिकरणम् ॥ १४१ ॥

---

## तदोकोऽधिकरणम् ॥ १४२ ॥

सूत्रम्—तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतश्शताधिकया ॥ ५०४ ॥

नाडीजालेऽतिसूक्ष्मे न भवति सुशका मुक्तिनाडी विवेक्तुं
तस्मान्मूर्धन्यनाडीगतिरनियमतो मुच्यमानस्य पुंसः ।
वाक्यं गन्तुस्तयोर्ध्वं प्रवददमृततां सम्भवादस्तु मैवं
विद्यासम्प्रीतहार्दप्रसदनमहसा स्वार्हनाडीप्रवेशात् ॥ ४९२ ॥

चिन्ता०—'एवं गत्युपक्रमावधि विद्वदविदुषोस्समानाकार उत्क्रान्तिप्रकार उक्तः । इदानीं विदुषो विशेष उच्यते' इति भाष्ये सङ्गतिरुक्ता । तदर्थविचारस्तु—किं विदुषो मूर्धन्यनाड्यैव गमननियमस्सम्भवति नेति । किं 'तयोर्ध्वमायन्' इति यादृच्छिकगमनानुवादः, उत नाडीविशेषेण गमननियमविधिः । किं नाड्यो दुर्विवेचा उत सुविवेचा इति । अत्र पूर्वपक्षमनुवदति—नाडीजाल इति । अतिसूक्ष्मे नाडीजाले मुक्तिनाडी देहादुत्क्रान्तेन गच्छता पुरुषेण विवेक्तुं सुशका न भवति । तेन 'तयोर्ध्वमायन्' इत्यादिवाक्यं कादाचित्कसम्भावितार्थविषयम्, नपुनर्नियतार्थविषयमिति । तदिदमाह—तस्मादिति । मूर्धन्यनाडीगतिर्मुच्यमानस्य पुंसः कदाचिदनियमतो भवति । कदाचिदमूर्धन्यनाड्यापि मुच्यमानस्य पुंसो गमनं स्यादित्यर्थः । तेन तयोर्ध्वं गन्तुरमृततां प्रवदत् 'तयोर्ध्वमायन्' इत्यादि वाक्यं सम्भवादेवास्तु । तमिमं पूर्वपक्षं दूषयति—मैवमिति । तत्र हेतुमाह—विद्येति । ब्रह्मविद्यासम्प्रीतस्य प्रसन्नस्य हार्दस्य प्रभया स्वार्हनाडीपरिज्ञानं जायते । तेन स्वकीयां नाडीं प्रविश्य स्वाभिलषितपुरुषार्थाय गच्छतीत्यर्थः ॥ ४९२ ॥

पद०—नाडीजाल इत्यादि । अतिसूक्ष्मे—अतिसौक्ष्म्येणातीन्द्रियवेतॄणामपीयं सा इयं सेति परिज्ञानानर्हे । नाडीजाले—नाडीसमूहे । मुक्तिनाडी-मोक्षमार्गभूता मूर्धन्यनाडी । विवेक्तुं सुशका न भवति—इयं मूर्धन्यनाडीति पृथक्कृत्यावगन्तुं शक्या न भवति । तस्मात्—कारणात् । मुच्यमानस्य पुंसः—मोक्षं प्राप्नुवतः पुरुषस्य । मूर्धन्यनाडीगतिः—मूर्धन्यनाड्या गमनम् । अनियमतः—नियमेन न भवति । तया—नाड्या । ऊर्ध्वं गन्तुः—ऊर्ध्वलोकं गच्छतः पुरुषस्य । अमृततां प्रवदत्—मुक्तिं प्रतिपादयत् । वाक्यम्—'तयोर्ध्वमायन्नमृतत्वमेति' इत्यादि वाक्यम् । सम्भवादस्तु—कदा-

चित्तयापि नाड्या गमनसम्भवाभिप्रायेणास्तु । मैवम्—एवं मा शङ्किष्ठाः । विद्यासम्प्रीतहार्दप्रसदनमह-सा स्वार्हनाडीप्रवेशात्–विद्यया उपासनेन सम्प्रीतस्य सन्तुष्टस्य हार्दस्य परमात्मनः प्रसदनं प्रसाद एव महः प्रकाशकं तेजः तेन स्वगमनयोग्यमूर्धन्यनाडीप्रवेशसम्भवात् । मैवमिति सम्बन्धः ॥ ४९२ ॥

स्वाधीनो हार्दसंज्ञस्स्वयमविकलया सम्पदा साकमेकः
स्थित्वा हृत्पद्ममध्ये स्थगितनिजतनुस्सप्तलोकीगृहस्थः ।
नाडीचक्रे सुषुम्नां निखिलधृतिकरीं नाभिमूर्धान्तरूपां
भित्त्वा तन्मध्यरन्ध्रप्रहितमिषुमिवोत्क्षिप्य नेता मुमुक्षुम् ॥ ४९३ ॥

इति तदोकोऽधिकरणम् ॥ १४२ ॥

चिन्ता०—भगवत्प्रसादलब्धपरिज्ञानस्य भगवत्प्रेरणेनैव मूर्धन्यनाड्या ब्रह्मलोकपर्यन्तमिषुवत्सह-सैव गमनमाह—स्वाधीन इति । स्वतन्त्रो हार्दसंज्ञो भगवान् स्वयमविकलया सम्पदा साकं सम्पदे-ति सर्वैश्वर्यप्रदायिनी सहधर्मचारिणी लक्ष्मीरभिधीयते 'लक्ष्म्या सह हृषीकेशः' इति हि वदन्ति । अथवा भगवदैश्वर्यमेव वाभिधीयते । एकशब्दः प्राधान्यवाची । हृत्पद्ममध्ये स्थित्वा स्थगित-निजतनुः—अभक्तानामप्रकाशितनिजतनुः । अस्थगितनिजतनुरिति वा—भक्तानां प्रकाशितनिजतनुः 'अतिदूरमभक्तानां भक्तानां पुरतः स्थितम्' इति हि वदन्ति । सप्तलोकीगृहस्थ इति वचनं सर्वेषां पितृत्वेन संरक्षकत्वं प्रदर्शयति । अयं खलु नाडीचक्रे बह्वीषु नाडीषु विद्यमानास्वपि निखिलधृति-करीं निखिलसन्तोषकरीं नाभिमूर्धान्तरूपां सुषुम्नां नाडीं भित्त्वा अनावृतमुखीं कृत्वा तन्मध्यरन्ध्रप्र-हितं जीवं धानुष्कप्रयुक्तमिषुमिवोत्क्षिप्य मुमुक्षुं परमपदपर्यन्तं नेतेत्यर्थः ॥ ४९३ ॥

इति तदोकोऽधिकरणम् ॥ १४२ ॥

पद०—स्वाधीनं इत्यादि । स्वाधीनः–स्वतन्त्रः । अविकलया सम्पदा साकम्–स्वाभि-मतनित्यनिरवद्यानुरूपस्वरूपरूपगुणविभवैश्वर्यशीलाद्यनवधिकातिशयासङ्ख्येयकल्याणगुणया लक्ष्म्या सहेत्यर्थः । यद्वा निरतिशयैश्वर्येण युक्त इत्यर्थः । एकः–प्रधानभूतः । हृत्पद्ममध्ये स्थित्वा—हृदयपुण्डरीकमध्ये। अस्मदनुजिघृक्षया कालप्रतीक्षया अवस्थितः । स्थगितनिजतनुः–अभक्तानामप्रकाशितनिजविग्रहः । यद्वा–अस्थगितनिजतनुरिति च्छेदः । भक्तानां प्रकाशितनिजविग्रह इत्यर्थः । सप्तलोकीगृहस्थः–यथा गृहस्थस्स्वगृहमविकलं परिपालयति तथा सप्तलोकोपलक्षिताण्डान्तर्वर्तिनिखिलचेतनसंरक्षणजागरूक इत्यर्थः । हार्दसंज्ञः—हृदयावस्थानात् हार्दसंज्ञितो भगवान् । स्वयम्—साक्षादेव । नाडीचक्रे-

स्थितामिति शेषः । निखिलधृतिकरीम्—निखिलसन्तोषकरीमिति चिन्तामणिः । प्रधाननाडीत्वेन सर्व-नाडीधारणकरीमित्यर्थः । नाभिमूर्धान्तरूपाम्—नाभिप्रभृतिमूर्धपर्यन्तमवस्थिताम् । नाभिमूर्धानौ अन्तौ आद्यन्तावधिभूतौ यस्य तादृशं रूपं स्वरूपं यस्यास्ताम् । सुषुम्नाम्—सुषुम्नाभिधानां नाडीम् । भित्त्वा—अनावृतमुखीं कृत्वा । तन्मध्यरन्ध्रमहितम्—तन्मध्यवर्तिरन्ध्रे स्वेनैव प्रवेशितम् । मुमुक्षुम्—चेतनम् । इषुमिवोत्क्षिप्य—धानुष्कप्रयुक्तं बाणमिवोत्क्षिप्य । नेता—परमपदं नेता ॥ ४९३ ॥

इति तदोकोऽधिकरणम् ॥ १४२ ॥

---

## रश्म्यनुसाराधिकरणम् ॥ १४३ ॥

सूत्रम्—रश्म्यनुसारी ॥ ५०५ ॥

**एतैरेवेतिवाक्ये दिनकरकिरणालम्बनेनोर्ध्वयानं**
**यत्प्रोक्तं योगिनस्तद्दिनमृतिनियतं निश्ययुक्त्येति चेन्न ।**
**अह्नि च्छायासु रात्रिष्वपि हि लघुतरा रश्मयस्सन्ति लिङ्गात्**
**तापो वर्षादिरात्रौ न यदि हिमदिनन्यायतो नेयमेतत्** ॥ ४९४ ॥

इति रश्म्यनुसाराधिकरणम् ॥ १४३ ॥

चिन्ता०—विदुषो हृदयाच्छताधिकया मूर्धन्यनाड्या निर्गतस्यादित्यरश्मीननुसृत्य गमनं चिन्त्यत इति सङ्गतिः । तदर्थविचारस्तु—किं रश्म्यनुसारेण गमननियमो विदुषस्सम्भवति नेति । किं 'रश्मिभि-रूर्ध्वमाक्रमते' इति वाक्यं पाक्षिकगमनानुवादकम्, उत नियमविधिपरम् । किं निशि मृतस्य रश्म्यनु-सारेण गमनं सम्भवति नेति । किं निशि रश्मयस्सम्भवन्ति नेति । अत्र पूर्वपक्षमनुवदति—एतैरिति । 'एतैरेव रश्मिभिरूर्ध्वमाक्रमते' इत्यस्मिन्वाक्ये योगिनो दिनकरकिरणालम्बनेन यदूर्ध्वयानमुक्तं तद्दिनमृतिनियतमिति । तत्र हेतुमाह—निश्ययुक्त्येति । निशायां सूर्यकिरणस्यासम्भवेनायुक्तत्वा-दित्यर्थः । तदेतत्प्रतिक्षिपति—नेति । तदेवोपपादयति—अह्नीति । अह्नि यथा छायायामौष्ण्यलिङ्गाद्दिन-करकिरणसद्भावः, एवं निश्यप्यौष्ण्यादेव लिङ्गाद्दिनकरकिरणसद्भावोऽस्त्येव । ननु किमर्थं स्फुटं नोपलभ्यत इत्याशङ्क्याह—लघुतरा इति । तत्राप्यह्निच्छायैव दृष्टान्तः । ननु वर्षादिरात्रौ तापो नास्ति कथं

तत्र दिनकरकिरणसद्भावः तत्राह—हिमदिनन्यायत इति । हेमन्तकाले दिवसेऽपि तापो नास्ति किमेतावता सूर्यकिरणसद्भावो न स्यादित्यर्थः ॥ ४९४ ॥

इति रश्म्यनुसाराधिकरणम् ॥ १४३ ॥

पद०—एतैरेवेत्यादि । योगिनः—मुमुक्षोः । एतैरेवेति वाक्ये—'एतैरेव रश्मिभिरूर्ध्वमाक्रमते' इति वाक्ये । दिनकरकिरणालम्बनेन—सूर्यकिरणावलम्बनेन । यत् ऊर्ध्वयानं प्रोक्तम्—यदूर्ध्वगमनं प्रतिपादितम् । तत्–सूर्यकिरणावलम्बनेनोर्ध्वगमनम् । निशि अयुक्त्या—रात्रावसम्भवात् । दिनमृतिनियतम्—दिवामरणविषय एव व्यवस्थितम् । इति चेन्न—एवं क्षुधते चेत् तन्न सम्भवति । अह्नि–दिवापि । छायासु–गाढतमवृक्षगुल्मादिच्छायायुक्तदेशेषु । रात्रिष्वाप—रात्रिषु सर्वदेशेष्वपि । लिङ्गाद्धि–औष्ण्यादेव लिङ्गात् । लघुतराः–स्फुटानुपलम्भात् लघुतराः सूक्ष्मतराः । रश्मयः–सूर्यकिरणाः । सन्ति—सन्तीत्यवगम्यते । वर्षादिरात्रौ तापो न यदि—वर्षाशरद्रात्रिषु औष्ण्यं नोपलभ्यते यदि । एतत्–औष्ण्यानुपलम्भनम् । हिमदिनन्यायतः—हिमयुक्तदिने दिवापि तापानुपलम्भो यथा हिमाभिभवेनैव नतु सूर्यकिरणाभावेन एवमेव सूक्ष्महिमवर्षाम्बुशीकराभिभवेनैव वर्षादिरात्रिष्वपि औष्ण्यानुपलम्भ-इति । नेयम्—आलोच्य समाधेयमित्यर्थः ॥ ४९४ ॥

इति रश्म्यनुसाराधिकरणम् ॥ १४३ ॥

---

## निशाधिकरणम् ॥ १४४ ॥

सूत्रम्—निशि नेति चेन्न सम्बन्धस्य यावद्देहभावित्वाद्दर्शयति च ॥ ५०६ ॥

सर्वेषामप्रशस्तं रजनिमरणमित्यह्नि योगी म्रियेत
प्रेयाद्यद्येष रात्रौ न चरममरणं तद्भवेदित्ययुक्तम् ।
कर्म प्रारब्धकार्यं ह्यनियतसमयं क्षीयते तावदेवे-
त्युक्तश्चास्मिन्विलम्बोऽहनि निशि च परं विद्यया सोऽश्नुतेऽतः॥४९५॥

चिन्ता०—निशि मृतस्य सूर्यकिरणसद्भावोऽस्तु नाम अथाप्यात्मविदां निशि मरणस्य शास्त्रेणैव प्रतिषिद्धत्वात्तेषां निशि मरणमेव न सम्भवतीति शङ्कया सङ्गतिः । तदर्थविचारस्तु—किं निशि मृतस्य विदुषो ब्रह्मप्राप्तिस्सम्भवति नेति । किं निशि मरणस्याधोगतिहेतुत्वं निशि मृतस्य ब्रह्मप्राप्त्यभावं ज्ञापयति

नेति । निशिमरणनिन्दावचनं किं विद्वदविद्वत्साधारणमुताविद्वद्विषयमिति । अत्र पूर्वपक्षमाह—सर्वेषामिति । विदुषामविदुषाञ्च सर्वेषां रजनिमरणमप्रशस्तमिति अह्येव योगी म्रियेत एष योगी यदि रात्रौ प्रेयात् म्रियेत तन्मरणं चरममरणमेव न भवेदिति । तमिमं पूर्वपक्षं प्रतिक्षिपति—अयुक्तमिति । प्रतिक्षेपमेव विवृणोति—कर्मेति । अयमर्थः—प्रारब्धकर्मावसाने मोक्ष इति हि निर्णीतम्, तच्च प्रारब्धावसानमनियतसमयमेव निशि वा दिवा वा जायते । अस्मिन्नर्थे 'तस्य तावदेव चिरम्' इति श्रुतिरेव प्रमाणमित्याह—तावदिति । अयमर्थः—कर्मावसानपर्यन्तमेव मोक्षविलम्ब उक्तः । तच्च कर्मावसानं निशि वा दिवा वा स्यादिति । एतदेव निगमयति–अहनीति । अतः कारणादहनि निशि वा कर्मावसानं ब्रह्मवित् प्राप्नोतीति ॥ ४९५ ॥

पद०—सर्वेषामित्यादि । रजनिमरणम्—रात्रिमरणम् । सर्वेषाम्—विदुषामविदुषाञ्च । अप्रशस्तम्—निन्दितम् । इति—हेतोः । योगी—मुमुक्षुरुपासकः । अह्नि म्रियेत—अह्न्येव प्रमीयेत । एषः—मुमुक्षुरुपासकः । रात्रौ प्रेयाद्यदि—रात्रौ म्रियेत चेत् । तत्—रात्रौ मरणम् । चरममरणं न भवेत्—मोक्षार्थमरणं न भवेत् । इत्ययुक्तम्—इति शङ्कनमयुक्तम् । प्रारब्धकार्यं कर्म अनियतसमयं हि क्षीयते—यत्फलभोगेन विद्यावतोऽपि मुक्तिविलम्बः तत् फलप्रदानप्रवृत्तं कर्म अह्नि रात्रावित्यनिर्णेयकालं हि क्षयं प्राप्नोति । अस्मिन्—विषये । तावदेवेत्युक्तो विलम्बश्च—'तस्य तावदेव चिरम्' इति श्रुत्या अनियतप्रारब्धकर्मावसानमात्रपर्यन्ततयोक्तो विलम्बश्च प्रमाणम् । अतः—कारणात् । अहनि निशि च–कालनियमं विना अहनीव रात्रावपि । सः–मुमुक्षुरुपासकः । विद्यया—प्रायणान्तमावृत्त्या निष्पन्नया ब्रह्मविद्यया साधनभूतया । परम्—स्वरूपरूपगुणविभूतिभिस्सर्वोत्कृष्टं पुरुषोत्तमम् । अश्नुते—प्राप्नोति ॥ ४९५ ॥

यत्रैकस्यापवर्गः प्रतिनियततया गण्यते जातकज्ञैः
तस्यादन्त्यं शरीरं न तु भवति ततोऽप्यन्ययोगव्युदासः ।
न ह्यत्राप्यन्तकाले दिनरजनिभिदा देशभेदादि चैवं
शव्यं कुर्वन्ति चास्मिन् यदुचयदुचनेत्यादि चैवं विभाव्यम् ॥ ४९६ ॥

इति निशाधिकरणम् ॥ १४४ ॥

चिन्ता०—चरमशरीराभिव्यञ्जकप्रमाणपूर्वकं चरमशरीरमुक्त्वा तत्रापि दिनरजनिदेशकालनिमित्तादिनियमाभावं देहवियोगस्य दर्शयन् शव्यकर्मानुष्ठानेऽननुष्ठानेऽप्यध्यात्मविदामर्चिरादिमार्गेण गत्वा परमपुरुष-

प्राप्तिमप्यावेदयति—यत्रेति । यत्र जातकज्ञैः पुरुषैर्यस्मिन् शरीरे कस्यचिदधिकारिणोऽपवर्गः प्रतिनियततया गण्यते तदन्त्यं शरीरं स्यात् । अथापि तावन्मात्रेण शरीरान्तरं नास्तीति निर्णेतुं न शक्यते मध्ये पापविशेषसम्भवेन जन्मान्तरस्यापि सम्भवादित्याह—न त्विति । अत्र दिनरजनिभिदावद्देशादिभेदो नास्तीति दर्शयति– न हीत्यादिना । हि शब्देन दिनरजनिभिदाभावस्य पूर्वोक्तस्य दृष्टान्तत्वेनोपादानमिदमिति दर्शयति । देशभेदादीति—अस्मिन्देशे मरणमनेन निमित्तेन मरणमित्यादि च नास्ति यथा दिनरजनिभिदा नास्ति तद्वदित्यर्थः । एवं शवसम्बन्धिकर्मानुष्ठाननियमोऽप्यध्यात्मविदामपवर्गप्राप्तावनपेक्षित इत्याह—शव्यमिति । 'यदु चास्मिन् शव्यं कुर्वन्ति यदु च न तेऽर्चिषमेवाभिसम्भवन्ति' इत्यादिकं वाक्यं श्रूयते । एवं विभाव्यम्–एवमध्यात्मविद्विषयासाधारणवाक्यमनुसन्धेयमित्यर्थः । ननु यद्यध्यात्मविदश्शव्यं कर्म नियमेनाकर्तव्यं तर्हि तन्मरणे कदाचित् पुत्राश्शिष्याश्च तन्मरणानुबन्धि कर्मजातं न कुर्युः तथा च अलेपकसिद्धान्तप्रसङ्गः—न प्रसङ्गः । तत्पुत्राणामेव वैदिकानां तदुद्देशेन कृत्स्नकर्मकलापस्यानुष्ठेयत्वात् । तदननुष्ठाने तेषां विहितानुष्ठानपरित्यागेन प्रत्यवायस्स्यादित्यवश्यकर्तव्यमेव पुत्रादीनां पित्राद्युद्देशेन सर्वमपि कर्मजातम् अतो नालेपकमतप्रसङ्गः । यथा रामकृष्णादिविषये कुशलवाद्यनुष्ठितं कर्म स्वकुशलार्थमेव एवं मुक्तविषये पुत्राद्यनुष्ठितं कर्म स्वाभिवृद्धिहेतुरिति निरवद्यम् ॥ ४९६ ॥

इति निशाधिकरणम् ॥ १४४ ॥

पद०—यत्रैकस्येत्यादि । यत्र—शरीरे । एकस्य—कस्यचिच्चेतनस्य । जातकज्ञैः—जातकस्वरूपवेदिभिर्ज्यौतिषिकैः । अपवर्गः—मोक्षः । प्रतिनियततया—अवश्यम्भावितया । गण्यते—व्ययस्थानतद्गुणादिचिन्तनेन निश्चीयते । तच्छरीरं अन्त्यं स्यात्—चरमशरीरं स्यात् । ततोऽपि—तावतापि । अन्ययोगव्युदासस्तु न भवति—शरीरान्तरसम्बन्धनिषेधस्तु न सम्भवति । मध्ये मोक्षप्रतिबन्धककर्मानुष्ठाने शरीरान्तरसम्बन्धस्यापि सम्भवादिति भावः । अत्रापि—अस्मिन् चरमशरीरेऽपि । अन्तकाले—मरणकाले । दिनरजनिभिदा—दिवारात्र्योरह्वा मोक्षो रात्र्या तु न मोक्ष इति मोक्षसाधनत्वतदभावाभ्यां भेदः । नहि–नास्ति खलु । एवम्—तन्न्यायेनैव । देशभेदादि च—प्रशस्तकाश्यादिदेशे मरण एव मुक्तिः कुत्सितग्रामादिदेशे मरणे न मुक्तिः, एवमतिसारादिनैव मरणे मुक्तिः नतु विद्युदशनिसलिलादिभिः रोगान्तरैश्च मरणे मुक्तिरिति देशनिमित्तभेदादिकमपि नैव । अस्मिंश्च—मुमुक्षुविषये । यदुच शव्यं कुर्वन्ति यदुच न—शवसम्बन्धि संस्कारादिकं कर्मास्य पुत्रादयो यदि च कुर्वन्ति यदि च ते तन्न कुर्वन्ति । इत्यादि च–उक्तार्थप्रतिपादिकया 'अथ यदुचास्मिन् शव्यं कुर्वन्ति यदु च न तेऽर्चिषमेवाभिसम्भवन्ति' इत्यादिकया श्रुत्या प्रतिपन्नं शवसंस्कारादिकरणे अकरणे च ब्रह्मविदो मुक्तिर्लभ्यत एवेत्यादिकं ब्रह्मविद्भिर्भवद्य । एवम्–देशकालाद्यनियमन्यायेन । विभाव्यम्–परिचिन्तनीयमित्यर्थः ॥ १९६ ॥

इति निशाधिकरणम् ॥ १४४ ॥

## दक्षिणायनाधिकरणम् ॥ १४५ ॥

सूत्रम्—अतश्चायनेऽपि दक्षिणे ॥ ५०७ ॥

देहं योगीश्वरोऽपि त्यजति यदि रवेर्दक्षिणावृत्तिकाले
विन्देत्सायुज्यमिन्दोरिह भवति पुनस्तच्छ्रुतेस्तत्स्मृतेश्च ।
मैवं पूर्वोक्तनीतिस्त्विह नहि विहताथास्य सायुज्यमिन्दौ
विश्रान्त्यै सूर्यनीत्या जगदुपकृतये भीष्मकालप्रतीक्षा ॥ ४९७ ॥

चिन्ता०—विदुषो मरणे दिवारजनिविभागो नास्तीत्युक्तं येन हेतुना तेनैव हेतुना दक्षिणायनोत्तरायणविभागोऽपि नास्तीत्युच्यत इत्यातिदेशिकी सङ्गतिः । तदर्थविचारस्तु—किं दक्षिणायनमृतस्य विदुषो ब्रह्मप्राप्तिस्सम्भवति नेति । किं 'अथ यो दक्षिणे प्रमीयते' इति दक्षिणायनमृतस्य चन्द्रप्राप्तिवचनं ब्रह्मप्राप्त्यभावं गमयति नेति । चन्द्रं प्राप्तानामावृत्तिवचनं किं विद्वदविद्वत्साधारणमुताविद्वद्विषयमिति । किं भीष्मादीनां कालप्रतीक्षायां कालविधानस्मरणसहकृतसामान्यश्रुत्यनुरोधेन साधारणत्वसमाश्रयणं न्याय्यम् उत 'ब्रह्मणो महिमानम्' इति वाक्यशेषानुरोधेनाविद्वद्विषयत्वसमाश्रयणं न्याय्यमिति । अत्र चन्द्रं प्राप्तस्य पुनरावृत्तिरेव नियता भवतीति पूर्वपक्षमनुवदति–देहमिति । योगीश्वरोऽपि दक्षिणावृत्तिकाले देहं त्यजति यदि तदा इन्दोस्सायुज्यं विन्देत् इन्दुसायुज्यानन्तरमिह पुनर्भवति । कुत इत्यत्राह—तच्छ्रुतेरिति । चन्द्रं प्राप्तानां पुनरावृत्तिश्रुतेः । तथा तत्स्मृतेश्च–'अथैतमेवाध्वानं पुनर्निवर्तन्ते' इति पुनरावृत्तिश्रुतिः । 'तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते' इति स्मृतिः । तदिदं निराकरोति—मैवमिति । तदेवोपपादयति—पूर्वोक्तनीतिरिति । प्रारब्धकर्मावसाने सर्वथा मोक्षो नियत एव । चन्द्रं वा प्राप्नोतु सूर्यं वेति साधारणीयं नीतिः । तर्हि चन्द्रं किमर्थं प्राप्नोति ब्रह्मविदिति चेत् सूर्यं वा किमर्थं प्राप्नोति । विश्रान्त्या इति चेत्तुल्यमित्याह—विश्रान्त्या इति । तर्हि मुमुक्षोर्भीष्मस्य किमर्थमुत्तरायणप्रेक्षणमित्याशङ्क्यान्यथासिद्ध्या परिहरति—जगदिति । अयमर्थः—भीष्मो हि धर्मप्रवर्तकत्वेन विश्वोपकारकः । तेन सुकृतिनामुत्तरायणे मरणस्य प्राशस्त्यं दर्शयितुमुत्तरायणं प्रेक्षितवान् । यथा हि भगवाल्लोँकसङ्ग्रहार्थं सर्वं कर्माचरति तद्वद्भीष्मस्याप्युत्तरायणप्रतीक्षणं लोकसंग्रहार्थमिति न विरोधः ॥ ४९७ ॥

पद०—देहमित्यादि । योगीश्वरोऽपि—ब्रह्मविद्यानिष्ठतया योगिनां श्रेष्ठोऽपि मुमुक्षुः । रवेः—सूर्यस्य । दक्षिणावृत्तिकाले—दक्षिणदिगावर्तनसमये दक्षिणायन इत्यर्थः । देहं यदि त्यजति—यदि देहं विसृजति म्रियते चेत् । तर्हि इन्दोस्सायुज्यं विन्देत्—चन्द्रसायुज्यं प्राप्नुयात् । 'अथ यो दक्षिणे प्रमीयते पितृणामेव महिमानं गत्वा चन्द्रमसस्सायुज्यं गच्छति' इति श्रुतेरिति भावः । इह पुनर्भवति—अस्मिन् लोके पुनर्जायते । कुत इति चेत्—तच्छ्रुतेस्तत्स्मृतेश्च—'अथैतमेवाध्वानं पुनर्निवर्तन्ते' इति श्रुतेः 'तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते' इति स्मृतेश्च । मैवम्—एवं मा शङ्किष्ठाः । इह तु पूर्वोक्तनीतिर्न विहता हि—चन्द्रप्राप्तिविषयेऽपि प्रारब्धकर्मावसाने मोक्षो नियत एवेत्युक्तो न्यायो न निरुद्धो हि । तर्हि चन्द्रप्राप्तिः किमर्थेति चेत् अथ अस्य इन्दौ सायुज्यं सूर्यनीत्या विश्रान्त्यै—प्रारब्धकर्मावसाने मोक्षनैयत्ये निश्चिते सत्यनन्तरं मुमुक्षोश्चन्द्रसायुज्यं सूर्यनीत्या उत्तरायणमृतस्य सूर्यसायुज्यन्यायेन विश्रमार्थमिति निश्चीयते । भीष्मकालप्रतीक्षा—भीष्मस्योत्तरायणप्राप्तिपर्यन्तप्रतीक्षणं तु । जगदुपकृतये—सुकृतिनामुत्तरायणमरणं प्रशस्तमित्येतदर्थप्रदर्शनेन लोकोपकारार्थम्, नतु दक्षिणायनमृतानां मुक्त्यभावप्रदर्शनार्थमित्यर्थः ॥ ४९७ ॥

किञ्च प्रारब्धकर्मप्रतिनियतमिदं जाह्नवीसम्भवस्य
स्वेच्छा येनैवमासीत् स च वसुरभवन्नैष साक्षाद्विमुक्तः ।
तस्माद्विन्देत मुक्तिं नरपितृदिविषद्रात्रिकालेऽपि योगी
स्यातां प्राशस्त्यनिन्दे तदितरविषये गीतयोक्तौ तु मार्गौ ॥ ४९८ ॥

इति दक्षिणायनाधिकरणम् ॥ १४५ ॥

चिन्ता०—अत्र प्रकारान्तरेण परिहारमाह—किञ्चेति । अयमर्थः—लोके ह्येकपुरुषप्रतिनियतधर्मदर्शनेन सर्वेषामपि स एवाचार इति वक्तुं न शक्यते यथा पाण्डवानां पञ्चानामप्येका पत्नी कानीनः कर्णः कानीनो व्यासः, तेन तत्रतत्र नियतो धर्मस्तत्रैव वर्तते । एवं भीष्मस्योत्तरायणप्रेक्षणमस्तीति सर्वेषां ब्रह्मविदामियमेव नीतिरिति कल्पयितुं न शक्यते । अयमत्र शब्दान्वयः—जाह्नवीसम्भवस्य प्रारब्धकर्मप्रतिनियतं येन कर्मविशेषेण युद्धं युद्धमरणमुत्तरायणकालप्रतीक्षणमित्यादि स्वेच्छैवमासीत् । एतन्न सर्वेषां ब्रह्मविदां साधारणम् । स च भीष्मो वसुरभवत् न पुनस्साक्षाद्विमुक्त इत्याह—स चेति । तेन मुमुक्षोः कालविशेषप्रतीक्षेत्यस्यार्थस्य नायं दृष्टान्तः । उक्तमर्थं निगमयति—तस्मादिति । नराणां रात्रिर्निशा, पितॄणां रात्रिः कृष्णपक्षः देवानां रात्रिर्दक्षिणायनम् एतेष्वपि कालेषु योगी देहं

त्यक्त्वा मुक्तिं विन्देत। तर्हि पुराणादिषूत्तरायणस्य प्राशस्त्यं दक्षिणायनस्य च निन्दा कथं क्रियत इत्याशङ्क्याह—स्यातामिति। तदितरविषये अध्यात्मविद्व्यतिरिक्तविषये इत्यर्थः। किञ्च भगवद्गीतायाम-हरादिशब्देन रात्र्यादिशब्देन चोक्तौ मार्गाविव न पुनः कालविशेषौ तेन ब्रह्मविदामहरादिनियमो नास्तीत्यर्थः॥ ४९८॥

इति दक्षिणायनाधिकरणम्॥ १४५॥

पद०—किञ्चेत्यादि। किञ्च—युक्त्यन्तरमप्यस्तीत्यर्थः। जाह्नवीसम्भवस्य—भीष्मस्य। इदम्—युद्धं युद्धमरणमुत्तरायणप्रतीक्षणमित्यादिकम्। प्रारब्धकर्मप्रतिनियतम्—भोगैकनाश्यतथाविधकर्मविशेषेण तस्मिन्नेव व्यवस्थितम्। येन—कर्मणा। स्वेच्छा एवमासीत्—भीष्मस्येच्छा उत्तरायणप्रतीक्षणविष-यिण्यासीत्। यद्वा—येन—प्रारब्धकर्मणा। जाह्नवीसम्भवस्य स्वेच्छा एवमासीत्। तन्मूलभूतमिदं प्रारब्धकर्म प्रतिनियतम्—तस्मिन्नेव व्यवस्थितम्। कर्म प्रतिनियतमिति भिन्ने पदे। अन्यत्रादर्शनात् पाण्डवानां दारसाधारण्यहेतुकर्मविशेषवदिदमपि भीष्मस्य प्रतिनियतं प्रारब्धकर्मैव तत एव न तस्याचारः प्रमाणमन्येषामिति भावः। स च—भीष्मश्च। वसुरभवत्—वसुष्वष्टस्वेकतमत्वं प्राप्तवानित्यर्थः। तथा भारतादिषु प्रसिद्धत्वादिति भावः। एष साक्षाद्विमुक्तो न—अत एव एष भीष्मः साक्षान्मुक्तो न। तेन मुमुक्षोः कालविशेषप्रतीक्षा कर्तव्येत्यस्य नायं दृष्टान्तइत्यर्थः। तस्मात्—उक्तोपपादनेन मुमुक्षूणां कालविशेषनियमानपेक्षमुक्तिकत्वात्। योगी—उपासकः। नरपितृदिविषद्रात्रिकालेऽपि—नराणां रात्रिर्निशा पितॄणां रात्रिः कृष्णपक्षो देवानां रात्रिर्दक्षिणायनं तेष्वपि। मुक्तिं विन्देत—मोक्षं लभेतैव। प्राशस्त्य-निन्दे तदितरविषये स्याताम्—'दिवा च शुक्लपक्षश्च उत्तरायणमेव च। मुमूर्षतां प्रशस्तानि विपरीतं तु गर्हितम्॥' इत्यादिभिरुत्तरायणादिप्रशंसनदक्षिणायनादिनिन्दने क्रियमाणे अध्यात्मविद्भिन्नविषये भवे-ताम्। गीतयोक्तौ तु मार्गौ—'अग्निर्ज्योतिरहश्शुक्लः षण्मासा उत्तरायणम्। तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः॥ धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम्। तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते॥' इति गीतायामुक्तौ तु द्विविधौ पक्षौ मार्गौ देवयानपितृयाणमार्गाविव तथोच्येते ननु मुमुक्षोः कालविशेष उच्यत इत्यर्थः॥ ४९८॥

इति दक्षिणायनाधिकरणम्॥ १४५॥

---

चतुर्थाध्यायद्वितीयपादाधिकरणप्रधानार्थनिरूपणम् ।

सम्पद्येतान्यदक्षं मनसि तदपि तत्संयुतं प्राणवायौ
सोऽध्यक्षे तैस्समेतस्स च तदखिलवान् भूतवर्गे तु सूक्ष्मे ।
उत्क्रान्तिस्स्यात् समाना युतिरथ च परे सा च संश्लेषमात्रं
निर्गच्छेद् ब्रह्मनाड्या घृणिभिरथ निशादेवरात्र्योश्च मोक्षी ॥ ४९९ ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु अधिकरणसारावल्यां
चतुर्थस्याध्यायस्य द्वितीयः पादः

चिन्ता०—उक्तानामधिकरणानां प्रधानार्थान्सङ्कलय्य दर्शयति—सम्पद्येतेति । वागादिक-मन्यदक्षं मनसि सम्पद्येतेत्याद्याधिकरणार्थः । एवमुत्तरेष्वप्यधिकरणेष्वर्थान् क्रमेणाचष्टे—वागादीन्द्रिय-संयुतं तदपि मनः प्राणे सम्पद्येत । स च प्राणवायुः तैस्समेतोऽध्यक्षे जीवे । स च जीवस्तद-खिलवान् पूर्वोक्तसर्वसंयुक्तस्सूक्ष्मे भूतवर्गे । उत्क्रान्तिस्सेयं ब्रह्मविदब्रह्मविदोस्समाना । अनन्तरं युतिस्संयोगः । परे ब्रह्मणि सम्पत्तिः । सा च परमात्मनि संयोगमात्रम् । ब्रह्मनाड्या निर्गमनम् । घृणिभिस्सूर्यरश्मिभिर्गमनम् । अनन्तरं निशायां देवरात्रौ दक्षिणायनेऽपि मोक्षी निर्गच्छेदित्यर्थः ॥ ४९९ ॥

इति निखिलतार्किकचूडामणिना सर्वतन्त्रस्वतन्त्रेण
श्रीमद्वरदार्यापरनाम्ना कुमारवेदान्ताचार्येण
विरचिते शारीरकाधिकरणचिन्तामणौ
चतुर्थस्याध्यायस्य द्वितीयः पादः

पद०—सम्पद्येतेत्यादि । अन्यत्—मनोव्यतिरिक्तम् । अक्षम्—इन्द्रियम् । जात्येकवचनम् । कर्मज्ञानेन्द्रियदशकमित्यर्थः । मनसि सम्पद्येत—मनसि संश्लेषविशेषरूपं लयं प्रतिपद्येत । अयं 'वाङ्मनसि दर्शनात्' इत्यादिप्रथमाधिकरणार्थः । तत्संयुतम्—वागादीन्द्रियदशकसंयुतम् । तदपि—मनश्च । प्राणवायौ—प्राणाख्ये वायुविशेषे । सम्पद्येतेति सर्वत्रानुषङ्गः । अयं 'तन्मनः प्राण उत्तरात्' इत्यस्य द्वितीयस्याधिकरणस्यार्थः । तैः—वागादीन्द्रियमनोभिः । समेतः—संयुक्तः । सः—प्राणः । अध्यक्षे—करणकलेबराधिष्ठातरि जीवे सम्पद्येत । अयं 'सोऽध्यक्षे तदुपगमादिभ्यः' इत्यस्य तृतीयस्या-

धिकरणस्यार्थः। तदखिलवान्—एकादशेन्द्रियप्राणसंयुक्तः। स च—जीवात्मा च। सूक्ष्मे भूतवर्गे तु—स्थूलदेहादुद्धृते सूक्ष्मे पृथिव्यादिभूतवर्गे सम्पद्यते। अयं 'भूतेषु तच्छ्रुतेः' इत्यस्य चतुर्थस्याधिकरणस्यार्थः। उत्क्रान्तिः—इयमुत्क्रान्तिः। समाना स्यात्—ब्रह्मविदोऽब्रह्मविदश्च तुल्या भवेत्। अयं 'समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य' इत्यस्य पञ्चमस्याधिकरणस्यार्थः। अथ च—तदुपरितने 'तानि परे तथा ह्याह' इत्यस्मिन् षष्ठेऽधिकरणे तु। परे—हार्दरूपे परमात्मनि। युतिः—सम्पत्तिः। सा च—परमात्मनि सम्पत्तिश्च। संश्लेषमात्रम्—पृथग्व्यवहारानर्हसंसर्गमात्रमेव नतु लय इत्यर्थः। अयं 'अविभागो वचनात्' इत्यस्य सप्तमस्याधिकरणस्यार्थः। मोक्षी—मोक्षभाग्विद्यानिष्ठस्तु। ब्रह्मनाड्या निर्गच्छेत्—मूर्धन्यनाड्या निष्क्रामेत्। एतदादिविदुषो विशेष इत्यर्थः। अयं 'तदोकोग्रज्वलनम्' इत्यादेरष्टमस्याधिकरणस्यार्थः। अथ—तदुपरितने 'रश्म्यनुसारी' इत्यस्मिन्नवमेऽधिकरणे। घृणिभिः—सूर्यकिरणैरवलम्बनभूतैर्निर्गच्छेदिति। निशादेवरात्र्योश्च—निशायां निर्गच्छेत् देवरात्र्याञ्च निर्गच्छेत्। निशा मनुष्यरात्रिः देवरात्रिर्दक्षिणायनम्। तत्र निशायां निर्गच्छेदित्ययं 'निशि नेति चेत्' इत्यादेर्दशमस्याधिकरणस्यार्थः। देवरात्र्यां निर्गच्छेदित्ययं 'अतश्चायनेऽपि दक्षिणे' इत्यस्यैकादशस्याधिकरणस्यार्थः। अस्मिन्पादे अधिकरणान्येकादश ॥ ४९९ ॥

इति श्रीमद्रङ्गनाथशठमथनयतिराजकटाक्षलब्धोभयवेदान्तहृदयस्य भारद्वाजस्य श्रीनिवासराघवदासस्य (श्रीमदहोबिलमठमहास्थाननिर्वहणधुरन्धर श्रीमद्वेदमार्गप्रतिष्ठापनाचार्य परमहंसपरिव्राजकाचार्य सर्वतन्त्रस्वतन्त्रोभयवेदान्ताचार्य श्रीभगवद्रामानुजसिद्धान्तनिर्धारणसार्वभौम श्रीलक्ष्मी-नृसिंहदिव्यपादुकासेवकश्रीवण्शठकोपश्रीशठकोपरामानुजमहादेशिकस्य)

कृतौ अधिकरणसारावलीव्याख्यायां पदयोजनाख्यायां

चतुर्थस्याध्यायस्य द्वितीयः पादः

---

## चतुर्थस्याध्यायस्य तृतीयः पादः ॥

### संग्रहेण चतुर्थाध्यायतृतीयपादार्थस्य प्रदर्शनम् ।

निर्गत्य ब्रह्मरन्ध्रात्तपनकरमथालम्ब्य नाडीनिबद्धं
प्रत्युद्यद्देववृन्दप्रहितवलिरसौ येन योगी प्रयाति ।
मौकुन्दस्स्थाप्यतेऽसौ परमिह मुनिना पञ्चभिर्न्यायभेदैः
मोहाकूपारपारं पुरमभिगमयन्मुक्तिघण्टापथो नः ॥ ५०० ॥

चिन्ता०—अथ वक्ष्यमाणपादार्थं सङ्कलय्य दर्शयति—निर्गत्येति । अयमर्थः—ब्रह्मरन्ध्रान्निर्गत्य नाडीनिबद्धं तपनकरमथालम्ब्य प्रत्युद्यद्देववृन्दैः 'सर्वेऽस्मै देवा बलिमावहन्ति' इति प्रमाणानुसारेण प्रहितवलिः प्रहितोपहारो योगी येन मार्गेण गच्छति । मौकुन्दो मुकुन्दप्रापकोऽसौ मार्गो मुनिना पाराशर्येण पञ्चभिर्न्यायभेदैरधिकरणैस्स्थाप्यते । किं कुर्वन् मोहाकूपारपारं पुरं परमपदं नोऽभिगमयन् । मुक्तिघण्टापथः—अर्चिरादिमार्ग इत्यर्थः ॥ ५०० ॥

पद०— निर्गत्येत्यादि । ब्रह्मरन्ध्रात्—शिरःकपालमध्यरन्ध्रात् । निर्गत्य—उपरि बहिर्निष्क्रम्य । अथ—तदनन्तरम् । नाडीनिबद्धम्—ब्रह्मनाड्या सम्बद्धम् । तपनकरम्—सूर्यकिरणम् । आलम्ब्य—उपरि गतिसाधनत्वेनावलम्ब्य । प्रत्युद्यद्देववृन्दप्रहितवलिः—प्रत्युद्यद्भिर्मार्गातिवहनायाभिमुखमागतैर्देववृन्दैरर्चिर्दिनादिदेवसमूहैः प्रहितवलिः समर्पितोपहारः । 'सर्वेऽस्मै देवा बलिमावहन्ति' इति श्रुतेरिति भावः । असौ—प्रकृत उत्क्रान्तः । योगी—ब्रह्मवित् । येन—मार्गेण । प्रयाति—गच्छति । मौकुन्दः—मुक्तिभूमिदो मुकुन्दस्तं प्रापयतीति मौकुन्दः । मोहाकूपारपारम्—मोहः अज्ञानान्यथाज्ञानविपरीतज्ञानरूपस्स एवाकूपारस्समुद्रस्तस्य पारं परतटभूतम् । पुरम्—मुक्तिस्थानभूतं श्रीवैकुण्ठाख्यं दिव्यनगरम् । नः—अस्मान् । अभिगमयन्—प्रापयन् । असौ—बुद्धिस्थोऽर्चिरादिरूपः । मुक्तिघण्टापथः—मोक्षप्रापकमहापथः । इह—अस्मिन्नध्याये । परम्—इत उपरि तृतीयपादे । मुनिना—सर्वोपनिषदर्थमननशीलेन व्यासेन । पञ्चभिर्न्यायभेदैः—पञ्चसङ्ख्याकैरधिकरणविशेषैः । स्थाप्यते—पूर्वपक्षनिरसनपूर्वकं सिद्धान्तीक्रियते ॥ ५०० ॥

## अर्चिराद्यधिकरणम् ॥ १४६ ॥

सूत्रम्—अर्चिरादिना तत्प्रथितेः ॥ ५०९ ॥

शाखाभेदेषु भिन्नां गतिमुपनिषदोऽधीयते तन्मुमुक्षोः
विद्यावैषम्यनीत्या गतिरपि विषमा न व्यवस्थार्चिरादेः ।
नैतत्सर्वत्र तैस्तैरिह तदिदमिति प्रत्यभिज्ञानसिद्धौ
भाव्यं न्यूनाधिकत्वप्रभृति निखिलमप्यत्र सिद्धाविरुद्धम् ॥ ५०१ ॥

चिन्ता०—अत्र सङ्गतिर्भाष्ये 'विदुष उत्क्रान्तस्य नाडीविशेषेण हार्दानुग्रहाद् गत्युपक्रम उक्तः । तस्य गच्छतो मार्ग इदानीं निर्णीयते' इति । तदर्थविचारस्तु—किं विद्वानर्चिरादिमार्गेणैव गच्छति, उत तेन वा मार्गान्तरेण वेत्यनियमः । किं सर्वविद्यास्वेको मार्ग आम्नायते, उत नानामार्गा इति । किं क्रमान्तरपदार्थान्तराम्नानात् नानामार्गसमाश्रयणं न्याय्यमुतादित्यादिप्रत्यभिज्ञानेन मार्गैकत्वाश्रयणं न्याय्यमिति । अत्र पूर्वपक्षमाह—शाखाभेदेष्विति । छान्दोग्ये वाजसनेयके कौषीतकिब्राह्मणे च तत्रतत्र शाखाभेदेषूपनिषदो भिन्नामेव ब्रह्मविदां गतिमधीयते । तत्र भिन्नप्रकारत्वं भाष्य एव सुव्यक्तमुक्तम् । तेन मुमुक्षोर्ब्रह्मविद्यावैषम्यन्यायेन गतिचिन्तनमपि विषममेव । तेनार्चिरादेर्न व्यवस्था नियमेनैकरूप्यं नास्तीति । तदिदं प्रतिक्षिपति—नैतदिति । सर्वत्र तैस्तैरग्निवाय्वादित्यचन्द्रविद्युत्प्रभृतिभिस्तदेव देवयानमिति प्रत्यभिज्ञाने सिद्धे सति न्यूनाधिकत्वप्रभृतिन्यूनत्वमधिकत्वं व्यत्ययेन कथनमपि निखिलं न्यायसिद्धार्थाविरुद्धं भाव्यं भावनीयम् ॥ ५०१ ॥

पद०—शाखाभेदेष्वित्यादि । उपनिषदः—वेदान्तभागाः । शाखाभेदेषु—ऋग्यजुस्सामादिशाखाभेदेषु । गतिम्—ब्रह्मविदां मार्गम् । भिन्नाम्—परस्परन्यौन्याधिक्यव्यत्ययैर्विलक्षणामेव । अधीयते—आमनन्ति । तत्—तस्मात् । मुमुक्षोः—ब्रह्मविदः । विद्यावैषम्यनीत्या—विद्यावैषम्यन्यायेन । गतिरपि—मार्गोऽपि । विषमा—परस्परभिन्नभिन्नैव भवितुमर्हति । अतः अर्चिरादेः—अर्चिरादिमार्गस्य । व्यवस्था—ऐकरूप्यनियमः । न—नास्ति । एतत् न—इदं शङ्कनं न युक्तम् । इह—अर्चिरादिगतिविषये । सर्वत्र—शाखाविशेषेषु सर्वत्र । तैस्तैः—अग्निवाय्वादित्यचन्द्रविद्युत्प्रभृतिभिः । तदिदमिति प्रत्यभिज्ञानसिद्धौ—तदेवेदमपीत्येकत्वेन प्रत्यभिज्ञासिद्धौ सत्याम् । न्यूनाधिकत्वप्रभृति निखिलमपि अत्र सिद्धाविरुद्धं भाव्यम्—न्यूनत्वमधिकत्वं व्यत्ययेन कथनमित्यादि सर्वमपि न्यायसिद्धाविरुद्धतया चिन्तनीयम् ॥ ५०१ ॥

चैद्यादीनामयोध्यास्थिरचरजनुषां पुण्डरीकादिकानां
भीष्मादीनामुपास्तिक्रमभवविभवव्यूहलोकस्थितानाम् ।
धातॄणां तत्सुतानामधिकृतिविगमे ब्रह्मसम्प्रेप्सताम-
प्यन्येषां प्रस्थितिस्सा शितपृथुमतिभिश्चिन्तनीया यथार्हम् ॥ ५०२ ॥

इत्यर्चिराद्यधिकरणम् ॥ १४६ ॥

चिन्ता०—एवमर्चिरादिमार्गेण ब्रह्मविदां गमनमिति भगवत्प्राप्तौ गमननियमो भवतोक्तः परमपदं गच्छतां नानाप्रकारेण गमनं दृश्यते प्रमाणवाक्येषु तत्कथमित्याशङ्क्य प्रमाणसिद्धार्थप्रहाणायोगात् तत्र तत्रोचितमेव प्रकारवैषम्यं प्रतिभावद्भिश्चिन्तनीयमित्याह—चैद्यादीनामिति । अयमत्र भावः—सामान्यन्यायोऽयं ब्रह्मनाड्योत्क्रम्य ब्रह्मविदामर्चिरादिमार्गेण गमनमिति ब्रह्मविद्विशेषाणां तुल्यप्रमाणसिद्धं गमनवैषम्य-मपि नापह्नोतव्यम्, नैतावता ब्रह्मविदामर्चिरादिमार्गेण गमनमिति सामान्योऽयं महामार्गोऽपह्नोतव्य इति । चैद्यस्य तदानीमेव वासुदेवपदप्राप्तिः । अयोध्यास्थिरचरजनुषां भगवता रामभद्रेण सह यावद्ब्रह्मलोक-गमनम् । पुण्डरीकादीनां तत्तत्संवादोक्तप्रकारेण पुरुषविशेषाणामपवर्गप्राप्तिः । भीष्मादीनां वस्वादिपद-प्राप्तिपूर्वकपरमपदप्राप्तिः । उपास्तिक्रमेण भगवद्विभवव्यूहलोकस्थितानां स्वाभिमतकाले फलप्राप्तिः । धातॄणां चतुर्मुखादीनां स्वस्माल्लोकात्परमपदप्राप्तिः । एवमन्यत्रापि विद्वद्भिश्चिन्तनीयमिति । एवं सामान्य-गमनोपदेशमात्रेण यथोचितविशेषगमनं नापह्नोतव्यमित्युक्तं भवति ॥ ५०२ ॥

इत्यर्चिराद्यधिकरणम् ॥ १४६ ॥

पद०—चैद्यादीनामित्यादि । चैद्यादीनाम्—शिशुपालप्रभृतीनाम् । अयोध्यास्थिरचर-जनुषाम्—अयोध्यासम्बन्धिनां स्थावरजङ्गमजन्मभाजां प्राणिनाम् । पुण्डरीकादिकानाम्—पुण्डरी-काख्यमहर्षिप्रभृतीनाम् । भीष्मादीनाम् । उपास्तिक्रमभवविभवव्यूहलोकस्थितानाम्—'विभवार्चनाद्व्यू-हार्चनं प्राप्य व्यूहार्चनात् परं ब्रह्म वासुदेवाख्यं सूक्ष्मं प्राप्यत इति वदन्ति' इति पाञ्चरात्राधिकरणभाष्यो-क्तरीत्या उपास्तिक्रमेण भवतीत्युपास्तिक्रमभवं विभवव्यूहलोकयोः स्थितम् अवस्थानं येषां ते उपास्तिक्रमभव-विभवव्यूहलोकस्थितास्तेषाम् । विभवो रामकृष्णादिप्रादुर्भावगणः । रामकृष्णादीनां विभवानामपि लोका-स्सन्ति । व्यूहो वासुदेवादिमूर्तिचतुष्टयम् । वासुदेवादीनामपि प्रत्येकं लोकास्सन्ति । उदाहृतभाष्यस्य तन्मूलभूतसंहितादिवचनानाञ्च विद्यमानत्वात् । धातॄणाम्—प्रतिप्राकृतसृष्टि भिन्नभिन्नानां चतुर्मुखा-नाम् । तत्सुतानाम्—चतुर्मुखसुतानां पुलस्त्यनारदप्रभृतीनाम् । अधिकृतिविगमे—स्वस्वाधिकाराव-

साने । ब्रह्मसम्मेप्सतामन्येषामपि—ब्रह्मप्राप्तिकामानामिन्द्रादीनामपि । सा—पुराणादिषु प्रसिद्धा । प्रस्थितिः—प्रस्थीयते अनयेति प्रस्थितिस्सरणिः । शितपृथुमतिभिः—निशितमहाबुद्धिभिः पण्डितैः । यथार्हम्—यथायोग्यम् , उपरितनलोकस्थितानामधोलोकस्थितार्चिरादिदेवतातिवहनपरित्यागाद्यौचित्येन । चिन्तनीया—आलोचनीया । तथा चायमर्चिरादिमार्गस्सामान्यः केषाञ्चित् ब्रह्मविदां गतिभेदाश्च सन्ति तथा च तुल्यप्रमाणकानामितरेतरबाधश्च नास्तीति भावः ॥ ५०२ ॥

इत्यर्चिराद्यधिकरणम् ॥ १४६ ॥

---

## वाय्वधिकरणम् ॥ १४७ ॥

सूत्रम्—वायुमब्दादविशेषविशेषाभ्याम् ॥ ५१० ॥

सम्प्राप्तो देवलोको मरुदपि च समं वत्सरादित्यमध्ये
नैकत्वं रूढिभेदात्तत इह तु तयोस्तुल्यभावाद्विकल्पः ।
मैवं योऽयं प्रसिद्धः पवत इहं मरुद्देवतानां गृहत्वं
तस्योक्तं धारकत्वात्तत उचितमिदं निर्विकल्पं तदैक्यम् ॥ ५०३ ॥

इति वाय्वधिकरणम् ॥ १४७ ॥

चिन्ता०—भिन्नदेशाम्नातस्यार्चिरादिमार्गस्यैकत्वे स्थिते तत्र क्रमचिन्तने प्राप्ते संवत्सरादित्ययोर्मध्ये श्रुत्या युगपदेव प्राप्तयोर्वायुदेवलोकयोर्भेदमङ्गीकृत्यानियमेन क्रमोऽङ्गीकर्तव्यः उत प्रमाणबलादेकत्वमेवाङ्गीकृत्यैकीभूतयोरेकस्थानापन्नत्वमिति चिन्त्यत इति सङ्गतिः । तदर्थविचारस्तु—संवत्सरादित्ययोर्मध्यप्राप्तौ वायुदेवलोकावनियतक्रमेण निवेशयितव्यावुत नेति । किं वायुदेवलोकशब्दावर्थान्तरपरावुत नेति । किं देवलोकशब्दस्य देवावासपरत्वं न्याय्यमुत वायोर्देवगृहत्वश्रवणानुरोधेन वायुपरत्वं न्याय्यम् । अत्र पूर्वपक्षी मन्यते—अत्र खलु संवत्सरादित्ययोर्मध्ये देवलोको वायुश्च श्रुत्यैव प्राप्तौ नच तयोरेकत्वं वक्तुं शक्यते लोके रूढिभेदस्य दृष्टत्वात् तेनैकस्मिन्स्थाने तुल्यप्रमाणसिद्धत्वाद्विकल्प एव स्यात् । तदिदमाह—सम्प्राप्त इति । तदेतन्निराकरोति–मैवमिति । निराकरणे हेतुमाह–योऽयमिति । 'योऽयं पवत एष देवानां गृहाः' इति वायोर्देवगृहत्वं श्रुतिप्रसिद्धम् । कथं देवलोकत्वमित्याशङ्क्याह—धारकत्वादिति । स्वर्गलोको वायुनैव धृत इति पुराणादिषु प्रसिद्धमेतत् । एवमुपपादितमर्थं न्यायतो निगमयति–अत इति । विकल्पो ह्यष्टदोषदुष्टत्वात्कष्ट एवेतीममर्थं दर्शयितुं निर्वि-

कल्पमिति विशेषणं प्रोक्तम् । अयमर्थः—वायुदेवलोकयोरैक्यं विकल्पप्रयुक्तदोषपरिहारार्थमङ्गीकर्तव्य-मिति ॥ ५०३ ॥

इति वाय्वधिकरणम् ॥ १४७ ॥

पद०—सम्प्राप्त इत्यादि । वत्सरादित्यमध्ये—संवत्सरादित्ययोर्मध्ये । देवलोकः—देवलोक-पदार्थः । मरुदपि च—वायुश्च । समम्—तुल्यतया एकस्थानापत्त्या । सम्प्राप्तः—श्रुत्या प्रति-पन्नः । कस्याञ्चित् श्रुतौ संवत्सरादित्ययोर्मध्ये देवलोकश्श्रुतः, कस्याञ्चित्तत्रैव स्थाने वायुश्श्रुत इत्यर्थः । रूढिभेदात्—देवलोकवायुशब्दयोर्देवानां लोके वायौ च प्रत्येकं रूढिशक्तिभेदात् । तयोः—देवलोक-वायुशब्दार्थयोः । एकत्वं न—ऐक्यं न सम्भवति । ततः—तस्मात्कारणात् । इह—अतिवहने । तुल्यभावात्तु—तुल्यप्रमाणकत्वाद्रूढितौल्याच्च । विकल्पः—कदाचिद्देवलोकस्यातिवहनं कदाचिद्वायो-रिति पक्षेऽन्यतरबाधोऽन्यतरपरिग्रहश्चेत्यर्थः । मैवम्—एवं मा शङ्किष्ठाः । इह—लोके । योऽयं प्रसिद्धो मरुत् पवते—य एष सर्वजनविदितो वायुर्वाति । तस्य—वायोः । धारकत्वात्—स्वर्गादिलोकधारकत्वाद्धेतोः । देवतानां गृहत्वमुक्तम्—'योऽयं पवत एष देवानां गृहाः' इति श्रुत्या देवानां स्थानभूतत्वमाम्नातम् । ततः—कारणात् । निर्विकल्पम्—अष्टदोषदुष्टविकल्पशून्यम् । उचितम्—तथाप्राप्ततमम् । इदं तदैक्यम्—तयोर्देवलोकवाय्वोरैक्यम् । सिद्धमिति शेषः । देवलोक-शब्देनापि देवस्थानत्वगुणेन वायुरेवोच्यत इत्यर्थः ॥ ५०३ ॥

इति वाय्वधिकरणम् ॥ १४७ ॥

---

## वरुणाधिकरणम् ॥ १४८ ॥

सूत्रम्—तटितोऽधि वरुणस्सम्बन्धात् ॥ ५११ ॥

कौपीतक्यागमोक्ता वरुणशतमखौ सोऽपि नाथः प्रजानां
क्वापि स्थाप्या निपीड्य श्रुतिमपि विफला ह्यन्यथा तच्छ्रुतिस्स्यात् ।
तस्मात्ते वायुलोकात्परमनुपठनात्तत्र सन्त्वित्ययुक्तं
सम्बन्धाद्विद्युतोऽन्वग्वरुण इति परौ पाठतस्तत्परौ स्तः ॥ ५०५ ॥

चिन्ता०—अत्रापि क्रमविशेषचिन्तैव क्रियत इति सङ्गतिः । तदर्थविचारस्तु—किं वरुणादयो यथा-पाठं निवेशयितव्याः किं विद्युतोऽधीति । किं वरुणस्य विद्युत्सम्बन्धानुरोध उपपन्नो नेति । अत्र पूर्वपक्षी

कथयति कौपीतकिवाक्ये वरुणश्चेन्द्रश्च प्रजापतिरप्यातिवाहिकत्वेनोपदिश्यन्ते। तेचोपदेशावैयर्थ्याय क्वचिन्निवेशयितव्याः। तेषां सर्वत्रापि श्रुत्या निवेशो बाध्यते। अथापि पाठक्रमानुरोधेन श्रुतिं बाधित्वापि वायोरुपरि वरुणो निवेशयितव्यः। तथा च सत्यनेकश्रुतिबाधाद् वरमेकत्रैव श्रुतिबाध इतिन्यायानुसारेण तेनैवोपदेशावैयर्थ्यहेतुनेन्द्रप्रजापती वरुणानन्तरं निवेशयितव्याविति तयोश्च तत्र पाठक्रमो विद्यते। तदिदमाह—कौपीतकीति। एवमत्र शब्दान्वयः—कौपीतक्यागमोक्ता वरुणशतमखप्रजानाथाः श्रुतिं बाधित्वापि क्वचिन्निवेशयितव्याः। तत्र हेतुमाह—विफलेति। क्वचिन्निवेशाभावे तेषां श्रुतिर्विफला स्यात् एवं क्वचिन्निवेश्यत्वे सिद्धे पाठक्रममनुसृत्य वायुलोकात्परं निवेशयितव्या इति। तदेतद्दूषयति—अयुक्तमिति। तर्हि कुत्र निवेश्यत्वं तेषामित्याशङ्क्याह—संबन्धादिति। अर्थाद्वरुणो विद्युतोऽधिनिवेश्यः। इन्द्रप्रजापती तु पाठादेव वरुणात्परौ भवतो वरुणानन्तरभाविनौ भवत इत्यर्थः॥ ५०४॥

पद०—कौपीतक्यागमोक्ता इत्यादि। कौपीतक्यागमोक्ताः—कौपीतकिनां शाखिविशेषाणां आगमे शाखायाम् उक्ताश्श्रुताः। वरुणशतमखौ स प्रजानां नाथोऽपि—वरुणेन्द्रप्रजापतयः। श्रुतिं निपीड्यापि—अर्चिरादीनां क्रमेण श्रुतत्वात् तादृशक्रमश्रुतिं बाधित्वापि। क्वापि—यत्र कचित्। स्थाप्याः—स्थापनीयाः। अन्यथा—कचिदप्येषां निवेशानङ्गीकारे। तच्छ्रुतिः—वरुणेन्द्रप्रजापतीनामातिवाहिककोटिनिक्षेपिका कौपीतकिश्रुतिः। विफला स्याद्धि—निष्प्रयोजना भवेद्धि। तस्मात्—कौपीतकिश्रुतिनैष्फल्यपरिहाराय। ते—वरुणेन्द्रप्रजापतयः। वायुलोकात्परमनुपठनात्—वायुलोकादुपरि पठनात्। तत्र सन्तु—तत्रैव सन्तु। यत्र क्वापि क्रमश्रुतिबाधे सोढव्ये पाठक्रमेण वायोरुपरि निवेशो युक्त इति भावः। इत्ययुक्तम्—इति शङ्कनमयुक्तम्। सम्बन्धात्—विद्युद्वरुणयोर्मेघोदरवर्तित्वसम्बन्धात्। विद्युतोऽन्वक्—विद्युतः पश्चात्। वरुण इति—वरुणो निवेश्यइति हेतोः। परौ—इन्द्रप्रजापती अपि। पाठतः—कौपीतकिश्रुतौ वरुणानन्तरपाठवशेन। तत्परौ स्तः—अत्रापि वरुणादनन्तरौ भवेताम्॥५०४॥

यत्त्वस्यामानवस्य श्रुतमिह परसम्प्रापकत्वं भवेत्तत्
सद्वारत्वेऽप्यबाधं तदपि सहकृतौ तच्छ्रुतौचित्यभूमा।
यश्चोक्तो मानसाख्यस्तटित उपरि तु ब्रह्मलोकाप्तिहेतुः
तस्मान्नेता स नान्यो विदुरतिवहनं वैद्युतेनैव तस्मात्॥ ५०५॥

इति वरुणाधिकरणम्॥ १४८॥

चिन्ता०—अत्रामानवस्याव्यवहितब्रह्मप्रापकत्वं मा भूत् इन्द्रप्रजापतिद्वारेण भवत्वित्याशङ्क्य वाक्यस्वारस्यानुरोधेनेन्द्रप्रजापतिभ्यां सहकारित्वेनावस्थिताभ्यां सहकृतस्यामानवस्यैव ब्रह्मप्रापकत्वं समुचितमिति स्थापयति—यत्त्वस्येति । शब्दार्थस्तु—अस्यामानवस्य श्रुतं यद् ब्रह्मप्रापकत्वं तदिन्द्रप्रजापतिभ्यां सद्वारत्वेऽपि यद्यप्यबाधं भवति तथापि तैरमानवेन्द्रप्रजापतिभिस्सहितैरेव ब्रह्मप्राप्तिकरणे श्रुतौचित्यभूमास्ति । 'स एनान् ब्रह्म गमयति' इत्यमानवकर्तृकत्वेन श्रुतब्रह्मप्राप्तिप्रतिपत्त्यौचित्यभूमास्ति । अयमर्थः—अमानव एव प्राधान्येन ब्रह्म गमयति इन्द्रप्रजापती तु तदनुवर्तिनौ तत्रोपकुरुत इति । नन्वमानवस्य ब्रह्मप्राप्तिहेतुत्वं भवद्भिरुच्यते श्रुत्यन्तरे तु मानसस्य तत्कथमित्याशङ्क्यामानव एव मानसशब्देनाभिधीयते ततो नामभेदमात्रमिति वदति—यश्चोक्त इति । शब्दान्वयस्तु तटित उपरि ब्रह्मलोकाप्तिहेतुर्यश्च मानसाख्य उक्तस्तस्मान्मानसान्नेता अमानवो नान्यः । तत्र हेतुमाह—विदुरिति । अमानवो विद्युत्सम्बन्धी पुरुषविशेषः मानसोऽपि तथा तस्माद् विद्युत्सम्बन्धिना पुरुषेणैकेनैवातिवहनमाहुः ॥ ५०५ ॥

इति वरुणाधिकरणम् ॥ १४८ ॥

पद०—यत्त्वस्येत्यादि । अस्य—'तत्पुरुषोऽमानवस्स एनान्ब्रह्म गमयति' इति श्रुत्या बुद्धिस्थस्य । अमानवस्य—अमानवसंज्ञस्य विद्युत्सम्बन्धिपुरुषस्य । इह—श्रुतिवाक्ये । यत्तु परसम्प्रापकत्वं श्रुतम्—यत् ब्रह्मप्रापकत्वमवगतम् । तत्—ब्रह्मप्रापकत्वम् । सद्वारत्वेऽपि—वरुणेन्द्रप्रजापतिद्वारकं तदित्यङ्गीकारेऽपि । अबाधं भवेत्—निर्बाधमेव । अग्निद्वारा घटकारणभूतोऽपि दण्डो घटकारणमिति खलु व्यवह्रियत इति भावः । तदपि—तथापि । सहकृतौ—वरुणेन्द्रप्रजापतीनां सहकारित्वाङ्गीकारेण वैद्युतस्यैव गमयितृत्वाङ्गीकारे । तच्छ्रुतौचित्यभूमा—तस्यामानवस्य श्रुतं 'स एनान्ब्रह्म गमयति' इति यत् ब्रह्मप्रापकत्वम्, तस्यौचित्यं प्रतिपत्तिसौकर्यं तस्य भूमा अतिशयः । अस्तीति शेषः । अद्वारकं ब्रह्मप्रापकत्वं हि प्रतिपत्तुं सुशकम्, सद्वारकं तु द्वारभूतवस्तुज्ञानतदीयकारणत्वादिज्ञानसापेक्षत्वाद्दुश्शकमिति भावः । तटितः—विद्युतः । उपरितु—उपरिष्टात् । ब्रह्मलोकाप्तिहेतुः—ब्रह्मात्मकलोकप्राप्तिहेतुः । यश्च मानसाख्य उक्तः—उपनिषद्विशेषे यश्च मानसनामा प्रतिपादितः । तस्मात्—मानसात् । नेता सः—ब्रह्मप्रापकोऽमानवः । नान्यः—अन्यो न । किन्तु तस्यैव नामद्वयमित्यर्थः । तस्माद्वैद्युतेनैवातिवहनं विदुः—यस्माद्वैद्युतस्य पुरुषस्यैकस्यैव मानसामानवाख्यनामद्वयवत्त्वेन स्वरूपैक्यं तस्मादेव कारणात् विद्युत्पुरुषेणैकेनैवातिवहनं सूत्रकारादयोऽभ्यधुः 'वैद्युतेनैव ततस्तच्छ्रुतेरिति ॥ ५०५ ॥

इति वरुणाधिकरणम् ॥ १४८ ॥

---

## आतिवाहिकाधिकरणम् ॥ १४९ ॥

### सूत्रम्—आतिवाहिकास्तल्लिङ्गात् ॥ ५१२ ॥

**भोगस्थानान्यमूनि ज्वलनदिनमुखान्यध्वचिह्नानि वा स्युः**
**लोकोक्तिच्छाययैव स्थितमिदमिति नासंभवात्कालशब्दे ।**
**स्पष्टे नेतृत्वपुंस्त्वे क्वचिदतिवहनं तद्वदन्यैश्च कार्यं**
**सन्दिग्धे वाक्यशेषाद्गतिरिति जगुरग्न्यादिवाचोऽभिमन्तॄन् ॥ ५०६ ॥**

चिन्ता०—अत्र सङ्गतिर्भाष्ये 'किमर्चिरादयो मार्गचिह्नभूता उत भोगभूमयः, अथवा विदुषां ब्रह्मप्रेप्सतामतिवोढार इति इति । तदर्थविचारस्तु—किं अर्चिरादयो मार्गचिह्नभूता इति चिन्तायां पुनरपि चिन्त्यते—किं लौकिकोपदेशप्रक्रमानुरोधो न्याय्यः उत 'एत एव लोका यदहोरात्राण्यर्धमासा मासा ऋतवस्संवत्सराः' इति वाक्यानुरोधो न्याय्यः, उत गमयितृत्वलिङ्गानुरोध उचित इति । तत्रोभयप्रकारेण पूर्वपक्षमुपन्यस्य तयोः प्रकारयोः प्रमाणविरुद्धत्वादातिवाहिकत्वपक्षमेव प्रतिष्ठापयति—भोगस्थानानीति । अयमत्र शब्दान्वयः—अमूनि ज्वलनदिनमुखानि भोगस्थानान्येव स्युः अथवा मार्गचिह्नानि स्युः । कुत इत्यत्राह—लोकोक्तीति । लोकोक्तिप्रकारो भाष्य एव सुव्यक्तमुक्तः । तदिदं प्रतिक्षिपति—नेति । तत्र हेतुमाह—असम्भवादिति । नहि कालवाचिशब्दे मार्गचिह्नवाचित्वं भोगभूमिवाचित्वं वा सम्भवति । तर्हि त्वत्पक्षे किं नियामकमित्यत्राह—स्पष्टे इति । 'तत्पुरुषोऽमानवस्स एनान्ब्रह्म गमयति' वैद्युतात्पुरुषो मानस एत्य ब्रह्मलोकान्गमयति' इति क्वचिदमानवस्य नेतृत्वपुंस्त्वे स्पष्टे इति तद्वदन्यैरप्यतिवहनमेव कार्यम् । अस्मिन्नर्थे न्यायानुसारमेव दर्शयति—सन्दिग्ध इति । सन्दिग्धे तु वाक्यशेषाद् गतिरिति हि नीतिविदः प्राहुः । ननु तर्ह्यग्न्यादिशब्दानामातिवाहिकपुरुषविशेषवाचित्वं कथमित्याशङ्क्य तेषामभिमानिदेवताविशेषवाचित्वात् पुरुषवाचित्वं सुप्रसिद्धमित्याह—अग्न्यादीति । अत्रापि जगुरित्यनुषज्यते । लोकेऽप्यग्न्यादिशब्दानां दिक्पालवाचित्वमभिधानकोशकारैरपि पठ्यते ॥ ५०६ ॥

पद०—भोगस्थानानीत्यादि । अमूनि—'तेऽर्चिषमभिसम्भवन्त्यर्चिषोऽहः' इत्यादौ श्रुतान्यमूनि । ज्वलनदिनमुखानि—अग्निदिनादीनि तत्त्वानि । भोगस्थानानि—ब्रह्म प्राप्नुवतां भोगभूमिभूतानि । 'एत एव लोका यदहोरात्राण्यर्धमासा मासा ऋतवस्संवत्सराः' इत्यादौ लोकशब्दश्रवणात् । लोकशब्दो हि भोगभूमौ प्रसिद्धः । अध्वचिह्नानि वा स्युः—यद्वा अमूनि मार्गचिह्नभूतानि

वा स्युः। कुत इति चेत् इदं लोकोक्तिच्छाययैव स्थितमिति—इदमर्चिराद्याम्नानं 'अस्माद्ग्रामान्नि-ष्क्रम्यामुकं वृक्षमतः पर्वतं ततः पाण्डुरसलिलामापगां ततो न्यग्रोधं हरितच्छदञ्च गत्वा राजधानीं गच्छेत्' इत्यादिरूपपान्थापेक्षितमार्गचिह्नोपदेष्टृवाक्यरीत्यैव स्थितमिति हेतोः। न—इदं न समञ्जसम्। कालशब्दे असम्भवात्—कालवाचिन्यर्चिरादिशब्दे भोगभूमिवाचकत्वस्य मार्गचिह्नवाचकत्वस्य वा असम्भवात्। क्वचित्—आतिवाहिकेष्वन्यतमे वैद्युते पुरुषे। नेतृत्वपुंस्त्वे स्पष्टे—'तत्पुरुषोऽमान-वस्स एनान्ब्रह्म गमयति' इति वाक्यशेषेण ब्रह्मनेतृत्वपुरुषत्वे स्पष्टमवगम्येते। अतः अर्चिरादिष्वस्मा-त्पूर्वेष्वपि ब्रह्मनेतृत्वं भोगभूमित्वमार्गचिह्नत्वविरोधिभूतं पुरुषत्वञ्चावश्यमङ्गीकार्यमिति भावः। इदमेवो-च्यते—तद्वत्। अमानवतुल्यम्। अन्यैश्च—अर्चिरादिभिरस्मात्पूर्वैरपि। अतिवहनम्—गन्तॄणां गमयितृत्वरूपं साहाय्यम्। कार्यम्—कर्तव्यम्। अङ्गीकार्यमिति वा अर्थः। सन्दिग्धे वाक्यशेषात् गतिरिति जगुः—तान्त्रिका इति शेषः। 'अक्ताश्शर्करा उपदधाति' इत्यत्राञ्जनकरणद्रवद्रव्येषु घृत-तैलदधिपयःप्रभृतिषु किमत्राञ्जनकरणत्वेनोपादेयमिति सन्देहे 'तेजो वै घृतम्' इति तेजस्त्वेन घृतं स्तुवा-नात् वाक्यशेषादकिञ्चित्कुर्वतस्स्तवनानुपपत्तिसहकृतादञ्जनकरणं घृतमित्यर्थावगतिरिति मीमांसका अभ्यधुः। अतोऽत्रापि वाक्यशेषेऽतिवहनपुरुषत्वयोश्श्रवणात् तथैवार्चिरादिभिरपि कार्यमित्यवगन्तव्यमित्यर्थः। अग्न्यादिवाचोऽभिमन्तॄन्—जगुरित्यनुषङ्गः। अर्चिरादयोऽग्न्यादिवाचकाश्शब्दास्तत्तदभिमानिदेवता अभिदधतीति। अतश्च तेषामर्चिरादीनामातिवाहिकत्वमुपपन्नञ्चेति भावः॥ ५०६॥

यां श्रुत्वा धर्मसूनुर्न्यपतदभिपतेत्तामसौ तामसौघो
वर्गस्त्रैवर्गिकाणां पितृसरणिघटीयन्त्रचक्रे विघूर्णेत्।
वर्तन्येषार्चिरादिश्श्रुतिभिरपुनरावर्तिनां संविभक्ता
तत्र ब्रूतेऽतिवोढॄंस्तदितरवदहःपक्षमासादिशब्दः॥ ५०७॥

चिन्ता०—उक्तमर्चिरादिमार्गमितरस्मात् पुण्यपापमार्गद्वयात् वैलक्षण्येन दर्शयित्वा अहःपक्षमासादि-शब्दानां देवताविशेषपरत्वमेव द्रढयति—यामिति। धर्मसूनुर्हि यां नरकमार्गं श्रुत्वा दुःखेन निपपात। तामसौ-तामसौघस्तामसपुरुषसमूहः स्वयमभिपतेत् प्रतिपद्येत। त्रैवर्गिकाणां त्रिवर्गमेव पुरुषार्थत्वेन स्वीकृत्य काम्यं कर्माचरतां वर्गः पुनर्धूमादिमार्गघटीयन्त्रचक्रे विघूर्णेत्। काम्यकर्मानुष्ठाता घटीयन्त्रघटवदूर्ध्वमुखमुत्क्रम्य कर्मफलानुभवान्ते तद्वदेव निपतेत्। एषा पुनरपुनरावर्तिनां वर्तनी श्रुतिभिः संविभक्तैव प्रतिपाद्यते। नन्वत्रातिवाहिकप्रसक्तौ अहःपक्षमासादिशब्दा न घटन्ते पुरुषविशेषवाचकत्वाभावादित्याशङ्क्य कतिपयपदेषु

पुरुषविशेषवाचकत्वे निर्णीते सति तन्न्यायेन सर्वत्र पुरुषविशेषवाचकत्वमेव स्वीकार्यमित्याह— तत्रेति ॥ ५०७ ॥

पद०—यां श्रुत्वेत्यादि । धर्मसूनुः—युधिष्ठिरः । याम्—निरयगतिम् । श्रुत्वा न्यपतत्—नरकयातनाश्रवणजनितभयातिशयेन मूर्छितः पपात । ताम्—तादृशीं निरयगतिम् । असौ तामसौघः—तामसपुरुषवर्गः । अभिपतेत्—अभिगच्छेत् । त्रैवर्गिकाणां वर्गः—धर्मार्थकामरूपं त्रिवर्गमेव पुरुषार्थत्वेन स्वीकृत्य काम्यं कर्माचरतां पुरुषाणां वर्गः । पितृसरणिघटीयन्त्रचक्रे—पितृसरणिर्धूमादिमार्ग एव घटीयन्त्रचक्रं घटीयन्त्रनिबद्धघटपरिवर्तनक्रमः तत्र । विघूर्णेत्—पुनः पुनर्निपतेत् । अर्चिरादिरेषा वर्तनी अपुनरावर्तिनां श्रुतिभिः संविभक्ता—अर्चिरादिका एषा सरणिस्तु पुनरावृत्तिशून्यानां ब्रह्म प्राप्नुवतां महात्मनां श्रुतिभिस्सम्यग्विभज्य दर्शिता । तत्—तस्मात् । अहःपक्षमासादिशब्दः । इतरवत्—धूमादिमार्गश्रुतिश्रुतरात्र्यादिशब्दवत् । तत्र—अर्चिरादिमार्गे । अतिवोढॄन्—आतिवाहिकानेव । ब्रूते—प्रतिपादयति । नतु भोगभूमीर्वा मार्गचिह्नानि वा प्रतिपादयतीत्यर्थः ॥ ५०७ ॥

पूर्वं धूमादिमार्गे सुकृतिषु कथिता चन्द्रमःप्राप्तिरन्या
सायुज्यं न्यासविद्याप्रकरणपठितं चान्द्रमन्यादृगुक्तम् ।
अन्यात्रार्चिर्मुखानामतिवहनकृतामष्टमस्याप्तिरिन्दो-
रित्थं सुस्था व्यवस्था प्रणिहितहृदयैरेवमन्यच्च सूह्यम् ॥ ५०८ ॥

चिन्ता०—अत्र चन्द्रप्राप्तिस्त्रेधोच्यते किं तदेकमुत भिन्नमिति विशये तिसृणामपि चन्द्रप्राप्तीनां तत्रतत्रोक्तानां वैषम्यं दर्शयित्वा सर्वत्रापि सन्देहविषये सूक्ष्मबुद्धिभिरन्तेवासिभिस्स्वयमेव वैषम्यं द्रष्टव्यमित्याह—पूर्वमिति । धूमादिमार्गे चन्द्रप्राप्तिरुच्यते सा तावत् कर्मफलभोगार्था भिन्ना । तथा पुरुषविद्यायामध्यात्मविदामपि दक्षिणायनमरणनिमित्ता चन्द्रसायुज्यप्राप्तिरूपा काचिच्चन्द्रप्राप्तिरुच्यते सा चान्या । इयं तु दक्षिणायनमृतानामुत्तरायणमृतानां वा सर्वेषामपि ब्रह्मविदामविशेषेणातिवाहिकानामष्टमस्य चन्द्रस्य प्राप्तिरभिधीयते । इयमपि ताभ्यां चन्द्रप्राप्तिभ्यामन्या काचिदपवर्गगामिनां सर्वेषामविशेषेण पञ्चाग्निविद्यायामभिहिता । तदिदमाह—अन्यात्रेति । एवं शिष्यानुग्रहेणाव्यक्तार्थं विशदीकृत्य वक्तव्यानामीदृशानामर्थानां बहुत्वात् सूक्ष्मबुद्धिभिरन्तेवासिभिस्स्वयमेवाशेषविशेषप्रतिपत्तिः कार्येति निगमयति—प्रणिहितेति ॥ ५०८ ॥

पद०—पूर्वमित्यादि । पूर्वम्—तृतीयाध्यायतृतीयपादे । धूमादिमार्गे—'अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते ते धूममभिसम्भवन्ति' इत्याम्नाते धूमादिमार्गे । सुकृतिषु—तन्मार्गगामिषु सुकृतिषु । कथिता चन्द्रमःप्राप्तिरन्या—'आकाशाच्चन्द्रमसमेष सोमो राजा तद्देवानामन्नं तं देवा भक्षयन्ति' इत्युक्ता चन्द्रप्राप्तिः स्वर्भोगयोग्यदिव्यदेहयोगार्थत्वेन विलक्षणा । न्यासविद्याप्रकरणपठितं चान्द्रं सायुज्यमन्यादृगुक्तम्—'ओमित्यात्मानं युञ्जीत' इति विहितन्यासाख्यब्रह्मविद्याप्रकरणभूते 'तस्यैवं विदुषः' इत्यादौ 'अथ यो दक्षिणे प्रमीयते पितृणामेव महिमानं गत्वा चन्द्रमसस्सायुज्यं गच्छति' इत्याम्नातं चन्द्रसंबन्धि सायुज्यं सम्बन्धविशेषात्मकं हार्दसंश्लेषवदतिशीतलामृतमयसुधाकरसंश्लेषरूपत्वाद्विश्रमार्थतया पूर्वोक्तात् चन्द्रसम्बन्धाद्विलक्षणमित्यस्माभिर्ग्रन्थान्तरे प्रतिपादितम् । अत्र अतिवहनकृतामर्चिर्मुखानामष्टमस्येन्दोराप्तिरन्या—अस्मिन्नर्चिरादिमार्गप्रकरणे आतिवाहिकानामर्चिरादीनामष्टमभूतस्य चन्द्रस्य प्राप्तिश्च अतिवहनार्थत्वेन विलक्षणा । इत्थं व्यवस्था सुस्था—उक्तप्रकारेण चन्द्रप्राप्तीनां फलभेदेन व्यवस्था सुप्रतिष्ठिता । प्रणिहितहृदयैरेवमन्यच्च सूह्यम्—अवधानयुक्तमनस्कैरस्मदन्तेवासिभिः पूर्वोक्तरीत्यार्चिरादिषु उपयोगविशेषादिकं सर्वमूहनीयम् ॥ ५०८ ॥

भूलोकेशाग्निपूर्वान्कतिचन भविनः केऽपि मन्यन्त एतान्
शब्दैक्ये ह्यत्र गुर्वी भवति तदभिमन्त्रन्तराणां प्रक्लृप्तिः ।
अन्ये चामानवस्य स्वपदगतपरब्रह्मनेतृत्वदृष्ट्या
नित्यत्वात् तद्वदेतान्निजगदुरखिलान्नित्यवैकुण्ठभृत्यान् ॥ ५०९ ॥

इति आतिवाहिकाधिकरणम् ॥ १४९ ॥

चिन्ता०—अत्र पूर्वप्रसक्तानामातिवाहिकानां सांसारिकाग्न्यादिदेवतारूपत्वम्, अथवा परमपुरुषाज्ञानुपालकाप्राकृतदेवतारूपत्वं वेत्याशङ्कमानस्य कस्यचिच्छिष्यस्य पक्षद्वयमपि प्रतिपत्तृभेदेन विभज्य दर्शयित्वोत्तरस्यैव पक्षस्य प्रामाणिकत्वं निगमयति—भूलोकेशेति । 'पृथिव्यन्तरिक्षं द्यौः' इत्यत्र 'अग्निर्वायुरादित्यः' इत्यग्न्यादीनां त्राणामनुक्रमेण देवतात्वनिर्देशाद् भूलोकेशः प्रसिद्धाग्निः । एवमन्तरिक्षदिवोर्वाय्वादित्यौ । एतानातिवाहिकान्कतिचन पुरुषाः प्रसिद्धाग्निपूर्वान् भविनस्संसारिणो देवताविशेषान्मन्यन्ते । तत्र हेतुमपि दर्शयति—शब्दैक्य इति । अग्निशब्दादीनामैक्ये सति संसारिणोऽग्न्यादयः केचित् असंसारिणोऽन्यादयोऽपरे इत्यर्थभेदक्लृप्तिर्गुर्वी । शब्दस्यानुवृत्तार्थकथनमेव न्याय्यमिति भावः । तदभिमन्त्रन्तराणां सांसारिकाग्न्यादिदेवताभिमन्त्रन्तराणामप्राकृताग्न्यादिदेवतानां प्रक्लृप्तिर्गुर्वीति तेषां भावः ।

अन्ये पुनराचार्या न्यायानुसारेण प्रकारान्तरमाहुः। तत्प्रकारमेव दर्शयति—अन्य इति। अयमर्थः—अमानवो हि वैकुण्ठवासिनं भगवन्तमेव प्रापयति। तस्मादमानवोऽप्राकृतः। तत्सहभावेन प्रापकौ ताविन्द्रप्रजापतीचाप्राकृतौ। एवञ्च सत्यन्येषामातिवाहिकानां प्राकृतत्वकल्पनं वैरूप्यादत्यन्तसाहसमेव। तस्मात्ते सर्वेऽप्यातिवाहिका दिव्यपुरुषा एवेति निर्धारयामः। अन्वयस्तु—अन्ये न्यायनिरूपणनिपुणबुद्धयः पुनराचार्या अमानवस्य वैकुण्ठवासिपरमपुरुषप्रापकत्व दृष्ट्यानित्येष्वन्यतमत्वान्नित्यत्वं सिद्धमेव तद्वदर्चिरादिकानन्यान्नित्यवैकुण्ठभृत्यान्निजगदुः। तेन त एव मुख्या अर्चिरादयः। प्रसिद्धाग्न्यादयस्तु तन्नामधारिणस्तदाज्ञानुवर्तिन इति सर्वं रमणीयम् ॥ ५०९ ॥

इति आतिवाहिकाधिकरणम् ॥ १४९ ॥

पद०—भूलोकेशेत्यादि। केऽपि—केचित् पण्डिताः। एतान्—अर्चिरादिकान्। भूलोकेशाग्निपूर्वान्—भूलोकेशो योऽग्निः भुवराख्यान्तरिक्षलोकेशो यो वायुः सुवराख्यद्युलोकेशो य आदित्यः एवमादीन् प्रसिद्धान्। कतिचन भविनो मन्यन्ते—कतिचन सांसारिकदेवविशेषान्मन्यन्ते। तत्र युक्तिमाह शब्दैक्ये अत्र तदभिमन्त्रन्तराणां प्रक्लृप्तिर्गुर्वी भवति हि—अग्न्यादिशब्दानां स्थलान्तर इव एकरूपत्वे सत्यपि अत्र केवलं अग्न्यादिदेवताभिमन्त्रन्तराणामसांसारिकाणामग्न्यादिशब्दवाच्यत्वकल्पनायां गौरवं स्पष्टं हि। तस्मात् प्रसिद्धसांसारिकाग्न्यादय एवैतेऽर्चिरादय इत्यर्थः। अन्ये च—न्यायविचक्षणा अन्ये आचार्यास्तु। अमानवस्य—आतिवाहिकेष्वन्यतमस्य विद्युत्पुरुषस्यामानवसंज्ञस्य। स्वपदगतपरब्रह्मनेतृत्वदृष्ट्या—श्रीवैकुण्ठाख्यस्वस्थानावस्थितपरब्रह्मभूतवासुदेवप्रापकत्वदर्शनेन। नित्यत्वात्—अप्राकृतत्वात्। तद्वत्—तत्तुल्यतयैव। अखिलानेतान्—सर्वानेतानर्चिरादिपुरुषान्। नित्यवैकुण्ठभृत्यान्—नित्यसूरिभूतान् ब्रह्मविदतिवहने वैकुण्ठेन भगवता नियुक्तान्। निजगदुः। अयमाशयः—अमानवस्य दिव्यलोकगतभगवत्प्रापकत्वेन नित्यसूरित्वस्यावश्यकत्वात् तदितरेषां प्राकृतत्वे वैरूप्यापत्तेस्सर्वेऽप्येतेऽर्चिरादयो नित्यसूरिविशेषा एवाग्ननयनादिप्रवृत्तिनिमित्तपौष्कल्येनाग्न्यादिशब्दमुख्यार्थभूताः। प्रसिद्धाग्न्यादयस्तु तन्नामधारिणस्तदाज्ञानुवर्तिन इति ॥ ५०९ ॥

इति आतिवाहिकाधिकरणम् ॥ १४९ ॥

---

## कार्याधिकरणम् ॥ १५० ॥

सूत्रम्—कार्यं बादरिरस्य गत्युपपत्तेः ॥ ५१४ ॥

वैधात्रस्थाननेतॄन्समकथयदिमान्बादरिस्तादृशानां
गत्यौचित्यं तदा स्यान्न खलु विभुजुषामत्र वेद्यं न लभ्यम् ।
सामीप्याद् ब्रह्म चोक्तस्सरसिजवसतिस्तेन सार्धञ्च मुक्तिः
युक्तेत्येतन्न नानाश्रुतिपठितपरस्थानगत्याद्यबाधात् ॥ ५१० ॥

चिन्ता०—अत्र सङ्गतिर्भाष्ये 'अर्चिरादिनैव गच्छति विद्वान् । अर्चिरादिरमानवान्तश्च गण-आतिवाहिको विद्वांसं ब्रह्म गमयतीत्युक्तम् । इदमिदानीं चिन्त्यते । किमयमर्चिरादिको गणः कार्यं हिरण्यगर्भमुपासीनान्नयति उत परं ब्रह्मोपासीनानेव, अथ परं ब्रह्मोपासीनान् प्रत्यगात्मानं ब्रह्मात्मकतयोपासीनांश्चेति विशये' इति । पूर्वं त्रिभिरधिकरणैरर्चिरादेरेकत्वेन गुणोपसंहार उक्तः अधुना द्वाभ्यामधिकरणाभ्यां तस्य स्वरूपं निरूप्यत इति पेटिकाभेदः । तत्र पूर्वमर्चिरादीनामातिवाहिकत्वमुक्तम् इदानीं तेषामातिवाहिकत्वं किंविषयमिति विशेषचिन्ता क्रियत इति द्वयोरेकपेटिकात्वसिद्धिः । तदर्थविचारस्तु—किमर्चिरादिरातिवाहिको गणः कार्यं हिरण्यगर्भमुपासीनानेव नयति, उत परं ब्रह्मोपासीनानेव अथ परं ब्रह्मोपासीनान् प्रत्यगात्मानं ब्रह्मात्मकतयोपासीनांश्चेति । किं परब्रह्मणि प्राप्ये गतिब्रह्मलोकशब्दावुपपद्येते नेति । ब्रह्मोपासीनानामेव गमयितृत्वे 'तद्य इत्थं विदुर्ये चेमेऽरण्ये' इत्यादिवाक्यसामञ्जस्यमस्ति नेति । अत्र पूर्वपक्षमाचष्टे—वैधात्रस्थानेति । बादरिः खल्वत्र पूर्वपक्षवादी स त्वेवं मनुते । आतिवाहिकाः खल्वेते वैधात्रस्थाननेतार इति बादरिस्समकथयत् । तादृशानाम्—विधातृस्थानयोग्यानाम् । तत्र हेतुमाह—गत्यौचित्यमिति । ब्रह्मलोकप्राप्तौ पुरुषार्थे गत्यौचित्यमस्ति । परमात्मप्राप्तौ गमनौचित्यं नास्तीत्याह—न खल्विति । अयमर्थः—सर्वव्यापकस्य भगवत उपासकानामत्रैव किं फलं न लभ्यम् । भगवत्स्वरूपप्राप्तिरेव हि फलम्, सा पुनरत्रैव लभ्यते किमनेन गमनोपदेशेन निरर्थकेन । ननु चतुर्मुखब्रह्मप्राप्तौ विवक्षितायां 'स एनान् ब्रह्म गमयति' इति नपुंसकलिङ्गान्तब्रह्मशब्दो नोपपद्यते तदा ब्रह्माणं गमयतीति वक्तव्यत्वादित्यत्राह—सामीप्यादिति । 'यो ब्रह्माणम्' इति परब्रह्मसम्भवस्य परब्रह्मसामीप्यान्नपुंसकलिङ्गान्तेन ब्रह्मनाम्ना सोऽप्यभिधीयत इति न विरोधः । अत्र 'मानस एत्य ब्रह्मलोकान् गमयति' इति ब्रह्मलोकानिति बहुत्वं पाशाधिकरणन्यायेन नेतव्यम् । लोक-

शब्दोपादानञ्च निषादस्थपतिन्यायेन ब्रह्मैव लोको ब्रह्मलोक इति नेयमिति नानुपपत्तिगन्धः। नचात्र मुक्त्युपदेशानुपपत्तिरिति मन्तव्यमित्याह—तेनेति। अयमर्थः—पूर्वं सरसिजवसतिं प्राप्य तेन सहैव मुक्तिरन्ते स्यादिति। एतत्सर्वं भाष्य एव सुव्यक्तमनूदितमिति नास्माभिः प्रपञ्च्यते। तदेतन्निराकरोति—एतन्नेति। तत्र हेतुमाह—नानेति। 'तद्विष्णोः परमं पदम्' इति श्रुतिपठितपरस्थानगमनस्य नानाश्रुतिसिद्धत्वाच्छ्रुतिबाधो न न्याय्य इति। शेषं भाष्ये॥ ५१०॥

पद०—वैधात्रेत्यादि। बादरिः—एतन्नामा ऋषिः। इमान्—अर्चिरादिकानातिवाहिकान्। वैधात्रस्थानेनेतन्न् समकथयत्—विधातुश्चतुर्मुखस्येदं वैधात्रं तादृशं यत्स्थानं तस्य प्रापकान् अभिहितवान्। तादृशानाम्—वैधात्रस्थानप्राप्तियोग्यानामुपासकानाम्। तदा—बादर्यङ्गीकृतपक्षे। गत्यौचित्यं स्यात्—वैधात्रस्थानस्य परिच्छन्नतया देशविशेषवर्तित्वेन उपासकानां तत्र गमनस्य औचित्यं युक्तत्वं भवेत्। विभुजुषाम्—सर्वव्यापिब्रह्मविदां तु। वेद्यम्—ज्ञेयं ब्रह्म। अत्र न लभ्यं न खलु—अस्मिन् लोके न लभ्यं न। अपितु लभ्यमेवेत्यर्थः। सर्वव्यापकवस्तुलाभाय देशविशेषो गन्तव्यो नहीत्यर्थपरः खल्वितिशब्दः। तर्हि ब्रह्म गमयतीति नपुंसकब्रह्मशब्दप्रयोगोऽनुपपन्नः, तदानीं ब्रह्माणं गमयतीति खलु प्रयोक्तव्यमित्यत्राह—सरसिजवसतिः। चतुर्मुखः। सामीप्यात्—'यो ब्रह्माणं विदधाति पूर्वम्' इति परब्रह्मसम्भवत्वेन तत्सामीप्यात्। ब्रह्म चोक्तः—परब्रह्मनाम्ना नपुंसकब्रह्मशब्देनाभिहित इत्यर्थः। तेन सार्धं मुक्तिश्च युक्ता—'ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे। परस्यान्ते कृतात्मानः प्राप्नुवन्ति परं पदम्॥' इति प्रमाणानुसारेण द्विपरार्धावसाने तेन चतुर्मुखेन साकमस्योपासकस्य परब्रह्मप्राप्तिरूपा मुक्तिः रुचिता। इत्येतन्न—एवमाशङ्कनं न युक्तम्। नानाश्रुतिपठितपरस्थानगत्याद्यबाधात्—'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्' इत्याद्यनेकश्रुतिषु पठितं यत् परब्रह्मस्थानगमनतत्रत्यभोगादिकं तदबाधाद्धेतोः। अन्यथा तद्बाधस्स्यादित्यर्थः॥

मार्गोऽसावर्चिरादिर्गमयति परमं धाम गत्यादियोगात्
ब्रह्मोक्तेर्मुख्यभावादिति तु निरणयज्जैमिनिर्युक्तमेतत्।
वक्तव्यं त्वत्र किञ्चिन्नयति परविदस्स्वान्वितब्रह्मनिष्ठान्
तद्देहस्वात्मनिष्ठानपि मुखभिदयामी च सम्पूर्णनिष्ठाः॥ ५११॥

चिन्ता०—बादरिमतप्रतिक्षेपकस्य जैमिनेः पक्षमनूद्य शिष्याणां विशदप्रतिपत्त्यर्थं वक्तव्यशेषमपि तत्राचष्टे—मार्ग इति। असावर्चिरादिर्मार्गः परमं धाम 'तद्विष्णोः परमं पदम्' इति श्रुतिसिद्धं

वैकुण्ठाख्यं परं धाम गमयति। अथवा वैकुण्ठवासिनम् 'अथ यदतः परो दिवो ज्योतिर्दीप्यते' इति दिव्यलोकवासिनं निरतिशयदीप्तियोगेन धामशब्दवाच्यं परमपुरुषमेव गमयति। तत्र हेतुमाह–गत्यादीति। दिव्यस्थानस्य तत्स्थानवासिनः परमपुरुषस्य च गमनेन प्राप्यत्वसम्भवात्। न केवलं योग्यत्वेनायमर्थः सिध्यति, अपितु नपुंसकलिङ्गान्तस्य ब्रह्मशब्दस्य मुख्यत्वाच्चेति दर्शयति–ब्रह्मोक्तेरिति। भगवाञ्जैमिनिः परं ब्रह्मप्राप्नुवतामेवैषा गतिरिति निरणैषीत्। उक्तमर्थमङ्गीकृत्यैव तत्र कञ्चिद्विशेषं वक्तुं सत्य(युक्त ?)शब्दं प्रयुक्तवानाचार्यः। तदेवाह–वक्तव्यमिति। प्रतिज्ञातमेव वक्तव्यं प्रकटयति–नयतीति। अयमर्थः–द्विविधाः खलु ब्रह्मनिष्ठाः। स्वात्मशरीरकपरमात्मोपासकाः केचित्। परमात्मशरीरभूतस्वात्मनिष्ठाः परे। द्विविधानपि तान्परविदो मुखभेदेन ब्रह्मनिष्ठानर्चिरादिमार्गो गमयतीति जैमिनेरभिप्रेतोऽर्थः। ननु तर्हि विषमोपासकयोर्द्वयोस्सम्पूर्णब्रह्मनिष्ठत्वं कथमित्याशङ्क्याह–अमी चेति। विशेषणविशेष्यभाववैपरीत्योपदेशमात्रमेवात्र क्रियते। उभयत्रापि ब्रह्मणःप्राधान्यं जीवस्य तद्विशेषणत्वमप्येकरूपमेवेत्यैकार्थ्यसिद्धिः। यथा 'रामानुजं लक्ष्मणपूर्वजञ्च' इत्यादिषूपदेशवैपरीत्येऽप्यर्थतत्त्वमेकरूपमेव। तदिदं सर्वमभिप्रेत्योक्तं सूत्रकारैः 'अप्रतीकालम्बनान्नयतीति बादरायणः' इति ॥ ५११ ॥

पद०—मार्गोऽसावित्यादि। असावर्चिरादिर्मार्गो गत्यादियोगात् ब्रह्मोक्तेर्मुख्यभावात् परमं धाम गमयति इति तु जैमिनिर्निरणयत्—असावर्चिरादिमार्गः परब्रह्मणोऽपि स्थानविशेषादीनां नानाश्रुतिसिद्धत्वेन तत्र गमनादिसम्भवात् नपुंसकब्रह्मशब्दस्य स्वरूपगुणकृतबृहत्त्वरूपप्रवृत्तिनिमित्तपौष्कल्येन परवस्तुन्येव मुख्यवृत्तेश्च तदीयं तेजोरूपमप्राकृतं स्थानं ब्रह्मात्मकं वा धाम गमयतीत्येवं जैमिनिर्निश्चिकाय। एतत्–जैमिनिमतम्। युक्तम्—युक्तियुक्तं प्रमाणबद्धञ्चेत्यर्थः। किन्तु अत्र–जैमिनिमते। किञ्चिद्वक्तव्यम्–किञ्चिद्विवरणीयमस्तीत्यर्थः। स्वान्वितब्रह्मनिष्ठान् तद्देहस्वात्मनिष्ठानपि मुखभिदया परविदो नयति—स्वात्मशरीरकब्रह्मोपासका ब्रह्मशरीरभूतस्वात्मोपासकाश्चेति द्विविधाः खलु ब्रह्मनिष्ठाः। एवं प्रकारभेदेन द्विविधानपि परमात्मोपासकान् नयत्यातिवाहिकगणः। कुत एवमिति चेत् अमी च सम्पूर्णनिष्ठाः–उक्ता द्विविधा अप्यमी उपासकास्सम्पूर्णब्रह्मोपासकाः। अतो द्विविधानपि नयतीति जैमिनिहृदयमिति। अस्मिन्नुपासनप्रकारद्वयेऽपि ब्रह्मप्राधान्यं जीवस्य तद्विशेषणत्वमप्येकरूपमेवेत्यैकार्थ्यसिद्धेः। 'रामानुजं लक्ष्मणपूर्वजञ्च' इतिवदुपदेशद्वयेऽपि ऐकार्थ्येऽपि सम्भावितविग्राह्यग्रहणं कार्यमित्यभिप्रायेणैव 'अप्रतीकालम्बनान्नयतीति बादरायणः' इति प्रतीकालम्बनभिन्नत्वेनोपासकसंग्रहणस्य सूत्रकारैः कृतत्वाच्च द्विविधानप्युपासकान्नयतीत्ययं विशेष इति भावः ॥ ५११ ॥

ध्यायेयुर्ये च जीवान् प्रकृतिशबलितान् केवलान्वा यथेष्टं
द्वेधापि ब्रह्मदृष्ट्या जडनिवहमपि स्वेन यद्वान्यदृष्ट्या ।
ते सर्वे हि प्रतीकप्रणिहितमनसो नार्चिराद्यध्वयोग्याः
ब्रह्मोपास्तेश्च लिङ्गं गतिरियमनघा सूत्रिता पूर्वमेव ॥ ५१२ ॥

चिन्ता०—प्रतीकोपासका इति केषां वचनमप्रतीकोपासका इति च केषामित्याशङ्क्य तद्विभागं दर्शयित्वा तत्राप्रतीकोपासकानामेवार्चिरादिमार्गेण मुक्तिनियमं दर्शयति—ध्यायेयुरिति । प्रकृतिशबलिताञ्जीवान् केवलान्वा तानेव जीवान् द्वयोरपि पक्षयोर्ब्रह्मदृष्ट्या तानेव जीवान् ये ध्यायेयुः । तथा जडनिवहमपि स्वेन रूपेण वा यद्वा अन्यदृष्ट्या ध्यायेयुः । ते षड्विधत्वेन विभक्तास्सर्वेऽपि प्रतीकप्रणिहितमनसः । ते पुनरर्चिराद्यध्वयोग्या न भवन्ति । अत एव 'अप्रतीकालम्बनान्नयति' इति सूत्रकारः प्राह । किमियं राजाज्ञेत्याशङ्क्य सूत्रकारसम्मत्यैवास्माभिरभिधीयत इति दर्शयति—ब्रह्मेति । अयमर्थः—पूर्वं पञ्चाग्निविद्यानिरूपणप्रकरणे किमियं ब्रह्मविद्या उत जीवविद्येत्याशङ्क्य 'श्रुतोपनिषत्कगत्यभिधानाच्च' इति सूत्रेण ब्रह्मविद्यात्वं प्रतिष्ठापितम् । अयमत्र सूत्रकारस्य भावः—इयं ब्रह्मविद्या न चेदर्चिरादिमार्गगमनं नोपदिश्येत ब्रह्मविद्यासाधारणत्वादर्चिरादिमार्गगमनस्य । उपदिश्यते चात्रार्चिरादिमार्गगमनम् । तेन पञ्चाग्निविद्या ब्रह्मविद्येति । अव्यभिचरितं हि लोके धूमादिकं लिङ्गम् । तेन ब्रह्मविदामेवार्चिरादिगमनमिति न्याय्योऽयं मार्ग इति सर्वैरप्येतदनुसरणं न्याय्यमिति । ननु ब्रह्मोपासकानामेवार्चिरादि-मार्गेण गमनमित्युक्तम् इदं नोपपद्यते पञ्चाग्निविद्यायां 'पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' इत्यादिना शरीरात्मविवेकं प्रतिपाद्य 'तद्य इत्थं विदुः' इति तेषामप्यर्चिरादिराम्नायते । ते च प्रकृतिवियुक्तात्मस्वरूपोपासकाः । तेषां स्वात्मानन्दानुभवरूपः कैवल्याख्योऽपि मोक्षोऽस्तीति । अयमेव मोक्षः श्रीविष्णुपुराणे 'योगिनाममृतं स्थानं स्वात्मसन्तोषकारिणाम्' इत्युच्यते । तस्मात्तेऽप्यर्चिरादिमार्गेण परमपदं गत्वा भगवदनुभवरहिताः क्वचिद्देशे स्वात्मानुभववन्तस्तिष्ठन्तीति तदिदमसारम् । पञ्चाग्निविद्यायाः परमात्मशरीरभूतस्वात्मोपासनपरत्वस्योपक्रमादितात्पर्यलिङ्गेन प्रतिपादितत्वात् । विस्तरस्तु भाष्यादौ द्रष्टव्यः । यत्तूक्तं 'योगिनाममृतं स्थानम्' इति तत्रापि प्रमाणविरोधोऽस्ति । यथा भगवान्पराशरः—'प्राजापत्यं गृहस्थानां ब्राह्मं सन्न्यासिनां स्मृतम्' इत्युक्त्वा ततउपरि 'योगिनाममृतं स्थानम्' इति जीवात्मानुसन्धायिनाममृतशब्दवाच्यस्थानविशेषप्राप्तिमुक्त्वा पुनः 'एकान्तिनस्सदा ब्रह्म ध्यायिनो योगिनो हि ये । तेषां तत्परमं स्थानं यद्वै पश्यन्ति सूरयः ॥' इति ब्रह्मोपासकानामेव परमपदप्राप्ति-

माह। अत्र 'योगिनाममृतं स्थानम्' इत्यमृतशब्दो जीवात्मस्वरूपपरश्चेत् तस्य नित्यत्वादमृतशब्द-वाच्यतोपपत्तिः। स्थानशब्दस्वारस्याद्देशविशेषपरश्चेत् 'अपाम सोममृता अभूम' इत्यादिवदमृत-शब्दस्यौपचारिकत्वम्। वदन्ति हि 'आभूतसम्प्लवस्थानममृतत्वं हि भाष्यते' इति 'ये तु शिष्टास्त्रयो भक्ताः फलकामा हि ते मताः। सर्वे च्यवनधर्माणः प्रतिबुद्धस्तु मोक्षभाक्॥' इति नित्यत्वानित्यत्वनियामकं वचनम्। परमपदत्वे युक्तिविरोधमप्युपपादयामः। परिकल्पितः केवलो नाम जीवोपासकः परमपुरुषं प्राप्यापि तदनुभवं मुक्त्वा दिवाकीर्त्यवदवस्थितः किं सर्वकर्मविनिर्मुक्तः, उत कर्मावशेषवान्। सर्वकर्मविनिर्मुक्तश्चेत् ब्रह्मानुभवविच्छेदो न स्यात्। स्वाभाविकत्वादसङ्कुचितब्रह्मानुभवस्य तद्विच्छेदस्यचौपाधिकत्वाच्च। सर्व-कर्मविनिर्मुक्तस्यापि ब्रह्मानुभवविच्छेदे तस्यैव स्वाभाविकत्वमङ्गीकार्यम्। तथा च सिद्धान्तविरोधः। कर्म मा भूत्कारणम्, अन्यदेव किमपि ब्रह्माननुभवकारणं स्यादिति चेत् तत् किं विशेषतो वद। भगव न्निग्रह इति चेत् स तु निग्रहस्सहेतुको वा निर्हेतुको वा निर्हेतुकश्चेत् निर्हेतुकानुग्रहं सिद्धान्तमुक्त्वा निर्हेतुकं निग्रहं वदन् भवानपहास्य एव। सहेतुकश्चेद् हेतुर्वाच्यः। कर्म चेद् दत्तोत्तरमेतत्। भगवदिच्छैव चेत् परमकारुणिको भगवान् सर्वकर्मविनिर्मुक्ते तस्मिन्निग्रहं वाञ्छतीति भवदीयैव वाञ्छा। तर्हि जीवस्तु स्वेच्छया भगवन्तं मुक्त्वा वर्तत इति वदाम इति चेत् तच्चायुक्तम्। सर्वकर्म-विनिर्मुक्तो जीवो 'रसो वै सः। रसं ह्येवायं लब्ध्वानन्दी भवति' इति निरतिशयानन्दरूपं परमात्मानं मुक्त्वा खद्योतकल्पं स्वात्मानमनुभवतीत्यसम्भवदुक्तिकमेवैतत्। अनादिवासनावशादेत-त्सम्भवतीति चेत् सैव दुर्वासना पापमिति स्यादयं संसारीति न परमपदप्रवेशप्रसङ्ग इत्युपरम्यते। एवं सत्सम्प्रदायोऽपि निरूप्यः। अत्र केचिदाचक्षते—'जीवोपासकानामर्चिरादिगतिरस्ति। भाष्य-कारैरेव ब्रह्मोपासकव्यतिरेकेण जीवोपासकमुक्त्वा द्वयोरप्यर्चिरादिगमनमस्तीति भाष्य एव व्यक्तमभि-धानात्। तेनासावर्चिरादिमार्गेण गत्वा भगवन्तं प्राप्य यथोपासनं फलमिति न्यायात् त्यक्त्वैव भगवदनुभवं परमपदे क्वापि कोणे स्थित्वा स्वपयोधरपायिधेनुवदात्मानमेवोपभुङ्क्ते। न पुनःपरमपुरुषो-पभोगं नियमेन प्रतिपद्यते' इति। तेन 'पतिं विश्वस्य' इत्युक्तपरमपुरुषभोगाभावात् पतिपरित्यक्त-योषित्साधर्म्यमप्यस्याचक्षते तदसारम्—सूत्रविरोधाद् भाष्यवचनविरोधात् प्रमाणविरोधात् युक्तिविरो-धात् सम्प्रदायविरोधाच्च। तथा हि पञ्चाग्निविद्यायां 'श्रुतोपनिषत्कगत्यभिधानाच्च' इति सूत्रेणार्चिरादि-गत्युपदेशात् पञ्चाग्निविद्यायाः केवलजीवविद्यात्वनिराकरणेन ब्रह्मविद्यात्वं प्रसाधितम्। अयमर्थः—अर्चि-रादिमार्गस्य ब्रह्मविद्यैकान्तत्वात् सेयं पञ्चाग्निविद्या ब्रह्मविद्येति। तेन जीवविद्यायां नार्चिरादिमार्गेण परमपदगमनगन्धः। तदधिकरणभाष्यविरोधोऽपि तत्रैव द्रष्टव्यः। अत एव प्रजापतिवाक्ये ब्रह्मप्राप्ति-रूपफलनिर्देशो ब्रह्मविद्याफलेनोपसंहार इति भाष्यकाराः प्राहुः। अत्राप्यातिवाहिकप्रसङ्गे भाष्यकारैरेव

ब्रह्मविदामेवार्चिरादिगमनमिति सुव्यक्तमभिधीयते । अत्र 'केवलं वा चिद्वस्तु' इति सन्धिविशेषादकार-प्रश्लेषाप्रश्लेषाभ्यां चिदचितोर्द्वयोरपि ग्रहणम् । अयमत्र भावः—स्वशरीरकपरमात्मोपासनं परमात्मशरीरभूत-स्वात्मोपासनमित्युभयमप्यर्थदैकमेव । तेन परमात्मशरीरभूतस्वात्मोपासकस्यापि ब्रह्मोपासकत्वादर्चिरादि-गमनोपदेशो न विरुध्यते । केवलचिन्मात्रोपासकस्तु प्रतीकोपासकत्वात् प्रागेव निरस्तः । प्रतीक एकदेशः चिदचिच्छरीरके ब्रह्मणि चिदचितोरेकदेशत्वात् । अतो जीवोपासकोऽपि प्रतीकोपासकः । एवमेतस्मिन्नधिकरणे त्वेतस्यार्थस्य भाष्यकारैरेव द्विस्त्रिरभिधानात्. केवलजीवोपासकस्य प्रतीकोपासकत्वेन निरस्तत्वात् परमात्मश-रीरभूतस्वात्मोपासकस्याप्रतीकोपासकत्वेन ब्रह्मवित्त्वादर्चिरादिमार्गेण ब्रह्मप्राप्तिरभिहितेत्यलं विस्तरेण ॥५१२ ॥

पद०—प्रतीकालम्बना विभ्रियन्ते—ध्यायेयुरित्यादिना । ये च—उपासकाश्च । यथेष्टम्—स्वेच्छानु-सारेण । प्रकृतिशवलितान् जीवान्—प्रकृतिसंयुक्तान् जीवात्मनः । केवलान् जीवान् वा—प्रकृतिवि-युक्तान् जीवात्मनो वा । ध्यायेयुः—उपासते । द्वेधापि ब्रह्मदृष्ट्या ये ध्यायेयुः—प्रकृतिसंयुक्तान् प्रकृति-वियुक्तांश्च द्विविधान् जीवात्मनः ब्रह्मत्वारोपेण ये उपासते । जडनिवहमपि स्वेन यद्वा अन्यदृष्ट्या ये ध्यायेयुः—प्रकृतिप्राकृतवस्तुजातमपि स्वरूपेण ये उपासते पक्षान्तरेण वस्त्वन्तरारोपेण वा उपासते । प्रतीकप्रणिहितमनसस्ते सर्वे अर्चिराद्यध्वयोग्या न ह—प्रतीकोपासनपरा उक्ताप्यद्विधा अप्युपासकाः अर्चिरादिमार्गयोग्या न भवन्ति । अनघा इयं गतिश्च पूर्वमेव ब्रह्मोपास्तेर्लिङ्गं सूत्रिता—पुनरावृत्त्यादि-दोषरहितार्चिरादिकेयं सरणिः प्रथमाध्याय एव प्रकरणविशेषस्य ब्रह्मपरत्वस्थापनार्थं 'श्रुतोपनिषत्कगत्याभि-धानाच्च' इति सूत्रे श्रुतोपनिषत्कानां ब्रह्मविदामसाधारणी या अर्चिरादिगतिस्सास्मिन्प्रकरणे प्रतिपाद्यते अतोऽपीयं ब्रह्मविद्येत्येवमर्थके ब्रह्मोपासनस्य ज्ञापकलिङ्गतया ब्रह्मविदामेवासाधारणीति सूत्रकारेण प्रत्यपादि । अतश्चेयं गतिर्नार्वाचीनकल्पितसगुणादिब्रह्मनिष्ठप्रापिकेति भावः ॥ ५१२ ॥

प्रत्यापत्तिप्रकारः प्रतिनियतिमती कर्मयोगादिनिष्ठा
विद्याभेदाधिकारः परभजनवलान्मुक्तिविघ्नोपशान्तिः ।
अन्त्यावस्थाव्यवस्था पृथगयनगतौ विश्रमाप्तिर्विभक्ता
साक्षान्मुक्तिः क्रमाद्वेत्यखिलमगतिकैरप्रणोद्यं परैश्च ॥ ५१३ ॥

चिन्ता०—अत्र सर्वं मिथ्येति वादिनां मृषावादिनामपि श्रुतिप्रतिपन्नास्सर्वेऽर्थाः प्रमाणानुसारेण स्वीकर्तव्या एव । अथापि व्यावहारिकमिदमथवा सगुणब्रह्मविषयमित्यादिकुत्सितालापः केवलं क्रियते । व्यावहारिकत्वं विकल्पासहत्वाद् ध्वस्तमेव । सगुणमेव ब्रह्म न निर्गुणं तस्याप्रामाणिकत्वात् ।

अतो विषयविभागकथनमपि व्यावहारिकत्वकथनवदपास्तमेव । न्यायनिरूपकाणामिदमेव तत्त्वम् । अथाप्यस्माभिरभिधीयमानसर्वं जातं परैरपि केनापि प्रकारेणाङ्गीक्रियत इति स्वसिद्धान्तस्यानतिलङ्घनीयत्वमाह—प्रत्यापत्तीति। प्रत्यापत्तिप्रकारः—अनादिकालं संसरतो जीवस्याविज्ञातमुक्तादियोगात् मोक्षमार्गे प्रवृत्तिः ।* कर्मयोगादीति—कर्मज्ञानभक्तिनिष्ठा एवं सद्विद्यामधुविद्यान्यासविद्येत्यादिविद्याविशेषेष्वधिकारनियमः । भगवद्भक्त्यैव मोक्षविघातकदुरितोपशान्तिः । अन्त्यावस्थाव्यवस्था केचित्प्रारब्धदेहावसाने मुच्यन्ते अपरेतु कर्मानुसारात् तद्देहाद्देहान्तरे । पृथगयनगतौ धूमादिमार्गेऽर्चिरादिमार्गे वा चन्द्रसूर्यादिदेशविशेषे विश्रमाप्तिः केषाञ्चित् साक्षान्मुक्तिः सद्विद्यादहरविद्यानिष्ठानाम्, क्रमात् मधुविद्यानिष्ठानाम् । एतादृशं सर्वमप्यौपनिषदवाक्यप्रसिद्धं भेदात्मकं कार्यजातं निर्विशेषवादिभिरपि तत्तदर्थप्रतिपादकश्रुतिनिर्वाहार्थमप्रणोद्यमेव । केवलं व्यावहारिकत्वाद्युद्घोषणमेवावशिष्यत इति ॥ ५१३ ॥

पद०—प्रत्यापत्तिप्रकार इत्यादि । प्रत्यापत्तिप्रकारः—अनादिकालं संसरतो जीवस्य अविज्ञातमुक्तादियोगात् मोक्षमार्गे प्रवृत्तिः । प्रतिनियतिमती कर्मयोगादिनिष्ठा—अधिकारिभेदेन व्यवस्थायुक्ता कर्मयोगज्ञानयोगयोरन्यतरनिष्ठा क्रमेणोभयनिष्ठा च तया लब्धाधिकारस्य भक्तियोगनिष्ठा त्रिष्वेतेष्वज्ञानाशक्त्यादिभिरनधिकारिणो न्यासाख्यविद्याविशेषनिष्ठा चेत्यर्थः । विद्याभेदाधिकारः—सदक्षरदहरमधुविद्यादिषु साक्षाद्ब्रह्मप्राप्तिकामनावसुत्वादिप्राप्तिपूर्वकब्रह्मप्राप्तिकामनारूपाधिकारविशेषः । परभजनबलात् मुक्तिविघ्नोपशान्तिः—परमात्मोपासनसामर्थ्येनैव निसर्गप्राप्तपरमपुरुषार्थविरोधिनिश्शेषकर्मविनाशः । अन्त्यावस्थाव्यवस्था—अन्तिमप्रत्ययस्य भक्तविषयएव व्यवस्थितत्वम् । चिन्तामणिस्त्वेवम्—'अन्त्यावस्थाव्यवस्था केचित्प्रारब्धदेहावसाने मुच्यन्ते अपरे तु कर्मानुसारात् तद्देहाद्देहान्तरे' इति । अयनगतौ पृथग्विभक्ता विश्रमाप्तिः—देवयानपितृयाणरूपमार्गगमनसमये भिन्नभिन्नाकारतया पूर्वमस्माभिर्विभक्ता

---

* एतदुत्तरम् तथा प्रतिनियतिमती कर्मयोगादिनिष्ठेति—अत्र प्रतिनियमो नाम फलसङ्गकर्तृत्वाभिमानरहितत्वम् । आदिशब्देन ज्ञानयोगो विवक्ष्यते । विद्याभेदाधिकारः—सद्विद्यामधुविद्यादिषु यथारुच्यधिकारः । परभजनबलादिति—'तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ' इत्युक्तप्रकारेण मुक्तिविघ्नभूतानां कर्मणामुपशान्तिः। अन्त्यावस्थाव्यवस्थेति 'वाङ्मनसि दर्शनात्' इत्याद्युक्तमृत्युपक्रमप्रकारः। पृथगयनगताविति—'य एवं विद्वानुदगयने प्रमीयते स आदित्यस्य सायुज्यं गच्छत्यथ यो दक्षिणे प्रमीयते स चन्द्रमसस्सायुज्यं गच्छति' इति विभक्ता विश्रमाप्तिः । साक्षान्मुक्तिः क्रमाद्वेति—सद्विद्यानिष्ठानां साक्षान्मुक्तिः । मधुविद्यानिष्ठानां क्रमादिति विभागः । एतदखिलं परैर्मायावादिभिरप्रणोद्यमपह्नोतुमशक्यं तत्तत्प्रतिपादकप्रमाणानां बाधितुमशक्यत्वादित्यर्थः । प्रमाणविरोधविस्तरस्तु भाष्यादौ द्रष्टव्यः । एतादृशं सर्वमप्यौपनिषद्वाक्यप्रसिद्धं भेदात्मकं कार्यजातं निर्विशेषवादिभिरपि तत्तदर्थप्रतिपादकश्रुतिनिर्वाहार्थमप्रणोद्यमेव । केवलं व्यावहारिकत्वाद्युद्घोषणमेवावशिष्यत इति ॥ ५१३ ॥ इति क्वचित् कोशे चिन्तामणिर्दृश्यते ।

आदित्यचन्द्रादिषु विश्रमार्धिः । मुक्तिस्साक्षात्, यद्वा क्रमात्—वसुत्वादिप्राप्तिक्रमात् । इति—एवंरीत्या प्रतीयमानम् । अखिलम्—अर्थजातम् । अगतिकैः—स्फुटप्रमाणप्रतिपन्नत्वेनातीन्द्रियार्थविषयत्वेन प्रमाणान्तराविरोधेन च आन्यपर्यकल्पकहेतुशून्यैः । परैश्च—मृषावादिभिरपि । अप्रणोद्यम्—अप्रत्याख्येयमेव । प्रमाणप्रतिपन्नस्य सर्वथा त्याज्यत्वायोगादिति भावः ॥ ५१३ ॥

पन्थानं देवयानं तमिममधिगतः पश्चिमे देहपाते
तत्त्वस्तोमांस्तमोऽन्तानतिपतति तरत्यापगां तत्र दिव्याम् ।
दिव्यं देहादि लब्ध्वा जनिलयरहितं याति विष्णोः पदं तत्
पर्यङ्कारोहणान्तां भजति बहुमतिं ब्रह्मसंवादधन्यः ॥ ५१४ ॥

चिन्ता०—इत्थमर्चिरादिमार्गेणोत्क्रान्तः क्रमाद् भगवतो वासुदेवस्य दिव्यसिंहासनोपान्तमधिगच्छतीत्याह—पन्थानमिति । तमिमं देवयानाभिधानं पन्थानं पश्चिमे देहपाते प्राप्तस्तमोऽन्तान् पृथिव्युपक्रमांस्तत्त्वस्तोमानतिक्रामति । विरजाभिधानां दिव्यामापगाञ्च तरति । तदनन्तरं दिव्यं देहादि लब्ध्वा जनिलयरहितमुत्पत्तिविनाशरहितं विष्णोस्तत्पदं याति 'अकृतं कृतात्मा ब्रह्मलोकमभिसम्भवामि' इति श्रुतेः । अयं तु ब्रह्मसंवादधन्यः पर्यङ्कारोहणान्तां बहुमतिञ्च भजति ॥ ५१४ ॥

पद०—पन्थानमित्यादि । पश्चिमे—चरमे । देहपाते—प्रारब्धदेहावसाने । तमिमं देवयानं पन्थानमधिगतः—एतावता विचारितं श्रुतिसिद्धं देवयानाख्यं मार्गं प्राप्तो ब्रह्मवित् । तमोऽन्तान्—मूलप्रकृतिपर्यन्तान् । तत्त्वस्तोमान्—पृथिव्यादितत्त्वप्रपञ्चान् । अतिपतति—अतिक्रामति । तत्र—प्राकृताप्राकृतदेशमध्ये । दिव्याम्—स्वावगाहिनां सूक्ष्मकर्मवासनानिवर्तनीम् इतरगङ्गादिनदीभ्योऽतिविलक्षणाम् । आपगाम्—विरजानदीम् । तरति । दिव्यम्—अप्राकृतम् । देहादि—देहेन्द्रियादिकम् । लब्ध्वा—प्राप्य । जनिलयरहितं विष्णोस्तत्पदं याति—'अकृतं कृतात्मा ब्रह्मलोकमभिसम्भवामि' इत्यादिप्रमाणेन नित्यत्वेनावगततयोत्पत्तिनाशरहितं भगवतश्श्रुतिप्रसिद्धं स्थानविशेषं प्राप्नोति । ब्रह्मसंवादधन्यः—तत्र परब्रह्मणा साकं संवादेन कृतार्थोऽयं मुक्तः । पर्यङ्कारोहणान्तां बहुमतिं भजति—तत्तादृशपरब्रह्माधिष्ठितदिव्यपर्यङ्कारोहणपर्यन्तां तत्कृतां बहुमतिं संमानं प्राप्नोतीत्यर्थः ॥ ५१४ ॥

संघाते नित्यता न क्वचिदपि न पृथिव्यादिभावस्तथात्वे
पर्यङ्काद्यैर्न साध्यं किमपि भगवतः पूर्णनिस्सीमशक्तेः ।
व्याप्तप्राप्त्यर्थमूर्ध्वं गतिरपि विफलेत्यादिकान् हैतुकानां
क्षोदिष्ठक्षीवजल्पाञ्छ्रुतिरुपशमयेदद्भुतार्थस्वतन्त्रा ॥ ५१५ ॥

चिन्ता०—अत्र पञ्चशक्तिमयं दिव्यदेशादिकमनङ्गीकुर्वाणः कश्चिदाह—सङ्घात इति । भवन्तः खलु पञ्चशक्तिमयं दिव्यदेशमाचक्षते । अत्र शक्तिशब्देन दिव्यानि पञ्चभूतान्यभिधीयन्ते । तानि दिव्यानि भूतानि सङ्घातात्मकान्यसङ्घातात्मकानि वा । सङ्घातात्मकत्वे नित्यत्वमेव नास्ति । कृत्स्नस्यापि सङ्घातात्मनो वस्तुनो विनाशित्वेनोपलम्भात् । एवमनित्यत्वे सति नित्यपृथिव्यादिभावो न स्यादित्याह—नेति । अयमर्थः—नित्यानि पृथिव्यादिभूतानि वैकुण्ठस्थानीति भवन्तो वदन्ति तेषां परमाणुरूपत्वे पृथिव्यादिरूपेण विभज्य दर्शनं न स्यात् सङ्घातात्मकत्वे नित्यत्वं न स्यादिति । किञ्च भगवतः पर्यङ्कादिकमप्यस्तीति भवतां सिद्धान्तः तच्च निष्प्रयोजनमित्याह—पर्यङ्काद्यैरिति । तत्र हेतुमाह—पूर्णनिस्सीमशक्तेरिति । राजादीनां पर्यङ्कादिपरिकल्पनं देहजाड्यादिहेतुभूतायासादिपरिहारार्थं शयनासनशेषतया हि दृश्यते परिपूर्णनिस्सीमशक्तेर्भगवतः किमनेन पर्यङ्कादिपरिकल्पनेन । अपि च कृत्स्नदेशव्याप्तिमतो भगवतः प्राप्त्यर्थमूर्ध्वं गतिरपि विफलेत्यादिकान् हैतुकानां हेतुप्रयोक्तॄणां क्षोदिष्ठक्षीवजल्पान् क्षुद्रतममत्तजल्पाञ्श्रुतिरेवोपशमयेत् । श्रुतिप्रतिपन्नेऽर्थे निर्मूलाशङ्का निर्मतीनां दुर्मतीनां वा जायत इति श्रुतिप्रामाण्यवेदिभिरनादरणीयमेव । श्रुतेरीदृशसामर्थ्यं कुत इत्याशङ्क्य परिहरति—अद्भुतेति । अपूर्वार्थाभिधायित्वं श्रुतेर्भूषणं तत्राप्यद्भुतार्थाभिधायित्वमत्यन्तभूषणम् अद्भुतत्वं ह्यत्यन्तदृष्टविसजातीयत्वं तेन बाधकाभावे यथाश्रुतमर्थतत्त्वं निर्णेतव्यं नीतिमद्भिः परवाद्युक्तानि तु बाधकानुमानान्यागमविरुद्धत्वात् स्वयमेवाप्रमाणतामश्नुवत इत्यर्थः । लोके हि द्वीपान्तराद्यागतानां लौकिकार्थप्रतिपादकान्यपि वाक्यान्यपूर्वेष्वर्थेषु प्रमाणभूतान्येव परिगृह्यन्ते । एवञ्च सति वैदिकानि वाक्यानि अद्भुतार्थप्रतिपादकानि किमर्थं तथात्वेन न परिगृह्यन्ते । कारणदोषस्यानाशङ्कनीयत्वाद् बाधकप्रमाणस्य चादृष्टत्वात् । निर्मूलमेवाप्रामाण्यशङ्कायां सर्वोपप्लवप्रसङ्गादिति ॥ ५१५ ॥

पद०—सङ्घात इत्यादि । क्वचिदपि सङ्घाते नित्यता न तथात्वे पृथिव्यादिभावो न—भागवताः खलु भगवतः पञ्चशक्तिमयं दिव्यदेशमाचक्षते तत्र शक्तिशब्देन दिव्यानि पञ्चभूतान्यभिधीयन्ते तानि दिव्यानि भूतानि सङ्घातात्मकानि वा उत असङ्घातात्मकानि वा सङ्घातात्मकत्वे नित्यत्वमेव नास्ति कृत्स्न-

स्यापि सङ्घातात्मनो विनाशित्वेनोपलम्भात् नित्यत्वे च तेषां परमाणुरूपत्वेन पृथिव्यादिरूपेण विभज्य दर्शनं न स्यात्। पूर्णनिस्सीमशक्तेर्भगवतः पर्यङ्काद्यैस्साध्यं किमपि न—परिपूर्णनिरतिशयशक्तिकस्य भगवतः पर्यङ्काद्यैस्साधनीयं किमपि फलं नास्ति। राजादीनां पर्यङ्कादिकल्पनं जाड्यादिहेतुभूतायासादिपरिहारार्थं शयनासनादिशेषतया दृश्यते भगवतस्तु परिपूर्णनिस्सीमशक्तिकतया किमनेन पर्यङ्कादिकल्पनेनेति भावः। व्याप्तप्राप्त्यर्थमूर्ध्वं गतिरपि विफला—किञ्च सर्वदेशव्याप्तियुक्तब्रह्मप्राप्तिसिद्ध्यर्थं देशविशेषवर्तिपरिच्छिन्नवस्तुप्राप्त्यर्थमिवोर्ध्वगतिरपि निष्प्रयोजना। इत्यादिकान्—एवमादिकान्। हैतुकानाम्—हेतुप्रयोक्तॄणाम्। क्षोदिष्ठक्षीबजल्पान्—क्षुद्रतममत्तप्रलापान्। अद्भुतार्थस्वतन्त्रा—लोकदृष्टविसजातीयतया अद्भुतमर्थजातं प्रतिपादयितुं प्रत्यक्षादिप्रमाणवत् समर्थतमा। श्रुतिः—नित्यं श्रूयमाणतया निर्दोषा निगमवाणी। उपशमयेत्—निर्मूलयेत्। अयं भावः—लोके हि द्वीपान्तराद्यागतानां लौकिकार्थप्रतिपादकान्यपि वाक्यान्यपूर्वेष्वर्थेषु प्रमाणभूतान्येव परिगृह्यन्ते एवमेव वैदिकान्यप्यद्भुतार्थप्रतिपादकानि वाक्यानि किमर्थं तथा न परिगृह्यन्ते कारणदोषस्यानाशङ्कनीयत्वात् बाधकप्रमाणस्य चादृष्टत्वात्। निर्मूलमेवाप्रामाण्यशङ्कायां सर्वोपप्लवप्रसङ्गादिति ॥ ५१५ ॥

भावोऽभावश्च यत्रानुपधि समुदितौ तत्र भावी विरोधः
प्रज्ञातव्याप्तरोधेऽप्यधिकनिजबलान्मानतस्स्वार्थसिद्धिः।
दृष्टं सर्वेष्टमेतन्न यदि न हि भवेन्मानमध्यक्षतोऽन्यत
बाधोऽध्यक्षे मिथो वा वटदलशयनाद्यद्भुतं चैवमूह्यम् ॥ ५१६ ॥

इति कार्याधिकरणम् ॥ १५० ॥

चिन्ता०—ननु दृष्टविरोधेऽप्येवं विरोधाभावकथने न कुत्रापि विरोधः स्यादित्याशङ्क्य विरोधसद्भावोदाहरणमाह—भाव इति। यस्मिन्नुदाहरणे भावश्चाभावश्च देशकालाद्युपाधिभेदेनोपदेशान्न विरुद्धौ दृश्येते तौ तूपाधिभेदमन्तरेण यद्यभिधीयेते तदा विरोधस्स्यात्। यथा घटस्स्वदेशेऽस्ति नास्ति परदेशे तथा स्वकालेऽस्ति नास्ति परकाले तथा स्वात्मनास्ति नास्त्यन्यात्मनेत्यविरोधोदाहरणमेतत्। विरोधोदाहरणं तु घटः क्वापि देशेऽस्ति न क्वाप्यस्ति स्वकालेऽस्ति न कदाचिदप्यस्ति स्वात्मनास्ति न सर्वात्मनास्तीति अथवा घटोऽस्ति घटो नास्तीति देशकालादिविभागव्यवच्छेदमन्तरेण अस्तिनास्तीति व्यपदिश्यते। एतादृशान्युदाहरणानि विरुद्धानि। तेन विरोधोदाहरणं नास्तीति न मन्तव्यमित्यर्थः। इत्थं मिथोविरोधोदाहरणमुक्त्वा प्रकृतानुगुण्येन दुर्बलस्यैकस्य प्रबलेनापरेण विरोधोदाहरणमाह—प्रज्ञातेति। 'न हिंस्यात्सर्वा

भूतानि' इति व्याप्तविषयमिदं वाक्यम् एतद्वाक्यार्थस्य व्याप्तिमतोऽपि क्वचिद्वैधहिंसायामुपरोधेऽपि सङ्कोचेऽपि विशेषविषयतया नियतानिजबलात् 'आलभेत' इति वाक्यात् स्वार्थसिद्धिरेव स्यात्। एवं यस्सङ्घा-तस्स विनाशीति दृष्टानुसारेण व्याप्तिर्दिव्यविभूतिनित्यत्वप्रतिपादकप्रमाणबाध्या। यथा नरशिरःपवित्रत्वेन प्राण्यङ्गत्वव्याप्तिः कपालपवित्रत्वप्रतिपादकप्रमाणबलाद् बाध्यते। तेन दिव्यविभूतिनित्यत्वप्रतिपाद-कप्रमाणान्यर्थवन्त्येव। इदं तु लोकदृष्टं सर्वसिद्धान्तिनामपीष्टमिति दर्शयति—दृष्टमिति। एवंप्रकारेणान-ङ्गीकारे दोषमाह—न यदीति। दृष्टप्रक्रियामात्रमेवाङ्गीकृत्य विशेषशास्त्रस्य बाधकत्वानङ्गीकारे शास्त्रं प्रमाणमेव न स्यात्। अध्यक्षतोऽन्यदिति सामान्यनिर्देशोऽनुमानस्याप्युपलक्षणार्थः। उपलभ्यमानेऽप्यर्थे युक्त्यापि तत्रतत्र विशेषोदाहरणे बाधोऽभिधीयते न्यायविद्भिरित्यर्थः। अत्र दोषान्तरमप्याह—बाध-इति। सामान्यविशेषविषययोः प्रमाणयोर्विशेषेण सामान्यस्य बाध्यत्वाभावे सामान्यविशेषविषययोः प्रत्यक्ष-योरपि सामान्यस्य विशेषप्रत्यक्षेण बाधो न भवेत्। आपातदर्शनं सामान्यं सावधाननिपुणनिरूपण-पूर्वकदर्शनं विशेषदर्शनमिति। ननु वटदलशायिनो भगवतो बालस्य जठरे विश्वमिदं वर्तत इत्यत्यन्तविरुद्ध-मभिधीयते तत् कथं शास्त्रसिद्धमिति तथैवाङ्गीकर्तुं शक्यत इत्याशङ्क्याह—वटदलेति। तच्च यथात्य-न्तविरुद्धं न भवति तथैव बुद्धिमद्भिरुचितप्रकारेण योज्यमित्यर्थः॥ ५१२॥

इति कार्याधिकरणम्॥ १५०॥

पद०—भावोऽभावश्चेत्यादि। ननु दृष्टविरोधेऽप्येवं विरोधाभावकथने कुत्रापि विरोध एव न स्यादित्याशङ्क्य विरोधसद्भावोदाहरणं प्रदर्श्यते—भावोऽभावश्चेत्यादिना। यत्र भावोऽभावश्चानुपधि समु-दितौ तत्र विरोधो भावी—यस्मिन्नुदाहरणे प्रतियोगी अभावश्च अनुपधि भिन्नदेशकालाद्युपाधिं विनैव प्रतीयेते तत्र परस्परं विरोधो नियतः। यथा घटोऽस्ति घटो नास्ति अत्राद्य घटोऽस्ति अत्राद्य घटो नास्तीत्यादौ। इत्थं मिथोविरोधोदाहरणमुक्त्वा प्रकृतानुगुण्येन दुर्बलस्यैकस्य प्रबलेनापरेण विरोधोदाहरण-माह—प्रज्ञातेति। प्रज्ञातव्याप्तरोधेऽपि अधिकनिजबलात् मानतस्स्वार्थसिद्धिः—'न हिंस्यात् सर्वा भूतानि' इति व्याप्तविषयं प्रज्ञातं वाक्यम्, एतद्वाक्यार्थस्य व्याप्तिमतोऽपि वैधहिंसारूपार्थस्य विरोधेऽपि सङ्कोचेऽपि विशेषविषयतया नियतनिजबलात् 'आलभेत' इति वाक्यात् स्वार्थसिद्धिरेव स्यात्। एवं यस्सङ्घातस्स विनाशीति दृष्टानुसारेण व्याप्तिर्दिव्यविभूतिनित्यत्वप्रतिपादकप्रमाणबाध्या यथा नरशिरःपवित्रत्वेन प्राण्यङ्गत्वव्याप्तिः कपालपवित्रत्वप्रतिपादकप्रमाणेन बाध्यते तेन दिव्यविभूतिनित्यत्वप्रतिपादकप्रमाणा-न्यर्थवन्त्येव। दृष्टमेतत्सर्वेष्टम्—लोकदृष्टमिदं सर्वसिद्धान्तिनामपीष्टमेव। न यदि अध्यक्षतोऽन्यत् मानं

नहि भवेत्—उक्तरीत्या प्रमाणव्यवस्थानङ्गीकारे प्रत्यक्षभिन्नं शास्त्रादिकं किमपि प्रमाणं न सिध्येत्। अध्यक्षतोऽन्यदिति सामान्यनिर्देशात् अनुमानमप्युपलक्ष्यते। उपलभ्यमानेऽप्यर्थे युक्त्यापि विशेषोदाहरणेन बाधोऽभिधीयते हि न्यायविद्भिः तन्न घटेतेत्यर्थः। अध्यक्षे मिथो बाधो वा न हि भवेत्—सामान्यविशेषविषययोः प्रमाणयोर्विशेषेण सामान्यस्य बाध्यत्वाभावे सामान्यविशेषविषययोः प्रत्यक्षयोरपि आपातदर्शनरूपं सामान्यं सावधाननिपुणनिरूपणपूर्वकदर्शनात्मकविशेषदर्शनेन बाध्यं न स्यात्। ननु वटदलशायिनो भगवतो बालस्य जठरे विश्वमिदं वर्तत इत्यत्यन्तविरुद्धमभिधीयते तत्कथं शास्त्रसिद्धमिति तथैवाङ्गीकर्तुं शक्यत इत्यत्राह—वटदलेत्यादि। वटदलशयनाद्यद्भुतञ्च एवमूह्यम्—वटदलशयनबालोदरविश्ववर्तनाद्याश्चर्यमपि यथा अत्यन्तविरुद्धं न भवति तथैव बुद्धिमद्भिरुचितप्रकारेणालोच्यमित्यर्थः॥ ५१६॥

इति कार्याधिकरणम्॥ १५०॥

---

चतुर्थाध्यायतृतीयपादाधिकरणार्थानामनुक्रमेण निरूपणम्।

एकत्वं ब्रह्मविद्यापरिषदि सुपथोऽधीयमानस्य तस्मिन्
वायौ स्याद्देवलोकश्रुतिरपि वरुणाद्यन्वयो विद्युतोऽधि।
नेतारोऽमानवान्ताः परपदगमने तद्विदां सोऽयमध्वा
तुर्याध्यायस्य पादे सृतिरधिकरणैरित्थमुक्ता तृतीये॥ ५१७॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु अधिकरणसारावल्यां
चतुर्थस्याध्यायस्य तृतीयः पादः

चिन्ता०—अस्मिन्पादे प्रत्यधिकरणं प्रतिपाद्यानामर्थानामनुक्रमं दर्शयति—एकत्वमिति। प्रथमाधिकरणार्थमाह—ब्रह्मविद्यापरिषद्यधीयमानस्य सुपथस्सत्पथस्यैकत्वमिति। अनन्तरं वायुलोकशब्दाभिहितो वायुर्देवलोकश्रुत्याभिधीयते। तृतीयाधिकरणे विद्युत उपरि वरुणेन्द्रप्रजापतीनामन्वयः। चतुर्थे त्वधिकरणेऽमानवान्ताःपरपदगमने नेतार इत्यभिधीयन्ते। पञ्चमस्यार्थमाह—ब्रह्मविदामेवायमध्वेति। पादार्थं

सङ्कलय्याह—तुर्येति । चतुर्थस्याध्यायस्य तृतीये पादे सृतिरर्चिरादिसरणिः पञ्चभिरधिकरणैरित्थमुक्तेति ॥ ५१७ ॥

इति निखिलतार्किकचूडामणिना सर्वतन्त्रस्वतन्त्रेण
श्रीमद्वरदार्यापरनाम्ना कुमारवेदान्ताचार्येण
विरचिते शारीरकाधिकरणचिन्तामणौ
चतुर्थस्याध्यायस्य तृतीयः पादः

पद०—एकत्वमित्यादि । ब्रह्मविद्यापरिषदि अधीयमानस्य सुपथ एकत्वम्—ब्रह्मविद्याप्रकरणेषु बहुध्वाम्नायमानस्यार्चिरादिरूपस्य सत्पथस्यैकत्वं किञ्चिन्न्यूनाधिकभावेऽपि बह्वंशप्रत्यभिज्ञयानुक्तोपसंहारेण सर्वत्रार्चिरादिरेक एव मार्ग इति । अयं 'अर्चिरादिना तत्प्रथितेः' इत्यस्य प्रथमस्याधिकरणस्यार्थः । देवलोकश्रुतिरपि तस्मिन्वायौ स्यात्—वायुशब्दस्थाने श्रुतो देवलोकशब्दोऽपि देवानां लोक इति व्युत्पत्त्या वायुशब्दिते सदागतावेव स्यादिति । अयं 'वायुमब्दात्' इत्यादेर्द्वितीयस्याधिकरणस्यार्थः । वरुणाद्यन्वयो विद्युतोऽधि—वरुणेन्द्रप्रजापतीनां निवेशो विद्युद्देवताया उपरीति । अयं 'तटितोऽधि वरुणः' इत्यादेस्तृतीयस्याधिकरणस्यार्थः । अमानवान्ताः परपदगमने नेतारः—अर्चिरादयोऽमानवपर्यन्ता इमे ब्रह्मलोकगमने गन्तॄणां प्रापयितारो न तु भोगभूमयो मार्गचिह्नानि वेति । अयं 'आतिवाहिकाः' इत्यादेश्चतुर्थस्याधिकरणस्यार्थः । सोऽयं तद्विदामध्वा—उक्तोऽयमर्चिरादिरूपो मार्गः परब्रह्मविदामेवेति । अयं 'कार्यं बादरिः' इत्यादेः पञ्चमस्याधिकरणस्यार्थः । तुर्याध्यायस्य तृतीये पादे इत्थमधिकरणैस्सृतिरुक्ता—चतुर्थाध्यायस्य तृतीये पादे उक्तरीत्या प्रवृत्तैः पञ्चभिरधिकरणैरर्चिरादिसरणिः प्रत्यपादीत्यर्थः ॥ ५१७ ॥

इति श्रीमद्रङ्गनाथशठमथनयतिराजकटाक्षलब्धोभयवेदान्तहृदयस्य भारद्वाजस्य श्रीनिवासराघवदासस्य
(श्रीमदहोबिलमठमहास्थाननिर्वहणधुरन्धर श्रीमद्वेदमार्गप्रतिष्ठापनाचार्य परमहंसपरिव्राजकाचार्य
सर्वतन्त्रस्वतन्त्रोभयवेदान्ताचार्य श्रीभगवद्रामानुजसिद्धान्तनिर्धारणसार्वभौम श्रीलक्ष्मी-
नृसिंहदिव्यपादुकासेवकश्रीवण्शठकोपश्रीशठकोपरामानुजमहादेशिकस्य)
कृतौ अधिकरणसारावलीव्याख्यायां पदयोजनाख्यायां
चतुर्थस्याध्यायस्य तृतीयः पादः

---

## चतुर्थस्याध्यायस्य चतुर्थः पादः

**उक्तं पादैरघानामिति पृथुवपुषस्सूक्ष्ममूर्तेश्च हानं**
**निर्धूतोपाधिराशेर्निरुपधिकमहानन्दमन्त्येन वक्ति ।**
**स्वाविर्भावोऽत्र चिन्त्यस्त्रिभिरधिकरणैश्छन्दवृत्तिस्त्रिभिश्चे-**
**त्येवं द्वे पेटिके स्तस्स्वत उभयमिदं नोपधेर्नाथनिघ्नम् ॥ ५१८ ॥**

चिन्ता०—अत्र चतुर्थाध्याये गतानां पादानामर्थभेदं विभज्यानूद्य चतुर्थस्य पादस्यार्थविशेषं तदन्तर्गतयोस्त्रिकत्वेन विभक्तयोः पेटिकयोरर्थविशेषञ्च दर्शयति—उक्तमिति । तत्र त्रिपाद्यर्थभेदस्तावत्प्रदर्श्यते—पादैरिति । एवम्प्रकारेणाघानां कर्मणां स्थूलवपुषस्सूक्ष्मवपुषश्च हानं क्रमादुपपादितमिति । चतुर्थस्य पादस्यार्थं विभज्य दर्शयति—निर्धूतेति । उपाधिर्देहसम्बन्धस्तद्धर्मसम्बन्धश्च स तु विरजातरणावस्थायां निर्धूतः । एवं निर्धूतोपाधिसमूहस्य निरतिशयानन्दमन्त्येन पादेन वक्ति । अत्र पेटिकाविभागं दर्शयति—त्रिभिरिति । त्रिभिरधिकरणैस्स्वस्वरूपाविर्भावश्चिन्त्यः । पुनस्त्रिभिरधिकरणैस्स्वच्छन्द-कैङ्कर्यभोगोऽभिधीयते । इत्येवम्प्रकारे द्वे पेटिके भवतः । स्वरूपाविर्भावकैङ्कर्यभोगरूपमेतद् द्वितयं स्वतो भवति न कर्माधीनम् । तर्हि कारणाभावे कार्यं कथं स्यादित्याशङ्क्य सर्वकारणं परमात्मानमेवात्र पुरस्करोति—नाथनिघ्नमिति । अयमर्थः—निश्शेषकृत्स्नप्रतिबन्धनिरासे सति भगवानेव जीवस्य गुणाष्टकाविर्भावादिकं स्वयमेव करोतीति न काचिदनुपपत्तिः ॥ ५१८ ॥

पद०—उक्तं पादैरित्यादि । पादैः—चतुर्थाध्यायगतैर्वृत्तैस्त्रिभिः पादैः । इति—प्रतिपादितक्रमेण । अघानां हानं पृथुवपुषो हानं सूक्ष्ममूर्तेर्हानञ्च उक्तम्—प्रथमपादेन पुण्यपापरूपाणां ब्रह्मवित्सम्बन्धिनां सर्वेषां कर्मणां निरसनमुक्तं द्वितीयपादेन स्थूलदेहनिवृत्तिरूपं फलपर्वोक्तं तृतीयपादेन सूक्ष्मशरीरनिवृत्तिरूपं फलपर्व प्रत्यपादीत्यर्थः । अन्त्येन निर्धूतोपाधिराशेर्निरुपधिकमहानन्दं वक्ति—अन्त्येन चतुर्थपादेन निर्धूतो विरजास्नानेन दूरतो निरस्तः उपाधीनां देहसम्बन्धतद्धर्मसम्बन्धादिरूपाणां राशिस्समूहो येन तस्य मुक्तस्य देशकालाद्युपाधिशून्यतया निरतिशयं महानन्दं प्रतिपादयति । अत्र त्रिभिरधिकरणैस्स्वाविर्भावश्चिन्त्यः त्रिभिश्चाधिकरणैश्छन्दवृत्तिश्चिन्त्या इत्येवं द्वे पेटिके स्तः—अत्र पादे प्रथमतः 'सम्पद्याविर्भावः' इत्यादिभिस्त्रिभिरधिकरणैस्स्वस्वरूपाविर्भावो विचार्यः तत उपरि त्रिभिरधिकरणैः स्वच्छन्दकैङ्कर्यभोगो विचारणीयः इत्थमर्थद्वयप्रतिपादनक्रमेण द्वे पेटिके भवतः । इदमुभयं स्वतः उपधेर्न नाथनिघ्नम्—उक्तं स्वरूपाविर्भावकैङ्कर्यभोगरूपमिदमर्थद्वयं स्वतो भवति नतु कर्माद्युपाधिमूलकं भवति, अथापि भगवदायत्तमेवेत्यर्थः ॥ ५१८ ॥

## सम्पद्याविर्भावाधिकरणम् ॥ १५१ ॥

सूत्रम्—सम्पद्याविर्भावस्स्वेनशब्दात् ॥ ४२४ ॥

अश्रान्तस्वप्रकाशं यदिदमहमितिप्रत्यगात्मस्वरूपं
तस्याविर्भावसिद्धौ नतु किमपि फलं स्यात्सुषुप्ताविशेषात् ।
तस्मान्मुक्तस्स्वमन्यद्व्रजति वपुरसौ देववद्रूपशब्दात्
नैवं स्वेनेतिशब्दो ह्यफल इह भवेद्रूपवाचार्थसिद्धेः ॥ ५१९ ॥

चिन्ता०—अत्र पादसङ्गतिरधिकरणसङ्गतिश्च भाष्ये विभज्य दर्शिता 'परं ब्रह्मोपासीनानामात्मानञ्च प्रकृतिवियुक्तं ब्रह्मात्मकमुपासीनानामर्चिरादिना मार्गेणापुनरावृत्तिलक्षणा गतिरुक्ता । इदानीं मुक्तानामैश्वर्यप्रकारं चिन्तयितुमारभते' इति पादसङ्गतिः । 'किम् अस्माच्छरीरात्समुत्थाय परञ्ज्योतिरुपसम्पन्नस्य देवादिरूपवत् साध्येन रूपेण सम्बन्धोऽनेन वाक्येन प्रतिपाद्यते उत स्वाभाविकस्य स्वरूपस्याविर्भावः' इत्यधिकरणसङ्गतिः । तदर्थविचारस्तु—किं 'अस्माच्छरीरात्' इत्यादिवाक्ये मुक्तस्य साध्येन रूपेण सम्बन्धः प्रतिपाद्यते उत स्वाभाविकस्वरूपाविर्भावः । किं स्वाभाविकस्वरूपाविर्भावपरत्वे मोक्षशास्त्रस्य पुरुषार्थावबोधित्वं सम्भवति नेति । किं स्वरूपस्य स्वतोऽपरिच्छिन्नानन्दत्वं सम्भवति नेति । किमानन्दस्वरूपस्य तिरोधानं सम्भवति नेति । किमाविर्भावपरत्वे निष्पत्तिव्यपदेशवैयर्थ्यमस्ति नेति । अत्रापूर्वरूपप्राप्तिः फलमिति वदन् पूर्वपक्षी स्वाभाविकस्वरूपाविर्भावपक्षे दूषणानि दर्शयति—अश्रान्तेति । आत्मस्वरूपं नित्यस्वप्रकाशमेव तस्य पूर्वमेवाविर्भावसिद्धावपूर्वं किमपि फलं न स्यात् नित्याविर्भूतस्याविर्भावान्तरापेक्षाभावात् । किञ्च यदि स्वरूपाविर्भावमात्रान्नित्यसिद्ध एव मोक्षस्स्यात् तर्हि सुषुप्तस्यापि मुक्तिस्स्यात् तस्यापि स्वस्वरूपाविर्भावस्य विद्यमानत्वात् । तदिदं दर्शयति—सुषुप्ताविशेषादिति । एवं परपक्षं प्रतिक्षिप्य स्वाभिप्रेतं प्रकारं दर्शयति—तस्मादिति । अयमर्थः—यथा नित्यमुक्त ईश्वरो रामकृष्णादिविग्रहं परिगृह्णाति एवं मुक्तोऽपि विलक्षणं रूपं परिगृह्णातीति वाच्यमिति । तत्र हेतुमाह—रूपशब्दादिति । रूपशब्दो हि देहवाचित्वादिममेवार्थं दर्शयतीत्यर्थः । एतत्प्रतिक्षिपति—नैवमिति । अस्मिन्प्रतिक्षेपे हेतुमाह—स्वेनेति । अयमर्थः—केवलं रूपेणाभिनिष्पद्यत इति नोच्यते अपि तु स्वेन रूपेणेति । स्वशब्दो ह्यत्र विशेषणत्वेन प्रयुज्यते । स शब्दो यथा न निष्फलः स्यात् तथैवार्थो वाच्य इति । कथमफलत्वमित्याशङ्क्याह—रूपेति । अपूर्वरूपप्राप्तौ रूपेणाभिनिष्पद्यतइत्येतावदेव

वाच्यम् । तेन स्वशब्दसामर्थ्यात् स्वाभाविकरूपाविर्भाव उच्यत इत्यर्थः । स्वाभाविकस्याविर्भावे हि स्वशब्दसाफल्यमिति भावः ॥ ५१९ ॥

पद०—अश्रान्तस्वप्रकाशमित्यादि । अहमित्यश्रान्तस्वप्रकाशं यदिदं प्रत्यगात्मस्वरूपं तस्याविर्भावसिद्धौ सुषुप्ताविशेषात् किमपि फलं न स्यात्तु—अहमहमित्यविच्छिन्ननित्यस्वप्रकाशं यदेतत् प्रत्यगात्मस्वरूपं तदाविर्भावस्य नित्यसिद्धौ सत्यां स्वरूपाविर्भावमात्रस्य सुषुप्तावपि विद्यमानतया ततो विशेषाभावात् अपूर्वं किमपि फलं न भवेत् । तस्मात्—कारणात् । मुक्तः—सर्वबन्धविनिर्मुक्तः । असौ—आत्मा । रूपशब्दात् स्वमन्यत् वपुर्भजति देववत्—'स्वेन रूपेणाभिनिष्पद्यते' इति शरीरवाचिरूपशब्दश्रवणात् स्वकीयं बन्धकालिकशरीराद्विलक्षणमप्राकृतं वपुर्भजति यथा च नित्यमुक्तोऽपि भगवान् रामकृष्णादिविग्रहविशेषं परिगृह्णाति तद्वत् । यद्वा अनुष्ठितस्वर्गसाधनयागस्य पुरुषस्य विलक्षणं देवशरीरं साध्यं सुखैकतानं यथा लभ्यते तद्वत् । नैवम्—एवं न शङ्क्यम् । इह रूपवाचा अर्थसिद्धेस्स्वेनेतिशब्दोऽफलो भवेद्धि—अपूर्वशरीरलाभपक्षे रूपेणाभिनिष्पद्यत इत्येतावदुक्तावपि अपूर्वशरीरलाभरूपार्थप्रत्ययात् स्वेनेतिशब्दो विफल एव भवेद्धि । अतस्तस्य साफल्यं यथा स्यात् तथार्थो वर्णनीयः स्वाभाविकरूपमेवाविर्भवतीत्यर्थवर्णने स्वशब्दस्सफलस्स्यात् अतस्तथैवार्थ इति ॥ ५१९ ॥

नित्यस्वात्मस्वरूपस्थितिरियमभिनिष्पत्तिरित्यूचिवांसः
तन्मात्रं स्यान्न विद्याफलमिति न विदुर्नित्यसिद्धं त्वसाध्यम् ।
सिद्धं साध्यानुवेधादपि भवति फलं सा त्वविद्यादिभङ्गो
यद्वा सिद्धस्य वित्तिस्तदिह न विहतं मुक्तइत्यादिसूत्रम् ॥ ५२० ॥

चिन्ता०—अत्र मृषावादिनां स्वस्वरूपाविर्भाववचनमघटितमिति दर्शयन् स्वपक्षे तस्य सुघटितत्वमेव स्थापयति—नित्येति । अयमत्र भावः—मृषावादिनः किं नित्यात्मस्थितिमेवाभिनिष्पत्तिं वदन्ति किंवा अपूर्वाकारप्राप्तिम् उत्तरत्र भेदवादप्रसङ्गः अतः पूर्व एव कल्पोऽवशिष्यते । सोऽपि न सङ्घटते नित्यस्वात्मस्वरूपस्थितिरियमभिनिष्पत्तिरिति वदन्तस्तन्मात्रं विद्याफलं न भवतीति न विदुः । तन्मात्रस्यानादिसिद्धत्वाद् विद्याफलस्य फलत्वेनागामित्वात् । न ह्यागामिनः पूर्वसिद्धस्य च तादात्म्यं वक्तुं शक्यते व्याघातादिति । तदिदमाह—नित्यसिद्धमिति । ननु यद्यस्मत्पक्षेऽभिनिष्पत्तिर्वक्तुं न शक्यते तर्हि त्वत्पक्षे कथं वक्तुं शक्यत इत्याह—सिद्धमिति । लोके स्वरूपतस्सिद्धमपि साध्यभूतविशेषणानुवेधात् साध्यभावमाटीकते । यथा स्पर्शविशेषादशुद्धस्स्नानादिसाध्येन शुद्धस्वरूपेण स्वयं साध्यत इत्युच्यते एवं

कर्मभिरशुद्धो जीवः कर्मसम्बन्धविनिर्मुक्तरूपेण साध्यत इति वचने को विरोधः । तदिदमाह—साध्यानुवेधादिति । सिद्धमपि वस्तु साध्यानुवेधात्साध्यमित्युच्यते । तथा च प्रोक्षणादिना व्रीह्यादिकं शुद्धभावेन साध्यते । फलस्य स्वरूपमेवात्र दर्शयति—सेति । अत्र सेति स्त्रीलिङ्गनिर्देशोऽभिनिष्पत्तिविवक्षया । इत्थमभिनिष्पत्तिशब्दस्याकारान्तरप्राप्तिमर्थमुक्त्वा प्रतीतिप्राप्तिमप्यर्थतयाचष्टे—यद्वेति । वदन्ति हि लोके तत्तदर्थप्रतिपादकाः अयमर्थ एवं निष्पद्यत इति निर्णीयत इति । तथा चात्रापि स्वेन रूपेणाभिनिष्पद्यत इति स्वाभाविकाकारेण ज्ञायत इत्युक्तं भवति । तेन मुक्तिशब्दस्यास्मत्पक्षे सार्थकत्वात् 'मुक्तः प्रतिज्ञानात्' इत्यादिसूत्रमपि सार्थकमेवेति निगमयति—तदिति । अयमर्थः—अस्मत्सिद्धान्ते जीवस्य सगुणत्वात्तद्गुणे सङ्कोचविकाससद्भावादत्रापूर्वविकासस्यागन्तुकत्वाच्च मुक्तिशब्दप्रयोगस्सुघटित एव । युष्मत्पक्षे निर्गुणस्यात्मनो नित्यस्वयम्प्रकाशत्वादपूर्वाकारप्राप्त्यभावेन पूर्वममुक्तः पश्चान्मुक्त इति वचनमवचनमेव स्यात् । अविद्यानिवृत्तिरपूर्वा विद्यत इति चेत् सा किं ब्रह्मस्वरूपमुत तदतिरिक्ता तदतिरिक्तत्वेऽपि परमार्थरूपा अपरमार्थरूपा वा स्वरूपञ्चेत्तदवस्थमेव दूषणम् । अतिरिक्तत्वेऽप्यपारमार्थ्ये तस्याः प्रध्वंसाभावरूपत्वेनानन्त्यात् । तस्या अपि निवृत्त्यङ्गीकारे निवृत्तिपारम्पर्यादनवस्था । तथा चारोपिततन्निवृत्तिपारम्पर्याङ्गीकारात् तदवस्थ एव नित्यसंसारप्रसङ्गः । परमार्थपक्षे तु द्वैतापत्तिरिति प्रागेवोक्तम् ॥ ५२० ॥

पद०—नित्यस्वात्मेत्यादि । इयमभिनिष्पत्तिर्नित्यस्वात्मस्वरूपस्थितिरित्यूचिवांसस्तन्मात्रं विद्याफलं न स्यादिति न विदुः—'स्वेन रूपेणाभिनिष्पद्यते' इत्युक्ताभिनिष्पत्तिर्नित्यं पूर्वमपि सिद्धमेव यत् स्वात्मस्वरूपं तत्स्थितिरूपैवेत्युक्तवन्तो मायिनो नित्यसिद्धस्वरूपमात्रं विद्यासाध्यं फलं न भवितुमर्हतीति न जानन्ति । नित्यसिद्धं त्वसाध्यम्—यन्नित्यमेव सिद्धं तन्न साध्यं भवितुमर्हति सिद्धसाध्ययोस्तादात्म्यायोगात् । ननु त्वत्पक्षे कथमभिनिष्पत्तिर्वक्तुं शक्यत इति चेत्तत्राह—सिद्धमित्यादि । सिद्धमपि साध्यानुवेधात् फलं भवति—लोके स्वरूपतस्सिद्धमपि साध्यभूतविशेषणानुवेधात् साध्यभावमापद्यते । यथा स्पर्शविशेषादशुद्धस्स्नानादिसाध्यशुद्धिरूपविशेषयुक्तस्वरूपेण साध्य इत्युच्यते एवं कर्मभिरशुद्धो जीवः कर्मसम्बन्धविनिर्मुक्तरूपेण साध्यत इत्यादिवचने न कोऽपि विरोधः । सा तु अविद्यादिभङ्गः—अभिनिष्पत्तिविवक्षया सेति स्त्रीलिङ्गनिर्देशः । अभिनिष्पत्तिस्तु अविद्याकर्मवासनारुच्यादिध्वंसात्मिकैव । अतोऽविद्यादिनिवृत्तिरूपसाध्यानुविद्धतया स्वरूपस्याप्यभिनिष्पत्तिशब्दवाच्यत्वात् साध्यत्वं युक्तमिति भावः । यद्वा सिद्धस्य वित्तिः—पक्षान्तरे, सिद्धस्यापि स्वरूपस्य वित्तिर्निश्चय एवाभिनिष्पत्तिः । युक्त्यायमर्थोऽभिनिष्पन्न इत्यादिप्रयोगात् । अतो देहादिविविक्तज्ञानानन्दस्वरूपगुणकस्वात्मसाक्षात्कार एवाभिनिष्पत्तिरित्युच्यत इति । तत्—तस्मात्कारणात् । इह—अस्मत्पक्षे ।

मुक्त इत्यादिसूत्रं न विहतम्—'मुक्तः प्रतिज्ञानात्' इत्यादिसूत्रं न वैयर्थ्यमापादितं किन्तु सार्थक-मेव। अयं भावः—अस्मत्सिद्धान्ते जीवस्य सगुणत्वात् तद्गुणे सङ्कोचविकाससद्भावात् अत्र पुनर्विकास-स्यागन्तुकत्वात् अभिनिष्पत्तिशब्दवाच्यत्वं सङ्कोचनिवृत्तेर्मुक्तशब्दवाच्यत्वञ्च घटते, युष्मत्पक्षे निर्गुणस्या-त्मनो नित्यस्वयम्प्रकाशत्वादपूर्वाकारप्राप्त्यभावेन पूर्वममुक्तः पश्चान्मुक्त इति वचनमवचनमेव स्यात्, अविद्यानिवृत्तिरपूर्वा विद्यत इति चेत् सा किं ब्रह्मस्वरूपं उतातिरिक्ता प्रथमे अपूर्वाकारत्वं फलत्वञ्च न स्यात् अतिरिक्तत्वे पारमार्थ्ये सद्वितीयत्वम्, अपारमार्थ्ये तन्मूलाविद्यावत्त्वेन मुक्तिरेव न स्यादित्येव-मादिदोषकलुषितत्वात् सूत्राननुरूप्याच्चाविद्यैव गतिरिति ॥ ५२० ॥

स्वाकारान्नित्यभातादधिकसुखतया भाति जीवस्तदानीं
सिद्धाविर्भावमात्रेऽप्यनुविदुरभिनिष्पत्तिवाचः प्रयोगम्।
सङ्कोचात्यन्तहानिर्धियं इयमभिनिष्पत्तिरागन्तुरुक्ता
निष्प्रत्यूहस्वरूपोपधिकमपि तदा स्वेनशब्दः प्रवक्ति ॥ ५२१ ॥

चिन्ता०—ननु जीवस्य स्वरूपाविर्भावो मोक्षश्चेत् तत्स्वरूपं संसारदशायामप्याविर्भूतं मोक्ष-दशायां को विशेषः? तत्रोत्तरमाह—स्वाकारादिति। लोके ह्येकमेव वस्तु पुरस्तात्किञ्चिदनुकूलतया भातम् उत्तरोत्तरं पश्यतः पश्चादानुकूल्याधिक्येनावलोक्यते एवं जीवात्मस्वरूपं नित्यभातमपि प्रथममेक-देशानुकूल्येन प्रतीयते मुक्तिदशायां त्वत्यन्तानुकूल्येन। अयमत्र शब्दान्वयः—नित्यभातात् स्वाकारात् अधिकसुखतया तदानीं मोक्षदशायां जीवो भातीति। न चाभिनिष्पत्तिशब्दस्वारस्यं नास्तीति मन्तव्य-मित्याह—सिद्धेति। प्रयोग एव हि शब्दार्थनिर्णये प्रमाणम् अभिनिष्पत्तिशब्दस्याविर्भावमात्रेऽपि प्रयोगप्राचुर्यमस्तीति प्रागेवोक्तम्। नन्वभिनिष्पत्तिशब्दो ह्यागन्तुकमेव कञ्चिदर्थं वक्ति कोऽयमागन्तुकोऽर्थ इत्याशङ्क्याह—सङ्कोचेति। सङ्कोचात्यन्तहानिः—विकास इत्यर्थः। पूर्वं स्वरूपोपाधिकत्वमुक्तम् इदानीमभिनिष्पत्तिशब्देन सङ्कोचात्यन्तहानेरभिधानान्निष्प्रत्यूहस्वरूपोपाधिकं रूपं स्वेनेतिशब्दः प्रव-क्तीत्यर्थः ॥ ५२१ ॥

पद०—स्वाकारादित्यादि। नित्यभातात्—नित्यं भासमानादपि। स्वाकारात्—ज्ञाना-नन्दस्वरूपगुणात् स्वात्मनः। अधिकसुखतया—पूर्वापेक्षयात्यन्तानुकूलतया। तदानीम्—मोक्षद-शायाम्। जीवः—प्रत्यगात्मा। भाति- भासते। सिद्धाविर्भावमात्रेऽपि—पूर्वमेवसिद्धस्याविर्भावमात्रे-ऽपि। अभिनिष्पत्तिवाचः—अभिनिष्पत्तिशब्दस्य। प्रयोगम्—वाचकतया व्याहारम्। अनुविदुः—

अधिगतवन्तः। परीक्षका इति शेषः। **इयम्**—अस्माभिरुपपाद्यमाना। **आगन्तुः**—बन्धदशाया-मविद्यमाना मुक्तिदशायां विद्यमाना। **धियः**—धर्मभूतज्ञानस्य। **सङ्कोचात्यन्तहानिः**—सङ्कोचस्य सर्ववस्तुसम्बन्धायोग्यतापादकप्रसरणप्रागभावस्यात्यन्तहानिर्निश्शेषनिवृत्तिः। सर्ववस्तुसम्बन्धरूपो विकास-इत्यर्थः। **अभिनिष्पत्तिरुक्ता**—'स्वेन रूपेणाभिनिष्पद्यते' इति श्रुत्या अभिनिष्पत्तिरित्युक्ता। **तदा**—सङ्कोचनिवृत्तिरभिनिष्पत्तिरिति निष्कर्षसमये। **स्वेनशब्दः**—स्वेनरूपेणेति श्रुतौ रूपविशेषणभूतस्स्वेनेति-शब्दः। **निष्प्रत्यूहस्वरूपोपाधिकमपि प्रवक्ति**—निष्प्रतिबन्धकस्वरूपोपाधिकं रूपं प्रवदति। न तावता स्वरूपोपाधिकत्वस्य पूर्वोक्तस्य हानिः, अपितु किञ्चिद्विशेषणमेव दीयते अच्छिद्रघटकार्यं जलाहरणमि-तिवदिति भावः॥ ५२१॥

**प्रायस्स्वस्मिन्स्वदेहिन्यनघगुणनिधौ तद्विभूतिद्वये वा**
**दृष्टं यत्स्यात्समाधौ भवति पृषतवत्तद्धि मुक्तानुभूतेः।**
**कृत्स्नं तच्छर्करौघव्यतिकरितसुधासिन्धुवत् स्वादुभूतं**
**तस्मात्स्वात्मप्रकाशे न फलमिति वदन् कूपकूर्मो घृणार्हः॥ ५२२॥**

चिन्ता०—अत्र कश्चिच्चोदयति 'वेदान्तवादिनामात्माविर्भावो मोक्ष इति सर्वसम्मतम्। तथा च यथा चिन्मात्रब्रह्मवादिनामपूर्वद्रष्टव्याभावात् पुरुषार्थाभावः, तथा भवतामपि सम्पद्याविर्भाव इति नित्यस्वय-म्प्रकाशात्मस्वरूपाविर्भावस्य पुरुषार्थत्वं वदतां पुरुषार्थाभावोऽविशिष्टः, यद्यपि जीवातिरिक्तः परमात्मा द्रष्टव्यतया भवद्भिरङ्गीक्रियते सोऽपि योगदशायां दृष्ट एव तथा च मोक्षदशायां विशेषतो द्रष्टव्याभावात् पुरुषार्थाभाव इति समानमेतत्' इति। तदेतत्प्रतिक्षिपति—प्राय इति। अयमर्थः—जीवस्वरूपसामान्य-महमिति सर्वलोकविदितम्। तथापि स जीवो विभुर्वा अणुर्वा भगवच्छेषभूतो वा अन्यशेषो वा स्वतन्त्रो वा परतन्त्रो वा ज्ञानरूपो वा जडरूपो वा ज्ञानगुणको वा निर्गुणो वा आनन्दात्मको वा आनन्दस्वरूपो वा स च क्षणिकसन्तानमात्रउत स्थिरः स्थिरत्वेऽप्यामोक्षस्थायी अथवा अनुदयास्तमयस्स च कल्पितो वा अकल्पितो वा भिन्नो वा अभिन्नो वा भिन्नाभिन्नो वा इति बहुधा बम्भ्रम्यमाणैर्वादिभिरन्यथान्यथा अभिधा-नादनवधारितस्वरूप एव। तथा च तत्स्वरूपं भगवच्छेषत्वादिना मुक्तिदशायामेव विशेषतोऽवलोक्यते। आस्तामिदं जीवस्वरूपं नेदमेवास्माकं मुक्तिदशायां प्रकाश्यम् अपि तु तदन्तर्यामी पुरुषोत्तमः। तदिदमाह—स्वदेहिनीति। 'यस्यात्मा शरीरम्' 'अन्तःप्रविष्टश्शास्ता जनानाम्' इति निगमशतनिग-दितेन सर्वशरीरत्वेनावगन्तव्यः। तत्स्वरूपमपि श्रवणदशायां यावदवगम्यते न तावदेव मननदशायाम्।

यच्च मननदशायामप्यवगम्यते न तावन्मात्रमेव निदिध्यासनदशायाम् । यच्च निदिध्यासनारम्भे यमनियमासनप्राणायामप्रत्याहाराद्यवस्थायामवलोक्यतेऽतोऽप्यधिकमेव किञ्चित्समाधिदशायाम् । यदुच्यते 'तत्रापि दह्रं गगनं विशोकस्तस्मिन्यदन्तस्तदुपासितव्यम्' इति अत्राप्यपहतपाप्मत्वादिगुणाष्टकाविर्भावे सत्यपि समाध्यवस्थावलम्बनीयं सकलमपि सौख्यं वैकुण्ठवासिनो देवीभूषणायुधपरिजनपरिच्छदादिसकलविशेषणविशिष्टस्य सर्वतः परिवृढस्य 'पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि' इति विभूतिद्वयाधिपत्येन निर्णीतस्य भगवतोऽनुभवसिन्धौ पृषतलवायते । अयमत्र शब्दान्वयः—स्वस्मिन् स्वात्मनि अनघगुणनिधौ स्वदेहिनि परमात्मनि तद्विभूतिद्वये वा नित्यविभूतौ लीलाविभूतौ वा यत् समाधौ योगदशायां दृष्टं तन्मुक्तानुभूतेः पृषतवदेव भवतीति । तेनोभयविभूतिविशिष्टपरब्रह्मानुभूतेरुत्तरकालभावित्वेन पुरुषार्थत्वं युज्यत इति भावः । ननु पूर्वं दुःखत्वेन दृष्टमेव पश्चादपि दृश्यते कथं तस्य पुरुषार्थत्वमित्याशङ्क्याह—कृत्स्नमिति । भगवद्विभूत्यन्तर्गतं वस्तु स्वभावतः प्रतिकूलमेव किञ्चिन्नास्ति अपि तु पित्तोपहतस्य क्षीरमिव कर्मानुबन्धादेतावन्तं कालं प्रतिकूलतया भाता सेयं विभूतिः नित्यविभूतेस्तु भानमेव नाभूत् परञ्ज्योतिरुपसम्पन्नस्य तु सा चेयञ्च विभूतिद्वयं भगवच्छेषत्वानुसन्धानाविर्भावेन निरतिशयसुखात्मकतया भाति । तत्र दृष्टान्तमाह—शर्करेति । विभूतिद्वयमत्र **सुधासिन्धुः शर्करौघः** पुनरपहतपाप्मत्वादिगुणाष्टकविशिष्टो भगवान् । अथवा भगवानेव **सुधासिन्धुः** अपहतपाप्मत्वादिगुणाष्टकपूर्वकाप्राकृतदेवीभूषणायुधपरिजनपरिच्छददेशविशेषादयश्शर्करास्थानीयाः । तथा च सकलविशेषणसम्पन्नस्य श्रीनिवासस्य भगवतो वैकुण्ठवासिनोऽनन्तगरुडविष्वक्सेनादिभिरन्तरङ्गपरिकरैरनवरतसेव्यमानस्य नित्यसेवाहेवाकिनामस्माकं पुरुषार्थाभावमनुवदन्नत्यन्ताप्रसिद्धदेशवासित्वादशेषप्रमाणविशेषानुपलम्भेन कूपोदरकूर्म इत्यपहसन्त्याचार्याः । तस्मादतिघृणार्हः कृपायोग्यः । अनर्थप्रवणजनाः खल्वात्मविद्भिरनुग्राह्याः स्मर्यते हि—'आत्मद्रुहममर्यादं मूढमुज्झितसत्पथम् । सुतरामनुकम्पेत नरकार्चिष्मदिन्धनम् ॥' इति ॥ ५२२ ॥

पद०—प्राय इत्यादि । **स्वस्मिन्**—स्वात्मनि जीवात्मनीत्यर्थः । **अनघगुणनिधौ**—निर्दोषानन्तज्ञानानन्दादिकल्याणगुणाकरभूते । **स्वदेहिनि**—स्वान्तर्यामिणि परमात्मनि । **तद्विभूतिद्वये वा**—तदीयं यत् लीलाभोगविभूतिद्वयं तस्मिन्वा । **समाधौ**—यमनियमादिसषाङ्गविशिष्टसमाधिनिष्पत्तिसमये । **प्रायः**—बाहुल्येन श्रवणमननादिदशातोऽतीव बहुलतया । **यत् दृष्टं स्यात्**—यदनुभूतं भवेत् । **तत्**—तत् सर्वम् । **मुक्तानुभूतेः पृषतवद्धि भवति**—समाध्यवस्थालम्बनीयं सकलमपि सौख्यं वैकुण्ठवासिनो देवीभूषायुधपरिजनपरिच्छदादिसकलविशेषणविशिष्टस्य सर्वतःपरिवृढस्य समस्तकल्याणगुणनिधेरनवधिकज्ञानानन्दस्वरूपस्य उभयविभूतिविशिष्टस्य भगवतोऽनुभवसिन्धौ पृषतलवायत-

इत्यर्थः । तत् कृत्स्नम्—मुक्तानुभूतिविषयभूतं भोगविभूतिवस्तुजातमिव लीलाविभूतिवस्तुजातमपि सकलम् । पूर्वमल्पानुकूलतया प्रतिकूलतयानुभूतमपीति भावः । शर्करौघव्यतिकरितसुधासिन्धुवत् स्वादुभूतम्—शर्करौघमिश्रितसुधासमुद्रतुल्यतया अत्यन्तभोग्यभूतं भवति । विभूतिद्वयं सुधासिन्धुस्थानीयं शर्करौघस्थानीयो भगवान् । यद्वा भगवानेव सुधासिन्धुस्थानीयः कल्याणगुणविभूतिद्वयवस्तुजातं शर्करौघस्थानीयं तथा च भगवच्छेषतयानुभूयमानं लीलाविभूतिवस्तुजातमपि निवृत्तपित्तोपसर्गसशर्करदुग्धन्यायेन भोग्यतममेव भवेदिति भावः । तस्मात्—अर्थस्थितेरेवंरूपत्वात् । स्वात्मप्रकाशे—आत्मानुभवे । फलं नेति वदन्—किमपि सुखं नास्तीति प्रलपन् । कूपकूर्मः—अतिक्षुद्रान्धकूपमात्रसञ्चरणेनात्मानं धन्यम्मन्यमानोऽन्यल्लोके किमपि नास्तीति च निश्चिन्वानः कूर्म इव मन्दमतिः । घृणार्हः—आत्मविद्भिरनुग्राह्यः । स्मर्यते हि 'आत्मद्रुहममर्यादं मूढमुज्झितसत्पथम् । सुतरामनुकम्पेत नरकार्चिष्मदिन्धनम् ॥' इतीति भावः ॥ ५२२ ॥

**मल्ली शुद्धं प्रसूनं जनयति समये रञ्जकोपाधिमुक्ते**
**तद्वन्नाथानुकम्पा फलमुपशमितावग्रहं सूरितुल्यम् ।**
**तस्मादागन्तुकेऽपि प्रतिहतिविरहात्तादृशे धीविकासे**
**प्रत्यापन्नस्वदायक्रम इह कथितः प्राप्तसिद्धेः प्रतीचः ॥ ५२३ ॥**

चिन्ता०—अनादिसिद्धस्य स्वाभाविकस्वरूपस्योपाधिवशादन्यथाभावे सिद्धे पश्चादुपाध्यपगमे सिद्धे पुनः पूर्वाकारप्राप्तिस्स्यात् सचाकार उत्तरस्मिन्काले नित्यमेवानुवर्तत इत्यस्मिन्नर्थे लोकदृष्टान्तमाह—मल्लीति । मल्लिका हि मध्ये किंशुकादिसुषिरप्रवेशरूपोपाधिवशात् शुद्धप्रसूनजनकस्वभावं मुक्त्वा रक्तप्रसूनं जनयति पुनश्च रञ्जकोपाधिमुक्ते समये सञ्जाते शुद्धमेव प्रसूनं जनयति एवमनन्तगरुडविष्वक्सेनादिवज्जीवोऽपि शुद्धस्वभावस्स्वयमनादिकर्मवशात् स्वभाविकरूपतिरोधानं प्राप्नोति उपाधिविनिर्मोक्षे पश्चाज्ज्ञानविकासमुपलभते । तदिदमाह—तद्वदिति । नाथानुकम्पा सूरितुल्यं फलं जनयतीत्यन्वयः । अत्रायं विशेषः—जीवानां नित्यमेव सूरिवद्भगवदनुभवयोग्यत्वे सत्यपि अनादिप्रतिबन्धादननुभवः प्रतिबन्धनिवृत्तौ सूरितुल्यानुभवसिद्धिः । मल्लीपुष्पादौ पूर्वमपि शुद्धिर्मध्ये त्वौपाधिकाकारविशेषप्राप्तिः पश्चात्स्वाभाविकस्वरूपसम्बन्ध इति । अत्र साक्षाद्दृष्टान्तो 'यथा न क्रियते ज्योत्स्ना' इत्याद्युक्तो मणिरेव । मणेः खलूत्पत्तिसिद्ध एव प्रकाशः । स तु प्रकाशः कस्यचिन्मणेरुत्पत्तिमारभ्य मलतिरोहितो भवति । कस्यचित्त्वादित आरभ्य मलसम्बन्ध एव नास्ति तत्तुल्या नित्याः ।

संसारिणस्त्वादित आरभ्य मलसम्बन्धवन्मणिप्रायाः । तेषां तु शाणोल्लेखनेन मणेरिव भगवदुपासनात्मक शाणोल्लेखनात् स्वाभाविकप्रकाशाविर्भावो भवति । उक्तमर्थं निगमयति—तस्मादिति । प्रतिहतिविरहात् स्वाभाविकरूपाविर्भावस्य तस्य च पुनः प्रतिबन्धाभावात् नित्यमेवावस्थानस्य लोके दृष्टत्वात् तादृशधी-विकासस्यागन्तुकत्वे सत्यपि प्राप्तसिद्धेः प्रतीचः प्राप्तफलस्य प्रत्यगात्मनः प्रत्यापन्नस्वदायक्रम इह कथितः । अयमर्थः—कस्यचित्पुत्रस्य पितृधनं स्वभावतः प्राप्तं तदन्येन बलवता कुत्सितेन केनाप्युपरुध्यते पश्चादुपरोधनिवृत्तौ स्वभावप्राप्तं स्वधनं पुत्रः प्राप्नोति एवं भगवदनुभवस्य सर्वात्मनां स्वभावतः प्राप्तत्वात् तत्प्रतिबन्धककर्मनिवृत्तौ प्रतिबन्धकान्तरप्रसङ्गाभावान्नित्यमेवासावनुवर्तत इति निष्कण्टकोऽयं नीतिमार्गः । कृतकत्वेनानित्यत्वानुमानं तु 'नच पुनरावर्तते' इति प्रमाणबाधितत्वान्नरशिरःपवित्रत्वाद्यनुमानसौभ्रात्रमेव-लभते ॥ ५२३ ॥

पद०—मल्ली शुद्धमित्यादि । मल्ली—मल्ली नाम पुष्पलता । रञ्जकोपाधिमुक्ते समये—रञ्जको रक्तपुष्पत्वादिहेतुः उपाधिः उपाधीयतइत्युपाधिः किंशुकवृक्षसुषिरप्रवेशनाद्युपायः, तेन मुक्ते विरहिते समये काले । शुद्धम्—श्वेतवर्णम् । प्रसूनम्—कुसुमम् । जनयति—यथा उत्पादयति । तादृशोपाधियुक्तसमये रक्तं पुष्पमुत्पादितवत्यपि मल्ली उपाधिनिवृत्तिसमये शुद्धवर्णं पुष्पं यथोत्पादयति । तद्वत्—तद्रीत्या । नाथानुकम्पा—भगवत्कृपा । उपशमितावग्रहम्—उपासनादिप्रसदनव्यापारैर्निवर्तित-भगवन्निग्रहरूपप्रतिबन्धकम् । सूरितुल्यम्—अनन्तगरुडादिनित्यसूरीणामिव स्वरूपप्राप्तम् । फलम्—कैङ्कर्यपर्यन्ताविच्छिन्नभगवदनुभवरूपमोक्षात्मकं फलम् । जनयति—उत्पादयति । तस्मात्—उक्तोप-पादनात् । प्राप्तसिद्धेः—लब्धमोक्षसिद्धेः । प्रतीचः—चेतनस्य । प्रतिहतिविरहात्—प्रतिबन्धक-निवृत्तेः कारणात् । आगन्तुकेऽपि—तदानीन्तनेऽपि । तादृशे—शाणोल्लीढमणिप्रभाप्रसरणवत् स्वाभाविके । इह—अस्मिन् । धीविकासे—धर्मभूतज्ञानविकासे । प्रत्यापन्नस्वदायक्रमः कथितः—सार्वभौमपुत्रस्य कस्यचित् पिशुनवचनादिक्षोभकलुषितपितृकोपप्रतिबद्धस्वदायस्य पश्चात् तत्प्रसदनेन निवृत्तमनःकालुष्यात् पितुस्सार्वभौमात् प्रत्यापन्नः पुनर्लब्धः यः स्वदायस्स्वभागः तस्य क्रमः कथितः । शास्त्रैरिति शेषः ॥ ५२३ ॥

अर्वाञ्चं मुक्तिभेदं कतिचिदगणयन् स्वात्ममात्रानुभूतिं
तत्र ब्रह्मानुभूतेर्विहतिरुपधितस्स्यात्स्वतो वेति चिन्त्यम् ।
सन्ति द्वेधापि दोषास्तत उपचरणान्मुक्तिशब्दोऽत्र युक्तः
सालोक्यादिप्रभेदेष्वपि सरणिरियं सावधानैर्विभाव्या ॥ ५२४ ॥

इति सम्पद्याविर्भावाधिकरणम् ॥ १५१ ॥

चिन्ता०—अत्र केचिदाहुः 'जीवात्ममात्रप्राप्तिरिति काचिन्मुक्तिरस्तीति, सा पुनर्मुक्तिरेव न भवतीति दर्शयितुं तत्पक्षमनुवदति—अर्वाञ्चमिति । कदिचिदविचारकाः स्वात्ममात्रानुभूतिं मुक्तिविशेषमगणयन्'। अत्रोत्तरमाह—तत्रेति । अत्र ब्रह्मानुभूतिविच्छेदस्स्वाभाविकः कर्ममूलो वेति विकल्प्योभयत्रापि दूषणमभिधेयम् । किं दूषणमित्यनुयोगे पूर्वमस्माभिरुक्तान्दोषानिहाचष्टे—सन्तीति । तर्हि कैवल्यं मुक्तिरिति कथयन्त्यैतिहासिकाः पौराणिकाश्च न केवलं त एव भवत्पक्षानुसारिणोऽपि केचिदूचुरित्याशङ्क्य सर्वोऽयं व्यवहार औपचारिक इत्याह—तत इति । अस्तु कैवल्यं मुक्तिरौपचारिकी अथापि सालोक्यसामीप्यसारूप्यरूपेण मोक्षविशेषा भावकैरेवाभिधीयन्ते तत् कथमित्याशङ्क्याह—सालोक्येति । तत्राप्यौपचारिको मुक्तिशब्दइत्यर्थः । अस्ति चात्र प्रमाणम्—'लोकेषु विष्णोर्निवसन्ति केचित् समीपमृच्छन्ति च केचिदन्ये । अन्येतु रूपं सदृशं भजन्ते सायुज्यमन्ये स तु मोक्ष उक्तः ॥' इति । अयमर्थः—न केवलं सालोक्यादिकं मोक्षः, तत्र तु मोक्षशब्द औपचारिकः । यस्तु सायुज्यं प्राप्तः, तस्य तु सालोक्यादित्रयमपि सायुज्यान्तर्गतत्वेन मुक्तिशब्दवाच्यतामुपलभते । अतः प्राप्ताप्राप्तविवेकेन सायुज्यमेव मोक्षशब्दार्थः । अन्यानि तु सायुज्यसम्बन्धादेव मुक्तिशब्दवाच्यतामुपलभन्ताम् । का नो हानिः सायुज्यं तु 'सोऽश्नुते सर्वान्कामान्सह' इति श्रुत्यैव निरुक्तम् । 'भोगमात्रसाम्यलिङ्गाच्च' इति सूत्रकारोऽपि भोग्यसाम्यमेव सायुज्यमित्याह । यस्तु मोक्षदशायां सार्ष्टितेति कश्चिद्विशेषोऽभिधीयते सोऽप्याचार्यैरेवान्यत्र विविच्य दर्शितः—'सायुज्यमुभयोरत्र भोक्तव्यस्याविशिष्टता । सार्ष्टिता तत्र भोगस्य तारतम्यविहीनता ॥' इति । लोके हि भोग्यस्यैक्येऽपि भोक्तृतृष्णावैषम्यमस्ति तदप्यत्र नास्तीतीममर्थं दर्शयितुं सायुज्यान्तर्गतमेव सार्ष्टित्वमनुकथयन्ति सन्तः । मृषावादिनां तु सायुज्यप्रसङ्ग एव नास्ति। उपसर्गस्य तावत्सहशब्दपर्यायत्वेन तन्मतविरोधस्सुप्रसिद्ध एव । युजिर्योग इति धातोरपि भेदगर्भत्वमविवादमेव सर्वेषामेव वादिनाम् । सयुजो भावस्सायुज्यमिति प्रत्ययोऽपि सप्रत्ययं भेदमेवाचष्टे । तस्मात्सायुज्यं मुक्तिर्मृषावादिनामित्यव्युत्पन्नानामेवालापः । तर्हि सायुज्यमित्यैक्यमभिधीयत इति रूढिशक्तिमभिदध्मह इति चेत् तदपि न रूढिशक्तिप्रतिपादकप्रमाणाभावात्, प्रत्युत 'द्वा सुपर्णा सयुजा सखाया' 'चन्द्रमसस्सायुज्यम्' 'आदित्यस्य सायुज्यम्' इति वैदिकप्रयोगेषु भेदपूर्वकमेवाभिधानात् । लोके चैक्यमेव सायुज्यमिति पामरा अपि न प्रवदन्ति किं पुनः कवयः । यदि वदन्ति भवादृशाः, ते पुनरवयो वा कपयो वेति ॥ ५२४ ॥

इति सम्पद्याविर्भावाधिकरणम् ॥ १५१ ॥

पद०—अर्वाञ्चमित्यादि । कतिचित्—केचिदविचारकाः । स्वात्ममात्रानुभूतिम्—जीवात्म-

मात्रानुभवम् । अर्वाञ्चं मुक्तिभेदम् अगणयन्—साक्षान्मुक्तेरान्तरं मुक्तिविशेषं निश्चितवन्तः । तत्र—तादृशमुक्तिविशेषे । ब्रह्मानुभूतेर्विहतिः—परमात्मानुभवविच्छेदः । उपधितस्स्यात् स्वतो वा स्यादिति चिन्त्यम्—कर्मोपाधिमूलको वा स्वाभाविक एव वा भवेदिति विकल्प्य विचारणीयम् । द्वेधापि—कैवल्यानुभवकालिकपरमात्मानुभवविच्छेदस्य कर्मोपाधिकत्वे स्वाभाविकत्वेऽपि । दोषास्सन्ति—कर्मोपाधिकत्वे निश्शेषकर्मविच्छेदान्निश्शेषकर्मक्षयरूपा मुक्तिस्सा न स्यात् । स्वाभाविकत्वे अपसिद्धान्तः । सर्वेषामपि चेतनानां नित्यसूरितुल्यतया भगवदनुभवयोग्यता हि सिद्धान्तसिद्धा भगवदनुभवविच्छेदस्यैव केषांचित्स्वाभाविकत्वे सा भज्येत एवमादिदोषास्सन्तीत्यर्थः । ततः—तस्मात्कारणात् । अत्र—कैवल्ये । मुक्तिशब्दः—'स्वात्मानुभूतिरिति या किल मुक्तिरुक्ता' इत्यादिषु प्रयुक्तो मुक्तिशब्दः । उपचरणायुक्तः—'विगतेच्छाभयक्रोधो यस्सदा मुक्त एव सः' इत्यादाविवौपचारिक इत्येव युक्तः । लाक्षणिक इत्यर्थः । सालोक्यादिप्रभेदेष्वपि इयं सरणिस्सावधानैर्विभाव्या—'लोकेषु विष्णोर्निवसन्ति केचित् समीपमृच्छन्ति च केचिदन्ये । अन्ये तु रूपं सदृशं भजन्ते सायुज्यमन्ये सतु मोक्ष उक्तः ॥' इत्यादौ 'मोक्षं सालोक्यसारूप्यं प्रार्थये न कदाचन । इच्छाम्यहं महाबाहो सायुज्यं तव सुव्रत ॥' इत्यादौ च सायुज्यस्यैव साक्षान्मुक्तित्वेन ग्राह्यत्वनिश्चयात् सालोक्यादौ क्वाचित्को मुक्तिशब्दोऽपि सालोक्यसामीप्यसारूप्यसार्ष्टिताविशिष्टब्रह्मानुभाव्यानुभोक्तृत्वरूपसाक्षान्मुक्त्येकदेशत्वात् पूर्ववदौपचारिक एवेति तत्त्वावधानचतुरैर्निदर्शिता सरणिरनुसन्धेयेत्यर्थः । नित्यकैवल्यदूषणानि 'ध्यायेयुर्येच' इत्यादिपूर्वपादश्लोकव्याख्यानावसरे चिन्तामण्यां सविस्तरमभिहितानि तत्रैव द्रष्टव्यानि । न्यायसिद्धाञ्जनादौ च कैवल्यविभागतदूषणगीताभाष्यनिर्वाहादिकं तात्पर्यचन्द्रिकायाञ्च सकुतूहलैस्समीक्षणीयम् ॥ ५२४ ॥

इति सम्पद्याविर्भावाधिकरणम् ॥ १५१ ॥

---

## अविभागेन दृष्टत्वाधिकरणम् ॥ १५२ ॥

सूत्रम्—अविभागेन दृष्टत्वात् ॥ ५२७ ॥

जीवेशौ नित्यभिन्नौ श्रुतिरिह च सहेत्याह मुक्तस्य भोगं
साम्ये पारम्यमुक्तं स्मृतमपि स पृथग्भातु तस्मात्परस्मात् ।
मैवं तत्त्वं हि मुक्तौ स्फुरति तदनयोर्भेदभानांश इष्टः
सिद्धे देहात्मभावे त्विह नहि घटते तत्स्वनिष्ठत्वदृष्टिः ॥ ५२५ ॥

चिन्ता०—सङ्गतिर्भाष्ये—' किमयं परञ्ज्योतिरुपसम्पन्नस्सर्वबन्धविनिर्मुक्तः प्रत्यगात्मा स्वात्मानं परमात्मनः पृथग्भूतमनुभवति उत तत्प्रकारतया तदविभक्तमिति विशये ' इति । तदर्थविचारस्तु—मुक्तः किमात्मानं परमात्मनः पृथग्भूतमनुभवति उत तत्प्रकारतया तदविभक्तम् । किं साहित्यसाम्यसाधर्म्यवचनान्यविभागेनानुभवे विरुध्यन्ते नेति । किं पृथग्भूतस्यैव साहित्यादिकमुपपन्नं नेति । अत्र पूर्वपक्षी मुक्तदशायां भेदेनैवानुसन्धाने हेतुविशेषानाचष्टे—जीवेशाविति । अयमर्थः—' द्वा सुपर्णा ' इति श्रुतिरेव जीवपरयोर्भेदमाचष्टे । हेत्वन्तरमप्याह—श्रुतिरिति । सैव श्रुतिः ' सोऽश्नुते सर्वान् कामान्सह ' इति मुक्तभोगं सहशब्दपूर्वकमेवाह । सहशब्दो हि भेद एव संघटते । पुत्रेण सहागतः पितेति प्रयुञ्जते न पुनः पित्रासहागतः पितेति नापि पुत्रेण सहागतः पुत्र इति । तृतीयमपि हेतुमाह—साम्य इति । साम्यं तावद् भेदपरम् । तदत्र परमसाम्यमत्यन्तभेदपरम् । केनापि विशेषणेन साम्ये साम्यमिति वक्तुं युज्यते । बहुभिरपि विशेषणैस्साम्ये हि परमं साम्यं सिध्यति । तेन तदपि भेदपरम् । इदञ्च स्मृतिसिद्धं ' मम साधर्म्यमागताः ' इति भगवतैव साम्यपर्यायस्य साधर्म्यशब्दस्य प्रयोगदर्शनात् । तेन जीवः परमात्मनः पृथक्त्वेन प्रतिभासेतेत्याह—स इति । तदेतत्प्रतिक्षिपति—मैवमिति । तत्र हेतुमाह—तत्त्वमिति । मुक्तिदशायां तत्त्वमेव प्रतिभाति नातत्त्वम् । अतत्त्वन्तु स्वतन्त्रभेदोऽब्रह्मात्मकभेद इत्यर्थः । तेनानयोर्निर्दोषो भेदो भातु । जीवपरयोस्स्वरूपभेद इत्यर्थः । तर्हि कीदृग्विधो भेदो निषिध्यत इत्याशङ्क्याह—सिद्ध इति । द्विधा खलु भेदः प्रतीयते ब्रह्मात्मकभेदोऽब्रह्मात्मकभेदश्चेति । तत्र पूर्वो भेदः ' द्वा सुपर्णा सयुजा ' ' नित्यो नित्यानाम् ' ' भोक्ता भोग्यम् ' इत्यादिश्रुतिप्रसिद्धत्वादध्यात्मविदामङ्गीकारपदमेव । अब्रह्मात्मकभेदस्तु ' अन्तः प्रविष्टश्शास्ता जनानां सर्वात्मा ' ' सर्वगत्वादनन्तस्य स एवाहमवस्थितः ' इत्यादिप्रमाणसिद्धब्रह्मात्मभावानुसन्धानविरोधादनादर्तव्य एव । तेनाविनाभावेनानुसन्धानं शरीरात्मभावेनानुसन्धानमध्यात्मविदामाजानसिद्धमित्यर्थः । अयमत्रान्वयः—देहात्मभावे सिद्धे सतितस्य जीवस्य स्वनिष्ठत्वदृष्टिर्न हि घटते परमात्मपारतन्त्र्यानवलोकनं न सङ्घटत इत्यर्थः ॥ ५२५ ॥

पद०—जीवेशावित्यादि । जीवेशौ नित्यभिन्नौ—जीवात्मपरमात्मानौ ' द्वा सुपर्णा ' ' पृथगात्मानं प्रेरितारञ्च मत्वा ' इत्यादिश्रुतिभिर्नित्यं परस्परभिन्नौ । इह—मुक्तिदशायाम् । श्रुतिः—' सोऽश्नुते सर्वान्कामान् सह ब्रह्मणा विपश्चिता ' इति श्रुतिः । मुक्तस्य भोगम्—मुक्तसम्बन्ध्यानन्दम् । सहेत्याह च—पुत्रेण सहागतः पितेतिवत् ब्रह्मणा सहेति भेदप्रत्यायकसहशब्दपूर्वकमेवाह । तेन च मुक्तिदशायां जीवेशयोः पितापुत्रयोरिव भेदस्सिद्ध इत्यर्थः । साम्ये पारम्यमुक्तम्—' निरञ्जनः परमं साम्यमुपैति ' इति श्रुत्यन्तरेण भेदघटिते साम्ये पारम्यमत्यन्तातिशयितत्वमुक्तम् । तेन च जीवेशयो-

भेदोऽतीव सिध्यतीति भावः। स्मृतमपि—इदं मुक्तौ जीवस्येश्वरेण परमसाम्यं 'ममसाधर्म्यमागताः' इत्यादिस्मृतिभिरपि प्रतिपन्नम्। तस्मात्—एवं जीवेशयोर्भेदस्य प्रमाणसिद्धत्वात्। सः—जीवः। परस्मात्—ईश्वरात्। पृथक्-पृथक्त्वेन। भातु-भासेत। मैवम्-एवं मा शङ्किष्ठाः। मुक्तौ-सर्वाविद्याविनिर्मोक्षदशायाम्। तत्त्वं हि स्फुरति—प्रमाणेन यद्विधं यत्स्वरूपञ्च वस्तु प्रतिपन्नं तत् तथैव हि तदा भासेत। तत्—तस्मात्कारणात्। अनयोः—जीवेश्वरयोः। भेदभानांश इष्टः—अन्योन्यभेदप्रतिभानांशोऽध्यात्मतत्त्वविदामिष्ट एव। तु-किन्तु। इह-जीवेशद्वितये। देहात्मभावे—शरीरशरीरिभावे। सिद्धे-प्रमाणसिद्धे सर्वथा अपरिहार्ये अनुभाव्ये सति। तत्स्वनिष्ठत्वदृष्टिर्न घटते हि—तस्य जीवस्य स्वनिष्ठत्वेन स्वातन्त्र्येण दृष्टिर्भानं न युज्यते किल। वस्तु यथावस्थितमेव हि भायात् अत ईश्वरशरीरतया तत्पारतन्त्र्येणैव जीवात्मा भासेत नतु स्वातन्त्र्येणेति भावः। तथाचानयोश्शरीरशरीरिभावनियतेनाहं ब्रह्मास्मीत्युल्लेखेनैव मुक्तौ भानमिति हृदयम्॥ ५२५॥

मन्त्रोक्तं भोक्तृभावे यदि सहभवनं ब्रह्म न स्यात् प्रधानं
तस्मात्तद्भोग्यभावे भवतु तदुचितं ब्राह्मणव्याकृतेश्च।
द्वेधापि ब्रह्मतत्त्वात् पृथगितर इह स्यादितीदञ्च वार्तं
सिद्धे भेदे स्वनिष्ठस्थितिपरिहरणं ह्यत्र सूत्रोपपाद्यम्॥ ५२६॥

चिन्ता०—अत्र पूर्वपक्षी मन्यते-'अविभागेन भगवदनुसन्धानं मुक्तिदशायामिति भवद्भिरुच्यते। तच्छ्रुतिविरुद्धमेव। सत्यज्ञानादिमन्त्रे फलदशायां भेदस्यैव साक्षादभिधीयमानत्वात्। तथा हि 'सोऽश्नुते सर्वान्कामान्सह' इति फलनिर्देशः। अत्र भोक्तृसाहित्यं वा भोग्यसाहित्यं वा सहशब्देनोच्यत इति विवेचनीयम्। भोक्तृसाहित्यञ्चेत् 'सहयुक्तेऽप्रधाने' इति ब्रह्मणा सहेति सहशब्दसम्बन्धाद् भोक्तारं जीवं प्रति ब्रह्मणस्स्यादप्राधान्यम्। तच्चायुक्तं सर्वस्वामिनो ब्रह्मणस्स्वशेषभूतं जीवं प्रत्यप्राधान्यायोगात्'। इति। तदिदमाह—मन्त्रोक्तमिति। भोक्तृसाहित्यवचनस्येत्थमनुचितत्वाद् भोग्यसाहित्यमेव वक्तुं योग्यमित्याह—तस्मादिति। अत्रौचित्ये हेत्वन्तरमाह—ब्राह्मणेति। 'ब्रह्मविदाप्नोति परम्' इति विधिब्राह्मणम्। तस्य व्याख्यानं 'सत्यं ज्ञानम्' इति मन्त्रः। तत्र ब्रह्मविदितिशब्दस्य पूर्वं व्याख्यानमकारि। परमाप्नोतीत्यंशस्य 'सोऽश्नुते सर्वान्कामान् सह ब्रह्मणा विपश्चिता' इति व्याकरणं क्रियते। तेन भोग्यसाहित्यमेव वक्तुमुचितमित्यर्थः। ब्रह्मणा सह सोऽश्नुत इति भोक्तृसाहित्ये वचनव्यक्तिः। ब्रह्मणा सह सर्वान्कामानश्नुत इति भोग्यसाहित्ये वचनव्यक्तिः। नहि भृत्यान्प्रति स्वामिनोऽप्राधान्यमस्ति

नच तद्वक्तव्यं लोकविरोधात् । अस्तु वात्र भोक्तृसाहित्यं भोग्यसाहित्वं वा विवक्षितम् उभयथापि ब्रह्मतत्त्वाज्जीवः पृथगेव प्रतीयते तथाचाविभागेनानुसन्धानं न युज्यत इति शङ्कते—द्वेधापीति । तदिदं प्रतिक्षिपति—वार्तमिति । अयमर्थः–अत्र जीवपरयोस्स्वरूपभेदो न प्रतिक्षिप्यते, सिद्ध एव स्वरूपभेदः, अपि तु स्वातन्त्र्येणावस्थानं परिह्रियते, सूत्रोपपाद्यम्--सूत्रकाराभिप्रेतमित्यर्थः, तात्पर्ये हि शब्दः प्रमाणम् , तेनापातार्थं मुक्त्वा तात्पर्यमेव पर्यालोचनीयं विचारधौरेयैरिति ॥ ५२६ ॥

पद०—मन्त्रोक्तमित्यादि । मन्त्रोक्तं सहभवनं भोक्तृभावे यदि ब्रह्म प्रधानं न स्यात्–' सत्यं ज्ञानम्' इति मन्त्रेण 'सह ब्रह्मणा विपश्चिता' इतिभागेन प्रतिपादितं सहशब्दार्थभूतं ब्रह्मणस्सहभवनं पुत्रेण सहौदनं भुङ्क्त इत्यत्रेव भोक्तृभावे यदि तदा 'सहयुक्तेऽप्रधाने' इत्यनुशासनेन सहशब्दान्वितस्याप्राधान्यावश्यम्भावात् ब्रह्म प्रधानं न स्यात् । किन्तु अप्रधानं स्यात् तच्चायुक्तं सर्वस्वामिनो ब्रह्मणः अप्राधान्यायोगात् । तस्मात्—कारणात् । तत्—सहभवनम् । भोग्यभावे भवतु—क्षीरेण सहौदनं भुङ्क्त इत्यादाविव भोग्यभावे भवतु । ब्राह्मणव्याकृतेश्च तदुचितम्—' ब्रह्मविदाप्नोति परम्' इति हि ब्राह्मणम् । तस्य व्याख्यानं हि 'सत्यं ज्ञानम्' इत्यादिमन्त्रेण क्रियते । तत्र ब्रह्मविदित्येतावदंशस्य गुहायामित्यन्तेन व्याख्यानकरणात् परमाप्नोतीत्यंशस्य खल्विदानीं व्याख्यानं क्रियते । अतश्च ब्राह्मणानुगुणव्याकरणस्यैव कर्तव्यत्वात् भोग्यसाहित्यमेवोचितम् । द्वेधापि इह इतरः ब्रह्मतत्त्वात् पृथक्स्यात् इति—भोक्तृसाहित्यं वास्तु भोग्यसाहित्यं वास्तु द्वेधापि मुक्तिदशायां जीवः परमात्मनः पृथगेव भातस्स्यादिति । इदञ्च वार्तम्—उक्तं शङ्कनमनर्हमित्यर्थः । ' वार्तं चानर्हनीरसे ' इति नानार्थरत्नमाला । भेदे सिद्धे स्वनिष्ठस्थितिपरिहरणं ह्यत्र सूत्रोपपाद्यम्—जीवेश्वरयोर्भेदे सिद्धेऽपि जीवस्य तच्छरीरत्वेन तत्परतन्त्रस्य स्वातन्त्र्येणावस्थानं नास्तीति प्रतिपादनं ह्यत्रत्यस्य ' अविभागेन दृष्टत्वात् ' इत्यस्य सूत्रस्य विवक्षितं सूत्रकाराभिमतम् । नतु जीवेश्वरयोर्भेदनिरसनम् । तयोर्भेदस्योदाहृतब्राह्मणतद्व्याख्यानरूपमन्त्रश्रुत्यन्तरसिद्धपरमसाम्यसाधर्म्यस्मृत्यादिसिद्धत्वादिति भावः ॥ ५२६ ॥

पारम्यं यच्च साम्ये श्रुतमिह नहि तत्सर्वथेत्यप्यधीतं
ग्राव्णो हेम्नश्च यद्वत्समधरणधृतौ स्यात्तदुक्तिस्तथात्र ।
एवं तद्देहभावे स्थितवति विविधाबाधिताम्नायभूम्ना
ब्रह्मैवेत्यादिवाक्यं प्रथयति समतां तादृगित्यप्यधीतेः ॥ ५२७ ॥

इत्यविभागेनदृष्टत्वाधिकरणम् ॥ १५२ ॥

चिन्ता०—'निरञ्जनः परमं साम्यमुपैति' इति वाक्यस्यार्थं श्रुतितात्पर्यपर्यालोचनेन निगमयति—पारम्यमिति। इह 'परमं साम्यम्' इत्यनेन सर्वथा साम्यमिति नोच्यते तेन प्रमाणानुसारेण यावदबाधितं साम्यं तावदङ्गीकार्यमित्यर्थः। अस्मिन्नर्थे लोकदृष्टान्तमाह—ग्राव्ण इति। ग्राव्णो हेम्नश्च समधरणधृतौ तुल्यतुलाधृतौ तुल्यत्वोक्तिस्स्यात्। नैतावता वर्णसाम्यमपि स्यात्। अपि तु निष्कृतदर्धादिभावेन साम्यम्। तद्वदत्रापि जीवपरमात्मनोर्भोगसाम्यमेव नपुनस्स्वामित्वादिकमपि समं तस्य प्रमाणेन व्यवस्थितवृत्तित्वात्। तर्हि 'ब्रह्म वेद ब्रह्मैव भवति' इति सावधारणसामानाधिकरण्यनिर्देशो दृश्यते सामानाधिकरण्यं तावदैक्यपरम् एवकारस्तु भेदं निषेधति तेन जीवब्रह्मणोस्स्वरूपैक्यं स्यादित्यत्रोत्तरम्—एवमिति। अयमन्वयः—शरीरात्मभावप्रतिपादकबहुविधाम्नायभूम्ना जीवस्य भगवद्देहभावे स्थितवति निर्णीते सति ब्रह्मैव भवतीति सावधारणोऽयं निर्देशस्साम्यमेव द्रढयति। यथा 'यथर्तुष्वृतुलिङ्गानि नानारूपाणि पर्यये। दृश्यन्ते तानितान्येव तथा भावा युगादिषु॥' इत्यत्र 'तानि तान्येव' इति सावधारणसामानाधिकरण्यशब्दः केवलं तज्जातीयत्वमेवाचष्टे नपुनस्तत्त्वमेव पूर्वोत्तरर्तूत्पन्नानां तदातदोत्पन्नत्वेन भिन्नत्वात् एवं 'ब्रह्म वेद ब्रह्मैव भवति' इति ब्रह्मतुल्यप्रकारत्वमेवाचष्टे नपुनस्स्वरूपैक्यं ब्रह्म तु नित्यनिर्मलम् तदभिध्यानादधुनैव निर्मलीभवति ब्रह्मवेदी कथं तयोः स्वरूपैक्यमिति वक्तुं शक्यते तेन ब्रह्मप्रकारत्वमेव 'ब्रह्मैव भवति' इति सामानाधिकरण्येनोच्यत इत्यर्थः। एवं न्यायोपपादितमर्थं प्रमाणेनोपपादयति—तादृगिति। 'यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति एवं मुनेर्विजानत आत्मा भवति गौतम' इति जीवस्य ब्रह्मणि तादृक्त्वमप्युच्यते। नपुनस्तत्त्वम्। तेन यत्रयत्र तत्त्वमुच्यते तत्रसर्वत्रापि तादृक्त्वमेवोच्यत इति भाव्यमित्यर्थः॥ ५२७॥

इत्यविभागेनदृष्टत्वाधिकरणम्॥ १५२॥

पद०—पारम्यमित्यादि। इह यच्च साम्ये पारम्यं श्रुतं तत्सर्वथेत्यपि नाधीतं हि—इह मुक्तजीवे 'परमं साम्यमुपैति' इति साम्ये यदत्यन्तातिशयितत्वमुक्तं तत् सर्वप्रकारेणापीति नाधीतं नाम्नातं हि। तस्मात्प्रमाणान्तराविरोधेन परमसाम्यं निर्वाह्यमित्यर्थः। ग्राव्णो हेम्नश्च समधरणधृतौ यद्वत् तदुक्तिः स्यात् तथात्र—मानोपलस्य मेयहेम्नश्च तुल्यतुलाधारणे यथा तुल्यत्ववचनं तथैवात्रापीत्यर्थः। नैतावता पाषाणस्वर्णयोर्वर्णतस्साम्यं भवति अपि तु परिमाणविशेषेणैव तद्वन्मुक्तस्यापि परमात्मसाम्यं भोगसाम्यमेव नतु सर्वस्वामित्वादिकेनापि तस्य प्रमाणेन तत्रैव व्यवस्थितत्वादित्यर्थः। एवम्—मानोपलसुवर्णन्यायेन। विविधाबाधिताम्नायभूम्ना—जीवतद्देहभावे स्थितवति—परमात्मशरीरतया ततो भेदे सिद्धे सति। विविधाबाधिताम्नायभूम्ना—जीवपरस्योश्शरीरशरीरिभावव्याप्यव्यापकभावस्वस्वामिभावादिप्रतिपादकानन्यथासिद्धानवकाशनिर्बाधानेकविधश्रुति-

बाहुल्येन । तादृगित्यधीतेरपि—'यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति एवं मुनेर्विजानत आत्मा भवति गौतम' इति श्रुत्यन्तरे सादृश्यवाचिनस्तादृक्शब्दस्याम्नानादपि हेतोः । ब्रह्मैवेत्यादिवाक्यम्—'ब्रह्म वेद ब्रह्मैव भवति' इत्यादिश्रुतिवाक्यम् । समतां प्रथयति—साम्यमेव प्रतिपादयतीत्यर्थः ॥५२७॥

इत्यविभागेनदृष्टत्वाधिकरणम् ॥ १५२ ॥

---

## ब्राह्माधिकरणम् ॥ १५३ ॥

सूत्रम्—ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॥ ५२८ ॥

ज्ञानत्वे किं फलं स्यादिति मिषतु गुणैस्तादृशं ब्रह्मसाम्यं
किं धर्मैरस्वरूपैस्तदिह भवतु चिन्मात्ररूपप्रकाशः ।
इत्थं छात्रोक्तपक्षद्वयमुभयविधश्रुत्युपात्ताद्विरोधात्
निर्धूयाथ द्विधाविर्भवनमघटयत्सिद्धतत्त्वप्रकाशात् ॥ ५२८ ॥

चिन्ता०—'प्रत्यगात्मनः परञ्ज्योतिरुपसम्पद्य निवृत्ततिरोधानस्य स्वरूपाविर्भाव एवेत्युक्तम् । तत्र येन स्वरूपेणायमाविर्भवति तत्स्वरूपं श्रुतिवैविध्याद् विचार्यते' इति सङ्गतिर्भाष्ये । तदर्थविचारस्तु–किं गुणाष्टकविशिष्टमेवास्य स्वरूपमुत विज्ञानमात्रमेव उतोभयं स्वरूपम् । किं गुणाष्टकवैशिष्ट्यज्ञानमात्रस्वरूपविषयश्रुत्योः प्राबल्यदौर्बल्यविभागो युज्यते नेति । तयोः किं विरोधस्सम्भवति नेति । 'विज्ञानघन एव' इत्यवधारणं किं गुणान्तरं व्यावर्तयितुं शक्नोति नेति । अत्र जैमिन्यौडुलोम्यभिमतं पक्षद्वयं प्रत्येकमुपदिश्य तयोरुभयोरपि पक्षयोस्समुच्चयं स्वाभीष्टं प्रतिपादयितुमारभते—ज्ञानत्व इति । अयं किल जैमिनेरभिप्रायः—'आत्मनो ज्ञानस्वरूपमात्रत्वोपदेशे तस्य स्वविषयग्रहणायोग्यत्वात् निष्फलत्वमेव तेन गुणैर्ब्रह्मसाम्यमिष्टमिति । औडुलोमेः पुनरयं भावः—'स्वरूपातिरिक्तैरभिहितैर्गुणैः किं प्रयोजनम्? तेन चिन्मात्रस्वरूपप्रकाश एवास्तु' इति । एवं पूर्वपक्षद्वयमुपन्यस्य द्वयोरपि पक्षयोरुभयविधश्रुत्युपात्तत्वेनाविरुद्धत्वादुभयसमुच्चयात्मकं स्वेष्टस्वरूपाविर्भवनमघटयत् । उभयविधश्रुत्युपात्ताद्विरोधात् सिद्धतत्त्वप्रकाशादित्यन्वयः । अयमत्र भावः—यदि जैमिनिमतमङ्गीकृत्य ज्ञानगुणकत्वादिमात्रमेवाभिदध्महे तदा ज्ञानस्वरूपत्वादिप्रतिपादकश्रुतिविरोधः । यदि च तच्छ्रुत्यनुसारेण ज्ञानगुणकत्वादिकं हित्वा ज्ञानस्वरूपत्वमात्रमेव प्रतिपद्यामहे तदा ज्ञानगुणकत्वादिप्रतिपादकश्रुतिविरोधः । उभयत्राप्युपलम्भविरोधश्च स्यात् ।

तेन सर्वविरोधपरिहारार्थं ज्ञानस्वरूपत्वं ज्ञानगुणकत्वञ्च समुच्चयेनाङ्गीकृत्य मुक्तिदशायामुभयरूपेणाविर्भवनं प्रतिपद्यामह इति न कोऽपि विरोध इति ॥ ५२८ ॥

पद०—ज्ञानत्व इत्यादि । ज्ञानत्वे किं फलं स्यात्—आत्मनो ज्ञानस्वरूपमात्रत्वोपदेशे तस्य विषयग्रहणायोगात् किं फलं सिध्येत् । ब्रह्मानुभवादिकं किमपि न सिध्येदित्यर्थः । इति—अस्माद्धेतोः । तादृशं ब्रह्मसाम्यं गुणैर्मिषतु—परमतया प्रतिपन्नं परमात्मसाम्यं अपहतपाप्मत्वादिगुणाष्टकेनैव भवतु । अस्वरूपैः—स्वरूपातिरिक्तैः । धर्मैः—अपहतपाप्मत्वादिभिरभिहितैर्गुणैः । किम्—किं फलम् । सति हि धर्मिणि धर्माश्चिन्त्यन्त इति न्यायादिति भावः । तत्—तस्मात् । इह—मुक्त्यवस्थायाम् । चिन्मात्र-रूपप्रकाशो भवतु—ज्ञानमात्रस्वरूपस्यैवाविर्भावोऽस्तु । इत्थम्—उक्तप्रकारम् । छात्रोक्तपक्षद्वयम्—छात्राभ्यां स्वशिष्यभूतजैमिन्यौडुलोमिभ्यामुक्तमुपन्यस्तं गुणाविर्भावस्वरूपाविर्भावपरं पक्षद्वितयम् । उभय-विधश्रुत्युपात्ताद्विरोधात्—'अपहतपाप्मा विजरः' इत्यारभ्य 'इति ह प्रजापतिरुवाच' इत्यन्ता या जीवस्य गुणाष्टकप्रतिपादिका श्रुतिः 'स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एवं वा अरेऽयमात्मा नन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव विज्ञानघन एव' इत्यादिका या जीवस्य ज्ञानमात्रस्वरूपप्रतिपादिका श्रुतिश्च तादृशद्विविधश्रुत्युपात्तोऽन्यतरपक्षमात्रग्रहणे योऽन्यतरहानमूलकस्तच्छ्रुतिनैरर्थक्यरूपविरोधस्तस्मात् । सिद्धतत्त्वप्रकाशात्—प्रमाणद्वयप्रसिद्धोभयविधस्वरूपस्यैव मुक्तिदशायामाविर्भावोपपत्त्या । निर्धूय—अन्य-तरपक्षमात्रग्रहणपक्षं निरस्य । अथ—तदुपरितनेन 'एवमप्युपन्यासात् पूर्वभावादविरोधं बादरायणः' इति सूत्रेण । द्विधा—अपहतपाप्मत्वादिगुणाष्टकविशिष्टज्ञानस्वरूपेण । आविर्भवनम्—मुक्तिदशायां जीवस्य प्रकाशनम् । अघटयत्—उपपादयामासेत्यर्थः । सूत्रकार इति शेषः ॥ ५२८ ॥

पर्यायौ नामपाठेष्वनुपरिपठितौ मुक्तिकैवल्यशब्दौ
कैवल्यञ्चान्ययोगत्यजनमिति कथं धर्मिधर्मान्वयोऽस्य ।
मैवं ब्रह्मस्वरूपादपरमिह न खल्वस्ति किञ्चित् स्वनिष्ठं
न द्रव्यञ्चागुणं स्यादधिकरणयुगं तन्निरातङ्कमेतत् ॥ ५२९ ॥

इति ब्राह्माधिकरणम् ॥ १५३ ॥

चिन्ता०—अत्र पूर्वस्य चैतस्यचाधिकरणस्यार्थविरोधमाशङ्क्य विरोधगन्धोऽपि नास्तीति व्याचष्टे—पर्यायाविति । अयमत्र पूर्वपक्षिणो भावः—'मुक्तिः कैवल्यनिर्वाण' इत्यादिषु मोक्षकैवल्यशब्दौ पर्यायत्वेन पठितौ तत्र कैवल्यशब्दो वस्त्वन्तराभावमेव प्रदर्शयति तत्कथं ब्रह्मव्यतिरिक्तस्य

जीवस्याविभागेन दर्शनं पूर्वाधिकरणोक्तं सम्भवति अस्मिंश्चाधिकरणेऽपहतपाप्मत्वादिगुणाष्टकवैशिष्ट्येन जीवे गुणगुणिभावेन भेदनिर्देशः कथं सङ्घटते । तेन कैवल्यस्येतराभावरूपस्य धर्मिधर्मान्वयः कथं स्यात् विशेषणविशेष्यान्वयः कथं स्यात् । उक्तं चोद्यं प्रतिक्षिपति—मैवमिति । अत्र कैवल्यशब्दार्थसद्भावं विभज्य दर्शयति—ब्रह्मेति । पूर्वस्मिन्नधिकरणे ब्रह्मस्वरूपव्यतिरिक्तस्य स्वनिष्ठत्वं नास्तीत्युक्तम् । तदेव तस्य कैवल्यम् । अस्मिन्नधिकरणे न किञ्चिद् द्रव्यं गुणरहितमस्तीत्युच्यते अत्रापि तदेव कैवल्यं निर्गुणत्वराहित्योपदेशात् । तेनोभयस्मिन्नधिकरणे विवक्षितार्थप्रतिपादनमस्तीति निरातङ्कमेवेत्याह—अधिकरणयुगमिति ॥ ५२९ ॥

इति ब्राह्माधिकरणम् ॥ १५३ ॥

पद०— पर्यायावित्यादि । नामपाठेषु—'मुक्तिः कैवल्यनिर्वाणश्रेयोनिश्श्रेयसामृतम्' इत्यादिनैघण्टुकमुक्तिनामानुक्रमणवाक्येषु । मुक्तिकैवल्यशब्दौ पर्यायावनुपरिपठितौ—मुक्तिशब्दः कैवल्यशब्दश्च समानार्थक उपात्त इत्यर्थः । कैवल्यश्चान्ययोगत्यजनम्—कैवल्यशब्दार्थश्च अन्यस्य विशेष्यस्य विशेषणस्य च यो योगस्सम्बन्धस्तस्य त्याग एव । इति—हेतोः । अस्य—तादृशकैवल्यं प्राप्तवतश्चेतनस्य । धर्मिधर्मान्वयः कथम्—'अविभागेन दृष्टत्वात्' इति पूर्वाधिकरणे विशेष्यतया भगवदनुसन्धानस्य विधानात् योऽस्य धर्म्यन्वयः, अस्मिन्नधिकरणे गुणाष्टकविशिष्टज्ञानस्वरूपाविर्भावप्रतिपादनेन यश्चास्य गुणाष्टकरूपधर्मान्वयः, स कथमुपपद्येतेति । मैवम्—एवं मा शङ्किष्ठाः । इह—मुक्तजीवे । ब्रह्मस्वरूपादपरम्—परमात्मातिरिक्तम् । किञ्चित्—किमपि वस्तु । स्वनिष्ठं नास्ति खलु—स्वतन्त्रं स्वविशेष्यतार्हं नास्ति किल । द्रव्यञ्च अगुणं न स्यात्—जीवात्मरूपं द्रव्यमपि निर्गुणं न तिष्ठेत् । तत्—तस्मात्कारणात् । एतत् अधिकरणयुगं निरातङ्कम्—विवक्षितार्थद्वयोपदेशात् सफलतममिति न नैरर्थक्याशङ्कनातङ्कयोग्यम् । तथा च पूर्वाधिकरणे ब्रह्मस्वरूपव्यतिरिक्तस्वनिष्ठनिषेधरूपमस्मिन्नधिकरणे नैर्गुण्यरूपविरुद्धधर्मनिषेधरूपञ्च कैवल्यं प्रतिपन्नमिति प्रमाणविरुद्धाप्राप्तधर्मिधर्मान्वयनिवृत्तिरूपं कैवल्यं सिद्धमिति भावः ॥ ५२९ ॥

इति ब्राह्माधिकरणम् ॥ १५३ ॥

---

## सङ्कल्पाधिकरणम् ॥ १५४ ॥

सूत्रम्—सङ्कल्पादेव तच्छ्रुतेः ॥ ५३१ ॥

धात्रादेरप्यपेक्ष्यो ह्युपकरणगणस्सत्यसङ्कल्पवृत्तेः
मुक्तस्याप्येवमेवास्त्विति यदि वितथं तद्विकल्पासहत्वात् ।
इष्टा द्रव्याद्यपेक्षा सुकृततदितरापेक्षणं तत्र दुस्स्थं
न स्यादिच्छाविघातस्त्वनुपधिकतया देववाञ्छैकरस्यात् ॥ ५३० ॥

चिन्ता०—अत्र सङ्गतिर्भाष्ये "मुक्तः परं ब्रह्मोपसम्पद्य ज्ञानस्वरूपोऽपहतपाप्मत्वादिसत्यसङ्कल्पत्वपर्यन्तगुणक आविर्भवतीत्युक्तम् । तमधिकृत्य तस्य सत्यसङ्कल्पत्वप्रयुक्ता व्यवहाराश्श्रूयन्ते 'स तत्र पर्येति जक्षत्क्रीडन् रममाणस्स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा" इति ।' इति । तदर्थं वचारस्तु—किमस्य ज्ञात्यादिप्राप्तिः प्रयत्नान्तरसापेक्षा उत सङ्कल्पमात्रमूला । किमस्य सत्यसङ्कल्पत्वं राजादीनामिव भवति उत परमपुरुषस्येव । किं सङ्कल्पा देवेत्यवधारणं राजादितुल्यतां निवर्तयितुं प्रभवति नेति । किमीश्वरसङ्कल्पवन्मुक्तात्मसङ्कल्पस्यामोघत्वं सम्भवति नेति । किमस्य जक्षणादयो व्यापाराः पुण्यपापरूपतया बन्धका भवन्ति नेति । अत्र मुक्तस्य सोपकरणस्यैव तत्तत्कार्यकरत्वं स्यात् तथाचोपकरणापेक्षायां तस्य संसारित्वमेव स्यादित्याशङ्क्य परिहरति—धात्रादेरित्यादिना । अयमत्रान्वयः—सत्यसङ्कल्पवृत्तेर्धात्रादेरप्युपकरणापेक्षा विद्यते । एवं मुक्तस्यापि कार्यकरणेऽप्युपकरणगणापेक्षा स्यात् । तथा चासावमुक्तादविशिष्टस्स्यादिति । तमिममाशङ्कितमर्थं विकल्पासहत्वेन दूषयति—वितथमिति । अत्रायं विकल्पः—किं द्रव्याद्यपेक्षामात्रमेव भवता सापेक्षत्वमुच्यते किं वा पुण्यपापापेक्षा न तावदाद्यः सिद्धसाधनत्वादित्याह—इष्टेति । नाप्युत्तर इत्याह—सुकृतेति । पुण्यपापविनिर्मुक्तो हि मुक्तः, तस्य पुण्यपापापेक्षणमस्तीति वक्तुमेव न शक्यते । यथा न्यायविदां मते चेतनकर्तृत्वे कर्मापेक्षास्ति नपुनरीश्वरकर्तृत्वे एवमत्रापि मुक्तानां कर्तृत्वे कर्मापेक्षास्तीति विरुद्धमेव । ईश्वरस्य त्वीश्वरत्वादेव कर्मापेक्षा नास्तीतिचेत् मुक्तस्यापि मुक्तत्वादेव सा न स्यात् द्वयोरप्यकर्मवश्यत्वेन प्रमाणसिद्धत्वादिति भावः । ननु कर्तृत्वान्मुक्तस्येच्छाविघातः कदाचित्स्यात् ; न स्यात् केन विघातः किं कर्मणा उतेश्वरेच्छया न कर्मणेत्याह—अनुपधिकतयेति । कर्माधीनव्यापारवतामेव हि कर्मणा विघातसम्भवः । तर्हीश्वरेच्छया विघातस्स्यादित्याशङ्क्याह—देवेति । मुक्तः खलु 'इमाँल्लोकान् कामान्नी कामरूप्यनुसञ्चरन्' इति भगवदनुवर्तकत्वेनैव श्रूयते । अतस्तस्य भगवद्वाञ्छयेच्छाविघातश्शङ्कितुमपि न शक्यतइत्यर्थः ॥ ५३० ॥

पद०—धात्रादेरपीत्यादि । सत्यसङ्कल्पवृत्तेः—अप्रतिहतसङ्कल्पव्यापारस्य । धात्रादेरपि—चतुर्मुखादेरपि । उपकरणगणोऽपेक्ष्यो हि—किञ्चित्कार्यकरणे उपकारकवर्गस्स्वीकार्य एव दृश्यते हि । एवमेव—तन्न्यायेनैव । मुक्तस्यापि—सत्यसङ्कल्पस्यापि मुक्तस्य । अस्तु—उपकरणवर्गोऽपेक्षणीयोऽस्तु । तथा च उपकरणापेक्षायाममुक्ततुल्यतैव स्यादिति भावः । इति यदि—इति शङ्क्यते चेत् । तत् विकल्पासहत्वात् वितथम्—सृज्यवस्त्वपेक्षा स्यादिति वा कर्मापेक्षा स्यादिति वा शङ्कितुरभिप्राय इति विकल्पे द्वयोरपि शिरसोरुत्तरदशायामनवस्थानात् तच्छङ्कनं विफलम् । तदेवोच्यते उपरि द्रव्याद्यपेक्षा इष्टा—सृज्यद्रव्यापेक्षास्त्विति चेत् भवदभिमतं तस्या इष्टत्वात् सिद्धसाधनमित्यर्थः । सुकृततादितरापेक्षणं तत्र दुस्स्थम्—पुण्यपापरूपकर्मापेक्षणं स्यादित्यापाद्यते चेत् तादृशकर्मापेक्षणं सर्वकर्मविनिर्मुक्ततयावगते मुक्ते धर्मिग्राहकमानविरुद्धत्वेन स्थातुं न शक्नोति । तथा सति ईश्वरस्यापि जगत्सृष्ट्यादौ कर्मापेक्षा स्यात् तत्र धर्मिग्राहकमानविरोधात्परिहारस्तु तादृशे मुक्तेऽपि तुल्य इति भावः । परतन्त्रत्वान्मुक्तस्य कदाचिदिच्छाविघातसम्भवेनासत्यसङ्कल्पत्वं स्यादिति चेत् तत्र इच्छाविघातमूलं कर्म चेत् तत् तस्मिन्न सम्भवि ईश्वरेच्छा चेत् सा च नास्तीत्युच्यते—न स्यादित्यादिना । अनुपधिकतया—कर्माद्युपाधिशून्यतया । देववाञ्छैकरस्यात्—भगवदनभिमतवाञ्छानुदयेन भगवद्वाञ्छैकरस्यात् भगवदिच्छया विघातासम्भवाच्च । इच्छाविघातो नं स्यात्तु—स्ववाञ्छाविघातो न भवेदेव । अतो मुक्तस्य सत्यसङ्कल्पत्वं सुप्रतिष्ठितमेवेत्यभिप्रायः ॥ ५३० ॥

विश्वस्यैतस्य जन्मस्थितिलयरचना विश्वकर्तुर्यथा स्यात्
इच्छासन्तानभेदान्नियतिरिह तथा नित्यमुक्तक्रियाणाम् ।
तस्यानुच्छेदवृत्त्या प्रतिकलभिदुरास्ताश्च तादृक्प्रवाहाः
तद्बुद्धेरापरोक्ष्यं त्वनिशमभिदुरं वर्तते ब्रह्मधीवत् ॥ ५३१ ॥

चिन्ता०—मुक्तस्य सर्ववस्तुसाक्षात्कारे सकलकार्यकरणे चेश्वरमेव दृष्टान्तयित्वा दुर्बलबुद्धीन् प्रत्याययति—विश्वस्येति । अयमत्रान्वयः—एतस्य विश्वस्य जन्मस्थितिलयरचना विश्वकर्तुरीश्वरस्य यथा स्यात् एवमिच्छासन्तानभेदान्नित्यमुक्तक्रियाणामपि नियतिस्स्यात् । नन्विच्छासन्तानस्य कार्यत्वेनोच्छेदस्स्याद् यथा प्रदीपार्चिस्सन्तानस्य, तथा च 'जक्षत्क्रीडन् रममाणः' इत्याद्युक्तो मुक्तक्रियासन्तानोऽप्युच्छिद्येतेत्याशङ्क्य परिहरति—तस्येति । इच्छासन्तानस्यानुच्छेदो हि 'नच पुनरावर्तते' इत्यादिश्रुतिसिद्धत्वादपलपितुमेव न शक्यते । अन्यथा पूर्वावधिमत उत्तरावध्यवश्यम्भावकथने तद्वदेवोत्तरावधि-

मतः कर्मसन्तानस्य पूर्वावधिरपि स्यात् । तथा च संसारस्यानादित्वमेव न सिध्यति । प्रमाणसिद्धत्वात् तत्परित्युक्तं न शक्यत इति चेत् तर्ह्यपवर्गस्यापि निरतिशयानन्दानुभवसन्तानरूपस्योत्तरावधिरत्यन्तप्रमाण-विरुद्धत्वाद् वक्तुमेव न शक्यत इति समस्समाधिः । ननु मुक्तबुद्धेः पारोक्ष्यमापरोक्ष्यं वा पारोक्ष्ये बन्ध एव स्यात् आपरोक्ष्यमपि न घटते इन्द्रियजन्यज्ञानस्य ह्यापरोक्ष्यम् मुक्तस्य तु शरीरेन्द्रियादिकं न विद्यते विद्यते चेत् तन्मूलभूतं कर्मापि स्यात् तथाच पुनस्संसार एव स्यात् तथा च मुक्तज्ञानस्यापरोक्ष्यमपि न सम्भवती-त्यत्राह—तद्बुद्धेरित्यादि । यथा खल्वीश्वरबुद्धेरापरोक्ष्यं तद्वज्जीवबुद्धेरप्यापरोक्ष्यं प्राप्तम् । तदेतावन्तं कालं कर्मणा सङ्कुचितम् । अधुना प्रतिबन्धके निवृत्ते स्वाभाविकं स्यादिति ॥ ५३१ ॥

पद०—विश्वस्येत्यादि । **एतस्य विश्वस्य**—परिदृश्यमानस्य जगतः । **जन्मस्थितिलयरचना**—सृष्टिस्थितिलयविधानम् । **विश्वकर्तुः**—ईश्वरस्य । **इच्छासन्तानभेदात्**—इच्छासन्तानविशेषात् । **यथा स्यात्**—द्विपरार्धावसानपर्यन्तस्थितिस्तदा नियमेन प्रलयः, पुनस्सिसृक्षायां यथापूर्वमेव तत्त्वसमष्टचण्डाण्डा-धिपादिसृष्टिवेदप्रवर्तनादिकञ्च यथा परमात्मेच्छाविशेषाद्व्यवतिष्ठते । **तथा**—तस्मादेवेश्वरेच्छाविशेषात् । **इह**—मोक्षस्थाने । **नित्यमुक्तक्रियाणाम्**—अनन्तगरुडादयो ये नित्याः, विद्यानुष्ठानेन निवृत्तसंसाराश्च ये मुक्तास्तेषां याः क्रियाः कैङ्कर्यविशेषाः, अनन्तस्य निवासशय्यासनादिरूपेणावस्थाय भगवत्परिचरणं गरुडस्य वाहनध्वजादिरूपेणावस्थाय परिचरणमित्येवं नित्यानां कैङ्कर्यविशेषाः मुक्तानां तु भगवदनुभवपूर्वकभगवदभि-मततत्तत्कैङ्कर्यविशेषा एतेषाम् । **नियतिः**—व्यवस्था । भवतीति शेषः । **तस्य**—इच्छासन्तानस्य । **अनुच्छेदवृत्त्या**—अविच्छेदेनोपरितनकालेषु सर्वेष्वनुवर्तनात् । **प्रतिकलभिदुराः**—प्रतिक्षणं भिन्नाः । **ताश्च**—नित्यमुक्तक्रियाश्च । **तादृक्प्रवाहाः**—गतावस्थासुसदृशानन्तरयावत्कालानुवृत्तावस्थापरम्परावत्यो भवन्ति । भगवदिच्छाया नित्यानुवृत्त्या नित्यमुक्तनियतकैङ्कर्यप्रवाहोऽप्यनुवर्तत इति भावः । **तद्बुद्धेः**—मुक्तज्ञानस्य । **आपरोक्ष्यम्**—प्रत्यक्षरूपत्वम् । **अभिदुरं तु**—एकरूपमेव । **ब्रह्मधीवत्**—ब्रह्मसमवेत-ज्ञानस्येव । **अनिशम्**—सततमेव । **वर्तते**—इन्द्रियाजन्यस्यापीश्वरज्ञानस्य यथा प्रमाणबलान्नित्यापरोक्षत्वम् एवं मुक्तज्ञानस्याप्यपरोक्षत्वं प्रमाणबलादङ्गीकार्यमिति भावः । अत्रचिन्तामणिः—'विश्वस्येति । अयमत्रा-न्वयः । एतस्य विश्वस्य जन्मस्थितिलयरचना विश्वकर्तुरीश्वरस्य यथा स्यात् एवमिच्छासन्तानभेदान्नित्य-मुक्तक्रियाणामपि नियतिस्स्यात् । ननु इच्छासन्तानस्य कार्यत्वेनोच्छेदस्स्यात् यथा प्रदीपार्चिस्सन्तानस्य तथा च 'जक्षत्क्रीडन्रममाणः' इत्याद्युक्तो मुक्तक्रियासन्तानोऽप्युच्छिद्येतेत्याशङ्क्य परिहरति—तस्येति । इच्छासन्तानस्यानुच्छेदो हि 'नच पुनरावर्तते' इत्यादिश्रुतिसिद्धत्वादपलपितुमेव न शक्यते अन्यथा पूर्वावधिमत उत्तरावध्यवश्यम्भावकथने तद्वदेवोत्तरावधिमतः पूर्वावधिरपि स्यात् तथा च संसारस्यानादि-

त्वमेव न सिध्यति । प्रमाणसिद्धत्वात् तत्परित्यक्तुं न शक्यत इति चेत् तर्ह्यपवर्गस्यापि निरतिशयानन्दानुभवसन्तानरूपस्योत्तरावधिरत्यन्तप्रमाणविरुद्धत्वात् वक्तुमेव न शक्यते इति समस्समाधिः । ननु मुक्तबुद्धेः पारोक्ष्यमापरोक्ष्यं वा पारोक्ष्ये बन्ध एव स्यात् आपरोक्ष्यमपि न घटते इन्द्रियजन्यज्ञानस्य ह्यापरोक्ष्यं मुक्तस्य तु शरीरेन्द्रियादिकं न विद्यते विद्यते चेत् तन्मूलभूतं कर्मापि स्यात् तथा च पुनस्संसार एव स्यात् तथा च मुक्तज्ञानस्यापरोक्ष्यमपि न सम्भवतीत्यत्राह—तद्बुद्धेरित्यादि । यथा खल्वीश्वरबुद्धेरापरोक्ष्यं तद्वज्जीवबुद्धेरप्यापरोक्ष्यं प्राप्तं तदेतावन्तं कालं कर्मणा सङ्कुचितम् अधुना प्रतिबन्धके निवृत्ते स्वाभाविकं स्यादिति ' इति ॥ ५३१ ॥

प्रत्यूहार्हः प्रजेशप्रभृतिसुकृतिनां सत्यसङ्कल्पभावो
मर्त्यारम्भस्पृहादौ तदितरविविधप्राणिसृष्ट्यादिदृष्टेः ।
तेनेच्छासन्ततीनां सफलविफलते पुण्यपापैरमीषां
मुक्तस्योक्ता चिकीर्षा त्वविहतविषया तारतम्यं न दोषः॥ ५३२ ॥

चिन्ता०—अत्र सत्यसङ्कल्पत्वे सत्यपि प्रबलप्रतिघातकसद्भावे लोके प्रतिहतिर्दृश्यते, एवं मुक्तेऽपि प्रबलप्रतिघातकसद्भावात् प्रतिहतिस्स्यादित्याशङ्क्य प्रतिघातकत्वं पुण्यपापयोरेव, तयोस्तस्मिन्नभावात् प्रतिहतिशङ्कैव न स्यात् । अस्ति किञ्चित् व्यापारतारतम्यं मुक्तानाम् । तदस्तु नाम तावता न भोगसाम्यं बाध्यते । सर्वेषामपि मुक्तानां प्रतिबन्धकाभावेनासङ्कुचितज्ञानत्वादिति दर्शयति—प्रत्यूहार्हा इति । शब्दान्वयस्तु—सत्यसङ्कल्पत्वे सत्यपि प्रादेशिकसुकृतिनः कालविशेषसुकृतिनोऽपि प्रत्यूहार्हाः । अन्यदुपक्रान्तमन्यदापतितमितिन्यायेन अन्याभिप्रायेण प्रवृत्तानामन्यदेव जायत इति दर्शयति—मर्त्यारम्भेति । मर्त्यः–पुत्रादिः । पुत्राद्यारम्भस्पृहया कर्मानुष्ठाने कर्मकर्तृसाधनवैगुण्यादिना शत्रूणामेवारम्भदर्शनादित्यर्थः । अथवा मर्त्यस्यारम्भस्पृहादौ तद्विरोधिविविधप्राणिसृष्ट्यादिदृष्टेरित्यन्वयः । अन्यचिन्तायामन्यारम्भे नियामकमूलाभावाद् व्यापारनैरर्थक्यमेव स्यादित्याशङ्क्य नियामकमेव दर्शयति—तेनेति । अमीषां संसारिणां जीवानां प्रवृत्तानां साफल्यं वैफल्यं विपरीतफलञ्च प्राचीनपुण्यपापाभ्यामेव भवति । मुक्तस्य तु पुण्यपापे न स्तः । तस्य चिकीर्षा नियतमेव सफलेति श्रुतिरपि कथयति । ईश्वरस्तु तदिच्छामेवानुच्छिन्नप्रवृत्तिमातनोतीत्याह—मुक्तस्येति । ननु मुक्तस्येच्छाविघाताभावेऽपि व्यापारतारतम्यमस्त्येव तेन भोगतारतम्यमपि स्यादित्याशङ्क्य परिहरति—तारतम्यमिति । नहि व्यापारतारतम्यमेवापवर्गे दोषः यदि भोगतारतम्यमस्ति तदा हि दोषस्स्यात् । नहि नटवृत्तिर्नटस्यैव सन्तोषमातनोति, अपि तु

तद्दर्शिनामन्येषामपि एवं सर्वेषामपि मुक्तानां भगवदनुसञ्चरणादिव्यापारस्साधारण्येन सन्तोषकारणमिति भोगसाम्यं सिध्यत्येव। राजकुलेषु वर्तमानाः खलु प्रत्येकं स्वाधिकारानुरूपेण व्यापारेण राजानं सेवन्ते सन्तोषस्तु सर्वेषां साधारण इति करतलामलकमेतत् ॥ ५३२ ॥

पद०—प्रत्यूहार्ह इत्यादि। मर्त्यारम्भस्पृहादौ—मनुष्यान्सृजानीतीच्छायां सत्यामपि। तदितरविविधप्राणिसृष्ट्यादिदृष्टेः—स्रष्टव्यमनुष्यभिन्ननानाविधजन्तुसृष्ट्यादिदर्शनात्। प्रजेशप्रभृतिसुकृतिनाम्—ब्रह्मादिसुकृतिनाम्। सत्यसङ्कल्पभावः—इच्छानुगुणसर्वसिद्धिकत्वरूपोऽमोघसङ्कल्पभावः। प्रत्यूहार्हः—प्रतिबन्धनयोग्यः। तेन—कारणेन। अमीषाम्—सुकृतिनाम्। इच्छासन्ततीनाम्—इच्छाप्रवाहाणाम्। पुण्यपापैः—अनुकूलप्रतिकूलपुण्यपापैः। सफलविफलते—साफल्यवैफल्ये भवतः। मुक्तस्य—मुक्तचेतनस्य। चिकीर्षा तु—किञ्चित्कार्यविषयिका इच्छा तु। अविहतविषया—अन्तरायानर्हस्वविषया। यथासङ्कल्पमेव सिध्यति नतु कदाचिदन्यथा भवतीति। उक्ता—श्रुत्या प्रतिपादितेत्यर्थः। तारतम्यं—कैङ्कर्यादितारतम्यं तु। न दोषः—दोषावहं न भवति। निश्शेषाविद्याकर्मवासनादिबन्धनिवृत्तिमत्त्वेन विशृङ्खलप्रसरविज्ञानानुभूयमानपरब्रह्मस्वरूपरूपगुणविभूतिकतया पुनरावृत्तिशून्यतया नित्यमुक्तसर्वचेतनक्रियमाणसर्वकैङ्कर्यजनितशेषिसन्तोषमूलकस्वानन्दस्य च सर्वेषामपि चेतनानां तुल्यत्वेन फलवैकल्याभावान्नित्यमुक्तविशेषेषु कैङ्कर्यविशेषव्यवस्थातारतम्यादिकं न दोषायेति भावः। चतुर्मुखस्य मनुष्यादिसृष्टिं सङ्कल्पयतो 'विनायकं प्रकुर्वाणो रचयामास वानरम्' इति न्यायेन सङ्कल्पितान्यसृष्ट्यादिकमितिहासपुराणादिषु सुप्रसिद्धम्। अत्र 'प्रत्यूहार्हाः प्रदेशप्रभृतिसुकृतिनः' इति पाठमवलम्ब्य चिन्तामणिव्याख्यानं दृश्यते। तद्विलिख्यते—'अस्ति किञ्चिद्व्यापारतारतम्यं मुक्तानां तदस्तु नाम तावता न भोगसाम्यं बाध्यते सर्वेषामपि मुक्तानां प्रतिबन्धकाभावेनासङ्कुचितज्ञानत्वादिति दर्शयति—प्रत्यूहार्हा इति। शब्दान्वयस्तु सत्यसङ्कल्पत्वे सत्यपि प्रादेशिकसुकृतिनः कालविशेषसुकृतिनोऽपि प्रत्यूहार्हाः। अन्यदुपक्रान्तमन्यदापतितमिति न्यायेनान्याभिप्रायेण प्रवृत्तानामन्यदेव जायतइति दर्शयति—मर्त्यारम्भेति। मर्त्यः पुत्रादिः। पुत्राद्यारम्भस्पृहया कर्मानुष्ठाने कर्मकर्तृसाधनवैगुण्यादिना शत्रूणामेवारम्भदर्शनादित्यर्थः। अथवा मर्त्यस्यारम्भस्पृहादौ तद्विरोधिविविधप्राणिसृष्ट्यादिदृष्टेरित्यन्वयः। अन्यचिन्तायामन्यारम्भे नियामकमूलाभावात् व्यापारनैरर्थक्यमेव स्यादित्याशङ्क्य नियामकमेव दर्शयति—तेनेति। अमीषां संसारिणां जीवानां प्रवृत्तानां साफल्यं वैफल्यं विपरीतफलञ्च प्राचीनपुण्यपापाभ्यामेव भवति। मुक्तस्य तु पुण्यपापे न स्तः। तस्य चिकीर्षा नियतमेव सफलेति श्रुतिरपि कथयति। ईश्वरस्तु तदिच्छामेवानुच्छिन्नप्रवृत्तिमातनोतीत्याह—मुक्तस्येति। ननु मुक्तस्येच्छाविघाताभावेऽपि व्यापारतारतम्यमस्त्येव तेन भोगतारत-

म्यमपि स्यादित्याशङ्क्य परिहरति—तारतम्यमिति । नहि व्यापारतारतम्यमेवापवर्गे दोषः यदि भोगता-रतम्यमस्ति तदा हि दोषस्स्यात् । नहि नटवृत्तिर्नटस्यैव सन्तोषमातनोति । अपितु तद्दर्शिनामन्येषामपि । एवं सर्वेषामपि मुक्तानां भगवदनुसञ्चरणादिव्यापारस्साधारण्येन सन्तोषकारणमिति भोगसाम्यं सिध्यत्येव । राजकुलेषु वर्तमानाः खलु प्रत्येकं स्वस्वाधिकारानुरूपेण व्यापारेण राजानं सेवन्ते सन्तोषस्तु सर्वेषां साधारण इति करतलामलकमेतत्' इति ॥ ५३२ ॥

सूत्रे मुक्तोऽप्यनन्याधिपतिरभिहितस्तेन कस्तस्य शेषी
श्रुत्यैवोक्तस्स्वराडित्यपि विहतिरतः प्राक्प्रतिष्ठापितानाम् ।
मैवं नाथेतरान्प्रत्यघविहित इह क्षिप्यते शेषभावो
विश्वस्यात्मेश्वरो यः पतिरिति पठितस्तत्पतित्वं त्वबाध्यम् ॥ ५३३ ॥

इति सङ्कल्पाधिकरणम् ॥ १५४ ॥

चिन्ता०—अत्र कश्चिच्चोदयति—सूत्र इति । 'सङ्कल्पादेव तच्छ्रुतेः । अत एव चानन्याधिपतिः' इति सूत्रद्वये मुक्तोऽनन्याधिपतिः कथितः । तेन तस्य शेषी न स्यात् । किञ्च 'स स्वराड्भवति' इति श्रुत्यैव मुक्तः स्वतन्त्रत्वेनोक्तः । अतः पूर्वप्रतिष्ठापितानां परमपुरुषशेषित्वपारतन्त्र्यादीनां सर्वेषामप्यर्थानां विहतिस्स्यात् । अत्रोत्तरम्—मैवमिति । प्रतिक्षेपप्रकारमाह—नाथेति । अस्मिन्नधिकरणे भगवद्व्यतिरिक्तान् प्रति पापकृतश्शेषभावो जीवस्य प्रतिक्षिप्यते तथैव तत्पारतन्त्र्यमपि । 'पतिं विश्वस्यात्मेश्वरम्' इति यः पठितो विश्वस्य पतिः तस्य पतित्वं बाध्यमेव न भवति । अतो मुक्तस्य भगवच्छेषत्वपारतन्त्र्ययोर्न कोऽपि विरोध इति ॥ ५३३ ॥

इति सङ्कल्पाधिकरणम् ॥ १५४ ॥

पद०—सूत्रइत्यादि । सूत्रे—अत्रत्ये 'अत एवचानन्याधिपतिः' इति सूत्रे । मुक्तः—मुक्तचेतनः । अनन्याधिपतिरप्यभिहितः—स्वाम्यन्तरशून्योऽप्यभिहितः । तेन—कारणेन । तस्य कश्शेषी—तादृशस्य तस्य को वा स्वामी भविष्यति । किञ्च श्रुत्यैव—'स स्वराड्भवति' इति श्रुत्यैव । स्वराडित्यप्युक्तः—'स्वराट् स्वतन्त्रो विज्ञेयः' इति निघण्टुप्रसिद्ध्या स्वतन्त्र इत्यप्युक्तः । अतः—अस्मात्कारणात् । प्राक्प्रतिष्ठापितानाम्—पूर्वं स्थापितानां जीवस्य भगवच्छरीरत्वतच्छेषत्वपारतन्त्र्यादीनाम् । विहतिः—विरोधस्स्यात् । मैवम्—एवं मा शङ्किष्ठाः । इह—अधिकरणे । नाथेतरान्प्रति—भगवद्भिन्नान्प्रति । अघविहितः—पापकृतः । शेषभावः—दास्यं पारतन्त्र्यञ्च । क्षिप्यते—निरस्यते । विश्वस्य पतिरिति

पठितो य आत्मेश्वरः—'पतिं विश्वस्यात्मेश्वरम्' इति श्रुत्या सर्वशेषित्वेनाम्नातो यः स्वशेष्यन्तरशून्य पुरुषोत्तमो नारायणः । तत्पतित्वं तु—तस्य शेषित्वं स्वस्य तं प्रति शेषत्वं पारतन्त्र्यञ्च । अबाध्यम्—प्रबलप्रमाणसिद्धत्वान्न बाधनार्हम् । अतो न प्राक्स्थापितविरोध इति भावः ॥ ५३३ ॥

इति सङ्कल्पाधिकरणम् ॥ १५४ ॥

---

## अभावाधिकरणम् ॥ १५५ ॥

सूत्रम्—अभावं बादरिराह ह्येवम् ॥ ५३३ ॥

मुक्तः प्रोक्तोऽशरीरः क्वचिदथ बहुधासंभवः क्वाप्यधीतो
गानक्रीडादि चोक्तं तदनुगुणमतद्वन्द्वमार्षं निरस्यन् ।
स्वच्छन्दस्योभयं तत्क्षममिति वदति स्वं मतं सूत्रकारः
स्याच्चाकर्मोद्भवं तन्निखिलमपि परब्रह्मवत्तत्समस्य ॥ ५३४ ॥

चिन्ता०—अत्र भाष्ये सङ्गतिः—'किं मुक्तस्य देहेन्द्रियाणि न सन्ति उत सन्ति अथवा यथासङ्कल्पं सन्ति न सन्ति चेति विशये' इति । तदर्थविचारस्तु—किं मुक्तस्येत्यादिः प्रथमविचारः । तदर्थं विचार्यते—'स एकधा भवति' इत्यादिश्रुतिरशरीरत्वश्रुतिं सङ्कोचयितुं शक्नोति नेति । किं 'स एकधा भवति' इत्यादिवाक्यं मुक्तस्य सशरीरत्वं प्रतिपादयितुं प्रभवत्युत न । प्रतिपादनेऽपि किं सशरीरत्वमात्रं प्रतिपादयत्युतैतच्छरीरत्वमवगमयतीति । तदर्थमेकधाभवनत्रिधाभवनादिकं मुक्तस्य शरीरेण विना सम्भवत्युत न । अत्र बादरिजैमिनिमताभ्यां पूर्वपक्षमनुवदति—मुक्त इति । 'अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' इति क्वचिद्वाक्ये मुक्तोऽशरीरत्वेन प्रोक्तः । अथ तस्यैव मुक्तस्य 'स एकधा भवति त्रिधा भवति' इत्यादिवाक्ये बहुधासम्भवश्च श्रूयते । क्वचित्पुनश्शरीरेन्द्रियसाध्यं गानक्रीडादि च 'एतत्साम गायन्' इत्यादिवाक्ये प्रतिपाद्यते । तत्तद्वाक्यानुगुणमार्षं मतद्वन्द्वं निरस्यन् बादरिमतमशरीरत्वनियमं जैमिनिमतं सशरीरत्वनियमञ्च निरस्यन् सूत्रकारः स्व मतं यथावद्दर्शयतीत्याह—स्वच्छन्दस्येति । यथेष्टं सशरीरत्वमशरीरत्वञ्चोभयमपि तुल्यम् । अयमभिप्रायः—असङ्कुचितब्रह्मानुभवरूपे पुरुषार्थे न शरीरापेक्षा, सर्वदेशसर्वकालसर्वावस्थोचितभगवत्कैङ्कर्ये पुनः 'इमांल्लोकान्' 'जक्षत्क्रीडन् रममाणः' इत्यादिश्रुत्युक्ते शरीरापेक्षेति । ननु सशरीरत्वमप्यङ्गीकृतञ्चेत् 'न ह वै सशरीरस्य सतः' इत्युक्त-

प्रियाप्रिययुक्तत्वमपि स्यादिति पुनरावर्तते संसार इत्याशङ्क्याह—स्यादिति। अयमर्थः—यदि सशरीरत्वमात्रं संसारः, तर्हीश्वरस्यापि संसारस्स्यात्। अपि तु कर्माधीनशरीरत्वं संसारः। ईश्वरवन्मुक्तस्यापि स्वच्छन्दस्य सङ्कल्पमात्राधीनशरीरत्वेऽपि संसारगन्धानवकाश इति रमणीयमेतत् ॥ ५३४ ॥

पद०—मुक्त इत्यादि। मुक्तः क्वचित् अशरीरः प्रोक्तः—मुक्तचेतनः क्वचित् 'अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' इत्यादौ श्रुतिवाक्यविशेषे शरीररहित इत्युक्तः। अथ—तत्प्रकाराद्भिन्नप्रकारतया। क्वापि—'स एकधा भवति स त्रिधा भवति' इत्यादौ श्रुतिवाक्ये। बहुधा सम्भवोऽधीतः—तस्यैव मुक्तस्य स्वरूपेण नानात्वासम्भवात् शरीरद्वारेणैव तत्सम्भवाच्च शरीरद्वारकबहुभवनञ्चाम्नातम्। तेन च शरीरवत्त्वं सिद्धमित्यर्थः। गानक्रीडादि चोक्तम्—'एतत्साम गायन्नास्ते' इत्यादौ गानक्रीडादिकं मुक्तस्योक्तम्। तच्च शरीरं विनानुपपद्यमानं शरीरवत्त्वं तस्योपपादयति। आर्षम्—बादरिजैमिनिमुनिसंमतम्। तदनुगुणमतद्वन्द्वम्—उदाहृतवाक्यद्वयानुगुणं मतद्वयम्। निरस्यन्—बादरिमतमशरीरत्वनियमं जैमिनिसम्मतं सशरीरत्वनियमञ्च निरस्यन्। सूत्रकारः। स्वच्छन्दस्य—स्वेच्छानुगुण्येन वर्तमानस्य मुक्तस्य। तदुभयं क्षमामिति स्वं मतं वदति—असङ्कुचितब्रह्मानुभवस्य शरीरानपेक्षणादिच्छया अशरीर एवानुभवंस्तिष्ठति कदाचित् सर्वदेशसर्वकालसर्वावस्थबहुविधकैङ्कर्यकरणाभिलाषी सन् शरीरमिच्छति तदा सशरीर एव कैङ्कर्यं करोतीत्युभयथापि वर्तनं युक्तमिति स्वकीयं मतं 'द्वादशाहवदुभयविधं बादरायणोऽतः' इति सूत्रेण प्रतिपादयति। अकर्मोद्भवं तन्निखिलमपि परब्रह्मवत् तत्समस्य स्याच्च—अकर्ममूलकं स्वेच्छामात्रमूलकम् अशरीरत्वं सशरीरत्वञ्चेत्युभयं गानक्रीडादिकञ्च परब्रह्मण इव तत्समस्य विध्वस्तकर्मबन्धतया परब्रह्मतुल्यस्य मुक्तस्य स्यादेव सम्भावितमेव। तथा च सशरीरत्वमात्रेण संसारश्चेदीश्वरस्यापि सशरीरत्वेन प्रमाणसिद्धस्य संसारसम्भवः ईश्वरशरीरादेरकर्मकृतत्वान्न संसारावहत्वमिति चेत् मुक्तशरीरादेरपि कर्मकृतत्वाभावान्न संसारावहत्वमिति तुल्यम्। अतः स्ववाञ्छानुगुणमीश्वरवन्मुक्तोऽपि सशरीरोऽशरीरश्चेति सूत्रकाराभिमतं युक्ततमम् ॥ ५३४ ॥

**मोक्षे पुण्याद्यभावात्तदुपधिकवपुर्वर्जितत्वं न दूष्यं**
**तस्मिन्दुःखार्हदेहत्यजि च शुभवपुस्सत्त्वपक्षोऽप्यबाध्यः।**
**इत्थं सत्यत्र मुक्तस्थितिरिह मुनिना कीदृशी सूत्रिता स्यात्**
**नैवं स्वच्छन्ददेहग्रहतदनियमस्थापनेऽत्राभिसन्धेः ॥ ५३५ ॥**

चिन्ता०—ननु बादरिपक्षोऽपि स्वाभिमत एव तथा जैमिनिपक्षोऽपि एवञ्च सति सूत्रकारेण तत्पक्ष-

प्रतिक्षेपेण स्वपक्षतया कोऽयं पक्षस्स्थापित इति चोदनायां शिष्यप्रतिबोधनार्थं स्वपक्षं पुनरपि विशिष्य दर्शयति—मोक्ष इति। अयमत्र शब्दान्वयः—मोक्षे पुण्याद्यभावात् तदुपाधिकवपुर्वर्जितत्वं बादरिणा कथितं न दूष्यम्, तद्वद् दुःखार्हदेहरहिते तस्मिन्मुक्ते जैमिनिनोक्तशुभशरीरसत्त्वपक्षोऽपि न बाध्यनीय एव, इत्थं सत्यत्र मुनिना बादरायणेन कीदृशी मुक्तस्य स्थितिस्सूत्रिता स्यादिति। अत्रोत्तरमाह—मैवमिति। स्वाभिप्रेतमाविष्करोति—स्वच्छन्देति। स्वच्छन्ददेहोऽस्तीति वचनाद् देहसम्बन्धो नियमेन नास्तीति वदन् बादरिर्निरस्तः। तस्य च देहस्यानियमस्थापनात् नियमेन देहोऽस्तीति वदन् जैमिनिरपि निरस्तः। तेन भगवत्सङ्कल्पमूलस्वसङ्कल्पादेव यथायोगं शरीरी चाशरीरश्च भवति मुक्त इति सिद्धान्तः॥ ५३५॥

पद०—मोक्ष इत्यादि। मोक्षे—मोक्षदशायाम्। पुण्याद्यभावात्—पुण्यपापयोरभावात्। तदुपाधिकवपुर्वर्जितत्वम्—पुण्यपापमूलकशरीरराहित्यम्। न दूष्यम्—न निरसनीयं युक्तत्वाद्ग्राह्यमित्यर्थः। दुःखार्हदेहत्यजि च तस्मिन्—दुःखानुभवयोग्यकर्ममूलकदेहत्यागिन्यपि तस्मिन्मुक्ते। शुभवपुस्सत्त्वपक्षोऽप्यबाध्यः—अकर्ममूलकदिव्यदेहवत्त्वपक्षोऽपि अविरुद्धत्वात् प्रामाणिकत्वाच्च ग्राह्य एव। अत्र इत्थं सति—मुक्तसशरीरत्वाशरीरत्वयोरुपपन्नत्वे सति। इह—अस्मिन्नधिकरणे। मुनिना—सूत्रकारेण। मुक्तस्थितिः—मुक्तावस्था। कीदृशी सूत्रिता स्यात्—कीदृशीति सूत्रेण प्रतिपादिता भवेत्। नैवम्—एवं न शङ्कनीयम्। स्वच्छन्ददेहग्रहतदनियमस्थापनेऽत्राभिसन्धेः—स्वेच्छामूलकदिव्यदेहपरिग्रहस्य तथाविधदेहपरिग्रहेऽप्यनियमस्य च स्थापने एतदधिकरणतात्पर्यात्। तथा च स्वच्छन्ददेहवत्त्वप्रतिपादनाद्देहसम्बन्धो नास्तीति वदन् बादरिर्निरस्तः। तस्य च देहपरिग्रहस्यानियमस्थापनात् नियमेन देहस्थितिं वदन् जैमिनिश्च निरस्तः। तेन भगवत्सङ्कल्पमूलकस्वसङ्कल्पादेव यथायोगं सशरीरता अशरीरता च मुक्तस्य भवतीति सिद्धान्तः॥ ५३५॥

नानादेहा यदि स्युर्युगपदधिगतब्रह्मसाम्यस्य पुंसः
तेषां व्याप्तस्वरूपान्वय उचित इति प्राक्तनाणुत्वहानम्।
नैतद्धीव्याप्तिसिद्धेर्भवति च जगदावेशवाक् तन्निदाना
सौभर्यादौ प्रक्लृप्तां गतिमपवदितुं न क्षमं ब्रह्मसाम्यम्॥ ५३६॥

चिन्ता०—अत्र कश्चिच्चोदयति—नानेति। जीवस्तावदणुरिति प्रसिद्धम्। अत्र पुनरधिगतब्रह्मसाम्यस्य तस्य युगपन्न नानादेहो भवतीत्युच्यते यद्येवं तर्हि तेषां देहानां देशभेदेनो-

त्मनां व्याप्तपरब्रह्मस्वरूपान्वय एव समुचितः, न पुनरणुरूपजीवस्वरूपान्वयः। तेन जीवाणुत्वादो मुक्तिदशायां भज्येत। यदि तथा विभुत्वं जीवस्य तर्हि जीवेश्वरविभागो न स्यात्। अणुरवगतिमाञ्जीव ईशोऽन्य इति भवतां सिद्धान्तः। तदेतद्दूषयति—नैतदिति। अत्र हेतुमाह—धीव्याप्तिसिद्धेरिति। स्वरूपव्याप्त्यभावेऽपि जीवस्य मुक्तिदशायां धर्मभूतज्ञानव्याप्तिसिद्धेरित्यर्थः। अयमर्थः 'प्रदीपवदावेशः' इति वदता सूत्रकारेण व्यक्तमुक्त इत्याह—भवति चेति। जीवस्याणुत्वेऽपि 'स चानन्त्याय कल्पते' 'स एकधा भवति' इत्यादिजगदावेशवाक् धर्मभूतज्ञानव्याप्तिनिबन्धनेत्यर्थः। ननु जीवस्य मुक्तिदशायां 'परमं साम्यमुपैति' इति वचनाद् विभुत्वमेवाङ्गीकृत्यानेकशरीरपरिग्रहः किं न स्यादित्याशङ्क्याह—सौभर्यादावित्यादि। अयमर्थः—सौभर्यादौ तावद् विभुत्वमन्तरेण धर्मभूतज्ञानव्याप्त्यैव नानाशरीरपरिग्रहः क्लृप्त एव। एवञ्च मुक्तस्य विभुत्वं परिकल्प्य नानाशरीरपरिग्रहवर्णनाद् वरं क्लृप्तेनैव सौभर्यादिन्यायेन ज्ञानव्याप्त्या नानाशरीरपरिग्रहवर्णनमेव क्लृप्तकल्प्यविरोधे तु क्लृप्तपरिग्रह एव न्याय्य इति हि नीतिविदां निर्णयः। परमसाम्यं तु भोगमात्रत एवेति सूत्रकारैरेव निरणायि 'भोगमात्रसाम्यलिङ्गाच्च' इति, न पुनस्स्वरूपसाम्यम्। तेन व्यवस्थितमेव जीवेश्वरलक्षणकथनमिति ॥ ५३६ ॥

पद०—नानेत्यादि। अधिगतब्रह्मसाम्यस्य पुंसः—'निरञ्जनः परमं साम्यमुपैति' इति श्रुत्या प्राप्तपरब्रह्मसाम्यस्य मुक्तचेतनस्य। युगपत्—एककाले। नानादेहास्स्युर्यदि—बहवो देहा भवन्ति चेत्। तेषाम्—प्रदेशभेदवर्तिनां तेषां बहूनां देहानाम्। व्याप्तस्वरूपान्वय उचितः—विभुभूतस्वरूपसम्बन्धएव युक्तः। नत्वणोर्नानादेहसम्बन्धसम्भव इत्यर्थः। इति—इत्थंचेत्। प्राक्तनाणुत्वहानम्—प्राक्प्रतिष्ठापितजीवस्वरूपाणुत्वहानिस्स्यात्। नैतत्—एतच्छङ्कनं न युक्तम्। धीव्याप्तिसिद्धेः—'स चानन्त्याय कल्पते' इति श्रुत्या धर्मभूतज्ञानव्याप्तेस्सिद्धत्वात्। जगदावेशवाक् तन्निदाना भवति च—'स एकधा भवति' इत्यादिषु जगदावेशवचनं तन्मूलकमेव भवति तादृशधर्मभूतज्ञानव्याप्तिमूलकमेवोपपन्नं भवति। सौभर्यादौ प्रक्लृप्तां गतिमपवदितुं ब्रह्मसाम्यं न क्षमं भवति—बहुशरीरपरिग्रहवत्सु सौभर्यादिषु स्वरूपाणुत्वेनानेकशरीरव्याप्त्यसम्भवात् धर्मभूतज्ञानव्याप्त्यैव तेषूपपत्तिः क्लृप्ता तन्न्याय्यं निरस्य स्वरूपव्याप्तिमधुना कल्पयितुं ब्रह्मसाम्यं भोगमात्रकृततया लब्धस्वरूपं ब्रह्मसाम्यं कर्तृं नसमर्थं भवति। क्लृप्तज्ञानव्याप्त्यैव नानादेहपरिग्रहसम्भवात् ब्रह्मसाम्यापत्तेर्भोगमात्रकृतत्वस्य सूत्रितत्वेन स्वरूपेणापि साम्यकरणानपेक्षणाच्च मुक्तस्य स्वरूपव्याप्तिकल्पनानुचितैवेत्यर्थः। अत्रचिन्तामणिः—'अत्र कश्चिच्चोदयति जीवस्तावदणुरिति प्रसिद्धम्, अत्र पुनरधिगतब्रह्मसाम्यस्य तस्य युगपन्नानादेहो भवतीत्युच्यते यद्येवं तर्हि तेषां देहानां देशभेदेनोत्पन्नानां व्याप्तपरब्रह्मस्वरूपान्वय एव समुचितः, न

पुनरणुरूपजीवस्वरूपान्वयः, तेन जीवाणुत्ववादो मुक्तिदशायां भज्येत। यदि तथा विभुत्वं जीवस्य तर्हि जीवेश्वरविभागो न स्यात्। 'अणुरवगतिमान् जीव ईशोऽन्यः' इति भवतां सिद्धान्तः। तदेतद्दूषयति-नैतदिति। अत्र हेतुमाह—धीव्याप्तिसिद्धेरिति। स्वरूपव्याप्त्यभावेऽपि जीवस्य मुक्तिदशायां धर्मभूत-ज्ञानव्याप्तिसिद्धेरित्यर्थः। अयमर्थः 'प्रदीपवदावेशः' इति वदता सूत्रकारेण व्यक्तमुक्त इत्याह—भवति चेति। जीवस्याणुत्वेऽपि 'स चानन्त्याय कल्पते' 'स एकधा भवति' इत्यादिजगदा-वेशवाक् धर्मभूतज्ञानव्याप्तिनिबन्धनेत्यर्थः। ननु जीवस्य मुक्तिदशायां 'परमं साम्यमुपैति' इति वच-नात् विभुत्वमेवाङ्गीकृत्यानेकशरीरपरिग्रहः किं न स्यादित्याशङ्क्याह—सौभर्यादावित्यादि। अयमर्थः—सौभर्यादौ तावद्विभुत्वमन्तरेण धर्मभूतज्ञानव्याप्त्यैव नानाशरीरपरिग्रहः क्लृप्त एव, एवञ्च मुक्तस्य विभुत्वं परिकल्प्य नानाशरीरपरिग्रहवर्णनाद्वरं क्लृप्तेनैव सौभर्यादिन्यायेन ज्ञानव्याप्त्या नानाशरीरपरिग्रहवर्णनमेव। क्लृप्तकल्प्यविरोधेतु क्लृप्तपरिग्रह एव न्याय्य इति हि नीतिविदां निर्णयः। परमसाम्यं तु भोगमात्रत एवेति सूत्रकारैरेव निरणायि 'भोगमात्रसाम्यलिङ्गाच्च' इति। न पुनस्स्वरूपसाम्यम्। तेन व्यवस्थितमेव जीवेश्वरलक्षणकथनमिति' इति ॥ ५३६ ॥

देहानां यौगपद्ये बहुषु कथमणुर्धारकोऽस्त्वेष मुक्तः
चैतन्यद्वारतश्चेत् सकलमपि सदा धारयेद्व्याप्तबोधः।
मैवं मुक्तस्य शक्तिर्नियमितविषया त्विच्छया सर्वशक्तेः
प्राक्ताहृग्योगशक्त्या बहुतनुभजने कर्मबन्धोऽप्यपेक्ष्यः ॥ ५३७ ॥

चिन्ता०—अणोर्जीवस्य पुनरनेकशरीरपरिग्रहानुपपत्तिमभिधाय समाधत्ते—देहानामिति। अयमत्र शब्दान्वयः—शरीराणां यौगपद्ये सति कथमणुर्जीवो मुक्तस्स्वयमनेकेषु शरीरेषु धारकस्स्यात्। अत्र धारकत्वकथनं नियामकत्वादेरप्युपलक्षणम्। चैतन्यद्वारतश्चेदितिधर्मभूतज्ञानद्वारेण देहधारणमाशङ्क्य मुक्तज्ञानस्य सकलार्थव्याप्तिमत्त्वेन सर्वधारकत्वमपि मुक्तस्य स्यात् तथा च जीवेश्वरविभागासिद्धि-रित्याह—सकलमपीति। अत्रोत्तरम्—मैवमिति। नहि व्याप्तिमात्रेण सर्वधारकत्वं स्यात्। तथा सति कालस्यापि व्याप्तत्वेन सर्वधारकत्वप्रसङ्गात्। अपितु शक्तिविशेषादेव धारकत्वम्। नहि मुक्तस्यानेक-धारकत्वानुकूला शक्तिरस्ति। अपितु नियमितविषया मुक्तस्य शक्तिः—'जगद्व्यापारवर्जम्' इति सूत्रकारेण तच्छक्तेः क्वाचित्कत्वेन नियमनात्। यत्रापि मुक्तबुद्धेश्शक्तिरस्ति तत्रापि सर्वशक्तेरीश्वर-स्येच्छयैव सा नियम्यत इत्याह—इच्छया सर्वशक्तेरिति। कथं तर्हि सौभर्यादेरमुक्तस्यानेकदेह-

परिग्रहशक्तिरित्याशङ्क्याह–प्रागिति । तादृग्योगशक्त्या—ईश्वरदत्तयोगशक्त्येत्यर्थः । न केवलं योगशक्त्या अनादिसिद्धकर्मपरिपाकोऽप्यत्र कारणमित्याह—कर्मबन्ध इति । कर्मानुगृहीतज्ञानपरिपाकात् तादृशी शक्तिर्योगसिद्धिरित्युच्यत इत्यर्थः ॥ ५३७ ॥

पद०—देहानामित्यादि । देहानां यौगपद्ये–मुक्तपरिगृहीतानां देहानां बहूनामैककालिकत्वे । अणुः–अणुपरिमाणः । एष मुक्तः–विचार्यमाणोऽयं मुक्तचेतनः । बहुषु–अनेकेषु शरीरेषु । कथं धारकोऽस्तु–कथं धारकस्स्यात् । नियामकत्वञ्चास्य कथं भवेदिति सिद्धम् । चैतन्यद्वारतश्चेत्–धर्मभूतज्ञानद्वारा नानादेहधारणनियमनादिकं करोतीति चेत् । व्याप्तबोधः–सकलवस्तुव्याप्तज्ञानकोऽयम् । सकलमपि–सर्वमपि जगत् । सदा–सर्वदा । धारयेत्—धर्तुं शक्नुयात् । सर्वमपि नियच्छेत् । एवञ्च जीवेश्वरविभागासिद्धिरिति भावः । मैवम्–एवं मा शङ्किष्ठाः । मुक्तस्य शक्तिस्तु सर्वशक्तेरिच्छया नियमितविषया–नहि व्याप्तिमात्रेण सर्वधारकत्वं स्यात् । कालस्यापि व्याप्तत्वेन सर्वधारकत्वप्रसङ्गात् । किन्तु शक्तिविशेषादेव धारकत्वम् । नहि मुक्तस्याखिलजगद्धारणशक्तिसम्भवः । विद्यमाना तु मुक्तस्य शक्तिस्सर्वशक्तेरीश्वरस्येच्छया नियमितविषया । कैङ्कर्यौपयिककतिपयदेहादिविषयतया व्यवस्थापितविषया । 'जगद्व्यापारवर्जम्' इति सूत्रेणैव तच्छक्तेः क्वाचित्कत्वेन नियमनात् । प्राक्—बन्धदशायाम् । तादृग्योगशक्त्या–उपासनादिप्रीतेश्वरदत्तयोगशक्त्या । बहुतनुभजने–सौभर्यादिन्यायेनानेकशरीरप्राप्तौ । कर्मबन्धोऽप्यपेक्ष्यः—न केवलं योगशक्त्या योगसिद्धानां सर्वेषामनेकशरीरधारणाद्यदर्शनात् । अतोऽनेकशरीरधारणतन्मूलकसुखदुःखानुभवे मूलभूतकर्मसम्बन्धोऽपि कारणतया स्वीकार्यः । तथा च कर्मानुगृहीतज्ञानपरिपाकविशेषात् तादृशशक्तिर्योगसिद्धिरित्युच्यत इति भावः ॥ ५३७ ॥

**शक्तिः क्षेत्रज्ञसंज्ञा मुनिभिरभिदधे वेष्टिता कर्मभिस्स्वैः**
**पुंसोऽनंशापि बुद्धिर्बहुविधविकृतिस्स्वीकृतैवं स चास्तु ।**
**वालाग्रेत्यादिवाक्यात्तदयमणुरपि स्यादनन्तोऽपि मुक्तौ**
**न स्याज्जैनादिभङ्गः परिहृतविकृतेरैकरूप्यानपायात् ॥ ५३८ ॥**

चिन्ता०—अत्र कश्चिच्चोदयति बन्धदशायां सङ्कुचितस्य ज्ञानस्य मुक्तिदशायां विकासो भवद्भिरुच्यते, स तु सङ्कोचो विकासश्च जीवस्वरूपस्यैव स्यात् प्रमाणानुकूलत्वात् स्मर्यते हि–'यया क्षेत्रज्ञशक्तिस्सा वेष्टिता नृप सर्वगा ' इति जीवस्वरूपस्यैव कर्मभिरावेष्टनम् , कर्मनिर्मुक्तस्य तस्यैव विकासोऽपि स्यात् , किमनेन धर्मभूतज्ञाने सङ्कोचविकासपरिकल्पनेन प्रमाणविरुद्धेन' इति । तदिदमाह–शक्तिरिति ।

ननु निरवयवत्वाज्जीवस्य कथं विकास इत्याशङ्क्य धर्मभूतज्ञानस्यापि तन्निरवयवत्वं समानमित्याह—पुंस इति। यथा पुरुषस्यानंशापि बुद्धिरवस्थाभेदेन स्मृत्यनुभूत्यादिनानाविकृतिमती एवं जीवोऽपि बद्धदशायामणुः मुक्तदशायां तु विभुश्च स्यात्। अयं परिमाणभेदो मुक्तबद्धव्यवस्थया निरंशे भवदीयधर्मभूतज्ञानेऽप्यस्तीति भवतापि वक्तव्यमित्यर्थः। तदेतन्निगमयति—तदयमिति। तदिदं प्रतिक्षिपति—न स्यादिति। प्रतिक्षेपहेतुमाह—जैनादिभङ्ग इति। जैनाः खलु देहपरिमाणो जीवस्तदातदा परिणमत इति वदन्ति। तत्तु जीवस्य विकाराभावाज्जैनाधिकरणे प्रतिक्षिप्तम्। अयमत्रान्वयः—जैनादिभङ्गे परिहृतविकृतेर्जीवस्यैकरूप्यानपायादिति आकारान्तरप्राप्तिविरहस्यानपायादिति। अयमर्थः—आत्मनो निर्विकारत्वं प्रमाणप्रतिपन्नम् बद्धदशायामणोस्तस्यैव मुक्तदशायामानन्त्यञ्च तेनैव प्रमाणेन प्रतिपन्नम्। द्वयोरपि प्रमाणयोरविरोधो वाच्यः। स चाविरोधस्स्वरूपविकाराभावाद् धर्मभूतज्ञाने श्रुतिप्रतिपन्नानन्त्यस्वीकाराच्च विषयभेदेन सिध्यति। ज्ञानस्य तु साक्षान्निर्विकारत्ववचनं नास्ति। प्रत्युत सविकारत्ववचनान्येव श्रूयन्ते। ज्ञानसङ्कोचविकासप्रतिपादकश्रुतिस्मृतीतिहासपुराणवचनानामानन्त्यात्। आत्मनि तिरोधानवचनं तु ज्ञानद्वारा यथा घनपटलेन तिरोहितो घर्मरश्मिरिति ॥ ५३८ ॥

पद०—शक्तिरित्यादि। क्षेत्रज्ञसंज्ञा शक्तिर्मुनिभिस्स्वैः कर्मभिर्वेष्टिता अभिदधे—'विष्णुशक्तिः परा प्रोक्ता क्षेत्रज्ञाख्या तथापरा। अविद्याकर्मसंज्ञान्या तृतीया शक्तिरिष्यते॥' इत्यभिहितेषु शक्तिशब्दितेषु जगत्सृष्ट्युपयुक्तेषु भगवद्विशेषणेषु या क्षेत्रज्ञसंज्ञा द्वितीया जीवस्वरूपा शक्तिस्सा मुनिभिः पराशरादिभिः स्वैः पुण्यपापरूपैः कर्मभिर्वेष्टिता परिवेष्टिता सङ्कुचितस्वरूपविकासा अभ्यधायि। तथा च यत्स्वरूपस्यैव कर्मवेष्टनकृतस्सङ्कोचस्तस्यैव कर्ममोक्षे विकासस्स्यात् किं धर्मभूतज्ञाने सङ्कोचविकासपरिकल्पनेन प्रमाणविरुद्धेनेति भावः। पुंसः—जीवस्य। बुद्धिः। अनंशापि—निरवयवापि। बहुविधविकृतिस्स्वीकृता—अवस्थाभेदेन स्मृत्यनुभूत्यादिनानाविकृतिशालिनी भवद्भिरङ्गीकृता खलु। एवं स चास्तु—एवं स जीवोऽपि बद्धदशायामणुर्मुक्तदशायां विभुश्च स्यात्। किमस्मिन्नर्थे प्रमाणमिति चेत् बालाग्रेत्यादिवाक्यात्—'बालाग्रशतभागस्य शतधा कल्पितस्य च। भागो जीवस्स विज्ञेयस्स चानन्त्याय कल्पते॥' इति श्रुतिवाक्यादेव जीवस्वरूपस्यैव दशाभेदेनाणुत्वविभुत्वावगमात्। उक्तोऽर्थो निगम्यते—तदयमित्यादिना। तत् अयमणुरपि मुक्तौ अनन्तोऽपि स्यात्—तस्मादयं जीवो बद्धदशायामणुभूतोऽपि मुक्तिदशायां विभुश्च स्यात्। न स्यात्—एवं कदापि न सम्भवेत्। जैनादिभङ्गे परिहृतविकृतेरैकरूप्यानपायात्—'नैकस्मिन्नसम्भवात्। नच पर्यायादप्यविरोधो विकारादिभ्यः' इत्यादिजैनमतनिरासप्रकरणे जैनोक्तमशकमातङ्गादिसूक्ष्मस्थूलतत्तद्देहानुगुणपरिणामत्वनिरसनेन प्रतिक्षिप्तस्वरूपविकारस्य

जीवस्य तत्रोक्ताभिरेव प्रमाणोपपत्तिभिर्निर्विकारत्वस्याधुनाप्यपायाभावात् । अयं भावः—आत्मनो निर्विकारत्वं प्रमाणप्रतिपन्नं बद्धदशायामणोस्तस्यैव मुक्तदशायामानन्त्यञ्च तेनैव प्रमाणेन प्रतिपन्नं द्वयोरपि प्रमाणयोरविरोधो वाच्यः, तत्र निर्विकारत्वश्रुतेरनन्यथानेयत्वात् धर्मभूतज्ञानस्य विकृतिमत्तया प्रत्यक्षश्रुतिस्मृत्यादिसिद्धत्वात् तत्सङ्कोचविकासाभ्यामेव उदाहृतानुदाहृतजीवसङ्कोचविकासपरवचनानामुपपत्तिर्युक्तेति॥५३८॥

जीवस्यैकैकशो हि त्यजनत उदितो वृक्षशाखासु शोषः
तस्माद्द्वारकं स्यादपगतवरणे मुख्यमानन्त्यमस्मिन् ।
मैवं शाखासु भोगाश्रयनियतिकरोपाधिनाशः प्रहाणं
क्षेत्रादिन्यायतोऽसावभिमतिविरहात् स्यादधीतो जहातिः ॥ ५३९ ॥

चिन्ता०—अत्र पुनश्चोदयति—जीवस्येति । वृक्षेषु सर्वास्वपि शाखासु व्याप्त्या वर्तमानो जीवः काश्चन शाखा जहाति कासु चिच्छाखासु वर्तते, यत्र हानं तत्र शुष्कीभवति वृक्षः यत्र पुनरहानं तत्रोत्तरोत्तरं शाखावृद्धिरपि दृश्यते तेन जीवस्वरूपस्य प्रहाणाप्रहाणयोर्दर्शनात् स्वरूपपरिणामोऽस्तीति मन्तव्यम् । तदिदं निगमयति—तस्मादिति । एवमुपपादनात् । आवरणाभावे जीवे 'स चानन्त्याय कल्पते' इत्यधीतमानन्त्यं न धर्मभूतज्ञानद्वारकम् अपि त्वद्वारकमेव । नेत्याह—मैवमिति । तदेवोपपादयति—शाखास्विति । जीवस्य शाखासु प्रहाणं नाम न स्वरूपप्रहाणम्, अपितु तासु तासु भोगाश्रयत्वोपपादकपुण्यपापविरतिरेव ततो न जीवस्य स्वरूपविकारः । अस्मिन्नर्थे दृष्टान्तमप्याह—क्षेत्रादिन्यायत इति । यथा क्षेत्रं परिगृह्णाति जहातीत्यत्र क्षेत्रे न स्वरूपव्याप्तिर्जीवस्य परिग्रहः, नापि स्वरूपेण तद्विमोचनं हानम्, अपि तु जीवभोगसाधनत्वोपपादकधर्माधर्मपरिग्रहः क्षेत्रस्यापि परिग्रहः, तत्प्रहाणञ्च क्षेत्रप्रहाणमिति । अभिमतिविरहादिति—उपाधिनिमित्ताभिमानविशेषविरहादित्यर्थः । अयमर्थः—'वासांसि जीर्णानि यथा विहाय' इत्यादिषु देहस्य हानं परिग्रहणञ्चाभिधीयमानं कर्माधीनाभिमानविशेषमात्रम्, नपुनस्स्वरूपप्राप्तिर्नापि स्वरूपवियोगः तेन जीवस्वरूपविकारशङ्का नाङ्कुरति ॥ ५३९ ॥

पद०—जीवस्येत्यादि । जीवस्य—जीवात्मस्वरूपस्य । एकैकशः—एकामेकां शाखामिति प्रकारेण । त्यजनतः—सम्बन्धनिवर्तनात् । वृक्षशाखासु—वृक्षसम्बन्धिनीषु शाखासु । शोषः—शुष्कीभवनम् । उदितो हि—छान्दोग्ये षष्ठप्रपाठके एकादशखण्डे 'अस्य सोम्य महतो वृक्षस्य' इत्यारभ्य 'अस्य यदेकां शाखां जीवो जहात्यथ सा शुष्यति द्वितीयां जहात्यथ सा शुष्यति तृतीयां जहात्यथ सा शुष्यति सर्वं जहाति सर्वं शुष्यति' इत्यादौ प्रत्यपादि खलु । तस्मात्—जीवस्वरूपस्यैव सङ्कोचविका-

सयोः प्रतीयमानत्वात् । अपगतवरणे—निवृत्ताविद्याकृतसङ्कोचे । अस्मिन्—मुक्ते । अद्वारकं मुख्यमानन्त्यं स्यात्—धर्मभूतज्ञानद्वारकत्वं विना साक्षात्स्वरूपत एव मुख्यं विभुत्वरूपमानन्त्यमस्तु । मैवम्—एवं मा शङ्किष्ठाः । शाखासु प्रहाणम्—शाखासु विषये जीवो जहातीत्युक्तं त्यागात्मकं प्रहाणम् । भोगाश्रयनियतिकरोपाधिनाशः—सुखदुःखानुभवरूपस्य भोगस्य आश्रयनियतिकरः अवच्छेदकशरीरांशव्यवस्थाहेतुः इदं शरीरमास्थायेदं भवतानुभाव्यमिति व्यवस्थाहेतुरित्यर्थः, यः उपाधिः पुण्यपापरूपं कर्म तस्य नाशस्तदात्मकम् । ननु जीवस्वरूपसम्बन्धहानमित्यर्थः । हानस्य कर्मनाशरूपत्वे जीवो जहातीति जीवकर्तृकत्वं कथं सम्भवतीत्यत्राह—क्षेत्रादीत्यादि । अधीतोऽसौ जहातिः—उदाहृतश्रुत्याम्नातोऽसौ पूर्वमुपात्तो जहातिस्त्यागार्थक ओहाङ्धातुः । क्षेत्रादिन्यायतः अभिमतिविरहात्स्यात्—क्षेत्रं जहाति हस्तिनं जहाति पशून्गृहं जहातीत्यादौ क्षेत्रादिस्वरूपत्यागासम्भवात् स्वीयत्वाभिमाननिवृत्तिरेव हि जहातीत्यनेनोच्यते तन्न्यायेन स्वभोगायतनत्वाभिमाननिवृत्तिपरत्वादुपपन्नो भवेदित्यर्थः । कर्मनाशकार्यभूताभिमानविशेषात्मकधर्मभूतज्ञानसम्बन्धत्यागरूपत्वात् प्रहाणस्य जीवकर्तृकत्वसम्भव इति भावः ॥ ५३९ ॥

एको नैकः परस्मात्पृथगपृथगपि स्वस्वरूपेण मुक्तः
स्वाभीष्टाशेषभोक्ता स्वयमिति पृथुकक्षीवचोद्ये भ्रमन्ति ।
तेऽन्वीक्ष्य स्वोक्तिबाधं श्रुतिशतविहतिं तत्तदुक्त्यान्यपर्यात्
जैनावष्टम्भदृप्यन्मतिकलहमुचस्सत्पथं संश्रयन्तु ॥ ५४० ॥

चिन्ता०—मुक्तावस्थायां भेदाभेदवादिनां स्ववचनविरोधात् प्रमाणविरोधाच्च ते जैनमतवद् व्याहतं पक्षं परित्यज्य व्याघातदोषविधुरं सन्मार्गमेव भजन्त्वित्याह—एक इति । अयमर्थः—अस्मत्पक्षे व्याघातप्रमाणविरोधशङ्काभावात् स एव सत्पथः अपरे त्वसत्पथा इति । शब्दान्वयस्तु—एको नैको भिन्नश्चाभिन्नश्च परस्मात्पृथगपृथगपि मुक्तो जीवः स्वस्वरूपेण तथा परमात्मनः पृथक्त्वापृथक्त्वस्वरूपेण स्वाभीष्टाशेषभोक्ता स्वयं भवतीति पृथुकक्षीबवद् बालोन्मत्तवद् ये भ्रमन्ति । ते स्वोक्तिबाधं एकश्चानेकश्चपरस्मात्पृथगपृथगिति स्ववचनविरोधं 'पृथगात्मानं प्रेरितारञ्च' इत्यादिश्रुतिशतविहतिं तत्तदुक्त्यान्यपर्यं भेदाभेदप्रतिपादकश्रुतीनामन्यपरत्वं जीवानामन्योन्यैक्यप्रतिपादनं साजात्यात्, जीवब्रह्मणोरन्योन्यैक्यप्रतिपादनं तु ज्ञानानन्दादिरूपेण साजात्यात् शरीरात्मभावप्रतिपादनेन ब्रह्मात्मकत्वाभिप्रायाच्च अचिद्ब्रह्मणोरैक्यप्रतिपादनं विशिष्टैक्यादित्यादितात्पर्यमालोच्य जैनावष्टम्भेन दृप्यन्मतिकलहं मुक्त्वा सन्मार्गमेव संश्रयन्त्विति ।

अयमर्थः ये भेदाभेदवादिनः कर्ममीमांसकाः, ये च तन्मतानुसारिणो भेदाभेदमाश्रयन्ते ब्रह्ममीमांसकाः। उभयेऽपि ते जैनगन्धिमीमांसकाः। अतो जैनमतानुसारं विहाय ते सन्मार्गमेव समाश्रयन्त्विति 'भोक्ता भोग्यं प्रेरितारम्' इति तत्त्वत्रयस्य स्वरूपभेदाङ्गीकारेण 'सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत्' इति विशिष्टैक्यानुसन्धानमेव सन्मार्गः, तमेव मार्गं परिगृह्णन्त्विति ॥ ५४० ॥

पद०—एको नैक इत्यादि। मुक्तः—मुक्तचेतनः। स्वस्वरूपेण—नतु किञ्चिद्द्वारा। एको नैकः—भिन्नश्चाभिन्नश्च। सः। परस्मात्—परमात्मनः। पृथगपृथगपि—पृथग्भूतोऽपृथग्भूतश्च। स्वयम्—स्वतन्त्र एव सन्। स्वाभीष्टाशेषभोक्ता—स्वाभिमताशेषभोगवांश्च। इति—इत्थंरूपे। पृथुकक्षीवचोद्ये—बालवञ्चकचाटूक्तौ। ये इति पदमध्याहार्यम्। उपरि ते इत्युक्त्या सिद्धं वा। भ्रमन्ति—भ्रमणं प्राप्नुवन्ति। नतु तद्दोषचिन्तनेन तदुत्तरणं प्राप्नुवन्ति। ते—ते चेतनाः। स्वोक्तिबाधम्—स्वोक्त्योरेव पूर्वोत्तरयोः परस्परबाधम्। श्रुतिशतविहतिम्—जीवपरयोस्स्वरूपभेदप्रतिपादकानन्यथासिद्धानेकश्रुतिभिस्स्वोक्तार्थानां बाधितत्वञ्च। अन्वीक्ष्य—सम्यक्परामृश्य। तत्तदुक्त्यान्यपर्यात्—तत्तदुक्तीनां जीवैक्योक्तीनां जीवब्रह्मैक्योक्तीनां ब्रह्माचिदैक्योक्तीनाञ्च आन्यपर्यात्। जीवैक्योक्तीनां साजात्यपरस्वरूपादान्यपर्यात् जीवब्रह्मैक्योक्तीनां ज्ञानानन्दरूपत्वशरीरशरीरिभावादिपरस्वरूपादान्यपर्यात् अचिद्ब्रह्मैक्योक्तीनां विशिष्टैक्योपपादनपरस्वरूपादान्यपर्याच्च। जैनावष्टम्भदृप्यन्मतिकलहमुचः—भेदाभेदप्रतिपादनमूलपुरुषभूतजैनमतावलम्बनेन दृप्यतां दर्पयुक्तानां भेदाभेदवादिनामन्येषामपि जैन गन्धिवेदान्तिनामन्योन्यबुद्धिभेदकृतस्पर्धां मुक्त्वा। सत्पथम्—तादृशदोषविदूरतया सुभगतममस्मद्दर्शितं सन्मार्गम्। संश्रयन्तु—आश्रित्य सुख्यन्तु ॥ ५४० ॥

सर्वं संकल्पमात्राल्लभत इति समाम्नायते सूत्रितञ्च
स्वेच्छातो देहयोगाद्यनियतिकथनं स्यादतः पिष्टपेषः।
तन्नान्योन्योपरुद्धश्रुतिगतिनियतिः कामतोऽनेकदेह-
स्वीकारप्रक्रियेत्याद्यनियतिकथने सूत्रकाराभिसन्धेः ॥ ५४१ ॥

इत्यभावाधिकरणम् ॥ १५५ ॥

चिन्ता०—अत्र पौनरुक्त्यमाशङ्क्य परिहरति—सर्वमिति। 'स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरस्समुत्तिष्ठन्ति' इति श्रुत्युक्तम्। तदेव 'सङ्कल्पादेव तच्छ्रुतेः' इति सूत्रकारेणाप्युप-

पादितं पूर्वमेव । तदेवाधुनापि स्वेच्छातो देहयोगाद्यनियतिरिति पुनः कथ्यते । तेनायं पिष्टपेपस्स्यादिति चोदकाभिप्रायः । अत्र पिष्टपेपणन्यायो नेत्याह—तन्नेति । तदेवोपपादयति—अन्योन्येति । अयमर्थः—यदि पूर्वोक्तमेवात्राप्युक्तं स्यात् तदा हि पिष्टपेपन्यायः । पूर्वं हि 'सङ्कल्पादेव तच्छ्रुतेः' इत्यत्र प्रयत्ननिरपेक्षं स्वसङ्कल्पादेव देहेन्द्रियादिकं भवतीत्येतावन्मात्रमुक्तम् । अत्र पुनः कर्माधीनदेहाभावं कश्चिदाह । कर्मानधीनदेहसद्भावमपरस्त्वाह । अस्माभिस्तु सशरीरत्वाशरीरत्वश्रुत्योर्विपयनियमोऽभिधीयत इत्ययमधिकोऽर्थः । अर्थान्तरमप्यधिकमाह—कामत इति । सङ्कल्पादेवानेकदेहस्वीकारे कदाचित्स्वपरिकल्पितदेहपरिग्रहः कदाचिच्च परमपुरुपपरिकल्पितदेहपरिग्रह इति देहपरिग्रहानियतिकथने सूत्रकाराभिसन्धेर्विद्यमानत्वादधिकार्थोपदेशोऽस्तीति न पौनरुक्त्यप्रसङ्गः । अत्रानियतिकथनवचनं समनन्तरोक्तनियतिकथनस्याप्युपलक्षणम् ॥ ५४१ ॥

इत्यभावाधिकरणम् ॥ १५५ ॥

पद०—सर्वं सङ्कल्पमात्रादित्यादि । सर्वं सङ्कल्पमात्रात् लभत इति समाम्नायते सूत्रितश्च—सर्वमप्यभिमतं मुक्तस्सङ्कल्पमात्रात् प्रयत्नादिकं विना सङ्कल्पमात्रादेव लभते प्राप्नोतीति समाम्नायते 'स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरस्समुत्तिष्ठन्ति' इत्यादिश्रुत्या प्रतिपाद्यते 'सङ्कल्पादेव तच्छ्रुतेः' इति सूत्रेण चैवं प्रत्यपादि । अतः—मुक्तस्य सङ्कल्पादेव सर्वं सिध्यतीति पूर्वाधिकरण एवोक्तत्वात् । स्वेच्छातः—स्वेच्छया । देहयोगाद्यनियतिकथनम्—देहपरिग्रहतदपरिग्रहानैयत्यप्रतिपादनम् । पिष्टपेपस्स्यात्—पिष्टस्य पुनःपेपणमिव कृतकरणरूपमेव स्यात् । निष्फलमेव भवेदित्यर्थः । तन्न—तथाशङ्कनं न युक्तम् । अन्योन्योपरुद्धश्रुतिगतिनियतिः—अन्योन्यं परस्परं उपरुद्धयोर्विरुद्धयोः श्रुत्योर्मुक्तस्याशरीरत्वसशरीरत्वप्रतिपादिकयोर्गतिनियतिः कर्मकृतदेहाभावाकर्मकृतदेहसद्भावरूपविपयव्यवस्था । या कर्तव्या तस्यामिति पदत्रयमध्याहार्यम् । कामतोऽनेकदेहस्वीकारप्रक्रियेत्याद्यनियतिकथने—स्वेच्छयानेकदेहपरिग्रहस्य ये प्रक्रिये प्रकारौ कदाचित्स्वपरिकल्पितदेहपरिग्रहः, कदाचित्परमपुरुपपरिकल्पितदेहपरिग्रह इत्येवंरूपौ इति एतौ प्रकारौ आदिर्यस्य स्वेच्छाकृतदेहपरिग्रहप्रकारदेहपरिग्रहाभावात्मकद्वयस्य तत् अनेकदेहस्वीकारप्रक्रियेत्यादि । तद्गुणसंविज्ञानः । तस्यानियतिः कदाचिदिच्छयानेकदेहपरिग्रहः कदाचिदिच्छया तदपरिग्रह इत्येवंरूपा तस्याः कथने प्रतिपादनेच । सूत्रकाराभिसन्धेः—सूत्रकारस्य व्यासस्य अभिसन्धेस्तात्पर्यस्य विद्यमानत्वादित्यर्थः । अतोऽधिकार्थप्रतिपादनान्न पौनरुक्त्यमिति भावः । अत्रोत्तरार्धस्य चिन्तामणिर्विलिख्यते । 'तन्नेति । तदेवोपपादयति—अन्योन्येति । अयमर्थः—यदि पूर्वोक्तमेवात्राप्युक्तं स्यात् तदा हि पिष्टपेपणन्यायः, पूर्वं हि सङ्कल्पादेव तच्छ्रुतेरित्यत्र प्रयत्ननिरपेक्षं

स्वसङ्कल्पादेव देहेन्द्रियादिकं भवतीत्येतावन्मात्रमुक्तम्, अत्र पुनः कर्माधीनदेहाभावं कश्चिदाह कर्मानधीनदेहसद्भावमपरस्त्वाह। अस्माभिस्तु सशरीरत्वाशरीरत्वश्रुत्योर्विषयनियमोऽभिधीयत इत्ययमधिकोऽर्थः। अर्थान्तरमप्यधिकमाह—कामत इति। सङ्कल्पादेवानेकदेहस्वीकारे कदाचित्स्वपरिकल्पितदेहपरिग्रहः कदाचिच्च परमपुरुषपरिकल्पितदेहपरिग्रह इति देहपरिग्रहानियतिकथने सूत्रकाराभिसन्धेर्विद्यमानत्वात् अधिकार्थोपदेशोऽस्तीति न पौनरुक्त्यप्रसङ्गः। अत्रानियतिकथनवचनं समनन्तरोक्तनियतिकथनस्याप्युपलक्षणम्।' इति। एतद्ग्रन्थपर्यालोचनया 'तन्वभावे सन्ध्यवदुपपत्तेः। भावे जाग्रद्वत्' इति सूत्रद्वयोपात्तकादाचित्कस्वसङ्कल्पितदेहपरिग्रहकादाचित्कपरमपुरुषसङ्कल्पितदेहपरिग्रहरूपदेहपरिग्रहानियतिकथन एव सूत्रकारतात्पर्यमिति भानात्। कामतोऽनेकदेहस्वीकारप्रक्रियेत्याद्यनियतिकथने इत्यस्य एवं वार्थः। कामतस्स्वसङ्कल्पमात्रेण सिद्धा या अनेकदेहस्वीकारप्रक्रिया इति इयं आदिर्यस्य स्वसङ्कल्पितदेहपरिग्रहपरमपुरुषसङ्कल्पितदेहपरिग्रहात्मकद्वयस्य तत् कामतोऽनेकदेहस्वीकारप्रक्रियेत्यादि तस्यानियतिकथन इति योजना। या कर्तव्या अन्योन्योपरुद्धश्रुतिगतिनियतिः तस्यां कामतोऽनेकदेहस्वीकारप्रक्रियेत्याद्यनियतिकथने च सूत्रकाराभिसन्धेरित्यन्वयः। चिन्तामण्युक्तप्रक्रियया अनियतिकथन इत्यस्यैवान्योन्योपरुद्धश्रुतिगतिनियतिकथनोपलक्षकत्वे अन्योन्येत्यादिपदस्य नैरर्थक्यं भवेत्। उपलक्षकत्वस्य लक्षणया बोधकत्वरूपत्वेन तत्तात्पर्यग्राहकत्वं वा कल्पनीयम्॥ ५४१॥

इत्यभावाधिकरणम्॥ १५५॥

---

## जगद्व्यापारवर्जाधिकरणम्॥ १५६॥

सूत्रम्—जगद्व्यापारवर्जं प्रकरणादसंनिहितत्वाच्च॥ ५३४॥

यद्यप्युक्तो विमुक्तः परतनुरपृथक्सिद्ध इत्यत्र पूर्वं
व्यापारांशे तथापि श्रुतमिह परमं साम्यमक्षोभणीयम्।
संकल्पादेव सर्वोत्थितिरपि हि ततस्स्यादिति प्रत्यवस्थां
कृन्तत्यन्तेऽधिकारे कृतिमदितरयोस्स्थापयन्भोगसाम्यम्॥ ५४२॥

चिन्ता०—अत्र सङ्गतिर्भाष्ये 'किं मुक्तस्यैश्वर्यं जगत्सृष्ट्यादिपरमपुरुषासाधारणं सर्वेश्वरत्वमप्युत तद्रहितं केवलपरमपुरुषानुभवविषयमिति संशयः' इति। तदर्थविचारस्तु—किं मुक्त-

स्यैश्वर्यं जगद्व्यापारविषयमुत नेति । परमसाम्यसत्यसङ्कल्पत्वश्रवणं किं मुक्तैश्वर्यस्य जगद्व्यापारविषयत्वमवगमयितुं शक्नोति नेति । किं जगन्नियमनस्य मुक्तैश्वर्यान्तर्भावे 'यतो वा इमानि' इत्यादिब्रह्मलक्षणवाक्यं विरुध्यते नेति । किं मुक्तस्य सृष्टिप्रकरणासन्निधानेन जगद्व्यापारस्य ब्रह्मलक्षणत्वाश्रयणं न्याय्यमुत मुक्तस्य विकारलोकानुसञ्चरणश्रवणेन जगन्नियमनस्य ब्रह्मलक्षणत्वाश्रयणमन्याय्यमिति । किं मुक्तस्य विकारलोकानुसञ्चरणं नियमनार्थमुत केवलभोगार्थमिति । अत्र पूर्वपक्षी 'परमं साम्यमुपैति' इति श्रुत्यापातप्रतीत्यनुसारेण परमपुरुषवज्जगद्व्यापारोऽपि मुक्तस्यास्त्विति शङ्कते—यद्यपीति । अयमर्थः—पूर्वमेव मुक्तश्शरीरलक्षणैराधेयत्वादिभिः परमात्मनश्शरीरमिति यद्यप्युक्तः । तथापि व्यापारांशे श्रुतं परमं साम्यमक्षोभणीयम् । ततः 'सङ्कल्पादेव तच्छ्रुतेः' इति सूत्रोक्तमुक्तसङ्कल्पादेव सर्वोत्थानं स्यादिति जगद्व्यापारस्तस्यापि भवेदिति पूर्वपक्षिणः प्रत्यवस्थानं शास्त्रान्ते निकृन्तति नुदति । कृतिमदितरयोस्स्थापयन्भोगसाम्यमिति—कृतिमान् जगत्कर्ता इतरो जीवस्तयोर्भोगसाम्यमेव संभवति नपुनर्जगद्व्यापारसाम्यम् , तत्साम्ये जीवेश्वरलक्षणविभागविलोपप्रसङ्गादिति ॥ ५४२ ॥

पद०—यद्यप्युक्त इत्यादि । अत्र—अस्मिन्नध्याये । पूर्वम्—'अविभागेन दृष्टत्वात्' इत्यधिकरणे । विमुक्तः—मुक्तचेतनः । परतनुः—परमात्मशरीरभूतः । अत एव अपृथक्सिद्ध इति च यद्यप्युक्तः । तथापि व्यापारांशे इह श्रुतं परमं साम्यमक्षोभणीयम्—अप्रतिक्षेप्यम् । ततः—तस्मात् । सङ्कल्पादेव—मुक्तस्य सङ्कल्पमात्रादेव । सर्वोत्थितिरपि हि स्यात्—सर्वजगदुत्पत्त्यादिकमपि हि भवेत् । इति—इत्थम् । प्रत्यवस्थाम्—प्रत्यवस्थानम् । अन्तेऽधिकारे—शास्त्रान्तभूतेऽधिकरणे । कृतिमदितरयोः—कृतिमान् जगत्कर्ता ईश्वरः इतरो जीवः, तयोः । भोगसाम्यं स्थापयन्—भोगसाम्यमेव न पुनर्जगद्व्यापारेणापि साम्यमिति स्थापयन् । कृन्तति—छेदयति । निरस्यति । प्रत्यवस्थां कृन्ततीति सम्बन्धः ॥ ५४२ ॥

सायुज्यं भोगसाम्यं समगणि निपुणैश्शब्दशक्त्याद्यबाधात्  
तच्च व्यापारसाम्ये त्वसति न घटते स्वक्रियास्वादहानेः ।  
तस्मान्मुक्तस्य सृष्टिप्रभृतिरपि जगद्व्यापृतिर्ब्रह्मतुल्या  
मैवं तल्लक्षणं सा कथमनुगमतस्तस्य चान्यस्य च स्यात् ॥ ५४३ ॥

चिन्ता०—अत्र पूर्वपक्षी जगद्व्यापारसाम्याभावे विरोधमाशङ्कते—सायुज्यमिति । अयमत्र शब्दार्थानुगमः—निपुणैः खलु शब्दार्थानुगमाद् भोगसाम्यमेव सायुज्यमिति समगणि । तच्चास्माभिः

प्रागेव विवृतम् । तत्र हेतुमाह—शब्दशक्त्याद्यबाधादिति । दर्शिता चास्माभिश्शब्दशक्तिः । अत्र निपुणैरित्यभिधानमैक्यं सायुज्यमित्यभिदधतामद्वैतिनां निरासार्थम् । अस्तु सायुज्यशब्दार्थः किं ततः प्रस्तुतस्येत्याशङ्क्याह—तच्चेति । यदि व्यापारसाम्यं तदैव हि सायुज्यमपि स्यात् । भोजनसाम्ये हि भोगसाम्यमपि सम्भवति । उक्तमर्थं व्यतिरेकतोऽपि द्रढयति—असतीति । तदेवोपपादयति—स्वक्रियेति । ईश्वरस्य हि स्वक्रियास्वाद एव सर्वदा भवतीति जीवस्य जगद्व्यापाराभावे स्वक्रियास्वादाभावात् कथमिव सर्वसाम्यसिद्धिः । उक्तमर्थं सोपपत्तिकं निगमयति—तस्मादिति । तदिदं प्रतिक्षिपति—मैवमिति । तदेवोपपादयति—तल्लक्षणमिति । अयमर्थः—यस्य तु यल्लक्षणं तत् तस्यैव स्यात् नपुनरन्यस्य तेन लक्षणभूतो जगद्व्यापार ईश्वरस्य तदन्यस्यचानुगमतोऽनुवृत्त्या कथं स्यात् । लक्ष्यालक्ष्ययोरनुवर्तमानं न हि लक्ष्यस्य लक्षणमिति लक्षणविदो वदन्ति ॥ ५४३ ॥

पद०—सायुज्यमित्यादि । निपुणैः—शब्दार्थानुगमनिपुणैः । शब्दशक्त्याद्यबाधात्—सायुज्यशब्दघटकयुजिर्धातुतदुपपदसहशब्दादेशभूतसशब्दभावार्थप्रत्ययशक्तयौचित्याद्यबाधाय । सायुज्यम्—मुक्तस्य श्रुतिप्रतिपन्नं सायुज्यम् । भोगसाम्यम्—भोगसाम्यरूपं न तु स्वरूपैक्यरूपमिति । समगणि—निरणायि । तच्च—भोगसाम्यरूपं सायुज्यञ्च । व्यापारसाम्ये असति तु—मुक्तपरमात्मनोर्व्यापारेण जगत्सृष्ट्यादिरूपेण साम्ये अविद्यमाने सति । स्वक्रियास्वादहानेः—ईश्वरस्य स्वक्रियास्वाद एव सर्वदा भवतीति जीवस्य जगद्व्यापाराभावे स्वक्रियास्वादाभावात् । न घटते—न युज्यते । तच्च न घटत इति सम्बन्धः । तस्मात्—कारणात् । मुक्तस्यापि सृष्टिप्रभृतिः—सृष्ट्यादिः । जगद्व्यापृतिः । ब्रह्मतुल्या—ईश्वरतुल्या भवतु । मैवम्—एवं मा शङ्किष्ठाः । सा—जगत्सृष्ट्यादिक्रिया । तस्य च—लक्ष्यभूतस्य ब्रह्मणः । अन्यस्य च—अलक्ष्यभूतस्य तदन्यस्य मुक्तस्य च । अनुगमतः—अनुवृत्त्या । तल्लक्षणं कथं स्यात्—ईश्वरलक्षणं कथं भवेत् । लक्ष्यालक्ष्ययोरनुवर्तमानं नहि लक्ष्यस्य लक्षणमिति हि लक्षणविदो वदन्तीति भावः ॥ ५४३ ॥

कथ्यन्ते सृष्टिवाक्ये क्वचिदपि न जगत्कारणत्वेन मुक्ताः
प्राधीतः कामचारो भवतु न जगदारम्भकत्वं ततस्स्यात् ।
सर्वाकारोपभोग्येश्वरविषयधियस्साम्यतो भोगसाम्यं
युज्येतानन्दवल्ल्यां समगणि विभुनानन्दमात्रे समत्वम् ॥ ५४४ ॥

चिन्ता०—ननु व्यापाराभावे कथं भोगसाम्यं स्यादित्यत्र लोकदृष्टप्रक्रियया तदभावेऽपि भोग-

साम्यमुपपादयति—कथ्यन्त इति । अयमत्र शब्दान्वयः—सृष्टिवाक्ये क्वचिदपि मुक्ता जगत्कारणत्वेन न कथ्यन्ते । तर्हि 'इमांल्लोकान्कामान्नी' इत्यादिकामचारवचनं कथं स्यादित्याशङ्क्य सोऽपि भवतु नाम तथापि न जगदारम्भकत्वसिद्धिरित्याह—प्राधीत इति । अत्र व्यापारसाम्याभावे कथं भोगसाम्यमित्येतावदवशिष्यते तदपि नेत्याह—सर्वेति । भोग्यसाम्यादेव हि भोगसाम्यम्, न पुनर्व्यापारसाम्यात् । लोके हि नटनर्तनादिषु व्यापारेषु सभापतिभावुकनटादीनामनुभाव्यार्थसाम्येन भोगसाम्यं दृश्यत एव । न केवलं नटस्यैव भोगः । यथा राजानं सेवमानानां राजान्तरङ्गपुरुषाणामानन्दो राज्ञा समान एव । केवलं स्वाम्यं स्वातन्त्र्यञ्च राज्ञि वर्तते नपुनरानन्दे विशेषः । इयं तु लोकदृष्टप्रक्रिया । न केवलमियमेव, श्रुतिरपि 'स एको ब्रह्मण आनन्दः श्रोत्रियस्य चाकामहतस्य' इति वदन्ती जीवेश्वरयोश्शेषशेषिभावादिना स्वरूपवैषम्ये व्यापारवैषम्ये च सत्यपि भोगसाम्यमेवोपपादयति । तथा च दृष्टादृष्टप्रमाणप्रतिपन्नं भोगसाम्यं समदृष्टीनां विशिष्टानामिष्टमिति न कोऽपि विरोधः ॥ ५४४ ॥

पद०—कथ्यन्त इत्यादि । सृष्टिवाक्ये—जगत्सृष्टिप्रतिपादकश्रुतिवाक्ये । क्वचिदपि—क्वापि । मुक्ता जगत्कारणत्वेन न कथ्यन्ते । कामचारः प्राधीतो भवतु—'इमान्लोकान् कामान्नी कामरूप्यनुसञ्चरन्' इति श्रुत्या मुक्तस्य स्वेच्छासञ्चारः प्रतिपाद्यताम् । ततः—कामसञ्चारकथनमात्रेण । जगदारम्भकत्वं न स्यात्—जगत्कारणत्वं न सिध्येत् । नहि सञ्चारमात्रं जगत्कारणत्वमिति भावः । भोगसाम्यं सर्वाकारोपभोग्येश्वरविषयधियस्साम्यतः—स्वरूपगुणविभूत्यादिभिस्सर्वैरप्याकारैरुपभोग्यो भोग्यतमो य ईश्वरस्तद्विषया या धीस्तस्यास्साम्यतः ईश्वरे मुक्ते च तुल्यतया । युज्येत—युक्तमेव भवेत् । आनन्दवल्ल्याम्—'भीषास्मात्' इत्याद्यनुवाके आनन्दवल्ल्याख्ये । विभुना समत्वम्—ईश्वरेण साम्यम् । आनन्दमात्रे समगणि—'स एको ब्रह्मण आनन्दः श्रोत्रियस्य चाकामहतस्य' इति वाक्येनानन्दमात्रेणैव साम्यप्रतिपादनात् जगद्व्यापारसाम्याप्रतिपादनाच्चानन्दमात्रत एव साम्यमिति निरणायि । अतो न भोगसाम्यहानिः । नटक्रियानुभवरसस्य नटसभापतिसभ्यादितुल्यतावदीश्वरव्यापारानुभवजन्यरसस्य ईश्वरमुक्तयोस्तुल्यत्वानपायात् न क्रियास्वादहानिशङ्काचेति भावः ॥ ५४४ ॥

निष्कामश्रोत्रियस्याप्यतिदिशति सुखं मानुषानन्दतुल्यं
सानन्दान्वस्तुकामा शतगुणमधिकानाविरिञ्चं क्रमेण ।
तत्तद्भोगात्प्रथिष्ठं कथमिदमवरं कष्टमिष्टं च मुक्ते
सत्यं तत् स्यान्मुकुन्दप्रियजनसदृशो ह्येकदेशानुवादः ॥ ५४५ ॥

चिन्ता०—अत्र केचिद्वदन्ति 'मनुष्यानन्दमारभ्य चतुर्मुखानन्दपर्यन्तमुत्तरोत्तरमानन्दातिशयमुक्त्वा 'श्रोत्रियस्य चाकामहतस्य' इति निष्कामश्रोत्रियस्याप्यनुक्रमात् स एवानन्दोऽतिदिश्यते। तेन परमपदस्थानामपि निष्कामश्रोत्रियाणां मनुष्यानन्दादितुल्यानन्दवत्त्वमङ्गीकार्यम्' इति। तदिदमनुवदति—निष्कामेति। एवमनूदितं दूषयति—तत्तदिति। उत्तरोत्तरं शतगुणितक्रमेणोक्तात् तत्तत्संसारिभोगात् प्रथिष्ठमिष्टं कष्टम् उत्तरोत्तरसंसारिभोगात्पूर्वपूर्वोक्तभोगस्य शतांशेन न्यूनत्वात्कष्टत्वमित्यर्थः। नहि परमपदं गतस्य प्रसिद्धेन्द्रादिभोगादत्यन्तावरत्वकथनमास्तिकानां गोष्ठीषु समस्ति। न परमपुरुषः परमैकान्तिनः परमपदं गतस्यापि प्रसिद्धेन्द्रादिभ्योऽप्यवरत्ववर्णनमाकलयति। नापि च तदन्तरङ्गकिङ्करा भुजङ्गमविहङ्गमपतिप्रभृतयोऽपि तद्वचनमङ्गीकुर्वन्ति। 'ब्रह्मविदाप्नोति परम्' इति सर्वेषामपि ब्रह्मविदां सर्वप्रतिबन्धनिवृत्तौ साधारणमेकरूपमेव फलं श्रुतिरप्याह 'सोऽश्नुते सर्वान्कामान्सह' इति। नह्यत्र केषुचित्सर्वशब्दसङ्कोचो न्याय्यः शब्दार्थवैरूप्यप्रसङ्गात्। तेन 'निरञ्जनः परमं साम्यमुपैति' इत्यशेषाणामपि ब्रह्मविदामेकरूपमेव फलम्। तर्हि कथं पृथक्पृथक्फलनिर्देश इत्याशङ्क्याह—मुक्त इति। अयमत्रान्वयः मुकुन्दप्रियजनोऽनन्तगरुडविष्वक्सेनादिर्नित्यवर्गः, तत्सदृशे नित्यानन्दे सति तेषुतेष्वधिकारिष्वेकदेशकथनमवयुत्यानुवाद इति नीतिविदां सम्प्रदायः। यथा वैश्वानरवाक्ये द्वादशकपालादिवाक्यशेषे तत्फलविशेषकथनमवयुत्यानुवाद इति तान्त्रिकैरनुवर्ण्यते तद्वदिदमपीत्यर्थः ॥ ५४५ ॥

पद०—निष्कामश्रोत्रियस्येत्यादि। आविरिञ्चम्—चतुर्मुखमभिव्याप्य चतुर्मुखपर्यन्तमित्यर्थः। क्रमेण—मनुष्यमनुष्यगन्धर्वाद्युत्तरोत्तरक्रमेण। शतगुणम्—शतं गुणा आवृत्तयो यस्मिन्कर्मणि तथा। अधिकान्—उत्कृष्टान्। आनन्दान्। वक्तुकामा—वक्तुं प्रवृत्तेत्यर्थः। सा—आनन्दवल्लीति विशेष्यम्। श्रुतिरिति वा। निष्कामश्रोत्रियस्यापि—मुक्तस्यापि। मानुषानन्दतुल्यम्—मनुष्यानन्दतुल्यम्। सुखम्—आनन्दम्। अतिदिशति—'स एको मानुष आनन्दः। ते ये शतं मानुषा आनन्दाः। स एको मनुष्यगन्धर्वाणामानन्दः। श्रोत्रियस्य चाकामहतस्य' इति व्यपदिशति। तत्तद्भोगात्—पूर्वपूर्वोक्तसंसारिभोगापेक्षया। प्रथिष्ठम्—अतिशयितमपि। अवरम्—उत्तरोत्तरसंसारिभोगान्निकृष्टम्। इष्टं कष्टञ्च—अत एव प्रियं दुःखरूपञ्च। इदम्—अतिदेशवाग्लब्धं तत्तत्संसारिसुखतुल्यं सुखम्। मुक्ते—मुक्तात्मनि परमात्मना परमसाम्यमापन्ने। कथम्—कथं सम्भवति। सत्यम्—उक्तमर्थमङ्गीक्रियते अर्धं नेत्यर्थः। अतिदेशवचनमङ्गीकृतं तस्य तात्पर्यन्त्वन्यदित्यर्थः। तत्—अतिदेशवचनम्। मुकुन्दप्रियजनसदृशे—मुकुन्दप्रियजनाः अनन्तगरुडादयो नित्यसूरयस्तत्तुल्ये तत्तुल्यानन्दभाजि मुक्ते। एकदेशानुवादो हि स्यात्—मुक्तस्य नित्यसूरिवत्परिपूर्णानन्दवत्त्वात् सर्वसांसारिकानन्दानां तदेक-

देशत्वेन तदन्तर्गतत्वात् तदतिदेशवचनं द्वादशकपालान्तर्गताष्टाकपालादिवाक्यवदवयुत्यानुवाद इत्यर्थः ॥ ५४५ ॥

आनन्दानन्त्यमाह श्रुतिरिह हि यतो वाच इत्यादिकास्याः
विश्रान्तिश्श्रान्तिमात्रादिति च निगदिता यामुनाचार्यवर्यैः ।
न ह्यानन्दोन्मितिस्स्याद्विधिशतवचनेऽप्यस्य यष्ट्या नभोवत्
तच्चोक्तं भूधराण्वोरुदधिपतितयोर्मज्जने को विशेषः ॥ ५४६ ॥

चिन्ता०—पूर्वं मुक्तानन्दस्यानन्त्यादैकरूप्यमुक्तं तदेव श्रुत्या व्यक्तमुपपादयन् सत्सम्प्रदायग्रन्थमपि तत्र प्रमाणयति—आनन्दानन्त्यमिति । 'यतो वाचो निवर्तन्ते' इत्यादिवाक्यं परमपुरुषानन्दस्य मुक्तानुभाव्यस्यानन्त्यमेव वदति । कथमिह वेदवेद्यस्य तस्यानन्त्यमित्याशङ्क्याह—श्रान्तिमात्रादिति । 'यद्वा श्रमावधि' इत्यस्मिन् श्लोके यामुनाचार्यैर्भगवदानन्दस्य कार्त्स्न्येन वेदवेद्यत्वं नास्ति वेदोऽपि श्रान्तिपर्यन्तमेव भगवदानन्दमनुकथयति । तद्वन्ममापि श्रान्तिपर्यन्तमेव भगवदानन्दानुकथनं युज्यत इत्यप्युक्तम् । ननु मनुष्यानन्दादिवदुत्तरोत्तरं विधिशतकल्पनया भगवदानन्दस्य कार्त्स्न्येन वर्णनं कर्तुं शक्यत इत्याशङ्क्य तदपि नेत्याह—विधिशतवचन इति । विधिरप्यल्पीयानेव, अल्पीयसश्शतसङ्ख्याक-स्याप्युत्तरोत्तरकल्पनेऽप्यल्पत्वं न निवर्तते । तेन ब्रह्मानन्दस्य कार्त्स्न्येन कथनं कदापि न योयुज्यते । उपक्रमोपसंहारयोरुभयोरपि तुल्यप्रवृत्तित्वात् । तदिदं 'उपर्युपर्यब्जभुवोऽपि पूरुषान्' इति यामुनाचार्यवचन एव स्पष्टमेवोक्तमित्याह—तच्चेति । श्रुतिः खल्वेवं विचारयति—एकमब्जभुवमवधीकृत्य ततोऽपि शतगुणितानन्दत्वेनान्यमब्जभुवमन्यं वा कञ्चित्कल्पयामि ततश्चान्यं ततोऽपि चान्यम् एवं सर्वदा-कल्पनेऽपि तत्तुल्यत्ववचनेन भगवदानन्दस्यापरिमितत्वं सिद्धं तेन किमनेनायासेन । प्रथममेव केनापि प्रकारान्तरेण भगवदानन्दानन्त्यं कथयिष्यामि । तदिदमेव प्रकारान्तरं यद्व्यतिरेकमुखेनानन्त्यं कथया-मीति 'यतो वाचः' इति वाक्येन व्यतिरेकमुखेन कथितवती । अत्र सुखप्रतिपत्त्यर्थं यामुनाचार्याभिप्रेतं स्फुटाभिहितञ्च दृष्टान्तद्वयमाह—यष्ट्येति । आकाशो हि यष्ट्या न मीयते तद्वत्परब्रह्मानन्दोऽप्यल्पीय-सा मनसा न मीयत इत्येको दृष्टान्तः । अपरस्तु 'को मज्जतोरणुकुलाचलयोर्विशेषः' इति स्फुटमेवोक्त इत्याह—तच्चेति ॥ ५४६ ॥

पद०—आनन्दानन्त्यमित्यादि । इह—आनन्दवल्ल्याम् । हि—प्रसिद्धम् । यतो वाच इत्या-दिका श्रुतिः । आनन्दानन्त्यमाह—वाङ्मनसापरिच्छेद्यत्वकथनमुखेन भगवदानन्दोऽनन्त इत्याहेत्यर्थः ।

अस्याः—श्रुतेः। विश्रान्तिः—आनन्दपरिमितिप्रतिपादनव्यापारनिवृत्तिः। श्रान्तिमात्रात्—स्वाशक्तिमूलकश्रममात्रात्। नतु भगवदानन्दस्य परिमितत्वेन विषयसमाप्त्येत्यर्थः। इति च—एवञ्च। यामुनाचार्यवर्यैर्निगदिता—प्रतिपादिता। इति चेत्यत्र चकारात् 'उपर्युपर्यब्जभुवोऽपि' इति श्लोके मनुष्यानन्दादिक्रमेण शतगुणितोत्तरोत्तरातिशयितचतुर्मुखानन्देन भगवदानन्दं परिमातुमप्यतिजुगुप्सया तादृशानन्दमपि चतुर्मुखं मनुष्यस्थाने निवेश्य तदुपर्यपि स्वबुद्ध्या शतगुणितानन्दान्बहून् पुरुषानुत्तरोत्तरं परिकल्प्य तदवसानस्थप्रौढपुरुषानन्देन भगवदानन्दं पुनःपरिमातुं प्रवृत्तया तथाप्यनौचित्यतादवस्थ्यादेवमनन्तवारं कल्पनेऽपि तादृशान्तिमप्रयासस्याप्युपक्रमतुल्यतां मन्वानया श्रुत्या तथाविधभगवदानन्दपरिमाणाशक्त्या तद्व्यापारान्न्यवर्तीति च प्रत्यपादीति गम्यते। विधिशतवचनेऽपि—उक्तक्रमेण मनुष्यस्थाने विधिं परिकल्प्य तदुपर्युपरि शतगुणितोत्तरोत्तरातिशयितानन्दविधिशतपरिकल्पनेऽपि। यष्ट्या—परिमितदण्डेन। नभोवत्—आकाशस्येव। अस्य—भगवतः। आनन्दोन्मितिः—आनन्दोन्मानम्। इयदिति निश्चयः। न स्याद्धि—न भवेद्धि। भगवदानन्दस्यानन्तत्वेन परार्धपर्यन्तविधिपरिकल्पनेऽपि तदियत्तानिश्चयस्यासम्भवादिति भावः। तच्च—केनापि कल्पनेन भगवदानन्दस्यानुन्मेयत्वञ्च। भूधराण्वोरुदधिपतितयोर्मज्जने को विशेष इत्युक्तम्—स्वयं परिमाणतारतम्यभाजोरपि पर्वतपरमाण्वोः पारावारपतितयोर्मज्जने को विशेषोऽस्ति पारावारस्य सर्वमज्जनसमर्थत्वात् इति निदर्शयता 'को मज्जतोरणुकुलाचलयोर्विशेषः' इति श्लोकभागेन तैरेव प्रत्यपादीत्यर्थः ॥ ५४६ ॥

विश्वं मुक्तस्य देहो नखलु तदपृथक्सिद्ध्यभावोपलम्भात्
नोपादानं ततोऽसौ कथयितुमुचितस्सर्वशक्तित्वहानेः।
नात्माशक्यं चिकीर्षेत्तदितरविषये निर्विघाता तदिच्छा
व्यापारे भिद्यमानेऽप्यविषमरसता दृश्यते क्वापि लोके ॥ ५४७ ॥

चिन्ता०—अत्र जगद्व्यापारवर्जमित्युक्तस्यार्थस्य विशदप्रतिपत्त्यर्थं मुक्तस्य जगदुपादानत्वाभावेन जगद्व्यापारवर्जनम्। व्यापाराभावेऽपि भोगसाम्यं प्रागुक्तमेव प्रकटमुपपादयति—विश्वमिति। अयमन्वयः—विश्वं मुक्तस्य तावद्देह एव न भवति। मुक्तापृथक्सिद्ध्यभावस्य स्फुटमेव विश्वस्मिन्नुपलम्भात् तेनासावुपादानमिति कथयितुं नोचितः। तस्य सर्वशक्तित्वाभावात्। ननु मुक्तस्येच्छाविघाताभावो भवद्भिरेव महता प्रयासेनोपपादितः, अधुना पुनः प्रायेणेच्छाविघात एवोच्यते उपादानादिभावासम्भवादिति तत्कथमित्याशङ्क्याह—नात्मेति। अयमर्थः—मुक्तो हि तत्त्ववेदी तेन शक्यमेव चिकीर्षेन्नाशक्यम्

अतोऽशक्यविषये नेच्छाविघातो मुक्तस्य । यत्तु शक्यं तच्चिकीर्षेदेव तत्र तस्येच्छाविघातो नास्तीत्याह—तदितरविषय इति । अयमभिप्रायः—भगवान्खलु मुक्तस्याभिप्रेतेषु कैङ्कर्यादिषु कर्तव्येषु यथाभिमतं पितृलोकादिकरणेषु च नेच्छां विहन्ति तेन मुक्तस्येच्छाविघाताभावः । न ह्याकाशनिगरणमप्यभिलषति मुक्तः अनभिज्ञत्वप्रसङ्गात् । अशक्याभिलापादन्यत् किमनभिज्ञत्वम् । ननु तर्हि व्यापारसङ्कोचे मुक्तस्य रससङ्कोचोऽपि स्यादित्याशङ्क्य पूर्वमेव बहुवारमुक्तमुत्तरमेव बालप्रायस्य चोदकस्य पुनरप्यनुग्रहादनुवदति—व्यापार इति । नहि राजास्थानमातस्थुषामधिकारभेदेऽप्यानन्दवैषम्यमस्तीति बहुशोऽप्युक्तमस्माभिरिति ॥ ॥ ५४७ ॥

पद०—विश्वं मुक्तस्येत्यादि । विश्वम्—जगत् । तदपृथक्सिद्धयभावोपलम्भात्—मुक्तापृथक्सिद्ध्यभावस्य स्फुटमेव विश्वस्मिन्नुपलम्भात् । मुक्तस्य देहो न खलु—मुक्तस्य शरीरं न भवति खलु । अपृथक्सिद्ध्यभावकथनम् आधेयत्वविधेयत्वशेषत्वोपलक्षणम् । अपृथक्सिद्धौ वा आधेयत्वादिकमन्तर्भाव्यम् । ततः—तस्मात् कारणात् उपादानत्वनिर्वाहकशरीरशरीरिभावासम्भवात् । सर्वशक्तित्वहानेः—बहुस्यामितिवद्बहुभवनौपयिकसर्वशक्तिमत्त्वाभावाच्च । असौ—मुक्तः । उपादानं कथयितुं नोचितः—जगदुपादानमित्यङ्गीकर्तुं नार्हः । आत्माशक्यं न चिकीर्षेत्—मुक्तो हि तत्त्ववेदी स शक्यमेव चिकीर्षेत् नाशक्यम् , अतो मुक्तस्याशक्यविषयेच्छाविघातो नास्ति इच्छाया एवानुदयात् । तदितरविषये—अशक्येतरविषये शक्यविषय इत्यर्थः । तदिच्छा—मुक्तेच्छा । निर्विघाता—प्रतिघातरहितैव । अयं भावः—भगवान् खलु मुक्तस्याभिप्रेतेषु कैङ्कर्यादिषु कर्तव्येषु यथाभिमतं पितृलोकादिकरणेषु च नेच्छां विहन्ति तेन मुक्तस्येच्छाविघाताभावः । न ह्याकाशनिगरणमप्यभिलषति मुक्तः । तादृशस्यानभिज्ञकार्यत्वात् । अशक्याभिलापादन्यत् किमनभिज्ञत्वमिति । व्यापारे भिद्यमानेऽपि अविषमरसता लोके क्वापि दृश्यते—नहि राजास्थानीमातस्थुषामधिकारभेदेऽप्यानन्दवैषम्यमस्ति नचापि नृत्यतो नटस्य पश्यतो जनस्य च रसवैषम्यमस्ति एवं व्यापारभेदेऽपि रससाम्यमुपपन्नमिति भावः ॥ ५४७ ॥

तत्तत्सेवाविशेषस्थिरपरिणमितस्सार्वभौमप्रसादः
सूते भृत्यस्य साम्यं स्वयमनभिमतस्वामिचिह्नैकवर्जम् ।
एवं देवं दयालुं शरणमुपगतैर्लभ्यतेऽनन्यलभ्या
निर्धूतावृत्तिशङ्का निरुपधिकरसा सव्यवस्था त्ववस्था ॥ ५४८ ॥

चिन्ता०—उक्तमर्थमन्तेवासिनामत्यन्तवैशद्याय सार्वभौमप्रसाददृष्टान्तेन द्रढयति—तत्तदिति ।

यथाधिकारमुचितसेवाविशेषे सति स्थिरपरिणमितस्सार्वभौमप्रसादस्सेवकानां साम्यं सूते । तत्राप्यनुचिताभ्यर्थनानिवारणाय तदेव साम्यं विशेषयति—स्वयमिति । नहि भृत्यस्स्वयं स्वामिचिह्नमपि च्छत्रचामरादिकं सिंहासनाधिरोहणमभिवाञ्छति । एवमेव दयालुं देवं शरणमुपगतैरध्यात्मविद्भिर्लभ्यते । अनन्यलभ्या 'भक्त्या त्वनन्यया' इत्युक्तैरेवाधिकारिभिर्लभ्या नापरैरधिकारिभिः । 'नच पुनरावर्तते' इत्यादिश्रुत्यैव निर्धूतावृत्तिशङ्का निरुपधिकरसा देशकालाद्युपाधिरहितनिरतिशयरसवती सव्यवस्था श्रीपतित्वशेषशायित्वाद्यसाधारणभगवद्गुणराहित्येन सव्यवस्था । अवस्था सर्वदेशसर्वकालसर्वावस्थोचितसर्वविधकैङ्कर्यलाभावस्थेत्यर्थः ॥ ५४८ ॥

पद०—तत्तत्सेवेत्यादि । तत्तत्सेवाविशेषस्थिरपरिणमितः—स्वस्वशक्यपरिचरणविशेषैस्स्थिरतया परिनिष्पन्नः । सार्वभौमप्रसादः—सार्वभौमस्य महाराजस्य प्रसादः प्रीतिविशेषः । भृत्यस्य स्वयमनभिमतस्वामिचिह्नैकवर्जम्-भृत्यानभिलषणीयस्वाम्यसाधारणच्छत्रचामरादिचिह्नैरेव रहितम् । साम्यम्-भोगसाम्यम् । सूते—प्रसूते प्रयच्छति । एवम्—तन्न्यायेन । दयालुम्—अनाद्यनुवृत्तानन्तापराधविस्मरणहेतुभूतसहजकारुण्यनिर्भरम् । देवम्—भगवन्तं पुरुषोत्तमम् । शरणमुपगतैः—अङ्गत्वेन स्वातन्त्र्येण वा शरणागतैर्भक्तैः प्रपन्नैश्च । अनन्यलभ्या—तदितरैर्दुर्लभा । निर्धूतावृत्तिशङ्का—पुनरावृत्तिशङ्काशून्या । शेष्यभिप्रायेण शेषाभिप्रायेण चावृत्त्यसम्भवादिति भावः । निरुपधिकरसा—देशकालतारतम्याद्युपाधिशून्यरसवती । सव्यवस्था—श्रीपतित्वशेषशायित्वजगत्सृष्ट्याद्यौपयिकसर्वशक्तत्वादिपरब्रह्मासाधारणाकारव्यवस्थाशालिनी । अवस्था—मोक्षदशा । तुना फलान्तरेभ्यो वैलक्षण्यं प्रतीयते । लभ्यते—प्राप्यते । तथा च भगवदसाधारणाकारान् विना सर्वथातुल्यमैश्वर्यं मुक्तैः प्राप्यत इति भावः ॥ ५४८ ॥

अत्राहुस्सूत्रमन्त्यं पृथगधिकरणं केचिदाञ्जस्यलाभात्
अस्त्यावृत्तिर्निषेध्ये त्विममिति हि पदं तेन शङ्कोत्थितेति ।
भाष्यादौ तन्न दृष्टं भवति च सुगमं पूर्वशेषत्वमस्य
स्यादावृत्तिप्रसङ्गादपि निखिलजगन्निर्मितौ साम्यशङ्का ॥ ५४९ ॥

चिन्ता०—एतस्मिन्पादेऽधिकरणषट्कमर्थभेदादुक्तम्, अपरे पुनस्सप्तममप्यधिकरणमेकसूत्रमित्याहुः 'अनावृत्तिश्शब्दादनावृत्तिश्शब्दात्' इति । तत् प्रायेण भाष्यकारानभिमतम् । अधिकरणप्रयोजनञ्च न भवतीत्याह—अत्राहुरिति । अयमत्र शब्दान्वयः—अत्रानावृत्तिप्रतिपादकमन्त्यं सूत्रं पृथगधिकरणं

केचिदाहुः । तत्र हेतुमपि वदन्ति—आञ्जस्यलाभादिति सूत्रस्वारस्यलाभादित्यर्थः । पूर्वाधिकरणे समाप्ते पुनः पुनरावृत्तिशङ्कयाधिकरणान्तरमारभ्यत इति सूत्रस्वारस्यमस्तीति भावः । अत्रानुग्राहकं हेत्वन्तरमस्तीत्याह—अस्तीति । अयमत्र भावः—'इमं मानवमावर्तं नावर्तन्ते' इत्यस्मिन्वाक्ये दृश्यते इममिति पदं , तेनावृत्तिरस्ति एतल्लोकप्राप्तिमात्रं नास्तीति द्योत्यते तेनावृत्तिशङ्कयाधिकरणोत्थानमिति पृथगधिकरणारम्भ इति । अत्रोत्तरमाह—भाष्यादौ तन्न दृष्टमिति । तर्हि 'अनावृत्तिश्शब्दात्' इति सूत्रस्य पृथगधिकरणत्वाभावे पूर्वाधिकरणशेषत्वं वाच्यम् , तच्छेषत्वं न दृश्यत इत्याशङ्कयाह—भवतीति । कथं पूर्वशेषत्वमिति पुनराशङ्कयाह—स्यादिति । अयमत्र भावः—सत्यसङ्कल्पस्य जीवस्य पुनरावृत्तौ सत्यां पूर्वाधिकरणे पूर्वपक्षिणोक्तं परमसाम्यमाशङ्कितुं शक्यते परमपुरुषोऽपि कश्चित्सत्यसङ्कल्पोऽस्मिंल्लोके वर्तते अयमपि कश्चित्सत्यसङ्कल्प इति तयोर्जगद्व्यापारेणात्यन्तसाम्यमिति, एतच्छङ्कानिवारणार्थं मुक्तस्यागमनमेव निषिध्यते । केवलं वैकुण्ठे भगवन्तं सेवित्वैव वर्तत इति पूर्वाधिकरणशेषत्वसिद्धिरेव तस्य सूत्रस्येति । अत्रायं निर्णयः—'इमं मानवमावर्तं नावर्तन्ते' इत्यत्रेममितिशब्दः कृत्स्नस्य मानवावर्तस्योपलक्षणार्थः । सर्वकर्मविनिर्मुक्तस्य मुक्तस्य क्वचिदपि कर्माधीनपुनरावृत्तिप्रसङ्गाभावात् 'इमान् लोकान्' इत्यत्र स्वच्छन्दकैङ्कर्यरूपानुगमनाङ्गतयोक्तं स्वच्छन्दपुनरावर्तनमपि सर्वत्र समानम् 'इमान् लोकान्' इत्यस्मिन्नेव लोके पुनरावृत्तिश्रवणादिति ॥ ५४९ ॥

पद०—अत्राहुरित्यादि । अत्र—अस्मिंश्चतुर्थाध्यायचतुर्थपादे । केचित्—केचिदाचार्याः । आञ्जस्यलाभात्—सूत्रस्वारस्यलाभात् । पूर्वाधिकरणे समाप्तेऽपि पुनरावृत्तिशङ्कयाधिकरणान्तरमारभ्यतइति सूत्रस्वारस्यमस्तीति भावः । हि—यस्मात् कारणात् । निषेध्ये तु—यदुद्देश्यकमावर्तनं निषिध्यते तस्मिन्निषेध्ये देशविषये । इममिति पदम्—एतल्लोकरूपत्वसमर्पकं विशेषणपदम् । दृश्यत इतिशेषः । तेन—एतल्लोकमात्ररूपत्वसमर्पकपदविशेषितदेशविशेषोद्देश्यकपुनरागमनरूपावृत्तिनिषेधवचनेन । आवृत्तिरस्ति इति शङ्कोत्थिता—पुनरावृत्तिरस्ति किन्तु एतल्लोकप्राप्तिमात्रं नास्तीति शङ्कोत्थिता । इति—एवमुत्थितशङ्कानिरासस्यावश्यकत्वाद्धेतोः । अन्त्यं सूत्रम्—'अनावृत्तिश्शब्दात्' इत्यादिसूत्रम् । पृथगधिकरणम्—'जगद्व्यापारवर्जम्' इत्यादेः पूर्वाधिकरणात् पृथग्भूतमेकसूत्रात्मकमधिकरणम् आहुः । तत्—पृथगधिकरणत्वप्रतिपादनम् । भाष्यादौ—श्रीभाष्यादिग्रन्थेषु । न दृष्टम्—न श्रुतम् । तथाप्रतिपादकवाक्यपङ्क्तिरूपेण न दृष्टमिति वार्थः । अस्य—सूत्रस्य । पूर्वशेषत्वञ्च—जगद्व्यापारेत्यादिपूर्वाधिकरणशेषत्वञ्च । सुगमं भवति—सुखेनावगम्यं भवति । कथमित्यत्राह—स्यादित्यादि । आवृत्तिप्रसङ्गादपि निखिलजगन्निर्मितौ साम्यशङ्का स्यात् । अयमर्थः—तस्य सत्यसङ्कल्पस्य जीवस्य

पुनरावृत्तौ सत्यां पूर्वाधिकरणे पूर्वपक्षिणोक्तं परमसाम्यमाशङ्कितुं शक्यते परमपुरुषोऽपि कश्चित् सत्यसङ्कल्पोऽस्मिन् लोके वर्तते अयमपि कश्चित्सत्यसङ्कल्प इति तयोर्जगद्व्यापारेणात्यन्तसाम्यमिति, एतच्छङ्कानिरासार्थं मुक्तस्यागमनमेव निषिध्यते। वैकुण्ठ एव केवलं भगवन्तं सेवमान एव मुक्तो वर्तत इति पूर्वाधिकरणशेषत्वमेतस्य सूत्रस्यैवं सिध्यति। अयमत्र निर्णयः—'इमं मानवमावर्तं नावर्तन्ते' इत्यत्र इममितिशब्दः कृत्स्नस्य मानवावर्तस्योपलक्षणार्थः। सर्वकर्मविनिर्मुक्तस्य मुक्तस्य क्वचिदपि कर्माधीनपुनरावृत्तिप्रसङ्गाभावात् 'इमान् लोकान्' इत्यत्र स्वच्छन्दकैङ्कर्यरूपानुगमनाङ्गतया प्रतिपन्नं स्वच्छन्दपुनरावर्तनमपि सर्वत्र समानम्, 'इमान् लोकान्' इत्यस्मिन्नेव लोके पुनरावृत्तिश्रवणादिति ॥ ५४९ ॥

सर्गाद्यावर्तलीलारससहचरिते दण्डरासे नियुक्तं
जीवं देवो विमुच्य क्रमत इति सयुग्भावधन्यं भुनक्ति।
कर्मात्यन्तोपशान्तेरिह नच पुनरावर्तयत्येनमित्य-
प्याम्नातेः कर्ममूलाक्षयफलकथनाद्युत्थशङ्कोपशान्तिः ॥ ५५० ॥

इति जगद्व्यापारवर्जाधिकरणम् ॥ १५१ ॥

चिन्ता०—ननु 'अक्षय्यं ह वै चातुर्मास्ययाजिनस्सुकृतं भवति' इत्यर्थवादवचनवत् 'नच पुनरावर्तते' इत्यादिकमपि चिरकालावस्थायित्वमात्रेण चरितार्थं स्यादित्याशङ्क्य सर्वकर्मविनिर्मुक्तस्य पुनरावृत्तिप्रसङ्गाभावान्नित्यमेव कर्मकृतां पुनरावृत्तिं निषेधतीति दर्शयति—सर्गादीति। अयमत्रान्वयः—सृष्टिस्थितिसंहारावर्तलीलारससहचरिते दण्डरासप्राये संसारपरिवर्तने नियुक्तं जीवं दृष्ट्वा तुष्टबुद्धिर्भगवांस्तस्य परितोषिकप्रदानमिव संसारमोचनोपलम्भसौख्यं प्रदाय सायुज्यधन्यं तमेव भुनक्ति परिपालयतीत्यर्थः। सर्वेषामेव कर्मणामत्यन्तोपशान्तेः 'नच पुनरावर्तते' इति वाक्येनैव भगवान्न पुनरावर्तयत्येनं मुक्तमित्याम्नाने सति 'अक्षय्यं ह वै चातुर्मास्य' इत्याद्युक्ताक्षय्यफलकथनादिप्रयुक्तशङ्काया उपशान्तिस्स्यात्। अयमर्थः—कृत्स्नकर्मविनिर्मोकाभावे हि 'नच पुनरावर्तते' इति वाक्यस्य यथाकथञ्चिदन्यथाकरणं स्यात्, कृत्स्नकर्मविनिर्मोके प्रतिपन्ने सति अपुनरावृत्तिवचनं यथाश्रुतमेव ग्राह्यमिति साधीयानयं मार्ग इति ॥ ५५० ॥

इति जगद्व्यापारवर्जाधिकरणम् ॥ १५१ ॥

पद०—सर्गाद्यावर्तेत्यादि। सर्गाद्यावर्तलीलारससहचरिते—जगत्सृष्ट्यादिपरिवर्तनरूपलीलारससहचारिणि। दण्डरासे—दण्डनार्थे बन्धविशेषे। रासो हि बन्धविशेषः। दण्डरासप्राये संसारपरिवर्तने।

नियुक्तम्—प्रवेशितम् । जीवम्—जीवात्मानम् । देवः—भगवान् । इति—पूर्वोक्तरीत्या । क्रमतः—निश्शेषकर्मक्षपणस्थूलशरीरविश्लेषणार्चिरादिनयनविरजास्नापनसूक्ष्मवासनानिरसनदिव्यलोकप्रवेशनब्रह्मालङ्कारादिसभाजनस्वपर्यङ्कपर्यन्तारोहणसम्भाषणाविच्छिन्नसर्वाकारविशिष्टस्वानुभवदानसर्वविधकैङ्कर्याभिनन्दनादिक्रमेण । विमुच्य—संसारबन्धात् विमुक्तं कृत्वा । सयुग्भावधन्यम्—स्वसायुज्यदानेन कृतार्थं तम् । भुनक्ति—परिपालयति पुनरावृत्तिं विना रक्षतीत्यर्थः । इह—मुक्तजीवविषये । कर्मात्यन्तोपशान्तेः—पुण्यपापरूपाणां कर्मणां निश्शेषनिवृत्तेः । एनम्—मुक्तजीवम् । पुनश्च नावर्तयति—न निवर्तयति । इत्यप्याम्नातेः—एवमर्थकश्रुतिवाक्याच्चेत्यर्थः । तादृशमिदं हि वाक्यम् 'ब्रह्मलोकमभिसम्पद्यते नच पुनरावर्तते नच पुनरावर्तते' इति । कर्ममूलाक्षयफलकथनायुत्थशङ्कोपशान्तिः—कर्ममूलकस्याक्षयफलस्य यत्कथनं 'अक्षय्यं ह वै चातुर्मास्ययाजिनस्सुकृतं भवति' इत्यादिरूपं तदादिभिरुत्तिष्ठतीति कथनादुत्था या शङ्का चातुर्मास्यफलाक्षय्यत्ववचनस्येव मुक्तजीवपुनरावृत्त्यभाववचनस्याप्यापेक्षिकचिरकालस्थायित्वपरत्वं स्यादित्येवंरूपा तस्या उपशान्तिर्निवृत्तिः । भवतीति शेषः । अयमर्थः—कृत्स्नकर्मनिवृत्त्यभावे हि 'नच पुनरावर्तते' इति वाक्यस्यान्यथाकरणं स्यात् कृत्स्नकर्मविनिर्मोके प्रतिपन्ने सति अपुनरावृत्तिवचनं यथाश्रुतमेव ग्राह्यमिति ॥ ५५० ॥

इति जगद्व्यापारवर्जाधिकरणम् ॥ ५५१ ॥

चतुर्थाध्याय चतुर्थपादाधिकरण प्रधानार्थप्रतिपादनम् ।

स्वाविर्भावोऽपवर्गे निरुपधिनियतस्वप्रकार्यन्तदृष्टिः
चिद्रूपस्यैव तद्वच्छ्रुतिमकुटमितैस्स्वप्रकारैस्सहेक्षा ।
सङ्कल्पादेव सिद्धिस्तनुषु च नियमोन्मुक्तता ब्रह्मसाम्य-
प्राप्तौ तल्लक्षणांशोज्झनमिति चरमाध्यायतुर्याङ्घ्रिसाराः ॥ ५५१ ॥

चिन्ता०—अत्रोक्ताधिकरणषट्कार्थविशेषान् विभज्यानुकथयति—स्वाविर्भाव इति । अपवर्गे स्वस्वरूपाविर्भावः प्रथमाधिकरणार्थः । एवं पञ्चभिरधिकरणैः पञ्चार्थाः प्रतिपाद्यन्ते । निरुपधिकतया नियतस्वशरीरिपर्यन्तदृष्टिर्द्वितीये । तृतीये तु चिद्रूपस्यैव जीवस्य तद्वदेव श्रुतिशिखरप्रमितैस्स्वगुणैस्सह दर्शनम् । चतुर्थे पुनस्सङ्कल्पादेव स्वाभीष्टसिद्धिः । पञ्चमे तु स्वशरीरेष्वनियमेन परिग्रहः । षष्ठे पुनः परब्रह्मसाम्यप्राप्तौ जगत्कारणत्वमोक्षप्रदत्वश्रीपतित्वादिब्रह्मलक्षणवर्जनमिति चतुर्थाध्यायचतुर्थपादाधिकरणषट्कार्थसारा इति ॥ ५५१ ॥

पद०—स्वाविर्भाव इत्यादि । अपवर्गे—मुक्तौ । स्वाविर्भावः—स्वस्य पूर्वं विद्यमानाकारस्यैवाविर्भाव इति । अयं 'सम्पद्याविर्भावः' इत्यादेः प्रथमाधिकरणस्यार्थः । निरुपधिनियतस्वप्रकार्यन्तदृष्टिः—निरुपधिकतया नियतो यस्स्वप्रकारी स्वविशेष्यभूतः परमात्मा तत्पर्यन्तानुभवः । अयं 'अविभागेन दृष्टत्वात्' इत्यस्य द्वितीयाधिकरणस्यार्थः । चिद्रूपस्यैव—ज्ञानस्वरूपस्यैव सतस्स्वस्य । तद्वत्—तादृशज्ञानस्वरूपेण तुल्यतया । श्रुतिमकुटमितैः—'अपहतपाप्मा विजरः' इत्यादिवेदान्तप्रमितैः । स्वप्रकारैस्सह—अपहतपाप्मत्वादिभिस्स्वधर्मैस्सह । ईक्षा—अनुभवः । अयं 'ब्राह्मेण जैमिनिः' इत्यादेस्तृतीयाधिकरणस्यार्थः । सङ्कल्पादेव—प्रयत्नादिकं विना सङ्कल्पमात्रेण । सिद्धिः—पितृमातृलोकाद्यभिमतलाभः । 'अयं सङ्कल्पादेव तच्छ्रुतेः' इत्यादेश्चतुर्थाधिकरणस्यार्थः । तनुषु च—मुक्तिदशायां परिगृह्यमाणेषु शरीरेषु । नियमोन्मुक्तता—नियमराहित्यम् । कदाचिच्छरीरपरिग्रहः कदाचित्तदपरिग्रहः कदाचित्स्वसङ्कल्पितदेहपरिग्रहः कदाचित्परमपुरुषसङ्कल्पितदेहपरिग्रह इत्येवंरूपो नियमाभावः । अयं च 'अभावं बादरिः' इत्यादेः पञ्चमाधिकरणस्यार्थः । ब्रह्मसाम्यप्राप्तौ तल्लक्षणांशोज्झनम्—ब्रह्मणा साकं साम्यस्य प्राप्तिदशायां ब्रह्मासाधारणचिह्नभूतश्रीपतित्वशेषशायित्वजगत्सृष्ट्यादिव्यापारांशस्य त्यागः । अयं 'जगद्व्यापारवर्जम्' इत्यादेष्षष्ठाधिकरणस्यार्थः । इति—इत्थमुक्ता इमे षडर्थाः । चरमाध्यायतुर्याङ्घ्रिसाराः—चरमाध्यायस्य चतुर्थाध्यायस्य तुर्याङ्घ्रेश्चतुर्थपादस्य सारभूता इत्यर्थः ॥ ५५१ ॥

चतुर्थाध्यायार्थस्य सर्वस्यापि मृषावादिमते दुर्घटत्वनिरूपणम् ।

ध्यानादिं तत्प्रभावं करणभृत इतो देहकाराकुटीरात्
निष्क्रान्तिं ब्रह्मनाड्या गतिमपि सुपथा स्वप्रकाशञ्च साध्यम् ।
इच्छातस्स्वेष्टसृष्टिं परममपि परब्रह्मणा भोगमात्रे
साम्यं मायामतस्थः कथमिव घटयेदन्तिमाध्यायसारम् ॥ ५५२ ॥

चिन्ता०—अत्र चतुर्थाध्यायार्थस्य कार्त्स्न्येन मृषावादिनां सङ्घटनमेव नास्तीत्याह—ध्यानादिमिति । ध्यानं भगवद्ध्यानम् । आदिशब्देन तदङ्गभूतं कर्मशमदमादिकम् । तत्प्रभावमुत्तरपूर्वाघयोरश्लेषविनाशरूपम् । उत्क्रान्तिपादोक्तं करणभृतो जीवस्य देहकाराकुटीरान्निर्गमनम् । ब्रह्मनाड्या गतिं सुपथार्चिरादिमार्गेण गतिम् । स्वप्रकाशञ्च परञ्ज्योतिरुपसम्पद्य स्वेनरूपेणाभिनिष्पत्तिम् । स्वसङ्कल्पादेव स्वाभीष्टसृष्टिम् । परममपि परब्रह्मणा भोगमात्रे साम्यम् । एतादृशं सर्वमप्यत्रोक्तमर्थजातमन्तिमाध्यायसारभूतं मायामतस्थः कथमिव घटयेत् न कथमपि घटयेदित्यर्थः । एतस्य सर्वस्या-

प्यर्थस्य सगुणब्रह्मसम्बन्धित्वेन निर्गुणब्रह्मसम्बन्धाभावात् तस्य च निर्गुणस्य ब्रह्मणः क्वचिदपि फलाध्याये निर्देशाभावाच्चेत्यर्थः ॥ ५५२ ॥

पद०—ध्यानादिमित्यादि । ध्यानादिम्—ध्यानस्वरूपं तदङ्गभूतशमदमादिकञ्च । तत्प्रभावम्—ध्यानमाहात्म्यमुत्तरपूर्वाघाश्लेषविनाशादिरूपम् । करणभृतः—जीवस्य । इतः—अस्थिस्थूणत्वस्नायुबद्धत्वमांसासृक्पूयविण्मूत्रादिभरितत्वनश्वरत्वादिहेयतापादकधर्मशतसमावृतादस्मात् । देहकाराकुटीरात्—देहात्मकं यत् कारार्थं बन्धनार्थं कुटीरं तस्मात् । ब्रह्मनाडया—मूर्धन्यनाड्या । निष्क्रान्तिम्—निष्क्रमणम् । सुपथा—अर्चिरादिरूपेण शोभनेन मार्गेण । गतिमपि—गमनमपि । साध्यम्—इतः पूर्वमविद्यमानमिदानीं भगवत्प्रसादलभ्यम् । स्वप्रकाशञ्च—स्वस्याविर्भावञ्च । इच्छातः—सङ्कल्पमात्रेण । स्वेष्टसृष्टिम्—स्वाभिमतपितृमातृलोकादिसृष्टिम् । परब्रह्मणा साकं भोगमात्रे आनन्दमात्रे परमं साम्यमपि । अन्तिमाध्यायसारम्—चतुर्थाध्यायसारभूतार्थजातम् । मायामतस्थः—मायामते अभिमानवान् यः कोऽपि । कथमिव घटयेत्—केन प्रकारेणोपपन्नमिति प्रतिपादयेत् । एतस्य सर्वस्याप्यर्थस्य सगुणब्रह्मसम्बन्धित्वेन निर्गुणब्रह्मण्यसम्भवात् तस्य च निर्गुणस्य ब्रह्मणः क्वचिदपि फलाध्याये प्रतिपादनाभावाच्चेति [illegible] ॥ ५५२ ॥

## मृषावादस्य कर्मदेवताब्रह्मकाण्डरूपत्रिकाण्डीविरुद्धत्वनिरूपणम्

मानामानप्रभेदप्रमृतिविभजनादादिमे कर्मभागे
नाना वा देवतेत्याद्यनुपदपठनान्मध्यमे देवतांशे ।
भागेऽस्मिन्भेदधर्मप्रमृतिकथनतस्सौगतादेश्च भङ्गात्
मीमांसायास्त्रिकाण्ड्यां क्वचिदपि न मृषावादगन्धावकाशः ॥ ५५३ ॥

चिन्ता०—पूर्वं मृषावादिनोऽन्तिमाध्यायार्थविरोधमुक्त्वा तस्य त्रिकाण्ड्यां क्वचिदपि मीमांसायां न्यायानुकूल्यं नास्तीत्याह—मानामानेति । कर्मकाण्डे तावन्मानभेदाङ्गप्रयुक्तिक्रमकर्त्रादिप्रतिपादनपरिपाटीमुपलभामहे । तेन भेदपर एव प्रथमकाण्डः । तथा मध्यमेऽपि काण्डे 'नाना वा देवता' इत्यादिसूत्रकलापेन देवताभेदादिः प्रतिपाद्यते । सोऽपि मृषावादिनां विरुद्ध एव । अस्मिन्नपि ब्रह्मकाण्डे गुणगुणिभेदादिदूषकाणां सौगतादीनां तत्तदर्थोपपादनेन निराकरणमेव सर्वतो दरीदृश्यते । तेनैतैर्हेतुभिस्सौगतादिमतानुसारेण प्रवर्तमानस्य मृषावादस्य त्रिकाण्ड्यां मीमांसायां न क्वाप्यवकाशः ॥ ५५३ ॥

पद०—मानामानेत्यादि। आदिमे कर्मभागे—काण्डत्रयात्मकमीमांसाशास्त्रे आदिमे प्रथमे कर्मप्रतिपादकतया कर्मकाण्डाख्ये भागे। मानामानप्रभेदप्रभृतिविभजनात्—'धर्मधीर्मानभेदाङ्गप्रयुक्तिक्रमकर्तृभिः' इत्याद्युक्तरीत्या प्रमाणभेदाङ्गप्रयुक्तिक्रमकर्तृकाद्यर्थविभजनात्। मध्यमे—मध्यमकाण्डे। देवतांशे—देवताकाण्डाख्ये देवताप्रतिपादकभागे। नाना वा देवतेत्याद्यनुपदपठनात्—देवताभेदप्रतिपादनौपयिकतया 'नाना वा देवता' इत्यादिसूत्राणामनन्तरपठनात्। अस्मिन्भागे—ब्रह्मकाण्डाख्येऽस्मिन् ब्रह्मप्रतिपादकभागे च। भेदधर्मप्रभृतिकथनतः—जीवपरमात्मनोस्साक्षाद्भेदस्य भेदकधर्माणामणुत्वविभुत्वाज्ञत्वसर्वज्ञत्वादीनां जगत्सृष्टिबन्धनमोचनविषयभुक्त्युपासनमुक्त्यादिव्यापाराणाञ्च बहूनां स्फुटप्रतिपादनाच्च। सौगतादेर्भङ्गाच्च—गुणगुणिकार्यकारणादिभेददूषकाणां बौद्धादीनां निरसनेन च। मीमांसायास्त्रिकाण्डयाम्—वेदाख्यैकप्रबन्धव्याख्यानभूतमीमांसाख्यशास्त्रसम्बन्धिन्यां कर्मदेवताब्रह्मप्रतिपादिकायामस्यां त्रिकाण्ड्यां त्रयाणां काण्डानां समाहारस्त्रिकाण्डी तस्याम्। क्वचिदपि—क्वापि भागे। मृषावादगन्धावकाशो न—मृषावादस्य जगन्मिथ्यात्ववादस्य यो गन्धस्सूचकहेतुलेशस्तस्यावकाशः कण्ठतो वा अर्थतो वा प्रतिपादकभागस्सोऽपि न विद्यते। भेदपुञ्जगर्भं प्रमाणं किमपि निर्गुणतयाभिमतं वस्तु न स्पृशति तत एव भेदञ्च न निरस्यति स्वकपोलेन कल्पितञ्च कः परी[illegible]श्रद्दध्यात् अतो मृषावादिमतनिरसनमपि दिग्धहतमुद्गराभिघातप्रायमेवेति भावः॥ ५५३॥

मुक्तिदशायामविज्ञातांशस्पष्टीभावात् मुमुक्षोरुपयुक्तांशज्ञानसाफल्यप्रतिपादनम्।

त्रय्यन्तोदन्वदन्तस्सृतिरियमुदिता देशिकैः कर्णधारैः
तत्त्वार्थज्ञानपारं गमयति विशदं त्वन्यदीक्ष्यं विमुक्तौ।
कर्तव्ये कल्पकारैः क्वचिदभिदधिरे कृत्यसन्देहभेदाः
तत्त्वेऽप्येवं क्वचित्स्यात्तदपि न वितथस्स्वोपयुक्तांशबोधः॥ ५५४॥

चिन्ता०—एवं निस्सन्देहमेव निखिलमप्यर्थमुक्त्वा क्वचित्सन्देहोऽवशिष्यते चेत् सोऽपि कालक्रमेणोपशाम्यति अत्र न सर्वदोपशान्तश्चेत् स तु मुक्तदशायामुपशाम्यतु नैतावता स्पष्टमेव प्रतिपन्नस्यार्थस्य कोऽपि विरोधः एषा खलु मर्यादा न केवलमध्यात्मशास्त्रप्रसङ्ग एव अनुष्ठानेष्वपि कल्पसूत्रप्रसिद्धेष्वनुसर्तव्येति दर्शयति—त्रय्यन्तेति। त्रय्यन्तस्तावदुदन्वान्। तदन्तस्सृतिरियञ्च कर्णधारप्रायै देशिकैरभिधीयते। देशिकोपदिष्टा गतिः पारं गमयतीति सुप्रसिद्धं लोके। एवं तत्त्वज्ञानदेशिकैरुपदिष्टेयं सृतिः पदवी ज्ञानपारं गमयतीति यावत्। यदत्रापरिज्ञातं तन्मुक्तावेव द्रष्टव्यम्। नहि सर्वमपि लोके

प्रमाणपर्यालोचनमाचरन्तोऽपि जानन्ति । कतिकति सन्देहपदं क्रान्तदर्शिनामपि । इत्थमध्यात्मविषये मर्यादा अनुष्ठानेऽप्येषैव रीतिरिति दर्शयति—कर्तव्य इति । कल्पकारैरपि कर्तव्येष्वर्थेषु ससंशयमेव केचिदर्थाः प्रख्याप्यन्ते नच तावता कल्पोदितं विमुच्यते । एवं तत्त्वार्थप्रतिपादनेऽपि निस्संशयप्रतिपन्नमर्थं परिगृह्य सन्तोष्टव्यमात्मविद्भिः । अवशिष्टं तु कालेनावभास्यते । अनवगतमपि परञ्ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पत्तिदशायां विशदमेवावलोकयिष्यते । अथापि स्वोपयुक्तांशबोधस्सर्वत्रापि न वितथ एवेति ॥ ५५४ ॥

पद०—त्रय्यन्तोदन्वदित्यादि । इयम्—शारीरकचतुरध्यायीप्रतिपादिता तत्त्वज्ञानानुष्ठानफलप्राप्तिरूपा । त्रय्यन्तोदन्वदन्तस्सृतिः—त्रय्यन्त एवोदन्वान् तदन्तर्वर्तिनी सरणिः । देशिकैरेव कर्णधारैः—नाविकैः । उदिता—उपदिष्टा । सृतिविशेषणम् । तत्त्वार्थज्ञानपारम्—तत्त्वं प्रामाणिकचिदचिदीश्वरमोक्षोपायमोक्षस्वरूपात्मकं तद्रूपोऽर्थो ज्ञेयवस्तु तद्विषयज्ञानमेव पारम् । गमयति—प्रापयति । अन्यत्तु—अत्रापरिज्ञातं तत्त्वं तु । विमुक्तौ—विमुक्तिदशायाम् । विशदम्—असंशयतया । ई[illegible]मीक्षणीयम् । कल्पकारैः—कल्पसूत्रकारैरापस्तम्बादिभिः । कर्तव्ये क्वचित्—अनुष्ठेयार्थे क[illegible] । कृत्यसन्देहभेदाः—प्रकारद्वयाज्ञानादिभिः कर्तव्यस्य सन्देहविशेषाः । अभिदधिरे—प्र[illegible]त । एवम्—तन्न्यायेन । तत्त्वेऽपि क्वचित् स्यात्—तत्त्वार्थविषयेऽपि क्वापि सन्दिग्धत्वमस्तु । तदपि—तथापि । स्वोपयुक्तांशबोधः—मुमुक्षुजनावश्यकार्थज्ञानम् । न वितथः—वैयर्थ्यं न लभते । तथा चात्यन्तावश्यकतत्त्वज्ञानं सम्पाद्य साधनानुष्ठानेन मुक्तिस्सम्पाद्या । अविज्ञातांशास्तदा स्पष्टीभविष्यन्ति, न तु सकलार्थापरिज्ञानेन क्वचित् संशयेन वा स्पष्टावगतमत्यन्तोपयुक्तज्ञानमपि परित्याज्यमिति भावः ॥ ५५४ ॥

चतुरध्यायीनिर्णीतार्थचतुष्कस्य चतुर्भिः पादैः प्रतिपादनम् ।

श्रुत्यन्तैकान्ततर्कक्रमगरिमधृतौ तूलवच्छैलवर्गः
तत्सिद्धब्रह्मबोधद्युमणिरुचि तमस्तोमकल्पोऽन्यजल्पः ।
मोक्षोपायैकराज्ये तदितरविधयः किङ्करत्वं भजन्ते
मुक्तानन्दामृतैकोदधिपृषतकणस्पर्धिनोऽन्ये पुमर्थाः ॥ ५५५ ॥

चिन्ता०—इत्थं चतुरध्यायीनिर्णीतार्थं चतुर्भिः पादैर्विशोध्योपवर्णयति—श्रुत्यन्तेति । समन्वया-

विरोधसाधनफलानि खलु चतुरध्याय्यर्थत्वेनोपवर्ण्यन्ते । तदेकैकमेवोक्त्वा निगमयति । प्रथमाध्याये श्रुति-वाक्यानुकूलतर्कनिरूपणमकारि । तस्य च तर्कस्य गौरवनिरूपणे सर्वेऽपि शैलास्तूलायन्ते । द्वितीये त्वध्याये परपक्षनिराकरणं क्रियते । तदेतदाह—तत्सिद्धेति । प्रथमाध्यायसिद्धब्रह्मपरिज्ञानादित्यप्रकाशे तमस्स्तोमकल्पः प्रतिवादिनां जल्पः । तेन परपक्षप्रतिक्षेपप्रधानं द्वितीयलक्षणमित्युक्तं भवति । तृतीया-ध्यायार्थमपि विभज्य दर्शयति—मोक्षोपायेति । मोक्षोपायास्सद्विद्यादयस्तेषामैकराज्ये तदितरविधयो विद्याङ्गकर्मविधयश्शमदमादिविधयश्च किङ्करत्वं भजन्ते शेषभावं भजन्त इत्यर्थः । तेन तृतीयाध्यायार्थो-ऽनुक्रान्तः । चतुर्थाध्यायार्थमप्याह—मुक्तेति । मुक्तानन्दामृतरूपमहार्णवपृषतकणस्पर्धिनोऽन्ये पुरुषार्थास्स्वर्गस्वाराज्यादिसुखानि परमपुरुषानुभवसुखमहार्णवपृषतभावं भजन्त इत्यर्थः । तेन पुरुषार्थान्तर-परित्यागेनापुनरावृत्तिलक्षणो मोक्ष एवाध्यात्मविदामादर्तव्य इत्युक्तं भवति ॥ ५५५ ॥

पद०—श्रुत्यन्तेत्यादि । अस्मिन् श्लोके चतुर्भिः पादैः समन्वयाविरोधसाधनफलरूपाश्चतुर-ध्याय्यर्थाः प्रतिपाद्यन्ते । श्रुत्यन्तैकान्ततर्कक्रमगरिमधृतौ शैलवर्गस्तूलवत्—भवतीति शेषः । श्रुत्य-न्तैकान्तानां वेदान्तवाक्यानुकूलानां तर्काणां 'तर्को हि नामार्थस्वभावविषयेण वा सामग्रीविषयेण वाऽभ्यूहनेनार्थविशेषे प्रमाणं व्यवस्थापयत्तदितिकर्तव्यतारूपमूहापरपर्यायं ज्ञानम्' इति भाष्यकारः ... यः क्रमो या रीतिस्तत्सम्बन्धिनो गरिम्णो गौरवस्य धृतौ निरूपणे सर्वोऽपि शैलवर्गस्तूलतुल्यः । वेदान्ता-नुपयुक्तकेवलतर्कपाण्डित्यमसारतममिति हृदयम् । तत्सिद्धब्रह्मबोधद्युमणिरुचि अन्यजल्पस्तमस्स्तोम-कल्पः—अत्रापि भवतीति शेषः । तत्सिद्धो वेदान्तनिष्पन्नो यो ब्रह्मबोधस्सपरिकरब्रह्मज्ञानं तदेव-द्युमणिरुक् आदित्यप्रकाशः तद्विषये अन्येषां प्रतिवादिनां जल्पः तमस्स्तोमकल्पः तिमिरपुञ्जतुल्यः । ईष-दसमाप्तौ कल्पप्प्रत्ययः । वेदान्तविरुद्धं वादिभिः कल्पितं सर्वं तामसत्वात् हेयमिति भावः । मोक्षो-पायैकराज्ये तदितरविधयः किङ्करत्वं भजन्त—मोक्षोपायविद्याएव प्रधानराजनियोगस्तत्र तदितरविद्याङ्ग-भूतकर्मविधयश्शमदमादिविधयश्च पारतन्त्र्यं प्राप्नुवन्ति । सकलसाधनविधीनामपि मोक्षोपायविधिरेव श्रेष्ठतम इति भावः । अन्ये पुमर्थाः—मुक्तिभिन्ना धर्मादयः पुरुषार्थाः । मुक्तानन्दामृतैकोदधिपृषत-कणस्पर्धिनः—मुक्तानन्द एवामृतैकमय उदधिस्तत्सम्बन्धिनो ये पृषतकणा बिन्दुशीकरास्तैस्सह कलह-शीलिनः, तत्तुल्या इत्यर्थः । मोक्षाख्यमहापुरुषार्थप्रतिपादनार्थमेव पुरुषार्थाभासानां प्रतिपादनमिति हृदयम् ॥ ५५५ ॥

यथावद्विदितचतुरध्याय्यर्थस्याधिकारिणो मोक्षपर्यन्तफलसिद्धिप्रतिपादनम्

पारावर्यं विविच्य प्रथममवितथैरागमैस्तत्त्ववर्गे
संसारे तीव्रभीतिः परसमधिगमे तीव्रनिष्पन्नरागः ।
कश्चिद्विद्याविशेषं सपरिकरमधिष्ठाय शान्तान्तरायः
सम्पद्य ब्रह्म भुङ्क्ते निरुपधिकमनावृत्तिरित्थं श्रुतार्थः ॥ ५५६ ॥

चिन्ता०—चतुरध्याय्यर्थमित्थं यथावदधिगतवतोऽधिकारिणः क्रमेणोपलभ्यमानमपवर्गपर्यन्तं फलं दर्शयति—पारावर्यमिति । प्रथममवितथैरागमैस्तत्त्ववर्गे पारावर्यं विविच्य संसारे वैराग्यपादोक्तक्रमेण तीव्रभीतिः उभयलिङ्गपादोक्तक्रमेण परमपुरुषचरणारविन्दसमाधिगमे तीव्रमेव निष्पन्नरागो भवति पुरुषः । अनेनोभयलिङ्गपादपर्यन्तं दशभिः पादैरुपवर्णितोऽर्थ उक्तः । अतः परं पादषट्कार्थं सङ्कलय्य दर्शयति—कश्चिदिति । सद्विद्यादिषु सपरिकरं कश्चिद्विद्याविशेषमधिष्ठाय शान्तान्तरायस्सन् ब्रह्म- [illegible] ब्रह्म सम्पद्य वैकुण्ठवैमानिकेषु स्वयमप्यन्यतमत्वं प्रतिपद्य निरुपधिकमेव परवासुदेवपादा- [illegible] को भवति । तस्य विशेषणद्वयमाह—अनावृत्तिरिति । 'नच पुनरावर्तते' इति श्रुति- [illegible] इत्थं श्रुतार्थः—'येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्' इत्याचार्यमुखा- दधीतसर्वार्थ इत्यर्थः ॥ ५५६ ॥

पद०—पारावर्यमित्यादि । इत्थम्—प्रतिपादितक्रमेण । श्रुतार्थः—सदाचार्यसकाशश्रुतसकलवेद्यार्थः कश्चिदधिकारी । प्रथमम्—तापत्रयभयेन तच्छान्तये यदा ब्रह्मजिज्ञासोदेति तदैव । अवितथैरागमैः—स्वार्थे प्रमाणतमैरपौरुषेयवेदान्ताख्याक्षरराशिभिः । तत्त्ववर्गे—'भोक्ता भोग्यं प्रेरितारञ्च मत्वा' इत्युक्ते चिदचिदीश्वरात्मके वेद्यार्थसमुदाये । पारावर्यम्—परावरयोर्भावः पारावर्यं परतत्त्वभावमवरतत्त्वभावञ्च । विविच्य—परतत्त्वभावः पुरुषोत्तम एव, तत्परतन्त्रचेतनत्वरूपोऽवरतत्त्वभावस्तद्व्यतिरिक्तेषु सर्वेष्वपि चेतनेषु परमपुरुषलीलाभोगरससम्पादनसामर्थ्यन्तर्गतं त्रिगुणकालशुद्धसत्त्वात्मकमप्यचेतनत्रितयमवरतत्त्वमेवेत्येवं व्यवस्थितं निश्चित्य । संसारे—कर्ममूलकजन्मजरामरणादिचक्ररूपे । तीव्रभीतिः—अधिकभयः । परसमधिगमे—परमात्मप्राप्तौ । तीव्रनिष्पन्नरागः—तीव्रतया निष्पन्नो जातो रागोऽभिलाषो यस्य सः । तीव्रनिष्पन्नरागस्सन् । सपरिकरं कश्चिद्विद्याविशेषमधिष्ठाय—अङ्गपादोक्तकर्मशमदमादिपरिकरयुक्तं कमपि स्वाभिमतं सदक्षरदहरादिविद्यास्वेकं विद्याविशेषमनुष्ठाय । शान्तान्तरायः—निवृत्तसमस्तकर्मादिरूपप्रतिबन्धकवर्गः । अनावृत्तिः—पुनरावृत्तिशून्यश्च सन् । निरुपधिकम्—स्वानुष्ठित-

विद्याप्रसन्नहृदयतया पूर्वमपराधजनितनिग्रहसङ्कल्पाद्युपाधिशून्यम् । ब्रह्म—परमात्मानम् । सम्पद्य—प्राप्य । भुङ्क्ते—अनुभवतीति । अयं श्लोकः कस्यचिन्मुमुक्षोर्ब्रह्मजिज्ञासाप्रभृतिफलप्राप्तिपर्यन्तचरित्रस्य संग्रहः ॥ ५५६ ॥

अध्यात्मतत्त्वजिज्ञासुशिष्यसन्तोपस्य स्वानुगृहीतप्रबन्धफलत्वेन कीर्तनम्

सासौ सासूयतत्तत्कुमतिमतसमुन्मूलनी मूलनीति-
श्रेणीनिश्श्रेणिकल्पा त्रियुगपथरथारोहसूतं सुवीत ।
सन्तस्सन्तापवर्गप्रशमनपटुना तत्त्वबोधेन सन्तं
सन्तोपं ब्रह्मसूत्राधिकरणचरणाध्यायसारावलिर्वः ॥ ५५७ ॥

चिन्ता०—स्वोक्तस्य ग्रन्थस्यापवर्गाधिरोहणहेतुत्वेन गौरवं दर्शयन्नधिकरणसारावलीत्यभिहितनामधेया सेयं कृतिर्भवतां परमपदरथारोहसूतं सन्तं सन्तोपं सुवीतेति शिष्याणामाशोरूपमिदं पद्यमा[illegible]यति—सासाविति । सुप्रसिद्धेयमित्यर्थः । सासूयतत्तत्कुमतिमतसमुन्मूलनी असूयासहि[illegible]मतसमुन्मूलनी । मूलनीतिश्रेणीनिश्श्रेणिकल्पा जगत्कारणविषयन्यायवीथीनिश्श्रेणिसदृशी । [illegible] रथारोहसूतं परमपुरुषप्राप्तिमार्गरथारोहणे सूतं सारथिम् । सन्त इति विदुषां सम्बोधनम् । [illegible]वर्गप्रशमनपटुना तत्त्वबोधेन सन्तं सन्तोपं तापत्रयप्रशमनपटुना तत्त्वज्ञानेन सहजेन सह वर्तमानं सन्तोपं सुवीत ब्रह्मसूत्राधिकरणचरणाध्यायसारावलिरिति—सूत्राधिकरणपादाध्यायानां चतुर्णामपि सारसङ्ग्रहणपरम्परेत्यर्थः । अनेनापूर्वग्रन्थनिर्माणस्य प्रयोजनमध्यात्मतत्त्वमधिजिगमिषतामन्तेवासिनां सन्तोष इत्युक्तं भवति ॥ ५५७ ॥

पद०—सासावित्यादि । सासूयतत्तत्कुमतिमतसमुन्मूलनी—वैदिकमार्गदोषोद्भावननिरतानां तत्तत्कुमतीनां शङ्करयादवभास्करप्रभृतीनां अन्येषाञ्च बाह्यानां कुत्सितमतीनां वादिनां यानि मतानि तेषां समुन्मूलनी विध्वंसनी । मूलनीतिश्रेणीनिश्श्रेणिकल्पा—जगत्कारणविषयनीतिवीथीनिश्श्रेणिसदृशी । सा असौ—सुप्रसिद्धा इयम् । ब्रह्मसूत्राधिकरणचरणाध्यायसारावलिः—ब्रह्मसूत्रात्मकशारीरकशास्त्रघटकाधिकरणपादाध्यायसारार्थपरम्पराग्रथनरूपोऽयं प्रबन्धः । सन्तः—हे सज्जनाः । वः—युष्माकम् । त्रियुगपथरथारोहसूतम्—परमपुरुषप्राप्तिमार्गरथारोहणजातम् । सन्तापवर्गप्रशमनपटुना—तापत्रयपरम्परानिवर्तनसमर्थेन । तत्त्वबोधेन—तत्त्वज्ञानेन सहजेन सह । सन्तम्—वर्तमानम् । सन्तोषम् । सुवीत—प्रदद्यात् । अनेनापूर्वग्रन्थनिर्माणस्य प्रयोजनमध्यात्मतत्त्वमधिजिगमिषतामन्तेवासिनां सन्तोष इत्युक्तं भवति ॥ ५५७ ॥

